# प्राणतोषिणी

श्रीरामतोषण भट्टाचार्य्येण

तन्त्रशास्त्रात् संकलय्य विरचिता

।।श्रीः।।

विद्याभवन-प्राच्यविद्या ग्रन्थमाला

४६

# प्राणतोषिणी

श्रीरामतोषण भट्टाचार्य्येण

तन्त्रशास्त्रात् संकलय्य विरचिता



चौखम्बा विद्याभवन

वाराणसी

प्रकाशक

चौखम्बा विद्याभवन

(भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक)

चौक (बनारस स्टेट बैंक भवन के पीछे)

पो० बा० नं० १०६९, वाराणसी २२१००१

दूरभाष : ३२०४०४



पुनर्मुद्रित संस्करण १९९२

मूल्य ६००-००

अन्य प्राप्तिस्थान

चौखम्बा सुरभारती प्रकाशन

के० ३७/११७, गोपालमन्दिर लेन

पो० बा० नं० ११२९, वाराणसी २२१००१

दूरभाष : ३३३४३१



*

चौखम्बा संस्कृत प्रतिष्ठान

३८ यू. ए., बंगलो रोड, जवाहरनगर

दिल्ली ११०००७

दूरभाष : २३६३९१

मुद्रक

श्रीजी मुद्रणालय

वाराणसी

THE

VIDYABHAWAN PRACHYAVIDYA GRANTHAMALA

46



# PRĀṆATOṢIṆĪ

By

Ramtoshan Bhattacharya




**CHOWKHAMBA VIDYABHAWAN**

VARAṆASI

# सूचीपत्रम् ।

# प्राणतोषिणी।

जड़े काव्यं दात्री द्रुतमुदकविन्दौ जलधितां पयोधौ पाथोऽणुत्वमपि ननु सर्वैकवशगा। गिरौ धूलीलेशत्वमचलवरत्वं रजसि वा विचित्रेच्छा स्वैरं जयति जयतारे! तव नवा॥ यत्पादाम्बुजसेवया प्रतिदिनं कर्म चणाल्लीलया ब्रह्मोपेन्द्रमहेश्वरप्रभृतयः कुर्वन्ति सृष्ट्यादिकम्। यामाराध्य मनुत्वमाप सुरथो ज्ञानं समाधिः स्वयं सास्माकं वितनोतु वाञ्छितफलं तस्यै भवान्यै नमः॥ आसीद्विश्वासवंशे विमलमतिदयारामविश्वासनामा तत्पुत्रोऽत्यन्तदान्तोऽप्यतिशयसुकृती रामहर्य्याह्वयोऽसौ। विश्वासो विश्वनाथार्चनचरणरतो विश्वविश्वासवासो वाराणस्यामुषित्वा बहुविधमपि सत्कर्म कृत्वाप मुक्तिम्॥ तत्सूनुर्भूमिपालो विविधबुधगणैकाग्रगण्योऽतिधन्यो मान्यः श्रीप्राणकृष्णो यदनुजनुजगन्मोहनाख्यः प्रसिद्धः। पुत्राः षड् यस्य जाताः सुविमलमतयो धैर्य्यगाम्भीर्य्यवन्तो दीनानाथान्धबन्धुद्विजगणभरणैकान्तविश्रान्तचित्ताः॥ तत्रानन्दमयो महेशमहिषीध्यानावधानः सदा ज्येष्ठः श्रेष्ठतमः सदैव सदयो दारिद्र्यविद्रावणः। तस्योपेन्द्रसमः कृती भगवतीभक्तो भवानीपति-श्रीपादाम्बुजयुग्मलुब्धमधुपः श्रीरामचन्द्रोऽनुजः। दाता कर्णसमो रणेऽर्जुनसमः शूरो कृतान्तोपमो दाता दीनदयामयस्तदनुजः श्रीविश्वनाथस्तथा॥ श्रीयुक्तः शम्भुनाथस्तदनु समभवत् सुन्दरस्तस्य पश्चात् श्रीकाशीनाथनामा तदनुज उदितश्चन्द्रवच्चन्द्रनाथः॥ स्वर्धुन्याः पूर्वतीरे सुरचिरनिलयः खड्दहाख्यः प्रसिद्धो नित्यानन्दादिसिद्धाश्रमविहित-

महाशुद्ध इन्द्रालयाभः। ग्रामो जीयान्महद्भिः कृतशुभनिलयारामभीमालयाढ्यः कैलकाताता नगर्याः क्षितिपतिनगरादुत्तरे यामगम्यः॥ तस्मिन् श्रीप्राणकृष्णो निवसति निखिलक्षौयनिधूं तदृष्णो जिष्णोस्तुल्योऽतिमूल्योत्तममणिगणसम्पूर्णकोषाधिपालः। श्रीमान् धीमान् स्वकीर्त्या विधुरिव भुवि विश्वासवंशावतंसः। साक्षात् सूर्य्यः प्रतापैररिकृणदहनो जीवतात् स प्रजाभिः॥ अपि च॥ ज्योतिर्ग्रन्थान् बहुविधानालोक्य बहुभिर्बुधैः। संग्रहं कारयामास प्राणकृष्णक्रियाम्बुधिम्। ततो नानाभिधानानि समालोक्य समासतः। प्राणकृष्णीयशब्दाब्धिं कारयामास यत्नतः॥ तन्त्राणि बहुधा नानादेशादाहृत्य तत्परम्। खाब्जेषुसम्मितं नानासंग्रहञ्च कृतं बुधैः। संग्रहे जयसिंहादिनृपाणां नासदर्शनात्। चिरं मृतानां ग्रन्थस्थनाम्नाद्यापि सुजीवताम्। ग्रन्थकीर्त्तिं वरां मेने सर्वकीर्त्तेरनश्वराम्। ग्रन्थं कारयितुं धीरं यत्नतोऽन्वेषयत् कृती। न लेभे सहसा तेन सदा चिन्तापरः स्थितः। अथ श्रीशिवपादाब्जभ्रमरीकृतमानसः। कैलकातानगरे रम्ये चकार मठमेव यः। श्रीगोपीनाथमिश्रेणानीय तं रामतोषणम्। श्रीप्राणकृष्णविश्वासो विश्वासवंशभास्करः। आदिष्टवांस्तन्त्रशास्त्रोक्तसंग्रहहेतवे। समस्तज्ञानदातॄन् षड् गुरून् नत्वा सहस्रशः। मुण्डमालां मत्स्यसूक्तं तन्त्रं महिषमर्दिनीम्। मायाञ्च मातृकाभेदं मातृकोदयमुत्तमम्। महानिर्वाणतन्त्रञ्च मालिनीविजयं तथा। महानीलं महाकालसंहितां मेरुतन्त्रकम्। भैरवं भैरवीं भूतडामरद्वयमेव च। वीरभद्रं बीजचिन्तामणिमेकजटीं तथा। निर्वाणतन्त्रं त्रिपुरासारं कालीविलासकम्। विश्वसारञ्च वरदां वासुदेवरहस्यकम्। वाराहीञ्च बृहन्नीलमीयं वर्णोद्धृतिं तथा। विश्वसाराख्यतन्त्रञ्च विष्णुजामलमेव च। बृहन्नीलं बृहद्‌योनि

रहस्यं विष्णुसम्मतम्। वामकेश्वरतन्त्रञ्च ब्रह्मज्ञानं ततः परम्। ब्रह्मजामलमद्वैतं वर्णविलासमेव च। फेत्कारिणीं तथा तन्त्रं पुरश्चरणचन्द्रिकाम्। पुरश्चाररसोल्लासं तन्त्रं पञ्चदशीं शुभाम्। पिच्छिलां प्रपञ्चसारं हंसाद्यं पारमेश्वरम्। नवरत्नेश्वरं नित्यं नीलं नारायणीयकम्। निरुत्तरं नारदीयं नागार्जुनमतः परम्। दक्षिणामूर्त्तितन्त्रञ्च दक्षिणामूर्त्तिसंहिताम्। दत्तात्रेयसंहिता-ञ्चाष्टावक्रसंहितां तथा। यक्षिणीं योगिनीं योनिं योगसारं तदर्णवम्। योगिनीहृदयं योगियाज्ञवल्क्यमनुत्तमम्। योगस्वरोदयञ्चैवाकाशभैरवमेव च। राजराजेश्वरीं राधां रेवतीं रुद्रजामलम्। रामार्चनचन्द्रिकाञ्च सावरञ्चेन्द्रजालकम्। कालीतन्त्रञ्च कामाख्यां कामधेनुमतःपरम्। श्रीकालीकुलसर्वस्वं कुमारीतन्त्रमेव च। कृकलासदीपिकाञ्च कङ्कालमालिनीं तथा। कालोत्तरं कुब्जिकाञ्च कुलोड्डीयं कुलार्णवम्। कुलमूलावताराख्यकल्पसूत्रं यच्चडामरम्। सरस्वतीं सारदाञ्च शक्तिसङ्गमतन्त्रकम्। शक्तिकागमसर्वस्वमूर्द्धाम्नायं स्वरोदयम्। स्वतन्त्रतन्त्रं सम्मोहं चीनाचारञ्च तोड़लम्। षड़न्वयमहारत्नं सिद्धेकवीरतन्त्रकम्। निगमस्य कल्पद्रुमं लतां तत्सारमेव च। तारारहस्यं श्रीश्यामारहस्यं स्कन्दजामलम्। इत्याद्यनेकतन्त्राणि पुराणं पञ्चरात्रकम्। श्रुतिस्मृतिसंग्रहांश्च दृष्ट्वान्यशास्त्रमेवं च। रत्नान्येभ्यः समाहृत्य रत्नाकरेभ्य एव च। श्रीरामतोषणेनेयं रोपिता प्राणतोषणी॥ कल्पद्रुमो दिशति वाञ्छितमेव चिन्त्यं चिन्तामणिः क्वचन कामदुघा त्वभीष्टम्। श्रीप्राणतोषणलता व्रततिर्जनेभ्यो दृष्टैव यच्छति फलं भुवि सर्वदेयम्। एतामक्षरमालिकां न मनुतामज्ञः स्वभावोज्ज्वलां नानारत्नमयीं विलोकयतु सन्नु र्वङ्किकारुण्यतः। विश्वं पश्यति मन्दधी र्द्वैतधिया प्रत्यक्षमेतज्जगद्ब्रह्मैवेति विलो-

कति स गुरुतो वैराग्यवांश्चेत्तदा। आशावात-प्रौढ़तुङ्गोत्तरङ्गेऽपारे सारे ह्यभ्रमौ घोरसिन्धौ। जीर्णां नौकामाश्रितस्येष्टसिद्धैर भीतस्यैधि त्वं गुरो ! कर्णधारः। इमां मत्सरिणो दोषदृष्ट्योपहसतः प्रति। तथ्यं वदामि श्रुत्वा यद्रोचते कुर्वतान्तु तत्। मान्याः! कृताञ्जलिरहं विनयेन वच्मि सर्वाण्यमुत्र गुरुवृद्धवचांस्यमूनि। सङ्कोचकार लतिकावंयवानमीभिर्दोषा न मे न च गुणाः परिवेत्थ धीराः। गृह्णन्ति ये गुणकणानिव दोषराशेः पङ्केरुहाङ्कमलिनेऽन्यपिकालिकास्ते। पश्यन्तु साष्टशविनिर्मितिचित्रवल्लीं रत्नोज्ज्वलां शुभवरीमुपसर्पकाणाम्। वल्लीयं सर्गधर्मार्थकमनभजन-ज्ञान-नैर्गुण्यसप्तकाण्डाचित्र-प्रसूनच्छदमुकुलफला कोरकाद्यैर्विचित्रा। नानाविद्यार्थवादारुणकिरणमहाखिन्नचित्ताकुलानां श्रेयःसिद्धान्तरूपप्रकृतवचनजच्छाययार्त्तिं निहन्तु। वैवस्वतान्तरगतस्य गजाब्धिसंख्यस्येयं युगस्य चरणेऽजनि तूर्य्यसंख्ये। भूनेत्रधर्मयुगसम्मितवीतवर्षे राधे दिने गुणमिते मृदुला हिमांशोः॥ शाके नेत्रयुगाद्रिकाश्यपिमितेऽतीतेऽच्चयायां तिथावेषा प्रादुरभूद्विचक्षणमनःकह्लारसंह्लादिनी। विप्रश्रीयुतरामतोषणकृता श्रीप्राणतोषण्यसौ सोमहेमसरस्वतीमयतया न्यक्कुर्वतीत्थं त्विषा॥ वाणी श्रीप्राणतोषण्यसि सकलगुणा वत्सदृग्दीप्तदेहा नित्यं स्निग्धा नवीना नवरसरुचिरा रोपितारामसध्ये। किन्त्वाराद्दृष्टमूर्त्तिंर्जगदिदमनुगन्तासि दुष्टार्थबुद्ध्या मन्दानर्थाभिमानान्वितखलधिषणान् देवि! तुभ्यं नमोऽस्तु॥ प्रतिकाण्डं नमस्कृत्य देवतां विघ्ननाशिनीम्। काण्डानि निर्ममे सप्त रत्नोद्दीपिकराण्यहम्॥ आद्यांशुका शुचिशशीनदिगभ्रकृष्णा पञ्चाशदर्णघटिता सगनन्तमूर्त्तिः। ध्यातेष्टदा गलितकुन्तलभाररम्या क्षेमाय नो भवतु सम्प्रति मातृकान्ता॥ आद्यं नूतनसर्गकाण्डममलं यत्रास्ति शब्दाकरो नित्यानित्यविचारशब्दजनि-

विष्णुरीषधयुरुव्योमगाः। भूतोद्भूतमिदं चराचरमपि ब्रह्मध्वनि-
र्जन्तुतो वर्णान् प्रेरयतीति लेखनविधिर्वर्णाभिधानादि च॥
नृणामत्र प्रवृत्त्यर्थमादौ निर्घण्टनं मया। केषाञ्चित् क्रियते-
ऽन्यानि भूयांसि वेत्तु तान्यपि॥ आदौ तन्त्रप्रशंसादि वर्णावि-
र्भावकारणम्। शिवशक्त्याविर्भवनं तदवस्थानिरूपणम्। त्रिविधं
शक्तिरूपन्तु ब्रह्मादेः शक्तिनिर्णयः। शक्तिं विना जाड्यमेषां शब्द-
ब्रह्मनिरूपणम्। शब्दब्रह्मपरब्रह्ममूर्त्तिरीशस्य शाश्वती। इति
सर्गाद्यकाण्डस्य परिच्छेदस्तथादिमः॥ १॥ अर्थाभिव्यक्तये
शब्दस्फोटवादनिरूपणम्। प्रसिद्धानित्यरूपे द्वे पत्रे नित्यस्य
कीर्त्तिते। अनित्यमतदोषश्च प्रसिद्धमतनिर्णयः। शब्दो ब्रह्मेति
शब्दार्थौ ब्रह्मेति मतदूषणम्। नित्यमते पूर्वपक्षसिद्धान्तौ च
निरूपितौ। शरीरं तत्त्वषट्त्रिंशन्निर्मितं कञ्चुकान्वितम्। शशी-
नाग्निकलावर्णोद्भवाश्चापि कलास्ततः। वर्णजाः सशक्तिविष्णु-
रुद्राश्चौषधयस्तथा। प्रयोजनञ्चौषधीनां हंसो विकृतिजाक्षरम्।
तद्विकृतिः प्रकारश्च प्रणवाद्यंससम्भवः। सह नाशे तत्प्रणवस्थिते-
र्निदर्शनं तथा। वर्णानां नित्यताबोधकारणं साधकान्तरम्।
मतद्वये तु वेदानां नित्यानित्यत्वदर्शनम्। तथ्यं नित्यत्वमेतेषां
युक्तिदृष्टिप्रमाणकैः। वर्णेभ्यो ग्रहराश्यृक्षोत्पत्तिश्चक्रभ्रमात्मिका।
अमावास्याद्युद्भवश्च नक्षत्रवृक्षनिर्णयः। स्वनक्षत्रवृक्षमात्रच्छे-
दने दोषदर्शनम्। ऋक्षाधिष्ठातृदेवाश्च नक्षत्रयोनिनिर्णयः।
तद्विरोधदर्शनञ्च दम्पत्यादिविचारणे। तिथिभेददर्शनञ्च तिथ्य-
धिपनिरूपणम्। इत्यङ्कुरपरिच्छेदद्वितीयस्य समापनम्॥ २॥
सदाशिवादेरुत्पत्तिर्लवादिकालनिर्णयः। तत्त्वसृष्ट्यारम्भणञ्चा-
हङ्कारस्य त्रिधाकृतिः। त्रिविधाहङ्कृतेः सृष्टिः शब्दादेर्भूत-
सम्भवः। भूतमण्डलरूपाणि देहसृष्टिश्चतुर्विधा। पञ्चीकृति-
प्रकारश्चोद्भिदुत्पत्तिस्ततः परम्। प्रापेनोद्भिदयोनिस्तत्प्रायश्चित्तं

ततः परम् । स्वेदजोत्पत्तिकथनमण्डजोत्पत्तिरेव च । मनुष्यत्वप्रशंसा च जन्ममृत्युक्रमस्तथा । प्रकृत्या जायते सर्वं तस्यां संलीयते पुनः । इति शाखापरिच्छेदतृतीयस्य समापनम् ॥ ३ ॥ रजस्वलाया गर्भस्थात् पुंवीर्य्याद्गर्भसम्भवः । रजस्वलानिदानञ्च गर्भे वीर्य्यगतिक्रमः । स्त्रीपुंनपुंसकोत्पत्तिकारणं तदनन्तरम् । बह्वपत्यत्वादिवीजं बलवद्गर्भकारणम् । जीवप्रवेशनं तत्र शुक्राद्युत्पत्तिकारणम् । स्वेदमूत्रपुरीषाणामुत्पत्तित्यागयोः क्रमः । रोगोत्पत्तेः कारणञ्च धातूत्पत्तिक्रमस्ततः । प्राणादीनां क्रियां पश्चात् कललादिनिरूपणम् । मल एष विवेकश्च मांसपिण्डाङ्कुरस्तथा । मेदोमज्जादिसम्भूतिरङ्गप्रत्यङ्गसम्भवः । अभीष्टदानं मातुस्तत्फलादिनिर्णयस्तथा । त्वक्श्रुत्यादिसमुद्भूतिः सन्धेः सम्पूर्णता तथा । दोषदूष्यादिनिर्णीतिरिन्द्रियादिनिरूपणम् । अन्तःकरणनिर्णीतिस्तत्त्वानां पञ्चविंशकम् । पञ्चभूतगुणैर्देहो दशवायुनिरूपणम् । नाड़ीनिरूपणं नाड़ीकन्दो द्वारस्थिताः शिराः । शाखाप्रशाखा नाड़ीनां ततः स्थाननिरूपणम् । अस्थ्यस्थिसन्धिपेश्यादि स्त्रीणां पेश्यधिका मता । प्रशाखानामविच्छेदचतुष्कस्य समापनम् ॥ ४ ॥ वायुनामानि वायूनां मुख्यत्वादिविनिर्णयः । तेषां रूपाणि स्थानानि कर्म्माणि च पृथक् पृथक् । पिङ्गलेड़ागते प्राणे सूर्य्याचन्द्रमसोर्गतिः । दोषदूष्याग्निनामानि चोर्म्मिकोषनिरूपणम् । चेतनस्यार्थग्रहणप्रकारस्तदनन्तरम् । श्रोत्रादौ खादिसंस्थानं प्राधान्येन निदर्शितम् । वातपित्तकफैर्नृणां धातुभीरोगसम्भवः । पूर्वादृष्टस्मृतिर्गर्भस्थितिलक्षणमत्र तु । गर्भाशयप्रमाणन्तु त्रिविधं कर्म्म तत्परम् । गर्भे चिन्ताप्रकारश्च निश्चेष्टा तदनन्तरम् । देहस्याश्चर्य्यवृत्तान्तं भुवनानि चतुर्दश । तनावब्धिद्वीपखेटराशिनक्षत्रसंस्थितिः । शुक्रासृग्भ्यां रक्तविन्दुदर्शनादेश्च सम्भवः ।

सूर्य्याचन्द्रमसोः स्थानं ब्रह्मादीनां तथैव च। गर्भाच्छिद्रयोनिः-सरणं पूर्ववेदान्तस्य विस्मृतिः। गर्भान्निर्गमकाले तु पापिनामधिका व्यथा। रोदनानेहसि तदा नादावस्थानिरूपणम्। देहावस्था पुनर्देहप्राप्तिः कर्म्मानुसारतः। ऐहिकस्य प्रेत्य भोगः कर्म्मणो जायते ध्रुवम्। इति पल्लवरूपेषु परिच्छेदसमापनम् ॥५॥ अस्पष्टाक्षरभाषा तु श्रुतिमार्गविभागतः। कुण्डलीस्फूर्त्तिरेकादिपञ्चाशद्वा यदा भवेत्। गुणिता सा तदा शब्दार्थाद्युद्भूतिः क्रमेण च। पञ्चाशत् कामनामानि रतिनामानि च क्रमात्। सशक्तिकगणेशाननामानि तदनन्तरम्। चेत्रपालस्य नामानि तत्-पूजादिफलं ततः। मुखाद्वर्णप्रकाशस्तत्प्रकाशान्ते तु विस्मृतिः। वर्णप्रकाशस्थानानि चन्द्रसूर्य्याग्निजाक्षरम्। सर्वे विसर्गजा वर्णा अष्टस्थाननिरूपणम्। वर्णोच्चारक्रमाः पाञ्चभौतिकाक्षरनिर्णयः। इति स्तवनरूपत्तु परिच्छेदसमापनम् ॥ ६ ॥ पत्रारूढ़ाक्षरतनु निदानञ्च लिपिक्रमः। अकारादिक्षकारान्तवर्णानां दैवतैः सह। भूमौ लिपिनिषेधादिलेखनीनियमस्ततः। पुस्तकस्य ततो मानं पुस्तकच्छिद्रनिर्णयः। पुस्तिकापत्रनिर्णीतिर्वेदलेखननिन्दनम्। युगभेदेऽक्षरे देवभेदो लेखकपूजनम्। आरम्भादौ लेखकस्य वेतनग्रहदूषणम्। इति कोरकविच्छेदसप्तमस्य समापनम् ॥ ७ ॥ ॐकारादिक्षकारान्तनामानि कुसुमानि च। तन्त्रसङ्केतकारीण्यष्टमच्छेदसमापनम् ॥८॥ पञ्चवक्त्रोद्भवा मन्त्रास्तन्त्रादिशास्त्रमेव च। गणेशेन सर्वतन्त्रविस्तारकरणं ततः। महामहादिविद्यानां वीजत्वं तदनन्तरम्। तथाष्टदशविद्यानां दर्शनानाञ्च निर्णयः। ईश्वरस्य शक्तिसमावेशाच्छास्त्रादिकर्तृता। मनुष्यप्रभृतीनाञ्च शास्त्रकर्त्तृनिरूपणम्। आन्वीक्षिक्यादिनिर्णीतिर्ग्रहिणां न तु मानसम्। पापमोक्षो द्विधात्मानमकरोत् तस्य कारणम्। तन्त्रावतारवीजञ्च पञ्चवक्त्राद्भयस्तथा। पञ्च-

वर्णस्य रूपञ्च पञ्चाम्नायनिरूपणम् । षड़ाम्नायस्य कथनमाम्नायभेददेवता । आम्नायानां फलञ्चैव तथाद्य फलनिर्णयः । आम्नायभेदमन्त्राणामाचारादिनिरूपणम् । अपवादोत्सर्गतया विद्याशास्त्रविनिर्णयः । मन्त्रविद्याविभागश्च देवताभेदतस्तथा । स्त्रीपुंनपुंसकत्वञ्च मन्त्राणां षट्सु कर्म्मसु । मन्त्राणां क्रूरसौम्यत्वं स्वप्नजागरणादिकम् । इति केशरविच्छेदनवमस्य समापनम् ॥९॥ छिन्नादिदोषनिर्णीतिर्मन्त्राणां तत्प्रतिक्रिया । महामुद्रालक्षणञ्च योनिमुद्राकृतिस्तथा । कण्ठासनलक्षणञ्च षट्चक्रेष्टस्मृतिर्यथा । सहस्रारम्बुजे ध्यानमिष्टदेव्यास्ततः परम् । पुनर्मूलाधारपद्मादिषु चिन्ताक्रमस्तथा । मन्त्राक्षरस्य चिच्छक्तौ प्रोतानन्तरकर्म यत् । तत्फलं संवत्सरेणाभ्यासात् सिद्धिरनुत्तमा । असक्तस्य योनिमुद्राकरणे तु जपक्रमः । भूतलिपिनिधानञ्च तस्या ऋष्यादिनिर्णयः । ध्यानं भूतलिपेः प्राणप्रतिष्ठा तदनन्तरम् । वर्णन्यासः पूजनञ्च नवावृत्तय एव च । होमश्च कामनाभेदाद्भूतलिप्या पुटीकृतः । सहस्रकृत्वः सञ्जप्तो मासमात्रं यदा तदा । मनुः सर्वसिद्धिकरो दशसंस्कारकारणम् । वीजनामानि वीजानां भूतडामरसम्मतम् । नामधेयमिदं व्योमपरिच्छेदसमापनम् ॥ १० ॥ यद्यत्तन्त्रसारकारैरस्मद्वंशाब्जभास्करैः । धृतं प्रमाणं तेनात्र नास्ति किञ्चित् प्रयोजनम् । द्रष्टव्यं तत्र तत् सर्वं मन्त्रयन्त्रादिकं तथा । न्यासपूजादिमुद्रापि स्तवश्च कवचं तथा । मालासंस्कारकर्मादि सर्वं तत्रास्ति केवलम् । संगृह्याप्यधृतं तेन स्मार्त्तेनापि क्वचित् क्वचित् । मूलग्रन्थानुक्रमेण व्याख्यार्थमपि वादिनाम् । आक्षेपस्य निराकृत्यै तद्धृतं ध्रियते मया । यत्राभिप्रायमात्रन्तु दर्शितं तेन सूरिणा । प्रमाणं नैव दत्तं तत् प्रमाणमपि लिख्यते । शब्दाभिप्रायव्याख्यापि कृता यत्र महात्मना । तेन तदविदो मन्दधियो विहसतः प्रति ।

स्पष्टीकरोमि तां सर्वां यथाशास्त्रार्थनिश्चयाम्। एष क्रमः सर्वकाण्डे विज्ञातव्यो विचक्षणैः। वीजं नव्याङ्कुराढ्यं तदनु समभवद्दिव्यशाखाप्रशाखा जातं तत्पल्लवं तत्स्तवक उद्गमत् कोरकोऽतः प्रसूनम्। प्रोद्भूतः केशरः स्यादजनि फलमिदं सर्गकाण्डस्त्वमीभिर्विद्वन्नभ्यच्चयद्राङ्नयनयुगमितो निर्मलं पश्य सर्वम्। धन्यो मान्यो वरेण्योऽग्रगण्यः सत्कीर्त्तिशालिनाम्। स्थिरलक्ष्मीनिवासः श्रीयुतः स्वीयेष्टभक्तिमान्। प्राणकृष्णश्चिरञ्जीवी भवतादात्मजैः सह। मुण्डमालातन्त्रे अष्टमपटले। विना तन्त्रात् विना मन्त्रात् विना यन्त्रात् महेश्वरि!। न च भुक्तिश्च मुक्तिश्च जायते वरवर्णिनि!। मत्स्यसूक्ते महातन्त्रे चतुर्विंशतिसाहस्रे उपरिभागे प्रथमचरणे चतुर्थपटले। विष्णुर्वरिष्ठो देवानां ह्रदानामुदधिर्यथा। नदीनाञ्च यथा गङ्गा पर्वतानां हिमालयः। अश्वत्थः सर्ववृक्षाणां राज्ञामिन्द्रो यथा वरः। देवीनाञ्च यथा दुर्गा वर्णानां ब्राह्मणो यथा। तथा समस्तशास्त्राणां तन्त्रशास्त्रमनुत्तमम्। इति तन्त्रशास्त्रप्रशंसा। वृहन्नीलतन्त्रे प्रथमपटले। यद्गृहे निवसेत्तन्त्रं तत्र लक्ष्मीः स्थिरायते। राजद्वारे श्मशाने च सभायां रणमध्यतः। निर्ज्जने च जले घोरे श्वापदैः परिभूषिते। माहात्म्यात्तस्य देवेशि! चमत्कारो भवेत् प्रिये!। तस्मात् सर्वप्रयत्नेन गोपनीयं प्रयत्नतः। इति गृहे तन्त्रशास्त्रस्थितिफलम्। मत्स्यसूक्ते। यानि तन्त्रागमोक्तानि न हन्तव्यानि हेतुभिः। ईश्वरेण प्रणीतानि यस्मात्तस्माद्द्विजातिभिः। इति हेतुवादेन तन्त्रोक्तकर्महानिनिषेधः। तत्रैव। ज्योतिषे मन्त्रवादे च वैद्यके वेदकर्मणि। अर्थमात्रन्तु गृह्णीयान्नापशब्दं विचारयेत्। मन्त्रस्य वादो यत्र इति मन्त्रवादस्तन्त्रमिति। ज्योतिरादौ शब्दविचारनिषेधः। तत्रैव। शब्दे मा संशयं कुर्य्यादद्दष्टस्त्विति कुत्र-

चित्। अज्ञातव्यं विनिश्चित्य अानन्त्याच्छब्दरूपतः। निर्वाण-तन्त्रे नवमपटलेऽपि। शब्दब्रह्मस्वरूपञ्च मम वक्त्राद्विनिर्गतम्। सन्देहो नैव कर्त्तव्यो यदि मुक्तिं समिच्छति। सन्देहात् परमं याति रौरवं पितृभिः सह॥ इति तन्त्रशास्त्रे संशयनिषेधः। गन्धर्वतन्त्रे द्वितीयपटले। सर्वकार्य्येषु सर्वत्र तान्त्रिके वैदिके तथा। अविश्वासो महान् दोषो यत्नतस्तं विवर्ज्जयेत्। संसिद्धेः कारणं देवि! विश्वासः समुदाहृतः॥ इति शास्त्रे विश्वासफलम्॥ महानिर्वाणतन्त्रे चतुर्दशोल्लासे॥ किं तस्य तीर्थभ्रमणैः किं यज्ञैर्जपसाधनैः। जानन्नेव महातन्त्रं कर्मपाशैर्विमुच्यते। स सिद्धः सर्वशास्त्रेषु सर्वधर्मविदां वरः। स ज्ञानी ब्रह्मवित् साधु यस्तन्त्रं वेत्ति कालिके!॥ इति तन्त्रज्ञानफलम्॥ तत्रैव। अलं वेदैः पुराणैश्च स्मृतिभिः संहितादिभिः। किमन्यैर्बहुभिस्तन्त्रैः ज्ञात्वैकं सर्वविद्भवेत्। इत्येकतन्त्रस्यापि ज्ञानफलम्॥ गन्धर्वतन्त्रे द्वितीयपटले। आस्तिकोऽथ शुचिर्दक्षो द्वैतहीनो जितेन्द्रियः। ब्रह्मिष्ठो ब्रह्मवादी च ब्रह्मी ब्रह्मपरायणः। सर्वहिंसाविनिर्मुक्तः सर्वप्राणिहिते रतः। सोऽस्मिन् शास्त्रेऽधिकारी स्यात्तदन्यत्र न साधकः॥ इति तन्त्रशास्त्राधिकारिकथनम्॥ कुब्जिकातन्त्रे प्रथमपटले॥ श्रुतिस्मृतिविधानेन पूजा कार्य्या युगत्रये। आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः। न हि देवाः प्रसीदन्ति कलौ चान्यविधानतः॥ पुरश्चरणरसोल्लासतन्त्रे तृतीयपटलेऽपि॥ तन्त्रोक्तं ध्यानमन्त्रञ्च प्रशस्तं भारते कलौ। वेदोक्तञ्चैव स्मृत्युक्तं पुराणोक्तं वरानने!। न शस्तं चञ्चलापाङ्गि! कदाचिद्भारते कलाविति॥ महानिर्वाणतन्त्रे द्वितीयोल्लासे च॥ विना ह्यागममार्गेण कलौ नास्ति गतिः प्रिये!। श्रुतिस्मृतिपुराणादौ मयैवोक्तं पुरा शिवे!। आगमोक्तेन विधिना कलौ देवान् यजेत् सुधीः। कलावागममुल्लङ्घ्य योऽन्य-

मार्गे प्रवर्त्तते। न तस्य गतिरस्तीति सत्यं सत्यं न संशयः॥ तथा, कलौ तन्त्रोदिता मन्त्राः सिद्धास्तूर्णफलप्रदाः। शस्ताः कर्मसु सर्वेषु जपयज्ञक्रियादिषु। निर्वीर्य्याः श्रौतजातीया विषहीनोरगा इव। सत्यादौ सकला आसन् कलौ ते मृतका इव। पाञ्चालिका यथा भित्तौ सर्वेन्द्रियसमन्विताः। अमूरशक्ताः कार्य्येषु तथान्ये मन्त्रराशयः। अन्यमन्त्रैः कृतं कर्म वन्ध्यास्त्रीसङ्गमो यथा। न तत्र फलसिद्धिः स्यात् श्रम एव हि केवलम्। कलावन्योदितैर्मार्गैः सिद्धिमिच्छति यो नरः। तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः। नान्यः पन्था मुक्तिहेतुरिहामुत्र सुखाप्तये। यथा तन्त्रोदितो मार्गो मोक्षाय च सुखाय च॥ इति कलौ तन्त्रशास्त्रोक्तकर्मणा फलप्राप्तिकथनम्॥ मुण्डमालायाम्। तन्त्रवक्ता गुरुः साक्षात् यथा च ज्ञानदः शिवः। यथा गुरुर्महेशानि! यथा च परमो गुरुः। यथा परापरगुरुः परमेष्ठी यथा गुरुः। यथा चैव हि मन्त्रज्ञस्तन्त्रवक्ता गुरुः स्वयम्। इति तन्त्रवक्तृप्रशंसा॥ तत्रैव॥ तन्त्रञ्च तन्त्रवक्तारं निन्दन्ति तान्त्रिकीं क्रियाम्। ये जना भैरवास्तेषां मांसास्थिचर्वणोद्यताः। अतएव च तन्त्रज्ञं न निन्दन्ति कदाचन। न हसन्ति न निन्दन्ति न वदन्त्यन्यथा क्वचित्॥ इति तन्त्रादिनिन्दाकरणदोषः॥ प्रथमपटले॥ शृणु देवि! जगद्धात्रि! सर्वमङ्गलमङ्गलम्। तन्त्रं शृणुयाद्देवेशि! ब्रह्मनिर्वाणमाप्नुयात्॥ दशमपटले॥ तन्त्रराजं महेशानि! सारात्सारतरं प्रिये!। श्रुत्वा ज्ञात्वा मोक्षमाशु लभते नात्र संशयः॥ एकादशपटले॥ शृणुयात् यो मुण्डमालातन्त्रं परमकारणम्। ज्ञानदं मोक्षदं भक्तिभुक्तिसौख्यप्रदं शिवे!। इत्येवं परमं देवि! देवानामपि दुर्लभम्। यो वेद धरणीमध्ये स एव परमार्थवित्॥ इति तन्त्रविशेषश्रवणफलम्॥ निर्वाणतन्त्रे॥ ज्ञानञ्च निर्मलं कृत्वा बुद्धिञ्च निर्मलां

ततः। महाभक्तियुतो भूत्वा सर्वप्राणिहिते रतः। शब्दब्रह्ममयं ज्ञात्वा शृणोति पटलं यदि। तदा मुक्तिमवाप्नोति सत्यं सत्यं न संशयः। अष्टादशपुराणानां श्रवणेनैव यत् फलम्। मेरुतुल्य-सुवर्णञ्च गुरवे ब्रह्मरूपिणे। सशस्यां परमेशानि! सप्तद्वीपां वसुन्धराम्। प्रदद्याद्भक्तिभावेन यदि स्यात् वेदपारगः। तस्माद्दै परमेशानि! फलं बहुविधं शिवे!। अस्य तन्त्रस्य चार्वङ्गि! शृणोति पटलं यदि। तत्फलात् कोटिगुणितं फलं स लभते ध्रुवम्। इति तन्त्रस्य पटलमात्रश्रवणफलम्। शब्दज्ञानं विना सर्वो जाड्येन परिभूयते। प्रादुर्भूतिमतस्त्वग्रे शब्दानां वक्तुमारभे। सारदातिलके प्रथमपटले॥ सच्चिदानन्दविभवात् सकलात् परमेश्वरात्। आसीच्छक्तिस्ततो नादो नादाद्बिन्दुसमुद्भवः॥ सच्चिदानन्दविभवादित्यनेन अविद्योपहितत्वेऽपीश्वरस्य स्वरूपहानिरिति राघवभट्टः। सकलात् सप्रकृतिकादीश्वरात् शक्तिरासीदिति योजना। तथा च तत्रैव। निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः। निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृतः॥ इति कला प्रकृतिस्तया सह वर्त्तमानादिति तद्व्याख्यानञ्च। ननु शक्तिसहितादेव पुनः शक्तिः कथमासीदिति चेत् सत्यं या अनादिरूपा चैतन्याध्यासेन महाप्रलये सूक्ष्मतया स्थिता तस्या गुणवैषम्यात्तु सगुणतया सात्त्विकराजसतामसस्रष्टव्यप्रपञ्चसाधने तद्गुणावस्थाने वोपचारादुत्पत्तिरिति सांख्यमतमाश्रित्य ग्रन्थकारस्योक्तिरियमिति ज्ञेयम्। तथाच मार्कण्डेयपुराणम्। देवानां कार्य्यसिद्ध्यर्थमाविर्भवति सा यदा। उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते। राघवभट्टधृतप्रयोगसारञ्च। तस्माद्विनिर्गता नित्या सर्वगा विश्वसम्भवा। विश्वेषां सम्भवो यस्या इति। तथृतवायवीसंहितापि। शिवेच्छया परा शक्तिः शिवतत्त्वैकतां गता। ततः परिस्फुरत्यादौ सर्गे तैलं तिलादिवेति। कुब्जिका

तन्त्रे प्रथमपटले तु। आसीद्बिन्दुस्ततो नादो नादाच्छक्तिः समुद्भवा। नादरूपा महेशानि! चिद्रूपा परमा कला। नादाच्चैव समुत्पन्ना अर्द्धविन्दुर्महेश्वरि!। सार्द्धत्रितयविन्दुभ्यो भुजङ्गी कुलकुण्डली। त्रिगुणा सगुणा देवि! ब्रह्मरूपा सनातनी। चैतन्यरूपिणी देवी सर्वभूतप्रकाशिनी। आनन्दरूपिणी देवी ब्रह्मानन्दप्रकाशिनी। इति विन्दोरादौ उत्पत्तिर्योक्ता सा आम्नायभेदेन अविरुद्धेति। स चाम्नायभेदोऽग्रे स्फुटीभविष्यति। इति सगुणशिवाच्छक्त्युत्पत्तिः। तस्याः शक्तेस्तु नादविन्दुसृष्ट्युपयोग्यवस्थारूपौ। तदुक्तं प्रयोगसारे। नादात्मना प्रबुद्धा सा निरामयपदोन्मुखी। शिवोन्मुखी यदा शक्तिः पुंरूपा सा तदा स्मृता। इति शक्त्यवस्थाभेदः। इच्छासत्त्वादिरूपतया विन्दुरपि त्रिविध उक्तः सारदातिलके कान्यकुब्जवासिना जगद्गुरुणा लक्ष्मणाचार्य्येण। शिवशक्तिमयः साक्षात्त्रिधासौ भिद्यते पुनः। असौ विन्दुः शिवमयः शक्तिमय उभयमयश्चेति त्रिविधः। त्रिविधस्य स्वरूपमुक्तं तत्रैव। विन्दुर्नादो वीजमिति तस्य भेदाः समीरिताः। विन्दुः शिवात्मको वीजं शक्तिर्नादस्तयोर्मिथः। समवायः समाख्यातः सर्वागमविशारदैः। क्रियासारेऽपि। विन्दुः शिवात्मकस्तत्र वीजं शक्त्यात्मकं स्मृतम्। तयोर्योगे भवेन्नादस्ताभ्यो जातास्त्रिशक्तयः। इति त्रिविन्दुकथनम्। शक्तित्रयमुक्तं तत्रैव। रौद्रीविन्दोस्ततो नादात् ज्येष्ठा वीजादजायत। वामा ताभ्यः समुत्पन्ना रुद्रब्रह्मरमाधिपाः। ते ज्ञानेच्छाक्रियात्मानो वह्नीन्द्वर्कस्वरूपिणः। एतत् सार्द्धवचनं शारदायामपि। ते रुद्रब्रह्मरमाधिपाः शिवब्रह्मनारायणा यथाक्रमं ज्ञानशक्तीच्छाशक्तिक्रियाशक्तिस्वरूपा इत्यर्थः। अतएवैते वह्नीन्द्वर्कस्वरूपिणः शब्दस्य सृष्ट्यन्तर्गता निबोधका अर्द्धेन्दुविन्दुरूपाः शक्तेरेवावस्थाविशेषा ज्ञेयाः। एतेन शक्तेरेव सृष्ट्यादिकर्त्तृत्वमिति ध्वनितम्। ननु

शब्दार्थभावि भुवनं सृजतीन्दुरूपा यावद्बिभर्त्ति पुनरर्कतनुः स्वशक्त्या। वह्न्यात्मिका हरति तत् सकलं युगान्ते तां शारदां मनसि जातु न विस्मरामीति। गौरचसंहितायामपि। इच्छा-क्रिया तथा ज्ञानं गौरी ब्राह्मी तु वैष्णवी। त्रिधा शक्तिः स्थिता यत्र तत्परं ज्योतिरोमिति। यथासम्भवमुन्नेयम् अत्र ज्ञानं गौरी-शक्तिरिच्छा ब्राह्मीशक्तिः क्रिया वैष्णवीशक्तिरिति त्रिधा त्रिप्र-कारा सा। वक्ष्यमाणायामपि तस्यां सूर्य्येन्दुपावकान्। प्रणवस्य त्रिभिर्वर्णैरित्यादिप्रणवांशाः अकारोकारमकारा ब्रह्मविष्णु-रुद्रात्मका अकाराद्ब्रह्मणोत्पन्नमित्यादि ब्रह्मविष्णीश्वरास्त-त्तन्मण्डलेषु व्यवस्थिता इति। तेन तत्र तत्र सूर्य्यरूपोऽकारो ब्रह्मा अत्र तु सूर्य्यरूपो विष्णुरिति पूर्वापरलिखनानुसारेण विरोध इति चेदर्थसृष्ट्यनुसारेण क्रमोऽनुसन्धेयो न तु लिखना-नुसारेणेति स्थितम्। योगिनीतन्त्रे पूर्वखण्डे दशमपटले तु। इत्युक्त्वा सा महाकाली ददावस्मासु शाम्भवि!। इच्छाक्रिया-ज्ञानशक्तिः सर्वकार्य्यार्थसाधना। इच्छा तु विष्णवे दत्ता क्रिया-शक्तिस्तु ब्रह्मणे। मह्यं दत्ता ज्ञानशक्तिः सर्वशक्तिस्वरूपिणी। इत्यनेन विष्णोरिच्छाशक्तिरिति यदुक्तं तदाम्नायभेदेनाविरुद्धम्। एवं वक्ष्यमाणपञ्चाम्नायषडाम्नायतत्तदाम्नायरूपादिनिरूपकप्रभृ-तिपरस्परविरुद्धवचनानि सात्त्विकादिभेदेनाम्नायभेदेन वा व्यवस्थेयानीति निबोधिकादिसृष्टिकथनम्। निर्वाणतन्त्रे प्रथम-पटले तु। सत्यलोके निराकारा महाज्योतिःस्वरूपिणी। मायावल्कलमुत्सृज्य द्विधा भिन्ना जगन्मयी। शिवशक्तिविभा-गेन जायते सृष्टिकल्पना। प्रथमे जायते पुत्रो ब्रह्मसंज्ञो हि पार्वति!। कालिकोवाच। शृणु पुत्र! महावीर! विवाहं कुरु यत्नतः। एतत् श्रुत्वा ततो ब्रह्मा उवाच सादरं वचः। त्वां विना जननी नास्ति शक्तिं मे देहि सुन्दरि!। तत् श्रुत्वा ज-

गतां माता स्वदेहात् मोहिनीं ददौ। द्वितीया सा महाविद्या सावित्री परमा कला। अस्याः सङ्गं समासाद्य वेदविस्तारणं कुरु। अनायासे सृष्टिकर्त्ता भव त्वं महिमण्डले। द्वितीये जायते पुत्रो विष्णुः सत्त्वगुणाश्रयः। कालिकोवाच। शृणु पुत्र! महावीर! विवाहं कुरु यत्नतः। विष्णुरुवाच। तव दर्शनमात्रेण निष्कामी जायते पुमान्। कथं करोमि हे मात! मोहिनीं देहि मे शिवे। देहाच्छक्तिं विनिष्कृष्य ददौ तस्मै च कालिका। वैष्णवीं तां महाविद्यां श्रीविद्यां परमेश्वरि!। तामाश्रित्य महाविष्णुः पालयत्यखिलं जगत्। तृतीये जायते पुत्रो महायोगी सदाशिवः। तं दृष्ट्वा सा महाकाली ऋतुयुक्ताभवन्मुदा। शृणु पुत्र! महायोगिन्! मद्वाक्यं हृदयं कुरु। त्वां विना पुरुषः को वा मां विना कापि मोहिनी। अतस्त्वं परमानन्दो विवाहं कुरु मे शिव!। सदाशिव उवाच। यदुक्तं कर्म हे मातस्त्वां विना नास्ति मोहिनी। सत्यमेतत् जगन्मात! मां विना पुरुषो न च। अस्मिन् देहे संस्थिते च न करोमि विवाहकम्। कुरु देहान्तरं मातः करुणा यदि वर्त्तते। तत्क्षणे सा महाकाली ददौ भुवनसुन्दरीमिति। कुब्जिकातन्त्रे प्रथमपटले। ब्रह्माणी कुरुते सृष्टिं न तु ब्रह्मा कदाचन। अतएव महेशानि! ब्रह्मा प्रेतो न संशयः। वैष्णवी कुरुते रक्षां न तु विष्णुः कदाचन। अतएव महेशानि! विष्णुः प्रेतो न संशयः। रुद्राणी कुरुते ग्रासं न तु रुद्रः कदाचन। अतएव महेशानि! रुद्रः प्रेतो न संशयः। ब्रह्मविष्णुमहेशाद्या जड़ाश्चैव प्रकीर्त्तिताः। प्रकृतिञ्च विना देवि! सर्वकार्य्याक्षमा ध्रुवमित्युक्तम्। इति शक्त्या सृष्ट्यादिकथनम्। शब्दब्रह्मण उत्पत्तिमाह। शारदायां प्रथमपटले। भिद्यमानात् पराद्बिन्दोरव्यक्तात्मा रवोऽभवत्। शब्दब्रह्मेति तं प्राहुः सर्वागमविशारदा इति। पराद्बिन्दोरित्यनेन शक्त्यवस्था-

रूपो यः प्रथमो विन्दुस्तस्माद्भिद्यमानादव्यक्तात्मा वर्णादिविशेष-रहितोऽखण्डो नादमात्रमुत्पन्नमित्यर्थः। उक्तञ्च दुर्गेण यत्र ध्वना-वकारादयो वर्णा विशेषरूपेण न व्यज्यन्ते स ध्वनिरव्यक्त इति। रुद्रयुन्मुखपरमशिवप्रथमोल्लासमात्रमखण्डोऽव्यक्तो नादविन्दु-मय एव व्यापको ब्रह्मात्मकः शब्दः। शब्दब्रह्मेति हृदयं तथा च राघवभट्टधृतं वचनम्। क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकार-णम्। प्रकृतेर्विन्दुरूपिण्याः शब्दब्रह्माभवत्परमिति। प्रयोग-सारेऽपि। सोऽन्तरात्मा तदा देवि! नादात्मा नदते स्वयम्। यथा संस्थानभेदेन सम्भूय वर्णतां गतः। वायुना प्रेर्य्यमाणासौ पिण्डाद्व्यक्तिं प्रयास्यतीति। शारदातिलके। चैतन्यं सर्वभूतानां शब्दब्रह्मेति मे मतम्। तत् प्राप्य कुण्डलीरूपं प्राणिनां देह-मध्यगम्। वर्णात्मनाविर्भवति गद्यपद्यादिभेदतः। तद्भिद्यमान-विन्दुरूपं चैतन्यं कुण्डलीस्वरूपं प्रणवाकारं प्राणिनां देह-मध्यगं सत् वर्णात्मना आविर्भवति प्रकाशत इत्यन्वयः। किं कृत्वा प्राप्य कण्ठादिकरणानीति शेषः। तथा च मूलाधारात् प्रथम-मुदितो यस्तु तारः पराख्य इत्यादि प्रपञ्चसारे आचार्य्यो वर्ण्यति। अतएव वक्ष्यमाण सृष्टिः कुण्डलीत इति ज्ञेयम्। शब्दब्रह्मपरम-ब्रह्मभेदेन ब्रह्मणो द्वैविध्यमुक्तं कुलार्णवे पञ्चमखण्डे प्रथमोल्लासे। आगमोत्थं विवेकोत्थं द्विधा ज्ञानं प्रचक्षते। शब्दब्रह्मागममयं परं ब्रह्मविवेकजम्। श्रीभागवते षष्ठस्कन्धे षोड़शाध्यायेऽपि। अहं सर्वाणि भूतानि भूतात्मा भूतभावनः। शब्दब्रह्म परं ब्रह्म ममोभे शाश्वती तनुरिति। शब्दब्रह्म प्रणवरूपं तथा च भग-वद्गीता। ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्। यः प्रयाति त्यजन् देहं स याति परमां गतिमिति। ओमिति ध्वनिमात्रोपलक्षणमतो वक्ष्यमाणगुरुवक्त्रे स्थितं ब्रह्म लभ्यते। तत्प्रसादत इत्यादिवचनैः सह न विरोधः। सर्वत्रैव ध्वनेर्विद्य-

ध्यानत्वात्। प्रणवार्थो वा वाच्यन्तु परमं ब्रह्मप्रणवो वाचकः स्मृत इत्यादिवचनात्।

इति श्रीप्राणतोषिण्यां प्रथमकाण्डे वीजस्वरूपशब्दप्रादुर्भावरूपाकरकथनं नाम प्रथमः परिच्छेदः। * * * *

इत्याकरे समुद्भूते शब्दे संशयरूपतः विवादबिलमुत्पन्नं परस्परजिगीषयेति। अथ शब्दा नित्या अनित्याः प्रसिद्धाश्चेति मतत्रयम्। तत्र पूर्वमते शब्दब्रह्मेति सुष्ठूक्तम्। अनित्यवादिनोऽपि बहवस्तेषां मध्ये आन्तरस्फोटवादिनो जातिव्यक्तिस्फोटात्मकवाह्यस्फोटवादिनश्चैवं विवदन्ते यथा अथ कथमर्थः शब्देन प्रतिपाद्यते प्रतिपादयितुमक्षमत्वात्। तथा हि नियतवर्णाः पदार्थं गमयन्ति ते किं क्रमेण युगपद्वा। नाद्यः। गौरित्यादौ गादिवर्णैः प्रत्येकमर्थप्रतिपादने सति अपरवर्णवैयर्थ्यं स्यात्। अथ वर्णैरेकशः कियानर्थावयवः प्रतिपाद्यत इति चेत्तदप्ययुक्तम्। न हि गवाद्यवयवे गादिवर्णानां सङ्केतोऽस्ति। न द्वितीयः। भिन्नकालोपलब्धानां यौगपद्याभावात्। उच्चरितप्रध्वंसिनो हि वर्णास्तावत्कालमवतिष्ठन्ते। न च पूर्वपूर्ववर्णज्ञानं तस्योत्तरोत्तरवर्णज्ञानानुवृत्तौ नित्यत्वे प्रसङ्गात् अतएवेदं निरस्तम्। यावन्तो यादृशा ये च तदर्थप्रतिपादने। वर्णाः प्रज्ञातसामर्थ्याः ते तथैवार्थबोधका इति। तस्मादनुत्पन्नोत्पन्ननष्टयोरसत्त्वे विशेषाभावात् वर्णेभ्योऽर्थप्रत्ययो न सम्भवतीति वर्णाव्यतिरेकेण वर्णाभिव्यङ्ग्यः स्फोटः परिकल्प्यते। स्फुटत्यर्थो यस्मादिति स्फोटोऽपादानेऽल्। वर्णोच्चारणन्तु स्फोटार्थमेव। पादवर्णा हि स्फोटव्यञ्जका इति क्रमयौगपद्याभ्यां व्यञ्जकासम्भव इति चेद्भवति तावदर्थप्रतिपत्तिः तदनुपपत्त्या वर्णेष्वपि स्फोटः कल्प्यते। तस्मात् वर्णस्फोटात् पदस्फोटस्तस्मादर्थप्रतिपत्तिरित्यत्र क्रमयौगपद्याभ्यां पदेभ्यो वाक्यार्थानुपपत्त्या पदस्फोटव्यञ्जितात् वाक्य-

स्फोटात् वाक्यार्थप्रतीतिः। ननु गौरित्युच्चारणानन्तरं वर्ण-व्यतिरिक्तं परं किञ्चिन्नोपलभामहे। केवलं वर्णा एव प्रतिपा-द्यन्ते। तस्मादनुपलभ्यमानत्वात् स्फोटरूपं नाम नास्त्येव शश-विषाणादिवदिति स्फोटवादिनमाक्षिपन्ति। अपथैरपि गा-देयं वचो वः स्फोटवादिनाम्। नभःकुसुममस्तीति कोऽभिदध्यात् सचेतन इति। तत्र स्फोटवादिभिरुच्यते प्रत्यक्षेण न गृह्यते स्फोटः। तथा हि गौरित्यत्र गकारौकारविसर्गेति वर्णत्रयस्य क्रमेणानुभवानन्तरं पदमिति अभिन्नाकारा बुद्धिरुपजायते। न च तस्यां वर्णत्रयानर्थक्यं प्रयुज्यते अभिन्नत्वात् बुद्धेः। यथा पटबुद्धि-रभिन्ना तन्तुभिरेवोपजायमाना तन्तुव्यतिरिक्तं पटमवलम्बते। तथा इहापि वर्णत्रयव्यतिरिक्तं वस्त्वन्तरमवलम्बते स च स्फोट इति। ननु वर्णव्यतिरिक्तमन्यद्वस्तु न दृश्यत एव पटोऽपि तर्हि तन्तुव्यतिरिक्तो न दृश्यते कथमङ्गीकर्त्तव्यः पटबुद्धौ पटः प्रकाशते स्फोटोऽपि तर्हि तथा। अथ स्फोटः किंस्वरूप इदं तदिति अङ्गुल्याक्षितया प्रतिपाद्यताम्। अथोच्यते। यो हि यद्बुद्धिग्राह्यः स तद्बुद्धिबोध्य एव न बुद्ध्यन्तरेभ्य इति पटोऽपि तर्हि तट-बुद्ध्यैव प्रतिपाद्यते। न तु बुद्ध्यन्तरेण तस्मात्। यथा तन्त्वनुभ-वानन्तरमवयवी प्रत्यक्षसिद्धः पटस्तद्वत् सकलवर्णानुभवानन्तर-मनुभूयमानो वर्णाभिव्यङ्ग्यः। प्रत्यक्षसिद्धस्फोट इति गोपीनाथ-तर्काचार्य्याः। तन्मतद्वयं दूषयितुमुपक्रमन्ते शारदातिलके प्रथमपटले आचार्य्याः। शब्दब्रह्मेति शब्दार्थं शब्दमित्यपरे विदुः। एते आचार्य्याः शब्दार्थम् आन्तरस्फोटं शब्दब्रह्म त्याहुः। यथाह। निरंश एव अभिव्योनित्यबोधस्वभावः शब्दार्थं आन्त-रस्फोट इति। अपरे वैयाकरणाः पूर्वपूर्ववर्णोच्चारणाभिव्यक्त-तत्तत्पदसंस्कारसहायचरमपदश्रवणोद्बुद्धं वाक्यस्फोटलक्षण-मखण्डैकार्थप्रकाशकं शब्दं शब्दब्रह्मेति वदन्ति। यथाह। एक

एव नित्योऽभिव्यञ्जकेभ्योऽखण्डो व्यक्तिस्फोटो जातिस्फोटो वा वर्णोरूप इति। न तु अनित्यःशब्दश्चेत्तदा नानामुनिभिर्महादेवेन देव्यर्थं नानानाशास्त्रेषु एकमेव वचनं क्वचित् क्वचित् कथमुक्तं तदग्रे व्यक्तीभविष्यति। नित्यपक्षे तु नैष दोषो वचनस्यापि नित्यत्वात् इति चेत् न। अनित्यपक्षेऽपि नानावक्त्रादेकस्वरूपा भारती वचनरूपेण निर्गतेत्यनेन कस्यापराधस्तस्याः शक्तेः वैचित्र्यात्। यत्तु योगिनीतन्त्रे प्रथमखण्डे दशमपटले। तन्मध्ये तु मया दृष्टं वर्णपुञ्जं महोज्ज्वलम्। सूर्य्यकोटिसमाभासं चन्द्रकोटिसुशीतलम्। वह्निकोटिमहोज्ज्वालं परं ब्रह्ममयं ध्रुवमिति वचनं तद्ब्रह्माण्डादिवदाद्याशरीरस्थत्वेन अवधातव्यमन्यथा तच्छरीरवर्त्तिनां ब्रह्माण्डादीनामपि नित्यं स्यात्। तच्छरीरे ब्रह्माण्डन्तु। अतीव बृहदाकारब्रह्माण्डकोटिकोटयः। चरन्ति सर्वदा देवि! कः संख्यातुं क्षमो भवेत्। इति तदनन्तरशिववचनाज्ज्ञेयम्। अथ भवन्मते मन्त्रवेदगायत्र्यादीनामनित्यत्वापत्तिरिष्टापत्तिरिति चेत्। ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्। इति गीतोक्तम्। गुरुवक्त्रे स्थितं ब्रह्म लभ्यते तत्प्रसादत!। इति गुरुगीतोक्तम्। गुरुणा यस्य यत् प्रोक्तं तत्तस्य ब्रह्मसंज्ञितम्। इति गुप्तसाधनतन्त्रे षष्ठपटलोक्तम्। गायत्री ब्रह्मरूपिणीति तन्त्रवचोक्तमपौरुषेयाणि वेदवाक्यानीति दुर्गसिंहोक्तञ्च। उक्तञ्च दोषाः सन्ति न सन्तीति पौरुषेयेषु विद्यते। वेदे कर्त्तुरभावात्तु दोषाशङ्कैव नास्ति नः। इति तत्र तत्र लक्षणया ब्रह्मप्रतिपादकमिति व्याख्यातव्यमिति चेन्नेयं लक्षणा रूढ़िप्रयोजनाभ्यां वर्जितत्वादिति। उक्तञ्च काव्यप्रकाशे। मुख्यार्थबाधे तद्योगे रूढ़ितोऽर्थप्रयोजनात्। अन्यार्थो लक्ष्यते यत् सा लक्षणारोपिता क्रिया। इति शब्दश्रवणमात्रावगम्योऽर्थः मुख्यार्थः। यथोक्तं गोपीनाथतर्काचार्य्येण। स्मृति-

मात्रेण यत्रास्य तादर्थ्यमवसीयते। तं मुख्यमर्थं मन्यन्ते गौणं यत्नोपपादितमिति। बाधस्तु अन्वयानुपपत्तिः। यथेत्यर्थे यदित्यव्ययम्। क्रियाव्यापारः। आरोपिता अभिधेयप्रत्ययान्तरितप्रत्ययेति। प्रसिद्धवादिनस्तु नामी वर्णा नित्यास्तल्लक्षणायोगात्। तथा हि सदकारणवन्नित्यमिति नित्यलक्षणम्। सत् सत्त्वाधारि अकारणवत् कारणरहितं यत् तन्नित्यमित्यर्थः। केवलं सदित्युक्ते घटपटादेर्ध्वंसस्यापि नित्यत्वप्रसङ्गः स्यात्। केवलमकारणवदित्युक्तेऽपि प्रागभावस्यापि नित्यत्वप्रसङ्गः। अतो विशेषणद्वयमिति। वर्णास्तु कण्ठताल्वादिकरणक्रमानुविधायिजन्मानः नित्या भवितुमर्हन्ति। नाप्यनित्याः स एवायं शब्दो यः पूर्वमुपालब्ध इति प्रत्यभिज्ञानात्। अथ तत्प्रतिरूपकोऽयमिति चेत्तथापि सङ्केतान्तरप्रसक्तिः स्यात्। सङ्केतस्तु। अस्माच्छब्दादयमर्थो बोद्धव्य इत्युद्देशनरूपः। वर्णादिषु उच्चरितप्रध्वस्तेषु सङ्केतोऽपि ध्वस्त इति। तस्मान्न अमी वर्णा नित्या नाप्यनित्याः। किन्तु अनवच्छिन्नसन्ताना: प्रसिद्धा इति। ननु वर्णा नित्याश्चेत्तदा कथमुक्तं वर्णात्मनाविर्भवतीति। नैवमभिप्रायापरिज्ञानाद्दोषमाशङ्कसे तथा हि। शब्दो द्विविधो ध्वनिर्वर्णश्च। षड्जर्षभगान्धारमध्यपञ्चमधैवतनिषादेषु सप्तसु स्वरेषु वर्णं विना ध्वनिः स्वातन्त्र्येण प्रतिभाति। अमरसिंहेनापि तन्त्रीकण्ठोत्थिताः स्वरा इत्युक्तम्। तथा च षड्जं रौति मयूरस्तु गावो नर्दन्ति चर्षभम्। अजो रौति तु गान्धारं क्रौञ्चं क्वणति मध्यमम्। पुष्पसाधारणे काले कोकिलो रौति पञ्चमम्। धैवतं कुञ्जरो रौति निषादं हेषते हय इति रायमुकुटप्रभृतिधृतसङ्गीतवचनमिति। मालवादयो रागा अपि मूर्च्छितस्वरभेदेन ध्वनिरेव भवति। तथाच मालवोऽयं वसन्तश्चायमित्यादि गीतिश्रवणसमये ध्वनिभेदेन सामाजिकानां प्रतीतिः स्यात्।

ध्वनिभेदज्ञानन्तु स्वरभेदेन भवति। न तु वस्तुत इति। ध्वनिमन्तरेण वर्णो न प्रकाश्यते। अर्थावबोधाय ध्वनिर्वर्णात्मना आविर्भवति प्रकाश्यत इति तस्य तात्पर्य्यम्। नन्वर्थावबोधाय परा पश्यन्ती मध्यमा वैखरीत्वरूपावस्थः सन् ध्वनिरपि प्रकाश्यते। तथाच गवादीनां वत्सप्रभृत्यावाह्नानार्थं नादः प्रवर्त्तते॥ अत एवोक्तं स्वरशास्त्रे॥ शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गीतिरसं फणी। हरिर्वेत्ति हरो वेत्ति नारदोवेत्ति वा न वा॥ इति चेत् सत्यम्। गवादीनां स्वरमात्रप्रतीतिसमवायिनां कियद्विषयकज्ञानमस्ति न तु धीमेधाविज्ञानानि तानि तु वर्णज्ञानादृते न सम्भवन्ति। तथाहि ईश्वरविषयकज्ञानमपीश्वरशब्दं विना न भवति। एवमनिर्देश्यं निर्गुणं ब्रह्मापि अन्धकारावस्थितवस्तुप्रकाशकप्रदीपेनेव तत्प्रकाशकमात्रेण निर्गुणशब्देनैव व्यज्यते। अतएव ध्वनिं त्वणाय मत्वा शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गीतिरसं फणी। एकन्तु कवितातत्त्वमीश्वरो वेत्ति नापर इत्यनेन काव्यविद्भिरुपहसितम्। कवितातु अर्थव्यङ्ग्या अतो वर्णात्मकशब्देनैव कविता स्यादिति तु न शब्दवाच्यत्वं निर्गुणस्य॥ सनिर्गुणः गुणश्चेति शिवो ज्ञेयः सनातनः॥ निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृत इति शारदोक्तेर्वर्णानां प्रकृतिप्रभवत्वेन तत्र वृत्त्याभावात् प्रकृतेरन्यः प्रकृत्या असम्बद्ध इत्यर्थः॥ कुब्जिकातन्त्रे प्रथमपटले तु शेषार्द्धमन्यथोक्तं यथा। निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः। निर्गुणाच्चैव सञ्जाता बिन्दवस्त्रय एव च। ब्रह्मबिन्दुर्विष्णुबिन्दूरुद्रबिन्दुर्महेश्वरीति॥ अन्यथा प्रकृतीश्वरभेदोपलब्धयनन्तरं मिलितत्वप्रतीतिविषयेण सगुणेन निर्गुणस्य भेदप्रतीतिर्न स्यादतएव स्तुत्यध्याये ब्रह्मणा ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः। कथं चरन्ति श्रुतयः साक्षात् सदसतः परे॥ इति परीक्षितः प्रश्नोऽपि सङ्गच्छते। आसां विस्तरः प्रस्तुतमभिधास्ये। तत्रतद्यं

दूषयति शारदातिलकं मतद्वयेन शब्दशब्दार्थयोः ब्रह्मत्वमुक्तं न हि तेषां तयोः सिद्धिर्जड़त्वादुभयोरपीति तेषां वादिनां मते तयोः शब्दशब्दार्थयोः शब्दब्रह्मत्वसिद्धिर्न। हेतुमाह उभयोर्जड़त्वादिति। अयमाशयः। शब्दं विनार्थो जड़ः प्रतिपत्तुमशक्यः कस्तं प्रतिपादयिष्यतीत्येवमर्थं विना शब्दोऽपि जड़ः प्रतिपादयितुमशक्तः कं स बोधयिष्यतीति तेन शब्दार्थरूपविशिष्टस्य शब्दब्रह्मत्वमवधारितम्। तदुक्तम् अध्यायात्मविवेके। अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्। विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतेति। अन्यत्रापि शब्दब्रह्मेति शब्दावगम्यमर्थं विदुर्बुधाः। स्वतोऽर्थानावरोधत्वात् प्रोक्तोऽप्येताद्दृशो वर इति। स तु सर्वत्र संस्यूते जाते भूताकारे पुनः। आविर्भवति देहेषु प्राणिनामर्थविस्तृत इति॥ अतएव कल्पसूत्रटीकायां शङ्कराचार्य्याः॥ षट्‌त्रिंशत्तत्त्वानि विश्वं शरीरं कञ्चुकितः शिवो जीवः। निष्कञ्चुकः परमशिव इति षट्‌त्रिंशत्तत्त्वानि शुद्धमिश्राशुद्धभेदानि यथा। शिवशक्तिसदाशिवेश्वरशुद्धविद्येति शुद्धानि। मिश्राणि शुद्धाशुद्धानि। शुद्धानि यथा मायाकला विद्यावागहङ्कारकालनियतिपुरुषप्रकृतिबुद्धिमनांसि॥ अशुद्धानि यथा। श्रोत्रत्वक्चक्षूरसनाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुतेजोजलपृथिव्यात्मकानि॥ तदुक्तं मृत्युञ्जयसंहितायाम्॥ कलाविद्यावाक्कालमायानियतिपञ्चकैः कञ्चुकितः शिवो जीवो भवति। एवञ्च शिवजीवयोरुपाधिमात्रभेदः। तत्त्वानां विशेषस्तु दीक्षापरिच्छेदे वक्ष्यते॥ कञ्चुकलक्षणं यथा परापरिमलोल्लासे॥ अस्यैव सर्वकर्त्तृत्वं किञ्चित्कर्त्तृत्वविभ्रमः। तस्य हेतुः कलानाम तत्त्वं तत्त्वविदो विदुः। सर्वज्ञस्य त्वविद्या स्यात् किञ्चित् ज्ञातृत्वविभ्रमः। पूर्णस्य रागो विषयेष्वभिष्वङ्ग इतीरितः। कालो हि नाम भावानां भासाभासात्मकः। क्रमावच्छेदकः सोऽयं

लवादिप्रलयावधिः । इदं ममैव कर्त्तव्यमकर्त्तव्यमिदं मम । इत्थं नियमनस्यास्य हेतुर्नियतिरुच्यते । तत्त्वपञ्चकमेतस्य स्वरूपावरकं यतः । तस्मात् कञ्चुकमित्येतदुच्यते तत्त्वपञ्चकमित्याहुः ॥ कुलार्णवे पञ्चमखण्डेऽपि । घृणा लज्जा भयं शोको जुगुप्सा चेति पञ्चमी । कुलं शीलं तथा जातिरष्टौ पाशाः प्रकीर्त्तिताः । पाशबद्धो भवेज्जीवः पाशमुक्तः सदाशिवः ॥ इति शिवजीवयोरैक्यमुक्तम् । राघवभट्टस्तु यदि शब्दः शब्दार्थौ वा ब्रह्मेत्युच्यते तदा ब्रह्मपदवाच्यत्वं नोपपद्यते । यतः सच्चिदानन्दरूपो ब्रह्मपदार्थः । उक्तञ्च श्रुत्या । नित्यं विज्ञानमानन्दं ब्रह्मेत्याह । एतन्न समीचीनम् । तेनैव लिखितकुण्डलीस्वरूपं प्रणवाकारमित्यसङ्गतेः विश्वसाराद्युक्तवचनजाताच्च ॥ तथाच विश्वसारे ॥ शब्दब्रह्मेति तं प्राह साक्षाद्देवः सदाशिवः । अनाहतेषु चक्रेषु स शब्दः परिकीर्त्त्यते । अनाहतं महाचक्रं हृदये सर्वजन्तुषु । तत्र ॐकार इत्युक्तो गुणत्रयसमन्वितः । शिवो ब्रह्मा तथा विष्णुरोङ्कारे च प्रतिष्ठितः । अकारस्य भवेद्ब्रह्मा उकारः सच्चिदात्मकः । मकारो रुद्र इत्युक्त इति तस्यार्थकल्पना । अकारे च भवेद्विष्णु रुकारे च प्रजापतिः । मकारे च भवेत् रुद्र इति वा वर्णनिर्णयः ॥ फेत्कारिणीतन्त्रे प्रथमपटले च ॥ तेभ्य एव समुत्पन्ना वर्णेभ्यो विष्णुशूलिनोः । मूर्त्तयः शक्तिसंयुक्ता उच्यन्ते ताः क्रमेण तु । इत्युक्ता विष्णुशिवशक्तीनां प्रत्येकं मूर्त्तयः पञ्चाशदुक्ताः । प्रपञ्चसारे तृतीयपटलेऽपि ॥ शशीनाभ्युत्थिता यस्मात् स्वरस्पर्शव्यापकाक्षराः । इनः सूर्य्यः स्पर्श स्पर्शः । तन्नि-भेदे समुपन्ना अष्टत्रिंशत् कला मताः । स्वराः सौम्याः स्पर्शयुग्मैः सौरा वायाश्च वह्निजाः । षोड़शद्वादशदशसंख्याः स्युः क्रमशः कलाः ॥ क्रमश इति चन्द्रस्य षोड़श द्वादश सूर्य्यस्य वह्नेर्दशेत्यष्टत्रिंशत् कलाः । वर्णेभ्य एव तास्तत्र पञ्चभेदेन

भूतगैः। सर्वगाश्च समुत्पन्नाः पञ्चाशत्संख्यकाः कलाः॥ तारस्य प्रणवस्य ताभ्य एव तु तावत्यः शक्तिभिर्विष्णुमूर्त्तयः। तावत्या मातृभिः सार्द्धं तेभ्यः स्युरुद्रमूर्त्तयः। तेभ्य एव तु पञ्चाशत् सुरौषधय ईरिताः। याभिस्तु मन्त्रिणः सिद्धं प्राप्नुयुर्वाञ्छितप्रदाम्। अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः। शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गना। पूर्णापूर्णामृता कामदायिन्यः स्वरजाः कलाः। कुलार्णवे पञ्चमखण्डे षष्ठोल्लासे तु चेति कथिता कुलनायिकेति पाठः। तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः। सुषुम्ना भोगदा विश्वा बोधिनी धारिणी क्षमा। कभाद्या वसुदाः सौराष्ठडान्ता द्वादशेरिता। धूम्रार्चिरुष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी। सुश्रीः सुरूपा कपिला हव्यकव्यवहेत्यपि। हव्यवहा कव्यवहेति। याद्यर्णयुक्ता वह्नेस्तथा दश धर्मप्रदाः कलाः। कुलार्णवे तु। आग्नेया यादिवर्णाद्या दश धर्मप्रदाः कलाः। इति पाठः। शारदायाम्। अमृता मानदा इत्याद्युक्ता। अभयेष्टकरा ध्येयाः श्वेतपीतारुणाः क्रमात्। इति विशेष उक्तः। प्रपञ्चसारे। सृष्टिर्ऋद्धिः स्मृतिर्मेधा कान्तिर्लक्ष्मीर्धृतिः स्थिरा। स्थितिः सिद्धिरकारोत्थाः कला दश समीरिताः। अकारप्रभवा ब्रह्मजाताः स्युः सृष्ट्ये कलाः। शारदायाम्। अकाराद्ब्रह्मणोत्पन्नास्तप्तचामीकरप्रभाः। द्रवीभूतस्वर्णवर्णा इत्यर्थः। एताः करधृताक्षस्रक्पङ्कजद्वयकुण्डिकाः। प्रपञ्चसारे। जरा च पालिनी शान्तिरीश्वरी रतिकामिका। वरदा ह्लादिनी प्रीतिर्दीर्घाश्चोकारजाः कलाः॥ शारदायान्तु। दीर्घाः स्युरष्टवर्गजाः। उकाराद्विष्णुनोत्पन्नास्तमालदलसन्निभाः। अभीतिवरचक्रेष्टबाहव. परिकीर्त्तिताः। तीक्ष्णा रौद्री भया निद्रा तन्द्री क्षुत् क्रोधनी क्रिया। उत्कारी चैव मृत्युश्च मकाराद्यरजाः कलाः। मकारप्रभवा रुद्र-

जाताः संहृतये कलाः। शारदायान्तु। उकारी मृत्युरेताः स्युः कथिताः पयवर्गजाः। रुद्रेण मार्णादुत्पन्नाः शरच्चन्द्रनिभप्रभाः। उद्वहन्त्योऽभयं शूलं कपालं बाहुभिर्वरम्। इत्यधिकमुक्तम्॥ विन्दोरपि चतस्रः स्युः पीताः श्वेतारुणासिताः। ईश्वरेणोदिता विन्दोः पीताः श्वेतारुणासिताः। अनन्ताय यवर्गस्था जवाकुसुमसन्निभाः। अभयं हरिणं टङ्कं दधाना बाहुभिर्वरम्। इत्यधिकमुक्तं शारदायाम्॥ कलाश्चेश्वरसञ्जातास्तिरोधानाय विन्दुजाः। इति कुलार्णवे॥ निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च। इन्धिका दीपिका चैव रेचिका मोचिका परा। सूक्ष्मा सूक्ष्मामृता ज्ञानामृता चाप्यायनी तथा। व्यापिनी व्योमरूपा च अनन्ता नादसम्भवा। नादजाः षोड़श प्रोक्ता भुक्तिमुक्तिप्रदायिकाः। सदाशिवेन सञ्जाता नादादेताः सितत्विषः। अक्षस्रक्पुस्तकगुणकपालाब्यकराम्बुजाः। इति पञ्चाशदाख्याताः कलाः सर्वसमृद्धिदाः। इत्यादिकं शारदायाम्। इति पञ्चाशत्कलाः। प्रपञ्चसारे॥ केशवनारायणमाधवगोविन्दविष्णवः। मधुसूदनसंज्ञश्च सप्तमः स्यात् त्रिविक्रमः। वामनः श्रीधराख्यश्च हृषीकेशस्तदन्तरम्। पद्मनाभस्तथा दामोदराख्यो वासुदेवयुक्। सङ्कर्षणश्च प्रद्युम्नः सानिरुद्धाः स्वरोद्भवाः। ततश्चक्री गदी शार्ङ्गी खड्गी शङ्खी हली तथा। मुषली शूलिसंज्ञश्च भूयः पाशी तथाङ्कुशी। मुकुन्दो नन्दजो नन्दी नरो नरकजिद्धरिः। कृष्णः सत्यः सात्वतश्च शौरिः शूरो जनार्दनः। भूधारी विश्वमूर्त्तिश्च वैकुण्ठः पुरुषोत्तमः। बली बलानुजो बालो वृषघ्नश्च वृषस्तथा। हंसो वराहो विमलो नृसिंहो मूर्त्तयो हलात्। कादिक्षान्तादयञ्जनादित्यर्थः। केशवाद्या इमे श्यामाश्चक्रशङ्खलसत्कराः। इति शारदायामधिकम्॥ फेत्कारिणीतन्त्रेऽपि॥ शङ्खचक्रधराः सर्वे घनाभाः पीतवाससः। केश-

वाद्या निजाङ्कस्थशक्त्यालङ्कृतविग्रहाः। इति पञ्चाशद्विष्णवः। कीर्त्तिः कान्तिस्तुष्टिपुष्टी धृतिः शान्तिः क्रिया दया। मेधा सर्षी श्रद्धा स्याल्लज्जा लक्ष्मीः सरस्वती। प्रीतिरती रमा प्रोक्ताः क्रमेण स्वरशक्तयः। जया दुर्गा प्रभा सत्या चण्डा वाणी विलासिनी। विजया विरजा विश्वा विनदा सुनदा स्मृतिः। ऋद्धिः समृद्धिः शुद्धिश्च भक्तिर्मुक्तिर्मितिः चमा। रमोमा क्लेदिनी क्लिन्ना वसुदा वसुधा परा। परा परायणा सूक्ष्मा सन्ध्या प्रज्ञा प्रभा निशा। अमोघा विद्युता चेति शक्तयः सर्वकामदाः। एताः प्रियतमाङ्केषु निषण्णाः सस्मिताननाः। विद्युद्दामसमानाङ्ग्यः पङ्कजाभयवाहवः॥ फेत्कारिणीतन्त्रे तु॥ ताश्च सस्मितवक्त्राब्जा विद्युदाभाः प्रकीर्त्तिताः। कान्ताङ्कस्थाश्च कीर्त्त्याद्याः कमलाभयपाणयः। इत्युक्तम्। इति पञ्चाशद्विष्णुशक्तयः॥ श्रीकण्ठोऽनन्तसूक्ष्मौ च त्रिमूर्त्तिरमरेश्वरः। अर्घीशो भावभूतिश्चातिथिश्च स्थाणुको हरः। झिण्टीशो भौतिकः सद्योजातश्चानुग्रहेश्वरः। अक्रूरश्च महासेनः स्युरेताः स्वरमूर्त्तयः। ततः क्रोधीशचण्डेशपञ्चान्तकशिवोत्तमाः। अथैकरुद्रकूर्मैकनेत्राह्वचतुराननाः। अजेशः सर्वसोमेशस्तथा लाङ्गलिदारकौ। अर्द्धनारीश्वरश्चोमाकान्तश्चाषाढ़िदण्डिनौ। स्युरत्रिमीनमेषाख्यालोहितश्च शिखी तथा। छगलण्डद्विरण्डेयौ समहाकालवालिनौ। भुजङ्गेशपिनाकीशखड्गीशाख्यवकेशकाः। श्वेतस्रग्वीशनकुलिशिवाः संवर्त्तकस्तथा। एते रुद्राः स्मृता रक्ता धृतशूलकपालकाः॥ इति पञ्चाशद्रुद्राः॥ पूर्णोदरी स्याद्विरजा शाल्मली तदनन्तरम्। लोलाची वर्त्तुलाची च दीर्घघोणा समीरिता। सुदीर्घमुखागोमुख्यौ दीर्घजिह्वा तथैव च। कुण्डोदर्य्यूर्द्धकेश्यौ च तथा विकृतमुख्यपि। ज्वालामुखी ततो ज्ञेया पश्चादुल्कामुखी ततः। सुश्रीमुखी चैव विद्यामुख्येताः स्वर-

शक्तय:॥ महाकालीसरस्वत्यौ सर्वसिद्धिसमन्विते। गौरी त्रैलोक्यविद्या स्यान्मन्त्रसिद्धिस्ततः परम्। आत्मशक्तिर्भूतमाता तथा लम्बोदरी स्मृता। द्राविणी नागरी भूयः खेचरी चापि मञ्जरी। रूपिणी चित्रिणी पश्चात् काकोदर्य्यपि पूतना। स्याद् भद्रकालीयोगिन्यौ शङ्खिनी गर्जिनी तथा। कालरात्रिश्च कुब्जिन्या कपर्दिन्यपि वज्रषा। जया च सुमुखेश्वर्य्या रेवती माधवी ततः। वारुणी वायवी प्रोक्ता पश्चाद्रक्षे विदारिणी। ततश्च सह आलक्ष्मीर्व्यापिनी माययान्विता। एता रुद्राङ्कपीठस्थाः सिन्दूरारुणविग्रहाः। रक्तोत्पलकपालाभ्यामलङ्कृतकराम्बुजाः। आयुधादिध्यानं वामदक्षयोरेवं सर्वत्र। इति पञ्चाशद्रुद्रशक्तयः। चन्दनकुचन्दनागुरुकर्पूरोशीररोगजलघुसृणाः। कक्कोलजातिमांसीमुराचोरग्रन्थिरोचनापत्राः। पिप्पलविल्वगुहारुणदर्ष्ण कलरङ्गाह्वकुम्भीवल्लिन्यः। शोल्वम्बरकाश्मरिकास्थिराजदरपुष्पिका। मयूरशिखाप्लक्षाग्निमन्थसिंहीकुशाह्वदर्भाः। कृष्णदरपुष्पीरोहिणचुण्डकवृहतीपाटलचित्रातुलस्यपामार्गाः। शतमखलताद्विरेफाविष्णुक्रान्तामूषल्यथाञ्जलिनी। दूर्वाश्रीदेवीसह तथैव लक्ष्मीसदाभद्रे। आदीनामिति कथिता वर्णानां क्रमवशादथौषधयः। गुलिकाकवायभावितप्रभेदतो निखिलसिद्धिदायिन्यः। चन्दनं प्रसिद्धम्। कुचन्दनं रक्तचन्दनम्। अगुरुः प्रसिद्धः। कर्पूरं रसकर्पूरम्। उशीरं वीरणमूलम्। रोगः कुष्ठम्। जलं बाला। घुसृणः कुङ्कुमम्। कक्कोलं काकोलीति प्रसिद्धम्। जातिः पुष्पविशेषः। खतामांसी जटामांसी। मुरा सुरामांसी। चोरश्चोरपुष्पी। ढोलकलम्बीति गौड़भाषा। ग्रन्थिः गाठियानीति गौड़प्रसिद्धम्। रोचना हरिद्रा। पत्रं तेजपत्रम् पिप्पलोऽश्वत्थः। विल्वः प्रसिद्धः। गुहा जयन्ती। अरुणदर्ष्ण पृश्निपर्णी। फलरङ्गाह्वः कामराङ्गा इति प्रसिद्धः। कुम्भी गाम्भारी।

वज्रिनी ताम्बूली । शोखम्बरं कोलङ्ग इति प्रसिद्धः । काश्म-रिका कश्मेरुः । स्थिरा वला । अज इज्जलः हिजल इति यस्य प्रसिद्धिः । दरपुष्पिका तिलपुष्पम् । मयूरशिखा अपामार्ग-विशेषः सुपार्डेति यस्य प्रसिद्धिः । प्लक्षो वटः । अग्निमन्थो गम्भारिः । सिंही कण्टकारी । कुशा कुशाख्यः प्रसिद्धः । दर्भः काशविशेषः । कणाः पिप्पली । दरपुष्पी इन्द्रयवः । रोहितं कुटुकी । चुवकुकं कुकुवल्या ॥ वृहती प्रसिद्धा । पाटलः पारलीति प्रसिद्धः । तुलसी प्रसिद्धा । अपामार्गः प्रसिद्धः । शतमखता इन्द्रलता । द्विरेफा भृङ्गराजः । विष्णुक्रान्ता अपराजिता । मूषली तालमूली । अञ्जलिनी लाजाबु लज्जा-वतीति यस्याः ख्यातिः । दूर्वा प्रसिद्धा । श्रीदेवी धान्यमिति । लक्ष्मीः शतमूली । सदा रुद्रजटा । भद्रा भद्रपर्पटी इत्योष-धयः ॥ ओषधीनां प्रयोजनमप्युक्तं राघवभट्टधृतेन ॥ यो यो मन्त्रस्तस्य तस्य वर्णौषधिविनिर्मिता । तत्तद्वर्णोत्थसंख्याभिर्गु-लिका मन्त्रसिद्धिदा । तयाभिषेकस्तद्धवनं तत्स्वादस्तद्विले-पनम् । तत्पूजा च तथा सिद्धिदायकं स्यान्न चान्यथा ॥ इत्यो-षधीनां फलकथनम् ॥ कामधेनुतन्त्रप्रथमपटलेऽपि ॥ अका-रादिक्षकारान्ता मातृका वीजरूपिणी । विसर्गश्चैव विन्दुश्च द्विस-न्धिर्ब्रह्मविग्रहा । विसर्गः प्रकृतिर्विन्दुः पुरुषः । द्विसन्धिर्द्वयो-र्भेदकः ॥ वर्णात्तु जायते ब्रह्मा तथा विष्णुः प्रजापतिः । रुद्रश्च जायते देवि ! जगत्संहारकारकः । इति सर्वेषामुपास्यानां ब्रह्मविष्णुप्रभृतीनां सर्वगकलानामोषधीनाञ्च ब्रह्मस्वरूपप्रणव-पञ्चरश्मप्रकारोकारमकारविन्दुनादादिभ्य उत्पत्तेः । यदि वा वाच्यवाचकसम्बन्धेन लक्षणया प्रणवशब्देन प्रणववाच्यं ब्रह्मे-त्यङ्गीक्रियते तदाप्युक्तदोषस्तदवस्थ एव । शारदातिलकसार-प्रपञ्चसारोक्तप्रमाणजातैः प्रणवावयवा एव सर्वोत्पादका न ब्रह्मा

वयवविशेषवाचका इति। तेभ्यः कथं सर्वेषामुत्पत्तिश्च स्यात्। ननूत्पत्तिकर्तृमात्रं न ब्रह्म अपि तु उत्पत्तिस्थितिलयहेतुत्वेनावधारितं यत् तदेव। तथाच वेदान्तवृत्तिधृता श्रुतिः। यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्राप्याभिसंविशन्ति तद्ब्रह्मेति व्यजाना इति प्रणवस्योत्पादकमात्रत्वात् कथं तथात्वमिति चेत् सत्यं प्रणवरश्म्युद्भवानां ब्रह्मादीनां सृष्ट्यादिकर्तृत्वदर्शनात् प्रणवस्य हेतुत्वं स्पष्टमवगम्यते। अथ तर्हि प्रणवस्य ब्रह्मत्वमस्तु कथमन्येषां वर्णानामित्यपि कुदेश्यं प्रणवविकृतत्वेनापि ध्वनिमयत्वात्तेषामिति॥ तथाच प्रपञ्चसारे प्रथमपटले॥ मूलार्णमर्णविकृतीर्विकृतेर्विकृतीरपि। तत्प्रभिन्नानि मन्त्राणि प्रयोगांश्च पृथग्विधान्। वैदिकांस्तान्त्रिकांश्चैव सर्वानित्थमुवाच हेति। मूलार्णो हंसः। अर्णविकृतिरकारादिक्षकारान्ता। विकृतेर्विकृतिर्वर्णसंयोगादि। तेन प्रभिन्नानि भेदं प्राप्तानि शेषं सुगमम्। इत्थमनेन प्रकारेण ब्रह्माणं सर्वान् काल उवाचेत्यन्वयः। हंसो विकारप्रकारस्तु। चतुर्थपटले प्राणात्मकं हकाराख्यं वीजं तेन तदुद्भवाः। षडूर्मयः स्युरेफोत्था गुणाश्चत्वार एव च। पवनाद्याः पृथिव्यन्ताः स्पर्शाद्यैश्च गुणैः सह। करणान्यपि चत्वारि सङ्घातश्चेतनेति च। हकारस्य गुणाः प्रोक्ताः षडिति क्रमतो बुधैः। उकारान्तास्त्वकाराद्याः षड्वर्णाः षड्भ्य एव तु। प्रभेदेभ्यः समुत्पन्ना हकारस्य महात्मनः। ऋकाराद्याश्च चत्वारो रेफोत्थाश्च पराः स्मृताः। एकारादिविसर्गान्तं वर्णानां षट्कमुद्धृतम्। हकारस्य षड़ङ्गेभ्य इतीदं षोड़शाङ्गवत्। एभ्यः सप्तदशिरेऽङ्गेभ्यः स्वराः षोड़श सर्वगाः। तेभ्यो वर्णान्तराः सर्वे ततो मूलमिदं विदुः। स तारो वीजताभिष प्राणिष्वेव व्यवस्थितः। ब्रह्माण्डं ग्रन्थमेतेन व्याप्तं स्थावरजङ्गमम्। नादः प्राणश्च जीवश्च घोषश्चेत्यादि कथ्यते। एष

पुंस्त्रीनियमितैर्लिङ्गैश्च सनपुंसकैः। रेफो माया वीजमिति त्रिधा मायाभिधीयते। शक्तिः श्रीः सन्नतिः कान्तिर्लक्ष्मीर्मेधा सरस्वती। चान्तिः पुष्टिः स्थितिः शान्तिर्विद्याद्यैः स्वार्थ-वाचकैः। नानाविकारतां प्राप्तैः स्वैः स्वैर्भावैर्विकल्पितैः। तामेतां कुण्डलीत्येके सन्तो ह्यद्ययनां विदुः। सा रौति सततं देवी भृङ्गीसङ्गीतकध्वनिम्। आकृतिं स्वेन भावेन पण्डिता बहुधा विदुः। कुण्डली सर्वथा ज्ञेया सुषुम्नानुगतैव सा। चराचरस्य जगतो वीजत्वाद्वीजमेव तत्। मूलस्य विन्दुयोगेन शतानन्द-त्वदुद्भवः। रेफान्वितोकाराकारयोगादुत्पत्तिरेतयोः। हकाराख्योद्भवस्तेन हरिरित्येष शब्द्यते। हरत्वमस्य तेनैव सर्वा-त्मत्वं ममापि च। अस्य विन्दोः समुत्पत्त्या तदन्ते सोऽहमुच्यते। सहङ्कारः पुमान् प्रोक्तः स इति प्रकृतिः स्मृता। अजपेयं मता शक्तिस्तथा दक्षिणवामतः। विन्दुर्दक्षिणभागस्तु वामभागो विसर्गकः। तेन दक्षिणवामाख्यौ भागौ पुंस्त्रीविशेषितौ। विन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिर्मता। पुम्प्रकृत्यात्मको हंस-स्तदात्मकमिदं जगत्। पुंरूपा सा विदित्वास्मं सोऽहंभावमुपा-गता। स एव परमाख्योऽयं मनुरस्य महात्मनः। सकारश्च हकारश्च लोपयित्वा प्रयोजयेत्। सन्धिर्वै पूर्वरूपाख्यं ततोऽसौ प्रणवो भवेत्। ताराद्विभक्ताक्षरमांशतः स्युर्भूतानि खादीन्यथ मध्यमांशात्। इनादितेजांसि च पूर्वभावात् शब्दाः समन्त्राः प्रभवन्ति लोके। समस्ता इत्यपि क्वचित् पाठः। विश्वसारे द्वितीयपटलेऽपि॥ हंसौ तत्र समुद्भूतौ पुंस्त्रियौ तत्र सम्मतौ। हं तत्र पुरुषः प्रोक्तः सकारः प्रकृतिः स्मृतः। ताविमौ सकलं विश्वं व्याप्तौ च क्षतकोऽनलम्। क्षतको भस्म। यथानलमग्निं व्याप्तस्तथा इमौ विश्वं व्याप्तावित्यर्थः। अग्निर्माणवक इत्यादिवदुपमासूचकशब्दमन्तरेणापि उपमाप्रतीतिः। यदा

तद्भावमाप्नोति तदा सोऽहमिति स्मृतः। स एव परमं ब्रह्म-कूटस्थो जगदङ्कुरः। सर्वे देवास्तथा वेदा दिग्वातार्कादयस्तथा। तुष्या दिक्कालकल्पाश्च तत्तदेव तथात्मकम्। यस्मिंश्च प्रलयं यान्ति वाङ्नाशे जगदीश्वरि!। यस्मिन् सृष्टिः सदैवैति यस्मिन्नद्यापि तिष्ठति। स एव परमं ब्रह्म सोऽहंभावेन जायते। सहवर्णौ विलुप्याथ सन्धिवर्णं दिशेद्यदा। प्रणवः सर्ववर्णेषु कथितः पद्मयोनिना। परानन्दमयं ब्रह्म शब्दब्रह्म-विभूषितम्। आत्मनो देहमध्ये तु सर्वमन्त्रात्मकं प्रिये!॥ इति रुद्रजामले उत्तरखण्डे द्वाविंशतिपटले च॥ एकमूर्त्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः। मम विग्रहसंक्लृप्ता सृजत्यवति हन्ति च। प्रणवादुद्भवा एते योगविघ्नकराः सदा। अकारं ब्रह्मणो वर्णं शब्दरूपं महाप्रभम्। प्रणवान्तर्गतं नित्यं योगपूरकमाश्रयेत्। उकारं वैष्णवं वर्णं शब्दभेदिनमीश्वरम्। प्रणवान्तर्गतं सत्त्वं योगकुम्भकमाश्रयेत्। मकारं शाम्भवं रूपं जीवभूतं विधूननम्। प्रणवान्तःस्थितं कालं लयस्थानं समाश्रयेत्। वर्ण एष विभागेन प्रणवं परिकल्पितम्। प्रणवाज्जायते हंसो हंसः सोऽहं परो भवेत्। सोऽहं ध्यानं महाज्ञानं योगिनामपि दुर्लभम्। निरन्तरं भावयेद्यः स एव परमो भवेत्। हं पुमान् स स्वरूपेण चन्द्रेण प्रकृतिस्तु सः। एतद्धंसं विजानीयात् सूर्य्य-मण्डलभेदकम्। विपरीतक्रमेणैव सोऽहंध्यानं यदा भवेत्। तदैव सूर्य्यगः सिद्धो वासुदेवप्रपूजितः। हकारार्णं सकारार्णं लोपयित्वा ततः परम्। सन्धिं कुर्य्यात्ततः पश्चात् प्रणवोऽसौ महामनुः। इति प्रणवतः सर्वेषामक्षरादीनामाविर्भावदर्शनाच्च। अतएव सर्वजीवोत्पादक इति वर्णाभिधाने प्रणवस्य नाम वक्ष्यति॥ अथ प्रणवस्य ब्रह्मवाचकत्वं न तु ब्रह्मत्वमुक्ताम् सृष्टिप्रपञ्चस्तु अकारोकारमकारनादविन्दुरूपप्रणवावयवपञ्चक-

वाच्यब्रह्मविष्णुरुद्रशक्तीश्वरेभ्य एवेति। अतएव समस्तं व्यस्तं त्वां शरणद! गृणात्योमिति पदमिति पुष्पदन्तेनाप्युक्तम्। अन्यत्रापि वाच्यन्तु परमं ब्रह्म प्रणवो वाचकः स्मृत इति। वाच्यस्य ब्रह्मत्व-मुक्तम्। न तु वाचकस्य प्रणवस्य इत्यतो वर्णस्यानित्यत्वमिति चेन्न कल्पसूत्रविरोधात् तत्तत्सूत्रञ्च वर्णात्मका नित्याः शब्दा इति। अयमाशयः। शब्दोहि द्विविधो ध्वन्यात्मको वर्णात्मकश्च। तत्र ध्वन्यात्मकोऽनुपलभ्यमानत्वादनित्य इति केचित्। ते तु मृदङ्गाद्याघातोद्भवमेव ध्वनिं मन्यमाना वर्णात्म-कस्य न ध्वनित्वमिति वदन्ति तदतीव मन्दं तथाहि। ध्वनि-र्द्विविधस्तरङ्गनिभः कदम्बकोरकनिभश्च। आद्यः समीपवर्त्तिन-मात्मस्वरूपं तरङ्गन्यायेन क्रमशः प्रतिवर्णं परिबोध्याभिधेयं प्रतिपादयति। द्वितीयस्तु कदम्बकोरकवद्व्यक्तरूपेण दूर-वर्त्तिनमात्मानमेव प्रतिबोधयति नाभिधेयं यथा ढक्कादिरव इति। वर्णात्मकस्तु नित्य एव तदुक्तं शारदातिलकोदये॥ वेदा-नामीश्वरः कर्त्ता पुराणानां महर्षयः। यन्त्राख्याः श्रूयते कर्त्ता स्वयम्भूर्म्मातृका ततः॥ जामलेऽपि॥ ब्रह्मत्वं ब्रह्मणा प्राप्तं विष्णुत्वं विष्णुना स्वयम्॥ पराक्रमेऽपि। धन्यैर्माहेश्वरैः स्वार्थप्रत्यभिज्ञान-शालिभिः। स्वपरिज्ञानमात्रेण जीवन्मुक्ता भवन्ति हि। इत्य-नेन मन्त्राणां नित्यता दर्शिता। इति कुलमूलावतारकल्प-सूत्रटीकायां शङ्कराचार्य्यपादैर्व्याख्यातम्। वस्तुतस्तु वाच्यस्य परमब्रह्मत्वं न तु ब्रह्मत्वमिति पुरैवोक्तम्। नन्वपौरुषेयाणि वेदवाक्यानीति वेदे कर्त्तुरभावादिति चोक्तवाक्याभ्यां वेदस्य नित्यता दर्शिता। तर्हि कथं वेदानामीश्वरः कर्त्तेति। वेदस्य जन्यता वक्ष्यमाणवेदादिवीजमित्यादिवचनैस्तावन्मन्त्राणां जन्य-त्वान्मन्त्राणां नित्यतेति च सङ्गच्छत इति चेत् सत्यम्। ईश्वरस्य प्रकाशकत्वेन वेदानां कर्त्तृत्वमङ्गीक्रियते न तूत्पा-

दकत्वेन। तथाच। बृहन्नीलतन्त्रे चतुर्थपटले॥ वेदं ब्रह्मेति साक्षाद्वै जानीहि नगनन्दिनि!। स्वयं प्रवर्त्तते वेदस्तत्कर्त्ता नास्ति सुन्दरि!। स्वयम्भुवे भगवता वेदो गीतस्तथा पुरा। शिवाद्या ऋषिपर्य्यन्ताः स्मर्त्तारोऽस्य न कारकाः। प्रकाशका भवन्त्येव कृष्णाद्यास्त्रिदिवौकस इति॥ यत्तु नारदपञ्चरात्रे प्रथमरात्रे त्रयोदशाध्याये सावित्रीस्तुतौ॥ सावित्री वेदमाताऽहं वेदानां जनको विधिः। तमेव धातुर्धातारं नमामि त्रिगुणात् परम्। इति वचनेन न तस्य सावित्रीमातृकत्वं विधिजनकत्वञ्चोक्तम्। तदपि अस्याः सङ्गं समासाद्य वेदविस्तारणं कुर्विति प्रागुक्तवचनेनैकवाक्यतया विस्तारकारकत्वेन अवधारणीयम्। अन्यथा तेने ब्रह्महृदेति भागवतप्रथमश्लोकस्य वेदान् युगान्ते तमसा तिरस्कृतान् रसातलाद्यो नृतुरङ्गविग्रहः। प्रत्याददे वै कवयेऽभियाचते तस्मै नमस्ते वितथेहितायेति पञ्चमस्कन्धाष्टादशाध्यायोक्तश्लोकस्य वैयर्थ्यं स्यात्। स्वयं वेदजनकस्य ब्रह्मणोऽन्यस्माच्छ्रिचणमन्यस्यायाच्ञाप्राप्तिर्न सम्भवतीति। अभियाच्यमानब्रह्मार्थं तमसा दैत्यरूपेण तिरस्कृतानपहृतान् वेदान् नृतुरङ्गविग्रहो हयग्रीवमूर्त्तिः सन् रसातलात् प्रत्याददे प्रत्युज्जहारेत्यन्वयः। तर्हि कथं षष्ठस्कन्धे प्रथमाध्याये। वेदो नारायणः साक्षात् स्वयम्भूरिति शुश्रूम। इत्यत्र श्रीधरस्वामिना व्याख्यातम्। वेदो नारायणादुद्भूतः स एव साक्षादुपचार इति स्वयम्भूरिति निश्वासमात्रेण स्वयमेव भवति तथा च श्रुतिः। अस्य महतोभूतस्य निश्वसितमेतदयदृग्वेद इति॥ कामधेनुतन्त्रेऽपि॥ अकारादिक्षकारान्ता स्वयं परमकुण्डली। सर्वं चराचरं विश्वं वर्णात्मा सूयते ध्रुवम्। नानाशास्त्रं पुराणञ्च इतिहासञ्च सुन्दरि!। वेदञ्च स्मृतिशास्त्रञ्च अन्यानि यानि कानि च। अक्षराज्जायते सर्वं परं ब्रह्ममयं प्रिये!। इति

वचने कुण्डली वेदं सूयत इति वक्ष्यमाणं धामत्रयं सा वेदाना-
मित्यादिश्रुत्यष्टादशविद्या इत्यादि च सङ्गच्छते। सत्यं वेदान्त-
मतमाश्रित्य तत् सर्वं समाधेयम्। तन्मतन्तु केवलमीश्वरं
विना सर्वेषामनित्यत्वम्। अपौरुषेयाणीत्यादि मीमांसक-
मतानुसारेणोक्तमिति। सर्वमनवद्यम्। वस्तुतस्तु सर्ववेदमयी
देवी सर्वमन्त्रमयी तथेत्यादि वक्ष्यमाणशारदोक्तकुण्डलिन्याश्चैत-
न्यरूपायाः शब्दब्रह्मत्वेन निरूपितायाः शब्दार्थोभयरूपिण्या
वेदादिमयत्वेन वेदानां मन्त्राणाञ्च नित्यत्वमेव प्रमाणम्। तर्हि
उक्तश्रुतेः का गतिरिति चेत् न। महतो भूतस्य विराड्मूर्त्तेरीश्व-
रस्य निश्वसितं वेद इत्यर्थे वेदस्य जन्यत्वं नायातम्। यदि च
श्रीधरस्वामिव्याख्यावलम्बिभिर्जन्यत्वमङ्गीक्रियते तदा पर-
मेष्ठिनो निश्वासद्वारेणाविर्भूतस्य भगवतो वराहमूर्त्तेः पर-
मेष्ठिजन्यत्वं स्यात्। तत्प्रमाणन्तु तृतीयस्कन्धे त्रयोदशाध्याये पर-
मेष्ठी त्वपां मध्ये तथा मग्नामवेक्ष्य गामित्युपक्रम्य यस्याहम्
हृदयादासं स ईशो विदधातु मे। इत्यभिध्यायतो नासाविव-
रात् सहसानघ!। वराहतो को निरगादङ्गुष्ठपरिमाणकः।
तस्याभिपश्यतः खस्थः क्षणेन किल भारत!। गजमात्रः प्रववृधे
तदद्भुतमभून्महत्। इति मैत्रेयवचनम्। इति नानाशास्त्रो-
त्पत्तिकथनम्। ग्रहादीनामपि वर्णादुत्पत्तिरुक्ता॥ प्रपञ्च-
सारे चतुर्थपटले॥ तदा स्वरेभ्यः सूर्य्योऽयं कवर्गेभ्यस्तु लोहितः।
चवर्गप्रभवः काव्यष्टवर्गाद्बुधसम्भवः। तवर्गोत्थः सुरगुरुः पव-
र्गोत्थः शनैश्चरः। यवर्गजोऽयं शीतांशुरिति सप्तगुणा त्वियम्॥
विश्वसारतन्त्रे अन्तमातृकासम्भववर्गाधिष्ठातृदेवतात्वं ग्रहाणा-
मुक्तम्॥ यथा। सप्तवर्गस्य देवेशि! देवताः कथयामि ते।
रक्तवर्णो भूमिपुत्रः कवर्गदेवता मता। काव्यष्टवर्गस्य विभुश्च-
वर्गस्य बुधः स्मृतः। तवर्गस्य सुराचार्य्यः पवर्गस्य शनैश्चरः।

यवर्गश्च तथा चन्द्रः स्वराणां देवता रविरिति॥ प्रपञ्चसारे॥ अस्या विकारवर्णेभ्यो जाता द्वादश राशयः। लवादिकालोपचितैस्तैः स्याच्चक्रगतिक्रिया। ऋक्षराश्यादिषु तथा चक्रगत्या जगत्स्थितिः। वक्ष्यामि चक्ररूपञ्च प्रबद्धं राशिभिर्यथा। अन्तर्बहिर्विभागेन रचयेद्राशिमण्डलम्। भूचक्र एव मेषादिः प्रविज्ञेयोऽथ मानुषः। आद्यैर्मेषाह्वयो राशिरीकारान्तैः प्रतीयते। ऋकारान्तैर्लृकारान्तैर्वृषो युग्मं ततस्त्रिभिः। ततो मेषराश्युद्भवात् परं ऋकारान्तैस्त्रिभिर्वृषो जात एवं लृकारान्तैस्त्रिभिर्मिथुनमित्यन्वयः॥ एदैतोः कर्कटो राशिरोदौतोः सिंहसम्भवः। अमः श वर्णकेभ्यश्च सञ्जाता कन्यका मता। षड्भ्यः कचटतेभ्यश्च पयाभ्याञ्च प्रजज्ञिरे। वणिगाद्यास्तु मीनान्ता राशयः शक्तिजृम्भणात्। चतुर्भिर्यादिभिः सार्द्धं स्यात् चकारस्तु मीनगः॥ इति वर्णतो राशिसृष्टिकथनम्॥ चेत्ताधिपोऽपि तत्रैव॥ अङ्गाराजकवृश्चिकौ चतुले शुक्रस्य युक्कन्यके बौधे कर्कटकाह्वयो हिमरुचः सिंहास्तथा गोपतेः। चापाजावपि धैषणौ मकरकुम्भाख्यौ च मन्दग्रहाः प्रोक्ता राश्यधिपा वलौ च कलसे सोऽयं क्रमो दर्शितः। इति राश्यधिपकथनम्॥ ततस्तदूर्द्धभागस्थो भुवश्चक्रसमस्तथा। स तु सिंहादिको यस्मिन् पैत्रकी नियता गतिः। तदूर्द्धभागसंस्थश्च स्वश्चक्रश्चापि तादृशः। स तु चापादिको देवचक्रस्तेनाभिकस्त्वयम्। इति त्रिभुवनराशिचक्रकथनम्॥ तथा एभ्य एव तु राशिभ्यो नक्षत्राणाञ्च सम्भवः। स चाप्यक्षरभेदेन सप्तविंशतिधा भवेत्। आभ्यामश्वयुजा जाता भरणी कृत्तिका पुनः। लिपित्रयाद्रोहिणी च तत्परत्वाच्चतुष्टयात्। एदैतोर्मृगशीर्षार्द्रे तदन्ताभ्यां पुनर्वसुः। अमसोः केवलो योगो रेवत्यर्थं पृथग् गतः। कतस्तिष्यस्तथाश्लेषः खगयोर्घङयोर्मघा। ततः पूर्वोत्तरजयोरुत्तराझजयोस्तथा।

हस्ताचित्रा च टठयोः स्वाती डाद्यच्चराद्भूत् । विशाखातु ढणोद्भूता तथदेभ्योऽनुराधिका । ज्येष्ठा धकारान्मूलाख्या नपफेभ्योऽभवत्तथा । पूर्वाषाढ़ा ततोऽन्या च सञ्जाता श्रवणा मता । श्रविष्ठाख्या च यवयोस्तथा शतभिषा ततः । वशयोः प्रोष्ठपत्संज्ञा षसहेभ्यः पराः स्मृताः । इति वर्णतो नक्षत्रसृष्टिकथनम् । ताभ्याममाभ्यां चार्णोऽयं यदा वै सह वत्स्यते । तदेन्दुसूर्य्यसंयोगोऽमावस्या हि प्रतीयते । कषतो भवमस्मत्तः कषयोः सङ्गमोभवः । ततः क्षकारः सञ्जातो नृसिंहस्तस्य देवता । स पुनः षसहैः सार्द्धं परा प्रौष्ठपदं गतः । इत्यमावास्योत्पत्तिकथनम् । अनुनक्षत्रवारेषु स्वस्वमन्त्रजपोऽपरः । तस्मादेषां दिनानाञ्च कथ्यते देवतादयः । इति नक्षत्रवारे जपकथनम् ॥ कारस्कराख्यामलकोडुम्बरो जम्बुसंज्ञकः । खदिरः कृष्णवंशौ च पिप्पली नागरोहिणी । पलाशप्लक्षकाम्बोष्ठधियार्जुनविकङ्कताः । वकुलः सरजां सर्जौ वञ्जुलः पनसाकर्कौ । शमीकदम्बनिम्बाम्रमधुकान्तादिनाङ्घ्रिपाः । आयुष्कामः स्वर्क्षवृक्षं छेदयेन्न कदाचन । इत्यत्र स्वार्थहेतूभयवाचकः । न छिन्द्यान्न छेदयेदित्यपि ॥ इति स्वीयनक्षत्रवृक्षच्छेदननिषेधः ॥ अश्वियमानलधातृशशिरुद्रादिति सुरेज्यासर्पाश्च । पितर्य्यमभगदिनकृत्त्वष्टारो मरुतस्तथेन्द्राग्नी । मित्रेन्द्रौ तथा निर्ऋतिजले विश्वदेवा हरिस्तथा वसवः । वरुणोऽजपादोऽहिर्बुध्नः पूषा च देवता भानाम् ॥ इति नक्षत्रदेवताकथनम् ॥ अश्वेभाजभुजङ्गसर्पसवमामार्जारकाजः कुली मूषा मूषिकरुद्रयानमहिषीव्याघ्रायमारोहणः । व्याघ्रेणीहरिणीश्वरानरपशुः शाखामृगास्त्रीहयः । मर्त्यो गोकरिणी च साधुकथिता नक्षत्रयोन्यः क्रमात् ॥ इति नक्षत्रयोनिकथनफलम् । गोव्याघ्रं गजसिंहमश्वमहिषं श्वैनञ्च वभ्रूरगम् । वैरं वानरमेषकञ्च सुमहत्तद-

द्विडालोन्दुरु। लोकानां व्यवहारतोऽन्यदपि च ज्ञात्वा प्रयत्नादिदम्। दम्पत्योर्न्नृपभृत्ययोरपि सदा वर्ज्यं शुभस्वार्थिभिः। शाश्वतिकवैरितया द्वन्द्वे एकत्वं नपुंसकत्वञ्च॥ एतेभ्योऽमावास्यान्ताः प्रतिपदादिकास्तिथयः॥ राशिभ्योऽत्र तिथीनामध्यर्द्धद्वयन्तु राशिरेकः स्यात्। तेन त्रिंशत्तिथयो द्वादश भेदतो भिन्नाः। ता एव स्युर्द्वेधा पुनरपि पूर्वान्त्यपक्षभेदेन॥ पक्षः पञ्चदशाहः स्यात् पूर्वः प्रतिपदादिकः शुक्लः। तदजन्मथोऽप्यपरः पक्षः कृष्णप्रतिपदादिकः प्रोक्तः। इति पक्षोत्पत्तिकथनम्। संज्ञासाम्ये सत्यपि सौम्यात्तु ह्रासवृद्धितस्तिथयः। न समाः पक्षद्वितये विशद्भेदं तथापि प्रामाः। अग्न्यश्व्युमाः सविघ्ना नागा गुहसवितृमातरो दुर्गा। ककुभो धनपतिविष्णुयमहरपतिचन्द्राः क्रमेण तिथ्यधिपाः। इति श्रीप्राणतोषिण्यां प्रथमे सर्गकाण्डे शब्दार्थस्वरूपब्रह्मकथनगर्भाक्षरजातजगत्कथनं नाम द्वितीयः परिच्छेदः॥

एवं प्राधान्यद्योतनाय प्रथमोद्दिष्टापरान्ता शब्दसृष्टिरुक्ता शरीरसृष्टिमन्तरेण पश्यन्त्याद्या वक्तुमशक्या इति तां वक्तुमथ सृष्टिमारभते। शारदातिलकप्रथमपटले आचार्य्यः॥ अथ विन्द्वात्मनः शम्भोः कालबन्धोः कलात्मनः। अजायत जगत्साक्षी सर्वव्यापी सदाशिवः। सदाशिवाद्भवेदीशस्ततो रुद्रः समुद्भवः। ततो विष्णुस्ततो ब्रह्मा तेषामेवं समुद्भवः। अत्रार्थ सृष्टौ पुनरुद्रादीनामुत्पत्तिस्त्वर्थरूपेण पूर्वं तेषामुत्पत्तिः शब्दरूपेणातो न पौनरुक्त्यमिति। कला माया तदात्मनस्तदुत्पन्नत्वात्। कालबन्धोरित्यनाद्यन्तकाले सृष्टिरूपकालसहायात्मादात्मन इत्यर्थः। अनेन विशेषणद्वयेन प्रकृतेः कालस्य च महाप्रलयेऽप्यवस्थानमुक्तम्। अतएवानयोरापेक्षिकनित्यता पुरुषस्य स्वतो नित्यत्वं सर्वविनाशस्य पुरुषावधित्वादिति। अतएव विश्वसारे। निमिषाद्यास्तथा

माया दिवसाश्च तथा निशाः। पक्षा मासाश्च ऋतवश्चायनं वत्सरस्तथा। युगश्च युगमानञ्च तथा मन्वन्तराणि च। महाप्रलयपर्य्यन्तं सर्वं बिन्द्वात्मकं स्मृतम्। इत्यनेन सृष्टिरूपकालस्य लय उक्तः। किन्तु महाप्रलये कालबन्धोरिति बन्धुशब्देन कालस्य निमित्तत्वं सूचितम्। तथाच राघवभट्टधृतम्॥ लवादिप्रलयान्तो यस्तमःशक्तिविजृम्भितः। निमित्तभूतः कालोऽयं भावानां जनुराशयोरिति लवादिमानमपि॥ प्रपञ्चसारे प्रथमपटले॥ नलिनीपत्रसंहत्यां सूक्ष्मसूचिविभेदने। दले दले तु यः कालः स कालोलवसंज्ञकः। लवैस्त्रुटिः स्यात्त्रिंशद्भिः कलां तावत् त्रुटिं विदुः। काष्ठा तावत् क्रमाज्ज्ञेया तावत् काष्ठा निमेषकः। सोऽङ्गुलिस्फोटतुल्यश्च मात्राष्टाभिश्च तैः स्मृता। कालेन यावतास्वीयो हस्तः स्वं जानुमण्डलम्। पर्य्येति मात्रा सा तुल्या स्वयैकश्वासतुल्यया। षष्ठ्युत्तरैस्तु त्रिशतैर्निश्वासैर्घटिका स्मृता। द्विनाडिका मुहूर्त्तः स्यात् त्रिंशद्भिस्तैरहर्निशम्। त्रिंशद्भिस्तैरहोरात्रैर्मासो द्वादशभिस्तु तैः॥ सम्वत्सरो मानुषोऽयमहोरात्रं दिवौकसाम्। तथा दिव्यैरहोरात्रैस्त्रिशतैः षष्टिसंयुतैः। दिव्यः सम्वत्सरो ज्ञेयो दिव्यैः संवत्सरैस्तु तैः। भवेत् द्वादशसाहस्रैरभिन्नैरेकं चतुर्युगम्। तैः सहस्रैः शतानन्द! तवैकं दिनमिष्यते। तावती तव रात्रिश्च कथिता कालवेदिभिः। तथाविधैरहोरात्रैस्त्रिंशद्भिर्मासकृच्छसि। तथाविधैर्द्वादशभिर्मासैरब्दस्तव स्मृतः। तथाविधानामब्दानां शतं त्वमपि जीवसि। त्वदायुर्मम निश्वासः कालेनैवं प्रचोद्यते। इति। तिथितत्त्वे संक्रान्तिप्रकरणधृतस्मृतौ तु। लघ्वक्षरचतुर्भागस्त्रुटिरित्यभिधीयते। त्रुटिद्वयं लवः प्रोक्तो निमेषस्तु लवद्वयम्। अष्टादशनिमेषास्तु काष्ठेत्यादि सम्वर्त्तः प्रलयः कल्प इत्यन्तो यः कालोऽभिहितोऽमरसिंहेन तस्य निमित्तत्वं

पूर्ववचनेन दर्शितम्। मेरुतन्त्रे प्रथमोद्देशेऽपि। इन्द्रायुः-परिमाणं प्रकारान्तरेणोक्ता एवमिन्द्रैरिन्द्रसंख्यैर्ब्रह्मणो दिन-मुच्यते। या ध्यायते महामाया मया तच्छासनिर्गमः। इन्द्र-संख्यैश्चतुर्दशसंख्यैरित्यर्थः। प्रपञ्चो ब्रह्मदिवसः कुम्भको रात्रि-रस्य तु। एवं तस्या घटिकया वर्षमेकं विधेः स्मृतम्। घटी-शतमितं तस्या ब्रह्मा जीवति कीटवत्। पद्ममेकं सतीरूपा शुक्लं कृष्णन्तु पार्वती। ऋतुमात्रं हरिर्जीवेद्वर्षमेकं सदा-शिवः। एवं सा शतवर्षा वै महाकालस्य गेहिनी। सर्पकञ्चुक-वद्देहं त्यक्ता त्यक्ता पुनर्नवा इति कालनिरूपणम्। एवं प्रकृताया-मर्थसृष्टौ तत्त्वसृष्टिं वक्तुमुपक्रमते। शारदायां प्रथमपटले तु। मूलभूतादतो व्यक्ताद्विकृतात्परवस्तुनः। असीत् किल मह-त्तत्त्वं गुणान्तःकरणात्मकम्॥ शब्दब्रह्मणो विकृतात् सृष्ट्यु-न्मुखान्महत्तत्वमासीदुत्पन्नमित्यन्वयः। सर्वसृष्टिमूलरूपादत एव परवस्तुनोऽव्यक्ताद्बिन्दुरूपादिति वा। किम्भूतं सत्त्वरज-स्तमोगुणात्मकम्। मनो बुद्ध्यहङ्कारचित्तरूपान्तःकरणचतुष्टय-मेकञ्च तत्कारणमित्यभिप्रायः। कारणे कार्य्योपचारात्तदा-त्मकत्वमिति। श्रुतिरपि प्रकृतेर्महान् महतोऽहङ्कार इति। राघवभट्टधृतवामकेश्वरतन्त्रेऽपि॥ अव्यक्तविग्रहात् शब्दब्रह्मणः सर्वकारणम्। व्यक्तसत्त्वगुणं वक्तुं बुद्धितत्त्वमजायत। सांख्य-मते महत्तत्त्वस्य बुद्धितत्त्वमिति संज्ञा। शारदायां प्रथम-पटले॥ अभूत्तस्मादहङ्कारस्त्रिविधः सृष्टिभेदतः। वैकारि-कादहङ्काराद्देवा वैकारिका दश। दिग्वातार्कप्रचेतो-ऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः। तैजसादिन्द्रियाण्यासंस्तन्मात्राक्रम-योगतः। भूतादिकादहङ्कारात् पञ्च भूतानि जज्ञिरे॥ राघव-भट्टधृतमपि॥ सोऽहङ्कारस्त्रिभेदः स्यात् सत्त्वादिगुणभेदतः। वैकारः सात्त्विको नाम तैजसो राजसः स्मृतः। भूतादिस्ताम-

सत्ते च पृथक्तत्त्वाद्यवासृजन्। अधिकेन व्यपदेशा भवन्तीति न्यायात्। सात्त्विकादिविशेष उक्तः। वस्तुतस्त्रिष्वेव न्यूनाधिकरूपेण त्रयो गुणा वर्त्तन्ते शिवशक्त्यात्मकादावपि तथानुसन्धेयम्। वैकारिकादिन्द्रियाधिष्ठातारश्चन्द्रश्च। तैजसात् पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनश्च। भूतादेस्तन्मात्राणि जज्ञिरे॥ तथाच राघवभट्टधृतम्॥ वैकारिकाद्दिगाद्याश्च चन्द्रेणैकादश स्मृताः। इन्द्रियाणामधिष्ठातृदेवास्ते परिकीर्त्तिताः। यच्चापरं मनस्तत्त्वं ससङ्कल्पविकल्पकम्। तैजसादेव तज्जातमिन्द्रियाणि तथा दश। भूतादेः पञ्च तन्मात्राणि आसन् भूतमतः परम्॥ तन्मात्राणि च शब्दस्पर्शरूपरसगन्धाः॥ शब्दतन्मात्रादाकाशम्। शब्दस्पर्शतन्मात्राभ्यां वायुः। शब्दस्पर्शरूपतन्मात्रेभ्योऽग्निः। शब्दस्पर्शरूपरसतन्मात्रेभ्यो जलम्। शब्दस्पर्शरूपरसगन्धतन्मात्रेभ्यो भूमिरुत्पद्यते॥ तदुक्तं प्रपञ्चसारे प्रथमपटले॥ शब्दाद्व्योमस्पर्शतस्तेन वायुस्ताभ्यां रूपाद्वह्निरेतै रसाच्च अम्भांसि एतैर्गन्धतो भूर्धराद्या भूताः पञ्च स्युर्गुणोनाः क्रमेण॥ अक्षज्ञानतन्त्रनिर्वाणतन्त्रयोस्तु॥ आकाशाज्जायते वायुः वायोरुत्पद्यते रविः रवेरुत्पद्यते तोयं तोयादुत्पद्यते मही। मही संलीयते तोये तोयं संलीयते रवौ। रविः संलीयते वायौ वायुर्नभसि लीयते। पञ्चतत्त्वाद्भवेत् सृष्टिस्तत्त्वे तत्त्वं विलीयते॥ श्रुतौ च॥ तस्मात् ब्रह्मण आकाशः सम्भूत आकाशाद्वायुर्वायोस्तेजस्तेजस आपोऽद्भ्यः पृथिवी पृथिव्या ओषधय ओषधिभ्योऽन्नानीति भूतमात्राद्भूतसृष्टिरुक्ता॥ इति पञ्चभूतोत्पत्तिलयप्रकारः। तार्किकास्तु आकाशादीनां शब्दादयो गुणा इत्याचक्षते। सांख्या अपि शब्दो गुणो वियतः शब्दस्पर्शौ वायोस्तौ च रूपश्चाग्ने रसेन सह तानि जलस्य गन्धेन सह तानि पृथिव्या इति॥ राघवभट्टधृतेशानसंहितायामपि।

शब्दैकगुणमाकाशं शब्दस्पर्शगुणो मरुत् । शब्दस्पर्शरूपगुणं तेजस्त्रिगुणमिष्यते । शब्दस्पर्शरूपरसगुणा आपश्चतुर्गुणाः । शब्दस्पर्शरूपरसगन्धैः पञ्चगुणा महीति । वस्तुतस्तु पञ्चीकरणरूपेण पञ्चसु प्रत्येकेषु पञ्चगुणाः सत्त्वादित्रिगुणवत् सन्ति अतो नासिकादिषु पृथिव्यादीन्द्रियेषु कटुत्वादि प्रतीयते । इति पञ्चभूतगुणकथनम् ॥ भूतमण्डलानि शारदातिलके प्रथमपटले ॥ वृत्तं दिवस्तत् षड्बिन्दुलाञ्छितं मातरिश्वनः । त्रिकोणं स्वस्तिकोपेतं वह्नेरर्द्धेन्दुसंयुतम् । अम्भोजमम्भसो भूमेश्चतुरस्रं विदुर्बुधाः ॥ प्रपञ्चसारेऽपि ॥ वृत्तं व्योम्नो विन्दुषट्कान्वितं तद्वायोरग्नेः स्वस्तिकोद्यत्त्रिकोणम् । अब्जोपेतार्द्धेन्दुमद्विम्बमाप्यं स्याद्वज्रोद्यद्वृत्तिरस्रं धरायाः । यद्वा विश्वसारे ॥ आकाशमण्डलं प्रोक्तं वर्त्तुलं सर्वसम्मतम् । षट्कोणमण्डलं वायोस्त्रिकोणन्तु विभावसोः । अष्टास्रं वरुणस्यापि चतुरस्रं धरासुतम् । इति वेति कृत्वा मतत्रयं तत्र लिखितम् । एतत् प्रयोजनन्तु प्रश्ने आकृतिज्ञानम् । प्राणायामभूतोदययोः प्रत्यक्षदर्शनम् । षट्कर्म्मसाधनञ्च सर्वमग्रे वक्ष्यते ॥ इति भूतमण्डलानि ॥ भूतरूपाण्यपि शारदायाम् ॥ स्वच्छं वियन्मरुत् कृष्णो रक्तोऽग्निर्विषदं पयः । पीता भूमिः पञ्चभूतान्येकैकाधारतो विदुः ॥ स्वच्छं श्वेतमिति राघवभट्टः । विषदं श्वेतम् ॥ तथाच प्रपञ्चसारे ॥ खमपि शुषिरचिह्नं समीरणः स्याच्चलनपरः परिपाकवान् कृशानुः । जलमपि रसवद्घना धरा ते सितसितिपाटलशुक्लपीतभासः । शुषिरं छिद्रम् । सितिः कृष्णः । वस्तुतस्तु स्वच्छं निर्मलं नीलमिति यावत् । प्रश्नप्रकरणे स्पष्टीभविष्यति ॥ तन्मते सित इत्यत्राकारप्रश्लेषेणासित इति । छिद्रादिभिः खादयो ज्ञायन्त इति तात्पर्य्यम् । एकैकाधारत इति स्वस्वकारणाधाराणीत्यर्थः ॥ सूर्य्याचन्द्रोक्तभूतपञ्चकात्मक

चतुर्विधदेहसृष्टिस्तु॥ विश्वसारतन्त्रे प्रथमपटले॥ पृथिव्या ओषधिर्जाता ओषधेरन्नमेव च। तस्माद्भवेत्तदा देवि! रेतः सर्वसुखावहम्। रेतसस्तु भवेद्देवि! ब्रह्माण्डं शशिसूर्य्ययोः। शशिसूर्य्यात्मकं सर्वं चराचरमिदं जगत्। चरं जङ्गममचरं स्थावरम्॥ शारदातिलके प्रथमपटले॥ पञ्चभूतात्मकं विश्वं चराचरमिदं जगत्। अचरा बहुधा भिन्ना गिरिवृक्षादिभेदतः। चरास्तु त्रिविधा भिन्नाः स्वेदाण्डजजरायुजाः। पञ्चभूतात्मकमित्यनेन त्रिवृत्करणपक्षः पञ्चीकरणपक्षोऽपि सूचित इति। तत्र ये तैजसा देवास्तेषामपि शरीरे अर्द्धो भागस्तेजसः। चतुर्थांशः पृथिव्याश्चतुर्थांशो जलस्येति त्रिवृत्करणपक्षः॥ पञ्चीकरणपक्षे तु तैजसश्चत्वारोंऽशा अन्येषामष्टमोऽष्टमोऽंशा एवमन्यत्रापि। तदुक्तं पञ्चदश्यां पञ्चमप्रकरणे तत्त्वविवेके। स्थूलशरीराद्युत्पत्तिसिद्धये पञ्चीकरणं निरूपयितुमाह। तद्भोगाय पुनर्भोग्यभोगाय तनुजन्मने। पञ्चीकरोति भगवान् प्रत्येकं वियदादिकम्। भगवानैश्वर्य्यादि गुणषट्कसम्पन्नः। ऐश्वर्य्यादिगुणषट्कञ्च समग्रैश्वर्य्यवीर्य्ययशःश्रीज्ञानवैराग्यरूपमुक्तञ्च। ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इति स्मृतिः। समग्रस्येत्यनेनानाणिमाद्यैश्वर्य्याष्टकं सूचितमतस्तमोगुणात्मकेश्वरादधिकगुणतया भगवतः समसत्त्वादित्रिगुणात्मकत्वेनाधिक्यमायातम्। न तु सत्त्वमात्रप्रधानगुणात्मकस्य भगवदिति नामधेयम्। तथात्वे त्रिगुणात्मिकाया भगवत्यास्तदभिधानं नोपपद्यत इति सुधीभिर्भाव्यम्। परमेश्वरः पुनः पुनरपि तद्भोगाय तेषां जीवानां भोगायैव भोग्यभोगाय तनुजन्मने भोग्यस्यान्नपानादेर्भोगायतनस्य जरायुजादिचतुर्विधशरीरजातस्य च जन्मने उत्पत्तये वियदादिकमाकाशादिभूत-

पञ्चकं प्रत्येकमेकैकं पञ्चीकरोति। अपञ्चात्मकं पञ्चात्मकं सम्पद्यमानं करोति। द्विधा विधाय चैकैकं चतुर्द्धा प्रथमं पुनः। स्वस्वेतरद्वितीयांशैर्योजनात् पञ्चपञ्चतेति। अथ वा षड्-शास्तेजसः पृथिवीजलवाय्वाकाशानां दशमो दशमोऽंशः। एवं पार्थिवे अस्मदादिशरीरेऽपि पृथिव्याः षड्भागाः। जला-दीनां दशमोदशमोऽंशस्तदुक्तं राघवभट्टधृतेन। पृथिव्यादीनि भूतानि प्रत्येकं विभजेद्द्विधा। एकैकं भागमादाय पञ्चधा विभजेत् पुनः। एकैकं भागमेकैकभूतैः संवेशयेत् क्रमात्। ततश्चाकाशभूतस्य स्वा भागाः षड्भवन्ति हि। वाय्वादि भागाश्चत्वारो वाय्वादिष्वेव माविशेत्। एवञ्च खेचराणामा-काशवायुभागाधिक्याद्वियति 'गतिर्गृहगोधिकादीनामाकाश-भागाधिक्याद्भित्त्यादिगतिर्भूतादीनां वायुभागाधिक्यात् सर्वत्र गतिरस्थैर्य्यञ्चेति॥ इति पञ्चीकरणम्॥ प्रपञ्चसारप्रथम-पटले॥ प्रकृतौ कालनुन्नायां गुणान्तःकरणात्मनि। देह-श्चतुर्विधोभिन्नो जन्तोरुत्पत्तिभेदतः। उद्भिदः स्वेदजोऽण्डा-ज्जश्चतुर्थस्तु जरायुजः। गुणान्तःकरणकारणे कालप्रेरितायां प्रकृतौ सत्यामुद्भिदादिचतुर्विध ;उत्पत्तिभेदतो जन्तोः शरी-रिणो देहो भवतीत्यर्थः। उद्भिदलक्षणमुक्तम्। विश्वसारप्रपञ्च-सारप्रथमपटले॥ उद्भिद्य भूमिं निर्गच्छेदुद्भिदः स्थावरस्तु सः। निर्दिष्टः स्कन्धविटपपत्रपुष्पफलादिभिः। एषामुत्पत्तिप्रका-रस्तु राघवभट्टधृतेन। उद्भिदाः स्थावरा ज्ञेयास्तृणगुल्मादि-रूपिणः। तत्र सिक्ता जलैर्भूमिरन्तरुष्मा विपाचिता। वायुना व्युह्यमाना तु वीजत्वं प्रतिपद्यते। तथा चोप्तानि वीजानि संसिक्तान्यम्भसा पुनः। उच्छूनत्वं मृदुत्वञ्च मूलभावं प्रयान्ति च। तन्मूलादङ्कुरोत्पत्तिरङ्कुरात् पर्णसम्भवः। पर्णात्मकं ततः काण्डं काण्डाच्च प्रसवं पुनः॥ इत्युद्भिदोत्पत्तिः॥ पाप-

चतुर्विंधदेहसृष्टिस्तु॥ विश्वसारतन्त्रे प्रथमपटले॥ पृथिव्या ओषधिर्जाता ओषधेरन्नमेव च। तस्मादन्नेन्तदा देवि! रेतः सर्व्वसुखावहम्। रेतसस्तु भवेद्देवि! ब्रह्माण्डं शशिसूर्य्ययोः। शशिसूर्य्यात्मकं सर्व्वं चराचरमिदं जगत्। चरं जङ्गममचरं स्थावरम्॥ शारदातिलके प्रथमपटले॥ पञ्चभूतात्मकं विश्वं चराचरमिदं जगत्। अचरा बहुधा भिन्ना गिरिवृक्षादिभेदतः। चरास्तु त्रिविधा भिन्नाः स्वेदाण्डजजरायुजाः। पञ्चभूतात्मकमित्यनेन त्रिवृत्करणपक्षः पञ्चीकरणपक्षोऽपि सूचित इति। तत्र ये तैजसा देवास्तेषामपि शरीरे अर्द्धो भागस्तेजसः। चतुर्थांशः पृथिव्याश्चतुर्थांशो जलस्येति त्रिवृत्करणपक्षः॥ पञ्चीकरणपक्षे तु तैजसश्चत्वारोंऽशा अन्येषामष्टमोऽष्टमोऽंशा एवमन्यत्रापि। तदुक्तं पञ्चदश्यां पञ्चमप्रकरणे तत्त्वविवेके। स्थूलशरीराद्युत्पत्तिसिद्धये पञ्चीकरणं निरूपयितुमाह। तद्भोगाय पुनर्भोग्यभोगाय तनुजन्मने। पञ्चीकरोति भगवान् प्रत्येकं वियदादिकम्। भगवानैश्वर्य्यादि गुणषट्कसम्पन्नः। ऐश्वर्य्यादिगुणषट्कञ्च समग्रैश्वर्य्यवीर्य्ययशःश्रीज्ञानवैराग्यरूपमुक्तञ्च। ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इति स्मृतिः। समग्रस्येत्यनेनानाणिमाद्यैश्वर्य्याष्टकं सूचितमतस्तमोगुणात्मकेश्वरादधिकगुणतया भगवतः समसत्त्वादित्रिगुणात्मकत्वेनाधिक्यमायातम्। न तु सत्त्वमात्रप्रधानगुणात्मकस्य भगवदिति नामधेयम्। तथात्वे त्रिगुणात्मिकाया भगवत्यास्तदभिधानं नोपपद्यत इति सुधीभिर्भाव्यम्। परमेश्वरः पुनः पुनरपि तद्भोगाय तेषां जीवानां भोगायैव भोग्यभोगाय तनुजन्मने भोग्यस्यान्नपानादेर्भोगायतनस्य जरायुजादिचतुर्विंधशरीरजातस्य च जन्मने उत्पत्तये वियदादिकमाकाशादिभूत-

पञ्चकं प्रत्येकमेकैकं पञ्चीकरोति। अपञ्चात्मकं पञ्चात्मकं सम्पद्यमानं करोति। द्विधा विधाय चैकैकं चतुर्द्धा प्रथमं पुनः। स्वस्वेतरद्वितीयांशैर्योजनात् पञ्चपञ्चतेति। अथ वा षड़ंशास्तेजसः पृथिवीजलवायूाकाशानां दशमो दशमोऽंशः। एवं पार्थिवे अस्मदादिशरीरेऽपि पृथिव्याः षड़्भागाः। जलादीनां दशमोदशमोऽंशस्तदुक्तं राघवभट्टधृतेन। पृथिव्यादीनि भूतानि प्रत्येकं विभजेद्द्विधा। एकैकं भागमादाय पञ्चधा विभजेत् पुनः। एकैकं भागमेकैकभूतैः संवेशयेत् क्रमात्। ततश्चाकाशभूतस्य स्वा भागाः षड़् भवन्ति हि। वाय्वादि भागाश्चत्वारो वाय्वादिष्वेव माविशेत्। एवञ्च खेचराणामाकाशवायुभागाधिक्याद्वियति 'गतिर्गृहगोधिकादीनामाकाशभागाधिक्याङ्गित्यादिगतिर्भूतादीनां वायुभागाधिक्यात् सर्वत्र गतिरस्थैर्य्यश्चेति॥ इति पञ्चीकरणम्॥ प्रपञ्चसारप्रथमपटले॥ प्रकृतौ कालनुन्नायां गुणान्तःकरणात्मनि। देहश्चतुर्विधोऽभिन्नो जन्तोरुत्पत्तिभेदतः। उद्भिदः स्वेदजोऽण्डाज्जश्चतुर्थस्तु जरायुजः। गुणान्तःकरणकारणे कालप्रेरितायां प्रकृतौ सत्यामुद्भिदादिचतुर्विध ;उत्पत्तिभेदतो जन्तोः शरीरिणो देहो भवतीत्यर्थः। उद्भिदलक्षणमुक्तम्। विश्वसारप्रपञ्चसारप्रथमपटले॥ उद्भिद्य भूमिं निर्गच्छेदुद्भिदः स्थावरस्तु सः। निर्दिष्टः स्कन्धविटपपत्रपुष्पफलादिभिः। एषामुत्पत्तिप्रकारस्तु राघवभट्टधृतेन। उद्भिदाः स्थावरा ज्ञेयास्तृणगुल्मादिरूपिणः। तत्र सिक्ता जलैर्भूमिरन्तरुष्मा विपाचिता। वायुना व्यूह्यमाना तु वीजत्वं प्रतिपद्यते। तथा चोक्तानि वीजानि संसिक्तान्यम्भसा पुनः। उच्छूनत्वं मृदुत्वञ्च मूलभावं प्रयान्ति च। तन्मूलादङ्कुरोत्पत्तिरङ्कुरात् पर्णसम्भवः। पर्णात्मकं ततः काण्डं काण्डाच्च प्रसवं पुनः॥ इत्युद्भिदोत्पत्तिः॥ पाप-

कर्म्माचरणे प्रेत्य स्थावरयोनिप्राप्तिर्मत्स्यसूक्ते सप्तविंशतिपटले ॥ पापात्मा पितृद्रोहित्वमातृद्वेषी तु यूथिका। पुत्त्रद्वेषी तु वरुणः कम्पदूषकनाशकः। भूहर्त्ता कोद्रवो देवि! तीर्थद्वेषी तु चम्पकः। भार्य्यायाः केशनिर्वापे दूर्वा भवति शङ्करि!। गोलोमदाही तु कुशो ब्रह्मद्वेषी वको भवेत्। भार्य्याद्वेषी कुरुवको मिष्टभुक् तिन्तिड़ीभवेत्। परान् वञ्चयित्वा स्वयमेव यो मिष्टं भुङ्क्ते स एव तिन्तिड़ीच तात्पर्य्यम् ॥ ताम्रहर्त्ता तु पनसो मही-हर्त्ता तथार्जुनः। परस्त्रीहरणे देवि! बहुजो भवति ध्रुवम्। गुरुद्वेषी सोमतरुः श्वश्रूद्वेषी जयन्तिका। मातुः कलह-संयुक्तश्चोरवृक्षः प्रजायते। स्वामिना कलहे देवि! ब्रह्माख्यो-जायते तरुः। द्विभार्य्यश्चैकद्वेषी स्यात् चण्डालो जायते हि सः। भार्य्याया वञ्चकश्चैव जायते करमर्दकः। विभक्तधनहर्त्ता तु नीपो भवति निश्चितम्। शस्यापहारी एरण्डो यज्ञद्वेषी धवो भवेत्। परास्त्री विफली देवि! स्नुही सञ्जायते ध्रुवम्। सूचकोवासको देवि! राजगामिनि पैशुने। रामाख्यवासको-जातः कुद्दालश्चौरवृत्तिकः। तैलहर्त्ता तिलतरुः सर्षप फल-दूषकः। परपुरुषगामिनी नारी कोद्रवोभवति ध्रुवम्। मत्स्यद्वेषी पिचुवृक्षः पर्वगामी शिवामदः। शिवामैथुनिनो विप्रो धट वृक्षो विजायते। श्वशुरघ्नो नारिकेलः श्वश्रूहर्त्ता लता भवेत्। परं पञ्चशिवावृक्षः श्यालद्वेषी जलं भवेत्। सपत्नीपुत्रद्वेषी स्याद्धस्तूरो जायते प्रिये!। स्तनभेदी च पुरुषः अन्तर्भेदी च भेरुकः। करमर्दः करच्छेदी जीवन्ती पादहा नरः। भूत-द्वेषी देवदारुर्नमेरुः शिशुनिन्दकः आम्लानशीलो वन्धूकः सन्ध्याहीनो जड़ो भवेत्। अतिथिवञ्चकश्चैव शरो नाम प्रजा-यते। पञ्चखण्डलोपकः पूगः पर्णी गोमूत्रनिन्दकः। देव-द्वेषी जातितरुः शङ्कद्वेषी तु मल्लिका। व्रतद्वेषी पूततरुः

सङ्कल्पभङ्गकश्च यः। भवेत् सोमतरुर्द्देवि! आश्रमस्य तु दूषकः। कामवृन्दो भवेद्देवि! गव्यत्यागी शतावरी। भल्लातको ज्ञानहर्त्ता अयाज्ययाजको वरिः। असत्प्रतिग्रहीता च अटसारो भवेत् ध्रुवम्। राजस्वहरणाद्देवि! भवेच्चाण्डालको ध्रुवम्। देवदाय्यास्तु हरणे कर्णिकारो विजायते। जलैं निस्तारणादेव अशोको जायते प्रिये!। देवायतनभागादिभेदको धातकी भवेत्। गृहद्वेषी तु जीवन्ती ब्रह्महानल एव हि। अन्नहा सूतहा देवि! तथा सर्वप्रदूषकः। गिरिकर्णिकारो भवति भार्य्यात्यागी च भूरुहः। योनिभेदी तु कदली वीजभेदी तु वीजकम्। वीजहर्त्ता वीजमूलं कामहर्त्ता मयूरकः। शिवद्वेषी भूवदरो मन्त्रद्वेषी जवा भवेत्। पट्टहर्त्ता योगतरुर्वस्त्रहर्त्ता तु कासिका। लौहहर्त्ता वटो देवि! ताम्रहर्त्ता तु वीनंशः। कांसहर्त्ता रणतरुः रौप्यहर्त्ता तु शाद्वलः। इत्यङ्गपापभेदे तु शतशोऽथ सहस्रशः। स्थावरत्वं गमिष्यन्ति सर्वावस्थासु सर्वदा। इति पापाद्वृक्षयोनिप्राप्तिः॥ पापेन जलत्वप्राप्तिरत एव॥ जलत्वं याति पापेन शैलत्वं याति शङ्करि!। तस्य पापस्य भेदेन जायते वर्णसङ्करः। उदक्यागमने देवि! नसीत्वं याति शङ्करि!। मिथ्यावभाषणादेव स्थावरत्वं जलं विदुः। मातापित्रोर्गुरोरग्रे तड़ागस्य जलं भवेत्। स्वाम्यग्रे च परोक्षे च या नारी मन्दचारिणी। सा भवेद्गर्त्ततोयञ्च या शय्यां नारुहेत् पतेः। सा मृतान्यद्भवेत्तोयं सत्यमेव मम प्रिये!। एकाशीत्या तथा षष्ठ्या पञ्चविंशतिभिर्यदा। तत्र तत्र विष्णुरूपं तोयं जानासि भाविनि!। अशीतिमात्रं सामुद्रे हस्तानाञ्च प्रमाणतः। कलाहस्तो भवेद्यत्र द्वादशे पापवर्जितः। अतोऽन्यत् पापसम्भूतिः स्वकालेनैव प्राप्स्यति॥ इति जलत्वप्राप्तिः। तत्पापादनुसारेण प्रायश्चित्तं समाचरेत्। शिवलिङ्ग

समभ्यर्च्य स्थापयित्वा यथाविधि॥ चतुर्दश्यां निराहारो वृषस्थे भास्करे सिते। पापक्षयं समुच्चार्य्य गाश्च दद्याद्‌द्विजन्मने। तेषां पापस्य शुद्ध्यर्थं प्रायश्चित्तमुदाहृतम्॥ इति तत्पाप-प्रायश्चित्तम्॥ प्रपञ्चसारविश्वसारयोः॥ कृमिकीटपतङ्गाद्याः स्वेदजा नाम देहिनः। तदुत्पत्तिप्रकारोऽपि तत्रैव॥ स्वेदजः स्विद्यमानेभ्यो भूवह्न्यद्भ्यः प्रजायते। यूकमत्कुणकीटाद्या ये चान्ये क्षणभङ्गुरा इति॥ यूक उकनीति यस्य नाम मत्कुण-श्छारपोक इति यस्य प्रसिद्धिः॥ भूमेरन्तरुष्मविपाकेन वीजत्वं शास्त्रसिद्धम्॥ स्विद्यमानभूवह्निजलवह्न्यध्यस्तु स्वेदजोत्पत्तिः। प्रत्यक्षसिद्धा यथा गोमयपुञ्जादेः कीटाद्युत्पत्तिरित्यनयोर्भेदः। अण्डजजरायुजयोः शुक्रशोणितसंयोगेनोत्पत्तिस्तु॥ प्रपञ्च-सारे॥ अण्डजो वर्त्तुलीभूतात् शुक्रशोणितसंयुतात्। कालेन भिन्नात् पूर्णात्मा निर्गच्छन् प्रक्रमिष्यति। अहिगोधावयो भेक-शिशुमारादिकश्च सः। राघवभट्टधृतम्। अण्डजाः पक्षिणः सर्पा नक्रमत्स्याश्च कच्छपाः। कुलीरगोधा भेकाद्याः शिशु-माराश्च सूताय इति। अजः शङ्कः॥ इति तत्रापि किंव-दन्ती। अण्डं सूते गिलाहारश्चर्वाहारो जरायुजमिति॥ प्रायि-कमेतल्लक्षणम्। तथा रोमन्थायकजन्तोः स्याच्छृङ्गं नान्यस्य जन्मिन इत्यपि॥ शारदायाम्॥ जरायुजा मनुष्याद्या जनुर्नृणां निगद्यते॥ विश्वसारतन्त्रे द्वितीयपटले॥ मनुष्यसदृशं जन्म कुत्रापि नैव विद्यते। देवता पितरः सर्वे वाञ्छन्ति जन्म मानुषम्। दुर्लभो मानुषो देहः सर्वदेहेषु सर्वदा। तस्माच्च मानुषं जन्म एतदुक्तं सुदुर्लभम्। तत्रापि संशयश्चेता विशेषेण तु पार्वति!। मन्वतन्त्वरतः पुंसां सोऽपि चेदतिदुर्लभः। तत्रागमविदः श्रेष्ठाः सर्वदेहेषु पूजिताः। तत्रापि साधकः श्रेष्ठः सर्वतन्त्रेषु गोपितः॥ रुद्रजामले उत्तरखण्डे द्वितीय-

पटले ॥ मानुष्यं सफलं जन्म सर्वशास्त्रेषु गोचरम् । चतुर-शीतिलक्षेषु शरीरेषु शरीरिणाम् । न मानुष्यं विनान्यत्र तत्त्व-ज्ञानन्तु लभ्यते । कदाचिल्लभते जन्म मानुष्यं पुण्यसञ्चयात् । सोपानभूतं मोक्षस्य मानुष्यं जन्म दुर्लभम् ॥ निर्वाणतन्त्रे द्वितीयपटलेऽपि ॥ स्थावरादिषु कीटेषु पशुपक्षिषु शैलजे ! । चतुरशीतिलक्षं वै जन्म चाप्नोति सोऽव्ययः ॥ ततो लभेत् परेशानि ! मानुषीं दुर्लभां तनुमिति । चतुरशीतिलक्षयोनिभ्रम-णानन्तरं ब्राह्मणयोनिप्राप्तिः । कर्मविपाकेऽप्युक्ता यथा । स्थावरास्त्रिंशल्लक्षस्य जलजो नवलक्षकः । कृमिजा दशलक्षस्य रुद्रलक्षस्य पक्षिणः । पशवो विंशलक्षस्य चतुर्लक्षस्य मानवाः । एतेषु भ्रमणं कृत्वा द्विजत्वमुपजायते । निर्वाणतन्त्रे ॥ मानुषीं तनुमित्यत्र ब्राह्मणत्वावच्छिन्नमानुषीं तनुमित्यवगन्तव्यम् । दुर्लभेति विशेषणबलेनेति ॥ निर्वाणतन्त्रे ॥ ततो मानुष-देहस्य धर्माधर्माधिपस्य सः । ततोऽपि लभते जन्म पुनर्मृत्युम-वाप्नुयात् । जायन्ते च म्रियन्ते च कर्मपाशनियन्त्रिताः । चतुरशीतिलक्षेषु नानायोनिषु शैलजे ! ॥ इति मनुष्यत्वप्राप्ति-प्रशंसा ॥ चण्डिकोवाच ॥ कथं वा लभते जन्म कथं मृत्यु-र्भवेत् प्रभो ! । तत्प्रकारं महादेव ! श्रोतुमिच्छामि तद्वद ॥ शङ्कर उवाच ॥ इह यत् क्रियते कर्म तत् परत्रोपभुज्यते । जीवस्तृणजलौकेव देहाद्देहान्तरं व्रजेत् । सम्प्राप्य चतुरं देहं देहं त्यजति पूर्वकम् । इति श्रुत्वा च सा चण्डी पप्रच्छ शङ्करं प्रति ॥ प्राप्तं चतुरदेहन्तु पिण्डदानादिकं कथम् ॥ शिव उवाच ॥ शृणु देवि ! प्रवक्ष्यामि मायादेहं तदेव हि । मायादेहः परेशानि ! वायुरूपो न चान्यथा । वायुरूपो यतो देह आकाशस्थो निराश्रयः । ततश्च पिण्डदानेन वायुः स्थिर-तरो भवेत् । प्रथमे मस्तकं देवि ! जायते च क्रमावधि । ततो

मम पुरं गत्वा धर्मकर्मादिकच्चरेत्। तद्युक्तश्चापरं किञ्चिदथद्दा कर्म न विद्यते। ममाज्ञया यदा जीवः प्रययौ ब्रह्मशासनम्। तस्मात् कर्मानुसारेण यदि स्याद्दुर्लभा तनुः। महाविद्यां भाग्य-वशाद् यदि प्राप्नोति सद्गुरोः। तत्त्वज्ञानं महेशानि यदि भाग्य-वशाल्लभेत्। तदैव परमो मोक्षो यावद्ब्रह्माण्डमण्डलम्। महाविद्याप्रसादेन पुनरागमनं न हि॥ तृतीयपटले॥ तोयात्तु बुद्बुदं जातं यथा तोये विलीयते। प्रकृत्या जायते सर्वं पुन-स्तस्यां प्रलीयते। ब्रह्मविष्णुशिवा देवि! जायन्ते प्राकृताद्-ध्रुवम्। तथा प्रलयकाले तु प्रकृत्यां लुप्यते पुनः॥ इति श्रीप्राणतोषिण्यां प्रथमे सर्गकाण्डे चतुर्विधदेहसृष्टिकथनं नाम तृतीयपरिच्छेदः॥

गुरुं प्रणम्य यं तेनाज्ञानध्वान्तसुधाकरम्। वक्ति मर्त्यदेह-सृष्टिं द्विजः श्रीरामतोषणः॥ शाक्तानन्दतरङ्गिणी प्रथमपरिच्छेद-धृतज्ञानभाष्यम्॥ देव्युवाच॥ शरीरं कीदृशं नाथ! मुक्तिर्वा केन कर्मणा। इदानीं श्रोतुमिच्छामि ब्रूहि मे शशिशेखर!॥ ईश्वर उवाच॥ शृणु देवि! प्रवक्ष्यामि शरीरं कर्मसम्भवम्। रजस्वला च या नारी विशुद्धा पञ्चमे दिने। पीड़िता कामवाणेन ततः पुरुष-मीहते। भगलिङ्गसमायोगान्मैथुनं स्यात्तदा तयोः। अन्योऽन्य-स्पर्शनादेव जायते च महासुखम्। क्षरते च यदा रेतः प्राणापान-विसंश्रितम्। क्षितिरापस्तथा तेजो वायुराकाशमेव च। सर्वेषां तत्र तत्त्वं स्याद्देहस्थरक्तवीजयोः। गर्भाशयनिरूपणानन्तरं गर्भोत्पत्तिप्रकार उक्तो मातृकाभेदतन्त्रे द्वितीयपटले॥ देव्युवाच॥ वद ईशान! सर्वज्ञ! सर्वतत्त्वविदांवर!। यत् त्वया कथितं देव! मम सङ्के विस्तारतः। कथं वा जायते पुत्रः कथं वा शुक्रसंस्थितिः। पुत्र इति गर्भमात्रोपलक्षणम्। केन प्रका-रेण गर्भो जायत इति प्रश्नस्य तात्पर्य्यम्। वर्द्धमानस्य लिङ्गस्य

प्रवेशो वा कथं भवेत्। भीतियुक्ता ह्यहं नाथ! त्राहि मां दुःख-सङ्कटात्॥ महादेव उवाच॥ मणिपूरं महापद्मं सुसुम्नामध्य-संस्थितम्। तस्मान्नालेन देवेशि! नाभिपद्मं मनोहरम्। नाल-त्रयसमायुक्तं सदा शुक्रविभूषितम्। ऊर्द्धनालं सहस्रारे अतः शुक्रविभूषितम्। तस्मादेव स्तनद्वन्द्वं वर्द्धमानं दिने दिने। मध्यनालं सुसुम्नान्तं वृन्ताकारं सुशीतलम्। आयोन्यग्रमधो-नालं सदानन्दमयं शिवे!। शृणु चार्वङ्गि! सुभगे! तन्मध्ये लिङ्गताड़नात्। यद्रूपं परमानन्दं तन्नास्ति भुवनत्रये। नाभि-पद्मन्तु यद्रूपं तत् शृणुष्व समाहिता। वस्थानं मध्यदेशेऽस्य सदा पद्मविराजितम्। वाह्यदेशे चाष्टपत्रं चतुरस्रञ्च तद्बहिः। चतुर्द्वारसमायुक्तं सुवर्णाभं सवृन्तकम्। तत्पद्मेन भवेत् पुष्पं वृन्तयुक्तं त्रिपत्रकम्। प्रफुल्ले तु त्रिपत्रे वै वाह्ये शोणितद-र्शनम्। एतन्मध्ये महेशानि! यदि स्याल्लिङ्गताड़नम्। पद्म-मध्ये गते शुक्रे सन्ततिस्तेन जायते॥ पद्ममध्ये शुक्रगमन-प्रकारस्तु प्रपञ्चसारे॥ स्वस्थानतश्च्युततात् शुक्राद्विन्दुमादाय मारुतः। गर्भाशयं प्रविशति यदा तुल्यं तदापरः। आर्त्तवात् परमं वीजमादायास्याश्च मूलतः। यदा गर्भाशयं नेष्यत्यथ सम्मिश्रयेन्मरुत्। सङ्क्षोभ्य संवर्द्धयति तन्मलं शोणिताधिकम्। स्त्री स्यात् शुक्राधिकं ना स्यात् समेन च नपुंसकम्। वायुवह्नित्र-भसां योगे गर्भवृद्धिः प्रजायते॥ एतेन त्रिवृत्करणपञ्चः स्पष्टीकृतः॥ ज्ञानभाष्ये॥ नाभिपद्मे महादेवि! भ्राम्यते च समीरणैः। कुम्भकारो यथा चक्रे घटते च घटादिकम्। तथा समीरणो गर्भे घटते प्राणिनां तनुम्॥ शारदातिलके॥ रक्ताधिका भवेन्नारी भवेद्रेतोऽधिकः पुमान्। उभयोः सम-तायान्तु नपुंसकमिति स्थितिः॥ मातृकाभेदतन्त्रे॥ पुरुषस्य तु यत् शुक्रं शक्तेस्तस्याधिकं यदि। तदा कन्यां विजानीया-

द्विपरीते पुमान् भवेत्। उभयोस्तुल्यशुक्रेण क्लीवं भवति निश्चितम्॥ तत्राधिक्यतुल्यतादिकम् राघवभट्टधृतवचनोक्त-प्रमाणस्यैव यथा॥ द्वाविंशतीरजोभागाः शुक्रमात्राश्चतुर्दश। गर्भसञ्जनने काले पुंस्त्रियोः सम्भवन्ति हि॥ मात्राभाग इत्यर्थः॥ नारी रजोऽधिकांशे स्यान्नरः शुक्राधिकांशके। उभयोरुक्त-संख्यायां स्यान्नपुंसकसम्भवः। राघवभट्टधृतवाग्भटे बह्वपत्य-कारणमुक्तं यथा॥ वायुना बहुधा भिन्ने तद्विन्दौ बह्वपत्यता। वियोनिविकृताकारा जायन्ते विकृते तथा। शृणु चार्वङ्गि! सुभगे! पुष्पमाहात्म्यमुत्तमम्। मेध्यं तत् शुक्रसंयोगे वर्द्धते च दिने दिने। एवं द्विमाससम्प्राप्तौ तत्पुष्पे विन्दुसंयुते। गलिते परमेशानि! व्यक्ता भवति सन्ततिः॥ श्रीदेव्युवाच॥ किञ्चिद्रो-गादिसम्भूते क्रमिकीटादिसम्भवे। तस्माज्जीवाः प्रणश्यन्ति सा नारी जीवते कथम्॥ श्रीशङ्कर उवाच। तस्य पुष्पस्य माहात्म्यं किं वक्तुं शक्यते मया। विन्दुस्थानसहस्रन्तु पुष्पमध्ये प्रियंवदे!। वुद्बुदा येऽत्र तिष्ठन्ति तत्रैव सन्ततिर्भवेत्। एवं क्रमेण देवेशि! सहस्रं सन्ततिर्यदि। वर्द्धमानं तदा पुष्पं पीड़ा किञ्चिन्न जायते॥ वीर्य्यवद् गर्भकारणमाह॥ राघवभट्टधृतम्॥ पूर्णषोड़शवर्षा स्त्री पूर्णविंशेन सङ्गता। शुद्धगर्भाशये मार्गे रक्ते शुक्रेऽनिले हृदि। वीर्य्यवन्तं सुतं सूते ततो न्यूनाब्दयोः पुनः। रोगाल्पायुरधन्यो वा गर्भो भवति नैव वा। इति तत्र शुक्रशोणितसम्बद्धविन्दौ पूर्वपूर्वानेकजन्मसञ्चितकर्मणां मध्ये फलदानोन्मुखं पापपुण्यात्मकं प्रबलमेकं सुखदुःखोभयफलकं मनुष्यशरीरोपभोग्यं यत् कर्म तदनुरूपेणाविद्यारूपपाशबद्धः सन्नेकोऽपि बहुधा भिन्नो नित्योऽप्यात्मा गृहमिव देहं प्रविष्ट-स्तदुक्तं राघवभट्टधृताध्यात्मविवेके॥ अस्ति ब्रह्म चिदानन्द-मयं ज्योतिर्निरञ्जनम्। सर्वशक्ति च सर्वज्ञं तदंशा जीवसंज्ञकाः।

अनाद्यविद्योपहिता यथाग्नेर्विस्फुलिङ्गकाः। दीर्घाद्युपाधिसम्भिन्नास्ते कर्मभिरनादिभिः। सुखदुःखप्रदैः स्वीयैः पुण्यपापैर्नियन्त्रिताः। तत्तज्जातियुतं देहमायुर्भोग्यञ्च कर्मजम्। प्रतिजन्म प्रपद्यन्ते मायापाशनियन्त्रिता इति॥ निर्वाणतन्त्रेऽपि॥ सत्यलोके महाकाली महारुद्रेण सम्पुटा। चणकाकारविस्तारा चन्द्रसूर्य्याग्निरूपिणी। अनादिपुरुषोद्युक्ता तदंशा जीवसंज्ञकाः। ज्वलदग्नेर्यथा देवि! स्फुरन्ति विस्फुलिङ्गकाः। तस्याश्युरतः परं विन्दुर्यदा भूमौ पतत्यपि। तदैव सहसा देवि! शक्तियुक्तो भवत्यपि॥ इति गर्भोत्पत्तिप्रकारकथनम्। इति शुक्रशोणितादुत्पत्तिप्रकारस्तु योगार्णवे॥ आयुष्यं भुक्तमाहारं स वायुः कुरुते द्विधा। सम्प्रविश्याथ मध्यन्तु पृथगन्नं पृथग् जलम्। स वायुः प्राणवायुः॥ योगियाज्ञवल्क्ये उत्तरखण्डे चतुर्थाध्यायेऽपि। आयुष्यं भुक्तमाहारं सहसा तैः समीकृतम्। तुन्दमध्यगतः प्राणस्तानि कुर्य्यात् पृथक् पृथक्। पृथक्करणप्रकारस्तु योगियाज्ञवल्क्ये॥ पुनरग्नौ-र्जलं प्राप्य अन्नादीनि जलोपरि। स्वयं ह्यपानः सम्प्राप्य तेनैव सह मारुतः। प्रयाति ज्वलनं तत्र देहमध्यगतं पुनः। अग्नौ जलं प्रापय्य अन्नादीनि जलोपरि सम्प्रापय्य तेनैव प्राणवायुनैवापानो वायुर्देहमध्यगतं ज्वलनं प्रयाति प्राप्नोतीत्यन्वयः। एवञ्च प्राणेन प्रेरितमिति प्राणस्थित्येति च प्राधान्येन वक्ष्यते। वस्तुतस्तु प्राणापानाभ्यामेव प्रेरितमित्यर्थः॥ वायुना वर्द्धते वह्निरपानेन शनैः शनैः। ततो ज्वलति विप्रेन्द्रि! स्वकुले देहमध्यके। ज्वालाभिर्ज्वलनं तत्र प्राणेन प्रेरितं ततः। ज्वलत्युदकमाश्रित्य कोष्ठमध्यगतं तदा। अन्नं व्यञ्जनसंयुक्तं जलोपरि समर्पितम्॥ ततः सुपुष्टमकरोद्वह्निसन्तप्तवारिणा॥ योगार्णवे च॥ अग्ने रूर्द्ध्वं जलं स्थाप्य तदन्नञ्च जलोपरि। जल-

स्वाधः स्वयं प्राणः स्थित्वा स्वेदयते शनैः। वायुना व्युह्यमानो-ऽग्निरत्युष्णं कुरुते जलम्। अन्नं तदुष्णतोयेन समन्तात् पच्यते पुनः। द्विधा भवति तत्पक्वं पृथक् कीट्टं पृथग्रसम्॥ कीट्टं मलम्॥ तत्र रसोत्पत्तिप्रकारस्तु प्रपञ्चसारे द्वितीय-पटले॥ अथाहृतं षड्रसं वाप्याहारं कण्ठमार्गगम्। श्लेष्मणा-नुगतं तस्य प्रभावान्मधुरीभवेत्। तत्र स्वाद्वम्ललवणतिक्तो-षणकषायकाः। षड्रसाः कथिता भूतविकृत्या द्रव्यमाश्रिताः॥ स्वादुमिष्टमुषणं कटु॥ तथैवमाशयगतं पश्चात् पित्ताशयं व्रजेत्॥ आशयं छिद्रम्॥ तदा तस्यानुगमनात् कटुकत्वं प्रप-द्यते। तथात्वान्तरसंश्लिष्टं पच्यते पित्तवारिणा॥ जलादीनां पाकेनावस्थान्तरमुक्तम् योगियाज्ञवल्क्ये॥ स्वेदमूत्रे जलं स्यातां वीर्य्यरूपं रसो भवेत्। पुरीषमन्नं स्याद्गार्गि! प्राणः कुर्य्यात् पृथक् पृथक्॥ प्रपञ्चसारे॥ ग्रहणी नाम सा पात्री प्रसृ-ताञ्जलिसन्निभा॥ पात्री नाड़ी॥ अधस्तस्याः प्रधानाग्निः समानेनापि नुद्यते। तस्याधस्तात् त्रिकोणाभं ज्योतिराकार-मुत्तमम्। विद्यते स्थानमेतद्धि मूलाधारं विदुर्बुधाः। प्रधा-नाग्निर्दोषदूष्यस्थाग्निभ्यो भिन्नो वड़वानलरूपोजठराग्निरिति प्रसिद्धः। तथाच। पच्यमानाद्रसं भिन्नं वायुरक्तादिकं नयेत्। तत्र कीट्टं पृथक् भिन्नं ग्रहण्यां चिनुतेऽनिलः। तच्चीयमानं विश्राम ग्रहणीं पूरयेन्मुहुः। सा तया शकृता पूर्णा बलितां प्रति-मुञ्चति। शकृता मलेन॥ पुरीषं पायुमार्गेण तत्पाके चाम्भस-स्ततः। अङ्गस्वेदवदभ्यन्तर्व्याप्तैः सूक्ष्मैः शिवामुखैः। वस्ति-मापूरयेद्वायुः पूर्णो मुञ्चति धारया। मूत्राशयो धनुर्वक्रो वस्ति-रित्यभिधीयते। मूत्रमित्याहुरुदकं वस्तेस्वानिलनिर्गतम्। अप-थ्यभाजामनयोर्मार्गयोर्दोषदुष्टयोः। प्रमेहमूत्रकृच्छ्रादेर्ग्रहिण्या-देश्च सम्भवः॥ राघवभट्टधृतसुश्रुते। त्वगसृङ्मांसमेदोऽस्थि-

मज्जाशुक्राणि धातवः। भवन्त्यन्योन्यतः सर्वे पाचिताः पित्त-तेजसा इति। एतेन पूर्वपूर्वस्योत्तरोत्तरं प्रति कारणत्वमुक्तम्। तथाच तत्रैव॥ रसः सनाड़ीमध्यस्थः शारीरेणोष्मणा भृशम्। पच्यते पच्यमानाच्च भवेत् पाकद्वयं पुनः। चर्माविष्य समन्ताच्च रुधिरन्तु प्रजायते। स्वस्वकोषाग्निना पक्वैर्जायन्ते धातवः क्रमात्॥ योगार्णवे॥ रसेन तेन ता नाड़ीः प्राणः पूरयते शनैः। प्रतर्पयन्ति सम्पूर्णास्ताश्च देहं समन्ततः॥ योगियाज्ञवल्क्ये॥ समानवायु-ना सार्द्धं रसं सर्वासु नाड़िषु। व्यापयन् श्वासरूपेण देहे चरति मारुतः। व्योमरन्ध्रैश्च नवभि र्विण्मूत्राणां विसर्जनम्। कुर्वन्ति वायवः सर्वे शरीरेषु निरन्तरम्। निश्वासोच्छ्वासकासाश्च प्राण-कर्मसमीरिताः। अपानवायोः कर्मैतद्विण्मूत्रादिविसर्जनम्। प्राणापाने च चेष्टादि व्यानकर्मेति चेष्यते। उदानकर्म तच्चोक्तं देहस्योन्नयनादि यत्। पोषणादि समानस्य शरीरे कर्म कीर्त्ति-तम्। उद्गारादिगुणो यस्तु नागकर्म समीरितम्। निमीलनादि कूर्मस्य चुत्तृष्णा कृकरस्य च। देवदत्तस्य विप्रेन्द्रि! जृम्भा कर्मेति कीर्त्तितम्। धनञ्जयस्य पोषादि सर्वं कर्म प्रकीर्त्तितम्। वायूनां स्थानादीन्यग्रे वक्ष्यन्ते॥ इति शुक्रशोणिताद्युत्पत्तिकथनम्॥ योगार्णवे। मातुरम्बुवहा नाड़ी ननु विज्ञा पराभिधा। नाभिस्थ-नाड़ीगर्भस्य मात्राकृतरसावहा इति। शाक्तानन्दतरङ्गिण्याम्। कललन्त्वेकरात्रेण बुद्बुदं पञ्चमे दिने। शोणितं दशरात्रेण मांसपिण्डं चतुर्दशे॥ प्रपञ्चसारे॥ मारीयं नाम योगोत्थं पौरुषं कार्मणं मलम्। आणवं नाम सम्प्रोक्तं मिलितं तन्मल-द्वयम्। सूक्ष्मरूपाणि तत्त्वानि चतुर्विंशमलद्वये। तत्र योगं प्रकृत्याशु ततस्तु गर्भमारुतः। सङ्क्षोभ्य संवर्द्धयतीत्यादि पूर्वो-क्तेनान्वयः। स्वगतैर्मरुदग्न्यद्भिः क्लिद्यते क्वाथ्यते च तत्। मिश्री-भूतं तदङ्गैव मातुरङ्गुष्ठसम्मितम्॥ सम्मितमिति मातुरङ्गुष्ठ-

नखपरिमितमित्यर्थः॥ राघवभट्टधृतयोगार्णवे॥ घनमांसञ्च विंशाहे पिण्डभावोलपच्चितम्। पञ्चविंशतिपूर्णाहे पलं तदङ्कुरायते॥ शारदातिलके तु। मासैकेन तु पूर्णेन मांसपिण्डोऽङ्कुरायते॥ इत्युक्तम् तत्रैव। आदौ सञ्जायते वीजं ब्रह्माण्डं सहसाङ्कुरः। तस्य मध्ये सुमेरुश्च कङ्कालदण्डरूपधृक्। चराचराणां सर्वेषां देवादीनां विशेषतः। आलयः सर्वभूतानां मेरोरभ्यन्तरेऽपि च। प्रदीपकलिकाकारो जीवो हृदि सदा स्थितः। रज्जुवद्धो यथा श्येनो गतोऽप्याकृष्यते पुनः। गुणवद्धस्तथा जीवः प्राणापानेन कृष्यते॥ योगियाज्ञवल्क्ये द्वितीयाध्याये तु। तन्मध्ये नाभिरित्युक्तं नाभौ चक्रसमुद्भवः। द्वादशारयुतं तच्च तेन देहः प्रतिष्ठितः। चक्रेऽस्मिन् भ्रमते जीवः पुण्यपापप्रणोदितः। तन्तुपञ्जरमध्यस्थो यथा भ्रमति लूतिकः। लूतिक ऊर्णनाभः माकरसा यस्य प्रसिद्धिः। नाभौ जीवस्य भ्रमणमात्रं स्थितिस्थानन्तु हृदयमेव। तेन पूर्ववचने न विवादः॥ योगार्णवे॥ मासद्वये तु सम्पूर्णे शिरोमेदः प्रजायते। मज्जास्थि च त्रिभिर्मासैः केशस्त्वक् च चतुर्थके। एषु मासेष्वध्यात्मविवेके तु विशेष उक्तो यथा। द्रवत्वं प्रथमे मासि कललाख्यं प्रजायते। द्वितीये तु घनः पिण्डः पेश्योष्टघनसर्वुदम्। पुंस्त्रीनपुंसकानान्तु प्रागवस्थाः क्रमादिमाः। तृतीये त्वङ्कुराः पञ्च करादिभिरसौ मताः॥ अत्र ग्रन्थत्रये यद्भेदत्रयमङ्कुरोत्पत्तेरुक्तं तच्छरीरमेवंवयवाङ्कुरभेदेनाविरुद्धमाम्नायभेदेन वा। अङ्गप्रत्यङ्गभागाः स्युः सूक्ष्माश्च युगपत्तदा। चतुर्थे व्यक्तता तेषां भागानामभिजायते। मातृजश्चास्य हृदयं विषयानभिकाङ्क्षति। अतो मातुर्मनोऽभीष्टं कुर्य्याद्गर्भसमृद्धये। ताञ्च द्विहृदयां नारीमाहुर्दौहृदिनीं बुधाः। अदानाद्दोहदानान्तु गर्भस्य व्यङ्गतादयः। मातुर्यद्विषयांलाभस्तदार्त्तो जायते सुतः। गर्भः

स्यादर्थवान् भोगी देहे दोहदर्शने। अलङ्कारे सुललितो धर्मिष्ठस्तापसाश्रमे। देवतादर्शने भक्तो हिंस्रो भुजगदर्शने। गोधाशने तु निद्रालुर्बली गोमांसभक्षणे। माहिषेण तु रक्ताक्षं लोमशं सूयते सुतम्। प्रवृद्धं पञ्चमे पिण्डं मांसशोणितपुष्टिभाक्। षष्ठेऽस्थिस्नायुनाड्यादिनखकेशविविक्तता। बलवर्णौ चोपचितौ सप्तमे त्वगपूर्णता। अष्टमे त्वक्श्रुती स्यातां ओजश्चैतच्च हृद्भवम्॥ ज्ञानभाष्ये तु॥ कर्णाक्षिनासिकास्थ्रं कण्ठोदरञ्च पञ्चमे। षष्ठे मुखं तथा पादौ सर्वाङ्गानि तु सप्तमे। सन्धिः सम्पूर्णतां याति अष्टमे मासि वै ततः। एतदपि पूर्ववत्॥ अण्डाधारञ्च कङ्कालं प्रारभ्य गुदमूलतः। द्वात्रिंशज्ज्ञानविज्ञानग्रन्थिनो वर्द्धते सदा॥ शारदायां प्रथमपटले॥ अथ मात्राहृतैरन्नपानाद्यैः पोषितः क्रमात्। दिनात् पश्चात्तथा मासात् वर्द्धते तत्त्वदेहवान्॥ तत्त्वदेहवानिति चतुर्विंशतितत्त्वात्मकशरीर इत्यर्थः। दोषैर्दूष्यैः सुखं प्राप्तो व्यक्तिं याति निजेन्द्रियैः। वातपित्तकफा दोषा दूष्याः स्युः सप्त धातवः॥ इति धातुकथनम्॥ शारदायाम्॥ ज्ञानेन्द्रियाणि श्रोत्रं त्वक्दृग्जिह्वानासिकादयः। ज्ञानेन्द्रियार्थाः शब्दाद्याः स्मृताः कर्मेन्द्रियाण्यपि। शब्दाद्या इति शब्दस्पर्शरूपरसगन्धाः। वाक्पाणिपादपायूपस्थसंज्ञान्याहुर्मनीषिणः। मुखहस्तपादगुदलिङ्गानि। वचनादानगतयो विसर्गानन्दसंयुताः। कथनग्रहणगमनत्यागानन्दाः। कर्मेन्द्रियार्थाः संप्रोक्ता अन्तःकरणमात्मनः॥ विश्वसारे प्रथमपटले॥ इन्द्रियाणां गुणान् वक्ष्ये शृणुष्व कमलानने!। चक्षुषो रूपमाख्यातं कर्णयोः शब्दमेव च। गन्धस्तु नसि विज्ञेयस्त्वचि स्पर्श उदाहृतः। आदानं भुजयुग्मेषु जिह्वायां रस उच्यते। गुह्ये विसर्गो विज्ञेय आनन्दः स्यादुपस्थके। गमनं पादयुग्मे च

कथनं मुखपङ्कजे। इतीन्द्रियेन्द्रियार्थकथनम्। अन्तःकरणं स्पष्टयति शारदाकृत्॥ मनोबुद्धिरहङ्कारश्चित्तन्तु परिकीर्त्तितम्। अत्र सङ्कल्पविकल्पात्मकं मनः। सर्वभावनिश्चयकारिणी बुद्धिः। ज्ञात्रभिमानयुक्तोऽहङ्कारः। निर्विकल्पकं चित्तम्। यदाह एषा शक्तिः परा वीजरूपिणी प्रोक्तलक्षणा॥ सङ्कल्पञ्च विकल्पञ्च कुर्वाणा तु मनो भवेत्। बुद्धिरूपा तथा सर्वभावनिश्चयकारिणी। ज्ञातास्मीत्यभिमानाख्या सैवाहङ्कारसंज्ञिता। निर्विकल्पात्मिका सैव खलु चित्तस्वरूपिणी। एवमेकैव बहुधा नर्त्तकीव प्रतीयत इति। श्रुतिरपि। मनः सङ्कल्पयति बुद्धिर्निश्चिनोति अहमभिमानयति चेतश्चेतयते इति। प्रपञ्चसारेऽपि॥ परेण धाम्ना समनुप्रवृद्धया मनस्तदा सा तु महाप्रभावा। यदा तु सङ्कल्पविकल्पकृत्या यदा पुनर्निश्चिनुते तदा सा। स्याद्बुद्धिसंज्ञा च यदा प्रवृत्तिर्ज्ञातारमात्मानमहङ्कृतिः स्यात्। तदा यदा सा त्वभिमीयतेऽन्तश्चित्तञ्च निर्द्धारितमर्थमेषामिति॥ शारदायाम्॥ दशेन्द्रियाणि भूतानि मनसा सह षोड़श। विकाराः स्युः प्रकृतयः पञ्च भूतान्यहङ्कृतिः। अव्यक्तं महदित्यष्टौ तन्मात्राश्च महानपि। साहङ्कारा विकृतयः सप्त तत्त्वविदो विदुः। विकाराः षोड़श अष्टौ प्रकृतयः सप्त विकृतय इति वचनस्य पर्य्यवसितार्थः। यदुक्तं मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोड़शकस्तु विकारो न प्रकृतिर्न विकृतिरिति तत्त्वविद इति। एतानि प्रकृत्यन्तानि चतुर्विंशतितत्त्वानि पुरुषान्तानि पञ्चविंशतिः॥ तदुक्तं वायवीसंहितायाम्॥ त्रयोविंशतितत्त्वेभ्यः परा प्रकृतिरुच्यते। प्रकृतेस्तु परं प्राहुः पुरुषं पञ्चविंशकम्। यद्वा तत्त्वविद एवं विदुः। एषां तत्त्वान्तर्भावात् तत्त्वविद्भिरेवं संज्ञा कृता इत्यर्थः॥ शारदायाम्॥ अग्निप्रोमात्मको देदो विन्दुर्यदुभयात्मकः। श्रक्र-

मग्निरूपं रक्तं सोमरूपम्। स तदात्मकत्वाद्विन्दुरुभयात्मक इत्यर्थः॥ तदुक्तं राघवभट्टधृतेन॥ कलाषोड़शकश्चन्द्रः स्याद्-द्वादशकलो रविः। कलादशयुतो वह्निः कलाष्टत्रिंशदंशभुक्। साम्प्रतं सम्भवन्तीह गर्भाधानस्य हेतवे। अग्निषोमात्मकं तेन गीयते सचराचरम्। कलांशकेन योगेन भूयाद् गर्भस्य सम्भवः॥ ब्रह्मज्ञानतन्त्रे प्रथमपटले॥ शिव उवाच॥ अस्थि-मांसनखाश्चैव नाड़ीत्वक् चेति पञ्चमः। पृथ्वीपञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन भाषितम्। मलं मूत्रं तथा शुक्रं श्लेष्मा शोणितमेव च। तोयं पञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन भाषितम्। हासो निद्रा क्षुधा चैव भ्रान्तिरालस्यमेव च। तेजःपञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन भाषितम्। धारणं चालनं क्षेपः सङ्कोचः प्रसवस्तथा। वायुपञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन भाषितम्। कामक्रोधस्तथा लोभस्तथा मोहश्च पञ्चमः। नभःपञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन भाषितम्॥ राघवभट्टधृतम्। अस्थि मांसं त्वचं स्नायुरोम एव तु पञ्चमं। इति पञ्चविधा प्रोक्ता पृथिवी कठिनात्मिका। लाला मूत्रं तथा शुक्रं शोणितं मज्ज पञ्चमम्। अपां पञ्चगुणा एते द्रवरूपाः प्रकीर्त्तिताः। क्षुधा तृष्णा भयं निद्रा आलस्यं क्षान्तिरेव च। तृष्णात्मका गुणा एते तेजसः परिकीर्त्तिताः। धारणं वलानं भुक्तिराकुञ्चनप्रसारणम्। एते पञ्च गुणा वायोः क्रियारूपा व्यवस्थिताः। रागद्वेषौ तथा लज्जा भयं मोहस्त-थैव च। व्योम्नः पञ्च गुणाः प्रोक्ताः शून्याख्ये शुषिरात्मनीति। इति पञ्चभूतोद्भवास्थ्यादिकथनम्॥ शाक्तानन्दतरङ्गिण्याम्॥ प्राणापानसमानश्चोदानव्यानौ च वायवः। नागः कूर्म्मोऽथ कृकरो देवदत्तो धनञ्जयः। एते दशगुणाः प्रोक्ताः सर्वप्राण-वशात्मनः॥ शारदातिलके॥ दक्षिणांशः स्मृतः सूर्य्यो वाम-भागो निशाकरः। नाड़ीदश विदुस्तासु मुख्यास्तिस्रः प्रकी-

त्तिता:। इड़ा वामतनोर्मध्ये सुषुम्ना पिङ्गला परे। मध्या तास्वपि नाड़ी स्यादग्नीषोमस्वरूपिणी। अत्रेड़ा वाममुष्काधःस्था धनुर्वक्रा वामनासापर्य्यन्तं गता। एवं पिङ्गला दक्षिणाण्डाधःस्था धनुर्वक्रा दक्षिणनासान्तं गता। पृष्ठवंशान्तर्गता सुषुम्ना इत्यर्थ:। एतदग्रे स्फुटीभविष्यति॥ तथा प्रपञ्चसारे। ऊर्द्धन्तु मरुतानुन्ना त्तस्मादपि मलद्वयी। उभयात्मिक्यधोवृत्ता नाड़ी दीर्घा भवेदृजु:। अवाङ्मुखी सा तस्याश्च भवेत् पक्षद्वये द्वयम्। पक्षद्वये पार्श्वद्वये। नाड्यस्ता: सन्निरुद्धा स्यु: सप्तान्या नाड़िका मता:। तत्र या प्रथमा नाड़ी सा सुषुम्नेति कथ्यते। या वामेडेति सा ज्ञेया दक्षिणा पिङ्गला मता॥ तथा काचिन्नाड़ी बहिर्वक्रा या मातुर्हृदि बध्यते। यया स पुष्टिमायाति केदार इव कुल्यया। मातुराहाररसजैर्धातुभि: पुष्यते क्रमात्। क्रमवृद्धौ परं ज्योति: कलाचैतन्यतामियात्। सचैतन्यं मलं तत्तु सभूतं सगुणं पुन:। सदोषं दूष्यसम्पन्नं जन्तुरित्यभिधीयते। सभूतपञ्चकं सचैतन्यमात्रसहितं तत् पूर्वोक्तमानवादिमलं जन्तुरित्युच्यते। इत्यन्वय:। किम्भूतं सगुणं सत्त्वादिगुणं सत्त्वादिगुणयुक्तं सदोषं वायुपित्तकफयुक्तं दूष्यसम्पन्नं सप्तधातूद्भवम्। इति जन्तुलक्षणम्॥ फलकोषद्वयं तत्तु व्यक्तं पुंसो न तु स्त्रिया:। नपुंसकस्य किञ्चित्तु व्यक्तिरत्रोपलक्ष्यते। फलकोषद्वयमण्डकोषद्वयम्॥ निरुत्तरतन्त्रे प्रथमपटले॥ नाड़ीनां संवहो देवि! कञ्जयोनि: खगाण्डवत्। तत्र नाड्य: समुत्पन्ना: सहस्राणां द्विसप्तति:। कञ्जस्य पद्मस्य योनिरुत्पत्तिस्थानं शालूकमिति यावत्। प्रधाना: प्राणवाहिन्यो नाड्यस्त दश स्मृता:। इड़ा च पिङ्गला चैव सुषुम्ना च तृतीयिका। गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनी। अलम्बुषा कुहुश्चैव शङ्खिनी च दश स्मृता:। एवं नाड़ीमयं चक्रं विज्ञेयं

शक्तिचक्रके। इड़ायाः पिङ्गलायाश्च मध्ये या सा सुषुम्निका। इयञ्च त्रिगुणा ज्ञेया ब्रह्मविष्णुशिवात्मिका। रजोगुणा च वज्राख्या चित्रिणी सत्त्वसंयुता। तमोगुणा ब्रह्मनाड़ी कार्य्यभेदक्रमेण च। तथा। वायुर्भानुमयो ज्ञेयो मनश्चन्द्रात्मकं तथा। प्राणोऽपानः समानश्चोदानव्यानौ च वायवः। या वाममुष्कसम्बन्धा संश्लिष्यन्ती सुषुम्नया। दक्षिणञ्चक्रमाश्रित्य धनुर्वक्रा हृदि स्थिता। वामांशयन्त्रान्तरगा दक्षिणां नासिकामियात्। तथा दक्षिणमुष्कस्था नासाया वामरन्ध्रगा। तन्त्रान्तरे॥ सुषुम्नाकलिता याता मुष्कं दक्षिणमाश्रिता। सङ्गता वामभागस्य यन्त्रमध्यं समाश्रिता। दक्षिणं नासिकाद्वारं प्राप्नोति गिरिजात्मजे!। वाममण्डमनुस्यूतामनन्या सव्यनासिकामिति। अनयोः स्वरूपमुक्तं योगार्णवे। इड़ा च शङ्खचन्द्राभा तस्या वामे व्यवस्थिता। पिङ्गला सितरक्ताभा दक्षिणं पार्श्वमाश्रिता इति। तन्त्रान्तरे इड़ायां संश्रितश्चन्द्रः पिङ्गलायां दिवाकर इति। तास्वपि सुषुम्ना मुख्येत्यर्थः। उक्तञ्च श्रीतत्त्वचिन्तामणौ॥ मेरोर्वाह्यप्रदेशे शशिमिहिरशिवे सव्यदक्षे निषण्णे मध्ये नाड़ी सुषुम्ना त्रितयगुणमयी चन्द्रसूर्य्याग्निरूपा। अन्यत्रापि तयोः पृष्ठवंशं समाश्रित्य मध्ये सुषुम्ना स्थिता ब्रह्मरन्ध्रन्तु यावत्। अन्यासां नामान्यपि शारदायाम्। गान्धारी हस्तिजिह्वाख्या सपूषालम्बुषा मता। यशस्विनी शङ्खिनी च कुहुः स्युः सप्त नाड़यः। आसां स्थितिस्वरूपं योगार्णवे॥ इड़ापृष्ठे तु गान्धारी मयूरगलसन्निभा। सव्यपाददिनेत्रान्ता गान्धारी परिकीर्त्तिता। हस्तिजिह्वोत्पलप्रेक्षा नाड़ी तस्याः पुरः स्थिता। सव्यभागस्य मूर्द्धादिपादाङ्गुष्ठान्तमाश्रिता। पूषा तु पिङ्गलापृष्ठे नीलजीमूतसन्निभा। याम्यभागस्य नेत्रान्ता यावत् पादतलं गता। यशस्विनी शङ्खवर्णा पिङ्गला पूर्वदेशगा।

गान्धार्य्याश्च सरस्वत्या मध्यस्था शङ्खिनी मता। सुवर्णवर्णा पादादिवर्णान्ता सव्यभागके। पादाङ्गुष्ठादिमूर्द्धान्तयाम्यभागे कुहुर्मता। रावणा सरस्वती विश्वोदरी शङ्खिनी एता अपि प्रधानत्वेनोक्ताः। उक्तञ्च। ताश्च भूरितरास्तासु मुख्याः प्रोक्ता-श्चतुर्दश। सुषुम्नेड़ा पिङ्गला च कुहूरथ सरस्वती। गान्धारी हस्तिजिह्वा च रावणा च यशस्विनी। विश्वोदरी शङ्खिनी च ततः पूषा यशस्विनी। अलम्बुषेति॥ शाक्तानन्दतरङ्गिणीधृत-ज्ञानभाष्ये॥ इड़ा च वामनासायां दक्षिणे पिङ्गला मता। सुषुम्ना ब्रह्मरन्ध्रे च गान्धारी वामचक्षुषि। दक्षिणे हस्तिजिह्वा च पूषा कर्णेऽथ दक्षिणे। वामे यशस्विनी ज्ञेया मुखे चालम्बुषा मता। कुहुश्च लिङ्गमूले स्यात् शङ्खिनी शिरसोपरि। एवं द्वारं समाश्रित्य तिष्ठन्ति दश नाड़िकाः। क्षितिश्च वारि तेजश्च वायुराकाशमेव च। स्थैर्य्यं गता इमे पञ्च वाह्याभ्यन्तर एव च॥ एवं प्रधाननाड़ीनिरूपणानन्तरं शाखारूपनाड़ी निरू-पिता॥ शारदायां॥ नाड्योऽनन्ताः समुत्पन्नाः सुषुम्ना पञ्च-पर्वसु। सर्व्वाणि स्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञान्तानि। तत्राधोऽधोग्रन्थिमारभ्योर्द्ध्वोर्द्ध्वसर्व्वग्रन्थिपर्य्यन्तं समाप्तिः। गणयि-तुमशक्यत्वादनन्ताः। यदाहुः। पूर्व्वोक्तायाः सुषुम्नाया मध्यस्थायाः सुलोचने!। नाभिहृत्कण्ठतालुभ्रूमध्यपर्व्वसमुद्भवाः। अधो-मुखाः शिराः काश्चित् काश्चिदूर्द्ध्वमुखास्तथा। परास्तिर्य्यग्गताः काश्चित्तत्र लक्षत्रयाधिकाः। नाड्योऽर्द्धलक्षसंख्याताः प्रधानाः समुदीरिताः॥ तासु सर्व्वासु बलवान् प्राणो वायुः समन्ततः॥ विश्वसारे तु॥ नाभेः सकाशाज्जायन्ते नाड्यः क्षेत्रप्रपोषिकाः। इड़ा तु वामभागे स्याद्दक्षिणे पिङ्गला मता। मध्ये सुषुम्ना विज्ञेया चन्द्रसूर्य्यानलात्मिका। नाड्योऽनन्ताः समुत्पन्नास्तस्याः पञ्चसु पर्व्वसु। इति नाभेः सकाशादिति यदुक्तं तत्क्षेत्रपोषिका

इत्यनेन रसादिचालनेन शरीरपुष्ट्यर्थं न तु ज्ञानध्यानाद्यर्थं वायुसाधनप्रकरणे एतत् स्पष्टीकरिष्ये। नरपतिजयचर्य्या-स्वरोदयधृतब्रह्मजामलमपि शरीरपुष्ट्यर्थमेव नाभौ कुण्डलिनी-माह यथा महाशक्तिः कुण्डलिनी नाड़ीस्थाहिस्वरूपिणी। ततो दशोर्द्धगा नाड्यो दश चाधोगतास्तथा। द्वे द्वे तिर्य्यग्गते नाड्यौ चतुर्विंशतिसंख्यया। सूक्ष्ममुख्यास्ततो नाड्यः सहस्राणां द्विसप्ततिः। कुण्डलिन्यां महाशक्तौ मूलमार्गा भवन्त्यमी। ताभ्यः सूक्ष्ममुखा नाड्यः शरीरं प्रतिपोषिकाः। सप्त शतानि जायन्ते सप्तोत्तराणि संख्यया। प्रधाना दश नाड्यस्तु दश वायु-प्रवाहिकाः॥ योगियाज्ञवल्क्ये प्रथमध्यायेऽपि नाभिचक्रमुप-क्रम्य। कन्दमध्ये स्थिता नाड़ी सुषुम्नेति प्रकीर्त्तिता। तिष्ठन्ति परितः सर्वाश्चक्रेऽस्मिन् नाड़िकास्ततः। नाड़ीनामपि सर्वासां मुख्या गार्गि! चतुर्दश॥ गार्गि इति याज्ञवल्क्यस्य स्त्रियाः सम्बो-धनम्॥ इड़ा च पिङ्गला चैव सुषुम्ना च सरस्वती। वारुणी चैव पूषा च हस्तिजिह्वा यशस्विनी। विश्वोदरी कुहुश्चैव शङ्खिनी च पयस्विनी। अलम्बुषा च गान्धारी मुख्याश्चैता-श्चतुर्दश। तासां मुख्यतमास्तिस्रस्तिसृष्वेकोत्तमोत्तमा। मुक्ति-मार्गे तु सा प्रोक्ता सुषुम्ना विश्वधारिणी। कन्दस्य मध्यमे गार्गि! सुषुम्ना च प्रतिष्ठिता। पृष्ठमध्ये तु तेनास्था सह मूर्द्ध्नि व्यव-स्थिता। मुक्तिमार्गे सुषुम्ना सा ब्रह्मरन्ध्रेति कीर्त्तिता। अव्यक्ता सा च विज्ञेया सुषुम्ना वैष्णवी स्थिता। इड़ा च पिङ्गला चैव तस्याः सव्ये च दक्षिणे। इड़ा तस्याः स्थिता सव्ये पिङ्गला चैव दक्षिणे। इड़ायां पिङ्गलायाञ्च चरतश्चन्द्रभास्करौ। इड़ायां चन्द्रमा ज्ञेयः पिङ्गलायां दिवाकरः। चन्द्रस्तामस इत्युक्तः सूर्य्यो राजस उच्यते। विषभागो रवेर्भागश्चन्द्रभागोऽमृतं तथा। तावेव तदधः सर्वं कालं रात्रिन्दिवात्मकम्॥ भोक्त्री

सुषुम्ना कालस्य गुह्यमेतदुदाहृतम्। सरस्वती कुहुश्चैव सुषुम्ना पार्श्वयोः स्थिते। गान्धारी हस्तिजिह्वा च इड़ायाः पृष्ठपूर्वयोः। यशस्विनी च पूषा च पिङ्गला पृष्ठपूर्वयोः। कुहुश्च हस्तिह्विह्वा च मध्ये विश्वोदरी स्थिता। यशस्विन्याः कुह्वोर्मध्ये वारुणी सा प्रतिष्ठिता। पूषायाश्च सरस्वत्याः स्थिता मध्ये यशस्विनी। गान्धार्य्याश्च सरस्वत्याः स्थिता मध्ये च शङ्खिनी। अलम्बुषा च विप्रेन्द्रि! कन्दमध्यादधः स्थिता। पूर्वभागे सुषुम्नायास्त्वामेढ्रान्तं कुहुः स्थिता। अधश्चोर्द्धञ्च विज्ञेया वारुणी सर्वगामिनी। यशस्विनी च याम्यस्य पादाङ्गुष्ठान्तमिष्यते। पिङ्गला चोर्द्धगा याम्ये नासान्तं विद्धि मे प्रिये!। याम्ये पूषा च नेत्रान्ता पिङ्गलायाः सुपृष्ठतः। पयस्विनी तथा गार्गि! याम्ये नेत्रान्तमिष्यते। सरस्वती तथाचोर्द्धं हस्तिजिह्वा प्रकीर्त्तिता। आसव्यकर्णाद्विप्रेन्द्रि! शङ्खिनी चोर्द्धमागता। गान्धारी सव्यनेत्रान्तमिड़ायाः सव्यतः स्थिता। इड़ा च सव्यनासान्तं मध्यभागे व्यवस्थिता। हस्तिजिह्वा तथा सव्यपादाङ्गुष्ठान्तमिष्यते। विश्वोदरी तु सा नाड़ी तुन्दमध्ये व्यवस्थिता। अलम्बुषा महाभागे! वायुमूला तथोर्द्धगा। एतास्त्वन्याः समुत्पन्नाः शिवास्त्वन्याश्च ता अपि। यदश्वत्थदले तद्वत् पद्मपत्रेषु चापि वा। नाड़ीष्वेतासु सर्वासु विज्ञातव्या तपोधने!॥ इति नाड्युत्पत्तिकथनम्। अध्यात्मविवेके। अस्थ्नां शरीरे संख्या स्यात् षष्टियुक्तं शतत्रयम्। त्रीण्येवास्थिशतान्यत्र धन्वन्तरिरभाषत। द्वे शते त्वस्थिसन्धीनां स्यातामत्र दशोत्तरे। पेशीस्नायुशिरासन्धिमहस्रद्वितयं मतम्। नव स्नायुशतानि स्युः पञ्च पेशीशतान्यपि। अधिका विंशतिः स्त्रीणां स्तनयोर्दिग्दगीरिता। शिराधमनिकानान्तु लक्षाणि नव विंशतिः। सार्द्धानि स्युर्नवशती शट्पञ्चाशदयुता तथेति॥ इत्यस्थ्याद्युत्पत्तिकथनम्॥ रुद्र-

जामले सप्तदशपटले॥ तिस्रः कोट्योऽर्द्धकोटी च यानि लोमानि मानुषे। नाड़ीमुखानि सर्वाणि घर्मविन्दुं चरन्ति च। इति नाड़ीसुखस्थानकथनम्॥

इति श्रीप्राणतोषिण्यां प्रथमे सर्गकाण्डेऽन्नमयकोषात्मक-
मनुष्यदेहकथनं नाम चतुर्थः परिच्छेदः॥

एवं नाड़ीप्रभृतीनां निरूपणानन्तरं वायुप्रकरणस्यौचित्या-त्तन्निरूप्यते॥ शारदातिलके॥ मूलाधारोन्नतः प्राणस्ताभि-र्व्याप्नोति तत्तनुम्। वायवोऽत्र दश प्रोक्ता वह्नयश्च दश स्मृताः॥ ताभिर्नाड़ीभिः॥ तत्तनुमनुभूततनुम्॥ वायुना-मानि तत्रैव। प्राणाद्या मरुतः पञ्च नागः कूर्म्मो धनञ्जयः। क्रकरः स्याद्देवदत्त इति नामभिरीरिताः॥ प्राणाद्या इति प्राणापानव्यानोदानसमानाः। योगियाज्ञवल्क्ये चतुर्थाध्याये-ऽपि। प्राणोऽपानः समानश्च उदानो व्यान एव च। नागः कूर्मश्च क्रकरो देवदत्तो धनञ्जयः। एते नाड़ीषु सर्वासु चरन्ति दश वायवः। एतेषु वायवः पञ्च मुख्याः प्राणा-दयः स्मृताः। तेषु मुख्यतमावेतौ प्राणापानौ नरोत्तमे!। प्राण एवैतयोर्मुख्यः सर्वप्राणभृतां सदा॥ एषां रूपाणि स्थानानि च योगार्णवे॥ इन्द्रनीलप्रतीकाशं प्राणरूपं प्रकीर्त्तितम्। आस्य-नासिकयोर्मध्ये हृन्मध्यनाभिमध्यके। प्राणालयमिति प्राहुः पादाङ्गुष्ठेऽपि केचन॥ अपानयत्यपानोऽयमाहारञ्च प्रलापि-तम्। शुक्रं मूत्रं तथोत्सर्गमपानस्तेन मारुतः। इन्द्र-गोपप्रतीकाशः सन्ध्याजलदसन्निभः। स च मेढ्रे च पायौ च ऊरुवङ्क्षणजानुषु॥ मेढ्रे लिङ्गे पायौ गुदे ऊरौ प्रसिद्धरूपे वङ्क्षणे ऊरुसन्धौ जानुनि प्रसिद्धरूपे। इन्द्रगोपो रक्तवर्णकीटविशेषः। क्षापासियापोका इति ख्यातः। जङ्घोदरक्रकाट्याञ्च नाभिमूले च तिष्ठति॥ व्यानो व्यानशतोत्पन्नः सर्वव्याधिप्रकोपणः।

महारजतसम्प्रेच्यो हारोपादानकारकः । महारजतं काञ्चनम् । हारोपादानकारक आहारग्राहक इत्यर्थः ॥ स्त्रीयाच्चिकर्णयोर्मध्ये कव्यां वै गुल्फयोरपि । कटिः प्रसिद्धाः । गुल्फः पादग्रन्थिः । घ्राणे गले स्फिगुद्देशे तिष्ठत्यत्र निरन्तरम् । स्पन्दयत्यधरं वक्त्रं गात्रनेत्रप्रकोपणः ॥ उद्वेजयति चार्थानि तूदानो नाम मारुतः । विद्युत्पावकवर्णः स्यादुत्थानासनकारकः । पादयोर्हस्तयोश्चापि स तु सन्धिषु वर्त्तते ॥ पीतं भक्षितमाघ्रातं रक्तपित्तकफानिलान् ॥ समं नयति गात्रेषु समानो नाम मारुतः । गोक्षीरसदृशाकारः सर्वदेहे व्यवस्थितः ॥ योगियाज्ञवल्क्ये च ॥ आस्यनासिकयोर्मध्ये हृन्मध्ये नाभिमध्यके । प्राणालयमिति प्राहुः पादाङ्गुष्ठे च केचन । अधश्चोर्द्ध्वं कुण्डलिन्याः परितः प्राणसंश्रयः । अपाननिलयं केचिद् गुदमध्योरुजानुषु । उदरे वृषणे कव्यां जङ्घे नाभौ वदन्ति हि । गुदाधारद्वयोस्तिष्ठेन्मध्येऽपानप्रभञ्जनः । स्थानेष्वेतेषु सततं प्रकाशयति दीपवत् । उदानः सर्वसन्धिस्थः पादयोर्हस्तयोरपि । समानः सर्वगात्रेषु सर्वं व्याप्य व्यवस्थितः ॥ रायमुकुटस्तु ॥ हृदि प्राणो गुदेऽपानः समानो नाभिदेशके । उदानः कण्ठदेशस्थो व्यानः सर्वशरीरग इत्याह ॥ उद्गारे नाग इत्युक्तो नीलजीमूतसन्निभः ॥ उन्मीलने स्थितः कूर्मो भिन्नाञ्जनसमप्रभः ॥ कृकरः क्षुत्परश्चैव जवाकुसुमसन्निभः ॥ विजृम्भणे देवदत्तः शुद्धस्फटिकसन्निभः ॥ धनञ्जयस्तथा घोषे महारजतवर्णकः ॥ ललाटे चोरसि स्कन्धे हृदि नाभौ त्वगस्थिषु । नागाद्या वायवः पञ्च सहैव परिनिष्ठिताः ॥ विश्वसारप्रथमपटले तु ॥ प्राण आदौ हृदि स्थाने पद्मरागसमद्युतिः । अपानो गुह्यदेशे च इन्द्रगोपसमः स्मृतः । गोक्षीरधवलाकारः समानो नाभिदेशके । उदानः

कण्ठदेशे च धूम्रवर्णः प्रकीर्त्तितः। व्यानः सर्व्वेषु चाङ्गेषु ज्योतीरूपेण वर्त्तते॥ एतद्वचनानुसारेण पूर्व्वकथितरायमुकुटधृतं वचनमिति पूर्व्ववचनोक्तैतद्वचनोक्तरूपभेदस्त्वाम्नायादिभेदेन समाधेय इति॥ प्रपञ्चसारकारस्तु॥ धनञ्जयाख्यो देहेऽस्मिन् कुर्य्याद्बहुविधान् श्वसान्। स तु लौकिकवायुत्वान्मृतञ्च न विमुञ्चतीति॥ अतएव विश्वसारे॥ मैथुनञ्चेच्छति यदा मैथुनञ्च तदा चरेत्। काले धनञ्जयो वायु र्व्वीजं गर्भे च सञ्चयेत्। निधायानिलमार्गे च पुनरेव प्रवेशयेदिति धनञ्जयवायुतो गर्भसञ्चार इत्युक्तम्। अन्यैस्तु चत्वारो वायवोऽधिका उक्ता यथा। वैरम्भणः स्थानमुख्यः प्रद्योतः प्रकृतस्तथा। वैरम्भणादयस्तत्र सर्व्ववायुवशं गता इति। नरपतिजयचर्य्यास्वरोदयधृतब्रह्मजामले॥ पिङ्गलेड़ासुषुम्नाभिर्नाड़ीभिस्तिसृभिर्बुधैः। प्रकटो वायुसञ्चारो लक्ष्यते देहमध्यतः। इड़ानाड्यां स्थितश्चन्द्रः पिङ्गला भानुवाहिनी। सुषुम्ना शम्भुरूपा च शम्भुर्हंसस्वरूपकः। हकारो निर्गमः प्रोक्तः सकारस्तु प्रवेशने। हकारः शम्भुरूपः स्यात् सकारः शक्तिरुच्यते। अत्र विशेषोऽग्रे वक्ष्यते॥ शारदायां द्वितीयपटले॥ पिङ्गलायां स्थिता ह्रस्वा इड़ायां सङ्गताः परे। सुषुम्नामध्यगा ज्ञेयाश्चत्वारो ये नपुंसकाः। अत्र प्रकारः वामनासातो दक्षिणनासाप्रवेशप्रारम्भसमये देहवायुः कञ्चित् कालमुभयत्र वहति स दक्षिणायणप्रारम्भसमयस्तदानीं ऋऌकारात्मकं ह्रस्वद्वन्द्वमुदेति। एवं दक्षिणनासातो वामनासागमनकालेऽपि स उत्तरायणप्रारम्भकालस्तदानीं ॠॡरूपं दीर्घद्वन्द्वमुदेति। तदुक्तं प्रयोगसारे॥ स्वरं सप्त समारभ्य चत्वारो ये नपुंसकाः। ते सुषुम्नाश्रिते प्राणे प्रोद्यन्त्ययनसंक्रमे इति॥ जामले॥ शक्तिरूपः स्थितश्चन्द्रो वामनाड़ीप्रवाहकः। दक्षनाड़ीप्रवाहे तु शम्भुरूपी दिवाकरः। इति शरीरस्थवायुकथनम्॥

शारदायाम्॥ अग्नयो दोषदूष्येषु संलीना दश देहिषु। तेषां नामानि राघवभट्टधृतानि यथा॥ जृम्भको दीपकश्चैव विभ्रमो भ्रमशोभनः। आवसथ्याहवनीयौ दक्षिणाग्निस्तथैव च। अन्वाहार्य्यो गार्हपत्य इत्येते दश वह्नयः॥ भ्रमेण सह शोभन इति मध्यपदलोपिसमासाश्रयणेन भ्रमशोभनश्चेति दशाग्निकथनम्॥ शारदायाम्॥ बुभुक्षा च पिपासा च प्राणस्य मनसः स्मृतौ। शोकमोहौ शरीरस्य जरा मृत्युः षडूर्मयः॥ प्रपञ्चसारेऽपि॥ बुभुक्षा च पिपासा च शोकमोहौ जरामृती। षडूर्मयः प्राणबुद्धिदेहधर्मेषु संस्थिता इति॥ ऊर्मीनामार्त्त्युत्पादकोऽवस्थाविशेषः॥ शारदायाम्॥ शुक्रात् स्नायुस्थिमज्जानस्त्वङ्मांसासृञ्जि शोणितात्। पितुः शुक्रात् स्नाय्वादि। शोणितान्मातुः शोणितात् त्वगादि। षाट्कौषिकमिति प्रोक्तं सर्वदेहेषु देहिनाम्। प्रपञ्चसारे द्वितीयपटलेऽपि॥ मज्जास्थिस्नायवः शुक्रादृक्तात्त्वङ्मांसशोणितम्। इति षाट्कौषिको नाम देहो भवति देहिनाम्। वेदान्तविद्भिस्त्वपरप्रकारेण पञ्च कोषा उक्ता यथा पौर्णमास्यां पञ्चकोषविवेकेऽष्टमप्रकरणे विद्यानन्दस्वामिना। पितृभुक्तान्नजाद्वीर्य्याज्जातोऽन्नेनैव वर्द्धते। देहः सोऽन्नमयो नात्मा प्राक् चोर्द्ध्वं तदभावतः॥ पितृभुक्तेत्यत्रैकशेषेण मातृपितृभुक्तान्नजातादिति लभ्यते। अन्नेन दुग्धाद्याहारेण प्राक् जन्मन इति शेषः। मरणादूर्द्ध्वं तदभावतः देहाभावतः। पूर्णो देहे बलं स्याद् यक्षाणां यः प्रवर्त्तकः। वायुः प्राणमयो नासावात्मा चैतन्यवर्ज्जनात्। लीना सुप्तौ वपुर्बोधे वाप्नुयादानखाग्रगा। चिच्छायोपेतधीर्नात्मा विज्ञानमयशब्दभाक्। भवतीति शेषः। कर्त्तृत्वकरणत्वाभ्यां विक्रियेतान्तरिन्द्रियम्॥ विज्ञानमनसी अन्तर्बहिश्चैते परस्परमिति। अत्र रामकृष्णप्रभृतिकृत व्याख्यानम्। ननु मनोबुद्ध्योरन्तःकरणत्वाविशेषान्म-

नोमयविज्ञानमयरूपेण कोषद्वयकल्पना अनुपपन्नेत्याशङ्क्य कर्त्तृ-करणत्वाभ्यां भेदसद्भावाद् घटत एव मनोमयत्वादिभेद इत्याह। कर्त्त्रेत्यादि अन्तरिन्द्रियमन्तःकरणं कर्त्तृत्वकरणत्वाभ्यां कर्त्तृ-रूपेण करणरूपेण च विक्रियेत विपरिणमेत इत्यर्थः। एते कर्त्तृकरणे विज्ञानमनसी विज्ञानमनःशब्दवाच्ये भवतः। एते च परस्परमन्तर्वहिर्भावेन वर्त्तेते। अतः कोषद्वयत्वमुप-पद्यते इत्यर्थः॥ काचिदन्तर्मुखा वृत्तिरानन्दप्रतिविम्बभाक्। पुण्यभोगे भोगशान्तौ निद्रारूपेण लीयते। इदानीमान-न्दमयस्यानात्मत्वं दर्शयितुं तत्स्वरूपमाह काचिदित्यादि। पुण्यभोगे पुण्यकर्मफलानुभवकाले काचिद्धीवृत्तिरन्तर्मुखा सती आनन्दप्रतिविम्बभाक् आत्मस्वरूपस्यानन्दस्य प्रति-विम्बं भजते। सैव भोगशान्तौ पुण्यकर्मफलभोगोपरमे सति निद्रारूपेण लीयते विलीना भवति। सा वृत्तिरानन्दमय इत्यभिप्रायः। एतेन मज्जामयोऽस्थिमयः स्नायुमयश्चर्ममयो मांसमयो रक्तमयश्चेति ये षट्कोषास्तन्त्रविद्भिरुक्तास्ते तु वेदा-न्तविद्भिरन्नमयकोषान्तर्गतत्वेनैव पर्य्यवसिताः। अधिकास्तु प्राणमयविज्ञानमयमनोमयानन्दमयेति चत्वार उक्ताः। अतो दशकोषकोऽयं देह इत्यायातम्। इति शरीरकोषविवरणम्॥

प्रपञ्चसारे॥ रसादितः क्रमात् पाकश्शुक्रान्तेषु तु धातुषु। धातुषु रसादितः क्रमात् पाको भवतीत्यन्वयः। शुक्रपाकात् स्वयं भिद्याज्जरायामष्टमी दशा। चेतन्नस्य तदा जन्तु केवला-श्रयमिष्यते। यथा स्नेहः प्रदीपस्य यथाभ्रमशनित्विषः। बहु-द्वारेण कुम्भेन संवृतस्य हविर्भुजः। यथा तेजः प्रसरति समी-पालोकशक्तिमत्। तथा देहावृतस्यापि चेतन्नस्य महात्विषः। इन्द्रियैः संविवर्द्धन्ते स्वं स्वमर्थग्रहं प्रति। प्रदीपस्य प्रज्वलन-समये स्नेहस्तैलादिर्यथा प्रज्वलनार्थं शिखां प्रति प्रसरति स्वय-

मायाति यथा वा अशनिर्विषो विद्युतो द्युतिसमयेऽभ्रं मेघो यथा वा बहुच्छिद्रकुम्भावृतस्य वह्नेर्दृष्टं तमच्छणसमये समीपालोकशक्तिमन्निकटप्रकाशकशक्तियुक्तं तेजस्तथा देहावृतस्य कोषदशकाभ्यन्तरवर्त्तिन आत्मनः स्वं स्वं विषयग्रहणं प्रति इन्द्रियैः करणैस्तेजांसि संविवर्द्धन्ते प्रसरन्ति इत्यर्थः। यथा स्नेहमिति पाठे तु व्यक्त एवार्थस्तथापि व्याख्यायते। प्रदीपस्य तेजो यथा स्नेहं विद्युतस्तेजो यथा मेघं बहुच्छिद्रपात्रावृतवह्नेर्यथा घृतं प्रति तेजः प्रसरति तथात्मनस्तेजांसि स्वं स्वं विषयग्रहणं प्रति प्रसरन्तीत्यर्थः। संविवर्द्धन्ते इति बहुवचननिर्देशादेकदापि बहिरिन्द्रियैर्बह्वर्थग्रहणमिति सूचितम्। अतएव अन्तर्दृष्टिर्बहिरुपगतप्रेक्षणाच्छिन्नपाशः प्रौढ़ोल्लासाधिगतपरमब्रह्मनिर्विघ्नचेताः। तत्तद्भावोदितमधुरगीः सुप्रसन्नान्तरात्मा स्मेरास्या मे भवतु सततं शाम्भवी काप्यवस्था॥ इत्यादि कुलयोगिनः प्रौढ़ोल्लासप्रार्थना॥ अन्तर्दृष्टिर्बहिश्चक्षुरित्यादिवक्ष्यमाणकुलार्णववचनञ्च साधु सङ्गच्छते। वैष्णवैरप्युच्यते। एङ्गानुपुङ्गविषये क्षणतत्परोऽपि धीरो न मुह्यति मुकुन्दपदारविन्दे। सङ्गीतनृत्यगतितालवशं गतापि मौलिस्थकुम्भपरिरक्षणधीर्नटीव। इत्यादि प्रत्यक्षसिद्धमपि कश्चिद् युगपद् गात्रं कण्डूयते एवं प्रेषयत्यपरं पश्यति च। एतेन युगपदुभयविषयकज्ञानं न मन्यामहे इति केषाञ्चिन्मतं प्रशस्यमप्रशस्यं वा सुधीभिर्निपुणं विभाव्य विचारणीयमित्यास्तां विस्तरः। प्रकृतमनुसरामः। इन्द्रियेषु पञ्चभूतस्थितिप्रकारमाहुः प्रपञ्चसारे आचार्य्याः॥ नभःश्रोत्रेऽनिलश्चर्मण्यग्निश्चक्षुष्यथोदकम्। जिह्वायामवनी घ्राणे इत्यमर्थप्रवर्त्तनम्। नभ आकाशं अनिलो वायुरुदकं जलमवनी पृथ्वी। इदन्तु प्रधानतया उक्तम्। वस्तुतस्तु प्रागुक्तपञ्चीकरणरूपेण पञ्चस्वपि पञ्च भूतानि सन्तीति पुरैवोक्तम्। यदा पित्तं मरुन्नूनं विलीनं प्रविलापयेत्।

धातुस्तदा क्रमाद्रक्तं लसीकां द्रावयेत् क्षणात्। द्रुता सा तु लसीकाख्या रोमकूपैः प्रवर्द्धते। वह्निः सर्वत्र कणशस्तथा स्वेदः प्रवर्त्तते। यदा कफो मरुत्पित्तनुन्नो लीनः प्रवर्त्तते॥ ऊर्द्ध्वं द्रुतो द्रुतं वाष्पं प्रत्येकञ्च प्रवर्त्तते। कफात्मिका तु विकृतिः कर्णशष्कुलिपूरिका। गण्डमालादिकान् वापि कुर्य्याज्जन्तोस्तु कर्मजान्॥ शारदायाम्॥ इत्थं भूतस्तदा गर्भे पूर्वजन्मशुभाशुभम्। स्मरंस्तिष्ठति दुःखात्मा छन्नदेहो जरायुणा॥ शाक्तानन्दतरङ्गिण्याम्। नवमे मासि गर्भस्थः सर्वान् संस्मरते हृदा। नवद्वारपुरे देही समयान् गमयेच्छनैः। स्थितिप्रकारस्तु राघवभट्टधृते। कृताञ्जलिर्ललाटेऽसौ मातृपृष्ठमभिश्रितः। अध्यास्ते सङ्कुचन्गात्रो गर्भे दक्षिणपार्श्वगः। वामपार्श्वाश्रिता नाड़ी क्लीवं मध्याश्रितं मतम्॥ विश्वसारे। योनिदेशोद्भवं रन्ध्रं नाभिमूलमतः परम्। गर्भाशयन्तु तं प्राहुः सर्वतन्त्रविदो जनाः। कललं तत्र तिष्ठेद्वै तत्र गर्भः प्रजायते। कर्मयोगात्मरूपेण निर्माणं विधिरादिशेत्॥ पूर्वार्जितकर्मफलं पूर्वपूर्वतरार्जितम्। जीवः प्रवेशनं कुर्य्यात् पूर्वकर्मबुभुत्सया। प्राक्तनकर्मफलं भोक्तुमिच्छया जीवोऽविद्योपाधिकः प्रवेशनं कुर्य्याद् गर्भे इति शेषः। पूर्वकर्मफलं किम्भूतम् पूर्वं पूर्वार्जितमित्यादि। अयमाशयः। कर्म त्रिविधं सञ्चितं प्रारब्धमागामि च। तत्र सञ्चितस्य प्रायश्चित्तौषधादिना नाशः। आगामिनश्च तपसा। अत एव दोषप्रागभावासमकालीनदोषध्वंसवन्तः शिष्टा इति गोपीनाथतर्काचार्य्येण शिष्टलक्षणं कृतम्। प्रारब्धस्य भोगं विना न गत्यन्तरमस्ति। अतस्तत्फलभोगाय गर्भे जीवप्रवेशमाह। उक्तञ्च प्रारब्धकर्मणां भोगादेव क्षय इति॥ शाक्तानन्दतरङ्गिण्याम्॥ सुकृतं दुष्कृतञ्चैव यत् कृतं पूर्वजन्मनि। तत् सर्वं सकलं ज्ञात्वा ऊर्द्ध्वपादस्त्वधोमुखः। गर्भे तु सम्प्रविष्टो-

ऽसौ स्तिमिते घोरदर्शने ॥ स्तिमितेऽन्धकारे घोरदर्शने भयङ्करे। अभ्यस्यामि शिवं ज्ञानं संसारार्णवतारणम्। चिरयोगी ततो भूत्वा मुक्तो यास्यामि तत्पदम्। एवं गर्भस्थितो जीवो गर्भयातनयार्दितः। नित्यं भावयते चित्ते लब्धचैतन्यलक्षणः॥ विश्वसारे॥ इत्थम्भूतस्तदा गर्भः पूर्वजन्मशुभाशुभम्। क्षणं तिष्ठेत् स्मरंस्तत्र निश्चेष्टो भवति ध्रुवम्। शरीरे पञ्चाशदक्षरस्थितिं विना शब्दादिनं निर्गन्तुमाननतः शक्तोऽतः शब्दब्रह्मप्रादुर्भावः गर्भे तेषां स्थानमुक्तम् तत्रैव। पुरा कृतयुगे देवि! कैलासे पर्वतोत्तमे। त्वदीयपादयुगलं ध्यायेऽहं ध्यानयोगतः। मम सिद्धिर्भवेत्तत्र युगान्ते कमलानने!। परानन्दमयस्तत्र हस्तवाद्यो ममाभवत्। तस्मिन्नेव क्षणे देवि! शब्दब्रह्मविभूषितः। पटहश्चाभवत्तत्र ममानन्दविवर्द्धये। शब्दार्थकात्मनादेन द्रव्ययोगेन शब्द्यते। पञ्चाशद्वर्णसंयुक्तं नादविन्दुविभूषितम्। पञ्चाशद्वर्णसंयुक्ता मातृका चक्रसंस्थिता। षट्चक्राङ्कितमन्त्रा च मातृकान्तः शरीरिणाम्। आधारे लिङ्गनाभौ हृदयसरजिजे तालुमूले ललाटे द्वे पत्रे षोड़शारे द्विदशदशदले द्वादशार्द्धे चतुष्के। वासान्ते बालमध्ये डफकठसहिते कण्ठदेशे स्वरांश्च हक्षौ कोदण्डमध्ये न्यसतु विमलधी र्न्याससम्पत्तिसिद्धै। देहे चतुर्दशभुवनस्थानमुक्तम् शान्तानन्दतरङ्गिण्याम्। पातालं भूधरा लोका आदित्यादिनवग्रहाः। भूधरादिसप्तस्वर्गाश्च नागाश्च सर्वदेहिनाम्। पिण्डमध्ये स्थिताः सर्वे स्थानं तेषां वदामि ते। पादाधस्तात्तलं विद्यात्तदूर्द्ध्वं वितलन्तथा। जानुनोः सुतलञ्चैव अतलं सन्धिरन्ध्रके। तलातलं गुदमध्ये लिङ्गमूले रसातलम्। पातालं कटिसन्धौ च पादादौ लक्षयेद्बुधः। भूर्लोको नाभिदेशेच भुवोलोकस्तथा हृदि। स्वर्लोकः कण्ठदेशे च महर्लोकश्च चक्षुषि। जनलोकस्तदूर्द्ध्वञ्च तपो-

लोको ललाटके। सत्यलोको महायोनौ भुवनानि चतुर्दश। त्रिकोणे च स्थितो मेरुरूर्द्धकोणे च मन्दरः। कैलासो दक्षिणे कोणे वामकोणे हिमालयः। विन्ध्यो विष्णुस्तदूर्द्धे च सन्त्येते कुलपर्वताः। अस्थिस्थाने महेशानि! जम्बुद्वीपो व्यवस्थितः। मांसेषु च कुशद्वीपः क्रौञ्चद्वीपः शिरासु च। शाकद्वीपः स्मृतो रक्ते प्राणिनां सर्वसन्धिषु। तदूर्द्धे शाल्मलिद्वीपः प्लक्षश्च लोमसञ्चये। नाभौ च पुष्करद्वीपः सागरस्तदनन्तरम्। लवणोदस्तथा मूत्रे शुक्रे क्षीरोदसागरः। मज्जा दधिसमुद्रश्च तदूर्द्धे घृतसागरः॥ वशापः सागरः प्रोक्त इक्षुः स्यात् कटिशोणितम्। शोणिते च सुरासिन्धुः कथिताः सप्त सागराः। ग्रहाणां मण्डलञ्चैव शृणु वक्ष्यामि पार्वति!। नादचक्रे स्थितः सूर्य्यो विन्दुचक्रे च चन्द्रमाः। लोचने मङ्गलः प्रोक्तो हृदि सोमसुतस्तथा। उदरे च गुरुश्चैव शुक्रे शुक्रस्तथैव च। नाभिस्थितोऽथ मन्दो वै मुखे राहुस्तथा स्थितः। पादौ पाणौ च केतुश्च शरीरे तीर्थमण्डलम्। विश्वसारे॥ शीर्षे मुखे तथा बाहौ हृदये चोदरे क्रमात्। कटौ वस्तौ च गुह्योरुजानुजङ्घाङ्घ्रिषु स्थिताः। मेषाद्या राशयो देहे तेषां रूपाण्यतः शृणु। अरुणसितहरितपाटलपाण्डुविचित्राः सितेतरपिशङ्गौ। पिङ्गलकर्वुरकमलिनारुचयो यथासंख्यम्। हरितः श्यामलः। सितेतरः कृष्णः। पिशङ्गो नीलपीतमिश्रः। कर्वुरः प्रसिद्धः। वभ्रुः कपिलः॥ मेषं वृषं समिथुनं कर्कटं सिंहमेव च। कन्यां तुलां वृश्चिकञ्च धनुषं मकरं तथा। कुम्भं मीनं न्यसेद् गात्रे ॐकाराद्यं नमोऽन्वितम्॥ अश्विनी भरणी चैव कृत्तिका रोहिणी तथा। मृगशिरस्तथार्द्रा च पुनर्वसुरतः परम्। पुष्याश्लेषा मघा चैव पूर्वफल्गुन्यतः परम्। उत्तराफल्गुनी चैव हस्ता चित्रा ततः परा। स्वाती विशाखानुराधा ज्येष्ठा

मूला ततः परा। पूर्वाषाढ़ा चोत्तरा च श्रवणाभिजितस्तथा। धनिष्ठा शतभिषा चैव पूर्वभाद्रपदा तथा। उत्तरभाद्रपदा चैव रेवत्यन्ताः समीरिताः। मूर्ध्नि भ्रूयुगले चाक्ष्णोः कर्णयोर्नसि गण्डयोः। ओष्ठयोर्दन्तपंक्तौ च जिह्वाग्रे ग्रीवमूलके। स्तन-द्वन्द्वे तथा वक्षःपार्श्वयोर्नाभिदेशके। नितम्बे च तथा पृष्ठे गुह्ये च पादयोः पुनः। पादमेकं द्विनक्षत्रं राशीनां परिणाम-कृत्। शरीरे राशिनक्षत्रकथनप्रयोजनन्तु प्रश्नकाले प्रष्टा यदङ्गे हस्तं दत्त्वा पृच्छति तदङ्गे यो राशिः पतितः तेन वर्णादिकं ज्ञातव्यम् इत्यभिप्रायः॥ श्रीविद्याया राशिन्यासो नक्षत्रन्यासस्थानेनैवोक्त इति॥ शाक्तानन्दतरङ्गिणीधृतज्ञान-भाष्ये। शुक्रादुत्पद्यते रक्तं रक्ताद्बिन्दुसमुद्भवः। प्राणतो वायु-रुत्पन्नः कालाग्निः स्यादपानतः। शुक्रतो नाभिरुत्पन्ना शुक्रा-दग्निसमुद्भवः। अपानात् कालाग्निर्जातो नाभिस्थानस्थो वड़वाग्निरूपो य आहारं पचति शुक्रसम्भूता वायुपित्तकफधा-तुस्था दशाग्नय इति भेदेन वह्न्युत्पत्तिर्द्विरुक्ता। मांसतश्च मलो-त्पत्तिर्मज्जा चापि ततो भवेत्। शुक्रेणोत्पादिता जिह्वा नासिका सप्त देहिनाम्। रक्तादुत्पद्यते नेत्रं वामञ्चैव तु दक्षिणम्। प्राणादुत्पद्यते शून्यं प्राणरन्ध्रद्वयं तथा॥ तत्त्वसारे षष्ठपटले॥ ईश्वर उवाच। चन्द्रः सूर्य्यस्तथा वह्निः शरीरे दश नाड़िकाः। देहस्था वायवः पञ्च मनो विन्दुस्तथैव च। षट्चक्रं मेरुदण्डञ्च उड्डीयानं तथैव च। जालन्धरः कामरूपः पूर्णग्रीवः श्रीहट्टकः॥ निर्वाणतन्त्रे प्रथमपटले॥ जन्तोराकारं ब्रह्माण्डं नानावर्षं च पार्वति!। ब्रह्माण्डं विग्रहं प्रोक्तं स्थूलसूक्ष्मादिकं हि तत्। मेरुपर्वतो मध्ये च देवि! सप्त कुलाचलाः। मूलादिमस्तकान्तं हि सुमेरुर्नाम पर्वतः। स्थितो मेरोरधोभागे द्व्यङ्गुलञ्चोर्द्ध्व-देशतः। भूर्लोकादि महेशानि! सप्तसर्गं क्रमेण हि। द्व्यङ्गुलं

सप्त पातालास्तिष्ठन्ति परमेश्वरीति। तत्त्वसारे॥ प्रकृतिः पुरुषो देहे ब्रह्मा विष्णुः शिवस्तथा। नदाश्चैव समुद्राश्च भुवनानि चतुर्दश। ब्रह्माण्डे ये गुणाः सन्ति ते तिष्ठन्ति कलेवरे। तेषां सङ्क्षेपतः सर्वं प्रवक्ष्यामि शुचिस्मिते!। मेरुपृष्ठे स्थितश्चन्द्रो द्विरष्टकलयान्वितः। अहर्निशं तुषाराभां धारां वर्षत्यधोमुखः। सुधांशुर्विविधस्रावो पीयूषविन्दुरेव च। विन्दुरल्पस्य मध्येन देहसिद्धिः प्रजायते। जवाकुसुमसङ्काशो वस्तिदेशे सुशोभने!। शङ्खिनीमूलं संव्याप्य सूर्य्यस्तिष्ठति देहिनाम्। द्वादशकलया सूर्य्यो वह्निर्दशकलात्मकः। सर्वेषां देहिनां देहे सदा अन्नादिपाचकः। तुषारं वर्षते चन्द्रो रविः शुष्यति सर्वदा। संयोगेन स्थितः प्राणो वियोगे मरणं भवेत्। ऊर्द्ध्वं त्ववयवे रश्मिरधश्चन्द्रामृतं सदा। अभ्यासं कामरूपस्य योगं योगविदो विदुः। संयोगो च भवेद्योगो प्राणापानैकयोगतः। प्राणश्चन्द्रमयः प्रोक्तोऽपानः सूर्य्यमयस्तथा। अनयोः सङ्गमो मध्ये रजो रोगस्य साधनम्। उड्डीयानं दृढ़ं बद्ध्वा कुर्य्याद्रेचकपूरकौ। समानोदानयोर्योगः प्राणापानैकयोगतः। कामरूपे त्रिभिर्योगं प्राणापानसमानकैः॥ नाभिशक्तिद्वयोर्मध्ये उड्डीयानः स उच्यते। वस्तौ जालन्धरो ज्ञेयः कामरूपस्य गर्भके। पूर्णग्रीवो भ्रुवोर्मध्ये श्रीहट्टस्तालुकोपरि॥ तथा। नाभिमध्ये स्थितो ब्रह्मा हृदि मध्ये च केशवः। शङ्करः शिरसि ज्ञेयस्त्रिस्थानं मुक्तिदायकम्॥ इति शरीरे तीर्थादिकथनम्॥ शाक्तानन्दतरङ्गिण्याम्॥ एतस्मिन्नन्तरे देवि! विश्लेषां गर्भसङ्कटे। नवमे दशमे मासि प्रबलैः सूतिमारुतैः। निःसार्य्यते वाण इव जन्तुश्छिद्रेण सज्वरः। पीड़ार्दित इत्यर्थः। पातितोऽपि न जानाति मूर्च्छितोऽपि ततश्च्युतिम्। सूतिवातस्य वेगेन योनिरन्ध्रस्य पीडनात्। विस्मृतं सकलं ज्ञानं गर्भे यच्चिन्तितं हृदि॥ तत्र

पापिनां जन्मसमये पीड़ाधिक्यं तदुक्तम् प्रपञ्चसारे द्वितीयपटले॥ अथ पापकृतां शरीरभाजामुदरान्निष्क्रमितुं महान् प्रयासः। नलिनोद्भवधीर्विचित्रवृत्ता नितरां कर्मगतिस्तु मानुषाणाम्। नलिनोद्भवस्य ब्रह्मणः। जायतेऽधिकसद्विग्नो जृम्भतेऽङ्गैः प्रकम्पितैः। यात्युल्वणं निश्वसिति भीत्या रोदितुमिच्छति। मूलाधारात् प्रथममुदितो यस्तु तारः पराख्यः पश्चात् पश्यन्त्यथ हृदयगो बुद्धियुङ्मध्यमाख्यम्। वक्त्रे वैखर्यथ रुरुदिषोर्यस्य जन्तोः सुषुम्नाबद्धस्तस्माद्भवति पवनप्रेरितो वर्णसङ्घः। जन्मानन्तरबालकरोदनस्याप्यव्यक्तवर्णात्मकत्वात् वर्णोत्पत्तिप्रकारं वदन् कुण्डलिनीतः सामान्यतः सर्ववर्णानामुत्पत्तिं दर्शितवान्। श्रोतोमार्गस्याविभक्तत्वहेतोस्तत्रार्णानां जायते न प्रकाशः। तावद् यावत्कण्ठमूर्द्धादिभेदो वर्णव्यक्तिस्थानसंस्था यतोऽतः। जातोऽस्मीति यदा भावो मनोऽहङ्कारबुद्धिमान्। जातश्चित्पूर्वको जन्तोः स्वभावः क्रमवर्द्धितः। बध्नाति मातापित्रोस्तु ततो बन्धुषु च क्रमात्। स पीत्वा बहुशः स्तन्यं मातरं स्तनपायिनीम्। न रोदिति च तां वीक्ष्य तत्र स्यादितरेतरम्॥ शाक्तानन्दतरङ्गिण्याम्॥ पञ्चैतान्यपि सृज्यन्ते गर्भस्थस्यैव देहिनः। आयुः कर्म च वित्तञ्च विद्या निधनमेव च। बालकश्च शिशुश्चैव गण्डः कैशोरकस्तथा। अतः परन्तु युवकः प्रौढश्चैव ततः परम्। अतिप्रौढ़स्तथा वृद्धस्त्वतिवृद्धस्ततः परम्। पलितं मरणञ्चैव अवस्थाः परिकीर्त्तिताः॥ इत्येकादशावस्थाकथनम्॥ मरणानन्तरमपि तत्रैव॥ ततः स नरके याति स्वर्गं वा स्वेन कर्मणा। देवत्वमथ मानुष्यं पशुत्वं पक्षितां तथा। कृमित्वं स्थावरत्वञ्च जायते जन्मकर्मभिः॥ तथा। कर्मणा जायते जन्तुः कर्मणैव प्रलीयते। देहे विनष्टे तत्कर्म पुनर्देहं प्रपद्यते। यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्। तथा शुभाशुभं कर्म कर्त्तारमनुगच्छति।

मन्वाद्य विनाशिनः कथं कर्म्मणोऽमुत्र भोग इति सन्देहस्य निरसनाय सदृष्टान्तमुक्तम् कुलार्णवे पञ्चमखण्डे प्रथमोल्लासे॥ इह यत् क्रियते कर्म्म तत्परत्रोपभुज्यते। सिक्तमूलस्य वृक्षस्य फलं शाखासु दृश्यते इति॥

इति श्रीप्राणतोषिण्यां प्रथमकाण्डे मनुष्यजन्मकथनं नाम पञ्चमः परिच्छेदः॥

प्रस्तुतं वर्णोत्पत्तिप्रकारं क्रमेण दर्शयति प्रपञ्चसारे॥ अवैशद्यान्मुखश्रोतोमार्गस्याविशदाक्षरम्। अप्यव्यक्तं प्रलपति यदा सा कुण्डली तदा। मूलाधारे विध्वनति सुषुम्नां वेष्टते मुहुः। मुखश्रोत्रमार्गस्यावैषम्यादनैर्म्मल्याद्धेतोर्यदा सा कुण्डली अविशदाक्षरमविस्पष्टमक्षरं यत्राव्यक्ते ध्वनाविति शेषस्तं प्रलपति अर्थात् कलभाषणादिकं करोति तदा मूलाधारे विध्वनति शब्दायते सुषुम्नाञ्च मुहुर्व्वेष्टते इत्यन्वयः। कुण्डलीस्वरूपमुक्तम् शारदातिलके॥ ततश्चैतन्यरूपा सा सर्व्वगा विश्वरूपिणी। शिवसन्निधिमागत्य नित्यानन्दगुणोदया॥ तिष्ठतीति परेणान्वयः। शिवसन्निधीत्यनेन शक्तिशब्दवाच्येयमित्यायातम् अतः स्त्रीलिङ्गेन विशेषणानि। यद्यपि शिवशक्त्योरेकात्मकत्वेनाभेदस्तथापि काल्पनिकं भेदमुरीकृत्य शिवसन्निधीत्युक्तम्॥ तदुक्तमभिनवगुप्तपादाचार्य्यैः॥ शक्तिश्च शक्तिमद्रूपाद्व्यतिरेकेण वाञ्छति। तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिव। गुणानामुदयो यस्यां नित्यानन्दा चासौ गुणोदया चेति सा। दिक्कालाद्यनवच्छिन्ना सर्व्वा सर्व्वार्थगा शुभा। परापरविभागेन परा शक्तिरियं मता। काचन परशक्तिः काचनापरशक्तिस्तद्विभागेनापीयं परशक्तिरेव॥ तदुक्तं भगवद्गीतायाम्। भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च। अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा। अपरेयमिति त्वन्यां प्रकृतिं विद्धि मे पराम्।

जीवभूतां महावाहो! ययेदं धार्य्यते जगत्॥ शारदायम्॥ योगिनां हृदयाम्भोजे नृत्यन्ती नृत्यमञ्जसा॥ अञ्जसा तत्त्वेनेत्यर्थः॥ आधारे सर्व्वभूतानां स्फुरन्ती विद्युदाकृतिः। आधारे मूलाधारे भूतानां जन्तूनाम्॥ शङ्खावर्त्तक्रमाद्देवी सर्व्वमावृत्य तिष्ठति। शङ्खमध्ये य आवर्त्तः स यथा शङ्खमावृत्य तिष्ठति तद्वदियमपि सर्व्वं शिवमावृत्य तिष्ठतीत्यर्थः। कुण्डलीभूतसर्पाणामङ्गश्रियमुपेयुषी। सर्व्ववेदमयी देवी सर्व्वमन्त्रमयी शिवा। सर्व्वतत्त्वमयी साक्षात् सूक्ष्मात् सूक्ष्मतरा विभुः। विभुः इयत्तया ज्ञातुमशक्या। त्रिधामजननी देवी शब्दब्रह्मस्वरूपिणी। त्रिधामेति चन्द्रसूर्य्याग्निरूपा। द्विचत्वारिंशद्वर्णात्मा पञ्चाशद्वर्णरूपिणी॥ द्विचत्वारिंशदिति भूतलिपिमन्त्रमयी। पञ्चाशदिति मातृकामयीत्यर्थः। गुणिता सर्व्वगात्रेण कुण्डली परदेवता। विश्वात्मना प्रबुद्धा सा सूते मन्त्रमयं जगत्। सर्व्वगात्रेण सर्व्ववर्णैः गुणिता परस्परमिलिता सती मन्त्रमयं जगत् सूते प्रकाशयतीत्यन्वयः॥ मूलाधारे सर्पवत् कुण्डलीभूता नाड़ी वर्त्तते तन्मध्यस्थायित्वादियं कुण्डली। एकधा गुणिता शक्तिः सर्व्वविश्वप्रवर्त्तिनी। सर्व्वविश्वेत्युभयोपादानात् शब्दार्थरूपोभयोत्पादिकेति सूचितम्॥ वेदादिवीजं श्रीवीजं शक्तिवीजं मनोभवम्॥ प्रासादं तुम्बुरुं पिण्डं चिन्तारत्नं गणेश्वरम्। मार्त्तण्डभैरवं दौर्गं नारसिंहं वराहजम्। वासुदेवं हयग्रीवं वीजं श्रीपुरुषोत्तमम्। अन्यान्यपि च वीजानि तदोत्पादयति ध्रुवम्। यदा भवति सा संविद्द्विगुणीकृतविग्रहा। हंसवर्णौ परात्मानौ शब्दार्थौ वासरक्षपे। सृजत्येषा परा देवी तदा प्रकृतिपुरुषौ। यद्यदन्यज्जगत्यस्मिन् युगं तत्तदजायत। त्रिगुणीकृतसर्व्वाङ्गी चिद्रूपा शिवगेहिनी। प्रसूते त्रैपुरं मन्त्रं मन्त्रं शक्तिविनायकम्। पाशाद्यं त्र्यक्षरं मन्त्रं त्रैपुटं चण्डनायकम्।

सौरं मृत्युञ्जयं शक्तिं शाम्भवं विनतासुतम्। वागीशी त्र्यक्षरं मन्त्रं नीलकण्ठं विषापहम्। मन्त्रं त्रिगुणितं देव्या लोकत्रय-गुणत्रयम्। धामत्रयं सा वेदानां त्रयं वर्णत्रयं शुभा। त्रिपुष्करं स्वरान् देवी ब्रह्मादीनां त्रयं त्रयम्॥ त्रिपुष्करमिति ज्येष्ठ-मध्यमकनिष्ठत्वेन तीर्थत्रयम्। स्वरानिति उदात्तानुदात्तसमाहारान्॥ वह्नेः कालत्रयं शक्तेस्त्रयं वृत्तित्रयं महत्। नाड़ीत्रयं त्रिवर्गं सा यद्वयदन्यत्त्रिधा मतम्॥ प्रपञ्चसारे द्वितीयपटलेऽपि॥ द्विचतुःपञ्चषट्सप्त चाष्टौ च दश एव च। तथा द्वादश-पञ्चाशद्भेदेन गुणयेत् क्रमात्। यदा यदा त्रिगुणयेत्तदा त्रिगुणता विभुः। शक्तिः कालाग्निनादात्मा गूढ़मूर्त्तिः प्रतीयते। तदा तां तारमित्याहुर्व्योमात्मेति बहुश्रुताः। तामेव शक्तिं ब्रुवते ह्रीत्यात्मेति चापरे। त्रिगुणा सा त्रिदोषा सा त्रिवर्णा सा त्रयी च सा। त्रिलोका सा त्रिमूर्त्तिः सा त्रिरेखा सा विशिष्यते। एतेषां तारणात्तारः शक्तिस्तद्भृतशक्तितः। यदा चतुर्धा गुणिता सूक्ष्मादिस्थानचारिका। वाचिका जाग्रदादीनां करणानाञ्च सा तदा। सा यदा पञ्चगुणिता पञ्चपञ्च-विभेदिनी। पञ्चानामक्षराणाञ्च वर्णानां मरुतां तथा। मरुतां प्राणादीनाम्॥ गुणिता सा यदा षोढ़ा कोषोर्मिरसभेदिनी। तदा षड्गुणिताख्यस्य चन्द्रस्य च विभेदिनी। यदा सा सप्त-गुणिता तारह्रीङ्खयोस्तथा। भेदैरहाद्यैः शान्तान्तैर्विद्यते सप्तभिः पृथक्। अकारश्चाप्युकारश्च मकारो विन्दुरेव च। नादः शक्तिश्च शान्तिश्च तारभेदाः समीरिताः। हकारो रेफ-मायै च विन्दुनादौ तथैव च। शक्तिशान्तौ च सा प्रोक्ताः शक्ते-र्भेदाश्च सप्तधा। अङ्गेभ्योऽस्यान्तु सप्तभ्यः सप्तधा भिद्यते जगत्। लोकाद्रिद्वीपपातालसिन्धुग्रहमुनीश्वरैः। धात्वादिभिस्तथान्यैश्च सप्तसंख्याप्रभेदकैः। यदाष्टधा सा गुणिता तदा प्रकृतिभेदिनी।

अष्टाक्षरा हि वस्त्राशा मातृमूर्त्तिप्रभेदिनी। दशधा गुणिता नाड़ी मर्मांशादिविभेदिनी। द्वादशादिक्वपि यदा तदा राश्यर्कमूर्त्तियुक्। मन्त्रञ्च द्वादशार्णाख्यमभिधत्ते स्वरानपि। तत्संख्यञ्च तदा मन्त्रं शक्तिस्तद्गुणितात्मकम्। पञ्चाशद्धा प्रगुणिता पञ्चाशद्वर्णभेदिनी। पञ्चाशदंशगुणिताथ यदा भवेत् सा देवी तदात्मविनिवेशितदिव्यभावा। सौषुम्नवर्त्मशुषिरोदित-नादसङ्गात् पञ्चाशदीरयति पंक्तिश एव वर्णान्। सुषुम्नापथ-रन्ध्रोद्गतध्वनेः सङ्गात् सा शक्तिः पञ्चाशतं वर्णान् प्रेरयतीत्यर्थः॥ शारदायाम्॥ चतुःप्रकारगुणिता शाम्भवी शर्मदायिनी। तदानीं पद्मिनीबन्धोः करोति चतुरक्षरम्। चतुष्टयं गणेशानामात्मा-दीनां चतुष्टयम्। ओजापूजादिकं पीठं धर्मादीनां चतुष्टयम्। दलकादीन् गजान् देवि! यद्यदन्यच्चतुष्टयम्। पञ्चधा गुणिता पत्नी शम्भोः सर्वार्थदायिनी। त्रिपुरा पञ्चकूटं सा तस्याः पञ्चा-क्षरद्वयम्। पञ्चरत्नं महादेव्या सर्वकामफलप्रदम्। पञ्चाक्षरं महेशस्य पञ्चवर्णं गरुत्मतः। सम्मोहनान् पञ्च वाणान् कामान् पञ्च सुरद्रुमान्। पञ्च प्राणादिकान् वायून् पञ्च वर्णान् महेशितुः। मूर्त्तिः पञ्चकलाः पञ्च पञ्च ब्रह्म ऋचः क्रमात्। सृजत्येषा परा शक्तिर्वेदवेदार्थरूपिणी। षोढ़ा सा गुणिता देवी धत्ते मन्त्रं षड़क्षरम्। षट्कूटं त्रिपुरामन्त्रं गाणपत्यं षड़क्षरम्। षड़क्षरं हिमरुचेर्नारसिंहं षड़क्षरम्। ऋतून् वस-न्तमुख्यान् षड़ामोदादीन् गुणाधिपान्। कोषानूर्म्मीन्रसान् शक्तीर्डाकिन्याद्याः षड़ध्वनः। यन्त्रं षड्गुणितं शक्तेः षड़ा-धारानजीजनत्। षड़्विधं यज्जगत्यस्मिन् सर्वं तत् परमे-श्वरी। सप्तधा गुणिता नित्या शङ्करार्द्धशरीरिणी। सप्तार्णं त्रिपुरामन्त्रं सप्तवर्णं विनायकम्। सप्तकं व्याहृतीनां सा सप्तवर्णं सुदर्शनम्। लोकान् गिरीन् सुरान् धातून् मुनीन्

सप्त ग्रहान् द्विपान्। समिधः सप्त संख्याताः सप्त जिह्वा हवि-
र्भुजः। अन्यं सप्तविधं यद् यद् तत्तदस्यामजायत। अष्टधा
गुणिता शक्तिः शैवमष्टाक्षरद्वयम्। अष्टाक्षरं हरेः शक्तेरष्टा-
क्षरद्वयं परम्। भानोरष्टाक्षरं दौर्गमष्टार्णं परमात्मनः। अष्टार्णं
नीलकण्ठस्य वासुदेवात्मकं मनुम्। यन्त्रं कामार्गलं दिव्यं
देवीयन्त्रं .घटार्गलम्। गन्धाष्टकं शुभं देवीदेवानां हृदय-
ङ्गमम्। ब्राह्मयाद्या भैरवान् सर्वान् मूर्त्तीराशा वसूनपि।
अष्टपीठं महादेव्या अष्टाष्टकसमन्वितम्। चण्डी सा प्रकृति-
र्विघ्नवक्रतुण्डादिकान् क्रमात्। अणिमादिगुणान्नागान् वह्ने-
र्मूर्त्तीर्यमादिकान्। अष्टात्मकं जगत्यन्यं सर्वं वितनुते तदा।
नवधा गुणिता नित्या सूते मन्त्रं तदात्मकम्। नवकं शक्ति-
तत्त्वानां तत्त्वरूपा महेश्वरी। नवकं पीठशक्तीनां शृङ्गारादीन्
रसान्नव। माणिक्यादीनि रत्नानि नव वर्गयुतानि च। नवकं
प्राणदूतीनां मण्डलं नवकं शुभम्। यद् यन्नवात्मकं लोके सर्व-
मस्यामुदञ्चति। दशधा विकृता शम्भोर्भाविनी भवदुःखहा।
दशाक्षरी गणपतेस्त्वरिताया दशाक्षरम्। त्रिपुरा दशकूटं
सा त्रिपुराया दशाक्षरम्। दशाक्षरं सरस्वत्या यक्षिण्याः सा
दशाक्षरम्। वासुदेवात्मकं मन्त्रमश्वारूढ़ादशाक्षरम्। नाम्ना
पद्मावतीमन्त्रं वायुमन्त्रं दशाक्षरम्। दशकं शक्तितत्त्वानां
तत्त्वरूपा महेश्वरी। नारीणां दशकं विष्णोरवतारान् दश
क्रमात्। दशकं लोकपालानां यद् यदन्यत् सृजत्यसौ। एका-
दश क्रमात् संविद्गुणिता सा जगन्मयी। रुद्रैकादशिनीमाद्य-
शक्तेरेकादशाक्षरम्। एकादशाक्षरं वाण्या रुद्रानेकादश
क्रमात्। समुद्गिरति सर्वज्ञा गुणिता द्वादश क्रमात्। नित्या-
मन्त्रं महेशाद्या वासुदेवात्मकं मनुम्। राशीन् भानून् हरेर्मूर्त्ती-
र्यन्त्रं सद्द्वादशात्मकम्। अन्यदेताद्दृशं सर्वं यत्तदस्यामजा-

यत॥ राघवभट्टधृतपदार्थादर्शे। त्रयोदशधा गुणिता वागी-श्वर्थश्वारूढ़ामन्त्रं विश्वेदेवादिकञ्च। चतुर्दशधा गुणिता वासुदेवगोपालमन्त्रभुवनादिकम्। पञ्चदशधा गुणिता नित्या शूलिनी मन्त्रतिथ्यादिकम्। षोड़शधा गुणिता चक्रमन्त्रस्वर-कलादिकम्। स्वरेति अकारादिविसर्गान्तम्। सप्तदशधा गुणिता लघुपञ्चमी ताराविद्यामन्त्रादिकम्। अष्टादशधा गुणिता कृष्णवामनमन्त्राग्निसंस्कारादिकम्। ऊनविंशतिधा कृष्णधरामन्त्रादिकम्। विंशतिधा गुणिता रत्नधारीमा-महेश्वरमन्त्रादिकम्। एकविंशतिधा गुणिता बटुकनाममन्त्र-यन्त्रादिकम्। द्वाविंशतिधा गुणिता कृष्णान्नाधिपतिसुमुखी-मन्त्रादिकम्। त्रयोविंशतिधा गुणिता लघुश्यामापुरुषोत्तम-हृदयङ्गममन्त्रादिकं सूते इति॥ शारदायाम्॥ चतुर्विंशति-तत्त्वात्मा यदा भवति शोभना। गायत्री सवितुः शम्भो गायत्री नदनात्मिका। गायत्री विष्णुगायत्री गायत्री त्रिपुरात्मनः। गायत्री दक्षिणामूर्त्तेर्गायत्री शम्भुयोषितः। चतुर्विंशतितत्त्वानि तस्यामासन् परात्मनि। तत्राप्यन्यदिति ज्ञेयम्॥ द्वात्रिंश-द्भेदगुणिता सर्वमन्त्रमयी विभुः। सूते मृत्युञ्जयं मन्त्रं नारसिंहं महामनुम्। लवणाद्यं महामन्त्रं वरुणस्य महात्मनः। हय-ग्रीवमनुं दौर्गं वाराहं वह्निनायकम्। गणाधिपतुर्महामन्त्रं मन्त्रं सेनाधिपस्य सा। मन्त्रं श्रीदक्षिणामूर्त्तेर्मालामन्त्रं मनोभुवः। त्रिष्टुभं वनवासिन्या अघोराख्यं महामनुम्। मन्त्रं सा देवकी-सूनोर्मन्त्रं श्रीपुरुषोत्तमम्। श्रीगोपालमनुं भूममनुं तारा-मनुं क्रमात्। महामन्त्रं महालक्ष्म्या मन्त्रं भूतेश्वरस्य सा। क्षेत्रपालात्मकं मन्त्रं मन्त्रमापन्निवारकम्। सूते मातङ्गिनीं विद्यां सिद्धिविद्यां शुभोदयाम्। अनेन क्रमयोगेन गुणिता शिववल्लभा। षट्त्रिंशत्पञ्चतत्त्वानि शैवानि रचयत्यसौ।

अन्यान्मन्त्रांश्च यन्त्राणि शुभदानि प्रसूयते। अत्र प्रकरणे सूते अजीजनदित्यादि यदुक्तं तत् प्रकाशकत्वाभिप्रायेण प्रतीत्यभिप्रायेण वा। अन्यथा सर्ववेदमयीत्यादि प्रागुक्तमनुपपन्नं स्यात्। सर्वेषां मातृकारूपकुण्डल्यवयवात्मकत्वेन जन्मादि विरुद्धमिति सुधीभिः सुनिपुणेन मानसेन विवेचनीयम्। अक्षरोत्पत्तिक्रममाहुः शारदायामाचार्य्याः॥ द्विचत्वारिंशता मूले गुणिता विश्वनायिका। सा प्रसूते कुण्डलिनी शब्दब्रह्ममयी विभुः। शक्तिं ततो ध्वनिस्तस्मान्नादस्तस्मान्निबोधिका। ततोऽर्द्धेन्दुस्ततो विन्दुस्तस्मादासीत् परा ततः॥ मूले मूलाधारे द्विचत्वारिंशता गुणिता विश्वनायिका कुण्डलिनी अनेन क्रमेण अकारादिसकारान्तां द्विचत्वारिंशदात्मिकां भूतलिपिमन्त्रात्मिकां वर्णमालिकां सूते इत्यन्वयः। क्रममाह शक्तिमिति। सा कुण्डलिनी शक्तिं सूते ततः शक्तेर्ध्वनिरासीदिति योजना। ततो ध्वनेरित्यादि ज्ञेयम्। अयञ्च क्रमः सर्वाक्षरोत्पत्तौ ज्ञेयः। तत्र सत्त्वप्रविष्टा चिच्छक्तिशब्दवाच्या परमाकाशस्था सैव सत्त्वप्रविष्टा रजोऽनुविद्धा सती ध्वनिशब्दवाच्या अक्षरावस्था सैव तमोऽनुविद्धा नादशब्दवाच्या अव्यक्तावस्था सैव तमःप्राचुर्य्यान्निबोधिकाशब्दवाच्या सैव तत्त्वभयप्राचुर्य्यादर्द्धेन्दुशब्दवाच्या। उक्तञ्च पदार्थादर्शे॥ इच्छाशक्तिबलोद्घुष्टो ज्ञानशक्तिप्रदीपकः। पुंरूपिणी च सा शक्तिः क्रियाख्या सृजति प्रभुः। असावेव विन्दुः स्थानान्तरगतः पराद्याख्यो भवति। पश्यन्ती मध्यमा वाची वैखरी शब्दजन्मभूः॥ तत्र परा मूले पश्यन्ती स्वाधिष्ठाने मध्यमा हृदये वैखरी मुखे। तदुक्तं पदार्थादर्शे॥ सूक्ष्मा कुण्डलिनी मध्ये ज्योतिर्मात्रास्वरूपिणी। अश्रोत्रविषया तस्मादुद्गच्छत्यूर्द्ध्वगामिनी। स्वयंप्रकाशा पश्यन्ती सुषुम्नामाश्रिता भवेत्। सैव हृत्पङ्कजं प्राप्य मध्यमा नाद-

रूपिणी । ततः सञ्ज्ञमात्रा स्यादविभक्तोर्द्ध्वगामिनी । सैवोरः-कण्ठतालुस्था शिराघ्राणवदृस्थिता । जिह्वामूलोष्ठनिर्धूतसर्व-वर्णपरिग्रहा । शब्दप्रपञ्चजननी श्रोत्रग्राह्या तु वैखरी । इच्छा-ज्ञानक्रियात्मासौ तेजोरूपा गुणात्मिका । क्रमेणानेन सृजति कुण्डली वर्णमालिकाम् । अकारादिसकारान्तां द्विचत्वारिं-शदात्मिकाम् । पञ्चाशद्वारगुणिता पञ्चाशद्वर्णमालिकाम् । सूते तद्वर्णतो भिन्नाः कला रुद्रादिकान् क्रमात् । कला रुद्राश्च पूर्वोक्ताः । आदिशब्देन पञ्चाशत्कामाः कामशक्तयो गणेशा-स्तच्छक्तयः क्षेत्रपालाश्चोक्ताः । कामनामानि राघवभट्टधृतानि यथा ॥ कामकामदकान्तश्च कान्तिमान् कामगस्तथा । काम-चारश्च कामी च कामुकः कामवर्द्धनः । रामो रमश्च रमणो रतिनाथो रतिप्रियः । रात्रिनाथो रमाकान्तो रममाणो निशा-चरः । नन्दको नन्दनश्चैव नन्दी नन्दयिता पुनः । पञ्चवाणो रतिसखः पुष्पधन्वा महाधनुः । भ्रामणो भ्रमणश्चैव भ्रम-माणो भ्रमोऽपरः । भ्रान्तश्च भ्रामको भृङ्गो भ्रान्ताचारो भ्रमावहः । मोहनो मोहको मोहो मोहवर्द्धन एव च । मदनो मन्मथश्चैव मातङ्गो भृङ्गनायकः । गायनो गीतिजश्चैव नर्त्तकः खेलकस्तथा । उन्मत्तो मत्तकश्चैव विलासो लोभवर्द्धनः । दाड़िमीकुसुमाभश्च वामार्द्धे शक्तिसंयुतः । सौम्या रक्ताम्बराः सर्वे पुष्पवाणाञ्चकार्मुके । बिभ्राणाः सर्वभूषाढ्याः कामाः पञ्चाशदीरिताः ॥ तच्छक्तिनामानि च तत्रैव ॥ रतिः प्रीतिः कामिनी च मोहिनी कमलप्रिया । विलासिनी कल्पलता श्यामला च शुचिस्मिता । विस्मिताक्षी विशालाक्षी लेलिहाना दिगम्बरी । वामा कुब्जाधरा नित्या कल्याणी मोहिनी तथा । मदना च सुरश्रेष्ठा लापिनी मर्द्दिनी तथा । कलहप्रिया तथै-काक्षी सुमुखी नलिनी ततः । जयिनी पालिनी चैव शिवा

मुग्धा सविभ्रमा। चारुनेत्रा सुलोला च दीर्घजिह्वा रति-
प्रिया। लोलाक्षी शृङ्गिणी चैव पावना मादना तथा। माला
च हंसिनी विश्वतोमुखी नन्दिनी तथा। रमणी च तथा
कान्तिः कलकण्ठी वृकोदरी। मेघश्यामा वृषोन्मत्ता एक-
पञ्चाशदपीरिता:। शक्तयः कुङ्कुमनिभाः सर्वाभरणभूषिताः।
नीलोत्पलकरा ध्येयास्त्रैलोक्याकर्षणक्षमा इति॥ पञ्चाशद्गणेशा-
स्तच्छक्तयश्च तत्रैव॥ विघ्नेशो विघ्नराजश्च विनायकशिवोत्तमौ।
विघ्नकृद्विघ्नकर्त्ता च गणैकद्विमुदन्तकाः। गजवक्त्रनिरञ्जनौ
कपर्दी दीर्घजिह्वकः। शङ्कुकर्णश्च वृषभध्वजश्च गणनायकः।
गजेन्द्रः सूर्य्यकर्णश्च स्यात् त्रिलोचनसंज्ञकः। लम्बोदरमहानन्दौ
चतुर्मूर्त्तिसदाशिवौ। अमोघदुर्मुखौ चैव सुमुखश्च प्रमो-
दकः। एकपादो द्विजिह्वश्च सूरवीरशिवामुखाः। वरदो
वामदेवश्च वक्रतुण्डो द्विरण्डकः। सेनानीर्ग्रामणीर्मत्तो विमत्तो
मत्तवाहनः। जटी मुण्डी तथा खड्गी वरेण्यो वृषकेतनः।
भक्ष्यप्रियो गणेशश्च मेघनायकसंज्ञकः। व्यापी गणेश्वरः प्रोक्ताः
पञ्चाशद्गणपा इमे। तरुणारुणसङ्काशा गजवक्त्रास्त्रिलोचनाः।
पाशाङ्कुशवराभीतिहस्ताः शक्तिसमन्विताः॥ ह्रीः श्रीश्च पुष्टिः
शान्तिश्च क्षान्तिश्चैव सरस्वती। स्वाहा मेधा कान्तिकामिन्यौ
मोहिन्यपि वै नटी। पार्वती ज्वलिनी नन्दा सुयशाः काम-
रूपिणी। उग्रतेजोवती सत्या विघ्नेशानी सुरूपिणी॥
कामदा मदजिह्वा च भूतिः स्याद्भौतिका सिता। रमा च
महिषी प्रोक्ता भञ्जिनी च विकर्णपा। भ्रूकुटिः स्यात्तथा लज्जा
दीर्घघोणा धनुर्द्धरा। यामिनी रात्रिसंज्ञा च कामान्धा च
शशिप्रभा। लोलाक्षी चञ्चला दीप्तिः शुभगा दुर्भगा शिवा।
गर्भा च भगिनी चैव भोगिनी सुभगा मता। कालरात्रिः
कालिका च पञ्चाशच्छक्तयः स्मृताः। सर्वालङ्करणोद्दीप्ताः

प्रियाङ्गस्थाः सुशोभनाः । रक्तोत्पलकरा ध्येया रक्तमाल्याम्बरावृताः । इत्येकोनपञ्चाशद्गणेशध्यानमयः । एकोनपञ्चाशत् क्षेत्रपालाश्च क्षेत्रपालप्रकरणे प्रयोगसारे ॥ भेदा एकोनपञ्चाशत् क्षेत्रपालस्य कीर्त्तिताः । मातृकावीजभेदेन सम्भिन्ना नामभेदतः । अजरश्चापकुम्भश्च इन्द्रस्तुतिस्ततः परम् । इड़ाचारश्चोक्तसंज्ञ उन्माद ऋषिसूदनः । समुक्तो लुप्तकेशश्च क्षेपकश्चैकदंष्ट्रकः । ऐरावतश्चौघवन्धूरोगाश्चीशस्तथैव च । अञ्जनश्चास्त्रवारश्च कवलः खरखानलः । चामुण्डश्चैव घण्टादोज्ञनश्च चण्डवारणः । छटाटोपो जटालाख्यो ऋद्धीवश्च जड़ञ्चरः । टङ्कपाणिस्तथा चान्यष्ठान्त्रवन्धुश्च डामरः । ढक्कावारोणवाणश्च तड़िद्देहः स्थिरस्तथा । दन्तुरो धनदश्चाप्यनत्तिक्रान्तः प्रचण्डकः । फट्कारो वीरसङ्कश्च शृङ्गाख्यो मेघभासुरः । युगान्तो चौद्यवश्चाथ लम्बोष्ठो वसवस्तथा । शुकनन्दः षड़ालाख्यः शुनानाहं ह्वकस्तथा । एते भेदाः समाख्याता मातृकाक्षरयोनिकाः । क्षेत्रपालकथनप्रयोजनमुक्तम् तत्रैव ॥ नामपद्यस्य वर्णानां यो वर्णो मातृकान्तरे । दृश्यते प्रथमं तत्र तत्रायं क्षेत्रपालकः । तत्र तत्र विशिष्टात्मा भेदैरेतै र्व्यवस्थितः । ततो विशिष्टो यष्टव्यः क्षेत्रपालस्तु सर्वतः । क्षेत्रपालमसम्पूज्य यः कर्म कुरुते क्वचित् । तस्य कर्मफलं हन्ति क्षेत्रपालो न संशयः । इति एकोनपञ्चाशत्क्षेत्रपालकथनम् । वैखरीसृष्टिं वक्तुमारभते ॥ शारदायां द्वितीयपटले ॥ ततो व्यक्तिं प्रवक्ष्यामि वर्णानां वदने नृणाम् । प्रेरिता मरुता नित्यं सुषुम्नारन्ध्रनिर्गताः । कण्ठादिकरणैर्वर्णाः क्रमादाविर्भवन्ति ते । नृणां वदने वर्णव्यक्तिं वर्णप्रकाशकारणं वक्ष्यामीत्यन्वयः । ननु । पञ्जरे शुकसारङ्गपतगाः पक्षियोनयः । गृह्णन्ति साधुसंसर्गान्मनाम मङ्गलं महत् । इति रुद्रजामलोत्तरखण्डप्रथमपटलोक्तवचनेन पक्षि-

णामपि वर्णोच्चारणदर्शनात्। महाभारतादावपि हंसका-
कीयोपाख्यानादिना तस्य सुस्पष्टावगमात् पक्षिपठनस्य प्रत्यक्ष-
सिद्धत्वाच्च कथं नृणामित्युक्तमिति चेत् सत्यं प्रायिकत्वेन मनु-
ष्यस्य प्रकरणबललब्धत्वेन वा नृणामित्युक्तं न तु पश्वादि-
व्यावर्त्तनाय। यद्वा नृणामिति बहुवचननिर्देशाद्वर्णोच्चारणा-
र्हगणो लभ्यते अतो न कश्चिद्दोष इति वर्णव्यक्तिप्रकारमाह
प्रेरिता इत्यादि॥ मरुता प्रेरिताः पश्यन्तीस्थानं प्रापिता
मध्यमामुखीकृताः। सुषुम्नारन्ध्रनिर्गताः कण्ठादिकरणैः
क्रमादाविर्भवन्ति इति सम्बन्धः। एकदोच्चारणाभावात् क्रमा-
दित्युक्तं तदुक्तं भर्तृहरिणा॥ आत्मा बुद्ध्या समर्थ्यार्थान् मनो-
युङ्क्ते विवक्षया। मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्।
मारुतस्तूरसि चरन् मन्द्रं जनयति ध्वनिमिति॥ कण्ठादी-
त्यादिशब्देन ताल्वादि॥ तथाच शिक्षासूत्रम्॥ अष्टौ स्थानानि
वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलञ्च दन्ताश्च नासि-
कौष्ठौ च तालु चेति। पश्चाच्छब्दादकावर्णोच्चारणं गुरुतोऽभ्यसे-
दिति वक्ष्यमाणवचनेन मनुष्यस्य वर्णोच्चारणेऽपि गुरुरूपसाधु-
संसर्गः पक्षिणामिव कारणात्मकत्वेनावधार्य्यः। पूर्वस्मिन्
वर्णानां सोमसूर्य्याग्निरूपत्वं सामान्यत उक्तम्। अधुना तद्वि-
शेषयति शारदायाम्। एषु स्वराः स्मृताः सौम्याः स्पर्शाः सौराः
शुभोदयाः। आग्नेया व्यापकाः सर्वे सोमसूर्य्याग्निरूपिणः॥
एषु वर्णेषु॥ स्वराः षोड़श विख्याताः स्पर्शास्ते पञ्चविंशतिः।
तत्त्वात्मानः स्मृताः स्पर्शा मकारः पुरुषो यतः। यस्मान्मकारः
पुरुषः परमात्मा रविस्वरूपस्तस्मात् ककारादिभपर्य्यन्तास्तत्त्वा-
त्मानः प्रकृत्यादिचतुर्विंशतितत्त्वमया इत्यर्थः। अतएव सर्व-
वीजेषु विष्णुरूपमकारयोगात् पुरुषैक्यं तेषामिति मन्तव्यम्।
मकारस्य विन्दुरूपत्वाद्विन्दुः पुमान् रविः प्रोक्त इति वक्ष्य-

मार्णं साधु सङ्गच्छते। सूर्य्यरूपविन्द्वात्मना मकारेण सृज्य-
मानत्वादेते कादयः स्पर्शाः। व्यापका दश ते कामधनधर्म-
प्रदायिनः। एषां दोषदूष्येषु वर्त्तमानत्वाद्व्यापकत्वम्। तत्रा-
ग्नीनामपि सत्त्वादाग्नेया इत्यपि। नृसिंहाख्यकालाग्निरूपच-
कारान्तत्वेन वा आग्नेया इति द्रष्टव्यम्। ते वर्णा यथाक्रमं स्वराः
कामप्रदाः स्पर्शा धनप्रदा व्यापका धर्मप्रदा इत्यर्थः। प्रणवाद्य-
सोत्पत्तिप्रकारो दर्शितः सम्प्रति • हंसतः सर्वाक्षरोत्पत्तिप्रकार-
माह प्रपञ्चसारे तृतीयपटले॥ यथा भवन्ति देहान्तरमी
पञ्चाशदक्षराः। भेदा येन प्रकारेण तथा वक्ष्यामि तत्त्वतः।
समीरिताः समीरेण सुषुम्नारन्ध्रनिर्गताः। व्यक्तिं प्रयान्ति
वदने कण्ठादिस्थानघट्टिताः। उच्चैरुन्मार्गणो वायुरुदात्तं
कुरुते स्वरम्॥ नीचैर्गतेऽनुदात्तञ्च स्वरितं तिर्य्यगागतः।
स्वरितं समाहारम्॥ अर्द्धैकद्वित्रिसंख्याभिर्मात्राभिर्लिपयः क्रमात्।
सव्यञ्जनह्रस्वदीर्घप्लुतसंज्ञा भवन्ति ताः। अकारेकारयोर्यो-
गादेकारो वर्ण इष्यते। तस्यैवाकारयोगेन स्यादैकाराक्षरं तथा।
उकारयोगात्तस्यैव स्यादोकाराह्वयः स्वरः। तस्याकारस्य॥
तस्यैवौकारयोगेन स्यादौकाराह्वयः स्वरः। सन्ध्यक्षराः स्युश्च-
त्वारो मन्त्राः सर्वार्थसाधकाः। ऌवर्णवर्णयोर्व्यक्तिर्न वै सम्यक्
प्रदर्श्यते। विन्दुसर्गात्मनोर्व्यक्तिमनसोरजपा वदेत्। कण्ठात्तु
निःसरन् सर्गः प्रायश्वात्मकतः परः। नश्वरः सर्ग एव स्यात्
सोच्छ्वासः प्राणकस्तु हः॥ सर्गो विसर्ग एव नश्वरो विकृतः।
सोच्छ्वासः कारूपः उच्छ्वासोऽन्तःप्रवेशशाली वायुः स्यादि-
त्यन्वयः। एवं प्राणको वहिर्निर्गमनशाली वायुर्हः स्यात् स
एव उच्छ्वासः सोच्छ्वास इति सन्धिस्तु न विसर्जनीयेति नत्रा
निर्दिष्टत्वात्। सश्वासावुच्छ्वासश्चेति वा। प्राणश्वासौ को वायु-
श्चेति प्राणकः। स सर्गः क्षेपितः कण्ठो वायुना कादिमीर-

येत्। वर्गस्पर्शनमात्रेण कं स्वरस्पर्शनात्तु खम्। स्तोकगम्भीरसंस्पर्शात् पद्यौ ङञ्च वहिर्गतम्। विसर्गस्तालुगः सोष्मा शञ्च वर्गञ्च यं तथा। ऋटुरेफषकारञ्च मूर्द्धगो दन्तगस्तथा। ऌतवर्गलसानोष्ठग्रानुपूपध्मानसंज्ञकान्। दन्तौष्ठाभ्यां वञ्च तत्तत्स्थानगोऽर्णान् समीरयेत्॥ अत एवोक्तं शिक्षासूत्रे॥ अवर्णकवर्गहविसर्ज्जनीयाः कण्ठ्याः॥ इवर्णचवर्गयशा स्तालव्याः॥ ऋवर्णटवर्गरषा मूर्द्धन्याः॥ ऌवर्णतवर्गलसा दन्त्याः॥ उवर्णपवर्गोपध्मनीया ओष्ठ्याः॥ वो दन्तौष्ठ्यः॥ एऐ कण्ठ्यतालव्यौ॥ ओऔ कण्ठ्यौष्ठौ॥ वरदातन्त्रे दशमपटले॥ श्रीशिव उवाच॥ यद्गुह्यं सर्वतन्त्रेषु वर्णोच्चारविधिं शिवे!। तव स्नेहान्महेशानि! तदद्य कथयामि ते। पञ्चाशन्मातृकावर्णोच्चारणं गुरुतोऽभ्यसेत्। अकुचुटुतुपुयुशु अष्टौ वर्गाः प्रकीर्त्तिताः। उकारः पञ्चपञ्चवर्णविभागार्थः। अकुहाःकण्ठतो ज्ञेयास्तालुतश्चुयशाः स्मृताः॥ ऋटुरषास्तु मूर्द्धन्या दन्त्या ऌतुलसा मताः॥ उपराश्चोष्ठसम्भूताः स्थानानि कथितानि ते। विशेषं कथयाम्यद्य प्रोच्चार्य्याः कण्ठतः स्वराः। ऋद्वयं जिह्वाया मूर्द्ध्ना ऌद्वयं जिह्वदन्तजम्। मुखस्थानाद्धलो वाच्याः खकारः कण्ठघातजः। व्यञ्जनद्वयसंयोगे भवेत् पूर्वस्वरो गुरुः। पदान्तादिमवर्णस्य संयोगेषु श्रुतिर्द्वयोः। अपदान्तादिसंयोगे यॄरन्यत्र तथेष्यते। यॄः श्रुतिस्तु तिरोभूय स्वरवत् श्रुतितां व्रजेत्। त्रियावीजे शकारस्य छश्रुतिः परमेश्वरि!। छश्रुतिश्च वादिभगौ तथादिस्थे तु चश्रुतिः॥ सहस इत्यादौ नमस्तस्मै आस्था इत्यादौ च॥ रेफादिके तदन्ते वा हकारे समवाच्यता। वर्हङ्गद इत्यादौ। किन्तु वैजात्यमाश्रित्य स्फुटं नानास्य वाच्यता। चु तुर्य्यध्वनिमाप्नोति यादिस्थे परमेश्वरि!। वाह्य इत्यादौ। पु चतुर्थध्वनिं याति वादिस्थे तु

विशेषतः। आह्वानमित्यादौ। लादिस्थेऽप्यथ नादिस्थे वैजात्यं स्वस्ववाच्यता। प्रह्लाद मह्लाय इत्यादौ। मादिस्थे मे च मस्यापि नासिकामूलवाच्यता। ङञणनमा विन्दुनासिकामूलजाः स्मृताः। यकारस्तु तृतीयत्वं पदादौ सर्वदा व्रजेत्। केयूरादावपि तथा अन्यत्र कण्ठमात्रगः॥ नादिस्थशसयोश्छत्वं संयोगान्तवर्गके। प्रश्न स्नान इत्यादौ। वर्णोत्तरेषु डढयोर्वङ्कजिह्वादिवाच्यता। वैजात्यमपि तत्रास्ति गुरोरेव समभ्यसेत्। आदिरेफस्तु सम्प्रोक्तो द्विरेभ्यो व्रजेद्दताः। एवं ज्ञात्वा महेशानि! पठेत् स्तोत्रं जपेन्मनुम्। कवचञ्च महेशानि! नान्यथा फलमाप्नुयात्। यत्नेन परमेशानि! स्तोत्रं वा संहितां पठेत्। तत्र तत्र परं यत्नात् समासं कीर्त्तयेद्बुधः॥ इति वर्णोच्चारणप्रकारणकथनम्॥ शारदायाम्॥ ह्रस्वः स्वरेषु पूर्वोक्तः परो दीर्घः क्रमादिमे। शिवशक्तिमयास्ते स्युर्विन्दुसर्गावसानकाः। विन्दुः पुमान् रविः प्रोक्तः सर्गः शक्तिर्निशाकरः। एकारौकारयोर्दीर्घत्वेऽप्यत्र पारिभाषिकं ह्रस्वत्वम्। इमे ह्रस्वदीर्घाः क्रमात् शिवशक्तिमया ह्रस्वा अ इ उ ऋ ऌ ए ओ अं एते शिवमयाः पुंरूपाश्च इत्यर्थः। आ ई ऊ ॠ ॡ ऐ औ अः एते दीर्घाः शक्तिमयाः स्त्रीरूपाश्चेति। विन्दुविसर्गौ पुरुषप्रकृतिरूपौ पृथग्भूतावेताविति विवक्षया ते विन्दुसर्गावसानकाः स्युरित्यन्वयः। ते ह्रस्वा अन्ते विन्दुयुक्ता दीर्घाश्च अन्ते विसर्गयुक्ता ह्रस्वेषु विन्दुरष्टमो दीर्घेषु विसर्गोऽष्टम इत्यर्थः। विसर्गो निशाकर इत्युक्ते तद्दितरस्वराणां तत्कलारूपतिथ्यात्मकत्वम्। अत एव स्वराः सौम्या इत्युक्तम्। स्वराणां मध्यगं यत्तु तच्चतुष्कं नपुंसकम्। विना स्वरैस्तु नान्येषां जायते व्यक्तिरञ्जसा। शिवशक्तिमयान् प्राहुस्तस्माद्वर्णान् मनीषिणः। अयमभिप्रायः स्वराणां शक्तिमयत्वं पूर्वमुक्तं स्वरं विना

व्यञ्जनानामुच्चारणस्याशक्यत्वात् स्वरसहितोच्चारणे शिवशक्तिमयत्वमिति। शारदायाम्। कारणात् पञ्चभूतानामुद्भूता मातृका यतः। ततो भूतात्मका वर्णाः पञ्चपञ्चविभागतः॥ शिवशक्तिसमवायादिन्दोः कारणाद् यतो मातृका उद्भूतास्ततः कारणात् पञ्चपञ्चविभागतो वर्णाः पञ्चभूतात्मका ज्ञेया इत्यन्वयः। अकारादिक्षकारान्तवर्णसमुदायस्य मातृका इति संज्ञा। उद्दिष्टं स्पष्टयति। वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः क्रमात्। पञ्च ह्रस्वाः पञ्च दीर्घा विन्द्वन्ताः सन्धिसम्भवाः। पञ्चशः कादयो यरलवहान्ताः समीरिताः। वाय्वाकाशयोराद्यन्तेन निर्दिष्टत्वादुत्क्रमोक्तिः पञ्चीकरणप्रक्रियाया मुख्यत्वद्योतनाय। अन्यत् सर्वं सुगमम्। ननु कथमत्र विसर्गो न गणित इति चेदुच्यते मूलाधारात् सञ्जातविवक्षोत्पन्नप्राणपवनप्रेरितः स्थानान्तरमप्राप्य कण्ठादेव निःसरन् प्रकृत्यात्मकसर्गोऽत्र भूतेषु न गणितः॥

इति श्रीप्राणतोषिण्यां प्रथमकाण्डे वर्णोत्पत्तिक्रमकथनं नाम षष्ठः परिच्छेदः॥ ६॥

एवं वर्णेषु प्रादुर्भूतेषु कदाचित् शब्दात्मकेषु पुरुषाणां भ्रान्तिरपि सम्भवतीत्यतस्तेषामीश्वरेण पत्रारूढ़मूर्त्तिः कल्पिता॥ तदुक्तं ज्योतिस्तत्त्वे वृहस्पतिना॥ षाण्मासिकेऽपि समये भ्रान्तिः सञ्जायते यतः। धात्राक्षराणि सृष्टानि पत्रारूढ़ान्यतः पुरा इति। तेषां लेखनप्रकारस्तु वर्णोद्धारतन्त्रे प्रथमपटले भगवतीप्रश्नानन्तरं शिव उवाच॥ वर्णोद्धाराख्यतन्त्रे तु कथयामि शृणुष्व मे। पञ्चाशन्मातृका नित्या साक्षाद् ब्रह्मस्वरूपिणी। इत्युपक्रम्य सर्ववर्णलेखनप्रकारं स एवोपदर्शितवान् स प्रकारोऽग्रे स्फुटीभविष्यति। कामधेनुतन्त्रे प्रथमपटले॥ शृणु तत्त्वमकारस्य अतिगोप्यं वरानने!। शर-

चन्द्रप्रतीकाशं पञ्चकोणमयं सदा। पञ्चदेवमयं वर्णं शक्तिद्वय-समन्वितम्। निर्गुणं सगुणोपेतं स्वयं कैवल्यमूर्त्तिमत्। विन्दु-द्वयमयं वर्णं स्वयं प्रकृतिरूपिणी। वर्णोद्धारतन्त्रे। दक्षतः कुण्डली भूत्वा कुञ्चिता वामतो गता। ततोर्द्धसङ्गता रेखा दक्षोर्द्धा तासु शङ्करः। विधिर्नारायणश्चैव सन्तिष्ठेत् क्रमतः सदा। अर्द्धमात्रा शक्तिरूपा ध्यानमस्य च कथ्यते। अ॥ काम-धेनुतन्त्रे द्वितीयपटले॥ आकारं परमाश्चर्य्यं शङ्खज्योतिर्मयं प्रिये!। ब्रह्मविष्णुमयं वर्णं तथा रुद्रमयं प्रिये!। पञ्चप्राणमयं वर्णं स्वयं परमकुण्डली॥ वर्णोद्धारतन्त्रे॥ अकाररूपमा-साद्य दक्षकोड़ायता त्वधः। ब्रह्मादयस्तथा शक्तिस्तासु तिष्ठन्ति नित्यशः। आ। कामधेनुतन्त्रे॥ इकारं परमानन्दं सुगन्ध-कुङ्कुमच्छवि। हरिब्रह्ममयं वर्णं सदा रुद्रमयं प्रिये!। सदा-शक्तिमयं देवि! गुरुब्रह्ममयं तथा। सदाशिवमयं वर्णं परं-ब्रह्मसमन्वितम्॥ वर्णोद्धारतन्त्रे॥ ऊर्द्धाधः कुञ्चिता मध्ये रेखा तत्सङ्गता भवेत्। लक्ष्मीर्वाणी तथेन्द्राणी क्रमात्तास्वेव संव-सेत्। शीर्षाधः कुञ्चिता रेखा दक्षोर्द्धा कामरूपिणी। मात्रा शक्तिः कोणयुता ध्यानमस्य प्रवक्ष्यते॥ इ॥ कामधेनुतन्त्रे॥ ईकारं परमेशानि! स्वयं परमकुण्डली। ब्रह्मविष्णुमयं वर्णं तथा रुद्रमयं सदा। पञ्चदेवमयं वर्णं पीतविद्युल्लताकृतिः। चतुर्ज्ञानमयं वर्णं पञ्चप्राणमयं सदा। वर्णोद्धारतन्त्रे॥ ऊर्द्धाधः कुञ्चिता मध्ये त्रिकोणाधोगता पुनः। अधोगता कोणशीर्षा कुञ्चिता दक्षतः शुभा। शीर्षाद्दक्षे कोणयुता कुञ्चितोर्द्धगता पुनः। चन्द्रसूर्य्याग्निरूपा सा मात्राशक्तिः प्रकीर्त्तिता॥ ई॥ कामधेनुतन्त्रे॥ उकारं परमेशानि! अधः कुण्डलिनी स्वयम्। पीतचम्पकसङ्काशं पञ्चदेवमयं सदा। पञ्चप्राणमयं देवि! चतु-र्वर्गप्रदायकम्। वर्णोद्धारे॥ ऊर्द्धाधोमध्यतः कुब्जा रेखा वाम-

गता शुभा। तिष्ठन्ति वायुवह्नीन्द्राः शक्तिर्मात्रा परा स्मृता॥ उ॥ कामधेनुतन्त्रे॥ शङ्खकुन्दसमाभास उकारः परकुण्डली। पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा। पञ्चप्राणयुतं वर्णं तथा त्रय-गुणात्मकम्। विन्दुत्रययुतं वर्णं पीतविद्युल्लताकृति। धर्मार्थ-काममोक्षञ्च सदा सुखप्रदायकम्॥ वर्णोद्धारतन्त्रे॥ तद्रूपा-धोगता रेखा कुञ्जिता वामतः शुभा। तद्रूपा पूर्वोक्तोकाररूपा। तिष्ठन्ति तासु रेखासु यमाग्निवरुणाः क्रमात्। अधोर्द्धगामिनी मात्रा लक्ष्मीर्वाणी च सा स्मृता॥ ऊ॥ कामधेनौ॥ ऋकारः परमेशानि! कुण्डली मूर्त्तिमान् स्वयम्। अत्र ब्रह्मा च विष्णुश्च रुद्रश्चैव वरानने!। सदाशिवयुतं वर्णं सदा ईश्वरसंयुतम्। वर्णोद्धारतन्त्रे। ऊर्द्धा दक्षगता वक्रा त्रिकोणा वामतस्ततः। पुनस्त्वधोदक्षगता मात्राशक्तिः परा स्मृता। मात्रासु ब्रह्मविष्णी-शास्तिष्ठन्ति क्रमतः परा॥ ऋ॥ वर्णोद्धारतन्त्रे॥ तद्रूपाधोगता दक्षा वामतः कुञ्चिता त्वधः। पुनर्दक्षगता रेखा तासु ब्रह्मेश-विष्णवः। मात्राशक्तिः परा ज्ञेया ध्यानमस्य प्रवक्ष्यते॥ ॠ॥ कामधेनुतन्त्रे॥ ऌकारं चञ्चलापाङ्गि! कुण्डली परदेवता। तत्र ब्रह्मादयः सर्वे तिष्ठन्ति संततं प्रिये!। पञ्चदेवमयं वर्णं चतुर्ज्ञानमयं सदा। पञ्चप्राणयुतं वर्णं तथा गुणत्रयात्मकम्। विन्दुत्रयात्मकं वर्णं पीतविद्युल्लताकृति॥ वर्णोद्धारे॥ रेखाधः कुण्डली वक्रा दक्षतो वामतो गता। वह्नीशवायवस्तासु नित्यं सन्ति च नित्यशः॥ ऌ॥ कामधेनुतन्त्रे॥ ॡकारं परमेशानि! पूर्णचन्द्रसमप्रभम्। पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं सदा। गुण-त्रयात्मकं वर्णं तथा विन्दुत्रयात्मकम्। चतुर्वर्गमयं देवि! स्वयं परमकुण्डली॥ वर्णोद्धारतन्त्रे॥ तत्क्रोड़तुल्यरूपा च रेखा सा वैष्णवी स्मृता। तासु बध्या सुरेशानि! दुर्गा वाणी सर-स्वती॥ ॡ॥ कामधेनुतन्त्रे॥ एकारं परमं दिव्यं ब्रह्मविष्णु-

शिवात्मकम्। वह्निनीकुसुमप्रख्यं पञ्चदेवमयं सदा। पञ्चप्राणा-त्मकं वर्णं तथा विलशयात्मकम्। चतुर्वर्गमयं देवि! स्वयं परम-कुण्डली। वर्णोद्धारतन्त्रे। कुञ्चिता वामतो रेखा दक्षकोणा-यता त्वधः। पुनर्वामगता सैव तासु वह्नीशवायवः॥ ए॥ काम-धेनुतन्त्रे षष्ठपटले॥ ऐकारं परमं दिव्यं महाकुण्डलिनी स्वयम्। कोटिचन्द्रप्रतीकाशं पञ्चप्राणमयं सदा। ब्रह्मविष्णु-मयं वर्णं तथा रुद्रमयं प्रिये!। सदाशिवमयं वर्णं विन्दुत्रय-समन्वितम्। वर्णोद्धारतन्त्रे॥ एकाररूपमध्ये तु किञ्चिद्दक्षे तदोर्द्ध्वतः। चन्द्रेन्द्रभानवस्तासु मात्राशक्तिः क्रमात् स्मृताः। त्रिधा शक्तिमयी पूर्वा दुर्गा वाणी सरस्वती॥ ऐ॥ कामधेनु-तन्त्रे॥ एतद्वर्णं महेशानि! स्वयं परमकुण्डली॥ वर्णोद्धार-तन्त्रे॥ वामतः कुण्डली भूत्वा दक्षाद्मध्ये तु कुञ्चिता। किञ्चि-द्दक्षगता या तु कुञ्चिता वामतस्त्वधः। ब्रह्मेशविष्णवस्तासु मात्रा तु ब्रह्मरूपिणी। शक्तिश्च परमा सैव ध्यानमस्य प्रव-क्ष्यते॥ ओ॥ कामधेनुतन्त्रे॥ रक्तविद्युल्लताकारमोकारं कुण्डली स्वयम्॥ स्वयं ब्रह्मादयस्तत्र तिष्ठन्ति सततं प्रिये!। पञ्चप्राणमयं वर्णं सदाशिवमयं सदा। सदा ईश्वरसंयुक्तं चतु-र्वर्गप्रदायकम्॥ वर्णोद्धारतन्त्रे॥ ओकारमध्यदक्षे तु गता तूर्द्ध्व-गतायता। किञ्चित् सा वामतो वक्रा तासु ब्रह्मेशविष्णवः। शक्तिमध्यगता रेखा ध्यानमस्य च कथ्यते॥ औ॥ कामधेनु-तन्त्रे॥ अकारं विन्दुसंयुक्तं पीतविद्युत्समप्रभम्। पञ्चप्राणा-त्मकं वर्णं ब्रह्मादिदेवतामयम्। सर्वज्ञानमयं वर्णं विन्दुत्रय-समन्वितम्। शक्तित्रयमयं वर्णं स्वयं परमकुण्डली॥ वर्णो-द्धारतन्त्रे॥ अकाररूपशीर्षे तु दक्षिणे विन्दुरूपिणी। ब्रह्मा विष्णुश्च रुद्रश्च क्रमशस्तासु तिष्ठति। या तु विन्दुमयी रेखा सैवाद्या शक्तिरीरिता॥ अं॥ कामधेनुतन्त्रे॥ अःकारं परमे-

शानि! रक्तविद्युत्प्रभामयम्। पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा॥ सर्वज्ञानमयं वर्णमात्मादितत्त्वसंयुतम्। विन्दुत्रयमयं वर्णं शक्तित्रयमयं सदा॥ वर्णोद्धारे॥ आकाररूपद्वये तु द्विविन्दुरध ऊर्द्धतः। ब्रह्मेशविष्णवस्तास्तु मात्राशक्तिः समीरिता। विन्दुद्वयान्विता रेखा सैवाद्या शक्तिरीरिता। अः॥ वर्णोद्धारे॥ वामरेखा भवेद् ब्रह्मा विष्णुर्दक्षिणरेखिका। अधोरेखा भवेद्रुद्रो मात्रा साक्षात् सरस्वती॥ कुण्डली चाङ्कुशाकारा मध्यशून्यं सदाशिवः॥ कदम्बगोलकाकारं ककारं भावयेत् सुधीः॥ क॥ कामधेनुतन्त्रे तृतीयपटले॥ वामरेखा भवेद् ब्रह्मा विष्णुर्दक्षिणरेखिका। अधोरेखा भवेद्रुद्रो मात्रा साक्षात् सरस्वती। कुण्डली चाङ्कुशाकारा मध्यशून्यं सदाशिवः। जवाकुसुमसङ्काशा वामरेखा वरानने!। शरच्चन्द्रप्रतीकाशा दक्षरेखा महेश्वरि!। अधोरेखा वरारोहे! महामरकतद्युतिः। शङ्खकुन्दसमा कीर्त्तिर्मात्रा साक्षात् सरस्वती। कुण्डली चाङ्कुशाकारा कोटिविद्युल्लताकृतिः। कोटिचन्द्रप्रतीकाशो मध्ये शून्यः सदाशिवः। शून्यगर्भस्थिता काली कैवल्यपददायिनी। अर्थश्च जायते देवि! तथा धर्मश्च नान्यथा। ककारः सर्ववर्णानां मूलप्रकृतिरेव च। कामिनी या महेशानि! स्वयं प्रकृतिसुन्दरी। माता सा सर्वदेवानां कैवल्यपददायिनी। ऊर्द्धकोणे स्थिता वामा ब्रह्मशक्तिरितीरिता। वामकोणे स्थिता ज्येष्ठा विष्णुशक्तिरितीरिता। दक्षकोणस्थिता रौद्री संहाररूपिणी। ज्ञानात्मा सा तु चार्वङ्गी कुलचतुष्टयात्मकम्॥ इच्छाशक्तिर्भवेद् ब्रह्मा विष्णुश्च ज्ञानशक्तिमान्। क्रियाशक्तिर्भवेद्रुद्रः सर्वप्रकृतिमूर्त्तिमान्। आत्मविद्याशिवैस्तत्त्वैः सदा मात्रा प्रतिष्ठिता। आसनं त्रिपुरादेव्याः ककारः पञ्चदैवतः। ईश्वरो यस्तु देवेशि! त्रिकोणे तस्य संस्थितिः। त्रिकोणमेतत् कथितं योनिमण्डल-

मुत्तमम्। कैवल्यं प्रपदे यस्याः कामिनी सा प्रकीर्त्तिता॥ क॥ वर्णोद्धारतन्त्रे॥ शिवरूपा वामरेखा वह्निरूपा च सा स्मृता॥ ख॥ वर्णोद्धारतन्त्रे॥ अग्राकुञ्चितरेखा या गणेशी सा प्रकीर्त्तिता। ततो दक्षगता या तु कमला तत्र संस्थिता। अधोगतागता या तु तस्यामीशः सदा वसेत्। अधोमुखेन गता पुनरूर्द्ध्वमुखेनागतेत्यर्थः॥ ग॥ वर्णोद्धारतन्त्रे॥ सृष्टिरूपा वामरेखा किञ्चिदाकुञ्चिता ततः। कुण्डलीरूपमास्थाय ततोऽधोगत्य दक्षतः। अत ऊर्द्ध्वं गता रेखा शम्भुर्नारायणस्तयोः। ब्रह्मस्वरूपिणी देवि! मात्राशक्तिः प्रकीर्त्तिता॥ घ॥ वर्णोद्धारतन्त्रे॥ ऊर्द्ध्वाधः क्रमतो रेखा किञ्चिदाकुञ्चिता ततः। अधोगता कुण्डली तु मात्राशक्तिः स्वरूपिणी। रेखात्रयेषु ब्रह्मेशविष्णवः सन्ति सर्व्वदा॥ ङ॥ कामधेनुतन्त्रे॥ चवर्णं शृणु सुश्रोणि! चतुर्वर्गप्रदायकम्। कुण्डलीसहितं देवि! स्वयं परमकुण्डली॥ स ततः कुण्डलयुतं पञ्चदेवमयं सदा। पञ्चप्राणमयं वर्णं पञ्चप्राणात्मकं सदा। त्रिशक्तिसहितं वर्णं त्रिविन्दुसहितं प्रिये!॥ वर्णोद्धारतन्त्रे॥ वार्त्ताकुवर्त्तुलाकार ऊर्द्ध्वाधः क्रमतो गतः। रेखात्रयेषु चन्द्राग्निसूर्य्यास्तिष्ठन्ति नित्यशः। शक्तिर्मात्रा तु विज्ञेया ध्यानमस्य प्रवक्ष्यते॥ च॥ वर्णोद्धारतन्त्रे॥ ऊर्द्ध्वादधोगता रेखा कुञ्चिता कुण्डली ततः॥ पुनश्चाधोगता तासु सन्ति ब्रह्मेशविष्णवः॥ छ॥ कामधेनुतन्त्रे॥ जकारं परमेशानि! या स्वयं मध्यकुण्डली। शरच्चन्द्रप्रतीकाशं सदा त्रिगुणसंयुतम्। पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा। त्रिशक्तिसहितं वर्णं द्विविन्दुसहितं प्रिये!। वर्णोद्धारतन्त्रे॥ ऊर्द्ध्वाधः कुञ्चिता रेखा तासु ब्रह्मेशविष्णवः। वाग्देवी कमला नित्या द्विधा माया प्रकीर्त्तिता॥ ज॥ कामधेनुतन्त्रे॥ झकारं परमेशानि! कुण्डलीमोक्षरूपिणी। रक्तविद्युल्लताकारं सदा त्रिगुणसंस्थितम्। पञ्च-

देवमयं वर्णं पञ्चप्राणात्मकं सदा। त्रिविन्दुसहितं वर्णं त्रिशक्तिसहितं सदा॥ वर्णोद्धारतन्त्रे॥ त्रिकोणकुण्डलीरूपा वामदक्षिणयोगतः। क्रमशस्तासु तिष्ठन्ति चन्द्रसूर्य्याग्नयः प्रिये!। तत्र षोड़शधा मात्रा शक्तिर्ब्रह्मस्वरूपिणी। ऊर्द्ध्वमात्रा तथेन्द्राणी मध्ये नारायणी स्मृता॥ भ॥ कामधेनुतन्त्रे॥ सदा ईश्वरसंयुक्तं जकारं शृणु सुन्दरि!। रक्तविद्युल्लताकारं या स्वयं परकुण्डली। पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा। त्रिशक्तिसहितं वर्णं त्रिविन्दुसहितं सदा॥ वर्णोद्धारतन्त्रे॥ कुण्डलीरूपमास्थाय दक्षतो वामतस्ततः। ऋजुश्चाधोगता मात्रा वामतः कुञ्चिता पुनः। तिष्ठन्ति तासु नित्यासु सूर्य्येन्द्रवरुणाः सदा। कुण्डलीद्वयरूपा तु या मात्रा मध्यतः स्थिता। महाशक्तिस्वरूपा सा ध्यानमस्य प्रवक्ष्यते॥ ञ॥ कामधेनुतन्त्रे॥ टकारं परमेशानि! स्वयं परमकुण्डली। कोटिविद्युल्लताकारं पञ्चदेवमयं सदा॥ पञ्चप्राणयुतं वर्णं गुणत्रयसमन्वितम्। त्रिगुणीसहितं वर्णं द्विविन्दुसहितं सदा॥ वर्णोद्धारतन्त्रे॥ ऊर्द्ध्वाधः क्रमतो रेखा कुण्डलीरूपतस्त्वधः। तिष्ठन्ति तासु नित्यासु कुवेरयमवायवः। मात्रा कोणगता चोर्द्ध्वा तत ऊर्द्ध्वगता तु सा। या नित्या परमा शक्तिश्चतुर्वर्गप्रदायिनी॥ ट॥ कामधेनुतन्त्रे॥ ठकारं चञ्चलापाङ्गि! कुण्डली मोक्षरूपिणी। पीतविद्युल्लताकारं सदा त्रिगुणसंयुतम्। पञ्चदेवात्मकं वर्णं त्रिशक्तिसहितं सदा॥ वर्णोद्धारतन्त्रे॥ वात्ताकुवर्त्तुलाकारा रेखाधिष्ठितदेवताः। तिष्ठन्ति क्रमतो नित्यं चन्द्रसूर्य्याग्नयः प्रिये!। मात्राहीनस्तूर्द्ध्वशिखष्ठकारः परमेश्वरि!॥ ठ॥ वर्णोद्धारतन्त्रे॥ ऊर्द्ध्वाधः क्रमतो रेखा मध्ये त्वाकुञ्चिता तथा। लक्ष्मीर्वाणी भवानी च क्रमशस्तत्र संस्थिता। ब्रह्मरूपा तथा मात्रा महाशक्तिः प्रकीर्त्तिता॥ ड॥ वर्णोद्धरन्त्रे॥ ऊर्द्ध्वाधः

क्रमतो रेखा वामदक्षिणतो गता। ततः सा कुण्डलीरूपा विष्णुीशब्रह्मरूपिणी। महाशक्तिमयी मात्रा ध्यानमस्य प्रवच्यते॥ ढ॥ कामधेनुतन्त्रे॥ णकारं परमेशानि! या स्वयं परकुण्डली। पीतविद्युल्लताकारं पञ्चदेवमयं सदा। पञ्चप्राणमयं देवि! सदा त्रिगुणसंयुतम्। आत्मादितत्त्वसंयुतं महामोक्षप्रदायकम्। वर्णोद्धारतन्त्रे॥ कुण्डलीत्वगता रेखा मध्यतस्वत ऊर्द्ध्वतः। वामादधोगता सैव पुनरूर्द्ध्वं गता प्रिये!। ब्रह्मेशविष्णुरूपा सा चतुर्वर्गफलप्रदा॥ ण॥ कामधेनुतन्त्रे पञ्चमपटले॥ महादेव उवाच॥ तकारं चञ्चलापाङ्गि! स्वयं परमकुण्डली। पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं तथा। त्रिशक्तिसहितं वर्णं आत्मादितत्त्वसंयुतम्। त्रिविन्दुसहितं वर्णं पीतविद्युल्लमप्रभम्॥ वर्णोद्धारतन्त्रे॥ आदौ विन्दुस्ततो मध्ये कुण्डलीत्वमवाप्य सा। दक्षाद्वामगता नित्या ब्रह्मविष्णुीशरूपिणी॥ त॥ कामधेनुतन्त्रे॥ थकारं चञ्चलापाङ्गि! कुण्डली मोक्षरूपिणी। त्रिशक्तिसहितं वर्णं त्रिविन्दुसहितं सदा॥ वर्णोद्धारतन्त्रे॥ कुञ्चिता कुण्डली भूत्वा वामादृक्षिणतस्ततः। वामतः कुञ्चिता भूत्वा दक्षाधो दक्षतो गता। ऊर्द्ध्वं ऋज्वायता रेखा सुरा गङ्गादयः क्रमात्। वाणी भवानी लक्ष्मीश्च ध्यानमस्य प्रवच्यते॥ थ॥ कामधेनुतन्त्रे॥ दकारं शृणु चार्वङ्गि! चतुर्वर्गप्रदायकम्॥ पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं सदा॥ द॥ वर्णोद्धारतन्त्रे॥ त्रिकोणरूपरेखायां त्रयो देवा वसन्ति च। विश्वेश्वरी विश्वमाता वामतः स्कन्धतः स्थिता॥ ध॥ कामधेनुतन्त्रे। नकारं शृणु चार्वङ्गि! रक्तविद्युल्लताकृति। पञ्चदेवमयं वर्णं स्वयं परमकुण्डली। पञ्चप्राणात्मकं वर्णं हृदि भावय पार्वति!। वर्णोद्धारतन्त्रे॥ वामतः कुण्डली रेखा ऊर्द्ध्वाधः क्रमतः स्थिता। चन्द्रसूर्य्याग्निरूपा सा मात्रा वाणी प्रकीर्त्तिता।

॥ न ॥ कामधेनुतन्त्रे ॥ अतः परं प्रवक्ष्यामि पकाराक्षरम-
व्ययम्। चतुर्वर्गप्रदं वर्णं शरच्चन्द्रमयप्रभम्। पञ्चदेवमयं वर्णं
स्वयं परमकुण्डली। पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा।
त्रिगुणीसहितं वर्णं आत्मादितत्त्वसंयुतम्। महामोक्षप्रदं वर्णं
हृदि भावय पार्वति!। वर्णोद्धारतन्त्रे ॥ कुञ्चिता वामरेखायाः
कोणाद्दक्षिणतोऽपरा। कुञ्चिता सापि विज्ञेया मात्रा वामो-
न्नता तथा। शम्भुर्ब्रह्मा भगवती क्रमशस्तासु तिष्ठति ॥ प ॥
कामधेनुतन्त्रे ॥ फकारं शृणु चार्वङ्गि! रक्तविद्युल्लतासमम्।
चतुर्वर्गप्रदं वर्णं पञ्चदेवमयं सदा। पञ्चप्राणमयं वर्णं सदा
त्रिगुणसंयुतम्। आत्मादितत्त्वसंयुक्तं त्रिविन्दुसहितं सदा।
वर्णोद्धारतन्त्रे ॥ वक्रा वामगता रेखा ततोऽधः सङ्गता भवेत्।
तस्मादूर्द्ध्वं गता भूत्वा दक्षमारभ्य कुण्डली। ब्रह्मा रुद्रश्च विष्णुश्च
कुण्डली ब्रह्मरूपिणी। मात्रा वामाद्दक्षिणतः क्रमशः शक्ति-
रीरिता ॥ फ ॥ कामधेनुतन्त्रे। बकारं शृणु चार्वङ्गि! चतुर्वर्ग-
प्रदायकम्। शरच्चन्द्रप्रतीकाशं पञ्चदेवमयं सदा। पञ्चप्राणात्मकं
वर्णं त्रिविन्दुसहितं सदा॥ वर्णोद्धारतन्त्रे ॥ त्रिकोणरूपिणी
रेखा विष्णीशब्रह्मरूपिणी। मात्राशक्तिः परा ज्ञेया ध्यानमस्य
प्रवक्ष्यते ॥ ब ॥ कामधेनुतन्त्रे ॥ भकारं शृणु चार्वङ्गि! स्वयं
परमकुण्डली। महामोक्षप्रदं वर्णं तरुणादित्यसम्प्रभम्। पञ्च-
प्राणमयं वर्णं पञ्चदेवमयं सदा। वर्णोद्धारतन्त्रे ॥ ऊर्द्ध्वाधः
क्रमतो रेखा वामे वक्रा तु कुण्डली। पुनश्चाधोगता सैव अत
ऊर्द्ध्वगता पुनः। ब्रह्मा शम्भुश्च विष्णुश्च क्रमतस्तासु तिष्ठति ॥
भ ॥ कामधेनुतन्त्रे ॥ मकारं शृणु चार्वङ्गि! स्वयं परमकु-
ण्डली। तरुणादित्यसङ्काशं चतुर्वर्गप्रदायकम् ॥ पञ्चदेवमयं वर्णं
पञ्चप्राणमयं सदा ॥ वर्णोद्धारतन्त्रे॥ ऊर्द्ध्वाधः क्रमतो रेखा
चतुष्कोणमयी शुभा। नारायणेशविधयस्तासु तिष्ठन्ति नि-

त्यम:। मात्रा कुण्डलिनी ज्ञेया ध्यानमस्य प्रवच्यते॥ म॥ कामधेनुतन्त्रे॥ यकारं शृणु चार्वङ्गि! चतुर्वर्गमयं सदा। पलालधूमसङ्काशं स्वयं परमकुण्डली। पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा॥ वर्णोद्धारतन्त्रे॥ ऊर्द्धाध: क्रमतो रेखा त्रिकोणाधोगता हि सा। विधिरीश: केशवश्च तासु तिष्ठन्ति नित्यश:। ऊर्द्धंस्थिता तु या मात्रा सा शक्ति: परिकीर्त्तिता। तस्य मध्यगता रेखा वह्निरूपा हि सा स्मृता। निर्गुणोऽसौ सदा वर्णो न कदाचिद् गुणी भवेत्॥ य॥ कामधेनुतन्त्रे षष्ठपटले॥ रेफञ्च चञ्चलापाङ्गि! कुण्डलीद्वयसंयुतम्। रक्तविद्युल्लताकारं पञ्चदेवात्मकं सदा। पञ्चप्राणमयं वर्णं त्रिविन्दुसहितं सदा। वर्णोद्धारतन्त्रे॥ दक्षत: कुण्डली रेखा वामाद्दक्षगताप्यध:। पुनर्दक्षगता रेखा ततोऽधोगत्य चोर्द्धत:। भवानी शङ्करो वह्निस्तासु तिष्ठन्ति नित्यश:। अर्द्धमात्रा ब्रह्मरूपा महाशक्ति: प्रकीर्त्तिता॥ र॥ कामधेनुतन्त्रे॥ लकारं चञ्चलापाङ्गि! कुण्डलीत्रयसंयुतम्। पीतविद्युल्लताकारं सर्वरत्नप्रदायकम्। पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा। त्रिशक्तिसहितं वर्णं त्रिविन्दुसहितं सदा। आत्मादितत्त्वसहितं हृदि भावय पार्वति!। वर्णोद्धारतन्त्रे॥ कुण्डलीत्रयसंयुक्ता वामाद्दक्षगता त्वध:। पुनरूर्द्धगता रेखा तासु नारायण: शिव:। ब्रह्मशक्तिश्च सन्तिष्ठेद्ध्यानमस्य प्रवच्यते॥ ल॥ कामधेनुतन्त्रे॥ वकारं चञ्चलापाङ्गि! कुण्डली मोक्षमव्ययम्। पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा। त्रिविन्दुसहितं वर्णमात्मादितत्त्वसंयुतम्। पञ्चदेवमयं वर्णं पीतविद्युल्लतामयम्। चतुर्वर्गप्रदं वर्णं सर्वसिद्धिप्रदायकम्। त्रिशक्तिसहितं देवि! त्रिविन्दुसहितं सदा॥ वर्णोद्धारतन्त्रे॥ कोणत्रययुता रेखा ब्रह्मविष्णुशिवात्मिका। मायाशक्ति: परा नित्या ध्यानमस्य प्रवच्यते॥ व॥ शकारं परमे-

ध्यानि ! शृणु वर्णं शुचिस्मिते !। रक्तवर्णप्रभाकारं स्वयं परम-कुण्डली। चतुर्वर्गप्रदं देवि ! शकारं ब्रह्मविग्रहम्। पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं प्रिये !। रजःसत्त्वतमोयुक्तं त्रिविन्दुसहितं सदा। त्रिशक्तिसहितं वर्णमात्मादितत्त्वसंयुतम्॥ वर्णोद्धारे॥ चतुष्कोणात्मिका रेखा वामदक्षिणतः क्रमात्। वह्नीन्द्रविष्णव-स्तासु तिष्ठन्ति क्रमतः सदा। ऊर्द्ध्वमात्रा शक्तिरूपा महालक्ष्मी-समा स्मृता। मात्रा मध्यगता मात्रा वाग्देवी सा परा स्मृता॥ श॥ कामधेनुतन्त्रे॥ षकारं शृणु चार्वङ्गि ! अष्टकोणमयं सदा। रक्तचन्द्रप्रतीकाशं स्वयं परमकुण्डली। चतुर्वर्गमयं वर्णं सुधा-निर्मितविग्रहम्। पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा। रजः-सत्त्वतमोयुक्तं त्रिशक्तिसहितं सदा। त्रिविन्दुसहितं वर्णं आत्मा-दितत्त्वसंयुतम्। सर्वदेवमयं वर्णं हृदि भावय पार्वति !॥ वर्णो-द्धारतन्त्रे॥ कुञ्चिता वामतो दक्षगता च गोऽन्ततिस्त्वधः। पुनरूर्ध्वगता तासु वह्निचन्द्रदिवाकराः। मात्रा भवानी विज्ञेया ध्यानमस्य प्रवक्ष्यते॥ ष॥ कामधेनुतन्त्रे॥ सकारं शृणु चार्वङ्गि ! शक्तिवीजं परात्परम्। कोटिविद्युल्लताकारं कुण्डलीत्रयसंयुतम्। पञ्चदेवमयं देवि ! पञ्चप्राणात्मकं सदा। रजःसत्त्वतमोयुक्तं त्रिविन्दुसहितं सदा॥ स॥ कामधेनुतन्त्रे॥ हकारं शृणु चार्वङ्गि ! चतुर्वर्गप्रदायकम्। कुण्डलीद्वयसंयुक्तं रक्तविद्युल्लतोपमम्। रजःसत्त्वतमोयुक्तं पञ्चदेवमयं सदा। पञ्चप्राणात्मकं वर्णं त्रिशक्तिसहितं सदा। त्रिविन्दुसहितं वर्णं हृदि भावय पार्वति !॥ वर्णोद्धारतन्त्रे॥ ऊर्द्ध्वादाकुञ्चिता मध्ये कुण्डलीत्वगता त्वधः। ऊर्द्ध्वं गता पुनः सैव तासु ब्रह्मादयः क्रमात्। मात्रा च पार्वती ज्ञेया ध्यानमस्य प्रवक्ष्यते॥ ह॥ कामधेनुतन्त्रे॥ क्षकारं शृणु चार्वङ्गि ! कुण्डलीत्रयसंयुतम्। चतुर्वर्गमयं वर्णं पञ्चदेवमयं सदा। पञ्चप्राणात्मकं वर्णं त्रिशक्ति-

सहितं सदा। त्रिविन्दुसहितं वर्णमात्मादितत्त्वसंयुतम्। शरच्चन्द्रप्रतीकाशं हृदि भावय सुन्दरि!॥ च॥ योगिनीतन्त्रे तृतीयभागे सप्तमपटले। न भूमौ विलिखेद्वर्णं मन्त्रं न पुस्तके लिखेत्। न मुक्त्वा पुस्तकं स्थाप्यं न सुप्तमाहरेत्तु तत्। भूकम्पे ग्रहणे चैव अक्षरं वाथ पुस्तकम्। भूमौ तिष्ठति देवेशि! जन्म-जन्मसु मूर्खता। तदा भवति देवेशि! तस्मात् तत् परिवर्जयेत्॥ इति भूमौ वर्णलेखनादिनिषेधः। वंशसूच्या लिखेद्वर्णं तस्य हानि-र्भवेद् ध्रुवम्। ताम्रसूच्या तु विभवो भवेन्न तत्क्षयो भवेत्। महालक्ष्मीर्भवेन्नित्यं सुवर्णस्य शलाकया। वृहन्नलस्य सूच्या वै मतिवृद्धिः प्रजायते। वृहन्नलस्य वोल इति गौड़प्रसिद्धस्य॥ तथा अग्निमयैर्देवि! पुत्रपौत्रधनागमः। अग्निमयैश्चित्रकाष्ठ-मयैः॥ रौत्येन विपुला लक्ष्मीः कांस्येन मरणं भवेत्॥ रौत्येन पित्तलेन॥ अष्टाङ्गुलप्रमाणेन दशाङ्गुलेन वाथवा। चतुरङ्गुल-सूच्या वा यो लिखेत् पुस्तकं शुभे!। तत्तदक्षरसंख्ये तु स्वल्पायु-र्याति वै दिने॥ यथा रौत्येनेत्यादिवचने एकत्रैव विधिनि-षेधौ, तथात्राप्यष्टाङ्गुलदशाङ्गुलयोर्विधिर्निषेधश्चतुरङ्गुले॥ इति लेखनीकरणशुभाशुभे पुस्तकमानमपि तत्रैव॥ मानं वक्ष्ये पुस्तकस्य शृणु देवि! समासतः। मानेनापि फलं विन्द्या-दमाने श्रीर्हता भवेत्। हस्तमात्रं मुष्टिमात्रमावाहु द्वादशा-ङ्गुलम्। दशाङ्गुलं तथाष्टौ च अतो हीनं न कारयेत्। इति पुस्तकमानम्॥ वेधद्वयं मुष्टिहस्तं वाहुमात्रे चिरन्तनम्। सम-भागे महेशानि! हस्तादौ रूपबन्धकम्। अष्टाङ्गुलं परित्यज्य मध्ये वेधं न कारयेत्। प्रादेशादौ भवेद्रन्ध्रो द्व्यङ्गुले वा समा-चरेत्। पुस्तकस्य च आद्यन्ते यन्त्रवेधं विकल्पयेत्। भार्य्या-हानिर्भवेदाशु धनानां वा क्षयो भवेत्। दग्धरन्ध्रे भवेत् पीड़ा वर्त्तुलं शुभदं भवेत्। चतुष्कोणे विघ्नवस्तु त्रिकोणे मरणं

भवेत्। इति पुस्तकवेधफलम्॥ भूर्जे वा तेजपत्रे वा ताले वा ताड़िपत्रके। अगुरुणापि देवेशि! पुस्तकं कारयेत् प्रिये!। सम्भवे स्वर्णपात्रे च ताम्रपात्रे च शङ्करि!। अन्यवृक्षत्वचि देवि! तथा केतकिपत्रके। मार्त्तण्डपत्रे रौप्ये वा वटपत्रे वरानने!। अन्यपत्रे च सुदले लिखित्वा यः समभ्यसेत्। स दुर्गतिमवाप्नोति धनहानिर्भवेद् ध्रुवम्। इति पुस्तककरणपत्रफलम्॥ वेदस्य लिखनं कृत्वा यः पठेद् ब्रह्महा भवेत्। पुस्तकं वा गृहे स्थाप्य' वज्रपातो भवेद् ध्रुवम्। इति पुस्तके वेदलिखननिषेधः॥ सत्येऽक्षरे स्थितः शम्भुः शूलपाणिस्त्रिलोचनः। प्रजापतिर्द्वापरे च त्रेतायां सूर्य्य एव च। कृते युगे पिनाकी च कलौ लिप्यक्षरे हरिः। आरम्भे च समाप्तौ च लेखकं प्रतिपूजयेत्। हरिञ्च गन्धपुष्पाद्यैर्वस्त्रैश्च सुमनोहरैः। यावदक्षरसंख्यानं प्रतिपत्रे च सुन्दरि!। तावद् युगसहस्राणि ब्रह्मलोके वसेच्चिरम्॥ इति लेखकपूजाफलम्॥ वेतनं यस्तु गृह्णीयात् लिखित्वा पुस्तकं स तु। यावदक्षरसंख्यानं तावच्च नरके वसेत्॥ इति लिखितस्य वेतनग्रहणदोषः॥

इति श्रीप्राणतोषिण्यां प्रथमसर्गकाण्डे अक्षरलेखनादिप्रकारकथनं कोरकनाम सप्तमः परिच्छेदः।

तन्त्रसङ्केतबोधार्थमाहृत्य तन्त्रशास्त्रतः। वर्णनामानि कतिचिद्वक्ष्यामि विदुषां मुदे। ॐकारो वर्त्तुलस्तारो वामश्च हंसकारणम्। मन्त्राद्यः प्रणवः सत्यं विन्दुशक्तिस्त्रिदैवतम्। सर्वजीवोत्पादकश्च पञ्चदेवो ध्रुवं त्रिकः। सावित्री त्रिशिखो ब्रह्म त्रिगुणो गुणजीवकः। आदिवीजं वेदसारो वेदवीजमतः परम्। पञ्चरश्मिस्त्रिकुटे च त्रिभवे भवनाशनः। गायत्रीवीजपञ्चांशौ मन्त्रविद्याप्रसूः प्रभुः। अक्षरं मातृकासूश्चानादिरद्वैतमोक्षदौ॥ ओम्॥ अः श्रीकण्ठः सुरेशश्च ललाटश्चैकमात्रिकः। पूर्णोदरी

सृष्टिमेधो सारस्वतः प्रियंवदः। महाब्राह्मी वासुदेवो धनेशः केशवोऽमृतम्। कीर्त्तिर्निवृत्तिर्वागीशो नरकारिर्हरो मरुत्। ब्रह्मा वामाद्यजो ह्रस्वः करभूः प्रणवाद्यकः। प्रणवाद्यावयव इत्यर्थः॥ ब्रह्माणी कामरूपश्च कामेशी वाशिनी वियत्। विश्वेशः श्रीविष्णुकण्ठी प्रतिपत्तिथिरंशिनी। अर्कमण्डल-वर्णाद्यो ब्राह्मणः कामकर्षिणी॥ अः॥ आकारो विजयानन्तो दीर्घच्छायो विनायकः। क्षीरोदधिः पयोदश्च पाशो दीर्घास्य-वृत्तको। प्रचण्ड एकजो रुद्रो नारायण इतेश्वरः। प्रतिष्ठा मानदा कान्तो विश्वान्तकगजान्तकः। पितामहो द्विठान्तो भूः क्रिया कान्तिश्च सम्भवः। द्वितीया मानदा काशी विघ्नराजः कुजो वियत्। स्वरान्तकश्च हृदयमङ्गुष्ठो भगमालिनी॥ आ॥ इः सूक्ष्मा शाल्मली विद्या चन्द्रः पूषा सुगुह्यकः। सुमित्रं सुन्दरो वीरः कोटरः काटरः पयः। भ्रूमध्यो माधवस्तुष्टि-र्दक्षनेत्रञ्च नासिका। शान्तः कान्तः कामिनी च कामो विघ्न-विनायकः। नेपालो भरणी रुद्रो नित्या क्लिन्ना च पावकः॥ इः॥ ईस्त्रिमूर्त्तिर्महामाया लोलाक्षी वामलोचनम्। गोविन्दः शेखरः पुष्टिः सुभद्रा रत्नसंज्ञकः। विष्णुर्लक्ष्मीः प्रहासश्च वाग्वि-शुद्धः परापरः। कलोत्तरीयो भेरुण्डा रतिश्च पौण्ड्रवर्द्धनः। शिवोत्तमः शिवा तुष्टिश्चतुर्थी विन्दुमालिनी। वैष्णवी वैन्दवी जिह्वा कामकलसनादका। पावकः कोटरः कीर्त्तिर्मोहिनी काल-कारिका। कुचद्वन्द्वं तर्जनी च शान्तिस्त्रिपुरसुन्दरी॥ ई॥ उः शङ्करो वर्त्तुलाक्षो भूतः कल्याणवाचकः। अमरेशो दक्ष-कर्णः षड्वक्त्रो मोहनः शिवः। उग्रप्रभुर्ध्युतिर्विष्णुर्विश्वकर्मा महेश्वरः। शत्रुघ्नश्चेटिका पुष्टिः पञ्चमी वह्निवासिनी। कामघ्नः कामना चेशो मोहिनी विघ्नहृन्महो। डटभूः कुटिला श्रोत्रं पारद्वीपो वृषो हरः॥ उ॥ ऊः कण्ठको रतिः

शान्तिः क्षोधनो मधुसूदनः। कामराजः कुजेशश्च महेशो वामकर्णकः। अर्घीशो भैरवः सूक्ष्मो दीर्घघोणा सरस्वती। विलासिनी विघ्नकर्त्ता लक्ष्मणो रूपकर्षिणी। महाविद्येश्वरी षष्ठी षण्डो भूः कान्यकुब्जकः॥ ऊ॥ ऋः पुर्दीर्घमुखी रुद्रो देवमाता त्रिविक्रमः। भावभूतिः क्रिया क्रूरा रेचिका नासिकाधृतः। एकपादशिरोमाला मण्डला शान्तिनी जलम्। कर्णः कामलभा मेधो निवृत्तिर्गणनायकः। रोहिणी शिवदूती च पूर्णगिरिश्च सप्तमी॥ ऋ॥ ॠः क्रोधोऽतिथिशो वाणी वामनो गोऽथ श्रीधृतिः। ऊर्द्ध्वमुखी निशानाथः पद्ममाला विनष्टधीः। शशिनी मोचिका श्रेष्ठा दैत्यमाता प्रतिष्ठिता। एकदन्तान्वयो माता हरिता मिथुनो दया। कोमलः श्यामला मेधी प्रतिष्ठा पतिरष्टमी। ब्रह्मण्यमिव कीलाले पावको गन्धकर्षिणी॥ ॠ॥ ऌः स्थाणुः श्रीधरः शुद्धो मेधधूम्रो वको वियत्। देवयोनिर्दंष्ट्रगण्डो वह्नेशः कौन्तरुद्रकौ। विश्वेश्वरी दीर्घजिह्वा महेन्द्रो लाङ्गलिः परा। चन्द्रिका पार्थिवो धूम्रा द्विदन्तः कामवर्द्धनः। शुचिस्मिता च नवमी कान्तिरायातकेश्वरः। चित्ताकर्षिणी कामश्च तृतीयकुलसुन्दरी॥ ऌ॥ ॡकारः कमला ह्र्षा हृषीकेशो मधुव्रतः। सूक्ष्मा कान्तिर्वामगण्डो रुद्रः कामोदरी सुरा। शान्तिकृत् स्वस्तिका शक्रो मायावी लोलुपो वियत्। कुशमी सुस्थिरो माता नीलपीतो गजाननः। कामिनी विश्वया कालो नित्याशुद्धः शुचिः कृती। सूर्य्यो धैर्य्योऽकर्षणी च एकाकी दनुजप्रसूः॥ ॡ॥ एकारो वास्तवः शक्तिर्भीण्टीशोष्ठो भगं मरुत्। सूक्ष्माभूतोऽर्द्धकेशी च ज्योत्स्ना श्रद्धा प्रमर्दनः। भयं ज्ञानं कृपा धीरा जङ्घा सर्वसमुद्भवः। वह्निर्विष्णुर्भगवती कुण्डली मोहिनी वसः। योषिदाधारशक्तिश्च त्रिकोणा ईशसंज्ञकः। सन्धिरेकादशी॥ भद्रा

पद्मनाभः कुलाचलः ॥ ए ॥ ऐर्लज्जा भौतिकः कान्ता वायवी मोहिनी विभुः। दत्ता दामोदरः प्रज्ञोऽधरो विकृतमुख्यपि। क्षमात्मको जगद्‌योनिः परः परनिबोधकृत्। ज्ञानामृता कपर्दिश्रीः पीठेशोऽग्निः समात्मकः। त्रिपुरा लोहिता राज्ञी वाग्भवी भौतिकासनः। महेश्वरी द्वादशी च विमलश्च सरस्वती। कामकोटी वामजानुरंशुमान् विजया जटा ॥ ऐ ॥ ओकारः सत्यपीयूषी पश्चिमास्यः श्रुतिः स्थिरा। सद्योजातो वासुदेवो गायत्री दीर्घजङ्घकः। आप्यायनी चोर्द्ध्वदन्तो लक्ष्मीर्वाणीमुखो द्विजः। उद्देश्यदर्शकस्तीव्रः कैलासो वसुधाक्षरः। प्रणवांशो ब्रह्मसूत्रमजेशः सर्वमङ्गला। त्रयोदशी दीर्घनासा रतिनाथो दिगम्बरा। त्रैलोक्यविजया प्रज्ञा प्रीतिर्बीजादिकर्षिणी ॥ ओ ॥ औकारः शक्तिको नादस्तेजसो वामजङ्घकः। मनुवह्न्यहेश्च शङ्कुकर्णः सदाशिवः। अधोदन्तश्च कण्ठोष्ठी सङ्कर्षणः सरस्वती। आज्ञा चोर्द्ध्वमुखी शान्ती व्यापिनी प्रकृतः परः। अनन्ता ज्वालिनी व्योमा चतुर्दशी रतिः प्रियः। नेत्रमात्मा कर्षणी च ज्वालामालिनिका भृगुः ॥ औ ॥ अङ्कारश्चक्षुषो दन्तो घटिका सङ्गुह्यकः। प्रद्युम्नः श्रीमुखी प्रीतिर्बीजयोनिर्वृषध्वजः। परं शशी प्रमाणीशः सोमविन्दुः कलानिधिः। अक्रूरश्चेतना नादपूर्णा दुःखहरः शिवः। शिरः शम्भुर्नरेशश्च सुखदुःखप्रवर्त्तकः। पूर्णिमा रेवती शुद्धः कन्याचरवियद्रविः। अमृता कर्षिणी शून्यं विचित्रा व्योमरूपिणी। केदारो रात्रिनाशश्च कुब्जिका चैव वुद्बुदः ॥ अं ॥ अः कण्ठको महासेनः काला पूर्णामृता हरिः। इच्छा भद्रा गणेशश्च रतिविद्यामुखी सुखम्। द्विविन्दुरसना सोमोऽनिबद्धो दुःखसूचकः। द्विजिह्वः कुण्डलं वक्त्रः सर्गः शक्तिर्निशाकरः। सुन्दरी सुयशानन्ता गणनाथो महेश्वरः ॥ अः ॥ कः क्रोधीशो महाकाली कामदेव-

प्रकाशकः। कपाली तैजसः शान्तिर्वासुदेवो जयन्नलः। चक्री प्रजापतिः सृष्टिर्दक्षस्कन्धो विशाम्पतिः। अनन्तः पार्थिवो विन्दुस्तापिनी परमात्मकः। वर्गाद्यश्च मुखी ब्रह्मा स खाद्योऽम्भः शिवो जलम्। माहेश्वरी तुला पुष्पा मङ्गलश्वरणं करः। नित्या कामेश्वरी सुख्यः कामरूपो गजेन्द्रकः। श्रीपुरं रमणो वज्र-कुसुमा परमात्मकः॥ क॥ खः प्रचण्डः कामरूपी रुद्रिर्वह्निः सरस्वती। आकाशमिन्द्रियं दुर्गा चण्डीशस्तापिनी गुरुः। शिखण्डी दन्तजातीशः कफोणिर्गरुतो यदि। शून्यं कपाली कल्याणी सूर्पकर्णो जरामरः। शुभ्राग्नेया चण्डलिङ्गो जना-व्याङ्गारखड्गकौ॥ ख॥ गो गौरी गौरवो गङ्गा गणेशो गोकु-लेश्वरः। शार्ङ्गी पञ्चान्तको गाथा गन्धर्वः सर्वगः स्मृतिः। सर्वसिद्धिः प्रभा धूम्रा द्विजाख्यः शिवदर्शनः। विश्वात्मा गौः पृथग्रूपा वालबन्धस्त्रिलोचनः। गीतं सरस्वती विद्या भोगिनी नन्दनो धरा। भोगवती च हृदयं ज्ञानं जालन्धरो लवः॥ ग॥ घः खड्गी घुर्घुरी घण्टी घण्टीशस्त्रिपुरान्तकः। वायुः शिवोत्तमः सत्या किङ्किणी घोरनायकः। मरीचिर्वरुणो मेधा कालरूपी च दाम्भिकः। लम्बोदरा ज्वालमूलं नन्देशो हननं ध्वनिः। त्रैलोक्यविद्यासंहर्त्ता कामाख्यमनघामयः॥ घ॥ ङः शङ्खी भैरवश्चण्डो विन्दूत्तंसः शिशुप्रियः। एकरुद्रो दक्ष-नखः खर्परो विषयस्पृहा। कान्तिः श्वेताह्वयो धीरो द्विजात्मा ज्वालिनी वियत्। मन्त्रशक्तिश्च वदनो विघ्नेशी चात्मनायकः। एकनेत्रो महानन्दो दुर्द्धरश्चन्द्रमा यतिः। शिवयोषा नीलकण्ठः कामेशी च मयांशुकी॥ ङ॥ चः पुष्करो हली वाणी चात्म-शक्तिः सुदर्शनः। चर्ममुण्डधरो भूत्वा महिषाचारसन्धिनी। एकरूपो रुचिः कूर्मश्चामुण्डा दीर्घवालुकः। वामबाहुर्मूलमाया चतुर्मूर्त्तिस्वरूपिणी। दयितश्च द्विनेत्रश्च लक्ष्मीस्त्रितयलो-

चन: । चन्दनं चन्द्रमा देवश्वेतनोवृश्चिको बुध: । देवी कैट-मुखेच्छात्मा कौमारी पूर्वफल्गुनी । अनङ्गमेखला वायुर्मेदिनी च सुलावती ॥ च ॥ छश्छन्दनं सुषुम्ना च पशु: पशु पतिस्मृ ति: । निर्मलं तरलं वह्निर्भू तमाता विलासिनी । एकनेत्रश्च वृषली द्विशिरा वामकूर्पर: । गोकर्णा लाङ्गली वाम: काममत्ता सदा-शिव: । माता निशाचर: पायुर्विद्यत: स्थितिशब्दक: ॥ छ ॥ ज: शवो वानर: शूली भोगदा विजया स्थिरा । ललदेवो जयो जेता धातकी सुमुखो विभु: । लम्बोदरी स्मृति: शाखा सुप्रभा कर्द्दका धरा । दीर्घरूपो बहुरुचिर्हंसो नन्दी तेजा: सुराधिप: । जवनो वेगितो वामो मानवाद्य: सदात्मक: । हूत्माऽतेश्वरो वेगो चामोदो मदविह्वल: ॥ ज ॥ झो झङ्कारी गुह्यो झञ्झावायु: सत्य: षड़ुन्नत: । अजेशो द्राविणी नाद: पाशी जिह्वा जलं स्थिति: । विराजेन्द्रो धनुर्हस्त: कर्कशो नादज: कुज: । दीर्घबाहुबलो रूपमाकन्दित: सुचञ्चल: । दुर्मुखो नष्ट आत्मवान् विकटा-कुचमण्डल: । कलहंसप्रिया वामा अङ्गुलीमध्यपर्वक: । दक्षहासाट्टहासश्च पाथात्मा व्यञ्जन: स्वर: ॥ झ ॥ ञकारो बोधिनी विश्वा कुण्डली मथदो वियत् । कौमारी नागविज्ञानी सव्याङ्गुलनखरो वक: । सर्वेशचूर्णिता बुद्धि: स्वर्गात्मा घर्घर-ध्वनि: । धर्मैकपादो सुमुखो विरजा चन्दनेश्वरी । गायन: पुष्पधन्वा च रागात्मा च वराच्छिणी ॥ ञ ॥ टष्टङ्कार: कपाली च सोमवा: खेचरी ध्वनि: । मुकुन्दो विनदा पृथ्वी वैष्णवी वारुणी नव: । दक्षाङ्गकार्द्धचन्द्रश्च जरा भूति: पुनर्भव: । वृह-स्पतिधनुश्चित्रा प्रमोदा विमला कटि: । राजा गिरिर्महाधनु-र्घ्राणात्मा स्वसुखो मरुत् ॥ ट ॥ ठ: शून्यो मञ्जरी वीज: पाणिनी लाङ्गली चया । वनजो नन्दनो जिह्वा सुनञ्जघूर्णक: सुधा । वर्त्तुल: कुण्डलो वह्निरमृतं चन्द्रमण्डल: । दक्षजानूरुभावश्च

देवभक्तो वृहद्ध्वनिः। एकपादो विभूतिश्च ललाटं सर्वमित्रकः। वृषघ्नो नलिनी विष्णुर्महेशो ग्रामणीः शशी॥ ठ॥ डः स्मृतिर्दारुको नन्दिरूपिणी योगिनीप्रियः। कौमारी शङ्करस्त्रासस्त्रिवक्रो नटको ध्वनिः। दुरूहो जटिलो भीमा द्विजिह्वः पृथिवी सती। कोरगिरिः क्षमा कान्तिर्नाभिः स्वाती च लोचनम्॥ ड॥ ढो ढक्कानिर्णयः पूर्वो यक्षेशादन्तदेश्वरः॥ अर्द्धनारीश्वरस्तोयमोश्वरो त्रिशिखो नवः। दक्षपादाङ्गुलेर्मूलं सिद्धिदण्डा विनायकः। प्रहासा विवरा ऋद्धिर्निर्गुणो निधनो ध्वनिः। विघ्नेशः पालिनी त्वक्कधारिणी क्रोड़पुच्छकः। एलापूरं त्वगात्मा च विशाखा श्रीमनो रतिः॥ ढ॥ णो निर्गुणं रतिज्ञानं जम्भनः पक्षिवाहनः। जया शम्भो नरकजित् निष्कला योगिनीप्रियः। द्विमुखं कोटवी श्रोत्रं समृद्धिर्बोधनी मता। त्रिनेत्रो मानुषी व्योम दक्षपादाङ्गुलेर्मुखः। बाधवः शङ्खिनी वीरो नारायणश्च निर्णयः॥ ण॥ तः पूतना हरिः शुद्धिः शक्तो शक्तिर्जटी ध्वजा। वामस्फिक्वामकक्ष्यौ च कामिनो मध्यकर्णकः। आषाढ़ी तण्डतुन्नश्च कामिकापृष्ठपुच्छकः। रत्नकश्च श्याममुखी वाराही मकरोऽरुणा। सुगतोऽर्द्धमुखा वुद्धजानुश्च क्रोड़पुच्छकः। गन्धो विस्त्रा मरुच्छत्रश्चानुराधा च सौरकः। जयन्ति पुलको भ्रान्तिरनङ्गमदनातुरा॥ त॥ थः स्थिरामो महाग्रन्थिर्ग्रन्थिर्ग्राहो भयानकः। शिली शिरसिजो दण्डी भद्रकाली शिलोच्चयः। कृष्णो बुद्धिर्विकर्मा च दक्षनासाधिपोऽमरः। वरदा भोगदा केशो वामजानुरसोऽनलः। लोली जर्ज्जयिनी गुह्यः शरच्चन्द्रो दिवाकरः॥ थ॥ दोऽद्रीशोधातकिर्धाता दाता दलं कलत्रकम्। दीनं ज्ञानञ्च दानञ्च भक्तिराह्वनी धरा। सुषुम्ना योगिनी सद्यः कुण्डली वामगुल्फकः। कात्यायनी शिवा दुर्गा लज्जनाना त्रिकण्डकी। स्वस्तिकः कुटिलारूपः कृष्णश्चोमा

जितेन्द्रियः। धर्म्मह्रदामदेवश्च भ्रमा बहुसुचञ्चला। हरिद्रा-पुरमतौ च दक्षपाणिस्त्रिरेखकः॥ द॥ धो धनार्थी रुचिः स्थाणुः सात्त्वतो योगिनीप्रियः। मौनेशः शङ्खिनी तोयं नागेशो विश्व-पावनी। धिषणा धरणा चिन्ता नेत्रयुग्मं प्रियो मतिः। पीत-वासा त्रिवर्णा च धाता धर्म्मप्लवङ्गमः। सन्दर्शो मोहनो लज्जा वज्रतुण्डाधरं धरा। वामपादाङ्गुलेर्मूलं जेष्ठा सुरपुरम्भवः। स्पर्शात्मा दीर्घजङ्घा च धनेशो धनसञ्चयः॥ ध॥ नो गर्जिनी क्षमा सौरिर्वारुणी विश्वपावनी। मेषस्य सविता नेत्रं दन्तुरो नारदोऽञ्जनः। ऊर्द्ध्वचामी हिरण्डश्च वामपादाङ्गुलेर्मुखः। वैनतेयस्तुतिर्वर्त्मस्वरणिर्बालिरागमः। वामनो ज्वालिनी दीर्घो निरीहः सुगतिर्वियत्। शब्दात्मा दीर्घघोणा च हस्तिना-पुरमेचकौ। गिरिनायकनीलौ च शिवो नादिर्महामतिः॥ न॥ पः पूरप्रियता तीक्ष्णा लोहितः पञ्चमो रमा। गुह्यकर्त्ता निधिः शेषः कालरात्रिः सुवाहिता। तपनः पालनः पाता पद्मरेणु-र्निरञ्जनः। सावित्री पातिनी पानं वीरतत्त्वो धनुर्धरः। दक्ष-पार्श्वश्च सेनानी मरीचिः पवनाशनिः। उड्डीशं जयिनी कुम्भो-ऽलसं रेखा च मोहकः। मूला द्वितीयमिन्द्राणी लोकाक्षी मन आत्मनः॥ प॥ फः सखी दुर्गिणी धूम्रा वामपार्श्वो जनार्दनः। जया पादः शिखा रौद्री फेत्कारः शाखिनीप्रियः। उमा विहङ्गमः कालः कुब्जिनी प्रियपावकौ। प्रलयाग्निर्नीलपादोऽक्षरः पशुपतिः शशी। फुत्कारो यामिनी व्यक्ता पावनो मोहवर्द्धनः। निष्फल-वागहङ्कारः प्रयागो ग्रामणीः फलम्॥ फ॥ बोऽवनीभूधरो मार्गो घर्घरी लोचनप्रियः। प्रचेताः कलसः पक्षी स्थलगण्डः कप-र्दिनी। पृष्ठवंशोभयामात्तः शिखिवाह्नो युगन्धरः। मुखविन्दु-र्बली घण्टा योद्धा त्रिलोचनप्रियः। क्लेदिनी तापिता भूमिस्सुग-णिन्द्रवलिप्रियः। सुरभिर्मुखविष्णुश्च संहारो वसुधाधिपः।

षष्ठी पुरं चपेटा च मोदको गगनं प्रति। पूर्व्वाषाढ़ामध्यलिङ्गौ शनिः कुम्भहलीयको ॥ ब ॥ भः क्लिन्ना भ्रमरो भीमो विश्वमूर्त्तिर्निशा भयम्। द्विरण्डो भूषणो मूलं यन्त्रसूत्रस्य वाचकः। नक्षत्रं भ्रमणा दीप्तिर्वयो भूमिः पयो नभः। नाभिर्भद्रं महाबाहुर्विश्वमूर्त्ति र्वितारुडकः। प्राणात्मा तापिनी वश्चा विश्वरूपी च चन्द्रिका। भीमसेनः सुधासेनः सुखो मायापुरं हरः॥ भ ॥ मः कालो क्रोधितः कालो महाकालो महान्तकः। वैकुण्ठो वसुधा चन्द्रो रविः पुरुषराजकः। कालभद्रो जया मेधा विश्वदा दीप्तसंज्ञकः। जठरश्च भ्रमा मानं लक्ष्मीर्मातोग्रबन्धनी। विषं शिवो महा महावीरः शशिप्रभा जनेश्वरः। प्रमत्तः प्रियसूद्रः सर्वाङ्गो वह्निमण्डलम्। मातङ्गमालिनी विन्दुः श्रवणाभरथो वियत् ॥ म ॥ यो वाणी वसुधा वायुविकृतिः पुरुषोत्तमः। युगान्तः श्वसनः शीघ्रो धूमार्च्चिः प्राणिसेवकः। शङ्का भ्रमो जटी लोला वायुवेगीयशङ्करी। सङ्कर्षणः क्षपा बालो हृदयं कपिला प्रभा। आग्नेयो व्यापकस्त्यागो होमो यानं प्रमा सुखम्। चण्डः सर्वेश्वरो धूमस्रामुण्डा सुमुखेश्वरी॥ त्वगात्मा मलयो माता हंसिनी भृङ्गिनायकः॥ तेन मः शोषको मीनो धनिष्ठानङ्गवेदिनी। मेष्ठः सोमं पत्तिनामा पापहा प्राणसंज्ञकः॥ य ॥ रो रक्तः क्रोधिनी रेफः पावकस्त्वोजसो मतः। प्रकाशा दर्शनो दीपो रतक्षणा परं बली। भुजङ्गेशो मतिः सूर्य्यो धातुरक्तः प्रकाशकः। व्यापको रेवती दासं कुव्यंशो वह्निमण्डलम्। उग्ररेखा स्थूलदण्डो वेदकण्ठपला पुरा। प्रकृतिः सुगलो ब्रह्मशब्दश्च गायको धनम्। श्रीकण्ठ उष्मा हृदयं मुण्डो त्रिपुरसुन्दरी। सविन्दुयोनिजो ज्वाला श्रीशैलो विश्वतोमुखी॥ र॥ लश्चन्द्रः पुतना पृथ्वी माधवः शत्रुवाचकः। बलानुजः पिनाकीशो व्यापको मांस-

संज्ञकः। खड्गी नादोऽमृतं देवी लवणं वारुणीपतिः। शिखा वाणी क्रिया माता भामिनी कामिनी प्रिया। ज्वालिनी वेगिनी नादः प्रद्युम्नः शोषणो हरिः। विश्वात्ममन्द्री बली चेतो मेरुगिरिः कला रसः॥ ल॥ वो बालो वारुणी सूक्ष्मा वरुणो मेदसंज्ञकः। खड्गीशो ज्वालिनी वङ्कः कलसध्वनिवाचकः। उत्कारीशस्तु नावीतो वज्रा स्फिक् सागरः शुचिः। त्रिधातुः शङ्करः श्रेष्ठो विशेषो यमसादनम्॥ व॥ शः सव्यश्च कामरूपकामरूपी महामतिः। सौख्यनामा कुमारोऽस्थि श्रीकण्ठो वृषकेतनः। वृषघ्नः शयनं शान्ता सुभगा विस्फुलिङ्गिनी। मृत्युर्देवी महालक्ष्मीर्महेन्द्रः कुलकौलिनी। बाहुर्हंसो वियद्वक्त्रं हृदनङ्गाङ्कुशः खलः। वामोरुः पुण्डरीकात्मा कान्तिः कल्याणवाचकः॥ श॥ षः श्वेतो वासुदेवश्च पीता प्रज्ञा विनायकः। परमेष्ठी वामबाहुः श्रेष्ठो गर्भविमोचनः। लम्बोदरो यमोऽजेशः कामधुक् कामधूमकः। सुश्रीरुष्मा वृषो लज्जा मरुञ्चयः प्रियः शिवः। सूर्य्यात्मा जठरः कोषो मत्ता वक्षोविदारिणी। कलकण्ठो मध्यभिन्ना युद्धात्मा मलपूः शिवः॥ ष॥ सो हंसः सुयशा विष्णुर्भृग्वीशश्चन्द्रसंज्ञकः। जगद्बीजं शक्तिनामा सोऽहं वेशरती भृगुः। प्रकृतिरीश्वरः शुद्धः प्रभा श्वेता कुलोज्ज्वलः। दक्षपादोऽमृतं ब्राह्मी परमात्मा परोऽक्षरः। सुरूपा च गुणेशो गौः कलकण्ठो वृकोदरी। प्राणाद्याश्च पुरा देवी लक्ष्मीः सोमो हिरण्यपुः। दुर्गोत्तारिणी सम्मोहाज्जीवो मूर्त्तिमनोहरः॥ स॥ हः शिवो गगनं हंसो नागलोकोऽम्बिकापतिः। नकुलीशो जगत्प्राणः प्राणेशः कपिलामलः। परमात्मात्मजो जीवो यवाकः शान्तिदोऽङ्गनः। मृगोभयोऽरुणा स्थाणुः क्रुटकूपविरावणः। लक्ष्मीर्मविहरः शम्भुः प्राणशक्तिललाटजः। स्वकोपवारणः शूली चैतन्यं पादपूरणः। महा-

लक्ष्मीः परं शम्भुः शाखीठः सोममण्डलम् ॥ ह ॥ लां पृथ्वीं विमला मेघोऽनन्तोऽव्यवहासिता। व्यापिनी शिवदा केतुर्जगत्सारतरं हठः। ग्लौर्मुण्ड़ानी च वेदार्थसारो नारायणः स्वयम्। जठरो नकुलिः पीता शिवेशोऽनङ्गमालिनी ॥ ल ॥ क्षः कोपस्तुम्बुकः कालो रुक्षः संवर्त्तकः परः। नृसिंहो विद्युता माया महातेजा युगान्तकः। परात्मा क्रोधसंहारी बलान्तो मेरुवाचकः। सर्वाङ्गः सागरः कामः संयोगान्त्यक्षिपूरकः। क्षेत्रपालो महाक्षोभो मातृकान्तानलक्षयः। मुखं कव्यवहानन्ता कालजिह्वा गणेश्वरः। छायापुत्रश्च सज्वातो मलयश्रीर्ललाटकः ॥ क्ष ॥

इति श्रीप्राणतोषिण्यां प्रथमे सर्गकाण्डे वर्णाभिधान-
कथनं नामाष्टमः परिच्छेदः ॥

मन्त्राणां वर्णमयत्वात् वर्णप्रकरणानन्तरं मन्त्रप्रकरणस्यौचित्यात् मन्त्रप्रकरणमुच्यते विश्वसारतन्त्रे तृतीयपटले ॥ अथ मन्त्रान् प्रवक्ष्यामि शृणुष्व कमलानने !। यस्य प्रसादमात्रेण चतुर्वर्गं लभेन्नरः। कैलासस्य चतुर्दिक्षु मन्त्राणां साधकस्य च। सन्ति सर्वत्र तन्त्राणि चतुर्द्धा परमेश्वरि !। कोटिकोटिश्च मन्त्राणां यन्त्राणां साधकस्य च। पृथिव्यां देवलोकेषु गन्धर्वेषु रसातले। नरलोके ऋषिलोके कुष्माण्डराक्षसेषु च। नानारूपाणि तन्त्राणि सन्ति वैशेषिकाणि च। सर्वेषां तन्त्रमन्त्राणां मानुषेषु विशिष्यते ॥ तथा। मुक्तापीतपयोदविद्रुमजवावर्णैर्मुखैः पञ्चभिस्त्र्यक्षैरञ्चितमीशमिन्दुमुकुटं पूर्णेन्दुकोटिप्रभम्। शूलं टङ्कक्रपाणवज्रदहनान् नागेन्द्रघण्टाङ्कुशान् पाशं भीतिहरं दधानममिताकल्पोज्ज्वलाङ्गं भजे ॥ प्रणम्य कथयिष्येऽहं सर्वलोकहितं परम्। यस्मिन् यादृश आचारस्तत्र धर्मस्तु तादृशः। कृतार्थस्तेन जायेत स्वर्गमोक्षसमन्वितः। भ्रान्तिस्तत्र न

कर्त्तव्या तदा सिद्धिः प्रजायते॥ तथा। मुक्तामुखे देवतायाः सर्वमन्त्रं जगाद,सः। यक्षगन्धर्वनागेषु तथा पीतमुखेन च। कुष्माण्डविघ्नलोकेषु पयोदेन मुखेन वै। वैदूर्य्येण जवाभेन मनुष्येषु निगद्यते। शिष्येभ्यो दापयामास महाविद्याः सुरेश्वरः॥ शिष्येभ्यो दापनप्रकारस्तु गायत्रीतन्त्रे दशमब्राह्मणपटले॥ शिव उवाच॥ लम्बोदर! महाभाग! शृणु मे परमं वचः। इदं महासुसन्दर्भं मम वक्त्राद्विनिर्गतम्। निर्गतं पार्वती वक्त्रात्तन्त्रं परमदुर्लभम्। विलिख्य बहुयत्नेन गच्छ सिद्धाश्रमं सुत!। यत्र तिष्ठन्ति मुनयो वेदवेदाङ्गपारगाः। अणिमादिगुणैर्युक्तः शीघ्रं त्वं भव मे सुत!। इत्युक्तः शङ्करेणासौ चाष्टबाहुरभूत्ततः। चतुर्भिर्हस्तैः संलिख्य शिवाय विनिवेदयेत्॥ शिव उवाच॥ गच्छ पुत्र! महावाहो! तन्त्रमादाय सत्वरम्। सिद्धाश्रमं वनं रम्यं यथेन्द्रस्य च नन्दनम्। प्रणम्य प्रययौ शीघ्रं तन्त्रमादाय तद्वनम्॥ इत्युपक्रम्य॥ मुनेर्वाक्यं ततः श्रुत्वा तत्तन्त्रं मुनये ददौ। एवं तन्त्राणि सर्वाणि विलिख्य विनिवेदयेत्॥ इति पृथिव्यां तन्त्रावतरणप्रकारः॥ विश्वसारे॥ जीवकोटिप्रविष्टा सा महाविद्या महेश्वरि!। महाविद्या महेशानि! जीवेनैव प्रकीर्त्तिता। जीवे जीवत्वसिद्धिः स्याद्देवे देवत्वसिद्धये। मातृकावर्णभेदेभ्यः सर्वे मन्त्राः प्रजज्ञिरे। प्रजज्ञिरे प्रादुर्बभूवुरित्यर्थः॥ महाविद्या महापूर्वा महामन्त्राश्च भाविनि!। सर्वेषां वीजमित्युक्तं शङ्करस्य मतेन च। कुलमूलावतारकल्पसूत्रटीकाधृततापनी च। परमशिवभट्टारकः श्रुत्यष्टादशविद्याः सर्वाणि दर्शनानि च लीलया तत्तदवस्थापन्नः प्रणीय सविमर्षया भगवत्या स्वात्माविभिन्नया पृष्टः पञ्चभिर्मुखैः पञ्चाम्नायान् परमार्थस्वरूपान् प्रणिन्ये इति। एताम् व्याचक्षते शङ्कराचार्य्याः। परमशिव इति तदुक्तं परि-

शक्तील्लासे॥ परमेशः प्रसन्नात्मा प्रकाशस्य महेशितुः। प्रथमो यः परिस्पन्दः शिवतत्त्वं तदुच्यते॥ भट्टारकः सर्वनियमकर्त्ता। कुलार्णवे पञ्चमखण्डे सप्तदशोल्लासे॥ भवपापप्रशमनात् टङ्कारेन्दुकशेखरात्। रञ्जनात् कमनीयाद्वा भट्टारक इति स्मृतः॥ श्रुतिप्रसिद्धा अष्टादशविद्या इति। चत्वारो वेदा उपवेदाश्चत्वारः षड़ङ्गानि पुराणन्यायमीमांसाधर्मशास्त्राण्येतावत्यः॥ श्रुतिप्रसिद्धा इति सर्वतः प्रामाण्येनोक्तम्। चत्वारो वेदा इति ऋक्सामाथर्वयजूंषि। उपवेदा इत्यायुर्वेदगान्धर्ववेददण्डनीतिधनुर्वेदा यथाक्रममुक्तवेदानामित्यवगन्तव्यम्। तथा च शौनकोक्तौ चरणव्यूहे ऋग्वेदस्यायुर्वेदोपवेदो यजुर्वेदस्य धनुर्वेदोपवेदः सामवेदस्य गान्धर्ववेदोपवेदोऽथर्ववेदस्यार्थशास्त्राणि भवन्तीति अस्त्रशास्त्राणि भवन्तीति चतुर्थचरणं दाक्षिणात्याः पठन्ति। श्रीभागवते तृतीयस्कन्धे द्वादशाध्याये तु। आयुर्वेदं धनुर्वेदं गान्धर्वं वेदमात्मनः। स्थापत्यं चासृजद्वेदं क्रमात् पूर्वादिभिर्मुखैरित्युक्तम्। स्थापत्यं विश्वकर्मशास्त्रमिति स्वामी। तत्तु गृहवास्तुकुण्डादिकरणशास्त्रम्। एतेषां श्रुतिवेदभिन्नशास्त्रेभ्यः प्रामाण्यकीर्त्तनाय सर्वशास्त्राणामादौ निर्देशः कृतः शङ्कराचार्य्यैः। श्रीधरस्वामिना तु श्रीभगवद्गीताटीकायां स्मृतिशास्त्रापेक्षया दण्डनीतेर्दुर्बलत्वमुक्तम्। तथात्वे त्वायुर्वेदोक्तमहौषधानामभक्ष्यापेयानामग्राह्यत्वं स्यात्। शरलास्तु तादृशौषधभक्षणे तु प्रायश्चित्तमाहुः। तन्न। एतान्येव व्याधितस्य भिषक्क्रियायामप्रतिषिद्धानि यानि सर्वविधानि तेष्वप्यदोष इति स्मृत्युक्तेः। षड़ङ्गानीति शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्योतींषि। पुराणं पञ्चलक्षणाक्रान्तं व्यासप्रणीतम्। न्यायः कर्ममीमांसा। गौतमेन तथा न्यायमिति वक्ष्यमाणवचनादान्वीक्षिक्यपि। मीमांसा ब्रह्ममीमांसा वेदान्त इति यावत्। धर्मशा-

स्त्राणि मन्वादिप्रणीतानि। एतावत्योऽष्टादशविद्या इति दर्शनानि व्याचक्षते आचार्य्याः। यथादर्शनानि बौद्धशैवब्राह्मसौरवैष्णवशाक्तानीति। सम्प्रति तु वेदान्तसांख्यमीमांसाविशेषतर्कशास्त्राणि दर्शनानि मन्यन्ते सुधिय इति। लीलयेति लीला इच्छाविशेषः। अन्यथा सृष्टिकर्त्तृत्वे निरीहस्य भगवतः कारणान्तरापेक्षा नास्त्येव। तत्तदवस्थापन्न इति ब्रह्मविष्णुरुद्रव्यासनारदादिशरीरीति। अतएव गन्धर्वतन्त्रे प्रथमपटले ॥ प्रथमं हि मया प्रोक्तं शैवं पाशुपतादिकम्। मच्छक्त्याविशितैर्विप्रैः सम्प्रोक्तानि ततः परम्। कणादेन च सम्प्रोक्तं शास्त्रं वैशेषिकं महत्। गौतमेन तथा न्यायं सांख्यन्तु कपिलेन तु। धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम्। दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा। बौद्धशास्त्रं तथा प्रोक्तं लग्ननीलपटादिकम्। आपत्यं श्रुतिवाक्यान्यां दर्शयन् लोकगर्हितम्। कर्मस्वरूपत्याज्यत्वमत्र वै प्रतिपद्यते। सर्वकर्मपरिभ्रष्टं कल्मषन्तु तदुच्यते। गौतमप्रोक्तशास्त्रार्थनिरताः सर्व एव हि। शार्गालीं योनिमापन्नाः सन्दिग्धाः सर्वकर्मसु। अतएव महाभारते मोक्षधर्मे काश्यपेन्द्रसंवादे ॥ अहमासं पण्डितको हैतुको वेदनिन्दकः। आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकामिति प्रस्तुत्य आक्रोष्टा चातिवक्ता च ब्रह्मयज्ञेषु वै द्विजान्। यस्येयं फलनिष्पत्तिः शृगालत्वं मम द्विजेति ब्राह्मणं प्रति शृगालवाक्यम्॥ ननु आन्वीक्षिकी दण्डनीतिस्त्रयी त्रिदिवसुन्दरीति कालीकुलसर्वस्वीयवचनेनाद्यासहस्रनामान्तर्गतत्वेनान्वीक्षिक्याः श्रीमद्दक्षिणकालिकास्वरूपाया अध्ययनरूपोपासनया यदि शृगालत्वं स्यात्तदा चतुर्वर्गफलं कुतो लब्धव्यमिति चेत् सत्यमान्वीक्षिक्यध्यात्मविद्येति ब्रूमः। सा च दत्तात्रेयप्रणीता न गौतमोक्ता। तथा च भागवते प्रथमस्कन्धे। षष्ठमत्रेरपत्यत्वं वृतः प्राप्तोऽनुसू-

यथा। आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवानिति। अत्रिणा वृतः सन् तस्यापत्यत्वं प्राप्तः। कथमित्याह अनुसूयायामात्मैवापत्यं वृतवानिति दोषदृष्टिमकुर्वन्नित्यर्थः। शेषं सुगमम्। आन्वीक्षिकीमात्मविद्यामिति श्रीधरस्वामिना व्याख्यातम्। न गौतमोक्तविद्या सा तु तर्काश्रयत्वेन प्रसिद्धेति चेन्नैवम्। तथात्वे आन्वीक्षिकीं तर्कविद्यामिति मोक्षधर्मश्लोके तर्कविद्येति विशेषणमान्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोरित्यमरसिंहोक्तञ्च न सङ्गच्छते। तस्मात्तयोर्द्वयोरेवान्वीक्षिकीति नामधेयम्। अथ तर्हि उक्तदोषस्तदवस्थ इति सत्यं गन्धर्वतन्त्राभिप्रायमनालोच्य दोषमाशङ्कसे तथाहि। निष्ठाया अतीतार्थाभिधायित्वाच्छार्गालीं योनिमापन्नाः प्राप्तशृगालयोनिकाः सर्व एव गौतमप्रोक्तशास्त्रार्थनिरताः केवलतर्कशास्त्रनिपुणाः सन्तः सर्वकर्मसु सन्दिग्धा भवन्तीति वचनस्य निर्गलितार्थः। शास्त्रान्तरव्यावृत्तिस्तु निपातेन व्यज्यते। अतएव आम्नायार्थाविवादेन न्यायचिन्तां करोति यः। तेन निःश्रेयसं प्राप्यं शार्गाली योनिरन्यथेति पठन्ति। मोक्षधर्मश्लोकार्थस्तु। तर्कविद्यामान्वीक्षिकीमनुरक्तोऽहं द्विजानाक्रोष्टातिवक्ता च यस्य ब्राह्मणं प्रत्याक्रोशस्यातिवादस्य च फलनिष्पत्तिर्मम शृगालत्वमिति। युक्तञ्चैतद्वाचिकपापस्य मनुना तथात्वस्य प्रतिपादितत्वात्॥ तथाच मनुः॥ शरीरजैः कर्मदोषैर्याति स्थावरतां नरः। वाचिकैः पक्षिजातित्वं मानसैरन्त्यजातितामिति। मानसपापन्तु न गृहस्थानामित्यग्रे वक्ष्यते कलीतरपरं वा। तथाच भागवते प्रथमस्कन्धे। नानुद्वेष्टि कलिं सम्राट् सारङ्ग इव सारभुक्। कुशलान्याशु सिध्यन्ति नेतराणि कृतानि यत्। सारङ्गो भ्रमर इव सारग्राही सम्राट् राजा कलिं नानुद्वेष्टीत्यन्वयः। कुशलानि पुण्यानि आशु सङ्कल्पेन सिध्यन्ति फलन्ति। इतराणि पापानि

नाशु सिध्यन्ति यतस्तानि कृतान्येव सिध्यन्ति न तु सङ्कल्पमात्रा-णीत्यर्थः । सङ्कल्पः कर्म मानसमित्यमरः ॥ यदि तु तर्कविद्या-पाठेन शृगालत्वमुच्यते तदा तु मोक्षधर्मस्याक्रोष्टेत्यादि श्लोकस्य वैयर्थ्यं स्यादिति सुधीभिर्विचार्यमिति ॥ गान्धर्वे ॥ द्विजन्मना जैमिनिना सर्ववेदमपार्थतः । निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् । सविमर्शेति सविमतिर्विमर्षरूपा । भगवत्येति भग-वती सच्चिदानन्दरूपलक्षणा । स्वात्माविभिन्नयेति । स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत । सहैतावाननवास यथा स्त्रीपुंसौ सम्परिष्वक्तौ स तावानेवात्मानं द्वेधापर्येत् । पतिश्च पत्नी चाभवताम् । तस्मादिदमर्द्धं गच्छत इति तस्मात्तु याज्ञ-वल्क्यस्तस्मादयमाकाशस्त्रिधापूर्य्यत एव तां समभवत्ततो मनुष्या अजायन्त सोऽहे यमीक्षाञ्चक्रे । इति श्रुतिः । एतदुक्तं स्वच्छन्द-भैरवे । गुरुशिष्यपदे स्थित्वा स्वयं देवो महेश्वरः । पूर्वोत्तर-पदैर्वाक्यैस्तन्त्रान् समवतारयत् ॥ पराप्रञ्चाशिकायामपि । परमेशः प्रकाशात्मा प्रकाशस्य महेशितुः । विमर्षैकस्वभावत्वं न क्वचिदवधीयते । पञ्चभिर्मुखैरिति ईशानतत्पुरुषवाम-देवाघोरसद्योजातस्वरूपैः । पञ्चाम्नायानिति पूर्वपश्चिमदक्षि-णोत्तरनिरुत्तरान् सर्वेषां देवानां तत्तत्प्रकरणस्वरूपान् ॥ तदुक्तं भैरवतन्त्रे ॥ पूर्वपश्चिमदक्षिण उत्तरञ्च निरुत्तरमिति । अन्यत्रापि पूर्वाम्नायः पूर्वमुखः पश्चिमः पश्चिमामुखः । दक्षिणो दक्षिणस्तद्वदुत्तरश्चोत्तरः परः । निरुत्तरं तथा चोर्द्ध्वं सिद्धान्तागम-रूपिणम् । ऊर्द्ध्वाम्नायपरिज्ञानं नाल्पस्य तपसः फलमिति । अन्यत्र ।पूर्वाम्नायः शब्दरूपो दक्षिणः कर्णरूपकः । पश्चिमः प्रश्न-रूपः स्यादुत्तरश्चोत्तरस्तथा । ऊर्द्ध्वाम्नायस्तत्त्वबोधः केवलानु-भवात्मकः ॥ कुलार्णवतन्त्रेऽपि ॥ मम पञ्चमुखेभ्यश्च पञ्चाम्नायाः समुद्गता इत्यादि । परमार्थस्वरूपानिति सर्वेषां शैवाद्याम्ना

यानां सारभूतान्॥ निर्वाणतन्त्रे षष्ठपटलेऽपि॥ विभाव्य मुखपद्मं हि शिवस्य वरवर्णिनि!। सद्योजतं वामदेवमघोरञ्च ततः परम्। तत्पुरुषं तथेशानं पञ्चवक्त्रं प्रकीर्त्तितम्। सद्योजातञ्च वै शुक्लं शुद्धस्फटिकसन्निभम्। पीतवर्णं तथा सौम्यं वामदेवं मनोहरम्। कृष्णवर्णमघोरञ्च समं भीमविवर्द्धनम्। रक्तं तत्पुरुषं देवि! दिव्यमूर्त्तिमनोहरम्। श्यामलञ्च तथेशानं सर्वदेवशिवात्मकम्। चिन्तयेत् पश्चिमे चाद्यं द्वितीयञ्च तथोत्तरे। अघोरं दक्षिणे देवं पूर्वे तत्पुरुषं तथा। ईशानं मध्यतो ज्ञेयं चिन्तयेद्भक्तितत्परः॥ समयाचारतन्त्रे द्वितीयपटले तु षडाम्नाया उक्ता यथा॥ पूर्वाम्नायो यदा मन्त्रस्तदा प्राचीदिशि स्थितः। सदाशिवोऽहं भगवानाचारः परिकीर्त्तितः। एवं वै दक्षिणाम्नायो दक्षिणस्यां दिशि स्थितः। एवमेवोत्तराम्नाय उत्तरस्यां दिशि स्थितः। मत्स्यमूर्द्धकृतं देवि! यत् प्रोक्तं तव सन्निधौ। ऊर्द्ध्वाम्नायश्च कथितो देवानामपि दुर्लभः। यदाचारो मुखे देवि! यत् प्रोक्तं गिरिजे! प्रिये!। अथ आम्नाय इत्युक्तः सत्यं सत्यं सुमध्यमे!। षडाम्नायाश्च कथिताश्चोत्पत्तिक्रमनामतः। यस्मिन् यस्मिंश्च ये देवाः कथिताश्च वरानने!। तान् देवांश्च प्रवक्ष्यामि साधकानां हिताय वै। श्रीविद्याभेदसहिता तारा च त्रिपुरा तथा। भुवनेशी चान्नपूर्णा पूर्वाम्नाये प्रकीर्त्तिता। वगलामुखी वशिनी त्वरिता धनदा तथा। महिषघ्नी महालक्ष्मीर्दक्षिणाम्नायकीर्त्तिताः। वाशिनी बालभैरवीत्यर्थः॥ महासरस्वती विद्या तथा वाग्वादिनी परा। प्रत्यङ्गिरा भवानी च पश्चिमाम्नायकीर्त्तिताः॥ कालिकाभेदसहिता ताराभेदैश्च संयुता। मातङ्गी भैरवी छिन्ना तथा धूमावती परा। उत्तराम्नायकथिताः कलौ शीघ्रफलप्रदाः। समस्तभेदसहिताः कालिकायाः प्रकी-

र्त्तिता:। द्वाविंशत्यक्षरी तासां दक्षिणाम्नायकीर्त्तिता। तत्परां परमां विद्या न विद्यान्तरगोपिता॥ पराप्रासादमन्त्रश्च ऊर्द्ध्वाम्नाये प्रकीर्त्तित:। वागीश्वरादयो देवा अध आम्नायकीर्त्तिता:। ऊर्द्ध्वाम्नाया अधश्चैव केवलं मोक्षदो भवेत्। धर्मार्थकाममोक्षार्थे आम्नायान्ये प्रकीर्त्तिता:। यथोक्तविधाना भद्रे! कृत्वा फलमवाप्नुयात्। पूर्वाम्नायादि सर्वासां विधानं शृणु सुन्दरि!। कृत्वा येनाशु लभते फलं यदुत्तमोत्तमम्। षट्कर्मफलदा नृणां षडाम्नाया: प्रकीर्त्तिता:। उत्तराम्नायो देवेशि! तेषामाशु फलप्रद:॥ अतएव पादुकापञ्चकस्तोत्रे षडाम्नायफलोपेतमित्युक्तम्। अत्राम्नायादीनां नानातन्त्रैर्वर्णविरोध: पञ्चषड़ित्याम्नायविरोधश्चाम्नायादिभेदेन समाधानीय इति पूर्वमुक्तं कल्पभेदेन वा। तत्राम्नायभेदेनाचारभेद उक्तस्तु निरुत्तरतन्त्रे प्रथमपटले॥ पूर्वाम्नायोदितं कर्म पाशवं कथितं प्रिये!। यदुक्तं दक्षिणाम्नाये तदेव पाशवं स्मृतम्। पश्चिमाम्नायजं कर्म पशुवीरसमाश्रितम्। उत्तराम्नायजं कर्म दिव्यवीराश्रितं प्रिये!। दिव्योऽपि वीरभावेन साधयेत् पितृकानने। वीरासनं विना दिव्य: पूजयेत् पितृकानने। ऊर्द्ध्वाम्नायोदितं कर्म दिव्यभावाश्रितं प्रिये!। एतेन तन्त्रादीनामेवाम्नायत्वमायातम्। तुल्यप्रमाणत्वज्ञापनाय तु श्रुतिवेदाम्नायानामेकपर्य्यायता अमरसिंहेन स्वीकृता। अतएव मेरुतन्त्रे प्रथमप्रकाशे॥ न वेद: प्रणवं त्यक्त्वा मन्त्रो वेदसमुत्थित:। तस्माद्वेदपरो मन्त्रो वेदाङ्गश्चागम: स्मृत इति। तन्त्राणां वेदाङ्गत्वमुक्तम् वेदे परो वेदपर उत्तम इत्यर्थ:। वेदा मन्त्रा एवाङ्गानि यस्य स तथा। निरुत्तरतन्त्रेऽपि॥ आगम: पञ्चमो वेद: कौलस्तु पञ्चमाश्रम इति। एवञ्च प्रागुक्ततापनीव्याख्याने शङ्कराचार्य्यैरेतावत्य इति विशेषणदानेन तापन्युक्ताष्टादशेति विशेषणेन च दर्शनानां

पृथङ्निर्देशेनाप्यन्येषां न विद्यात्वं किन्तु सामान्येन शास्त्रत्वमेव। तानि तु कामसूदनटसुद्राशिल्पाश्वगजरत्नश्येनपरीक्षास्त्रनिर्माणस्थापत्यकेरलिस्वरशकुनराजनीतिकाव्यालङ्कारप्रभृतीनि। अतएव विद्याः शास्त्राणि शिल्पानि नृत्यगीतादिकञ्च यदि सरस्वतीस्तवे विद्याशास्त्रयोः पृथगुपादानम् तर्हि शिल्पादीनामपि शास्त्रत्वात् कथं तत्र पृथङ्निर्देश इति चेन्नैदम्। शिल्पादिशब्देन शिल्पादिक्रिया तन्त्राभिमता अतो न दोषः। तेषां शास्त्रत्वे प्रमाणन्तु कामशास्त्रमजानन्तो रमन्ते पशवो यथेत्यादिवचनम्। अष्टादशविद्यान्तःपातिपुराणविद्यामध्ये प्रचरद्रूपत्वात् सटीकतया निःसन्दिग्धार्थत्वाच्च भागवतमात्रस्य लक्षणमुच्यते। नारदपञ्चरात्रे द्वितीयरात्रे सप्तमाध्याये॥ ग्रन्थाष्टादशसाहस्रंच द्वादशस्कन्धसम्मितम्। शुकप्रोक्तं भागवतं श्रुत्वा निर्वाणतां व्रजेत्। पुरा भगवता प्रोक्तं कृष्णेन ब्रह्मणे शुके। पुराणसारं शुद्धं तत् तेन भागवतं विदुः॥ शारदाद्वितीयपटले॥ मातृकावर्णभेदेभ्यः सर्वे मन्त्राः प्रजज्ञिरे। मन्त्रविद्याविभागेन द्विविधा मन्त्रजातयः। मन्त्राः पुंदेवता ज्ञेया विद्याः स्त्रीदेवताः स्मृताः॥ प्रयोगसारेऽपि॥ द्विधा प्रोक्ताश्च ते मन्त्राः सौम्यसौरविभागतः। सौराः पुंदेवता मन्त्रास्ते च मन्त्राः प्रकीर्त्तिताः। सौम्याः स्त्रीदेवतास्तद्वद्विद्यास्ते विश्रुता इति प्रयोगविशेषसिद्ध्यर्थं मन्त्राणां त्रैविध्यमाह शारदायाम्। पुंस्त्रीनपुंसकात्मानो मन्त्राः सर्वे समीरिताः। पुंमन्त्रा हुंफडन्ताः स्युर्द्विठान्ताश्च स्त्रियो मताः। नपुंसका नमोऽन्ताः स्युरित्युक्ता मनवस्त्रिधा॥ ननु निष्कलचैतन्यात्मकानन्दवाच्यस्य मन्त्रस्य कथं पुंस्त्र्यादिकल्पनमिति चेत् सत्यं वस्तुतो नास्त्येव उपासकानामर्थे कल्पनामात्रं यदाहुः। चिन्मयस्य द्वितीयस्य निष्कलस्याशरीरिणः। उपासकानां कार्य्यार्थं ब्रह्मणो रूपकल्पना।

हुं फड़िति सम्प्रदायादग्रस्तसमस्तास्तदन्ता इति। द्विठान्ता इति स्वाहान्त इत्यर्थः॥ ठशब्देन लिपिसाम्यादर्थाद्विन्दु-रुच्यते। ठः शून्ये च हृहद्वलाविति कोषात्। शून्यरूपमेव तस्य द्वित्वं तेन विसर्गः स च शक्तिरूप इति द्विठशब्देनाग्निशक्तिः स्वाहोक्ता। प्रयोगसारे तु वषट्स्वाहान्तगाः स्त्रियः। नपुंसका हुंनमोऽन्ता इति मन्त्रास्त्रिधा स्मृताः। तारेणाप्यनुमीयन्ते मन्त्राः स्वाद्यन्तमध्यतः। प्रत्यासन्नात्मभावेन यथा पुंस्त्रीनपुं-सकाः। विन्दुसर्गेन्दुखण्डान्तास्तद्वदेव प्रकीर्त्तिताः। शारदा-याम्॥ शस्तास्ते त्रिविधा मन्त्रा वश्यशान्त्याभिचारके॥ नारा-यणीये॥ शेषाः पुमांसः शस्तास्ते वश्योच्चाटविशेषतः। चुद्र-क्रियाद्युपध्वंसे स्त्रियोऽन्यत्र नपुंसकाः। शारदायाम्॥ अग्नी-षोमात्मका मन्त्रा विज्ञेयाः क्रूरसौम्ययोः। पूर्वं मातृकायाः कुण्डल्या आविर्भावस्योक्तत्वात्तस्य अग्नीषोमात्मकत्वात् मन्त्रा-णामपि तथेति हृदयम्। तत्रैव कर्मणोर्वह्नितारान्त्यवियत्-प्रायाः समीरिताः॥ क्रूरसौम्ययोः कर्मणोरित्यन्वयः। वह्नी-रेफः। तार ॐकारः। अन्त्यः चकारः। वियत् हकारः। प्रायःशब्दो बाहुल्यवाची॥ आग्नेया मनवः सौम्या भूयिष्ठेन्दु-मृताचराः। आग्नेया इति पूर्वेण सम्बध्यते॥ इन्दुः सकारः। तत्त्वन्यासे इन्दुमण्डलस्य सकारादित्वेन न्यस्तत्वात्। अमृतं वकारः॥ अत्रैकस्य बाहुल्ये तत्त्वम्। उक्तञ्चेशानसंहितायाम्॥ ताराकाशाद्यन्तवाद्यन्तवर्णा आग्नेयाः स्युः सौम्यवर्णास्ततोऽन्ये। आग्नेयाऽपि स्यात्तु सौम्यो नमोऽन्तः सौम्योऽपि स्यादग्निमन्त्रः फड़न्त इति। स्यादाग्नेयः क्रूरकर्मप्रसिद्धेः। सौम्यः सौम्य-कर्म कुर्य्याद् यथावदिति॥ नारायणीयेऽपि॥ तारोऽन्त्याग्नि-वियत्प्रायो मन्त्र आग्नेय इष्यते। शिष्टः सौम्यप्रशस्तौ तौ कर्मणोः क्रूरसौम्ययोरिति॥ शारदायाम्॥ आग्नेयाः सम्प्र-

बुध्यन्ते प्राणे चरति दक्षिणे। भागी नाभिस्थिते प्राणे सौम्या बोधं प्रयान्ति च। नाड़ीद्वयं गते प्राणे सर्वे बोधं प्रयान्ति च। प्रयच्छन्ति शुभं सर्वे प्रबुद्धा मन्त्रिणां सदा॥ सुप्तकाले प्रयोगी न कार्य्यः। उक्तञ्च नारायणीये॥ सुप्तः प्रबुद्धमात्रो वा मन्त्रः सिद्धिं न यच्छति। स्वापकाले वामवहो जागरे दक्षिणावहः॥ आग्नेयस्य मनःसौम्यमन्त्रस्यैतद्विपर्य्ययः॥ स्वापकाले दक्षिणश्वासो जागरणे वामनिश्वास इति वैपरीत्यम्। प्रबोधकालं जानीयादुभयोरन्तयोर्वहमिति॥

इति श्रीप्राणतोषिण्यां प्रथमे सर्गकाण्डे आम्नायभेदरूप-
केश्वरकथनं नामाष्टमः परिच्छेदः।

यद्यपि छिन्नादिदुष्टमन्त्राणां लक्षणं तन्त्रसारकारेणैव धृतं तथापि तेषां व्याख्यानार्थं नानाशोधनदर्शनार्थञ्चात्र लिख्यते॥ शारदायाम्। छिन्नादिदुष्टमन्त्रास्ते पालयन्ति न साधकम्। छिन्नो रुद्धः शक्तिहीनः पराङ्मुख इतीरितः। वधिरो नेत्रहीनश्च कीलितः स्तम्भितस्तथा। दग्धः स्रस्तश्च भीतश्च मलिनश्च तिरस्कृतः। भेदितश्च सुषुप्तश्च मदोन्मत्तश्च मूर्च्छितः। हृतवीर्य्यश्च हीनश्च प्रध्वस्तो बालकः पुनः। कुमारश्च युवा प्रौढ़ो वृद्धो निस्त्रिंशकस्तथा। निर्वीर्य्यः सिद्धिहीनश्च मन्दः कूटस्तथा पुनः। निरंशः सत्त्वहीनश्च केकरो वीजहीनकः। धूमितालिङ्गितौ स्यातां मोहितश्च क्षुधार्त्तकः। अतिदृप्तोऽङ्गहीनः स्यादतिक्रुद्धः समीरितः। अतिक्रूरश्च सव्रीड़ः शान्तमानस एव च। स्थानभ्रष्टश्च विकरः सातिवृद्धः प्रकीर्त्तितः। निःस्नेहः पीड़ितस्तथापि वक्ष्याम्येषाञ्च लक्षणम्॥ तथा पुनरित्यनेन कूट एव निरंशक इत्याह। अतिवृद्ध इति निःस्नेहविशेषणम्। तेन निःस्नेह इत्यनन्तरमतिवृद्ध इत्युक्तमिति राघवभट्टः॥ मनोर्यस्यादिमध्यान्तेष्वानलं वीजमुच्यते। संयुक्तं वा वियुक्तं वा

स्वराक्रान्तं त्रिधा पुनः। चतुर्धा पञ्चधा वाथ स मन्त्रश्छिन्नसंज्ञकः। आदिमध्यावसानेष्विति समुच्चयः। संयुक्तं वा अक्षरान्तरयुक्तं वियुक्तं वा केवलं वा इत्येकैकं द्विः सम्बध्यते। विशिष्टं मलिनं वा विशिष्टं वीजं वा यस्य स छिन्नसंज्ञक इति। वीजं शक्तिवीजं स्वराक्रान्तं दीर्घस्वराक्रान्तम् आ ई ऊ ऐ औ एतत् स्वरयुक्तम् इति सम्प्रदायविदः। वीजशब्देन मायावीजं कथमिति चेदुक्तं शैवे॥ मायावीजस्य नामानि मानिनी शिववल्लवी। वातावर्त्तिः कला वाणी वीजं शक्तिश्च कुण्डलीति॥ आदिमध्यावसानेषु भूवीजद्वन्द्वलाञ्छितम्। रुद्रमन्त्रः स विज्ञेयो भुक्तिमुक्तिविवर्ज्जितः। भूवीजं लः। द्वन्द्वेति प्रत्येकं सम्बध्यते। पिङ्गलामते। आदौ द्विधा द्विधा मध्ये पुनश्चान्ते द्विधा भवेत्। इन्द्रवीजमसौ मन्त्रो रुद्र इत्यभिधीयते॥ मायात्रितत्त्वश्रीवीजवारहीनस्तु यो मनुः। शक्तिहीनः स कथितो यस्य मध्ये न विद्यते। माया भुवनेशीवीजम्। त्रितत्त्वं हुङ्कारः प्रणवो वा। वारः फ्रङ्कारः। श्रीवीजं लक्ष्मीवीजम्। एषां न समुच्चयः। तदुक्तम्। मायावीजं न यत्रास्ति त्रितत्त्वं वारमेव वा। श्रीरहं वापि मन्त्रोऽसौ शक्तिहीनः प्रकीर्त्तितः। पिङ्गलामतेऽपि। मायावीजं त्रितत्त्वं वा श्रीरहं यत्र नास्ति चेत्। शक्तिहीन इति ख्यातः सामर्थ्यं हन्ति मन्त्रिण इति॥ कामवीजं मुखे माया शिरस्यङ्कुशमेव वा। असौ पराङ्मुखः प्रोक्तो हकारो विन्दुलाञ्छितः। यस्य मध्ये इति पूर्वपद्यचरणेनान्वयः। मुखे आदौ। शिरसि अन्ते। अङ्कुशं क्रोङ्कारः। वाशब्दः समुच्चये। यदुक्तं पिङ्गलामते॥ कामवीजं नयन्मध्ये मायादावन्तिमोऽङ्कुशः। पराङ्मुख इति प्रोक्तो मनुः सिद्धेर पराङ्मुख इति॥ मन्त्रमुक्तावल्यामपि। यस्य कामकलावीजं मध्यस्थाने न विद्यते। आदौ मायाङ्कुशश्चान्ते ज्ञेयश्चासौ पराङ्मुख इति॥ आ-

द्यन्तेमध्येष्विन्दुर्वा न भवेद्बधिरः स्मृतः। हकारो विन्दुलाञ्छित इति पूर्वश्लोकचरणेनान्वयः। विन्दुलाञ्छित इन्दुरित्यनेनापि सम्बध्यते। आद्यन्तमध्येष्विति न समुच्चयः। यदुक्तम्। शून्यं विन्दुसमायुक्तमाद्यन्ते वाथ मध्यतः। न भवेज्जीववीजं वा यस्यासौ वधिरः स्मृत इति। केचिद्विन्दुशब्देन ठकाराख्यमाचक्षते। जीववीजेत्यनेन एतदपि परास्तम्॥ पञ्चवर्णो मनुर्यः स्याद्रेफार्केन्दुविवर्ज्जितः। नेत्रहीनः स विज्ञेयो दुःखशोकामयप्रदः। अर्को हकारः॥ वैष्णवमात्तत्त्वन्यासे॥ अर्कमण्डलतत्त्वस्य हकारादित्वेन न्यस्तत्वात् हकारस्य पुंरूपत्वाद्वा अर्कत्वम्। इन्दुः सकारः। दुःखशोकामयप्रद इति क्रमेण फलम्। यतोऽग्निसूर्य्यचन्द्राणां नेत्रत्रयात्मकत्वादेकद्विहीनतः कारणतापि ज्ञेया। तदुक्तं पिङ्गलामते॥ पञ्चाक्षरस्तु यो मन्त्रो वह्निचन्द्रार्कवर्जितः। नेत्रहीन इति ज्ञेयो दुःखशोकभयावह इति॥ आदिमध्यावसानेषु हंसप्रासादवाग्भवौ। विद्येते स तु मन्त्रः स्यात् स्तम्भितः सिद्धिरोधकः। हंसस्वरूपं प्रासादो ह्रौंवीजम्। वाग्भव ऐंवीजम्॥ वह्निवायुसमायुक्तो यस्य मन्त्रस्य मूर्द्धनि। सप्तधा दृश्यते तन्तु दग्धं मन्येत मन्त्रवित्। वह्नी रेफः वायुर्यकारस्तेन समवेतः अत ऊर्द्ध्वं वा मूर्द्धनि आदौ। तदुक्तं पिङ्गलामते। आदिस्थैः सप्तभिर्वीजैर्मारुतैः पावकाक्षरम्। दीपितं यत्र तं मन्त्रमार्य्या दग्धं प्रचक्षते॥ अस्त्रं द्वाभ्यां त्रिभिः षड्भिरष्टाभिर्दृश्यतेऽक्षरैः। स्रस्तः सोऽभिहितो यस्य मुखेन प्रणवः स्मृतः। द्वाभ्यां त्रिभिः षड्भिरष्टाभिर्वा अक्षरैर्वा यस्य अस्त्रं फट्कारो दृश्यते। पिङ्गलामते भीतनाम्ना अयमुक्तः। आदिमध्यावसानेषु यदि मन्त्रोऽसंयुतः। भीत इत्युच्यते मन्त्रः फलहीनो विशारदैः॥ शिवो वा शक्तिरथ वा भीताख्यः स प्रकीर्त्तितः। यस्य मुखेनेत्यादिगतश्लोकचरणेनान्वयः। यस्य मुखे आदौ शिवो

हङ्कारः शक्तिः सकारो नास्ति। अयन्तु मन्त्रान्तरेणोक्तः। पिङ्गलामते॥ शिवशक्तिस्तथोङ्कारो यस्यादौ नास्ति तं मनुम्। वदन्ति मातृकाहीनं हीनशक्तिप्रदायकम्॥ आदिमध्यावसानेषु भवेन्मार्णचतुष्टयम्। यस्य मन्त्रः स मलिनो मन्त्रवित्तु विवर्ज्जयेत्॥ आदीत्यादेः समुच्चयः। मार्णचतुष्टयमित्यत्रापि समुच्चयः। तेन स्थानत्रये मिलित्वा मार्णचतुष्टयमपेक्षितम्। तदुक्तं पिङ्गलामते॥ आदिमध्यान्तदेशेषु चतुर्म्मा यत्र दृश्यते। मकारो मलिनं विद्यात्तं मन्त्रं मन्त्रवित् सदा॥ यस्य मध्ये दकारो वा क्रोधो वा मूर्द्धनि द्विधा। अस्त्रं तिष्ठति मन्त्रः स तिरस्कृत उदाहृतः। क्रोधो हुं वीजम्। मध्ये दकारक्रोधयोर्विकल्प इति। मूर्द्धनि अन्ते। अस्त्रं द्विधास्त्रमिति सम्बन्धः। तदुक्तम्। दकारः क्रोधवीजं वा यस्य मध्ये व्यवस्थितम्। फड्द्वयञ्च स्थिते प्रान्ते यन्मनोः स तिरस्कृत इति॥ ॐद्वयं मुखे शीर्षे वषड़स्त्रञ्च मध्यतः। यस्यासौ भेदितो मन्त्रस्त्याज्यः सिद्धिषु सूरिभिः। शीर्षे अन्ते। वषट् अस्त्रं फट्॥ मन्त्रमुक्तावल्याम्। अस्त्रवर्णद्वयं मध्ये वषड़न्ते तथैव च। यस्य मन्त्रस्य भिन्नोऽसौ विज्ञेयः सिद्धिवर्ज्जित इति॥ पिङ्गलामतेऽपि॥ अस्त्रवर्णद्वयं मध्ये वषडन्ते तथोदिताः। अधमाः स्युरसौ मन्त्रो भेदितः परिकीर्त्तितः॥ त्रिवर्णो हंसहीनो यः सुषुप्तः स उदाहृतः। त्रिवर्ण इति त्रिवर्णत्वं हंसहीनत्वमेकस्यैवोक्तम्॥ पिङ्गलामते॥ वर्णत्रयं भवेद् यत्र हंसहीनं स शम्भुना। सुषुप्त इति सिद्धान्तः प्रोक्तः सिद्धिफलापह इति॥ मन्त्रमुक्तावल्यामपि॥ वर्णत्रयात्मको मन्त्रो यस्तु हंसविवर्ज्जितः। प्रसुप्तः स तु विज्ञेयः सर्वसिद्धिफलापहः। शारदायाम्॥ मन्त्रो वाप्यथ वा विद्या सप्ताधिकदशाक्षरः। फट्कारपञ्चकादिर्यो मदोन्मत्त उदीरितः। सप्ताधिकानि अष्टौ दश चाक्षराणि यत्र सः॥ फट्काराणां पञ्चकमादौ यस्य सः।

तदुक्तं राघवभट्टधृतेन। विद्या वा यदि वा मन्त्रो यद्यष्टादश-वर्णकः। पञ्चफट्कारपूर्वः स्यान्मदोन्मत्तः स उच्यते। पिङ्गला-मतेऽपि॥ विद्या वा मन्त्रराजो वा यः स्यात् सप्तदशाधिकः। फट्कारा: पञ्च पूर्वञ्चेदुन्मत्तः स प्रकीर्त्तितः॥ शारदायाम्॥ तद्द-द्वस्त्रं स्थितं मध्ये यस्य मन्त्रः स मूर्च्छितः। यस्य मन्त्रस्य मध्ये तदस्त्रं स्थितं पञ्च वा फट्कारवीजानि स्थितानि स मूर्च्छित इत्यर्थः॥ विरामस्थानगं यस्य हृतवीर्य्यः स उच्यते। विराम-स्थानगमन्ते अस्त्रं यस्येत्यर्थः। पिङ्गलामते तु॥ अस्त्रमन्ते भवेद्यस्य मध्ये प्रान्ते च शम्भुना। हृतवीर्य्य इति ख्यातः स मन्त्रो नैव सिद्धिद इति॥ शारदायाम्॥ आदौ मध्ये तथा चान्ते चतुरस्त्रयुतो मनुः। ज्ञातव्यो हीन इत्येष यः स्यादष्टा-दशाक्षरः। आदाविति समुच्चयः। स्थानत्रये मिलित्वा अस्त्रचतुष्ट-यम्। तन्त्रान्तरे तु भीतनाम्ना अयमुक्तः। यथा। आदावन्ते तथा मध्ये चतुरस्त्रेण संयुतम्। अष्टादशाक्षरं मन्त्रं भीतं तं भैरवोऽब्रवीत्। अन्यत्र भीमनाम्ना अयमुक्तः। यथा। आदौ मध्ये तथा चान्ते चतुरस्त्रयुतो मनुः। ज्ञातव्यो भीम इत्येष यः स्यादष्टादशाक्षरः॥ शारदायाम्॥ एकोनविंशत्यर्णो वा यो मन्त्र-स्तारसंयुतः। हृल्लेखाङ्कुशवीजाढ्यस्तं प्रध्वस्तं प्रचक्षते। तारः प्रणवः। हृल्लेखा ह्रीमिति। अङ्कुशः क्रोमिति। एकोनविंशति-वर्णोऽष्टादशाक्षरो वा॥ तथा च राघवभट्टधृतवचनम्। स स्याद-ष्टादशाक्षरः। विंशत्येकोनवर्णश्च मायोङ्कारांकुशान्वितः। प्र-ध्वस्त इत्यसौ मन्त्रः शम्भुदेवेन कीर्त्तित इति॥ सप्तवर्णो ध्रुव-युतो मनुर्निस्त्रिंश ईरितः। ध्रुवः प्रणवः। अन्यत् सुगमम्॥ सप्त-वर्णो मनुर्बालः कुमारोऽष्टाक्षरः स्मृतः। षोड़शार्णो युवा प्रौढ़-श्चत्वारिंशल्लिपिर्मनुः॥ लिपिरक्षरम्॥ राघवभट्टधृतमपि॥ सप्ता-क्षरो भवेद्बालः कुमारश्चाष्टवर्णकः। चत्वारिंशाक्षरः प्रौढ़स्त्ररुण:

षोड़शाक्षर इति ॥ त्रिंशवर्णश्चतुःषष्टिवर्णो मन्त्रः शताक्षरः । चतुःशताक्षरश्चापि वृद्ध इत्यभिधीयते ॥ नवाक्षरो ध्रुवयुतो मनुर्निस्त्रिंश ईरितः ॥ नवाक्षरत्वं ध्रुवयुक्तत्वञ्चैकस्यैव ॥ पिङ्गलामते ॥ नवाक्षरस्तु निस्त्रिंशो ध्रुवयुक्तश्च मृत्युद इति ॥ शारदायाम् ॥ यस्यावसाने हृदयं शिरोमन्त्रो च मध्यतः । शिखा वर्म च न स्यातां वौषट् फट्कार एव वा । शिवशक्त्यार्णहीनो वा स निर्वीर्य्य इति स्मृतः ॥ हृदयं नमः । शिरः स्वाहा । शिखा वषट् । वर्म हुम् । शिवो हकारः । शक्तिः सकारः । राघवभट्टधृतम् ॥ अन्ते तु हृच्छिरोवीजो मध्ये वर्म्म शिखा तथा । शिवशक्त्यात्मकौ वर्णौ न स्तो यस्य स मन्त्रराट् । निर्वीर्य्य इति सम्प्रोक्तः सर्वकर्मसु गर्हितः ॥ तन्त्रान्तरे तु ॥ निर्वीर्य्यस्तु समाख्यात आदावोङ्कारवर्ज्जित इति ॥ एषु स्थानेषु फट्कारः षोढ़ा यस्मिन् प्रदृश्यते । स मन्त्रः सिद्धिहीनः स्यान्मन्दः पंक्त्यक्षरो मनुः । आदिमध्यावसानेषु एषां समुच्चयः । षोढ़ेति स्थानत्रये मिलित्वेत्यर्थः । मन्द इति पंक्त्यक्षरो दशाक्षरः । पंक्तिच्छन्दसो दशाक्षरत्वात् उक्तादशाक्षरो भवेन्मन्त्र इति ॥ कूट एकाक्षरो मन्त्रः स एवोक्तो निरंशकः ॥ द्विवर्णः सत्त्वहीनः स्यात् चतुर्वर्णस्तु केकरः ॥ षड़क्षरो वीजहीनस्त्वर्द्धसप्ताक्षरो मनुः । अत्रार्द्धसप्ताक्षरत्वम् अर्द्धद्वादशवर्णत्वञ्च वक्ष्यमाणम् । अन्ते स्वरस्य न सत्त्वाज्ज्ञेयम् ॥ सार्द्धद्वादशवर्णो वा धूमितः स तु निन्दितः । सार्द्धवीजत्रयं तद्वद्वेकविंशतिवर्णकः । सार्द्धवीजत्रयमपि पूर्ववत् तद्वद्धूमित इत्यर्थः । तदुक्तं पिङ्गलामते ॥ अर्द्धसप्ताक्षरो मन्त्रः सार्द्धद्वादशवर्णकः । धूमितः स समाख्यातः सार्द्धवर्णत्रयोऽथ वेति ॥ विंशत्यर्णस्त्रिंशदर्णो वा यः स्यादालिङ्गितस्तु सः ॥ द्वाविंशत्यक्षरो मन्त्रो मोहितः परिकीर्त्तितः ॥ द्वात्रिंशदर्णो मन्त्रो यः सप्तविंशतिवर्णकः । क्षुधार्त्तः स तु विज्ञेयश्चतुर्विंशतिवर्णकः ॥ एका-

दशाक्षरो वापि पञ्चविंशतिसंख्यकः। त्रयोविंशतिवर्णो वा मन्त्रो ह्रस्व उदाहृतः॥ उद्देशावसरे अतिह्रस्वस्योक्तत्वात् लक्षणावसरे ह्रस्वलक्षणं कथं क्रियते इति नोद्देश्यं सत्यपि उत्सर्गे भेदात्॥ तदुक्तं राघवभट्टधृतमन्त्रमुक्तावल्याम्॥ धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते। तमेव विशिनष्ट्यन्योऽनर्थकोऽन्यः प्रयुज्यते॥ षड्विंशत्यक्षरो मन्त्रः षड्विंशत्यक्षरस्तथा। त्रिंशदेकोनवर्णो वाप्यङ्गहीनोऽभिधीयते॥ अष्टाविंशत्यक्षरो य एकत्रिंशदथापि वा। अतिकुब्जः स कथितो निन्दितः सर्वकर्मसु॥ त्रिंशदक्षरको मन्त्रस्त्रयस्त्रिंशदथापि वा। अतिक्रूरः स गदितो निन्दितः सर्वकर्मसु॥ चत्वारिंशतमारभ्य त्रिषष्टिर्यावदापतेत्। तावत्संख्या निगदिता मन्त्राः सव्रीड़संज्ञकाः। चत्वारिंशदक्षरमारभ्य एकैकाक्षरवृद्ध्या चतुर्विंशतिप्रकारः स व्रीड़ित इत्यर्थः॥ पञ्चषष्ट्यक्षरा ये स्युर्मन्त्रास्ते शान्तमानसाः॥ एकोनशतपर्य्यन्ताः पञ्चषष्ट्यक्षरोदिताः। ये मन्त्रास्ते निगदिताः स्थानभ्रष्टाह्वया बुधैः॥ पञ्चषष्ट्यक्षरमादिर्यस्य इति अतद्गुणसंविज्ञानो बहुव्रीहिरयम्। अन्यथा पञ्चषष्ट्यक्षरस्य पूर्वं शान्तमानसत्वेनोक्तत्वात्तस्यापीयं संज्ञा स्यात्॥ स्पष्टमुक्तं मन्त्रमुक्तावल्यां यथा॥ पञ्चषष्ट्युत्तरा ये च यावदेकोनकं शतमिति। तेन एकैकाक्षरवृद्ध्या चतुस्त्रिंशत्प्रकाराः स्थानभ्रष्टसंज्ञका इति॥ त्रयोदशाक्षरा ये स्युर्मन्त्राः पञ्चदशाक्षराः। विकलास्तेऽभिधीयन्ते शतं सार्द्धशतन्तु वा। शतद्वयं द्विनवतिरेकहीनाथवापि वा। शतत्रयं वा यत्संख्या निःस्नेहास्ते समीरिताः। एकहीना द्विनवतिरेकाधिका नवतिरित्यर्थः॥ चतुःशतान्यथारभ्य यावद्वर्णसहस्रकम्। अतिवृद्धः प्रयोगेषु परित्याज्यः सदा बुधैः॥ सहस्रार्णाधिका मन्त्रा दण्डकाः पीड़िताह्वयाः॥ द्विसहस्राक्षरा मन्त्राः खण्डशः सप्तधा कृताः। ज्ञातव्याः स्तोत्ररूपास्ते मन्त्रा एते यथा

स्थिताः। तथा विद्याश्च बोद्धव्या मन्त्रिभिः सर्व्वकर्मसु। तथा सदोषा इत्यर्थः॥ राघवभट्टधृतम्॥ यथा मन्त्रास्तथा विद्या भेदभिन्नाः परस्परम्। ज्ञातव्या देशिकेन्द्रेण नानातन्त्रेषु भाषिता इति। भेदभिन्ना इति लक्षणभेदेन भिन्ना नतु परमार्थतः। केचित्तु सर्व्वकर्मस्वित्यत्र काम्यकर्मस्विति पठन्तो मुक्त्यर्थजपे एतद्दोषा-भावात् दशसंस्कारादि न कर्त्तव्यमित्याहुः। तन्न। मुक्त्यर्थजपे-ऽपि वक्ष्यमाणशोधनादिकं कर्त्तव्यमेवेति राघवभट्टोक्तवदिति॥ शारदातिलके द्वितीयपटले॥ दोषानिमानविज्ञाय यो मन्त्रान् भजते बुधः। सिद्धिर्न जायते तस्य कल्पकोटिशतैरपि। इत्यादि-दोषदुष्टांस्तान्मन्त्रानात्मनि योजयन्। शोधयेदूर्द्ध्वपवनो बद्धया योनिमुद्रया। बद्धया योनिमुद्रया ऊर्द्ध्वपवनः कृतकुम्भकः साधक आत्मनि मन्त्रान् योजयन् शोधयेदित्यन्वयः॥ शोधन-प्रकारस्तु राघवभट्टधृतेनोक्तो यथा॥ बद्ध्वा तु योनिमुद्रां तां सङ्कोचाधारपङ्कजम्। तदुत्पन्नान् मन्त्रवर्णान् कुर्व्वतश्च गता-गतान्। ब्रह्मरन्ध्रावधि ध्यात्वा वायुनापूर्य्य कुम्भयेत्। सहस्रं प्रजपेन्मन्त्रं मन्त्रदोषोपशान्तये। योनिस्थानमुद्रणाद्धि योनि-मुद्रा। महामुद्रया मूलबन्धं संशोधयेत्॥ महामुद्रा तु राघवभट्टधृता यथा॥ पादमूलेन वामेन योनिं सम्पीड्य दक्षिणम्। पादं प्रसारितं कृत्वा कराभ्यां पूरयेन्मुखम्। कण्ठे वक्त्रं समारोप्य धारयेद्वायुमूर्द्ध्वतः। मूलरन्ध्रस्तु। पार्ष्णि-भागेन सम्पीड्य योनिमाकुञ्चयेद् गुदम्। अपानमूर्द्ध्वमाकृष्य मूलबन्धो निगद्यते॥ अथ योनिमुद्रा कुब्जिकातन्त्रे षष्ठ-पटले॥ अथ वक्ष्ये महेशानि! शारदेन्दुनिभानने!। अतीव परमं देवि! न प्रकाश्यं कदाचन। न प्रकाश्यमिदं देवि! स्वयोनिरिव पार्व्वति!। निशीथे मुक्तकेशस्तु नग्नः शक्तिसम-न्वितः। चिन्तयेदिष्टदेवीञ्च योगिनां योगरूपिणीम्। गुह्य-

देशे वामपादगुल्फं संयोजयेत् सुधीः। शरीरञ्च स्थिरीकृत्य जिह्वायां तालुकं न्यसेत्। नासाग्रं नेत्रयुक्तञ्च कर्त्तव्यञ्च महेश्वरि!। कण्ठासनं तथा कृत्वा चिन्तयेदूर्द्ध्ववाहिनीम्। भुजङ्गरूपिणीं देवीं मूलाधारनिवासिनीम्। प्रातराधारकमले हुतभुङ्मण्डलोपरि। चतुर्भुजां महादेवीं परमामृतवृंहिताम्। श्यामवर्णां महादेवीं महापद्मासनस्थितम्। अभयञ्च वरञ्चैव दक्षिणे धारिणीं सदा। खड्गं मुण्डञ्च वामेऽस्मिन् धारयन्तीं सनातनीम्। मुक्तकेशीं स्मितमुखीं श्मशानालयवासिनीम्। दन्तुरां दक्षिणव्याप्ति मुक्तकेशीं दिगम्बरीम्। शवानां करसङ्घातैः कृतकाञ्चीं हसन्मुखीम्॥ लम्बमानां मुण्डमालां धारयन्तीं सदाशिवाम्। शवस्य हृदये चैव दक्षपादनिषेविताम्। महाकालेन रत्यर्थमत्यन्तलालसापराम्। चन्द्रसूर्य्यवह्निरूपनयनत्रयसंयुताम्। अर्द्धचन्द्रधरां देवीं पीनोन्नतपयोधराम्। शिवाभिर्घोररावाभिश्चतुर्दिक्षु समन्विताम्। चतुर्वेदैरपाराञ्च सर्व्ववेदविभूषिताम्। कामदां कामरूपाञ्च भक्तानां त्राणकारिणीम्। चतुर्वर्गप्रदां भीमां वन्दे दक्षिणकालिकाम। स्वाधिष्ठाने महादेवीं चिन्तयेदिन्दुरूपिणीम्। तत्र देवीञ्च सञ्चिन्त्य निर्म्मलं विश्वरूपिणम्। अभयं वरदञ्चैव हस्तञ्च सुरसुन्दरि!। धनुर्व्वाणधरां देवीं पाशाङ्कुशधरां पुनः। वाणलिङ्गसमायुक्तां नीलमेघाननप्रभाम्। ललज्जिह्वां महादेवीं विष्णुरूपां सनातनीम्। बालयुग्मलसल्कर्णां दुष्टासुरनिसूदिनीम्॥ व्याघ्रचर्म्मपरीधानां ब्रह्मरन्ध्रनिवासिनीम्। अतिप्रसन्नवदनां स्मेराननसरोरुहाम्। मणिपूरे चिन्तयेत्तु तेजःपुञ्जां सनातनीम्। दिगम्बरीं करालास्यां मुक्तकेशीं चतुर्भुजाम्। रक्तवर्णां महादेवीं रक्तवस्त्रविधारिणीम्। पद्मासनां महादेवीं सर्व्वनागविभूषिताम्। शङ्खचक्रगदापद्मधारिणीं सुरपूजिताम्। धर्म्मार्थ-

दायिनीं देवीं भक्तानां त्राणकारिणीम्। सर्वसिद्धिप्रदां देवीं जगतां मोहिनीं पुनः। महामायां मोहिनीञ्च ज्ञानिनां ज्ञानदां सतीम्। सुन्दरीं रमणीं रामां चतुर्वर्गफलप्रदाम्। शान्तां शान्तप्रियासुरासुरदैत्यविनाशिनीम्। मधुमांसप्रियां कृष्णां यशोदानन्दकारिणीम्। भक्तिगम्यां महादेवीं महाकालनिवासिनीम्। सर्वेषां जननीं नित्यां चिन्तयेत् सुरपूजिताम्। अनाहते महादेवि! चिन्तयेत् परदेवताम्। अष्टभुजां महादेवीं रक्तवर्णां त्रिशक्तिकाम्। धनुर्बाणञ्च खड्गञ्च चक्रञ्च दधतीं शिवे!। पाशाङ्कुशधरां देवीं ब्रह्मादिसुरवन्दिताम्। अर्द्धचन्द्रधरां देवीं पीनोन्नतपयोधराम्। पद्मासनां महामायां महापद्मासनस्थिताम्। एवं सञ्चिन्तयेद्द देवीं ब्रह्ममार्गेण गामिनीम्। विशुद्धे तु महाचक्रे चिन्तयेत् परमेश्वरीम्। दशभुजां महादेवीं पीतवर्णां सनातनीम्। कपालं खेटकं शङ्खं दर्पणं चामरं तथा। दक्षिणे बिभ्रतीं देवीं कामराजोपरि स्थिताम्। वामे खड्गं महापद्मं कर्त्तृकं पाशमङ्कुशम्। धारयन्तीं महादेवीं महासिंहासनस्थिताम्। दिव्यवस्त्रपरीधानां जटामुकुटमण्डिताम्। ब्रह्मविष्णुमहादेववन्दितां सुरसुन्दरीम्। आज्ञाचक्रे महेशानि! द्विभुजां चिन्तयेत् सुधीः। सिंहस्कन्धसमारूढ़ां द्विभुजां सुमनोहराम्। वराभयं दधानाञ्च नानामणिविभूषिताम्॥ जटामुकुटसंयुक्तामर्द्धचन्द्रविभूषिताम्। रत्नकाञ्चीसमायुक्तां रत्नमालाविभूषिताम्। रक्तवस्त्रपरीधानां कमलापतिसेविताम्। संसारदुःखशमनीं संसारार्णवतारिणीम्। सुषुम्नावर्त्मना देवीं चिन्तयेद्वालरूपिणीम्। षट्चक्रभेदयोगेन चिन्तयेत् परमेश्वरीम्। सहस्रारदले चैव चिन्तयेत् परमेश्वरीम्। कामं भ्रमन्तं तन्मध्ये पञ्चबाणविभूषितम्। गङ्गादिसर्वतीर्थञ्च अमृतं प्रतिचक्रके। वसन्तादि महादेवि! सर्वर्त्तु-

परिशोभितम्। श्वेतवर्णं महादेवि! सहस्रदलमुत्तमम्। सर्व-देवसमायुक्तं सर्वशक्तिसमन्वितम्। सर्वमन्त्रमयं देवि! चतुर्वेदविभूषितम्। एकादशमहादेवां ब्रह्मविष्णुशिवात्मिकाम्। कर्णिकां स्वर्णवर्णाञ्च तत्र देवं विचिन्तयेत्। चिन्मयं परशिवं देवि! ध्यानगम्यं सनातनम्। सारात्सारतरं परादपि परं चेतोवचोऽगोचरम् नित्यानन्दनिरन्तरं निरुपमं वेदैरपारं परम्। शिवशक्तिमयं देवि! निर्गुणं सगुणात्मकम्। प्रदीप-कलिकाकारं योगिनां ध्यानरूपिणम्। चैतन्यरूपिणं देवं पर-मामृतबृंहितम्। तन्मध्ये चिन्तयेद्देवीं त्रिगुणाञ्च सनातनीम्। घोरदंष्ट्रां करालास्यां ललज्जिह्वां चतुर्भुजाम्। सद्यश्छिन्नशिरः-खड्गवामोर्द्ध्वाधःकराम्बुजाम्। अभयं वरदञ्चैव दक्षिणाधोर्द्ध्व-पाणिकाम्। नीलमेघप्रभां तन्वीं घोररूपां दिगम्बराम्। कण्ठा-वसक्तमुण्डालीगलद्रुधिरचर्चिताम्। कर्णावतंसतां नीतशवयुग्म-भयानकाम्। बालार्कमण्डलाकारलोचनत्रितयान्विताम्। सृक्क-द्वयगलद्रक्तधाराविस्फुरिताननाम्॥ मुक्तकेशीं स्मितमुखीं श्मशा-नालयवासिनीम्। शवानां करसङ्घातैः कृतकाञ्चीं हसन्मुखीम्। शवरूपमहादेवहृदयोपरि संस्थिताम्। महाकालेन रत्यर्थमुप-विष्टां स्मरातुराम्। शिवाभिर्घोररावाभिश्चतुर्दिक्षु समन्वि-ताम्। अतिप्रसन्नवदनां स्मेराननसरोरुहाम्। अनाहतस्तु तत्रैव तड़ित्कोटिसमप्रभाम्। तस्योर्द्ध्वे तु शिखा तन्वि! चिद्रूपा परमा कला। तया सहितमात्मानमेकीभूतं विचिन्तयेत्। गच्छन्तीं ब्रह्ममार्गेण लिङ्गभेदक्रमेण तु॥ सूर्य्यकोटिप्रभाकारं चन्द्रकोटिसुशीतलम्। अमृतं तद्धि संन्नस्थं परमानन्द-लक्षणम्॥ गत्वा कुलाकुलां दिव्यां पुनरेव कुलं विशेत्। एवमभ्यस्यमानस्य अत्यन्तस्येह निश्चयात्। जरामरणदुःखाद्यै-र्मुच्यते भवबन्धनात्॥ चतुर्विधा तु सा सृष्टिस्तस्यां योनौ प्रव-

र्त्तते। योनिमुद्रेयमाख्याता सर्वसिद्धिप्रदायिका। मूलाधार-सरोजे तु त्रिकोणं सुमनोहरम्। कामं भ्रमन्तं तन्मध्ये बाला-र्ककोटिसन्निभम्। तदूर्द्धं कुण्डलीं शक्तिं तड़ित्कोटिसम-प्रभाम्। सुषुप्तभुजगाकारां सार्द्धत्रिवलयान्विताम्॥ मूलाधार-त्रिकोणे तां भावयेत् सुरसुन्दरीम्। आरोप्यारोप्यशक्तिं कमल-जनिलयामात्मना साकमेषु स्थानेष्वब्जासनेषु प्रणिहितहृदयां चिन्तयन्तीं क्रमेण। नित्यानन्दावसानं खगमुकुलमहापद्मसद्मा-न्तरस्थां ध्यायेच्चैतन्यरूपामभिनवजलदां मोक्षमार्गैकमार्गाम्॥ साक्षाल्लाक्षारसाभां गगनगतमहापद्मसंस्थाच्च हंसात् पीत्वा दिव्यामृतौघं पुनरपि च विशेन्मध्यदेशं कुलस्य। चक्रे चक्रे क्रमेणामृतरसविसरैस्तर्पयेद्देवतास्ताः डाकिन्याद्याः समस्ताः सकलदलगतां तर्पयेत् कुण्डलीं ताम्। इन्दुस्तदूर्द्ध बोधिन्यां नादेनादस्तथैव च। शक्तौ पुनर्व्यापिकांशमामनुं मनुगोचरे॥ मन्त्राक्षराणि चिच्छक्तौ प्रोतानि परिभावयेत्। तामेव परमो व्योम्नि परमामृतबृंहिते। दर्शयेदात्मसद्भावं पूजाहोमादिकं विना। एवं सञ्चिन्तयेन्मन्त्रं स योगी नात्र संशयः॥ सर्वपाप-विनिर्मुक्त इष्टदेवीं प्रपश्यति। षण्मासे सर्वसिद्धिः स्यादात्मा-नञ्च प्रपश्यति॥ अष्टादशमहासिद्धिर्वत्सरान्ते भविष्यति। एवं सञ्चिन्तयेद्देवीं परमात्मस्वरूपिणीम्॥ स एव शङ्करः साक्षात् स एव विष्णुरव्ययः। स एव परमं ब्रह्म स एव देवतोत्तमः॥ इति ते कथिता देवि! योनिमुद्रा महेश्वरि!। वत्सरेण लभेत् सिद्धिं पूर्णकामः लभेत् पुनः। श्रीपार्वत्युवाच॥ अशक्ता योनि-मुद्रायां हीनबुद्धिनराः कलौ। विहितं साधने शक्तौ कथं यान्ति परां गतिम्॥ सदाशिव उवाच॥ साधु पृष्टं महादेवि! जन्तूनां हितकारिणि!। योनिमुद्रां महेशानि! यदि कर्त्तुं न शक्यते। मायया वा श्रिया वापि कामेन प्रणवेन वा॥ सम्पुटं मूल-

मन्त्रन्तु जपेदष्टसहस्रकम्। तेनैव च सुसिद्धं स्यान्मन्त्रसाधनमाचरेत्। शृणु चान्यत् प्रवक्ष्यामि साधनं परमाद्भुतम्। येनानुष्ठितमात्रेण सर्वसिद्धिः प्रजायते। पञ्च ह्रस्वाः सन्धिवर्णा व्योमेराग्निर्जलं धरा। अन्त्यमाद्यं द्वितीयञ्च चतुर्थं मध्यमं क्रमात्॥ पञ्चवर्णाक्षराणि स्युर्वान्तः श्वेतेन्दुभिः सह। एषां भूतलिपिः प्रोक्ता द्विचत्वारिंशदक्षरैः। आद्यस्वरार्णवर्गाणां पञ्चमाः शान्तसंयुताः। वर्गाद्या इति विज्ञेया नववर्गाः स्मृता अमो। एतद्वचनं शारदायां षष्ठपटलेऽपि॥ अस्यार्थः॥ पञ्चह्रस्वाः अ इ उ ऋ ऌ इति प्रथमवर्गः। सन्धिवर्णा ए ऐ ओ औ इति द्वितीयो वर्गः। व्योम हकारः। इरो यकारः। अग्नीरेफः। जलं वकारः। धरा लकार इति तृतीयो वर्गः। पञ्चवर्गाक्षराणां क्रममाह अन्त्यमिति। अन्त्यं ङः। आद्यं कः। द्वितीयं खः। चतुर्थं घः। मध्यमं गः। अयं क्रमश्चतुर्ष्वन्येष्वपि वर्गेषु एवमष्टवर्गः। वान्तः शकारः। श्वेतं षकारः। इन्दुः सकारः। अयं नवमवर्गः। नवमवर्गाद्यक्षराण्याह आद्यस्वरार्ण इति। अस्वरार्णो हकारः। अश्च एश्च अस्वरार्णश्चेति द्वन्द्वे अ ए इत्यत्र सन्धौ ऐ अस्वरे परे आयादेशे आअस्वर इति वर्गाणां पञ्चमा ङ ञ ण न म इति वर्णाः। शान्तसंयुताः शकारान्तास्तेन अ ए इ ङ ञ ण न म श इत्यक्षराणि इति नवमो वर्गः। वर्गवर्णानां पञ्चभूतात्मकं दर्शयति शारदा॥ व्योमेराग्निजलक्षौणी वर्गवर्णान् पृथग्विधः। द्वितीयवर्गे भूर्न स्यान्नवमे न जलं धरा। द्वितीयवर्गस्य चतुरक्षरत्वादन्यभूतात्मकमक्षरं नास्ति एवमन्त्यवर्गस्य त्रिवर्णात्मकत्वादुभयं नास्तीत्यर्थः। विरिञ्चिविष्णुरुद्राश्विप्रजापतिदिगीश्वराः। क्रियादिशक्तिसहिताः क्रमात् स्युर्वर्गदेवताः। दिगीश्वरा इन्द्रयमवरुणचन्द्राः। सर्वे किम्भूताः क्रियाज्ञानेच्छाशक्तिसहिता इत्यन्वयः। त्रिधावृत्तक्रियाज्ञानेच्छाशक्तिभिरुपेताः। केचित्तु

दिगीश्वरा इत्येकक्रियाशक्त्यादयस्तिस्र इति नव देवता वदन्ति। ऋषिः स्याद्दक्षिणामूर्त्तिर्गायत्रं छन्द ईरितम्। देवता कथिता सद्भिः साक्षाद्वर्णेश्वरी परा। ह्रादिषड़्वर्गकैः कुर्य्यात् षड़ङ्गानि सजातिभिः। ध्यायेल्लिपितरोर्मूले देवीं तन्मयपङ्कजे। वदन्ति सुधियो वृक्षं नित्यवर्णमयं परम्। परसंविन्महावीजं विन्दुनादमहाशिफम्। पृथिव्यक्षरशाखाभिः सर्वाशासु विजृम्भितम्। सलिलाक्षरपत्रैः स्वैः सञ्छादितजगत्त्रयम्। वह्निवर्णाङ्कुरैर्दीप्तं रत्नैरिव सुरद्रुमम्। मरुद्वर्णलसत्पुष्पैर्द्योतयन्तं वपुःश्रियम्। अकाशार्णफलैर्नम्रं सर्वभूताश्रयं परम्। परामृताक्षमधुभिः सिञ्चन्तीं परमेश्वरीम्। वेदागमादिभिः क्लृप्तं समुन्नतिमनोहरम्। शिवशक्तिमयं साक्षाच्छायाश्रितजगत्त्रयम्। एनमाश्रित्य मुनयः सर्वान् कामानवाप्नुयुः॥ अस्यार्थः॥ लिपितरोर्मूले तन्मयपङ्कजे वर्णमयपद्मे देवीं ध्यायेदित्यन्वयः। ध्यानं पश्चाद्वक्ष्यति। लिपितरुमाह वदन्तीति। वर्णमयं वृक्षं पण्डिता नित्यं वदन्ति। किम्भूतं परसंवित् कुण्डलिनी परंब्रह्म वा वीजम्। एवं विन्दुनादौ शिफे मूले यस्य तम्। ननु तद्वृक्षो नित्यश्चेत्तदा कथं परसंविन्महावीजमित्युक्तम्। सत्यं व्यञ्जकत्वेन वीजवदुपचर्य्यते। शेषं सुगमम्। ध्यानमाह॥ अक्षोन्मुक्तशशाङ्ककोटिसदृशीमापीनतुङ्गस्तनीं चन्द्रार्द्धाङ्कितमस्तकां मधुमदादालोलनेत्रत्रयाम्। विभ्राणामनिशं वरं जपवटीं विद्यां कपालं करैराद्यां यौवनगर्वितां लिपितनुं वागीश्वरीमाश्रये॥ कुब्जिकातन्त्रोक्तध्यानं यथा। अक्षस्रजं हरिणपोतमुदग्रटङ्कं विद्याः करैरविरतं दधतीं त्रिनेत्राम्। अर्द्धेन्दुमौलिमरुणामरविन्दमालां वर्णेश्वरीं प्रणमत स्तनभारनम्रामिति। तथा। पाशाङ्कुशपुटं कृत्वा मायां ततः समीरणम्। दहनं धरणीं तोयं माहेश्वरं ततः परम्॥ प्रासादञ्च [illegible]चार्य्य शक्तिः सूर्य्यसमन्विता। असुष्या भूतलिप्याश्च

प्राणा इह ततो वदेत्। पुनर्मन्त्रान् समुच्चार्य्य पाशादींश्च ततो वदेत्। जीव इह स्थित इति पुनस्तांश्च समुच्चरेत्। सर्वेन्द्रियाणीत्येतांश्च क्रमात्तानुच्चरेत् सुधीः। वाङ्मनश्चक्षुस्त्वगिति श्रोत्रघ्राण प्राणा इहागत्य ततो वदेत्। सुखं चिरं समुच्चार्य्य तिष्ठन्तु वह्निवल्लभा। इति प्राणान् प्रतिष्ठाप्य ध्यायेत्तामिष्टसिद्धये॥ इत्युक्ता ध्यानमुक्तम्। ततो न्यासं कुर्य्यात्॥ तदुक्तं शारदायाम्॥ आधारदेशेऽधिष्ठाने नाभौ हृदि पदे पुनः। विन्दौ नादे ततः शक्त्यां शिवे देशिकसत्तमः। नवाधारेषु विन्यसेत् स्वरान्नव यथाविधि। मूलाधारे स्वाधिष्ठाने नाभौ हृदि पदे भ्रुमध्ये मूर्द्ध्नि तदुपरिदेशे द्वादशदलपद्मे इति नवसु स्थानेषु नव स्वरान् न्यसेदित्यर्थः। हादिवर्णांस्ततो न्यसेन्मुखे मूर्द्धादितः सुधीः। ऊर्द्ध्वमाहेन्द्रयाम्य दिक्पश्चिमेषु समाहितः॥ दोःपत्सु वेदवर्गांश्च वर्णान् देशिकसत्तमः। वर्णा मूलोपमूलाग्रमध्यदेशक्रमेण तु। तत्राग्रमङ्गुल्यः। मूलमंशादि। उपमूलं कूर्परजानुनी। उपाग्रं करपादाङ्गुली प्रथमसन्धिः मणिवन्धगुल्फे। समाहित इत्यनेन सावधानतया स्थानविपर्य्ययाः। भावदुष्टेऽप्युक्तः शारदायाम्॥ गुह्यहृद्भ्रुविले न्यस्येच्छादिवर्णत्रयं क्रमात्। सृष्ट्यां सर्गावसाना स्यात् स्थितौ वह्निर्मरुत् प्रियः। वियद्भूमिक्रमान्न्यस्येद्विन्दुसर्गावसानिकाम्। संहृतौ प्रतिलोमेन विन्यसेद्विन्दुभूषिताम्। सृष्ट्यामिति सर्गावसानिका भूतलिपिरिति शेषः। स्थितौ विन्दुसर्गावसानिकां तां क्रमान्न्यस्येदित्यर्थः। तत्रायं क्रमः॥ ऊंः इंः ऋंः अंः ऌंः ओंः औंः ऐंः एंः रंः यंः वंः हंः लंः। खंः कंः घंः गंः ङंः छंः चंः भंः जंः ञंः ठंः टंः ढंः डंः णंः थंः तंः धंः दंः नंः फंः पंः भंः बंः मंः संः षंः शंः। कश्चित्तु वह्निवर्गवर्णान् सर्वान् प्रथमं विन्यस्य पश्चान्मरुद्वर्णान् ततो जलान्तान् एतान् सविन्दून् ततो वियद्भूमिवर्णान् सविसर्गान् न्यस्येदित्याह स्म।

शारदायाम् । आगमोक्तेन मार्गेण दीक्षितः साधकोत्तमः । लक्षं न्यस्येज्जपेत्तावज्जुहुयाद्दयुतं तिलैः ॥ तावदिति लक्षम् । तत्र एको न्यास एकावृत्तिश्चेति क्रमोऽनुसन्धेयः । शारदायाम् । पूजयेदन्वहं देवीं पीठे प्रागीरिते सुधीः । प्रागीरिते इत्यनेन सरस्वतीप्रकरणीयपीठशक्तिरत्रापि पूजयेदिति सूचितम् । तेनाष्टदलं षोड़शदलं द्वात्रिंशद्दलं चतुःषष्टिदलं भूपुरञ्च कृत्वा तत्र पीठशक्तिं पूजयेत् ॥ शारदायाम् ॥ वर्णाब्जे नासनं कुर्य्यान् मूर्त्तिं मूलेन कल्पयेत् । देवीं सम्पूजयेदस्यामङ्गाद्यावरणैः सह । आदावङ्गावृतिः पश्चादम्बिकाद्याभिरीरिता । द्वितीया मातृभिः प्रोक्ता तृतीया ह्यष्टशक्तिभिः ॥ चतुर्थी पञ्चमी प्रोक्ता द्वात्रिंशच्छक्तिभिः पुनः । चतुःषष्ट्या स्मृता षष्ठी शक्तिभिर्लोकपालकैः । सप्तमी वृतिरेतेषां मन्त्रे स्यादष्टमी वृतिः । वर्णाब्जे नासनं दत्त्वा मूर्त्तिं मूलेन सङ्कल्प्य तत्र देवीमभ्यर्च्य केशरेषु अङ्गान्यभ्यर्च्य तदुपरि दिग्दलेषु चतस्रोऽम्बिकादिकाः तदुपरि ब्राह्म्याद्यास्ततः षोड़शदले करालाद्या द्वात्रिंशद्दले विद्याद्याश्चतुःषष्टिदले पिङ्गलाद्याः पूजयेत् ॥ तदुपरि भूपुरे लोकपालांस्तदस्त्राणि चेति ।:वर्णाब्जेन ह्सौः भूतलिपिः सरस्वती । योगपीठाय नम इति प्रयोगः ॥ शारदा ॥ एवं पूज्या जगद्धात्री श्रीभूतलिपिदेवता । स्थानेषूक्तेषु विधिवदभ्यर्च्याङ्गानि पूर्ववत् ॥ पूर्ववत् सरस्वतीप्रकरणवत् ॥ अम्बिका वाग्भवी दुर्गा श्रीशक्तिः प्रोक्तलक्षणा । ब्राह्म्याद्याः पूर्ववत् पूज्याः कराली विकराल्युमा । सरस्वती श्रीर्दुर्गेमा लक्ष्मीः श्रुतिः स्मृतिर्धृतिः । श्रद्धा मेधा मतिः कान्तिरार्य्याः षोड़शशक्तयः । खड्गखेटकधारिण्यः श्यामाः पूज्याः स्वलङ्कृताः । विद्याश्रीपुष्टयः प्रज्ञा सिनीवाली कुहूः पुनः । रुद्रवीर्य्या प्रभा नन्दा स्यात् पोषिण्यृद्धिदा शुभा । कालरात्रिर्महारात्रिर्भद्रकाली कपालिनी । प्रकृतिर्दण्डिमुण्डिन्यौ सेन्दुखण्डा

शिखण्डिनी। निशुम्भशुम्भमथनी महिषासुरमर्दिनी। इन्द्राणी चैव रुद्राणी शङ्करार्द्धशरीरिणी। नारी नारायणी चैव त्रिशूलिन्यपि पाशिनी। अम्बिका ह्लादिनी चैव द्वात्रिंशच्छक्तय: शिवा:। चक्रहस्ता: पिशाचास्या: सम्पूज्याश्चारुभूषणा:। पिङ्गलाङ्गी पिशाचाची समृद्धिर्वृद्धिरेव च। श्रद्धा स्वाहा स्वधा भिचा माया संज्ञा वसुन्धरा। त्रिलोकरात्रि: सावित्री गायत्री त्रिदशेश्वरी। स्वरूपा बहुरूपा च स्कन्दमाता हुतप्रिया। विमला चामला पश्चादरुणी पूर्णवारुणी। प्रकृतिर्विकृति: सृष्टि: स्थिति: संहृतिरेव च। सन्ध्या माया सती हंसी मर्दिकी रक्तिकी परा। देवमाता भगवती देवकी कमलासना। त्रिमुखी सप्तमुख्यान्या सुरासुरविमर्दिनी। लम्बोष्ठी चोर्द्ध्वकेशी च बहुशीर्षा वृकोदरी। रथरेखाह्वया पश्चाच्छशिरेखा तथापरा। गगनवेगा पवनवेगा च तदनन्तरम्। ततो भुवनपालाख्या तत: स्यान्मदनातुरा॥ अङ्गनानङ्गवदना तथैवानङ्गमेखला। अनङ्गकुसुमा विश्वरूपासुरभयङ्करी। आख्याह्वसत्यवादिन्यौ वज्ररूपा शुचिव्रता। वरदाख्या च वागीशी चतु:षष्टि: समीरिता:। चापवाणधरा: सर्वा ज्वालाच्छिन्ना महाप्रभा:। दंष्ट्रिण्यश्चोर्द्धकेश्यस्ता युद्धोपक्रान्तमानसा:। सर्वाभरणसन्दीप्ता पूजनीया: प्रयत्नत:। लोकेशा: पूर्ववत् पूज्यास्तद्वद्वज्रादिकान्यपि। इत्थं य: पूजयेन्मन्त्री श्रीभूतलिपिदेवताम्। श्रीवाण्यो: स भवेद्भूमिर्देवैरप्यभिनन्द्यते। कमलैरयुतं हुत्वा राजानं वशमानयेत्। उत्पलैर्जुह्वतस्तद्वन्महालक्ष्मी: प्रजायते। पलाशकुसुमैर्हुत्वा वत्सरेण कविर्भवेत्। वाजी लवणहोमेन वनितां वशमानयेत्। मातृकोक्तानि कर्म्माणि कुर्य्यादत्रापि साधक:। भूतलिप्या पुटीकृत्य यो मन्त्रं भजते नर:। क्रमोत्क्रमाच्छताावृत्त्या तस्य सिद्धो भवेन्मनु:। कुब्जिकातन्त्रे॥ ध्यानानन्तरम्॥ एवं ध्यात्वा महेशानि! जपेत्तान्तु

प्रसन्नधीः । क्रमोत्क्रमाच्छताद्वृत्त्या भूतलिप्या पुरस्क्रिया । भूतलिप्या पुटीकृत्य यो यं मन्त्रं जपेन्नरः । सहस्रैकप्रमाणेन हठात् सिद्धिर्भवेद्ध्रुवम् । मासमात्रं जपेन्मन्त्रं भूतलिप्या तु सम्पुटम् । क्रमोत्क्रमाद्वरारोहे ! ततः सिद्धिरनुत्तमा । मन्त्रदोषशान्त्यर्थं शारदायां दशसंस्कारकरणमपि लिखितम् ॥ तत्तस्मादत्यतिवृद्धप्रपितामहसहृदयगोष्ठीगरिष्ठकृष्णानन्दागमवागीशभट्टाचार्य्यैः स्वकृततन्त्रसारे लिखितम् । अन्वेषकैस्तत्र द्रष्टव्यम् । दोषान्तरेऽपि दश संस्कारा उक्ताः समयाचारतन्त्रे यथा ॥ गुरोर्गृहीतमन्त्रस्य जप्त्वा तां गतिसाधकः । दुष्टाचारं प्रमादाद्वा आलस्याद्वापि सुन्दरि ! हीनवीर्य्यत्वमाप्नोति स तु मन्त्रो वरानने ! । इत्यादिदोषनाशार्थं दशसंस्कारमाचरेत् ॥ इति मन्त्रदोषशान्तिविधिः ॥ वीजसङ्केतबोधार्थमाहृत्य तन्त्रशास्त्रतः । वीजनामानि कतिचिद् वक्ष्यामि विदुषां मुदे । माया लज्जा परा संवित् त्रिगुणा भुवनेश्वरी । हृल्लेखा शम्भुवनिता शक्तिर्देवीश्वरी शिवा । महामाया पार्वती च संस्थानकृतरूपिणी । परमेश्वरी च भुवना धात्री जीवनमध्यगा ॥ ह्रीं ॥ वह्निहीनेऽस्त्रयुङ्माया स्थिरमाया प्रकीर्त्तिता ॥ ह्लीं ॥ शाग्निशान्तिविन्दुनादैर्लक्ष्मीप्रणव उच्यते । श्रीर्लक्ष्मीर्विष्णुवनिता रमा क्षीरसमुद्रजा ॥ श्रीं ॥ षोड़शव्यञ्जनं वह्निवामाक्षिविन्दुसंयुतम् । चन्द्रवीजसमारूढ़ं बधूवीजमिदं स्मृतम् । बधूर्वामेक्षणा योषिदेकाक्षी स्त्री च कामिनी ॥ स्त्रीं ॥ नादविन्दुसमायुक्तो द्वादशस्तु स्वरो भगम् । योनिः सरस्वती वीजमधरं वाग्भवश्च वाक् । ऐं ॥ हकारो वामकर्णाढ्यो नादविन्दुविभूषितः । कूर्चं क्रोध उग्रदर्पो दीर्घहुङ्कार उच्यते । शब्दश्च दीर्घकवचं तारा प्रसव इत्यपि ॥ हुं ॥ कामाक्षरं वह्निसंस्थं रतिविन्दुविभूषितम् । कालीवीजमिदं प्रोक्तं रतिवीजं तदेवहि ॥ क्रीं ॥ कामाक्षरं धरासंस्थं रति-

विन्दुविभूषितम्। गुप्तकालीवीजमिदं गोपालवीजमित्यपि॥ तत्कामवीजं कामिशीवीजं शक्तिस्त्वसौ परा॥ क्लीं॥ सत्यान्तयुग् व्योमसेन्दु शैवं प्रासादमुच्यते॥ ह्रौं॥ कलाद्यं क्लेदिनीवीजं क्रोङ्कारस्त्वङ्कुशाभिधः॥ क्रों॥ आकारो विन्दुमान् पाशः शेषश्च समुदीरितः। सकला भुवनेशानी कामिशीवीजमुच्यते। नमस्तु हृदयम् स्वाहा द्विठठयुगलं ठठः। नमः स्वाहा॥ चन्द्रयुग्मं शिवो वेदमाता ज्वलनसुन्दरी। स्वाहा परा देवभोज्यं ठद्वयं चन्द्रयुग्मकम्। श्रुवो हविर्वेदमाता देवास्यं वह्निसुन्दरी॥ स्वाहा॥ शिखा वषट् शिरोमध्यं शक्रमाता हरप्रिया। शिखा वषट् च। वषट् कवचं क्रोधो वर्म हुमित्यपि। क्रोधाख्यो हं तनुत्वच्च शस्त्रादौ रिपुसंज्ञकः॥ हुं॥ अस्त्रनेत्रयुगं वौषट्॥ वौषट्॥ फड़स्त्रं शस्त्रमायुधम्॥ फट्॥ तार्त्तीयन्तु हसौः प्रेतवीजम्॥ हसौः॥ हंसोऽजपामनुः॥ हंसः॥ गकारो विन्दुमान् वीघ्नवीजं गणेशवीजकम्॥ गं स्मृतिस्थं मांसमौ विन्दुयुतम्॥ भूवीजमीरितम्॥ लं॥ ठान्तं दहननेत्रेन्दुयुतन्तु विम्बवीजकम्॥ ड्रीं॥ अथ कामकला वामनयनं विन्दुसंयुतम् अर्द्धमात्रा कलावाणी नादोऽर्द्धेन्दुः सदाशिवः। अनुच्चार्य्य तुरीया च विश्वमातृकलापरा॥ ँ॥ नादः॥ भूतडामरसङ्केतबोधार्थं भूतडामरीयवीजनामान्यपि लिख्यन्ते॥ प्रणवो विषवीजं स्याद्ध्रुवं हालाहलं स्मृतम् कालश्रुतिपथं ज्ञेयं बहुरूपि निरञ्जनम्॥ प्रणवम्॥ क्षतजस्थं व्योमवक्त्रं धूम्रभैरव्यलङ्कृतम्। नादविन्दुसमायुक्तं वीजं प्राणात्मिकं स्मृतम्॥ क्ष्रीं॥ क्रोधीशं क्षतमारूढं धूम्रभैरव्यलङ्कृतम्। विद्याज्जिह्वाविन्दुयुतं पितृभूवासिनी स्मृतम्॥ क्रीं॥ क्रोधकालात्मकं कुर्य्याद्गीतिकं वाग्भवं स्मृतम्। नादविन्दुसमायुक्तं समाधायोग्रभैरवीम्। वीजमेतत्तु कथितं शुद्धबुद्धिप्रवर्त्तकम्॥ ऐं॥ क्रोधीशं बलभद्धूम्रभैरवी नाद-

विन्दुभिः। त्रिमूर्त्तिमन्मथं कामराजस्त्रैलोक्यमोहनम्। इन्द्रासनगतो ब्रह्मसमूर्त्तिस्तु समन्मथः॥ क्लीं॥ संयुक्तं धूम्रभैरव्या रक्ताख्यं बलिभोजनम्। नादविन्दुसमायुक्तं किङ्किनीवीजमुत्तमम्॥ क्रीं॥ नादविन्दुसमायुक्तं रक्ताख्यं बलिभोजनम्। कालरात्र्यासनोपेतं विशिखाख्यं महामनुम्॥ क्रां॥ विदार्य्यालिङ्गितोग्रास्यो वसिस्तु क्षतजोच्चितः। नादविन्दुसमायुक्तो विज्ञेयः पिशिताशनः॥ हुं॥ धूम्रध्वजाधः कालाग्निः सोर्द्ध्वकेशीन्दुविन्दुभिः। युगान्तकारकं वीजं भैरवेण प्रकाशितम्॥ स्फें॥ कपर्दिनं समादाय क्षतजोच्चितविग्रहम्। संयुक्तं धूम्रभैरव्यां चोऽयं नादविन्दुमान्॥ फ्रीं॥ कपालीद्वयमादाय महाकालेन मण्डितम्। समासनमिति प्रोक्तं चण्डिकाख्यं प्रयोजयेत्॥ ठं ठं ठः ठः॥ क्षतजस्थं व्योमवक्त्रं चन्द्रखण्डविभूषितम्। खद्योतमिति सम्प्रोक्तं ग्रासिनी कालरात्रियुक्॥ क्रं क्रं॥ क्षतजोच्चितमाकाशं नादविन्दुविभूषितम्। विदारीभूषितञ्चैव वीजं वैवस्वतो ह्टकम्॥ क्रां॥ कीर्त्त्याख्याकालवक्त्रा च महाकालेन साधितम्। तदनादिपञ्चरश्मिः सृष्टिस्थित्यन्तकृद्विधिः॥ ॐ॥ व्योमस्थं तालजङ्घास्थं विन्दुनादविभूषितम्। कूर्च्चं कालो महाकालः क्रोधवीजं निरञ्जनम्॥ हूं॥ पृथ्वीपालो नवद्वीपपतिरतिमतिः कृष्णचन्द्रो महात्मा विद्याब्राह्मण्यमान्यं यमजनयदसुं दान्तमीशानचन्द्रम्। तस्मात् सत्स्वाप यो विश्वविजयिपदवीं स्वेष्टदेवीप्रसादाच्चक्रे तेनाद्यमेतद्विदभिमतफलं सर्गकाण्डं विचित्रम्॥ हंसः प्राणो मनश्चन्द्रः कृष्णो मध्यं गतस्तयोः। गौड़ोदये पुष्पवन्तौ श्रीप्राणकृष्णचन्द्रकौ॥ अन्नदामङ्गलं देशभाषयाचीकरोद् यतः। तस्माद्विदेशेऽमावास्या-कृष्णचन्द्रस्य भूपतेः॥ एषा निर्जरभाषया समुदिता भास्वत्प्रभा निर्म्मला विश्वोद्दीप्तिकरी जगद्दिनकरी श्रीप्राणतोषिण्यतः।

श्रीमान्नीहति नीहति क्षितितलेऽभूत् प्राणकृष्णाभिधो हंसो नास्तमितः सदोदययुतः कीर्त्यानया शाश्वतः।

इति श्रीप्राणकृष्णविश्वासानुमतायां विश्वविजयिश्रीराम-
तोषणविद्यालङ्कारविरचितायां श्रीप्राणतोषिण्यां
फलकथनरूपदशमपरिच्छेदान्वितं
सर्गकाण्डं समाप्तम्।

अचिन्त्यापि ध्येया त्वखिलहृदये ध्वान्तरुचिरा मनोध्वान्तं गाढ़ं हरसि करुणाम्भोनिधिरपि। महाकाली स्वैरिण्यसि सकलमूर्त्तिः कदहमानद्दश्या लोकानां त्वमसि जयतादद्भुततमः॥ आसीद्रामहरीति पुरुषहरी राकेन्दुभाजित्वरीराशापूर्त्तिकरीः सुशीतलहरीः कीर्त्तीः समासादयन्। विश्वासान्वयपावनो गुरुकृपापात्रं कुलोद्दीपकम् यो दैवैर्जनयाम्बभूव कृतिनं श्रीप्राणकृष्णाभिधम्॥ कृष्णमङ्गलविद्यावागीशसूनुः सतां मुदे। गङ्गादेवीसुतोऽकार्षीद्धर्मकाण्डं द्वितीयकम्॥ द्वितीयस्योच्यते धर्मकाण्डस्य संस्क्रियात्मनः। निर्घण्टः प्रथमं तत्र संस्कारस्य प्रशंसनम्॥ द्विजानां दश संस्काराः कर्ममात्राधिकारकाः। शूद्रशूद्रप्रकाराणां विज्ञातव्या नवैव ते। मायादिकत्वं मन्त्राणां विज्ञेयं कलिसम्मतम्। ऋतुकर्म ततो गर्भाधानं पुंसवनं ततः। पञ्चामृतप्रदानञ्च सीमन्तोन्नयनं तथा। जातकर्म ततो मेधाजननं कविताकरम्। मायादिदानं विप्रेभ्यो बालस्य पुष्टिकारणम्। विज्ञेयं नामकरणं ततो निष्क्रमणं स्मृतम्। अन्नाशनं ततश्चूड़ाकर्णवेधस्ततः परम्। कुमारीशूद्रजातीनां सर्वमेतदमन्त्रकम्। उपनायो वेदभेदे सूत्रमाणं प्रकीर्त्तितम्। सूत्रनिर्माणसंस्कारौ सूत्राधिष्ठातृदेवता। सावित्रीग्रहणं कर्म समावर्त्तनमित्यपि। अदारजननिन्दा च धर्मपत्नीनिरूपणम्। विवाहो दशसंस्कारप्रयोगस्तदनन्तरम्।

इति द्वितीयकाण्डाद्य परिच्छेदसमापनम् ॥ आदौ गुरोर्लक्षणञ्च ततः सद्गुरुलक्षणम् । कौलगुरुप्रशंसा च कूटार्थकृतिदूषणम् । गुरुविशेषकथनं शास्त्रे त्वावश्यकं गुरोः । गुरुमन्त्रदेवतानामेकत्वभावनाक्रमः । गुरुसन्तुष्ट्यादिफलं गुरूच्चारणजं फलम् । गुरुत्वस्ते जगत्तृप्तिराधिक्यं सर्वतो गुरोः । जगत्पूजाफलावाप्तिर्गुरुपादाम्बुजेऽर्चिते । दीक्षाशिक्षादिभेदेन गुरुभेदनिरूपणम् । एक एव महाकालोगुरुर्न मानुषः क्वचित् । तदधिष्ठानवशतो माहात्म्य मानुषस्य च । गुरुवंशस्य मर्य्यादा पशुमन्त्रादिभेदतः । परापरादिभेदश्च गुरूणां तदनन्तरम् । स्त्रीगुरोर्लक्षणं वर्ज्यं गुरुत्वकल्पने तथा । त्याज्यो गुरुश्च शिष्यस्य लक्षणं वर्जनं तथा । वर्ज्या शिष्यकर्तृ निन्दा गुर्वाज्ञालङ्घने तथा । गुरुद्रव्यादिहरणदोषानिष्टकृतिस्तथा । गुरुशापजन्यदोषस्तन्निन्दा श्रवणस्य च । तच्छ्रवणप्रतीकारो गुरुनिन्दाकरस्य च । दोषो गुरौ मनुष्यत्वज्ञाननिन्दा तथैव च । गुरुद्रोहादिदोषश्च त्यागे गुरुकुलस्य च । निषेधो गुरुगोत्रस्य माननापूजने तथा । गुरुदर्शनकालस्य पूज्यत्वं गुरुपूजनम् । विनिष्टपूजादोषश्च गुरुपूजादिजं फलम् । गुरुगेहस्थितकृत्यपुण्यस्याक्षयता तथा । गुरुपादपद्मरेणूदकमाहात्म्यवर्णनम् । गुर्वन्नभक्षणफलं गुरूच्छिष्टफलं तथा । तदुच्छिष्टाभोजनजदोषश्च तदनन्तरम् । गुरुपादुकादिप्रणतिर्निषिद्धं गुरुसन्निधौ । गुर्वाज्ञया निषिद्धस्याचरणान्नास्ति पातकम् । जातिविद्यादिगर्वस्य त्यागः श्रीगुरुसन्निधौ । सदा श्रीगुरुपादाब्जध्यानस्य फलनिर्णयः । गुरुणैकासनत्यागो गुरुभक्तिफलं तथा । पैत्रगुरुकुलत्यागदोषः श्रीपूर्वकीर्त्तनम् । गुर्वादेरर्च्चनाकाले एवं तन्नामभाषणम् । चतुर्विधा तु शुश्रूषा गुरुमित्रादिमानना । गुर्व्वालये प्रवेशस्य प्रकारस्तदनन्तरम् । इति द्वितीयकाण्डस्य

परिच्छेदे द्वितीयकः॥ नाड़ीचक्रविचारश्च भूपरीक्षा ततः परम्। दिग्विशेषभवा भद्रा भद्रफलप्रदायिनी। ब्रह्मणादिमहीज्ञानं शुभभूमिनिरूपणम्। त्याज्या भूम्यो हि चक्रश्च तस्य व्याख्यानमेव च। शल्योद्धारः स द्विविधः शङ्कुना दिङ्निरूपणम्। मण्डपकरणं तस्मात्तोरणञ्च ततः परम्। अङ्कुरारोपणं तस्य परीक्षा तदनन्तरम्। अशुभाङ्कुरशान्तिश्च परिच्छेदतृतीयके॥ दीक्षाशब्दार्थनिर्णीतिर्दीक्षामाहात्म्यकीर्त्तनम्। अदीक्षितस्य निन्दा च दीक्षितस्य प्रशंसनम्। दीक्षया चैव ज्येष्ठत्वं दीक्षया मोक्षसाधनम्। एकमन्त्रसाधनेन सर्व्वमन्त्रस्य साधनम्। मन्त्रग्रहणनिन्दा च पुस्तकालोकनादितः। दीक्षां विना नाधिकारः पूजादौ निन्द्यदीक्षितः। ततश्च त्रिविधा दीक्षा चतुर्धापि प्रकीर्त्तिता। अधिवासनिधिश्चाङ्कुरार्पणाद्यधिवासयोः। प्रयोग इति तुर्य्याख्य परिच्छेदसमापनम्॥ गुरोर्निमन्त्रणं पूर्व्वं स्नानादितन्त्रकर्म्मणि। सौरमाससमुल्लेखो मातृकादिप्रपूजनम्। वृद्धिश्राद्धं सर्व्वकार्य्ये पञ्चदेवप्रपूजनम्। लक्ष्म्यादिपूजनञ्चैव ग्रहमन्त्रस्ततः परम्। ग्रहपूजादानविधिर्ग्रहाणां कवचं ततः। तिथिध्यानमन्त्रपूजाकवचं तदनन्तरम्। वर्णध्यानाद्यासनस्य शुद्धिश्चैव ततः परम्। अर्च्चनाहोमकर्म्माणि समासेन ततः परम्। इति पञ्चमविच्छेदसमाप्तिरभिधीयते॥ दीक्षा नानाविधा षष्ठे कीर्त्तितान्यद् यथास्थलम्। ज्ञातव्यमुद्देशमात्रं निर्घण्टेन कृतं मया। व्याख्यया ग्रन्थबाहुल्यदर्शनादधुना मया। प्रमाणमात्रं लिखितं मीमांसापि क्वचित् क्वचित्॥ इदानीं प्राप्तावसरेण गर्भाधानादिसंस्कारा उच्यन्ते। संस्काराणां प्रयोगस्यावश्यम्भावादग्रे प्रयोगो लेखनीयो नातो व्याख्याजाला प्रमाणमात्रं लिख्यते॥ महानिर्व्वाणतन्त्रे नवमोल्लासे॥ सदाशिव उवाच॥ संस्कारेण विना देवि! देहशुद्धिर्न जायते। नासं-

स्ततोऽधिकारी स्याद्दैवे पैत्रे च कर्मणि। अतो विप्रादिभिर्वर्णैः स्वस्ववर्णोक्तसंस्क्रिया॥ कर्त्तव्या सर्वथा यत्नैरिहामुत्र हितैप्सुभिः। वीजसेकः पुंसवनं सीमन्तोन्नयनं तथा। जातनाम्नो निष्क्रमणमन्नाशनमतः परम्। चूड़ोपनयनोद्वाहाः संस्काराः कथिता दश। शूद्राणां शूद्रभिन्नानामुपवीतं न विद्यते। शूद्रभिन्नानां शूद्रप्रकाराणामधमशूद्रकैवर्त्तादीनामित्यर्थः। तेषां नवैव संस्कारा द्विजातीनां दश स्मृताः। नित्यानि सर्वकर्माणि तथा नैमित्तिकानि च। काम्यान्यपि वरारोहे! कुर्य्याच्छाम्भववर्त्मना। संस्कारेषु च सर्वेषु तथैवान्येषु कर्मसु। विप्रादिवर्णभेदेन क्रमान्मन्त्राश्च दर्शिताः। सत्यत्रेताद्वापरेषु तत्तत्कर्मसु कालिके!। प्रणवाद्यांस्तु तान् मन्त्रान् प्रयोगेषु नियोजयेत्। कलौ तु परमेशानि! तैरेव मनुभिर्नराः। मायाद्यैः सर्वकर्म्माणि कुर्य्युः शङ्करशासनात्। निगमागमतन्त्रेषु वेदेषु संहितासु च। सर्वे मन्त्रा मयैवोक्ताः प्रयोगा युगभेदतः। अथोच्यते महामाये! गर्भाधानादिका क्रिया। तत्रादावृतुसंस्कारः कथ्यते क्रमतः शृणु। कृतनित्यक्रियः शुद्धः पञ्च देवान् समर्च्चयेत्। ब्रह्मा दुर्गा गणेशश्च ग्रहा दिक्पतयस्तथा। स्थण्डिलेन्द्रादिदिग्भागे घटेष्वेतान् प्रपूजयेत्। ततस्तु मातृकाः पूज्या गौर्य्याद्याः षोड़श क्रमात्। गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा शान्तिः पुष्टिर्धृतिः क्षमा। आत्मनो देवता चैव तथैव कुलदेवता। आयान्तु मातरः सर्वास्त्रिदशानन्दकारिकाः। विवाहव्रतयज्ञानां सर्वाभीष्टं प्रकल्प्यताम्। यानशक्तिसमारूढ़ाः सौम्यमूर्त्तिधराः सदा। आयान्तु मातरः सर्वा यज्ञोत्सवसमृद्धये। इत्यावाह्य मातृगणान् स्वशक्त्या परिपूज्य च। देहल्यां नाभिमात्रायां प्रादेशपरिमाणतः। सप्तधा पञ्चधा वा विन्दून् दद्यात् सिन्दूरचन्दनैः। प्रत्येकविन्दौ मतिमान्

कामं मायां रमां स्मरन्। घृतधारामविच्छिन्नां दत्त्वा तत्र वसुं यजेत्। वसुधारां प्रकल्प्यैवं मयोक्तेनैव वर्त्मना। विरच्य स्थण्डिलं धीरो वह्निस्थापनपूर्वकम्। होमद्रव्याणि संस्कृत्य पचेच्चरुमनुत्तमम्। प्राजापत्यश्चरुश्चात्र वायुनामा हुताशनः। समाप्य धाराहोमान्तं कृत्यमार्त्तवमारभेत्। क्लीं प्रजापतये स्वाहा चरुणैवाहुतित्रयम्। प्रदायैवाहुतिं दद्यादिमं मन्त्रमुदीरयन्। विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि यच्छतु॥ आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते। स्वाहा आज्येन चरुणापि वा। सूर्य्यं प्रजापतिं विष्णुं ध्यायन्नाहुतिमुत्सृजेत्। गर्भं धेहि सिनीवाली गर्भं धेहि सरस्वती। गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ। ध्यात्वा देवीं सिनीवालीं सरस्वत्यश्विनौ तथा। स्वाहान्तमनुनानेन दद्यादाहुतिमुत्तमाम्। अतः कामं बधूं मायां रमां कूर्चं समुच्चरन्। अमुष्यै पुत्रकामायै गर्भमाधेहि सद्विठम्। उक्त्वा ध्यात्वा रविं विष्णुं जुहुयात् संस्कृतेऽनले। यथेयं पृथिवी देवी ह्युत्ताना गर्भमादधे। तथा त्वं गर्भमाधेहि दशमे मासि सूतये। स्वाहान्तेनामुना विष्णुं ध्यायन्नाहुतिमाचरेत्। पुनराज्यं समादाय ध्यात्वा विष्णुं परात्परम्। विष्णो! ज्येष्ठेन रूपेण नार्य्यामस्यां वरीयसम्। सुतमाधेहि ठद्वन्द्वमुक्त्वा वह्नौ हविस्त्यजेत्। कामेन पुटितां मायां मायया पुटितां बधूम्। पुनः कामञ्च मायाञ्च पठित्वास्याः शिरः स्पृशेत्। पतिपुत्रवतीभिश्च नारीभिः परिवेष्टितः। शिर आलभ्य हस्ताभ्यां बध्वाः क्रोड़ाञ्चले पतिः। विष्णुं दुर्गां विधिं सूर्य्यं ध्यात्वा दद्यात् फलत्रयम्। ततः स्विष्टिकृतं हुत्वा प्रायश्चित्तं समापयेत्। यद्वा प्रदोषसमये गौरीशङ्करपूजनात्। भास्कराघ्यंप्रदानाच्च दम्पत्योः शोधनं भवेत्।

आर्त्तवं कथितं कर्म्म गर्भाधानमथो शृणु॥ तद्वात्राव-

न्यरात्नौ वा युग्मायां निशि भार्य्यया। सदनाभ्यन्तरं गत्वा ध्यात्वा देवं प्रजापतिम्। स्पृशेत् पत्नीं पठेद्भर्त्ता मायावीजपुरःसरम्। आवयोः सुप्रजायै त्वं शय्याशुभङ्करी भव। आरुह्य भार्य्यया शय्यां प्राङ्मुखो वाप्युदङ्मुखः। उपविश्य स्त्रियं स्पृश्यन् हस्तमादाय मस्तके। वामेन पाणिनालिङ्ग्य स्थाने स्थाने मनुं जपेत्। शीर्षे कामं शतं जप्त्वा चिवुके वाग्भवं शतम्। कण्ठे रमां विंशतिधा स्तनद्वन्द्वे शतं शतम्। हृदये दशधा मायां नाभौ तां पञ्चविंशतिम्। जप्त्वा योनौ करं दत्त्वा कामेन सह वाग्भवम्। शतमष्टोत्तरं जप्त्वा लिङ्गेऽप्येवं समाचरन्। विकाश्य मायया योनिं स्त्रियं गच्छेत् सुतामये। रेतःसम्पातसमये ध्यात्वा विश्वकृतं पतिः। नाभेरधस्तात् चित्कुण्डे वस्तिकायां प्रपातयेत्। शुक्रसेकान्तरे विद्वान् इमं मन्त्रमुदीरयेत्। यथाग्निना सगर्भा भूर्द्यौर्यथा वज्रधारिणा। वायुना दिग् गर्भवती तथा गर्भवती भव॥ इति गर्भाधानम्॥

जाते गर्भे ऋतौ ...न्यस्मिन्न्यस्मिन् वा महेश्वरि!। तृतीये गर्भमासे तु चरेत् पुंसवनं गृही। कृतनित्यक्रियो भर्त्ता पञ्च देवान् समर्च्चयेत्। गौर्य्यादिमातृकाश्चैव वसोर्धारां प्रपातयेत्। वृद्धिश्राद्धं ततः कृत्वा पूर्वोक्तविधिना सुधीः। धाराहोमान्तमापाद्य कुर्य्यात् पुंसवनक्रियाम्। प्राजापत्यश्चरुस्तत्र चन्द्रनामा हुताशनः। गव्ये दध्नि यवञ्चैकं द्वौ माषावपि निक्षिपेत्। पतिः पृच्छेत् स्त्रियं भद्रे! किं त्वं पिबसि त्रिः कृतम्। ततः सीमन्तिनी ब्रूयान्मया पुंसवनं त्रिधा। प्रसृतींस्त्रीन् पिबेन्नारी यवमाषयुतं दधि। जीवत्सुताभिर्वनितां यागस्थानं समानयेत्। संस्थाप्य वामभागे तां चरुहोमं समाचरेत्। पूर्ववच्चरुमादाय मायां कूर्च्चं समुच्चरन्। ये गर्भविघ्नकर्त्तारो ये च गर्भविनाशकाः। भूताः प्रेताः पिशाचाश्च वेताला बाल-

घातकाः। तान् सर्वान् नाशय इन्द्र गर्भरक्षां कुरु द्विठः। मन्त्रेणानेन रक्षोघ्नं चिन्तयित्वा हुताशनम्। रुद्रं प्रजापतिं ध्यायन् प्रदद्याद्द्वादशाहुतीः। ततो मायाचन्द्रमसे स्वाहेत्याहुतिपञ्चकम्। दत्त्वा भार्य्यां हृदि स्पृष्ट्वा मायां लक्ष्मीं शतं जपेत्। ततः स्विष्टिकृतं हुत्वा प्रायश्चित्तं समापयेत्॥ इति पुंसवनम्॥

ततस्तु पञ्चमे मासि दद्यात् पञ्चामृतं स्त्रियै। शर्करा मधु दुग्धञ्च घृतं दधि समांशकम्। पञ्चामृतमिदं प्रोक्तं देहशुद्धैर विधीयते। वाग्भवं मदनं लक्ष्मीं मायां कूर्च्चं पुरन्दरम्। पञ्चगव्योपरि शिवे! प्रजप्य पञ्च पञ्चधा। एकीकृत्यामृतान्यत्र प्राशयेद्दयितां पतिः॥ इति पञ्चामृतदानम्॥

सीमन्तोन्नयनं कुर्य्यान्मासि षष्ठेऽष्टमेऽपि वा। यावन्न जायतेऽपत्यं तावत् सीमन्तनक्रिया। पूर्वोक्तधाराहोमान्तं कर्म्म कृत्वा स्त्रिया सह। उपविश्यासने प्राज्ञः प्रदद्यादाहुतित्रयम्। विष्णवे भास्करे धात्रे वह्निजायां समुच्चरन्। ततश्चन्द्रमसं ध्यात्वा शिवनाम्नि हुताशने। सप्तधा हवनं कुर्य्यात् सोममुद्दिश्य मानवः। अश्विनौ वासवं विष्णुं शिवं दुर्गां प्रजापतिम्। ध्यात्वा प्रत्येकतो दद्यादाहुतीः पञ्चधा शिवे!। स्वर्णकङ्कतिकां भर्त्ता गृहीत्वा दक्षिणे करे। सीमन्ताद्ब्रह्मकेशान्तःकेशपाशे निवेशयेत्। शिवं विष्णुं विधिं ध्यायन् मायावीजं समुच्चरन्। भार्य्ये! कल्याणि! सुभगे! दशमे मासि सुव्रते!। सुप्रसूता भव प्रीता प्रसादाद्विश्वकर्म्मणः। आयुष्मति! कङ्कतिका वर्च्चस्वी ते शुभं कुरु। ततः समापयेत् कर्म्म स्विष्टिकृद्धवनादिभिः॥ इति सीमन्तोन्नयनम्॥

जातमात्रं सुतं दृष्ट्वा दत्त्वा स्वर्णं गृहान्तरे। पूर्वोक्तविधिना धीरो धाराहोमं समापयेत्। ततः पञ्चाहुतीर्दद्यादग्निमिन्द्रं

प्रजापतिम्। विश्वान् देवांश्च ब्रह्माणमुद्दिश्य तदनन्तरम्॥ मधुसर्पिः कांस्यपात्रे समानीय समांशकम्। वाग्भवं सप्तधा जप्त्वा प्राशयेत्तनयं पिता। दक्षहस्तानामिकया मन्त्रमेवं समुच्चरन्। आयुर्वर्च्चो बलं मेधा वर्द्धतां ते सदा शिशो!। इत्यायुर्जननं कृत्वा गुप्तं नाम प्रकल्पयेत्। गन्धर्वतन्त्रे द्वितीयपटले॥ बालकस्य तु जिह्वायां त्रिदिनाभ्यन्तरे न्यसेत्। मधुना श्वेतदूर्वाभिः सुवर्णस्य शलाकया। इदं वाग्भवकूटन्तु लिखेद्वै जननान्तरे। स एव पण्डितो भूयान्न तु मूर्खो भवेद्ध्रुवम्॥ वाग्भवकूटमपि तत्रैव यथा। कामदेवस्ततो योनिस्तुर्य्यस्वरपुरन्दरौ। भुवनेशो ततः पश्चात् पञ्चवक्त्रविभूषितः। अयं स वाग्भवो देवीवागीशत्वप्रदायकः। इदं वाग्भवकूटन्तु बालिशस्यापि मूर्द्धनि। हस्तं दत्त्वा पठेत् सिद्धमष्टोत्तरशतं प्रिये!। सोऽपि श्लोकं महेशानि! करोत्येव न संशयः॥ बालिशस्य मूर्खस्य। सत्तर्कपदवाक्यार्थशब्दालङ्कारसारवित्। जिह्वायां न्यासनाद्देवि! मूकोऽपि सुकविर्भवेत्। बृहन्नीलतन्त्रे सप्तमपटले द्वितीयविद्यात्रक्षरीमन्त्रमधिकृत्य। इदानीं शृणु चार्वङ्गि! कविताकारकं परम्। प्रयोगं दुर्लभं गोप्यं तव स्नेहात् प्रकाशितम्। चण्डीं चाण्डालिनीञ्चैव त्यागिनं सर्वमोहनम्। वीजत्रयं जपेद्रात्रौ मध्ये चैव रवेर्दिने। अष्टाधिकसहस्रस्य प्रमाणेन जपं चरेत्। शताभिमन्त्रितं कृत्वा पिवेच्च जलमुत्तमम्। सप्तदिनप्रयोगेण कविता चित्तमोदिनी। जायते नात्र सन्देहः सत्यं सुरगणार्च्चिते!। पाणिना दक्षिणेनैव मधुलाजान् समानयेत्। नाड़ीच्छेदाच्च प्रागेव बालं संस्कुर्य्याच्च साधकः। कवित्वं जायते तेन पाण्डित्यं सुरवन्दिते!। जिह्वां सम्मार्ज्य देवेशि! लिखेद्धेमशलाकया। दूर्वया वा महादेवि! जिह्वोष्ठयोः समालिखेत्। पंक्तिद्वयेन संलेख्य कुर्य्याच्च बालसंस्क्रियाम्। एकादशाहे देवेशि!

"द्वादशाहेऽथ वा पुनः। वर्णजात्यादिभेदेन मासान्तः सम्भविष्यति। यथाशक्त्युपचारेण देवतां पूजयेत् पुनः। सम्पूज्य देवतां भक्त्या लिखेन्मन्त्रं महेश्वरि!। यदा पिता न देशस्थः पितृव्यो मातुलोऽपि वा। लिखित्वा परमेशानि! कुर्य्याच्च बालसंस्क्रियाम्। मूलमन्त्रं लिखेन्मन्त्री यस्यौष्ठे श्वेतदूर्वया। वाक्योच्चारणतो बालो वाग्मी द्रुतकविर्भवेत्। जन्मसंस्कारकं नाम पुत्रे जाते प्रशस्यते। जिह्वायाञ्च लिखेद्यन्त्रं यत्नं दारुकुशेन वा। वारत्रयन्तु सम्मार्ज्य दक्षिणेनैव पाणिना। मन्त्रमुच्चार्य्य प्रत्येकं पंक्तिं कुर्य्यात् सुशोभनम्। आदौ संस्कारः कर्त्तव्यस्तदन्ते विलिखेन्मनुम्। गन्धचन्दनपुष्पैश्च पूजयेत् तारिणीं शिवे!। उत्तराभिमुखो भूत्वा स्थापयेत् पीठमुत्तमम्। पूजयेत् तारिणीं देवीं नानाभक्ष्यैः सुशोभनैः। षोड़शैरुपचारैश्च पूजयेद् भक्तिभावतः। धूपं दद्याद्गुग्गुलुना सर्वकर्म्मफलप्रदम्। नारिकेलं तथा रम्भां वदरं वकुलं तथा। वीजपूरं कर्णिकारं शर्करां गन्धसंयुताम्। मधूदकं कलायञ्च सिद्धान्नं पायसाप्लुतम्। माषं मत्स्यं पिष्टकञ्च दद्यादतिप्रियं महत्। कविर्वाग्मी भवेत् पुत्रः सर्वकामप्रकारकः। जितेन्द्रियः सत्यवादी धार्म्मिको जायते महान्॥ दद्यादित्यनेन सम्प्रदानोपस्थितेर्वचने ब्राह्मणपदस्याभावेऽपि ब्राह्मणेभ्य इति लभ्यते। अतो ब्राह्मणसम्प्रदानकमाषादिदानव्यवहार इति॥ महानिर्वाणतन्त्रे॥ कृतोपनयने पुत्रे तेन नाम्ना समाह्वयेत्। प्रायश्चित्तादिकं कृत्वा जातकर्म्म समापयेत्। नालच्छेदं ततो धात्री कुर्य्यादुत्साहपूर्वकम्। यावन्न च्छिद्यते नालं तावत् शौचं न बाधते। प्रागेव नाड़ीकाच्छेदात् देवीं पैत्रीं क्रियाच्चरेत्। कुमार्य्याश्चापि कर्त्तव्यमेवमेवममन्त्रकम्॥ इति जातकर्म्म॥

षष्ठे वा चाष्टमे मासि नाम कुर्य्यात् प्रकाशतः। स्नाप-

यित्वा शिशुं माता परिधाप्याम्बरे शुभे। भर्त्तुः पार्श्वं समागत्य प्राङ्मुखं स्थापयेत् सुतम्। अभिषिञ्चेत् शिशोर्मूर्द्ध्नि सहिरण्यकुशोदकैः। जाह्नवी यमुना रेवा सपवित्रा सरस्वती। नर्म्मदा वरदा कुम्भी सागराश्च सरांसि च। एते त्वामभिषिञ्चन्तु धर्म्मकामार्थसिद्धये। क्लीं। आपो हिष्ठा मयो भुवस्ता न ऊर्ज्जे दधातन। महेरणाय चक्षषे यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः तस्मा अरङ्गमाम वो क्षयाय जिन्वथ आपो जनयथा च नः। अभिषिच्य त्रिभिर्मन्त्रैः पूर्व्ववद्वह्निसंस्क्रियाम्। कृत्वा सम्पाद्य धारान्तं दद्यात् पञ्चाहुतीः सुधीः। अग्नये प्रथमं दत्त्वा वासवाय ततः परम्। ततः प्रजानां पतये विश्वेदेवेभ्य एव। ब्रह्मणे चाहुतीं दद्याद्वह्नौ पार्थिवसंज्ञके। ततोऽङ्के पुत्रमादाय श्रावयेद्दक्षिणश्रुतौ। स्वल्पाक्षरं सुखोच्चार्य्यं शुभं नाम विचक्षणः। श्रावयित्वा त्रिधा नाम ब्राह्मणेभ्यो निवेद्य च। ततः समापयेत् कर्म्म कृत्वा स्विष्टिकृतादिकम्। कन्याया निष्क्रमो नास्ति वृद्धिश्राद्धं न विद्यते। नामान्नप्राशनं चूड़ां कुर्य्याद्धोमानमन्त्रकम्। चतुर्थे मासि षष्ठे वा कुर्य्यान्निष्क्रमणं शिशोः। कृतनित्यक्रियस्तातः सम्पूज्य गणनायकम्। स्नापयित्वा तु तनयं वस्त्रालङ्कारभूषितम्। संस्थाप्य पुरतो विद्वानिमं मन्त्रमुदीरयेत्। ब्रह्मा विष्णुः शिवो दुर्गा गणेशो भास्करस्तथा। इन्द्रो रायुः कुवेरश्च वरुणोऽग्निर्वृहस्पतिः। शिशोः शुभं प्रकुर्व्वन्तु रक्षन्तु पथि सर्व्वदा। इत्युक्त्वाङ्के समादाय गीतवाद्यपुरःसरम्। वहिर्निष्क्रामयेद्बालं सानन्दैः स्वजनैः सह। गत्वाध्वनि कियद्दूरं शिशुं सूर्य्यं निरीक्षयेत्। क्लीं। तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतम्। शृणुयाम शरदः शतम्। इत्यादित्यं दर्शयित्वा समागत्य निजालयम्। अर्घ्यं दत्त्वा

दिनेशाय स्वजनान् भोजयेत् पिता॥ इति निष्क्रमणम्॥

षष्ठे मासि कुमारस्य मासे वाप्यष्टमे शिवे!। पितृभ्राता पिता वापि कुर्य्यादन्नाशनक्रियाम्। पूर्व्ववद्देवपूजादि वह्नि-संस्करणं तथा। एवं धारान्तकर्म्माणि सम्पाद्य विधिवत् पिता। दद्यात् पञ्चाहुतीस्तत्र शुचिनाम्नि हुताशने। अग्निमुद्दिश्य प्रथमां द्वितीयां वासवं स्मरन्। ततः प्रजापतिं देवं विश्वान् देवान् ततः परम्। ब्रह्माणञ्च समुद्दिश्य पञ्चमीमाहुतिं त्यजेत्। ततोऽग्नावन्नदां ध्यात्वा दत्तपञ्चाहुतिः पिता। तत्रा-थवा गृहेऽन्यस्मिन् वस्त्रालङ्कारशोभितम्। क्रोड़े निधाय तनयं प्राशयेत् पायसामृतम्। पञ्चप्राणाहुतेर्मन्त्रैर्भोजयित्वा तु पञ्चधा। ततोऽन्नव्यञ्जनादीनां दत्त्वा किञ्चित् शिशो-र्मुखे। शङ्खतूर्य्यादिघोषेण प्रायश्चित्तं समापयेत्।

इत्यन्नप्राशनं प्रोक्तं चूड़ाविधिमतः शृणु। तृतीये पञ्चमे वर्षे कुलाचारानुसारतः। चूड़ाकर्म्म शिशोः कुर्य्याद्बालसंस्का-रसिद्धये। देवपूजादिधारान्तकर्म्म निष्पाद्य साधकः। संत्या-ग्नेरुत्तरे देशे वृषगोमयपूरितम्। तिलगोधूमसंयुक्तं शरावं स्थापयेद् बुधः। कवोष्णं सलिलञ्चापि क्षुरमेकं सुशाणितम्। आसाद्य तनयं तत्र जनकः स्वीयवामतः। संस्थाप्य जननीक्रोड़े कवोष्णसलिलैश्च तैः। वारुणं दशधा जप्त्वा सम्मार्ज्य शिशुमूर्द्ध-जान्। मायया कुशपत्राभ्यां जुष्टिमेकां प्रकल्पयेत्। मायां लक्ष्मीं त्रिधा जप्त्वा गृहीत्वा लौहजं क्षुरम्। छित्त्वा तु जुष्टिका-मूलं मातृहस्ते निवेशयेत्। कुमारमाता हस्ताभ्यामादाय गोमयान्विते। शरावे स्थापयेज्जुष्टिं नापिताय पिता वदेत्। क्षुरमुण्डे शिशोः चौरं सुखं साधय ठद्वयम्। पठित्वा नापितं पश्यन् सत्यनामनि पावके। प्रजापतिं समुद्दिश्य प्रदद्यादाहुति-त्रयम्। नापितेन कृतचौरं स्नापयित्वा शिशुं ततः। वस्त्रा-

रैव च। विदूरथः शुनःशेफो जातुकर्णश्च रौरवः। और्वः संवर्त्तकः शुक्रः सुराचार्य्यो बृहस्पतिः। चन्द्रः सूर्य्यो बुधः श्रीमान् यज्ञसूत्रस्य ग्रन्थिषु। तिष्ठन्तु मम वामांशे वामस्कन्धे त्वहर्निशम्। ब्रह्माद्या देवताः सर्वा यज्ञसूत्रस्य देवताः॥ तथा। जीवन्यासं प्रवक्ष्यामि यज्ञसूत्रस्य संशृणु। यज्ञसूत्रं करे कृत्वा दक्षिणे द्विजसत्तमः। गायत्रीं प्रथमं जप्त्वा प्रणवं प्रजपेत् शतम्। गायत्रीं पुनरुक्त्वा वै वामस्कन्धे निवेशयेत्। जीवन्यासं विना देवि! यज्ञसूत्रञ्च सूत्रवत्॥ महानिर्वाणे॥ यज्ञोपवीतं दण्डञ्च वैणवं खादिरञ्च वा। पालाशमथवा दद्यात् चीरवृक्ष-समुद्भवम्। आपोहिष्ठेति मन्त्रेण मायया पुटितेन च। त्रिरा-वृत्त्या कुशाम्भोभिर्द्द तदण्डोपवीतकम्। अभिषिच्य ततस्तोयैः पूरयेद्बालकाञ्जलिम्। तदञ्जलिं दिनेशाय दातारं ब्रह्मचा-रिणम्। तच्चक्षुरिति मन्त्रेण दर्शयेद्भास्करं गुरुः। दृष्ट्वा भास्क-रमाचार्य्यो वदेन्माणवकं ततः। मम व्रते मनो धेहि मम चित्तं ददामि ते। जुषस्वैकमना वत्स! मम वाचोऽस्तु ते शिवम्। हृदि स्पृष्ट्वा पठित्वेनं किंनामासीति तं वदेत्। शिष्यस्त्वमुकशर्माहं भवन्तमभिवादये। कस्य त्वं ब्रह्मचारीति गुरौ पृच्छति पार्वति!। शिष्यः सावहितो ब्रूयाद्भवतो ब्रह्मचार्य्यहम्। इन्द्रस्य ब्रह्म-चारी त्वमाचार्य्यस्ते हुताशनः। इत्युक्त्वा स गुरुः पश्चाद्देवेभ्यस्तं समर्पयेत्। त्वां प्रजापतये वत्स! सवित्रे वरुणाय च। पृथिव्यै सर्वदेवेभ्यः सर्ववेदेभ्य एव च। समर्पयामि ते सर्वे रक्षन्तु त्वां निरन्तरम्। ततो माणवको वह्निं दक्षिणावर्त्मयोगतः। गुरुं प्रदक्षिणीकृत्य आसने पुनराविशेत्। गुरुः शिष्येण सम्पृष्टः समु-द्भवहुताशने। पञ्च देवान् समुद्दिश्य दद्यात् पञ्चाहुतीः प्रिये!। प्रजापतिस्ततः शक्रो विष्णुर्ब्रह्मा शिवस्तथा। मायादिवह्निजाया-न्तैर्जुहुयात् स्वस्वनामभिः। अनुक्तमन्त्रे सर्वत्र विधिरेष प्रकीर्त्तितः।

ततो दुर्गा महालक्ष्मीः सुन्दरी भुवनेश्वरी। इन्द्रादिदशदिक्-
पाला भास्करादिनवग्रहाः। प्रत्येकनाम्ना हुत्वैतान् वाससाच्छाद्य
बालकम्। पृच्छेन्माणवकं प्राज्ञो ब्रह्मचर्य्याभिमानिनम्। को
वाञ्छयस्ते तनय! ब्रूहि किन्ते मनोगतम्। ततः शिष्यः साव-
हितो धृत्वा गुरुपदद्वयम्। करोतु मामाश्रमिणं ब्रह्मविद्योप-
देशतः। एवं प्रार्थयमानस्य दक्षकर्णे शिशोस्तदा। श्रावयित्वा
त्रिधा तारं सर्वमन्त्रमयं शिवे!। व्याहृतित्रयमुच्चार्य्य सावित्रीं
श्रावयेद् गुरुः। ऋषिः सदाशिवः प्रोक्तश्छन्दोऽनुष्टुबुदाहृतम्।
अधिष्ठात्री च सावित्री मोक्षार्थे विनियोगिता। अन्तर्गतं मह-
द्वर्चो वरणीयं यथात्मभिः। ध्यायेम तत् पदं सत्यं सर्वव्यापि
सनातनम्। यो भर्गः सर्वसाक्षी नो मनोबुद्धीन्द्रियाणि च।
धर्मार्थकाममोक्षेषु प्रेरयेद्विनियोजयेत्। इत्थमर्थयुतां ब्रह्म-
विद्यामासाद्य सद्गुरुः। शिष्यं नियोजयेद्देवि! गृहस्थाश्रम-
कर्मसु। ब्रह्मचर्य्योचितं वेशं वत्सेदानीं परित्यज। शाम्भवो-
दितमार्गेण देवान् पितॄन् समर्च्चय। ब्रह्मविद्योपदेशेन पवित्रं
ते कलेवरम्। प्राप्ता गृहस्थाश्रमिता तदुक्तं कर्म कल्पय। उप-
वीतद्वयं दिव्यवस्त्रालङ्करणानि च। गृहाण पादुकाच्छत्रं गन्ध-
माल्यानुलेपनैः। ततः काषायवसनं कृष्णाजिनसमन्वितम्।
यज्ञसूत्रं मेखलाञ्च दण्डं भिक्षाकरण्डकम्। आचारादर्जितां
भिक्षां समर्प्य गुरवे शिवे!। शुद्धोपवीतयुगलं परिधायाम्बरे
शुभे। गन्धमाल्यधरस्तूष्णीं तिष्ठेदाचार्य्यसन्निधौ। ततो गृहस्था-
श्रमिणं शिष्यमेतद्वदेद् गुरुः। जितेन्द्रियः सत्यवादी ब्रह्मविद्या-
रतो भव। स्वाध्यायाश्रमकर्माणि यथाधर्मेण साधय। इत्यादिश्य
त्विदं पश्चात् समुद्भवहुताशने। मायादिप्रणवान्तेन भूर्भुवः-
स्वस्त्रयेण च। हावयित्वा त्रिधाचार्य्यः स्विष्टिकृद्धोममाचरेत्।
दत्त्वा पूर्णाहुतिं भद्रे! व्रतकर्म समापयेत्। वीजसेकादिसं-

स्कारा व्रतान्ताः पितृतो नव। उद्वाहः पितृतो वापि स्वतोऽपि सिध्यति प्रिये!॥ मत्स्यसूक्ते एकत्रिंशत्पटले॥ अदारस्य गतिर्नास्ति सर्वास्तस्याफलाः क्रियाः। सुरार्चनं महायज्ञं हीनभार्य्यो विवर्जयेत्। एकचक्ररथो यद्वदेकपक्षो यथा खगः। अभार्य्योऽपि नरस्तद्वदयोग्यः सर्वकर्मसु। भार्य्याहीने क्रिया नास्ति भार्य्याहीने कुतः सुखम्। भार्य्याहीने गृहं कस्य तस्माद्भार्य्यां समाश्रयेत्। सर्वस्वेनापि देवेशि! कर्त्तव्यो दारसंग्रहः। इति दारपरिग्रहस्यावश्यकत्वम् तत्रैव॥ सन्न्यासमथवा कार्य्यं तृतीयं नोपपद्यते। सवर्णा ब्राह्मणी या तु धर्मपत्नी च सा स्मृता। असवर्णा च या भार्य्या कामपत्नी तु सा स्मृता॥ इति धर्मपत्नीनिर्णयः। महानिर्वाणतन्त्रे॥ विवाहे हि कृतस्नानः कृतनित्यक्रियः कृती। पञ्च देवान् समभ्यर्च्य गौर्य्यादिमातृकास्तथा। वसोर्धारां कल्पयित्वा वृद्धिश्राद्धं समाचरेत्। रात्रौ प्रतिश्रुतं पात्रं गीतवाद्यपुरःसरम्। छायामण्डपमानीय उपविश्य वरासने। वासवाभिमुखं दाता पश्चिमाभिमुखो विशेत्। आचार्य्यैः स्वस्तिमृद्धिञ्च कथयेद्ब्राह्मणैः सह। साधुप्रश्नं वरं पृच्छेदर्च्चनाप्रश्नमेव च। वरात्प्रश्नोत्तरं नीत्वा पाद्याद्यैर्वरमर्चयेत्। समर्पयामि वाक्येन देशद्रव्यं समर्पयेत्। पादयोरर्पयेत्पाद्यं शिरस्यर्घञ्च निवेदयेत्। आचम्यं वदने दद्याद्गन्धं माल्यं सुवाससी। दिव्याभरणरत्नानि यज्ञसूत्रं समर्पयेत्। ततस्तु भाजने कांस्ये कृत्वा दधि घृतं मधु। समर्पयामि वाक्येन मधुपर्कं करेऽर्पयेत्। वरोऽपि पात्रमादाय वामे पाणौ निधाय च। दक्षाङ्गुष्ठानामिकाभ्यां प्राणाहुत्युक्तमन्त्रकैः। पञ्चधाघ्राय तत्पात्रमुदीच्यां दिशि धारयेत्। मधुपर्कं समाप्यैवं पुनराचामयेद् द्वयम्। दूर्वाक्षताभ्यां जामातुर्विधृत्य जानु दक्षिणम्। स्मृत्वा विष्णुं तत्सदिति मासपक्षौ तिथिं ततः। समुल्लिख्य निमित्तानि वृणुयाद्वरमुत्तमम्। गोत्र-

प्रवरनामानि प्रत्येकं प्रपितामहात् । षष्ठ्यन्तानि समुच्चार्य्य वरस्य जनकावधि । द्वितीयान्तं वरं ब्रूयाद्गोत्रप्रवरनामभिः । तथैव कन्यामुद्दिश्य ब्राह्मोद्वाहेन पण्डितः । दातुं भवन्तमित्युक्ता वृणेऽहमिति कीर्त्तयेत् । वृतोऽस्मीति वरो ब्रूयात् ततो दाता वदेद्वरम् । यथाविहितमित्युक्ता विवाहकर्म्म कुर्विति । वरो ब्रूयाद् यथाज्ञानं करवाणि तदुत्तरम् । ततः कन्यां समानीय वस्त्रालङ्कारभूषिताम् । वस्त्रान्तरेण सञ्छाद्य स्थापयेद्वरसम्मुखे । पुनर्वरं समभ्यर्च्य वासोऽलङ्करणादिभिः । वरस्य दक्षिणे पाणौ कन्यापाणिं नियोजयेत् । तन्मध्ये पञ्चरत्नानि फलताम्बूलमेव वा। दत्त्वार्च्चयित्वा तनयां वराय विदुषेऽर्पयेत् । प्राग्वत् त्रैपुरुषाख्यानं निमित्ताख्यानमेव च । आत्मनः काममुद्दिश्य चतुर्थ्यन्तं वरं वदेत् । कन्याभिधां द्वितीयान्तामर्च्चितां समलङ्कृताम् । साच्छादनां प्रजापतिदेवताकामुदीरयन् । तुभ्यमहमिति प्रोच्य दद्यात् सम्प्रददे वदन् । वरः स्वस्तीति स्वीकुर्य्यात् सम्प्रदाता वरं वदेत् । धर्मे चार्थे च कामे च भवता भार्य्यया सह । वर्त्तितव्यं वरो वाचमुक्ता कामस्तुतिं पठेत् । दाता कामो गृहीतापि कामायादाच्च कामिनीम् । कामेन त्वां प्रतिगृह्णामि कामः पूर्णोऽस्तु चावयोः । ततो वदेत् सम्प्रदाता कन्यां जामातरं प्रति । प्रजापतिप्रसादेन युवयोरभिवाञ्छितम् । पूर्णमस्तु शिवञ्चास्तु धर्मं पालयतं युवाम् । तत आच्छाद्य वस्त्रेण सम्प्रदाता सुमङ्गलैः । परस्परमुखालोकं कारयेद्वरकन्ययोः । ततो हिरण्यरत्नानि यथाशक्त्यनुसारतः । जामात्रे दक्षिणां दद्यादच्छिद्रमवधारयेत् । वरस्तु भार्य्यया सार्द्धं तद्रात्रौ दिवसेऽपि वा । कुशण्डिकोक्तविधिना वह्निस्थापनमाचरेत् । योजकाख्यः पावकोऽत्र प्राजापत्यश्चरुः स्मृतः । धारान्तं कर्म्म सम्पाद्य दद्यात् पञ्चाहुतीर्वरः । शिवं दुर्गां तथा विष्णुं ब्रह्माणं वज्रधारिणम् ।

ध्यात्वैकैकं समुद्दिश्य जुहुयात् संस्कृतेऽनले। भार्य्यायाः पाणि-युगलं गृह्णीयात्तान्युदीरयन्। पाणिं गृह्णामि सुभगे! गुरुदेव-रता भव। गार्हस्थ्यं धर्मकर्म्मेण यथावदनुशीलय। घृतेन स्वामि-दत्तेन लाजैर्भ्रात्राहृतैः शिवे!। प्रजापतिं समुद्दिश्य दद्याद्-द्वे चाहुती वरः। प्रदक्षिणीकृत्य वह्निमुत्थाय भार्य्यया सह। दुर्गां शिवं रमां विष्णुं ब्राह्मीं ब्रह्माणमेव च। युग्मं युग्मं समुद्दिश्य त्रिस्त्रिधा हवनं चरेत्। अश्ममण्डलिकासमारोहौ कुर्य्यादम-न्त्रकम्। निशायाञ्चेत्तदा स्त्रीभिः पश्येद्ध्रुवामरुन्धतीम्। प्रत्या-वृत्यासने सम्यगुपविश्य वरस्तदा। स्विष्टिकृद्धोमपूर्णाहुत्यन्तं कर्म्म समापयेत्। ब्राह्मो विवाहो विहितो दोषहीनः सवर्णया। कुलधर्म्मानुसारेण गोत्रभिन्ना सपिण्डजा। ब्राह्मोद्वाहेन या ग्राह्या सैव पत्नी गृहेश्वरी। तदनुज्ञां विना ब्राह्मविवाहं ना-चरेत् पुनः। अस्या अपत्ये तद्वंशे विद्यमाने कुलेश्वरि!॥

अथ महानिर्वाणतन्त्रोक्तदशसंस्कारप्रयोगः। संस्कारै-र्विना दैवपैत्रकर्म्मानधिकारितया सर्व्वैर्विप्रादिभिर्वर्णैः स्वस्व-वर्णोक्ताः संस्काराः कार्य्याः। दश संस्कारास्तु वीजसेकपुंसवन-सीमन्तोन्नयनजातकर्म्मनामकरणनिष्क्रमणान्नप्राशनचूड़ोपनयन-विवाहाः। ततः शूद्राणामधमशूद्राणामुपनयनं नास्ति तेषां नवैव संस्काराः। ब्राह्मणक्षत्रियवैश्यानान्तु दश संस्कारा इति॥

अथ गर्भाधानम्। कृतनित्यक्रिय आसने उपविश्य दीक्षा-पद्धतिलिखिष्यमाणमन्त्रैर्घटान् संस्थाप्य तत्र ब्रह्मदुर्गागणेश-विष्णुसूर्य्यशिवादित्यादिनवग्रहेन्द्रादिदशदिक्पालान् सम्पूज्य ततो गौर्य्यादिषोड़शमातृकाः पूजयेत्। षोड़शमातृकास्तु॥ गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा शान्तिः पुष्टिर्धृतिः क्षमा॥ आत्मदेवता कुलदेवता एता-स्त्वः। पूजाक्रमस्तु॥ अर्घ्यस्थापनं कृत्वा बद्धाञ्जलिः। क्रीं

आयान्तु मातरः सर्वाश्चिदम्बानन्दकारिकाः । विवाहव्रतयज्ञानां सर्वाभीष्टं प्रकल्प्यताम् । यानध्वजसमारूढ़ाः सौम्यमूर्त्तिधराः सदा । आयान्तु मातरः सर्वा यज्ञोत्सवसमृद्धये ॥ इति मातृकागणमावाह्य ह्रीं गौर्य्यै मात्रे नम इति पाद्यादिभिर्यथाशक्ति सम्पूज्य एवं पद्मायै मात्रे नम इत्यादिभिः षोड़शमातृकार्च्चनं स्वशक्त्या विधाय नाभिमात्रायां भित्तौ प्रादेशमात्रमध्ये सिन्दूरेण रक्तचन्दनेन वा सप्त वा पञ्च वा विन्दून् दद्यात् । ततः प्रत्येकविन्दौ क्लोमिति ह्रीमिति श्रीमिति वीजत्रयेणाविच्छिन्नां घृतधारां दत्त्वा तत्र वसुं यजेत् । ततो होमप्रकरणलेख्यस्थण्डिलादिवह्निस्थापनान्तं कर्म्म कृत्वा होमद्रव्याणि संस्कृत्य प्राजापत्यं चरुं श्रपयेत् । ततो वायुनामानमग्निं ध्यात्वा आवाह्य घृतेन पाद्यादिभिः सम्पूज्य धाराहोमान्तं कर्म्म कृत्वा ह्रीं प्रजापतये स्वाहा इति मन्त्रेण चरुणा वारत्रयं जुहुयात् । ततो ह्रीं विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि यच्छतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते । स्वाहा इत्यनेन चरुणा वारमेकं जुहुयात् । तत आज्येन चरुणा साज्येन न चरुणा वा सूर्य्यप्रजापतिविष्णून् ध्यात्वा ह्रीं सूर्य्याय स्वाहा ह्रीं प्रजापतये स्वाहा ह्रीं विष्णवे स्वाहा इति मन्त्रत्रयेण प्रत्येकं जुहुयात् । ततः सिनीवालीसरस्वत्यश्विनान् ध्यात्वा ह्रीं । गर्भं धेहि सिनीवाली गर्भं धेहि सरस्वती । गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ स्वाहा इत्यनेन घृतेन जुहुयात् । ततो मनसा रविं विष्णुं ध्यात्वा क्लीं स्त्रीं क्रीं श्रीं हुमित्यमुष्यै पुत्रकामायै गर्भमाधेहि स्वाहा । इति मन्त्रेणाज्येन जुहुयात् । ततो विष्णुं मनसा ध्यात्वा ह्रीं । यथेयं पृथिवी देवी ह्युत्ताना गर्भमादधे । तथा त्वं गर्भमाधेहि दशमे मासि सूतये ॥ स्वाहा इति मन्त्रेणाज्येन जुहुयात् । ततः पुनरपि विष्णुं मनसा ध्यात्वा ह्रीं । विष्णोर्ज्येष्ठेन रूपेण

नार्य्यामस्यां वरीयसम्। सुतमाधेहि। स्वाहा इत्यनेनाज्येन जुहु-यात्। ततः क्लीं ह्रीं स्त्रीं ह्रीं क्लीं ह्रीमिति मन्त्रेण बध्वाः शिरः स्पृशेत्। ततः पुत्रवतीभिर्नारीभिः परिवेष्टितो हस्ताभ्यां बध्वाः शिर आलभ्य विष्णुं दुर्गां विधिं सूर्य्यञ्च ध्यात्वा तस्याः क्रोड़ाञ्चले फलत्रयं पतिर्दद्यात्। ततः स्विष्टिकृतं हुत्वा प्रायश्चित्त-होमं कुर्य्यात्। ततः प्रदोषसमये गौरीसहितशङ्करं सम्पूज्य भास्करार्घ्यं दद्यादिति। ततस्तद्रात्रावन्यरात्रौ वा युग्मायां भार्य्यया सह भवनान्तरं गत्वा प्रजापतिं मनसा ध्यात्वा पत्नीं संस्पृश्य शय्याशोधनं कुर्य्यात्। यथा। ह्रीं आवयोः सुप्रजायै त्वं शय्ये! शुभकरी भव। ततो भार्य्यया सह शय्यामारुह्य प्राङ्मुख उदङ्मुखो वा उपविश्य स्त्रियं पश्यन् तन्मस्तके हस्तं दत्त्वा वामेन पाणिना तामालिङ्ग्य तस्याः शीर्षे क्लीमिति शतधा चिवुके ऐमिति शतधा कण्ठे श्रीमिति विंशतिधा स्तनद्वन्द्वे श्रीमिति शतधा हृदये ह्रीमिति पञ्चविंशतिधा जप्त्वा योनौ करं दत्त्वा क्लीं ऐमिति अष्टोत्तरशतं जप्त्वा लिङ्गेऽपि ऐं क्लीमि-त्यष्टोत्तरशतं जपेत्। ततो ह्रीमिति मन्त्रेण योनिं विकाश्य सुतप्राप्तये स्त्रियमुपगच्छेत्। ततो रेतःपातसमये विश्वकर्म्माणं ध्यात्वा नाभेरधस्तात् चित्कुण्डे रेतः पातयेत्। शुक्रपातान्त-समये इमं पठेत्। ह्रीं। यथाग्निना सगर्भा भूर्द्यौर्यथा वज्रधा-रिणा। वायुना दिग्गर्भवती तथा गर्भवती भव॥ इति गर्भा-धानम्॥

अथ पुंसवनम्। पतिः कृतनित्यक्रियः पञ्चदेवतापूजादिवृद्धि-श्राद्धान्तं गर्भाधानपद्धत्युक्तं विधाय ततो वह्निस्थापनादि कृत्वा चन्द्रनामानमग्निं ध्यात्वावाह्य सम्पूज्य प्राजापत्यं चरुं पचेत्। ततो गव्ये दधि यवमेकं द्वौ माषौ च निक्षिप्य स्त्रियं पृच्छेत्। हे भद्रे! किं त्वं त्रिः कृतं पिबसि इति। ततः स्त्री ब्रूयात् मया

पुंसवनं व्रतं पीयते। इत्युक्ता यवमाषश्रुतदधिप्रसृतित्रयं पिबेत्। ततो जीववत्साभिर्वनिताभिस्तां यागस्थानं समानयेत्। ततो वामभागे तां संस्थाप्य चरुमानीय ह्रीं हुं ये चात्र विघ्नकर्त्तारो ये च गर्भविनाशकाः। भूताः प्रेताः पिशाचाश्च वेताला बालघातकाः। तान् सर्वान्नाशय नाशय गर्भरक्षां कुरु स्वाहा। इत्यनेन मन्त्रेण रक्षोघ्नं विचिन्त्य प्रजापतिञ्च ध्यायन् चरुणा द्वादशाहुतीर्जुहुयात्। ह्रीं चन्द्रमसे स्वाहेति मन्त्रेण पञ्चाहुतीर्दद्यात्। ततो भार्य्याहृदि स्पृष्ट्वा ह्रीं श्रीमिति मन्त्रं शतं जपेत्। ततः स्विष्टिकृद्धोमस्तदनन्तरं प्रायश्चित्तहोमादिवह्निविसर्ज्जनान्तं कर्म्म कृत्वा दक्षिणाच्छिद्रावधारणान्तं कुर्य्यादिति पुंसवनम्॥

अथ पञ्चामृतदानम्। तत्तु गर्भजननमासावधिके पञ्चमे मासि गर्भिण्यै देयम्। पञ्चामृतन्तु समांशेन दधिमधुदुग्धघृतशर्करामिश्रितरूपम्। अनेन स्त्रिया देहशुद्धिर्भवति। तत्र प्रत्येकं द्रव्ये ऐं क्लीं श्रीं ह्रीं हुं लमिति पञ्चधा जप्त्वा सम्मिश्र्य गर्भिणीं प्राशयेदिति पञ्चामृतदानम्॥

अथ सीमन्तोन्नयनम्। तत्तु षष्ठेऽष्टमे वा मासि कर्त्तव्यम्। तत्राशक्तावपत्यजननात् पूर्वं कार्य्यम्। तत्र पतिः पञ्चदेवतापूजादिधारोहोमान्तं गर्भाधानप्रकरणोक्तं विधाय स्त्रिया सहासने उपविश्य शिवनामानमग्निं ध्यात्वा आवाह्य यथाशक्ति सम्पूज्य ह्रीं विष्णवे स्वाहा ह्रीं भास्वते स्वाहा ह्रीं धात्रे स्वाहा इत्याहुतित्रयं दद्यात्। ततः सोमं ध्यात्वा ह्रीं सोमाय स्वाहा इति सप्तधा जुहुयात्। अश्विनौ वासवं विष्णुं शिवं दुर्गाञ्च प्रजापतिञ्च ध्यात्वा प्रत्येकं पञ्चाहुतीर्दद्यात्। ततः पतिः स्वर्णकङ्कतिकां दक्षिणहस्तेन गृहीत्वा स्त्रियाः सीमन्तादलकेशान्तपाशे निवेश्य शिवं विष्णुं विधिञ्च ध्यायन् ह्रीं। भार्य्ये!

कल्याणि! सुभगे! दशमे मासि सुव्रते। सुप्रसूता भव प्रीता प्रसादाद्विश्वकर्म्मण:। आयुष्मति! कङ्कतिका वर्चस्वी ते शुभं कुरु॥ इति पठेत्॥ ततः स्विष्टिकृद्धोमप्रायश्चित्तहोमौ कृत्वा दक्षिणामग्निविसर्ज्जनादिकञ्च कुर्य्यादिति सोमन्तोन्नयनम्॥

अथ जातकर्म्म। जातमात्रबालकं पिता स्वर्णं दत्त्वा पश्येत्। ततो गृहान्तरे गर्भाधानपद्धत्युक्तं पञ्चदेवतापूजादिधाराहोमान्तं कर्म्म कृत्वा पञ्चाहुतीर्दद्यात्। ह्रीमग्नये स्वाहा ह्रीमिन्द्राय स्वाहा ह्रीं प्रजापतये स्वाहा ह्रीं विश्वेभ्यो देवेभ्यः स्वाहा ह्रीं ब्रह्मणे स्वाहा। इत्येभिर्मन्त्रैरिति। ततः कांस्यपात्रसमांशेन मधुसर्पिषी समानीय तदुपरि ऐमिति सप्तधा जप्त्वा। ह्रीं। आयुर्वर्च्चो बलं मेधा वर्द्धतां ते सदा शिशो!। इति मन्त्रेण दक्षिणहस्तानामिकया शिशुं प्राशयेत्। इत्यायुर्जननं कृत्वा पिता गुप्तं नाम कुर्य्यात्। ततो जन्मदिनावधि त्रिदिनाभ्यन्तरे श्वेतदूर्वाभिः स्वर्णशलाकया वा मधुना बालकस्य जिह्वायां वाग्भवकूटं लिखेत्। अनेन वाग्भवकूटेन बालकः पण्डितः सुकविः शब्दालङ्कारविच्च भवति। यदीमं मन्त्रं कृतपुरश्चरणो मूर्खस्य शिरसि हस्तं दत्त्वा अष्टोत्तरशतं जपेत्तदा सोऽपि श्लोकं करिष्यति। यदि चेमं मूकस्य जिह्वायां न्यसेत्तदा सोऽपि कविर्भवति। अथ वा द्वितीयायास्त्र्यक्षरीं दूर्वया बालकस्य जिह्वौष्ठौ सम्मार्ज्य पंक्तिद्वयेन लिखेत्। तत्र क्रमः। नाड़ीच्छेदात् प्रागेकादशाहे द्वादशाहे मासान्ते वा यथाशक्ति उपचारेण तां देवतां सम्पूज्य मन्त्रं लिखेत्। यदि पिता न देशस्थस्तदा पितृव्यादिरेतत् कुर्य्यात्। अथवा श्वेतदूर्वया कुलदेवतामन्त्रं बालकस्यौष्ठे लिखेत्। स बालो वाग्मी द्रुतकविर्भवेत्। ततः स्विष्टिकृद्धोमादिवह्निविसर्ज्जनान्तं कर्म्म कुर्य्यात्। कुमार्य्या अप्येवं

सर्वममन्त्रकं कुर्य्यात्। तत उत्साहपूर्वकं धात्री नाड़ीं छिन्द्यात्। तदनन्तरमशौचं भवतीति जातकर्म्म॥

अथ नामकरणम्। षष्ठेऽष्टमे वा मासि प्रकाशतो नाम कुर्य्यात्। तत्र माता शिशुं स्नापयित्वा नवे अम्बरे परिधाप्य पत्युः पार्श्वं वामक्रोड़ासनमागत्य बालं प्राङ्मुखं स्थापयेत्। ततः पिता सहिरण्यकुशजलेन शिशोर्मूर्द्धानमभिषिञ्चेदेभि-र्मन्त्रैर्यथा। ह्रीं जाह्नवी यमुना रेवा सपवित्रा सरस्वती। नर्म्मदा वरदा कुन्ती सागराश्च सरांसि च। एते त्वामभिषिञ्चन्तु धर्म्मकामार्थसिद्धये। ह्रीं। आपोहिष्ठामयो भुवस्ता न ऊर्ज्जे दधातन महेरणाय चक्षसे। यो वः शिवतमो रसस्तस्य भाज-यतेह नः। उशतीरिव मातरः। तस्मा अरङ्गमाम वो यस्य च-याय जिन्वथ। आपो जनयथा च नः। इत्यभिषिच्य पूर्वव-द्वह्निस्थापनादिधाराहोमान्तं कर्म्म कृत्वा पार्थिवनामानमग्निं ध्यात्वा स्वल्पाक्षरं सुखोच्चार्य्यं नाम त्रिधा पिता श्रावयित्वा ब्राह्मणेभ्यो निवेदयेत्। ततः स्विष्टिकृद्धोमान्तं कर्म्म समा-पयेत्। एतत् कर्म्म कन्याया अप्यमन्त्रकं कर्त्तव्यमिति नाम-करणम्॥

अथ निष्क्रमणम्। निष्क्रमणन्तु चतुर्थे मासि षष्ठे वा कुर्य्यात्। तत्र पिता कृतनित्यक्रियो गणेशं सम्पूज्य शिशुं स्नाप-यित्वा वस्त्रालङ्कारैर्भूषयित्वा अग्रे संस्थाप्य क्रीं ब्रह्मा विष्णु-रित्यादिप्रमाणप्रकरणोक्तं पठित्वा बालकमङ्के निधाय गीत-वाद्यपुरःसरं सानन्दैः स्वजनैर्वृतो वह्निर्निष्क्रामयेत्। ततः कियद्दूरं गत्वा क्रीं तच्चक्षुर्देवहितमिति मन्त्रेण बालकं सूर्य्यं दर्शयेत्। ततो गृहमागत्य सूर्य्यायार्घ्यं दत्त्वा स्वजनान् भोजये-दिति निष्क्रमणम्॥

अथान्नप्राशनम्। तत्र षष्ठे मासि अष्टमे वा पितृभ्राता

पिता वा अन्नप्राशनक्रियां कुर्य्यात्। तत्र क्वतनित्यक्रियः पूर्ववत् सगणाधिपगौर्य्यादिकं सम्पूज्य शुचिनामानमग्निं संस्कृत्य प्रागुक्तधाराहोमान्तं कर्म समाप्य पञ्चाहुतीर्जुहुयात्। यथा क्लीं अग्नये स्वाहा क्लीं इन्द्राय स्वाहा क्लीं प्रजापतये स्वाहा क्लीं विश्वेभ्यो देवेभ्यः स्वाहा क्लीं ब्रह्मणे स्वाहा। इति हुत्वा तत्रान्यस्मिन् गृहे वा बालकं क्रोड़े कृत्वा पञ्चप्राणाहुतिमन्त्रैः पायसं पञ्चधा भोजयित्वा शिशोर्मुखे किञ्चिदन्नव्यञ्जनादि दत्त्वा आचामयेत्। ततो गीतवाद्यपुरःसरं प्रायश्चित्तहोमादि समापयेदित्यन्नप्राशनम्॥

अथ चूड़ाकरणम्॥ तृतीये वर्षे पञ्चमे कुलाचारप्राप्ते वा चूड़ाकरणम्। तत्र कृतनित्यक्रियः सगणाधिपमातृकादिपूजां विधाय सत्यनामानमग्निं संस्कृत्य धाराहुत्यन्तं कर्म समाप्याग्नेरुत्तरे तिलगोधूमसहितं वृषगोमयपूर्णं नवशरावं स्थापयेत् कवोष्णं जलं शाणितं क्षुरञ्च। ततः पिता स्ववामे जननीक्रोड़े बालकं निधाय वमिति दशधा जप्त्वा तेन कवोष्णतोयेन केशान् सम्मार्ज्य क्लीमिति मन्त्रेण कुशपत्रद्वयनिर्मितजुष्टिकामेकां तत्र बध्नीयात्। ततो मायालक्ष्मीवीजद्वयं त्रिधा जप्त्वा लौहजं क्षुरं गृहीत्वा सजुष्टिककेशमुपमूलं छिन्द्यात्। ततः कुमारमाता तं सजुष्टिककेशं हस्ताभ्यां गृहीत्वा तस्मिन् गोमयान्वितनवशरावे स्थापयेत्। ततः पिता नापिताय ब्रूयात्। क्षुरमुण्डे शिशोः क्षौरं सुखं साधय स्वाहा। इति पठित्वा बालकं पश्यन् सत्यनामाग्नौ क्लीं प्रजापतये स्वाहा इति त्रिवारं जुहुयात्। ततः कृतक्षौरं स्नातं समलङ्कृतं समाल्यं बालं वामभागे संस्थाप्य स्विष्टिकृतप्रायश्चित्तहोमं हुत्वा पूर्णाहुतिं दद्यात्। ततो क्लीं शिशो! ते विश्वकर्मा कुशलं करोतामिति पठित्वा स्वर्णमय्या राजत्या शलाकया वा शिशोः कर्णद्वये वेधं कल्पयेत्।

तत आपोहिष्ठेत्यादिमन्त्रेण तमभिषिच्य शान्त्यादिकं कृत्वा दक्षिणां कुर्य्यादिति चूड़ाकरणम् ॥

गर्भाधानादिचूड़ान्तं कर्म्म सर्वजातिषु समानं केवलं शूद्राणामिदं सर्वममन्त्रकमिति ॥ अथोपनयनम् ॥ गर्भाष्टमेऽष्टमेऽब्दे वा उपनयनं कर्त्तव्यमिति । षोड़शाब्दपर्य्यन्तमनुपनीतस्य बालस्य दैवपैत्रक्रियायां नाधिकारः ॥ तत्र कृतनित्यक्रियः सगणाधिपमातृपूजादिवृद्धिश्राद्धान्तं कर्म्म कृत्वा कुशण्डिकोक्तविधानेन समुद्भवनामानमग्निं संस्थाप्य धाराहोमान्तं कर्म्म कृत्वा प्रातः कृताशनं शिखां विना मुण्डितशिरसं सुस्नातं क्षौमाम्बरधरं स्वलङ्कृतं बालं छायामण्डपमानीय वह्निः समीपे स्ववामे शुद्धासने उपवेशयेत् । ततो ह्रीं ब्रह्मचर्य्यं कुरु इति गुरुः । ह्रीं ब्रह्मचर्य्यं करोमीति शिष्यो ब्रूयात् । ततो गुरुस्तस्मै शिष्याय काषाये वाससी कुशमयीं मेखलाञ्च दद्यात् । ह्रीं सुभगा मेखला शुभप्रदा स्यादिति पठित्वा शिष्यो मौनी तिष्ठेत् । ह्रीं यज्ञोपवीतमिति मन्त्रं पठित्वा गुरुः शिष्याय कृष्णाजिनयुक्तयज्ञोपवीतं दद्यात् । वेदभेदे सूत्रमानन्तु प्रमाणमध्ये अनुसन्धेयम् । पुनर्यज्ञोपवीतमात्रं वंशदण्डञ्च दद्यात् पालाशञ्च । ततो मायापुटितापोहिष्ठादिमन्त्रेण त्रिपत्रकुशेन धृतकायं वस्त्रमेखलाजिनयज्ञसूत्रदण्डं शिष्यमभिषिच्य तोयेन तदञ्जलिं पूरयेत् । ततः सूर्य्यायाञ्जलिं दापयित्वा बालं ह्रीं तच्चक्षुरिति मन्त्रेणादित्यं दर्शयेत् । ततो गुरुर्माणवकहृदयं स्पृष्ट्वा ह्रीं मम व्रते ते इति मन्त्रं पठित्वा किं नामासि इति पृच्छेत् । ततः शिष्यः श्रीअमुकनामाहं त्वामभिवादये इति वदेत् । ततो गुरुः कस्य त्वं ब्रह्मचारीति । शिष्यः भवतो ब्रह्मचार्य्यहम् । ततो गुरुः । इन्द्रस्य ब्रह्मचारी त्वमाचार्य्यस्ते हुताशनः । इत्युक्त्वा ह्रीं प्रजापतये वक्ष इति मन्त्रेण माणवकं समर्प्य दक्षिणावर्त्तयोगेन वह्निं प्रद-

च्चिणीकारयित्वा आसने उपवेशयेत् । ततः शिष्येण स्पृष्टो गुरुः ह्रीं प्रजापतये स्वाहा । ह्रीं इन्द्राय स्वाहा । ह्रीं विष्णवे स्वाहा । ह्रीं ब्रह्मणे स्वाहा । ह्रीं शिवाय स्वाहा । ततो मायादिस्वाहान्तेन नाम्ना दुर्गालक्ष्मीसुन्दरीभुवनेश्वरीन्द्रादिदश-दिक्पालभास्करादिनवग्रहेभ्यः स्वस्वनाम्ना प्रत्येकं जुहुयात् । ततो माणवकं वाससा आच्छाद्य को वाश्रमस्ते तनय ! ब्रूहि किन्ते मनोगतम् । ततः शिष्यो गुरुपादद्वयं धृत्वा करोतु मामाश्र-मिणं ब्रह्मविद्योपदेशतः । इति प्रार्थयमानस्य शिष्यस्य दक्षकर्णे त्रिधा प्रणवं संश्राव्य सव्याहृतिकां सावित्रीं श्रावयेत् । अन्या-ब्रह्मविद्या । गायत्र्याः सदाशिव ऋषिरनुष्टुप्छन्दः सावित्री देवता मोक्षार्थे विनियोगः । तदर्थञ्च ज्ञापयेत् । ततो माणवको भिक्षां कुर्यात् । ततो गुरुः ह्रीं ब्रह्मचार्य्युक्तदेशमिति पठेत् । ततो माणवकः कषायवस्त्रं सकृष्णाजिनयज्ञसूत्रं मेखलां दण्डं भिक्षाकरण्डमर्जितभिक्षाञ्च गुरवे निवेद्य शुक्लयज्ञोपवीतद्वयं शुक्लवस्त्रद्वयञ्च परिधाय धृतगन्धमाल्य आचार्य्यसन्निधौ तूष्णीं तिष्ठेत् । ततो गुरुः । ह्रीं जितेन्द्रियः सत्यवादीत्यादि पठित्वा शिष्येण हावयेत् । यथा । ह्रीं ॐ भूः स्वाहा ह्रीं ॐ भुवः स्वाहा ह्रीं ॐ स्वः स्वाहा इत्यनेन । ततः स्विष्टिकृद्धोमादिदक्षिणान्तं कर्म समापयेदित्युपनयनम् ॥

अथ विवाहः । तत्र कृतनित्यक्रियः पञ्चदेवतापूजादिवृद्धि-श्राद्धान्तं कर्म कृत्वा रात्रौ गीतवाद्यपुरःसरं वरं छायामण्डप-मानीय पूर्वाभिमुखमासने समुपवेशयेत् । ततो ब्राह्मणैः पुण्याहं वाचयित्वा ह्रीं साधु भवानास्तामिति वरं पृच्छेत् । ततो वरः । ह्रीं साध्वहमासे इति वदेत् । ह्रीं अर्चयिष्यामो भवन्त-मिति वरं पृच्छेत् । ह्रीमर्च्चय इति वरो वदेत् । ह्रीं पाद्यं सम-र्पयामीत्यादिना पाद्यार्घ्याचमनीयगन्धपुष्पवस्त्रालङ्कारयज्ञसूत्रैर्वर-

अभ्यर्च्य ह्रीं मधुपर्कं समर्पयामीति वरहस्ते मधुपर्कं समर्पयेत्। ततो वरो मधुपर्कं गृहीत्वा वामहस्ते निधाय दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां ह्रीं प्राणाय स्वाहा ह्रीं अपानाय स्वाहा ह्रीं समानाय स्वाहा ह्रीं उदानाय स्वाहा ह्रीं व्यानाय स्वाहा इति मन्त्रेण तन्मधुपर्कद्रव्यं पञ्चधा आघ्राय तत् पात्रमुदीच्यां दिशि स्थापयेत्। ततो वराय पुनराचमनीयं दत्त्वा दाता दूर्वाक्षताभ्यां वरस्य दक्षिणं जानु स्पृष्ट्वा विष्णुरोम् तत्सदद्य अमुके मासि अमुकराशिस्थे भास्करे अमुके पक्षे अमुकतिथौ अमुकगोत्रः श्रीअमुकदेवशर्मा अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्मणः प्रपौत्रं पुनर्गोत्राद्युल्लिख्यामुकदेवशर्मणः पौत्रं पुनर्गोत्राद्युल्लिख्यामुकदेवशर्मणः पुत्रं पुनर्गोत्रादिद्वितीयान्तमुल्लिख्य श्रीअमुकदेवशर्माणमर्च्चितं वरम्। एवं गोत्रप्रवरनामषष्ठ्यन्तं प्रपितामहपितामहपितॄणामुक्त्वा यथाक्रमं प्रपौत्रीं पौत्रीं पुत्रीञ्चोक्त्वा अमुकगोत्रामसुकप्रवरां श्रीअमुकीदेवीं ब्राह्मविवाहेन दातुं भवन्तमहं वृणे इति वदेत्। वरस्तु ह्रीं वृतोऽस्मीति वदेत्। तदा यथाविहितं विवाहकर्म कुरु। वरः ह्रीं यथाज्ञानतः करवाणीति। ततः सवस्त्रालङ्कारां कन्यां छायामण्डपमानीय वरसम्मुखे स्थापयेत्। ततो वरहस्ते कन्याहस्तं नियोज्य फलरत्नादिकं दत्त्वा प्राग्वत् सौरमासाद्युल्लेखानन्तरं प्रपितामहपितामहपितॄणां गोत्रप्रवरनामषष्ठ्यन्तमुल्लिख्य यथाक्रमं प्रपौत्राय पौत्राय पुत्राय इत्युक्त्वा अमुकगोत्राय अमुकप्रवराय श्रीअमुकदेवशर्म्मणे वराय इत्युच्चार्य्य कन्यायाश्च प्रपितामहपितामहपितॄणां षष्ठ्यन्तं गोत्रप्रवरनामोल्लिख्य प्रपौत्रीं पौत्रीं पुत्रीमिति यथासम्भवमुच्चार्य्य अमुकगोत्राममुकप्रवरां श्रीअमुकीदेवीं कन्यामित्यन्तं निरुच्चार्य्य एनामर्च्चितां साच्छादनालङ्कारां प्रजापतिदेवताममुककामस्तुभ्यमहं सम्प्रददे। इति वराय दद्यात्।

वर: स्वस्तीति स्वीकुर्य्यात्। ततः सम्प्रदाता धर्मे चार्थे च कामे च भवता भार्य्यया सह वर्त्तितव्यम्। वरो वाढ़मित्युक्त्वा कामस्तुतिं पठेत्। ततः सम्प्रदाता कन्याजामातरौ ह्रीं प्रजापतिप्रसादेनेत्यादि श्रावयित्वा वस्त्रेणाच्छाद्य सुमङ्गलपुरःसरैर्वरकन्ययोः परस्परमुखावलोकं कारयेत्। ततः काञ्चनादिकं वराय दक्षिणां दत्त्वा अच्छिद्रावधारणं कुर्य्यात्। ततो वरस्तद्रात्रौ परदिवसे वा कुशण्डिकोक्तविधानेन योजकनामाग्निं संस्थाप्य प्राजापत्यं चरुं श्रपयेत्। ततो धाराहोमान्तं कर्म्म कृत्वा ह्रीं शिवाय स्वाहा। ह्रीं दुर्गायै स्वाहा ह्रीं विष्णवे स्वाहा ह्रीं ब्रह्मणे स्वाहा ह्रीं इन्द्राय स्वाहा इति जुहुयात्। ततो ह्रीं पाणिं गृह्णामीति मन्त्रं पठित्वा भार्य्यायाः पाणिं गृह्णीयात्। ततः कन्या हस्तस्थेन स्वामिदत्तेन घृतेन भ्रात्राद्याहृतलाजैः प्रजापतिमुद्दिश्य ह्रीं प्रजापतये स्वाहा इति चतुर्धा जुहुयात्। ततो भार्य्यया सह उत्थाय वह्निं प्रदक्षिणीकृत्य ह्रीं दुर्गाशिवाभ्यां स्वाहा ह्रीं ब्राह्मीब्रह्मभ्यां स्वाहा। इति त्रिधा हुत्वा अश्मारोहणसप्तपदीगमने अमन्त्रकं कारयेत्। रात्रौ चेद्धोमस्तदा स्त्रीभिः सह चन्द्रमरुन्धतीञ्च पश्येत्॥ ततः स्विष्टिकृद्धोमादिदक्षिणान्तं कर्म्म समापयेत्॥ इति विवाहः॥

इति श्रीप्राणतोषिण्यां द्वितीये धर्मकाण्डे संस्काररूपग्रन्थिकथनं नाम प्रथमः परिच्छेदः॥

वक्ष्यमाणवचनैर्दीक्षाया अपि संस्काररूपत्वात् संस्कारमध्ये वक्तव्यत्वमुचितम्। तस्या गुरुमूलतया त्वादौ गुरुप्रकरणमुच्यते। तत्र गुरुलक्षणं शारदायां द्वितीयपटले॥ मातृतः पितृतः शुद्धः शुद्धभावो जितेन्द्रियः। सर्व्वागमानां सारज्ञः सर्व्वशास्त्रार्थतत्त्ववित्। परोपकारनिरतो जपपूजादितत्परः। अमोघवचनः शान्तो वेदवेदाङ्गपारगः। योगमार्गार्थसन्धायी देवता-

हृदयङ्गमः। इत्यादिगुणसम्पन्नो गुरुरागमसम्मतः। देवतावत् हृदयङ्गमो मनोहर इत्यर्थः॥ विश्वसारतन्त्रे द्वितीयपटलेऽपि॥ सर्वशास्त्रपरो दक्षः सर्वशास्त्रार्थवित् सदा। सुवचाः सुन्दरः स्वाङ्गः कुलीनः शुभदर्शनः। जितेन्द्रियः सत्यवादी ब्राह्मणः शान्तमानसः। पितृमातृहिते युक्तः सर्वकर्मपरायणः। आश्रमी देशस्थायी च गुरुरेवं विधीयते॥ आश्रमी गृहस्थः। तथाच मत्स्यसूक्ते महातन्त्रे त्रयोदशपटले॥ मध्यदेशसमुद्भूतः शान्तः सर्वगुणैर्युतः। पुत्रदारैश्च सम्पन्नो गुरुरागमसम्मतः॥ मध्यदेशसमुद्भूत इति श्रेष्ठत्वदर्शनार्थम्। तत्प्रमाणन्तु तन्त्रसारकारेणैव लिखितमतोऽत्र न प्रयोजनमिति गुरुलक्षणम्॥ रुद्रजामले पूर्वखण्डीयपञ्चदशपटलोत्तरखण्डीयद्वितीयपटलयोः। आदौ साधकदेवश्च सदाचारमतिः सदा। पशुभावस्ततो वीरः सायाह्ने दिव्यभाववान्। एतेषां भाववर्गाणां गुरुर्वेदान्तपारगः। शान्तो दान्तः कुलीनश्च विनीतः शुद्धवेशवान्। शुद्धाचारः सुप्रतिष्ठः शुचिर्दक्षः सुबुद्धिमान्। आश्रमी ध्याननिष्ठश्च मन्त्रतन्त्रविशारदः। निग्रहानुग्रहे शक्तो वशी मन्त्रार्थजापकः॥ शान्त इत्याद्येतत् सर्वं रामार्च्चनचन्द्रिकायामपि केवलं शेषचरणे वशीत्यादौ गुरुरित्यभिधीयत इति पाठः॥ शान्तो विषयोत्कटेच्छारहितः शमादिगुणसंयुक्तः। शमस्तु श्रवणादिकव्यतिरिक्तविषयेभ्यो मनसो निग्रहः। यथा। तीव्रायां बुभुक्षायां जातायां भोजनादन्यो व्यापारो मनसि न रोचते। भोजनविलम्बञ्च सहते तथा स्रक्चन्दनादिविषयेष्वत्यन्तमभिरुचिस्तत्त्वज्ञानसाधनेषु श्रवणमननादिष्वत्यन्तमभिरुचिश्च जायते इति। शान्तरूपेण प्रसिद्धो वा। दान्तस्तपःक्लेशसहः दमयुक्तो वा। दमस्तु वाह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो निवर्त्तनम्। ज्ञानसाधनश्रवणादिसाधनेभ्यो विलक्षणेषु शब्दादिविषयेषु प्रवर्त्तमानानि

श्रोत्रादीनि वाह्येन्द्रियाणि येन वृत्तिविशेषेण निवर्त्तन्ते स दम इत्यभिप्रायः। अतएव शान्तोऽन्तरिन्द्रियनिग्रहकर्त्ता दान्तो वहिरिन्द्रियनिग्रहकर्त्ता इति वेदान्तविद्भिरुक्तम्॥ वृहन्नील-तन्त्रे तृतीयपटलेऽपि। वहिरिन्द्रियहर्त्ता च गुरुः सर्वत्र दुर्लभः। अन्तरिन्द्रियहर्त्ता च गुरुः सर्वत्र शोभनः। आचार-वान्महाविद्याराधननिष्ठश्च तत्परः। तत्कृत्याचारसंसक्तो गुरु-रित्यभिधीयत इति। कुलीनः कौलः। एतेषामित्यादिवच-नान्यदृष्ट्वा कुलीनः शुद्धजन्मा आचारादिनवगुणशाली वेति कश्चित् स्वबुद्ध्या व्याचष्टे एतदतीव मन्दम्। वक्ष्यमाणसारसंग्रह-वचने विशुद्धमातापितृककुलीनेति द्वयोरुपादानात्। येनैवं व्याख्यायते तस्य सन्देहस्तु विष्णुमन्त्रोपदेष्टरि कुलाचाराभाव इति। स तु सन्देहः कामाख्याकुलार्णवरुद्रजामलादीनामदृष्टुरेव स्फुरति। तत्र तु सौरगाणपत्यशैववैष्णवशाक्तानां सर्वेषां कुला-चारोपदेशस्य सुस्पष्टत्वादिति तत्प्रमाणमग्रे लिखितव्यमिति। गुरुकरणे वर्जनीयप्रकरणे श्यावदन्तं कुलाचाररहितमित्यादि-पञ्चाचारविवर्जितमिति च वक्ष्यमाणं तेन न दृष्टमिति। अत एव कुलीनः सर्वमन्त्राणामधिकारीति गीयते। दीक्षाप्रभुः स एवात्मा सर्वमन्त्रस्य नापरः। इति तन्त्रसारधृतं साधु सङ्गच्छते॥ कामाख्यातन्त्रे तृतीयपटलेऽपि॥ शान्तो दान्तः कुलीनश्च शुद्धान्तःकरणस्तथा। पञ्चतत्त्वात्मको यस्तु सद्गुरुः स प्रकी-र्त्तितः। सिद्धोऽसाविति विख्यातो बन्धुभिः शिष्यपालकः। चमत्कारी देवशक्त्या सद्गुरुः कथितः प्रिये!। अश्रुतं सश्रुतं वक्ति वाक्यं साधु मनोहरम्। तन्त्रमन्त्रं समावेत्ति य एव सद्गु-रुश्च सः॥ महानिर्वाणतन्त्रे दशमोल्लासे च॥ शाक्ते शाक्तो गुरुः शस्तः शैवे शैवो गुरुर्मतः। वैष्णवे वैष्णवः सौरे सौरो गुरुरुदा-हृतः। गाणपे गाणपः ख्यातः कौलः सर्वत्र सद्गुरुः। अतः सर्वा-

त्मना धीमान् कौलाद्दीक्षां समाचरेत् ॥ नानाविकल्पविभ्रान्तिनाशमित्यादिसद्गुरुलक्षणं वक्ष्यते । इति सद्गुरुलक्षणम् ॥ तथा ॥ पशोर्वक्त्राल्लब्धमन्त्रः पशुरेव न संशयः । वीराल्लब्धमनुर्वीरः कौलाच्च ब्रह्मविद्भवेत् ॥ वृहन्नीलतन्त्रेऽपि ॥ शैवोऽपि परविद्यानामुपदेष्टा न संशयः । वैष्णवः स्वमतस्थानां सौरः सौरविदां सताम् ॥ गाणपत्यस्तु देवेशि ! गणदीक्षाप्रवर्त्तकः । शैवे शाक्ते च सर्वत्र दीक्षास्वामी न संशयः । कौलस्तस्मात् प्रयत्नेन कुलीनं गुरुमाश्रयेत् ॥ इति कुलीनगुरुप्रशंसा ॥ ननु रुद्रजामलीयोत्तरखण्डीयषष्ठपटलोक्तेन । भावस्तु त्रिविधो देव ! दिव्यवीरपशुक्रमात् । गुरवस्त्रिविधाश्चात्र तथैव मन्त्रदेवताः । इत्यनेन पशुगुरुविषयकमेतद्वराख्यादीनां वामसिद्धान्तकुलमार्गानुसारिणां वचनैरामार्च्चनचन्द्रिकादिवचनैं पारिभाषिकं कुलीनमङ्गीकृत्य कथमेतादृग्व्याख्यानं कर्त्तव्यमिति चेन्न ॥ महानिर्वाणतन्त्रे कौलस्य सर्वमन्त्रोपदेष्टृत्वसद्गुरुत्वयोः स्पष्टमुक्तत्वात् । एतेन शान्त्यादिगुणवत्त्वे सति अभिशस्तत्वादिदोषरहितत्वं सद्गुरुत्वमिति सद्गुरुलक्षणमर्वाचीनैः कृतमप्यपास्तम् । कौलस्यैव सद्गुरुत्वेनोक्तत्वात् । अथ कुलीनः शुद्धवंशजन्मा आचारादिनवगुणशालीव इतीतरलोकप्रसिद्धकुलीनव्याख्यानेन को दोष इति चेन्न । तन्त्रशास्त्रे कूटार्थकल्पनाया निन्दाश्रुतेः । यथा महानिर्वाणतन्त्रे एकादशोल्लासे ॥ एतस्मिन् शाम्भवे शास्त्रे व्यक्तार्थपदबृंहिते । कूटेनार्थं कल्पयन्तः पतिता यान्त्यधोगतिम् ॥ रुद्रजामले उत्तरखण्डे द्वितीयपटले ॥ नीरोगो निरहङ्कारो विकाररहितो महान् । तपस्वी सत्यवादी च सदा ध्यानपरायणः । आगमार्थविशिष्टज्ञो निजधर्मपरायणः । अव्यक्तलिङ्गचिह्नस्थो भावको भद्रदानवान् । लक्ष्मीमान् धृतिमान्नाथो गुरुरित्यभिधीयते ॥ गुरुनाथाचार्य्यशब्दानां व्युत्पत्तिस्तु कुलार्णवे पञ्चमखण्डे सप्तदशोल्लासे । गुह्या-

गमार्थतत्त्वानुसन्धानाद्बोधनादपि। रुद्रादिदेवरूपत्वाद्गुरुरित्यभिधीयते। श्रीमोत्त्वज्ञानदातृत्वान्नादब्रह्मात्मबोधनात्। स्वगितज्ञानचिह्नत्वात् श्रीनाथः कथितः प्रिये!। स्वयमाचरते शिष्यानाचारे स्थापयत्यपि। आचिनोति हि शास्त्रार्थानाचार्य्यस्तेन कथ्यते। चराचरसमासन्नमध्यापयति यः स्वयम्। यमादियोगसिद्धत्वादाचार्य्य इति कथ्यते॥ शाक्तानन्दतरङ्गिणीधृतसारसंग्रहे॥ विशुद्धमातापितृको जितेन्द्रियः सर्वागमज्ञः परदुःखकातरः। यथार्थवाग्वेदविदङ्गपारगः शान्तः कुलीनो गुरुरीरितो द्विजः॥ द्विज इत्युपादानान्नान्येभ्यो मन्त्रग्रहणम्। अनाचारो द्विजो यस्तु वर्णानां गुरुरेव सः॥ इति वचनात्। स इत्यनेनैवकारः सम्बध्यते। स एव गुरुरित्यनेन जात्यन्तरं व्यवच्छिद्यते। गुरुशब्देनैवकारः सम्बध्यते व्यावृत्तेरभावात्॥ कुलमूलावतारकल्पसूत्रटीकाधृतनवचक्रेश्वरे॥ शिवरूपं समादाय भवपाशनिवृत्तये। सिद्धान्तसारवेत्ताहं सिद्धान्तसारभेदकः। अविच्छिन्नाप्रमत्तश्च सदानुग्रहनिग्रहे। शिवो दिव्याकृतिर्देवि! न च दृग्गोचरोऽप्यहम्। तथा श्रीगुरुरूपेण शिष्यान् शास्यामि पार्वति!। परं संवित्तिजननं परानन्दसमुद्भवम्। तत्तत्त्वं विदितं येन स गुरुः कुलनायिके!। भूतभव्यौ मन्त्रतन्त्रौ शाम्भवं वेत्ति यः सदा। वेधस्य षड्विधं देवि! स गुरुः कुलनायिके!। वर्णं कलां पदं तत्त्वं मन्त्रं भुवनमेव च। बोधयेद्यः षडध्वानं स गुरुः कुलनायिके!। षड़ाधारं नवद्वारं षोड़शाधारनिर्णयम्। यो जनाति विधानेन स गुरुः कुलनायिके!। जाग्रत्स्वप्नसुषुप्तिश्च रूपञ्च तदतीतकम्। यो वेत्ति पञ्चकं देवि! स गुरुः कुलनायिके!॥ सम्मोहनतन्त्रे प्रथमपटलेऽपि॥ षट्चक्रं षोड़शाधारं त्रिलक्षं व्योमपञ्चकम्। स्वदेहे यो विजानाति स गुरुः कथितो बुधैः॥ क्रमेणैतानि व्याख्यायन्ते।

यः षड़ध्वानं शिष्यं बोधयेत् स गुरुरित्यन्वयः। अध्वानमाह वर्णमित्यादि। एतान् षड़ध्वनो दीक्षाप्रकरणे स्पष्टीकरिष्ये। षड़ाधारं षट्चक्राणि पृथिव्यादीनामाधाररूपत्वात्। नवद्वारं दृक्श्रोत्रास्यनासिकागुह्यलिङ्गच्छिद्ररूपम्। उक्तञ्च सम्मोहनतन्त्रे द्वितीयपटलेऽपि। नवद्वारं नवच्छिद्रं पुरं वपुः प्रकीर्त्तितम्। नवपद्माणि चक्राणि त्रिसूत्रं नाड़िकात्रयमिति। षोड़शाधारस्वरूपमपि तत्रैव॥ मूलाधारस्वाधिष्ठानं मणिपूरमनाहतम्। विशुद्धमाज्ञाचक्रञ्च विन्दुर्भूयः कलापदम्। निबोधिका तथार्द्धेन्दुर्नादो नादान्त एव च। उन्मनी विष्णुवक्त्रञ्च ध्रुवमण्डलिका ततः। इत्येतत् षोड़शाधारं कथितं योगिदुर्लभमिति। विधानेन प्रयत्नेन प्राणायामादिनेति यावत्। जाग्रत्स्वप्नसुषुप्तिमिति बुद्धेरावर्त्तत्रयरूपम्। विन्दुस्तदतीतं निरञ्जनमित्यग्रे स्पष्टीभविष्यति। त्रिलक्षादिकमपि तत्रैव स्वयम्भूर्बाण इतरस्त्रिलक्षं परिकीर्त्तितम्। पृथिव्यादीनि भूतानि कथितं व्योमपञ्चकमिति। तत्र स्वयम्भूलिङ्गं मूलाधारे वाणलिङ्गमनाहते। इतरमाज्ञाचक्रे॥ नवचक्रेश्वरे॥ पिण्डं पदं तथा रूपं रूपातीतं चतुष्टयम्। यो वा सम्यग् विजानाति स गुरुः परिकीर्त्तितः। पिण्डादिचतुष्टयं स्पष्टीकृतं गुरुगीतायाम्। पिण्डं कुण्डलिनीशक्तिः पदं हंसः प्रकीर्त्तितः। रूपं विन्दुरिति ज्ञेयं रूपातीतं निरञ्जनम्॥ नवचक्रेश्वरे॥ यो वा पराञ्च पश्यन्तीं मध्यमामपि वैखरीम्। चतुष्टयं विजानाति स गुरुः परिकीर्त्तितः॥ इति गुरुविशेषलक्षणम्॥ रुद्रजामले उत्तरखण्डे प्रथमपटले॥ गुरुमूलं जगत् सर्वं गुरुमूलं परं तपः। गुरोः प्रसादमात्रेण मोक्षमाप्नोति सद्वशी॥ मुण्डमालातन्त्रे प्रथमपटले॥ गुरुरेकः शिवः साक्षात् गुरुः सर्वार्थसाधकः। गुरुरेव परं तत्त्वं सर्वं गुरुमयं जगत्। विना गुरुप्रसादेन कोटिपुरश्चरणेन किम्।

पिच्छिलातन्त्रे पूर्वखण्डे प्रथमपटलेऽपि। गुरुमूलमिदं शास्त्रं नान्यः शिवतमः प्रभुः। अतएव महेशानि! यत्नतो गुरुमाश्रयेत्॥ इति गुरुमाहात्म्यम्॥ रुद्रजामले पूर्वखण्डे चतुर्दशपटले॥ गुरुं विना यस्तु मूढ़ः पुस्तकादिविलोकनात्। जपबन्धं समाप्नोति किल्बिषं परमेश्वरि!। न माता न पिता भ्राता तस्य को वा गतिः प्रिये!। गुरुरेको वरारोहे! पापं नाशयति चणात्। गुरुं विना यतस्तन्त्रे नाधिकारः कथञ्चन। अतएव प्रयत्नेन गुरुः कर्त्तव्य उत्तमः॥ इति शास्त्रे गुरोरावश्यकत्वम्। जामले॥ गुरुरेकः शिवः प्रोक्तः सोऽहं देवि! न संशयः। गुरुस्त्वमपि देवेशि! मन्त्रोऽपि गुरुरुच्यते। अतो मन्त्रे गुरौ देवे न हि भेदः प्रजायते। कदाचित् सहस्रारे पद्मे ध्येयो गुरुः सदा। कदाचित् हृदयाम्भोजे कदाचिद्दृष्टिगोचरे॥ मुण्डमालातन्त्रे॥ देवतागुरुमन्त्राणामैक्यं सम्भावयन् धिया। तदा सिद्धो भवेन्मन्त्रः प्रकटे हानिरेव च॥ पार्वत्युवाच॥ ऐक्यज्ञानं महादेव! कथमुत्पद्यते प्रभो!। नराकृतिं गुरुं मन्ये देवता ध्यानरूपिणी। मन्त्रश्चाक्षररूपो हि कथमैक्यं भवेच्छिव!॥ शिव उवाच॥ एकजातिस्वरूपेण स्वभावादेकजन्मतः। एतेषां भावयोगे तु एकसाधनमेव हि। गुरोर्जातश्च मन्त्रश्च मन्त्राज्जाता तु देवता। अतएव वरारोहे! देवतायाः पितामहः। पितुश्च भावनाद्देवि! यथा चैव पितुः पितुः। तद्गुणवस्तोषमेति विपरीते विपर्य्ययः॥ अयमभिप्रायः। एकजातिस्वरूपेणेति निराकारस्वरूपेणेति तात्पर्य्यम्॥ तथा हि महाकालस्यैव गुरुत्वेन वक्ष्यमाणत्वान्मन्त्रस्य ध्वनिमयत्वाद्देवताया आकारस्य कल्पितत्वाच्च त्रयाणां निराकारत्वमवगन्तव्यम्। एकप्रकारसाधनत्वेनेति वा। गुरोर्जातश्च मन्त्रश्चेत्यनेन यथा पुत्रपौत्राभ्यां पितुरंशजत्वेनैक्यं तथा गुरुमन्त्रदेवतानामिति मतत्रयेणैक्यं दर्शितम्॥ यद्वा

मातृकाभेदतन्त्रे दशमपटले। श्रीदेव्युवाच॥ नराकृतिं गुरुं नाथ! मन्त्रवर्णात्मकं सदा। ध्यानानुरूपिणं देवमेकत्वं वा कथं वद॥ श्रीशिव उवाच॥ गुरुवक्त्रान्महामन्त्रो लभ्यते साधकोत्तमैः। यद्देवाज्जायते वीजस्तस्य मुक्तिर्भवेद्ध्रुवम्। देवतायाः शरीरं हि वीजादुत्पद्यते प्रिये!। गुरोराज्ञानुसारेण चान्यमूर्त्तिस्तु जायते। गुर्वादिभावनाद्देवि! भावसिद्धिः प्रजायते। अतएव महेशानि! चैकत्वं परिकथ्यते॥ मुण्डमालातन्त्रे॥ मन्त्रे वा गुरुदेवे वा न भेदं यस्तु कल्पते। तस्य तुष्टा जगद्धात्री किन्न दद्यादिने दिने॥ इति गुरुमन्त्रदेवतानामेकत्वप्रकारकथनम्॥ गुरुतन्त्रे॥ गुरुः कर्त्ता गुरुर्हर्त्ता गुरुः पाता महीतले। गुरुसन्तोषमात्रेण तुष्टाः स्युः सर्वदेवताः। वामकेश्वरतन्त्रे एकपञ्चाशत्पटलेऽप्येतद्वचनम्। किन्तु पातेत्यत्र गुरुर्दातेति पाठः। गुरौ तुष्टे शिवस्तुष्टो रुष्टे रुष्टस्त्रिलोचनः। गुरौ तुष्टे शिवा तुष्टा रुष्टे रुष्टा च सुन्दरी। अतो गुरुर्महेशानि! संसारार्णवलङ्घने। कर्त्ता पाता च हर्त्ता च गुरुर्मोक्षप्रदायकः॥ इति गुरुतुष्ट्यादिफलम्॥ शाक्तानन्दतरङ्गिणीधृतरुद्रजामले॥ गकारः सिद्धिदः प्रोक्तो रेफः पापस्य दाहकः। उकारः शम्भुरित्युक्तस्त्रितयात्मा गुरुः स्मृतः॥ कङ्कालमालिनीतन्त्रे प्रथमपटले॥ निर्गुणञ्च परं ब्रह्म गुरुरित्यक्षरद्वयम्। महामन्त्रं महादेवि! गोपनीयं परात्परम्॥ गुरुतन्त्रे॥ गुरुरित्यक्षरं यस्य जिह्वाग्रे देवि! वर्त्तते। तस्य किं विद्यते मोहः पाठैर्वेदस्य किं वृथा। गकारोच्चारणमात्रेण ब्रह्महत्या व्यपोहति। उकारोच्चारमात्रेण मुच्यते जन्मपातकात्। रेफोच्चारणमात्रेण उकारोच्चारणात् पुनः। विसर्गोच्चारणात् कोटिजन्मजं पातकं हरेत्। गुरुरित्यक्षरं देवि! जपतो मम निश्चितम्। ब्रह्महत्या पुरा मुक्ता सत्यमेतन्न संशयः। परशुरामो मातृवधात् देवेन्द्रो ब्रह्महिंसनात्॥ पातकादपि मुक्तो-

ऽभूत् गुरोरुच्चारमात्रतः ॥ इति गुरुशब्दोच्चारणफलम् ॥ तत्रैव ॥ ब्रह्मा विष्णुश्च रुद्रश्च पार्वती परमेश्वरी । इन्द्रादयस्तथा देवा यक्षाद्याः पितृदेवताः । गङ्गाद्याः सरितः सर्वा गन्धर्वाः सर्पजातयः । स्थावरा जङ्गमाश्चान्ये पर्वताः सार्वभौतिकाः । एते चान्ये च तिष्ठन्ति नित्यं गुरुकलेवरे । श्रीगुरोस्तृप्तिमात्रेण तृप्तिरेषाञ्च जायते ॥ इति गुरौ तृप्ते जगत्तृप्तिकथनम् ॥ तत्रैव ॥ न गुरोरधिकं शास्त्रं न गुरोरधिकं तपः । न गुरोरधिको मन्त्रो न गुरोरधिकं फलम् । न गुरोरधिका देवी न गुरोरधिकः शिवः । न गुरोरधिका मूर्त्तिर्न गुरोरधिको जपः ॥ विश्वसारतन्त्रीयगुरुगीतायाम् ॥ गुरोर्मूर्त्तिः सदा ध्यानं गुरोस्तत्त्वं सदा जपेत् । काशीचेत्रं निवासोऽस्य जाह्नवी चरणोदकम् । गुरुर्विश्वेश्वरः साक्षात् तारकं ब्रह्म निश्चितम् । तथा । ध्यानमूलं गुरोर्मूर्त्तिः पूजामूलं गुरोः पदम् । मन्त्रमूलं गुरोर्वाक्यं सिद्धिमूलं गुरोः कृपा । तथा । मुनिभिः पन्नगैर्वापि सुरैर्वा शापितो यदि । कालमृत्युभयाद्वापि गुरू रक्षति पार्वति ! ॥ गुप्तसाधनतन्त्रे द्वितीयपटले ॥ गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः । गुरुस्तीर्थं गुरुर्यज्ञो गुरुर्दानं गुरुस्तपः । गुरुरग्निर्गुरुः सूर्यः सर्वं गुरुमयं जगत् ॥ इति सर्वेभ्यो गुरोराधिक्यकथनम् ॥ किं दानेन किं तपसा किमन्यत्तीर्थसेवया । श्रीगुरोरर्च्चितौ येन पादौ तेनार्च्चितं जगत् । ब्रह्माण्डभाण्डमध्ये तु यानि तीर्थानि सन्ति वै । गुरोः पादतले तानि निवसन्ति हि सन्ततम् । इत्यनेन गुरुपादार्चनवशात् विश्वपूजासिद्धिः स्पष्टमवगम्यते ॥ इति गुरुपूजने जगत्पूजनसिद्धिकथनम् ॥ पिच्छिलातन्त्रे ॥ गुरुस्तु द्विविधः प्रोक्तो दीक्षाशिक्षाप्रभेदतः । आदौ दीक्षागुरुः प्रोक्तः शेषे शिक्षागुरुर्मतः । यन्मुखात्तु महामन्त्रः श्रूयतेऽभ्यस्यतेऽपि वा । स गुरुः परमो ज्ञेयस्तदाज्ञा सिद्धिदायिनी । कुलमूलावतारकल्पसूत्रटीका-

धृतकुलागमे ॥ प्रेरकः सूचकश्चैव वाचको दर्शकस्तथा। शिक्षको बोधकश्चैव षडेते गुरवः स्मृताः। पञ्चैते कार्य्यभूता स्युः कारणं बोधको भवेत्॥ इति गुरुभेदकथनम्। तथा। तत्त्वज्ञैरुपदिष्टा ये तत्त्वज्ञास्ते न संशयः। पशुभिश्चोपदिष्टा ये देवि! ते पशवः स्मृताः। अभिज्ञश्चोद्धरेन्मूर्खं न मूर्खो मूर्खमुद्धरेत्। शिलां सन्तारयेन्नौका न शिला तारयेच्छिलाम्॥ अतएव गुरुतन्त्रे॥ गुरवो बहवः सन्ति शिष्यवित्तापहारकाः। तमेकं दुर्लभं मन्ये शिष्यहृत्तापनाशकम्। एकः श्रेष्ठो भवेत्तेषां भुक्तिमुक्तिप्रदायकः। इति तत्त्वज्ञगुरुकरणबीजम्॥ योगिनीतन्त्रे पूर्वखण्डे प्रथमपटले॥ श्रीदेव्युवाच॥ गुरुः को वा महेशान! वद मे करुणामय!। त्वत्तोऽप्यधिक एवायं गुरुस्त्वया प्रकीर्त्तितः। श्रीईश्वर उवाच॥ आदिनाथो महादेवि! महाकालो हि यः स्मृतः। गुरुः स एव देवेशि! सर्वमन्त्रेषु नापरः। शैवे शाक्ते वैष्णवे च गाणपत्ये तथैन्दवे। महाशैवे च सौरे च स गुरुर्नात्र संशयः। मन्त्रवक्ता स एव स्यान्नापरः परमेश्वरि!। मन्त्रप्रदानकाले हि मानुषे गिरिनन्दिनि!। अधिष्ठानं भवेत्तस्य महाकालस्य शङ्करि!। अतो न गुरुता देवि! मानुषे नात्र संशयः। मन्त्रदाता शिवः पश्चे यद्ध्यानं कुरुते गुरोः। तद्ध्यानं कुरुते देवि! शिष्योऽपि शीर्षपङ्कजे। तद्ध्यानं शिष्यशिरसि चोपदिष्टं न चान्यथा। इति कामाख्यातन्त्रे तृतीयपटले शेषार्द्धम्॥ अतएव महेशानि! एक एव गुरुः स्मृतः। अधिष्ठानवशात्तस्य मानुषस्य महेश्वरि!। माहात्म्यं कीर्त्तितं तस्य सर्वशास्त्रेषु शङ्करि!॥ कामाख्यातन्त्रे तृतीयपटलेऽपि॥ अतएव महेशानि! कुतो हि मानुषो गुरुः। मानुषे गुरुता देवि! कल्पना न तु मुख्यतः। मोक्षो न जायते देवि! मानुषे गुरुभावनादिति॥ तथा। अतएव गुरुर्नैव मनुजः किन्तु कल्पना। दीक्षादौ साधकानाञ्च श्राद्धादौ पूजनं यथा।

ननु यदि मानुषत्वेन गुरुः सदा। अविद्यो वा सविद्यो वा गुरुः परमदैवतम्। इत्यादितन्त्रसारधृतवचनस्य का गतिरिति चेत् सत्यं प्रागुक्तदेवत्वादिवन्माननीयत्वेनोक्तम्। न तु वस्तुतस्तथात्वे वक्ष्यमाणगुरौ मनुष्यबुद्धीत्यादिवचनं गुरौ मनुष्यताबुद्धिमित्यादितन्त्रसारकारधृतञ्च न सङ्गच्छते। घटस्य छिद्रव्रणादिदोषवन्महापातकादिदोषो मनुष्यस्य इति सुधीभिर्ध्येयम्॥ गुरुतन्त्रेऽपि॥ एक एव गुरुर्देवि! सर्वत्र परिगीयते। भेदस्तस्य न कर्त्तव्यः सर्वं गुरुमयं जगत्॥ इति वचनाद्गुरोर्नित्यत्वेन गुरुमरणे त्रिरात्राशौचमिति वदन्तो मूर्खा एव। अशौचादेः स्मृत्युक्तत्वेन गुरुमरणाशौचं स्मृत्युक्तगुरुपरं वैदिकगुरुपरं वा। यदि च मत्स्यसूक्तादिवचनानुसारेण तान्त्रिकगुरुपरमप्यङ्गीकुर्वते। तदपि कुलागमप्रोक्तप्रेरकादिगुरुपरम्। पश्चाचारयुक्तशिष्यस्य कर्त्तव्यत्वेनोक्तं वेति केचित्। न तु बोधकगुरुपरमिति सुधीभिर्ध्येयम्। विशेषं शृणु वक्ष्यामि माहात्म्यं गुरुगोचरम्। पशुमन्त्रप्रदाने तु मर्य्यादा दशपौरुषी। वीरमन्त्रप्रदाने तु पञ्चविंशतिपौरुषी। महाविद्यासु सर्वासु पञ्चाशत्पौरुषी मता। ब्रह्मयोगप्रदाने तु मर्य्यादा शतपौरुषी। अयमभिप्रायः। पश्वाचारादिमतप्रदेयमन्त्रो यदि शिष्येण गुरुतो गृहीतस्तदनन्तरं शिष्यसन्तत्या गुर्वन्तराद् यदि मन्त्रो गृहीतस्तथापि पैतृकगुरुत्यागजन्यदुरदृष्टशालिना पैतृकगुरुदशमादिवंशपर्य्यन्तं स्वीयदशमादिवंशावधिकेन गुरुवन्मर्य्यादा कार्य्या। अन्यथा प्रत्येकेन प्रत्येकतो यदि मन्त्रो गृह्यते तदा तेषां सर्वेषां गुरुतया वंशमर्य्यादाकल्पनमनर्थकं स्यादिति व्यक्तगुरुवंशमर्य्यादाकथनम्। यद्वा वक्ष्यमाणकामाख्यातन्त्रोक्तवचनेन लुब्धदुष्टादिगुरुत्यागस्य वैधत्वेन यदि शिष्येण स गुरुस्त्यज्यते तथापि तद्वंशमर्य्यादार्थमेतदुक्तम्। दिव्यवीरगुर्वोरपि दोषदुष्टत्वे

स्याज्ज्वलं भवति। एवञ्च गुरुत्यागाद्भवेन्मृत्युरित्यादितन्त्रसार-धारघृतवचनमदुष्टादिगुरुत्यागे बोध्यम्॥ श्यामानन्दतरङ्गिणी-घृतमहिषमर्दिनीतन्त्रे॥ मानवस्य महेशानि! सङ्क्षेपान्निग-दामि ते। गुरुः परगुरुश्चैव परापरगुरुस्तथा। स्वगुरुः परमे-शानि! शम्भुरेव न संशयः। तत्पिता परमगुरुः स्वयं विष्णुः स्थितो सदा। तत्पिता परापरगुरुर्महेश्वरसमः सदा। कुलमूलतन्त्रे द्वितीयपटले तु॥ परापरगुरूणाञ्च निर्णयं शृणु पार्वति!। आदौ सर्वत्र देवेशि! मन्त्रदः परमो गुरुः। परापर-गुरुस्त्वं हि परमेष्ठी त्वहं गुरुः॥ कुलार्णवतन्त्रे। पारम्पर्या-गमाम्नायं मन्त्राचारादिकं प्रिये!। सर्वं गुरुमुखाल्लब्धं सफलं स्यान्न चान्यथा॥ पारम्पर्यशब्दव्युत्पत्तिस्तु समदशोल्लासे॥ पशुच्छेदकराद्देवि! रञ्जनात्परतेजसः। जातिभिञ्छिद्यमानाञ्च पारम्पर्यमितीरितम्॥ अथ स्त्रीगुरुलक्षणम्॥ रुद्रजा-मले उत्तरखण्डद्वितीयपटलपूर्वखण्डपञ्चदशपटलयोः॥ साध्वी चैव सदाचारा गुरुभक्ता जितेन्द्रिया। सर्वमन्त्रार्थतत्त्वज्ञा सुशीला पूजने रता। सर्वलक्षणसम्पन्ना रूपिका पद्मलोचना। रत्नालङ्कारसंयुक्ता स्वर्णाभरणभूषिता। शान्ता कुलीना कुलजा चन्द्रास्या सर्वबुद्धिगा। अनन्तगुणसम्पन्ना रुद्रत्वदायिनी प्रिया। गुरुरूपा शक्तिदात्री शिवज्ञानविरूपिणी। गुरुयोग्या भवेत् सा हि विधवा परिवर्जिता। स्त्रियश्च दीक्षा शुभा प्रोक्ता मातुश्चाष्टगुणा स्मृता। पुत्रिणी विधवा ग्राह्या केवलानन्द-कारिणी। सिद्धमन्त्रं यदि तदा गृह्णीयाद्विधवामुखे। केवलं सुफलं तत्र मातुरष्टगुणं स्मृतम्। स्वयं वा स्वप्नविलये ददाति यदि सन्मनुम्। तत्राष्टगुणमाप्नोति यदि सा पुत्रिणी सती। यदि माता स्वीयमन्त्रं ददाति तनुजाय च। तदाष्टसिद्धिमा-प्नोति भक्तिमार्गे न संशयः। तदेव दुर्लभं देव! यदि माता प्रदी-

यते। आदौ भक्तिं ततो मुक्तिं सम्प्राप्य कामरूपधृक्। सहस्र-कोटिविद्यार्थं जानाति नात्र संशयः। स्वप्ने वा यदि वा माता ददाति च स्वमन्त्रकम्। पुनर्दीक्षां सोऽपि कृत्वा दानवत्त्वमवाप्नुयात्। यदि भाग्यवशेनैव जननीच्छानुवर्त्तिनी। तदा सिद्धिमवाप्नोति तत्र मन्त्रं विचारयेत्। स्त्रीयमन्त्रोपदेशेन न कुर्य्याद्गुरुचिन्तनम्॥ इति स्त्रीगुरुकथनम्॥

गुरौ कर्त्तव्ये वर्ज्जनीयमाह रुद्रजामलीयोत्तरखण्डीयद्वितीयपटलपूर्व्वखण्डीयपञ्चदशपटलयोः॥ वर्ज्जयेच्च परानन्दरहितं रूपवर्ज्जितम्। निन्दितं रोगिणं क्रूरं महापातकिनं गुरुम्। अष्टप्रकारकुष्ठे च गलत्कुष्ठिनमेव च। श्वित्रिणं जनहिंसार्थं सदार्थग्राहिणं तथा। स्वर्णविक्रयिणं चौरं बुद्धिहीनं सुखर्व्वरम्। श्यावदन्तं कुलाचाररहितं शान्तिवर्ज्जितम्। सकलङ्कं नेत्ररोगपीड़ितं परदारगम्। असंस्कारप्रवक्तारं स्त्रीजितञ्चाधिकाङ्गकम्। कपटात्मानमेवञ्च विशिष्टं बहुजल्पकम्। बह्वाशिनं हि कृपणं मिथ्यावादिनमेव च। अशान्तं भावहीनञ्च पञ्चाचारविवर्ज़ितम्। दोषजालैः पूजिताङ्गं पूजयेन्न गुरुं विना। गुरुं विना न पूजयेदित्यभिधानात् गुरौ कृते यः कुष्ठादिदोषदुष्टो भवति तं पूजयेत्। गुरुकरणसमये तु यः कुष्ठादिस्तं वर्जयेदिति वचनस्य तात्पर्य्यम्। तच्चोक्तं महापातकिनं गुरुं वर्ज़येदिति तदपि भाविनि भूतवदुपचार इतिकर्त्तव्यगुरुपरमन्यथा पूर्व्वापरलिखितैकग्रन्थयोर्वैषम्यं स्यात्॥ निरुत्तरतन्त्रे द्वादशपटले॥ पङ्गुं शठञ्च धूर्त्तञ्च चुम्बकञ्च विशेषतः। धर्म्मार्थकाममोक्षार्थी गुरुत्वेन न चार्च्चयेत्॥ जामले पूर्व्वखण्डे पञ्चदशपटले तु॥ गुरोर्व्विचारः सर्व्वत्र तातमातामहं विना। प्रमादाच्च यदा ताभ्यां दीक्षाविधिमुपाचरेत्। प्रायश्चित्तं ततः कृत्वा पुनर्दीक्षां समाचरेत्। सावित्री मन्त्रजापञ्च लक्षसंख्यं जगत्-

पतेः। विष्णोर्वा प्रणवं लब्धं प्रायश्चित्तमिति स्मृतम्। अथवा-त्वेन्महादेवि! चायुतं प्रजपेन्मनुम्। दशसाहस्रजप्येन सर्वकिल्बिषनाशिनी। गायत्री छन्दसां माता पापराशितुलानलः। कठिनश्च रिपुश्चैव सोदरं वैरिपक्षिणम्। मातामहश्च पितरं यतिनं वनवासिनम्। वर्ज्जयित्वा च शिष्येन्द्रो दीक्षाविधिमुदाचरेत्। अन्यथा तद्विरोधेन कायनाशो भवेद्ध्रुवम्। सिद्धमन्त्रश्च गृह्णीयाद्दुष्कुलादपि भैरवि!। स्वप्ने तु नियमो नास्ति दीक्षासु गुरुशिष्ययोः। स्वप्नलब्धे स्त्रिया दत्ते संस्कारेणैव शुध्यति॥ राघवभट्टधृतमहाकपिलपञ्चरात्रे॥ नातिबालो न वृद्धश्च न खञ्जो न कृशस्तथा। नाधिकाङ्गो न हीनाङ्गो न खल्वाटो न दन्तुरः। वीरमित्रोदयधृतकल्पचिन्तामणौ॥ क्षयरोगी च दुश्चर्मा कुनखी श्यावदन्तकः। कर्णान्धः कुसुमाक्षश्च खल्वाटः खञ्जरीटकः॥ कर्णान्धो वधिरः। खञ्जरीटः खञ्जः॥ अङ्गहीनोऽतिरिक्ताङ्गः पिङ्गाक्षः पूतिनासिकः। वृद्धाण्डो वामनः कुब्जः श्वित्री चैव नपुंसकः॥ पूतिनासिको दुर्गन्धिनासिकः। इत्याद्यैर्देहजैर्दोषैः संयुक्तो निन्दितो गुरुः। संस्काररहितो मूर्खो वेदशास्त्रविवर्ज्जितः। श्रौतस्मार्त्तक्रियाशून्यः शुष्कभाषः सुकुत्सितः। पुरयाजनजीवी च नरो वैद्यश्च कामुकः। क्रूरो दम्भी मत्सरी च व्यसनी कृपणः खलः। कुसङ्गी नास्तिको भीतो महापातकचिह्नितः। देवाग्निगुरुविद्यादिपूजाविधिपराङ्मुखः। सन्ध्यातर्पणपूजादिमन्त्रज्ञानविवर्ज्जितः। आलस्योपहतो भोगी धर्म्महीन उपश्रुतः। इत्याद्यैर्बहुभिर्दोषैरागमोक्तैश्च यत्नतः। वर्जनीयो गुरुः प्राज्ञैर्दीक्षासु स्थापनादिषु॥ मत्स्यसूक्ते त्रयोदशपटले॥ अपुत्रश्चासुतपत्नीकः शक्तिहीनोऽथ वामनः। कुनः कुष्ठः श्यावदन्तो वृषलीपतिरेव च। मातामहस्यानुजस्य सोदरस्य तथैव च। पित्रोर्मन्त्रं न-

गृह्णीयात्तथा चैवाश्रितस्य च। कदाचिद्यदि गृह्णाति पुनः संस्कारमर्हति॥ त्याज्यगुरुमाह कामाख्यायां तृतीयपटले॥ मानुषे गुरुत्वस्य कल्पनामात्रमुक्त्वा। यथा भोक्त्रे तु भोज्यं हि स्वर्णादिपात्रके न च। दीयते च यथा देवि! तस्मै सर्वसमर्पणम्। यदि निन्द्यञ्च तत्पात्रं स्वर्णं वापि कुलेश्वरि!। तदा त्यजेत्तु तत्पात्रमन्यपात्रेण भोजयेत्। अतो हि मनुजं लुब्धं दुष्टं शिष्यो हि सन्त्यजेत्। सर्वेषां भुवने सत्यं ज्ञानाय गुरुरेव हि। ज्ञानान्मोक्षमवाप्नोति तस्माज्ज्ञानं परात्परम्। अतो यो ज्ञानदानं हि न क्षमेत्तं त्यजेद्गुरुम्। अन्नाकाङ्क्षी निरन्नं हि यथा सन्त्यजति प्रिये!। ज्ञानं तत्र समाभाति स गुरुः शिव एव हि। अज्ञानिनं वर्ज्जयित्वा शरणं ज्ञानिनां व्रजेत्। मधुलुब्धो यथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत्। ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत्॥ तथा। पूर्वोक्तदोषयुक्तश्चेद्दिव्यो वा वीर एव वा। तयोरपि न कर्त्तव्या शिष्येण गुरुभावना। किन्तु कार्य्यं हितैषित्वं गुरुताकल्पनं त्यजेत्॥ कौलानान्तु तत्रैव॥ महाविद्यां सम्प्रदाय वीराचारं ददाति न। स याति नरकं घोरं शिष्योऽपि पतितो भवेत्। पशुभावे स्थितो यो हि कालिकातारिणीमनुम्। दद्याचारं वदेन्नैव नरकान्न निवर्त्तते। तस्मात् पशुगुरुस्त्याज्यः साधकैः सर्व्वदा प्रिये!। यदि दैवात् पशोर्दीक्षां लभते शाक्त एव च। कौलात्तु कौलिकीं कृत्वा तन्मन्तुं पुनराजपेत्॥ इत्युक्तवचनादभिषेकादिना पुनर्गुरुः करणीय इत्यग्रेऽपि वक्ष्यते॥ गुरुता शिष्यत्वापेक्षणीत्यतो गुरुप्रकरणानन्तरं शिष्यप्रकरणमुच्यते॥ तत्र शिष्यशब्दव्युत्पत्तिस्तु कुलार्णवे पञ्चमखण्डे समदशोल्लासे॥ शरीरमथ प्राणांश्च सद्गुरुभ्यो निवेद्य यः। गुरुभ्यः शिष्यते योगं शिष्य इत्यभिधीयते॥ अथ शिष्यलक्षणम्। रुद्रजामले उत्तरखण्डे द्वितीयपटले॥ गुरुलक्षणमुक्त्वा। शिष्यस्तु

तादृशो भूत्वा सद्‌गुरुं पर्य्युपाश्रयेत्॥ कुलमूलावतारकल्प-सूत्रटीकायाम्। चतुर्भिरायैः संयुक्तः श्रद्धावान् सुस्थिराशयः। अलुब्धः स्थिरगात्रश्च प्रेक्षाकारी जितेन्द्रियः। आस्तिको दृढ़-भक्तिश्च गुरौ मन्त्रे च दैवते। एवंविधो भवेत् शिष्यस्त्वितरो दुःखकृद्‌गुरोः॥ चतुर्भिरायैः संयुक्तः शमादिचतुष्कयुक्त इत्यर्थः॥ शारदातिलके द्वितीयपटले॥ शिष्यः कुलीनः शुद्धात्मा पुरुषार्थ-परायणः। अधीतवेदः कुशलो दूरमुक्तमनोभवः। हितैषी प्राणिनां नित्यमास्तिकस्त्यक्तनास्तिकः। स्वधर्म्मनिरतो भक्त्या पितृमातृहितोद्यतः। वाङ्मनःकायवसुभिर्गुरुशुश्रूषणे रतः। एतादृशगुणोपेतः शिष्यो भवति नापरः। समाचारतन्त्रे द्वितीय-पटले॥ शिष्योऽपि स्वगुणैर्युक्तो गुरुभक्तिरतः सदा। धर्मका-मादिसंयुक्तो गुरुमन्त्रपरायणः। सत्यबुद्धिर्गुरोर्मन्त्रे देवपूजन-तत्परः। गुरूपदिष्टमार्गे च सत्यबुद्धिरुदारधीः। एवंलक्षण-संयुक्तः शिष्यश्चापि परीक्षितः॥ मत्स्यसूक्ते महातन्त्रे त्रयोदश-पटलेऽपि। शिष्यः कुलीनः शुद्धात्मा पुरुषार्थपरायणः। अधीत-वेदः कुशलो दूरमुक्तमनोभवः। हितैषी प्राणिनां नित्यमास्ति-कस्त्यक्तनास्तिकः। स्वधर्मनिरतो भक्त्या पितृमातृहितोद्यतः। वाङ्मनःकायवसुभिर्गुरुशुश्रूषणे रतः। एतादृशगुणोपेतः शिष्यो भवति शङ्करि!॥ इति शिष्यलक्षणम्॥

रुद्रयामलीयगुरुसमाननादिप्रकारविधायकानि। गुरुः पिते-त्यादिजन्महेतुरित्यादि। सद्‌गुरुः स्वाश्रितमित्यादिवचनान्य-स्मदत्यतिवृद्धप्रपितामहकृष्णानन्दागमवागीशेन स्वकृततन्त्रसारे लिखितान्यतो नेवात्र प्रयोजनमिति॥ वर्ज्यशिष्यमाह रुद्रया-मलपूर्वखण्डपञ्चदशपटलोत्तरखण्डद्वितीयपटलयोः॥ कामुकं कुटिलं लोकनिन्दितं सत्यवर्ज्जितम्। अविनीतमसमर्थं प्रज्ञा-हीनं रिपुप्रियम्। सदा पापक्रियायुक्तं विद्याशून्यं जड़ात्म-

कम्। कलिदोषसमूहाढ्यं वेदक्रियाविवर्ज्जितम्। आश्रमाचारहीनञ्चाप्युद्भ्रान्तःकरणोद्यतम्। सदा श्रद्धाविरहितमधमं क्रोधिनं भ्रमम्। असच्चरित्रं विगुणं परदारातुरं तथा। सब्बज्ञाढ्यं समूहोग्रमभक्तं द्वैतचेतसम्। नानानिन्दाव्रताढ्यञ्च तं शिष्यं वर्जयेद्गुरुः॥ इति निन्द्यशिष्यलक्षणम्॥ जामले॥ यदि न त्यज्यते वीरो धनादिदानहेतुना। नारकी शिष्यवत् पापी तद्विशिष्टमवाप्नुयात्। क्षणार्द्धसिद्धः स भवेच्छिष्यासादितपातकैः। अकस्मान्नरकं प्राप्य कार्य्यनाशाय केवलम्। विचार्य्य यत्नाद्विधिवच्छिष्यसंग्रहमाचरेत्। अन्यथा शिष्यदोषेण नरकस्थो भवेद्गुरुः। इति वर्ज्यशिष्यकरणनिन्दा॥ शिष्यकर्त्तव्याकर्त्तव्ये उक्तं रुद्रजामले उत्तरखण्डे प्रथमपटले। यथा। न लङ्घयेद्गुरोराज्ञामुत्तरं न वदेत्तथा। दिवा रात्रौ गुरोराज्ञां दासवत् प्रतिपालयेत्॥ इति गुर्वाज्ञापालनविधिः॥ न शृणुयाद्गुरोर्वाक्यं शृणुयाद्वा पराङ्मुखः। अहितं वा हितं वापि रौरवं नरकं व्रजेत्। आज्ञाभङ्गं गुरोर्देवि! यः करोति स मूढधीः। प्रयाति नरकं घोरं शूकरत्वमवाप्नुयात्॥ तथा एकविंशतिपटले॥ वृथा धर्मं वृथा चर्य्यं वृथा दीक्षां वृथा तपः। वृथा सुकृतिमाख्यातिं गुर्वाज्ञालङ्घने नृणाम्॥ इति गुर्वाज्ञालङ्घनदोषः। द्वितीयपटले। आज्ञाभङ्गं तथा निन्दां गुरोरप्रियवर्णनम्। गुरुद्रोहञ्च यः कुर्य्यात्तत्संसर्गं न कारयेत्। कारयेत् इत्यत्र स्वार्थेणिच् न कुर्य्यादित्यर्थः। कुलार्णवे पञ्चमखण्डे एकादशोल्लासे॥ गुरुद्रव्याभिलाषी यो गुरुस्त्रीगमनोत्सुकः। स तिर्य्यग्योनिमाप्नोति क्रव्याद्यैर्भक्ष्यते प्रिये!॥ रुद्रजामले॥ गुरुद्रव्याभिलाषी च गुरुस्त्रीगो भवेद् यदि। पातकञ्च भवेत्तस्य प्रायश्चित्तं न कारयेत्॥ प्रायश्चित्तं न कारयेदित्यनेनात्यन्तनिषिद्धमिति ध्वनितम्॥ यथा। कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते। इति मनुवचनतात्पर्य्यमु-

क्तम् । भविष्यपुराणे ॥ कामतो ब्राह्मणबधे यदेतन्मनुनोदितम् । एकान्ततो विप्रबधवर्ज्जनार्थमुदीरितम् ॥ जामले ॥ गुरुं दुष्कृत्य रिपुवन्निर्गत्य परिवादतः । अरण्ये निर्जने देशे स भवेद्ब्रह्मराक्षसः ॥ इति गुर्वनिष्टकरणदोषः ॥ गुरुगीतायाम् ॥ अशक्ता हि सुराः सर्वे अशक्ता मुनयस्तथा । गुरुशापहताः क्षीणाः क्षयं यान्ति न संशयः ॥ इति गुरुशापजन्यदोषः ॥ रुद्रजामले पूर्वखण्डे चतुर्दशपटले ॥ गुरोर्निन्दाञ्च पैशुन्यं यः शृणोति दिनान्तरे । तस्य तद्दिनजां पूजां न तु गृह्णाति सुन्दरी ॥ इति गुरुनिन्दाश्रवणदोषः ॥ कुलार्णवे द्वादशोल्लासे ॥ यत्र श्रीगुरुनिन्दा स्यात्पिधाय श्रवणे स्वके । तस्मात् स्थानाद्विनिष्क्रमेद्दूरं न श्रवणं यथा । गुरोर्नाम स्मरेत् पश्चात् श्रवणे नासिकिसा । इति गुरुनिन्दाश्रवणप्रतीकारः ॥ जामले ॥ गतश्रीश्च गतायुश्च गुरोर्निन्दाकरो नरः । कल्पकोटिशतं देवि ! नरके पतति ध्रुवम् ॥ तथा । एवं श्रुत्वा महादेवि ! गुरुनिन्दां करोति यः । स याति नरकं घोरं यावच्चन्द्रदिवाकरौ ॥ इति गुरुनिन्दाकरणे दोषः ॥ गुरुतन्त्रे ॥ गुरौ मनुष्यताबुद्धिः शिष्याणां यदि जायते । न हि तस्य भवेत् सिद्धिः कल्पकोटिशतैरपि ॥ इति गुरौ मनुष्यज्ञानजन्यदोषकथनम् ॥ कुलार्णवे ॥ आज्ञाभङ्गोऽर्थहरणं गुरोरप्रियवर्णनम् । गुरद्रोहमिदं प्राहुर्यः कुर्य्यात् स तु पातकी । गुरुकोपात्तु नाशः स्याद्गुरुद्रोहात्तु पातकम् । विमृत्युर्गुरुनिन्दायां गुर्वनिष्टान्महापदः । जीवेदग्निं प्रविष्टो वा नरः पीतविषोऽपि वा । मृत्युहस्तगतो वापि नापराधकरो गुरोः ॥ इति गुर्वपराधादिदोषः ॥ रुद्रजामले पूर्वखण्डे ॥ गुरोस्तु सन्ततिं त्यक्त्वा न गुर्वन्तरमाश्रयेत् । गुरुनिन्दा न कर्त्तव्या न श्रोतव्या कदाचन ॥ इति गुरुसन्ततित्यागनिषेधः ॥ गुर्वादिमाननप्रकारश्च पुरश्चरणरसोल्लासे दशमपटले ॥ गुरुञ्च भावयेन्नित्यं सदा शिव-

मयं सदा। गुरोः सुतश्च चार्वङ्गि! गणेशसदृशं सदा। गुरोः स्नुषा वरारोहे! वाणी लक्ष्मीरिव प्रिये!। गुरोः कुलं महेशानि! भैरवाणां गणं यथा॥ कल्पसूत्रटीकाधृतकुलागमे शाक्तानन्दतरङ्गिण्याञ्च॥ गन्धैर्माल्यैश्च चार्वङ्गि! पूजयेत् सर्वदा गुरुम्। गुरोः पत्नीं तथा देवि! पूजयेद्विधिनामुना॥ गुरुपत्नीपदं गुरुयोषिदुपलक्षणम्। न तु पत्युर्नो यज्ञसम्बन्धे इति पाणिनिसूत्रानुसारेण विवाहसंस्कृतापरम्। सूत्रार्थस्तु पतिशब्दस्यान्ते नकारादेशो भवति यज्ञसम्बन्धे गम्यमाने। यज्ञशब्देनात्र विवाहाङ्गयज्ञ उच्यते। तथात्वे पञ्चविधगुरुयोषित्पूजाविधानं कुलार्णवोक्तमसङ्गतं स्यात्तथा च। कुलार्णवतन्त्रे पञ्चमखण्डे प्रथमोल्लासे॥ ऊढ़ा धृता तथा क्रीता मूल्येन च समाहृता। सकृत् कामगता चापि पञ्चधा गुरुयोषितः। अलङ्घ्याः पूजनीयाश्चागम्याश्च गुरुयोषितः॥ बृहन्नीलतन्त्रे तृतीयपटले॥ गुरुपत्नी च युवती न संवाह्येत पादयोः। पुनर्विंशतिवर्षेण गुणदोषौ विजानता। अतएव महेशानि! न कुर्य्यात् पादसेवनम्॥ कुलागमे॥ गुरुवद्गुरुपुत्रेषु गुरुवत्तत्सुतादिषु। पूजयेत् प्रत्यहं भक्त्या अमुना विधिना प्रिये!॥ पूजाक्रमस्तु तत्रैव॥ गुरोरभावे चार्वङ्गि! गुरुपत्नीं प्रपूजयेत्। अभावे अलाभे॥ तदभावे च चार्वङ्गि! गुरुपुत्रं समर्च्चयेत्। तदभावे वरारोहे! गुरुकन्याञ्च पूजयेत्। तदभावे च चार्वङ्गि! गुरुस्नुषां प्रपूजयेत्। एषामभावे चार्वङ्गि! गुरुगोत्रं प्रपूजयेत्। तदभावे वरारोहे! तथा मातामहस्य च। मातुलं मातुलानीं वा पूजयेद्विधिनामुना॥ इति गुरुकुलपूजाक्रमकथनम्। तथा। पूजाकाले च चार्वङ्गि! आगच्छेच्छिष्यमन्दिरे। गुरुर्वा गुरुपत्नी वा पुत्रो वापि समागतः ज्येष्ठो वाप्यर्च्चनामध्ये शिष्यः सर्वार्च्चनां त्यजेत्। तमेव पूजयेच्छिष्य इति शास्त्रस्य निर्णयः॥ इति पूजाकाले

गुर्वादावागते सति शिष्यकर्त्तव्यम् तत्रैव॥ शिष्यस्य तद्दिनं देवि! कोटिसूर्य्यग्रहैः समम्। चन्द्रग्रहणकालं हि तद्दिनं वरवर्णिनि!। गुरोर्दर्शनमात्रेण सर्वपापैः प्रमुच्यते। तत्क्षणाच्चञ्चलापाङ्गि! दानं कुर्य्याद्विचक्षणः॥ इति गुरुदर्शनदिनप्रशंसा॥ गुरौ प्रीतिसमापन्ने देवता प्रीतिमाप्नुयात्। देवे च प्रीतिमापन्ने मन्त्रसिद्धिर्भवेद्ध्रुवम्॥ इति गुरुप्रीतिफलम्॥ मुण्डमालातन्त्रे॥ गुरुपूजां विना देवि! इष्टपूजां करोति यः। मन्त्रस्य तस्य तेजांसि हरते भैरवः स्वयम्॥ रुद्रयामले॥ गुरुपूजां विना नाथ! कोटिपुण्यं वृथा भवेत्। अतः सर्वजने ख्यातं गुरुणा सिद्धिमाप्नुयात्॥ राघवभट्टधृतम्॥ गुर्वनुज्ञाः क्रियाः सर्वा निष्फलाः स्युर्यतो ध्रुवम्। जपो होमार्च्चनविधिः कार्य्यो दीक्षान्वितैस्ततः॥ तथा। प्रणम्य गुरुपादाब्जं ध्यात्वा च गुरुपादुकाम्। ज्ञात्वा परमतत्त्वं वै यो जपेत् कुलचण्डिकाम्। स कृतार्थः स धन्यश्च स कुलज्ञः स पण्डितः। स भावज्ञो महादेवि! जायते नात्र संशयः॥ गुरुगीतायाम्॥ संसारसागरसमुद्धरणैकमन्त्रं ब्रह्मादिदेवमुनिसेवितसिद्धिमन्त्रम्। दारिद्र्यदुःखभयशोकविनाशमन्त्रं वन्दे महाभयहरं गुरुदेवमन्त्रम्॥ गुरुतन्त्रे॥ गुरोः सेवा गुरोर्ध्यानं गुरोः स्तोत्रं गुरोर्जपः। गुरोः पूजा गुरोस्तृप्तिर्गुरोर्भक्तिर्नृणां यदि। जन्मभाग्यवशाद्देवि! येषां सञ्जायते क्वचित्। तेषां मन्त्रो भवेत् सिद्धो जीवन्मुक्ताश्च ते नराः। गुरोर्गेहे स्थितः शिष्यो यत् पुण्यं समुपाचरेत्। तत् पुण्यमक्षयं प्रोक्तं पुण्यतीर्थे शताधिकम्॥ इति गुरुगृहनिष्पादितपुण्यकर्मफलम्॥ तत्रैव॥ गुरोः पादरजो यस्तु सुधीर्मूर्द्धनि धारयेत्। स तीर्थकोटिजफलात् फलं दशगुणं लभेत्। गुरोः पादोदकं यस्तु नित्यं पिबति भक्तितः। सार्द्धत्रिकोटितीर्थानां फलं स लभते ध्रुवम्॥ गुप्तसाधनतन्त्रे॥ त्रिसन्ध्यं पिबते यस्तु गुरुपादो-

दकं सुधीः । तस्य नास्ति पुनर्जन्म संसारे मोहवर्त्मनि । ब्रह्मा विष्णुश्च रुद्रश्च सर्वाश्च पितृदेवताः । तिष्ठन्ति श्रीगुरोः पादपद्मार्चितजले शुभे । गुरोः पादोदकं यस्तु नित्यं पिबति मानुषः । धर्मार्थकाममोक्षाणामधिपो जायते च सः ॥ योगिनीतन्त्रे ॥ सुभक्त्या विमलं पादप्रक्षालनजलं यदि । पिबेदमृतभावेन यः स देवीपुरं व्रजेत् ॥ गुप्तसाधनतन्त्रे ॥ गुरोः पादोदकं यस्तु शिरसा धारयेन्नरः । स सर्वतीर्थजं पुण्यं लभते नात्र संशयः ॥ गुरुतन्त्रे ॥ त्रिसन्ध्यं पूजयेद् यस्तु गन्धपुष्पैर्जगद्गुरुम् । तस्य किं मन्त्रपूजादिविधानैर्न्यासजापकैः । गुरोरन्नं महादेवि ! यस्तु भक्षणमाचरेत् । कोटिजन्मार्जितं पापं तत्क्षणात्तस्य नश्यति । न स्नानं पादशौचञ्च न चैवाचमनञ्चरेत् । प्राप्तिमात्रेण भोक्तव्यं नैव स्थानं विचारयेत् । न ब्राह्मण्यं न कौलीन्यं न जातीनां विचारणम् । न ज्ञातिसुतबन्धूनां सभ्यानां तत्र चिन्तनम् । एकस्थानस्थितं ह्यन्नं तत्तीर्थमण्डलीकृतम् । भोक्तव्यं मोक्षदं देवि ! शूद्रस्पृष्टं न चिन्तयेत् । गुरोरन्नं सुधाबुद्ध्या यस्त्वद्यान्मतिमान्नरः । शिवोऽपि तस्य देवेशि ! तुष्टो भवति नान्यथा । गुरोरुच्छिष्टकं देवि ! भक्तिमुक्तिप्रदं भवेत् । अवश्यं वैष्णवैः शिष्यैर्भोक्तव्यं तद्दिने दिने ॥ योगिन्यां प्रथमपटले ॥ गुरूच्छिष्टञ्च देवेशि ! तत्सुतोच्छिष्टमेव च । भोजनीयं न सन्देहो विकारश्चेदधोगतिः । तवोच्छिष्टं महादेवि ! ब्रह्मादीनां सुदुर्लभम् । गुरूच्छिष्टं तथा प्रोक्तं महापूतं परात्परम् ॥ नन्वेतावता गुरुपत्न्युच्छिष्टं न भक्षणीयमिति चेन्न । गुरुपत्नी महेशानि ! गुरुरेव न संशय इत्येतद्वचनेन तस्या गुरुत्वेन गुरूच्छिष्टभोजनविधिना तदुच्छिष्टभोजनविधेः सिद्धत्वात् । गुरुणा गुरुपत्न्या वा गुरुपुत्रेण वा प्रिये ! । स्पृष्टान्नं मुष्टिमात्रं वा योऽश्नीयाद्दर्षविंशतिम् । चिरजीवी जरारोगविमुक्तोऽसौ

शिवो भवेत्॥ गुरुतन्त्रे॥ गुरोरुच्छिष्टकैर्यस्तु सर्वाङ्गमनुलेपयेत्। वज्रोऽपि तस्य गात्राणि न भिनत्ति कदाचन। गुरोरुच्छिष्टमन्नं यो भक्षयेद्भक्तिभावतः। अन्नपूर्णा जगद्धात्री तस्यैश्वर्य्यं प्रयच्छति। इति गुरूच्छिष्टभोजनफलं तत्रैव॥ कदाचित् परमेशानि! यदि तत्र भ्रमो भवेत्। न तस्य निष्कृतिर्दृष्टा कल्पकोटिशतैरपि। न भक्षयेद् यस्तु मोहाद्गुरोरुच्छिष्टकं प्रिये!। तस्य क्षुद्रा भवेत्त्वं हि विपत्तिश्च पदे पदे॥ इति गुरूच्छिष्टाभक्षणजन्यदोषकथनम्॥ तत्रैव॥ पादुकां वसनं छत्रं शयनं भूषणादिकम्। दृष्ट्वा गुरोर्नमस्कुर्य्यादात्मभोगं न कारयेत्॥ कुलार्णवे पञ्चमखण्डे द्वादशोल्लासे॥ पादुकामासनं छत्रं वाहनं वस्त्रचामरे। दृष्ट्वा गुरोर्नमस्कुर्य्यात् नात्मभोगाय कल्पयेत्। पादप्रक्षालनं स्नानमभ्यङ्गं दन्तधावनम्। मूत्रनिष्ठीवनं क्षौरं शयनं स्त्रीनिषेवणम्। वीरासनञ्च दुर्वाक्यमासनं हास्यरोदनम्। केशमोचनमुष्णीषं कञ्चुकं लग्नतां तथा। पादप्रसारणं वादं कलहं दूषणं प्रिये!। अङ्गभङ्गाङ्गवाद्यादिकरास्फालविधूननम्। द्यूतकुक्कुटमल्लादियुद्धमित्यादि चाम्बिके!। गुरुसिद्धमहासिद्धपीठक्षेत्राश्रयेषु च। नाचरेदाचरेन्मोहात् देवताशापमाप्नुयात्। उपचारं विना तिष्ठेद् गुर्वग्रे नेच्छया विशेत्॥ इति गुरुसमीपे महापीठादौ पादप्रक्षालनादिनिषेधः॥ योगिनीतन्त्रे पूर्वखण्डे प्रथमपटले॥ सुरां यद्यप्यसंस्कारां गुरोराज्ञावशात् पिबेत्। प्रायश्चित्तं न तत्रास्ति वेदेऽपि स्थितमेव हि। अपि तन्त्रविरुद्धं वा गुरुणा कथ्यते यदि। तत्सम्मतं भवेद्वेदैर्महारुद्रवचो यथा। इति गुर्वाज्ञया निषिद्धाचरणे दोषाभावः। निर्गतं यद् गुरोर्वक्त्रात् सर्वं शास्त्रं तदुच्यते। गुरुकार्य्ये स्वयं शक्तो नापरं प्रेरयेत् प्रिये!। रुद्रयामले। बन्धुभृत्यपुरैर्भृत्यैः सहितोऽप्यतिभक्तिमान्। गच्छन्

तिष्ठन् स्वपन् जाग्रत् जपन् जुह्वत् प्रपूजयेत्। गुर्वाज्ञामेव कुर्वीत तद्गतेनान्तरात्मना। अभिमानो न कर्त्तव्यो जातिविद्याधनादिभिः। सर्वदा सेवयेन्नित्यं शिष्यः श्रीगुरुसन्निधौ॥ इति गुर्वग्रे माननिषेधः॥ तत्रैव॥ सदा च पादुकामन्त्रं जिह्वाग्रे यस्य वर्त्तते। अनायासेन धर्मार्थकाममोक्षं लभेन्नरः॥ श्रीगुरोश्चरणाम्भोजं ध्यायेद् यश्च सदैवतम्। भुक्तये मुक्तये वीरो नान्यो भक्तस्ततोऽधिकः। विद्याङ्गमासनं मन्त्र मुद्रां तन्त्रादिकं प्रभो!। सर्वं गुरुमुखाल्लब्धं सफलं नान्यथा भवेत्॥ वाक्यभेदेनान्वयः॥ कम्बले कमले वापि प्रासादे संस्थिते तथा। दीर्घकाष्ठे तथा पृष्ठे गुरोरेकासनं त्यजेत्। श्रीगुरोः पादुकामन्त्रं मूलमन्त्रं स्वपादुकाम्॥ शिष्याय नैव देवेशि! प्रवदेद्यस्य कस्यचित्। यद् यदात्महितं वस्तु तद्द्रव्यं नैव वञ्चयेत्। गुरोर्लक्षैकवर्णी यस्तस्य तुष्यामि सुव्रत!। भक्त्या वित्तानुसारेण गुरुमुद्दिश्य यत् कृतम्। तयोरेव फलं देव! तुल्यमाढ्यदरिद्रयोः। स्वल्पे महति वा पुण्यमिति तृतीयचरणे कुलार्णवे पञ्चमखण्डे द्वादशोल्लासे पाठः॥ सर्वस्वमपि यो दद्याद् गुरुभक्तिविवर्जितः। नरकं तदवाप्नोति भक्तिरेव हि कारणम्। कुलार्णवे तु। शिष्यो न फलमाप्नोति इति तृतीयचरणे पाठः। गुरुभक्त्या च शक्रत्वं मद्भक्त्या शूकरो भवेत्॥ गुरुं विना मय्येव या भक्तिस्तयेति तात्पर्य्यम्। गुरुभक्तिपरं नास्ति सर्वशास्त्रेषु तत्त्वतः॥ इति गुरुभक्तिफलम्॥ धिग्धनं धिग्बलं तेषां धिक्कुलं धिग्विचेष्टितम्। तेषां नोत्पद्यते भक्तिर्गुरुदेवे महेश्वरि!। इति भक्त्यनुत्पत्तौ दोषः। जामले॥ गुरुस्त्रीपुत्त्रबन्धूनां दोषं नैव प्रकाशयेत्। भक्षयेन्न च तद्द्रव्यं दत्तं नैव परित्यजेत्। गुरुगीतायाम्॥ गुरुणा दर्शिते मार्गे मनःशुद्धिञ्च कारयेत्। गुरुणा सदसद्वापि यदुक्तं तन्न लङ्घयेत्। गुरोरग्रे न वक्तव्यमसत्यञ्च कदाचन॥ पिच्छिला-

तन्त्रे ॥ पैत्रं गुरुकुलं यस्तु त्यजेद्दै धर्म्ममोहितः। स याति नरकं घोरं यावच्चन्द्रार्कतारकम् ॥ कुलार्णवे पञ्चमखण्डे एकादशोल्लासे ॥ ब्रह्मादिस्तम्बपर्य्यन्तं यस्य या गुरुसन्ततिः ॥ तस्य मे सर्व्वशिष्यस्य कौलः पूज्यो महीतले। इति निश्चितबुद्धिर्य्यः स भवेदावयोः प्रियः ॥ श्रीगुरुं कुलशास्त्राणि पूजास्थानानि यानि च। भक्त्या श्रीपूर्व्वकं देवि! प्रणम्य च प्रकीर्त्तयेत्। गुरुं नाम्ना न भाषेत जपकालादृते प्रिये!। श्रीनाथदेवस्वामीति विवादे साधने वदेत्। अथ गुरुशुश्रूषा। तथा द्वादशोल्लासे ॥ आत्मार्थमान्यसद्भावैः शुश्रूषा स्याच्चतुर्विधाः। शुश्रूषया धिया देवि! शिष्यः सन्तोषयेद्गुरुम्। पदे पदेऽश्वमेधस्य फलं प्राप्नोत्यसंशयम्। केवलं गुरुशुश्रूषा तत्कृपाकारिणी प्रिये!। मद्भक्तिसहिता चेत् सा सर्व्वकामफलप्रदा। चीयन्ते सर्व्वपापानि वर्द्धन्ते पुण्यराशयः। सिध्यन्ति सर्व्वकार्य्याणि गुरुशुश्रूषया प्रिये। यद्यदात्महितं वस्तु तत्तद्वित्तमवञ्चयन्। गुरुदेवार्च्चको यस्तु तस्य पुण्यं न गण्यते। गुरुमित्रसुहृद्दासीदासाद्यान्नावमानयेत्। न निन्देदस्य समयान् वेदशास्त्रागमादिकान्। तथा। विविशुर्द्देशिकावासं शान्तचित्तोऽतिभक्तिमान्। वाहनं पादुकां छत्रं चामरं व्यजनादिकम्। ताम्बूलं वेशमुत्सृज्य प्रविशेच्च शनैः शनैः ॥ देशिकव्युत्पत्तिस्तु सप्तदशोल्लासे ॥ देवतारूपधारित्वाच्छिष्यानुग्रहकारणात्। करुणामयमूर्त्तित्वाद्देशिकः कथ्यते प्रिये! ॥ देशिकावासं गुर्व्वावासमित्यर्थः। तथा। रिक्तहस्तश्च नोपेयाद्राजानं देवतं गुरुम्। फलपुष्पाम्बरादीनि यथाशक्त्या समर्पयेत् ॥

इति श्रीप्राणतोषिण्यां द्वितीये धर्म्मकाण्डे गुरुशिष्यप्रकरणरूपशाखाद्वयकथनं नाम

द्वितीयः परिच्छेदः ।

दरपतिजयचर्य्यास्वरोदयष्टतब्रह्मजामले॥ अश्विन्यादि- लिखेच्चक्रं सर्पाकारं त्रिनाड़िकम्। तत्र वेधवशाज्ज्ञेयं विवाहादिशुभाशुभम्। त्रिनाड़ीवेधनक्षत्रमश्विन्यार्द्रा युगोत्तरा। हस्तेन्द्रमूलवारुण्यः पूर्वाभाद्रपदास्तथा। याम्यः सौम्यो गुरुर्योनिश्चित्रामित्रजलाह्वयम्। धनिष्ठा चोत्तराभाद्रमध्यनाड़ी व्यवस्थिता। कृत्तिका रोहिणी सर्पो मघा स्वातीविशाखके। उत्तरा श्रवणा पौष्यक्रोड़नाड़ी व्यवस्थिता। अश्विन्यादिनाड़ीवेधर्क्षे षष्ठं द्वितीयकं क्रमात्। याम्यादितुर्य्यं तुर्य्यञ्च कृत्तिकादौ द्विषट्ककम्। एवं निरीक्षयेद्वेधं कन्यामन्त्रे गुरौ सुरे। पुण्यस्त्रीस्वामिमित्रेषु देशे ग्रामे पुरे गृहे। एकनाड़ीस्थधिष्ण्यानि यदि स्युर्वरकन्ययोः। तदा वेधं विजानीयाद् गुर्वादिषु तथैव च। प्रकटं यस्य जन्मर्क्षं तस्य जन्मर्क्षतो व्यधः। प्रशस्तं जन्मभं यस्य तस्य नामर्क्षतो वदेत्। द्वयोर्जन्मभयोर्वेधे न कर्त्तव्यं कदाचन। एकनाड़ीस्थिता चेत् स्याद्भर्त्तृनाशाय चाङ्गना। एकनाड़ीस्थिता यत्र गुरुर्मन्त्रश्च देवता। तत्र द्वेषं रुजं मृत्युं क्रमेण फलमादिशेत्। प्रभुः पुण्याङ्गना मित्रं देशो ग्रामः पुरं गृहम्। एकनाड़ीगता त्याज्या भव्या वेधविवर्ज्जिता॥ इत्यादिवचनाद् गुरुशिष्यमन्त्राणां नाड़ीनक्षत्रविचारोऽवश्यकरणीय इति॥ दीक्षायां कर्त्तव्यायां चक्रादिविचारस्यावश्यकत्वम्। तत्तु अस्मद्गोष्ठीगरिष्ठकृष्णानन्दागमवागीशेन स्वकृततन्त्रसारे सर्वं लिखितमतो नात्र प्रयोजनम्॥ यत्तु नात्र सिद्धाद्यपेक्षास्तीत्यादिवचनमात्रप्रदर्शिभिरिदं प्रशंसापरं सर्वत्र विचारस्यावश्यकत्वमिति तन्त्रसारकारस्य स्वकपोलकल्पितमित्युपहसितम्। तैः रुद्रजामलोत्तरखण्डीयचतुर्थपटलाद्युक्तं न दृष्टं न श्रुतञ्च तद् यथा। कालीतारादिमन्त्रस्य सिद्धादीन्नैव शोधयेत्। तथापि शोधयेन्मन्त्रं प्रशंसापरमेव तत्। विचाराभावप्रतिपादकवचनमात्रं

यत्यादिपरं न गृहस्थपरमित्यग्रे वक्ष्यते॥ चक्रविचारप्रतिप्रसव-स्तु नन्दाकल्पे द्वितीयपटले उक्तो यथा॥ हरचक्रादिचक्रनरक-मुक्ता॥ नवचक्रविशुद्धात्मा मन्त्रोऽभीष्टाय कल्प्यते। उपासिता यदि भवेत् पैतृकी पुरुषाःक्रमात्। तदा तद्ग्रहणे धीरो विचारं नैव कारयेत्। तन्तु मन्त्रञ्च वनिताश्रयेद्भाग्यवशाद्यदि। तदा भर्त्तुर्विचारेण विचारोऽस्या न तु स्वतः। कुलचक्रे समुत्पन्ने वीरान् माहेश्वरीमुखात्। कृपया दीयमानस्य विचारो नास्ति भैरव!। स्वान्तःकरणवृत्तेर्वा यत्र श्रद्धा गरीयसी। सैवोपास्या प्रयत्नेन विचारस्तत्र निष्फलः॥ दीक्षाकर्म्मणि मण्डपकरण-स्यावश्यम्भावेन भूमिपरीक्षां विना मण्डपादिकरणनिषेधदर्शनेन चादौ भूमिपरीक्षोच्यते॥ तन्तु राघवभट्टधृतमहाकपिलपञ्च-रात्रे॥ तत्र भूमीं परीक्षेत वास्तुतत्त्वविशारदः। स्फुटिता च सशल्या च वल्मीकारोहिणी तथा। दूरतः परिवर्ज्या भूः कर्त्तु-रायुर्धनापहा॥ स्फुटिता चेति चकारेणोषरेति न लभ्यते। स्फुटिता मरणं कुर्य्यादूषरा धननाशिनी। सशल्या क्लेशदा नित्यं विषमा शत्रुतो भयम्॥ इति वर्जनीयभूमिकथनम्॥ तत्रैव॥ ईशकोणप्लवासा च कर्त्तुः श्रीदा सुनिश्चितम्। पूर्वप्लवा वृद्धिकरी धनदा तूत्तरप्लवा। विद्वेषं मरणं व्याधिं कुर्य्यादग्निप्लवा मही। धर्मराजप्लवा भूमिर्नित्यं मृत्युभयप्रदा। गृहक्षयकरी सा च भूमिर्या नैरृतप्लवा। धनहानिकरी पृथ्वी कीर्त्तिता वरुणप्लवा। वातप्लवा तथा भूमिर्नित्यमुद्वेगकारिणी। इति दिक्प्लवभूमि-शुभाशुभे॥ तत्रैव। श्वेता तु ब्राह्मणी भूमिरक्ता वै क्षत्रिया स्मृता। वैश्या पीता तु विज्ञेया शूद्रा कृष्णा प्रकीर्त्तिता। ब्राह्मणी घृतगन्धा स्यात् क्षत्रिया रक्तगन्धिका। क्षीरगन्धा भवेद्वैश्या शूद्रा विड्गन्धिनी क्षितिः। मधुरा ब्राह्मणी भूमिः कषाया क्षत्रिया स्मृता। वैश्या तिक्ता च विज्ञेया शूद्रा स्यात्

कटुका मही। ब्राह्मणी भूः कुशोपेता चत्रिया स्याच्छ्वाकुला। कुशकाशाकुला वैश्या शूद्रा सर्वतृणाकुला॥ इति ब्राह्मणादि-भूमिज्ञानकरणकथनम् तत्रैव। सिता पीता तथा रक्ता कृष्णवर्णसमन्विता। स्थिरोदका दृढ़ा स्निग्धा भूमिः सर्व-सुखावहा। शीतस्पर्शोष्णकाले च वह्निस्पर्शा हिमागमे। वर्षासु चोभयस्पर्शा सा शुभा परिकीर्त्तिता। तद्धृतहयशीर्ष-पञ्चरात्रेऽपि॥ सुरभीणां रतिर्यत्र सवत्सानां वृषैः सह। सुन्द-रीणां रतिर्यत्र पुरुषैः सह सत्तम!। काश्मीरचन्दनामोदा कर्पूरागुरुगन्धिनी। कमलोत्पलगन्धा च जातिचम्पकगन्धिनी। पाटला मल्लिकागन्धा नागकेशरगन्धिनी। दधिक्षीराज्यगन्धाढ्या मदिरासवगन्धिनी। सुगन्धिव्रीहिगन्धाढ्या शुभगन्धयुता च सा। सर्वेषामेव वर्णानां भूमिः साधारणी मता। इति शुभ-भूमिकथनम्। मदग्रजरामलोचनविद्याभूषणकृतवास्तुयागप्रदी-पिकाधृतहयशीर्षपञ्चरात्रे॥ ज्ञात्वा भूमीं परीक्षेत पूर्वोदक्-प्लवनां शुभाम्। असङ्कटां तथाच्छन्नां कृतैस्तोयपरिप्लुताम्। सम्पूर्य मार्गे खाते तु तथाधिकमृदं शुभाम्। कुसुमप्रकरस्तद्वद् यस्यां न ग्लानिमृच्छति। न निर्वाति तथा दीपः शीघ्रं पुष्पं न शीर्य्यते। श्वेतारुणा पीतकृष्णा विप्रादीनां विशिष्यते॥ प्रश-स्यते इत्यर्थः॥ त्याज्या भूमिः चारगन्धा पूतिगन्धा च या भवेत्। मधुरा च कषाया च अम्ला च कटुका च या। कुशैः शरैस्तथा काशैर्दूर्वाभिर्या च सम्भृता। सम्भृता अत्यन्तसङ्कीर्णा॥ तथाधि-कमृदमित्याद्युक्तविवरणमुक्तं प्रयोगसारे॥ वितस्तिमात्रविस्तारं निर्माय विवरं भुवि। निक्षिपेत्तां मृदं तस्मिन् त्रासु शिष्टासु शोभनम्। समासु मध्यमं विद्यान्नूनास्वधममुच्यते। परीक्ष्यैवं प्रयत्नेन त्यक्त्वा भूमीं कनीयसीम्। अङ्गारतुषकेशास्थिहीनं कृत्वाथ भूतलम्। अङ्गारेत्यादिनिषिद्धद्रव्यमात्रोपलक्षणम्। हीनं

कुर्वीत्यनेन शल्योद्धारक्रमः सूचितः। अकरणे दोषोऽपि। अतएव कुण्डकरणे दुष्टा॥ खन्यमाने यदा कुण्डे पाषाणो न प्राप्यते भुवि। तदापमृत्यवे चास्थिकेशाङ्गारैर्धनक्षयः। भस्माग्निभयं प्रोक्तं तुषैः प्रोक्ता दरिद्रता। इति दुष्टफलमुपदर्शितवान्॥ शुभफलमपि स एव। गोशृङ्गं पीतमण्डूकः शङ्खः शुक्तिश्च कच्छपः। शम्बूकश्च प्रशस्ताः स्युर्ये चान्ये रत्नजातयः॥

अथ शल्योद्धारधनोद्धारौ॥ स्वरोदयधृतब्रह्मजामले॥ अहिचक्रं प्रवक्ष्यामि यथा सर्वज्ञभाषितम्। द्रव्यं शल्यं तथा शून्यं येन जानन्ति साधकाः। निधिनिर्वर्त्तनेकस्थः सम्भ्रान्ती यत्र भूतले। तत्र चक्रमिदं स्थाप्यं स्थानद्वारमुपस्थितम्॥ ऊर्द्ध्वरेखाष्टकं लेख्यं तिर्य्यक् पञ्च तथैव च। अहिचक्रं भवेत्येवमष्टाविंशतिकोष्ठकम्। तत्र पौष्णाश्वियाम्यर्क्षं कृत्तिकामघभाग्यभम्। उत्तराफाल्गुनी लेख्यं पूर्वपंक्त्या भसप्तकम्॥ अहिर्बुध्नाजपादर्क्षं पतभं ब्रह्मसर्पभम्। पुष्यं हस्तं समालेख्यं द्वितीयां पंक्तिमास्थितम्। अभिजिद्विष्णुवस्वृर्क्षं सौम्यं रौद्रपुनर्वसू। चित्रभञ्च तृतीयायां पंक्तौ धिष्ण्यस्य सप्तकम्। विश्वर्क्षं तोयभं मूलं ज्येष्ठा मैत्रं विशाखभम्। स्वातीं पंक्त्यां चतुर्थ्यान्तु कृत्वा चक्रं विलोकयेत्। एवं सञ्जायते चक्रं संस्थाने पन्नगाकृति। द्वारदेशे मघायाम्यौ द्वारस्था कृत्तिका मता। अश्लीशपूर्वाषाढ़ादिचिकपञ्चचतुष्टयम्। पौष्णप्रोष्ठपदा चेन्द्रीभानि शेषाणि भास्वतः। १। २। ३। ६। ७। ८। ९ १०। २०। २१। २२। २७। २५ इति चन्द्रस्य। ४। ५। ११। १२। १३। १४। १५। १६। १७। १८। १९। २३। २४। २६। इति सूर्य्यस्य। उदयादिगता नाड्यो भघ्नाः षष्ट्याप्तशेषके। दिनेन्दुभुक्तयुक्तोऽसौ भवेत्तत्कालचन्द्रमाः। चन्द्रवत् साधयेत् सूर्य्यमृक्षस्य चेष्टकालिकम्। पश्चाद्विलोकयेत्तौ च स्वस्वर्क्षे वाम्यतः स्थितौ। चन्द्रर्क्षे दाय-

केन्द्रे तदास्ते नियतं निधिः। भानुरुच्चस्थिते तौ तु तदा शल्यं विनिर्दिशेत्। स्वलग्ने द्वितयं ज्ञेयं नास्ति किञ्चिद्विपर्य्यये। स्थितं न लभ्यते द्रव्यं चन्द्रे क्रूरग्रहान्विते। पुष्टे चन्द्रे भवेत्पुष्टः क्षीणचन्द्रेऽल्पको निधिः। ग्रहदृष्टिवशात् सोऽपि विज्ञेयो नवधा बुधैः। हेम ताम्रञ्च तारारं रत्नकांस्यायसं त्रपु। नागं चन्द्रे विजानीयाद् भास्करादिग्रहेच्चिते। मिश्रे मिश्रं भवेद् द्रव्यं शून्यं दृष्टिविवर्ज्जिते। सर्वग्रहेच्चिते चन्द्रे विज्ञेयोऽसौ महानिधिः। हेम तारञ्च ताम्रारं पाषाणं मृण्मयायसम्। सूर्य्यादिग्रहगे चन्द्रे द्रव्यभाण्डं प्रजायते। शुभक्षेत्रगते चन्द्रे द्रव्यलाभो न संशयः। पापक्षेत्रे न लाभः स्याज्ज्ञातव्यं ज्योतिषां बुधैः। भुक्तराश्यंशमानेन भूमानं कार्म्मिकैः करैः। नीचे विप्र परे नीचे जलस्थोऽसौ भवेन्निधिः। उच्चस्थे ऊर्द्ध्वगं द्रव्यं नवांशकक्रमेण च। परमोच्चे परे तुङ्गे भित्तिस्थमुच्चसंक्रमे। चन्द्रांशभुक्तमानेन द्रव्यसंख्या विधीयते। तस्माच्चेज्जायते वृद्धिः षड्-वर्गेषु बलक्रमात्। अधिष्ठितं भवेद्द्रव्यं यत्र चन्द्रो ग्रहान्वितः। तदधिष्ठायको ज्ञेयो भास्करादिग्रहैः क्रमात्। ग्रहा ह्युपग्रहाश्चैव क्षेत्रपालश्च मातृका। दीपिशो भीषणो रुद्रो यक्षो नागः क्रमान्मतः। ग्रहहोमश्च कर्त्तव्यो मुखे नारायणे बलिः। क्षेत्रपाले सुरा मांसं मातृकायां महाबलिः। दीपे प्रदीपजा पूजा भीषणे भीषणार्च्चनम्। रुद्रे रुद्रजपो जप्यो यक्षे यक्षादिशान्तिकम्। नागे नागगणाः पूज्या गणनाथेन संयुताः। लक्ष्मीं धरादितत्त्वानि सर्वकार्य्येषु पूजयेत्। एवं कृते विधानेन दुःसाध्यः साध्यते निधिः। निधिप्राप्त्या नरो लोके पूज्यते सर्वदा बुधैः॥ अस्यार्थः॥ सर्वज्ञभाषितं श्रीसदाशिवभाषितम्। अहिचक्रम् अहं प्रवक्ष्यामि प्रकर्षेण कथयिष्यामीत्यन्वयः। येन चक्रेण द्रव्यं शल्यं तदुभयं शून्यं द्रव्यशल्यहीनं स्थानं पण्डिता जानन्ति

भविष्यत्सामीप्ये वर्त्तमाननिर्देशात् ज्ञास्यन्तीति तात्पर्य्यम्॥ निधिरिति निवर्त्तनैकस्थो दीर्घप्रस्थस्ततः द्विशतहस्तमाने भूतले दशाधिकद्विशतहस्तपरिमिते वा यत्र सम्भ्रान्तो भ्रमविषयो निधिस्तत्र इदं चक्रं स्थाप्यम्। निवर्त्तनप्रमाणन्तु सिद्धान्तशिरोमणौ लीलावत्यभिधे पाटीगणिते तथा करणात् दशकेन विंशः निवर्त्तनं विंशतिवंशसर्गाख्यः क्षेत्रं चतुर्भिश्च भुजैर्निबद्धमिति। स्वरोदयटीकाकारस्तु॥ सप्तहस्तेन हस्तेन त्रिंशद्दण्डो निवर्त्तनमित्याह। तदुभयमतं प्रामाण्यम्। अस्य दीर्घतः प्रहस्ततश्च एकादशवार्षिकनवाङ्गुलैश्चतुर्दशहस्तैश्च परिमितद्वयमवधार्य्यम्। स्वरोदयटीकाकृन्मते दीर्घप्रहस्तादिकमेतदनुसारेण पण्डितैर्विविच्य कर्त्तव्यम्। चक्रं कोदृशं स्थानद्वारमुखस्थितं क्षेत्रादौ द्वाराज्ञाने एवं प्रजायते। चक्रं प्रस्तारं पन्नगाकृतिरित्युपसंहारवचनार्थतो भाद्रादित्रिषु मासेषु पूर्वादिचतुर्दिक्षु शिरः कृत्वा नागः शेते तेन तत्तन्मासि प्रश्ने सति तस्यां तस्यां दिशि अहिबलचक्रमुखं कृत्तिकानक्षत्रव्यवस्थितं कृत्वा व्यवहरणीयमित्युपदेशः। ऊर्द्धेति॥ ऊर्द्धं रेखाष्टकं ऊर्द्धा च क्रमेण रेखाष्टकं लेख्यम्। तथैव पञ्चरेखास्तिर्य्यक्क्रमेण लिखेत्। एवमष्टाविंशतिकोष्ठम्। तत्र कोष्ठेषु पौष्णो रेवती अश्विनी याम्यर्चं भरणी कृत्तिका मघा भाग्यभं पूर्वफल्गुनी उत्तरफल्गुनी चेति नक्षत्रसप्तकं प्रथमपंक्त्यां लेखनीयम्। अहिब्रध्नेति॥ अहिब्रध्नः उत्तरभाद्रपदः अजपादः पूर्वभाद्रपदः शतभिषा ब्राह्मं रोहिणी सर्पभमश्लेषा पुष्या हस्ताश्चेति नक्षत्रसप्तकं द्वितीयपंक्तिमास्थितं लेख्यम्। विधिरिति। विधिः अभिजित् विष्णुः श्रवणा सौम्यं मृगशिरः रौद्र आर्द्रा पुनर्वसु चित्रा चेति नक्षत्रसप्तकं तृतीयपंक्तौ। विश्वक्षमुत्तराषाढ़ा मूलं ज्येष्ठा अनुराधा विशाखा स्वाती चेति नक्षत्रसप्तकं चतुर्थपंक्तौ। एवं

कृत्वा अर्थादालोक्य चक्रं विलोकयेदिति । एवमनेन प्रकारेण कृत्तिकानिचत्रानुक्रमस्थित्या पन्नगाकृतिः सर्पाकृतिः । द्वारया-खेति मघाभरण्यौ । द्वारशाखे द्वारोभयपार्श्वस्थिते । कृत्तिका-द्वारस्थनागमुखम् । अश्वीशेति । अश्विनी ईश आर्द्रा पूर्वाषाढ़ा एतानि आदिभूतानि कृत्वानुक्रमेण त्रिपञ्चचतुष्टयं नक्षत्रं यथा अश्विनी भरणी कृत्तिका इति त्रीणि । आर्द्रा पुनर्वसु पुष्या अश्लेषा मघा चेति पञ्च । पूर्वाषाढ़ोत्तराषाढ़ा अभिजित् श्रवणेति चत्वारि नक्षत्राणि । अश्विनी भरणी कृत्तिकार्द्रा पुनर्वसु पुष्या अश्लेषा मघा पूर्वाषाढ़ा उत्तराषाढ़ा अभिजित् श्रवणा रेवती पूर्वभाद्रपदा एतानि नक्षत्राणि । इन्दोश्चन्द्रस्य । शेषाणि भानि रोहिणी मृगशिराः पूर्वफल्गुन्युत्तरफल्गुनी हस्ता चित्रा स्वाती विशाखा अनुराधा ज्येष्ठा मूला धनिष्ठा शत-भिषा उत्तरभाद्रपदसंज्ञकानि । भास्वतः सूर्य्यस्य ज्ञातव्यानि ॥ उदयादीति । उदयो नक्षत्रप्रवृत्तिसमयस्तदादिः । इष्टसमयेन च यावन्तो दण्डाश्चन्द्रेण भुक्तास्तदवधिगता नाड्यो भग्नाः सप्तविंशत्या पूरिताः षष्ठ्या हृताः कार्य्याः । गृहीतभागेनाप्तशेषके आप्ते लब्धे शेषे चासौ तत्कालचन्द्रमा भवति । स किम्भूतः दिने-न्दुभुक्तयुक्तः । दिने दिने इन्दुना चन्द्रेण भुक्तेन नक्षत्रेण युक्तः । सप्तविंशत्यधिके सप्तविंशतिमपास्य अधिकमश्विनीतो भुक्तनक्षत्र-संख्या भवति । एवं सूर्य्योऽपि स्वभुक्ताश्विन्यादिनक्षत्रयोगेन तात्कालिको भवति । एवमेव स्वरोदयटीकायां नरहरिणा व्याख्यातम् । सूर्य्यभुज्यमाननक्षत्रज्ञानन्तु मानसपञ्जिकागणन-नवमश्लोकेनोक्तम् । सङ्क्षेपतः प्रवक्ष्यामि तत्कालेन्दुं परिस्फुटम् । येन विज्ञानमात्रेण बुध्यते च शुभाशुभम् । अहोरात्रस्य मध्ये तौ विश्रान्तौ धिष्ण्यमण्डले । स चैव प्रश्नकाले च यात्राकाले विशे-षतः । दण्डेश्च पञ्चभीराशिरेवं स्याद्दादश क्रमात् । लग्नवद्भुक्त-

भागस्य त्यागाच्छेषः क्रमोत्क्रमः। प्रवासः सुस्थता मृत्युर्हास्यो जयो ज्वरो रतिः। शून्यता क्लासिता क्रीड़ा सुप्तिर्भुक्तिश्च मेषतः। एताश्च द्वादशावस्थाः शशाङ्कस्य दिने दिने। शुभाशुभेषु कार्य्येषु फलं नामानुरूपतः॥ नक्षत्रमेकं प्रतिपञ्चदण्डक्रमेण द्वादशचन्द्रास्तात्कालिका भवन्ति चेन्न। यस्य नक्षत्रस्य उदयादिगता नाड़ी ग्राह्या तस्यादौ पञ्च दण्डान् व्याप्य तस्य नक्षत्रस्य चन्द्रो भवति। तत्परपञ्चदण्डान् व्याप्य तत्परचन्द्रमा भवति। एवं क्रमेण द्वादश चन्द्रमसो भवन्ति। कस्यचिन्मते सूर्य्योदयावधिषष्टिदण्डात्मककाले द्वादश चन्द्रमसो भवन्ति। तन्मते "सूर्य्योदयावधिपञ्चदण्डे यन्नक्षत्रं तस्य चन्द्रमा भवति। तत्परपञ्चपञ्चदण्डे क्रमेण चन्द्रमा दिवारात्रौ द्वादशचन्द्रास्तात्कालिका भवन्ति। यात्रायामेवेति। उदयादिगता इत्यस्यार्थः। षष्ट्यामस्य शेषः षष्ट्यामशेषकं तस्मिन् षष्ट्यामशेषके। एतेन षष्ट्या दण्डषष्ट्या हृतशेषके चेति यावत्। तस्मिन् षष्ट्या हृतलब्धाङ्को दिनेन्दुभुक्तयुक्तस्तत्कालचन्द्रमा भवति। तत् षष्ट्या हृतभागशेषाङ्के उदयादिगतनाड़ीयुक्तेन यः संख्याङ्को भवति स तस्य चन्द्रमसो भोग्यदण्डो भवतीति भावः। शेषक इति स्वार्थे कः। अत्र यदि शेषो न लब्धस्तदा उदयादिगता नाड़ीमात्रसंख्याङ्कस्तस्य भोग्यदण्ड इति भावः। एतेन खण्डनक्षत्रस्यैवं भोगवशात्तात्कालिकचन्द्रस्य स्थाननिश्चयो बोद्धव्यः। षष्ट्यामशेषकैरिति पाठे तु षष्ट्यामेन षष्ट्या हृतलब्धाङ्केन दिनेन्दुभुक्तयुक्तश्चेत् तत्कालचन्द्रमा भवति। शेषकैः षष्ट्या हृतभागशेषाङ्कैरुदयादिगतानाड़ीसंख्याङ्कयुक्तेन यः संख्याङ्कः स तस्य चन्द्रमसो भोग्यदण्डो भवति॥ चन्द्रवदिति॥ ऋक्षस्थं नक्षत्रस्थं चेष्टनाड़ीकं प्रश्नसमय दृष्टदण्डस्थं कृत्वा एकद्वित्रिदिनक्रमेण प्रत्येकं दिनं दण्डानां सार्द्धचतुष्कं सङ्कलय्य ग्राह्यम्। एवं

क्रमेण नक्षत्रस्य प्रश्नकाले सूर्य्येण यावन्तो दण्डा भुक्तास्तानेव सप्तविंशतिसंख्यया सङ्गुण्य षष्ट्या हरणाल्लब्धं शेषञ्च भवति लब्धञ्च सूर्य्यभुक्तनक्षत्रसंख्यया संयोज्य सप्तविंशत्यधिके सति सप्तविंशतिमपास्यावशिष्टं भुक्तनक्षत्रं तत्संख्या अश्विनीतो भवति। षष्टिहरणशेषं भुज्यमाननक्षत्रम्। तत्र कोष्ठे तन्नक्षत्रस्थतात्कालिकः सूर्य्यो वेधनीयः पश्चात् स्वनक्षत्रचन्द्रनक्षत्रयोर्व्यवस्थितश्चिन्तनीयः। नक्षत्रे सूर्य्यभुक्तषष्टिदण्डपूर्णता तु चत्वारिंशद्दण्डन्यूनचतुर्दशदिनेन सकलनक्षत्रभोगः प्रत्यहं सप्तदशपलाधिकाश्चत्वारो दण्डा भवन्ति न्यूनभोग्येन किञ्चित् पले ह्रसति। तेन नक्षत्रभोगप्रवृत्तिसमयादारभ्य प्रश्नसमयपर्य्यन्तं यावन्तो दण्डास्तेषु प्रतिषष्टि चत्वारो दण्डाः सप्तत्रिंशत्पलानि षष्टिमानेन तदनुमानेन न्यूनता सूक्ष्मकालस्थसूर्य्यमण्डलादिग्रहनक्षत्रतात्कालिकीकरणे पैतामहश्लोकौ लिख्येते॥ ऋक्षप्रवेशा दिष्टान्तनाड्यः षष्ट्या भताड़िताः। ऋक्षप्रदेशादात्यागघटिकाभिर्विभाजिताः। लब्धं दण्डादि यत्र तु तद्गघ्नं षष्टिभिर्हृतम्। अश्वयादिसूर्य्यभुक्तेन युक्तस्तात्कालिको रविः। पश्चात्तात्कालिकीकरणानन्तरं सूर्य्याचन्द्रमसौ स्वस्वर्क्षव्यवस्थितौ स्वनक्षत्रे वापरनक्षत्रे स्थितौ विलोकयेत्। चन्द्र इति चन्द्रऋक्षे अश्वीशेत्यादिकथितनक्षत्रे यदि अर्केन्दू तात्कालिकौ स्तस्तदा निधिर्नियतं निश्चितमस्ति चेन्नानुनक्षत्रे सूर्य्यनक्षत्रे तौ सूर्य्याचन्द्रमसौ स्थितौ तदा शल्यं भवति। स्वस्वभ इति स्वस्वभे चन्द्रे रवौ च स्वस्वनक्षत्रे स्थितौ द्वितीयं निधिः। शल्यञ्च चन्द्रस्थाने निधिं सूर्य्यस्थाने शल्यं वदेत्॥ विपर्य्यये चन्द्रनक्षत्रे सूर्य्ये सूर्य्यनक्षत्रे चन्द्रे स्थिते सति न किञ्चित् निधिः शल्यञ्च नास्तीत्यर्थः। क्रूरान्विते तात्कालिकचन्द्रे स्थिते द्रव्यं न लभ्यते पारिशेष्यात् शुभग्रहयोगे लभ्यते इति॥ पुष्ट इति॥ चन्द्रपुष्टे शुक्लपक्षैकादशीपर्य्यन्तं पुष्टस्तत्र

पुष्टोऽतिशयितो निधिर्भवेत्। चीणचन्द्रे तु निधिरल्पक इति। चीणेन्दुश्च क्षष्णैकादशीतः शुक्लपञ्चमीं यावदिति॥ उभयपचषष्ठीदशमीपर्य्यन्तं न तु मध्यबलत्वम्। तेन मध्यत्वं द्रव्यस्य ग्राह्यम्। एवं व्यवस्थितौ किं द्रव्यमित्याकाङ्क्षायामाह॥ हेमेति॥ सूर्य्यादिना वीचिते तात्कालिके चन्द्रे हेमादिद्रव्यं विजानीयादित्यर्थः। तत्र सूर्य्यवीचिते हेम सुवर्णं स्थूलचन्द्रेचिते तारं रजतं कुजेचिते ताम्रं बुधेचिते आरं पित्तलं जीवेचिते रत्नं शुक्रेचिते कांस्यं शनैश्चरेचिते आयसं लौहविकारः राहुवीचिते वङ्ग इति केतुवीचिते नागं सीसकमिति प्रसिद्धं द्रव्यम्॥ मिश्रेति॥ मिश्रैर्नानाग्रहैर्दृष्टे मिश्रं नानाप्रकारं वदेत्। ये ये ग्रहाः पश्यन्ति तस्य तस्य द्रव्याणि भवन्तीति तात्पर्य्यम्। दृष्टिवर्जिते चन्द्रे शून्यं न किमपीत्यर्थः। सर्वग्रहेचिते चन्द्रे असौ महानिधिर्विज्ञेय इति। असौ निधिः ग्रहाणां सूर्य्यादिग्रहाणां दृष्टिवशान्नवधा नवप्रकारो बुधैर्ज्ञातव्य इति॥ द्रव्याधारमाह हेमेति॥ चन्द्रे सूर्य्यादिराशिस्थे द्रव्यभाण्डमाधारो भाजनं प्रजायते इत्यर्थः। यथा सूर्य्यगृहे सिंहे हेम। चन्द्रगृहे कर्कटे रजतम्। कुजगृहे मेषे वृश्चिके वा ताम्रम्। बुधगृहे कन्यायां मिथुने वा आरम्। गुरुगृहे धनुषि मीने वा पाषाणः। शुक्रगृहे वृषे तुलायां वा मृण्मयम्। शनिगृहे मकरे कुम्भे वा आयसं लौहम्। एवं राहुगृहं कन्या तत्र बुधदृष्टिविहीने वङ्गम्। केतुगृहे मीने जीवानलोकिते सीसकमित्यपि ज्ञेयम्॥ शुभचेत्र इति॥ शुभाश्चन्द्रबुधगुरुशुक्रास्तेषां चेत्रे राशौ चन्द्रे सति द्रव्यस्य लाभो न संशय एव। एवं पापचेत्रे पापग्रहराशिगे सति तदा न लाभः। इति स्वरविद्भिर्ज्ञातव्यमित्यर्थः॥ भुक्तेति। भुक्तराश्यंशमानेन तात्कालिकचन्द्रेण यावन्तो राश्यंशा भुक्तास्तन्मानेन तत्संख्यया कार्मिकैर्बद्धमुष्टिभिः करैर्हस्तैर्भूमानं खन-

द्रव्यगतभूमानं भुक्तांशकसंख्यकहस्तप्रमाणं कर्त्तव्यं खाते द्रव्यमस्तीति वक्तव्यम्। नीचे नीचराशिवृश्चिकस्थे चन्द्रे तदेव मानं द्विघ्नं द्विगुणितं परं नीचे वृश्चिकतृतीयांशस्थे च चन्द्रे असौ निधिर्जलस्थो वक्तव्यः॥ तावत् खातन्तु यावज्जलस्थं द्रव्यं लभ्यते॥ उच्चस्थे इति। वृषराशिद्वितीयांशस्थे चन्द्रे नवांशकक्रमेण यावन्तो नवांशा भुक्तास्तावन्तः पूर्ववदूर्द्ध्वगं परमोच्चे वृषतृतीयांशस्थे चन्द्रे अत्युच्चप्रदेशे द्रव्यमस्तीति। स्वोच्चसंक्रमे तात्कालिकनक्षत्रशेषपलगते भित्तिस्थं भवति॥ चन्द्रांशेति॥ चन्द्रांशभुक्तकालेन तात्कालिकचन्द्रेण राशेर्यावन्तोऽंशा भुक्तास्तन्मानेन द्रव्यसंख्या विधीयते। प्रत्येकं भुक्तांशे दशसंख्या च षड्वर्गेषु गृहे होराद्रेक्काणनवांशद्वादशांशत्रिंशांशेषु बलक्रमाद्दशगुणे वृद्धिः यदि स्वकीयषड्वर्गभागे तिष्ठति तदा अंशादुदितद्रव्यं दशगुणं स्यात्। अधिष्ठितमिति वर्णप्रश्ने चन्द्रो ग्रहान्वितो भवति तत्र द्रव्यमधिष्ठितं भास्करादिग्रहैः प्रत्येकं सहिते क्रमात्तदधिष्ठायको द्रव्याधिष्ठितो ज्ञेयः। यथा चन्द्रे सूर्य्यान्विते ग्रहस्थूलचन्द्रसहिते उपग्रहः कुजसहिते क्षेत्रपालः बुधसहिते मातृका गुरुसहिते दीपेशः शुक्रसहिते भीषणः शनिसहिते रुद्रः राहुसहिते यक्षः केतुसहिते नाग इति क्रमात्॥ ग्रह इति। ग्रहे अधिष्ठिते हेमग्रहस्यैव मुखे मुखग्रहः नारायणो नारायणसम्बन्धी बलिः पूजोपहारादिरिति॥ क्षेत्रपाले अधिष्ठिते तस्मै सुरा मद्यं मांसञ्च देयमिति। मातृकायामधिष्ठितायां महाबलिः। मानुषबलिस्तदभावे छागादयोऽपि अविरुद्धा बलित्वेनोपकल्प्याः। दीपेशे अधिष्ठिते दीपजा दीपप्रधाना पूजा। भीषणे भीषणार्च्चनं भयजनकार्च्चनम्। लोहितपुष्पादिकृते रुद्रेऽधिष्ठिते रुद्रजापो रुद्रमन्त्रस्य जपः जाप्यो रुद्राध्यायः। यक्षेऽधिष्ठिते यक्षादिशाकं यक्षादिपूजनम्। नागेऽधिष्ठिते नागगणाः

पूज्याः। गणनाथेन गणेशेन संयुताः प्रतिशान्तिके गणेशपूजा। लक्ष्मीधरादिभूत्यादिपञ्चविंशतिसंख्यकानि सर्वकार्य्येषु पूजयेत्॥ एवमिति। विमाने यथाविधि क्रमेण एवं कृते पूजाहोमादौ दुःसाध्यो निधिः साध्यते। एतन्निरूपकस्य दृष्टप्रयोजनमाह एवं प्रकारेण नरो मनुष्यो निधिप्राप्त्या वन्दनीयः नमस्करणीयः स्तुत्यो वा भवत्यत्र न संशय इति॥

अथवा महाकपिलपञ्चरात्रोक्तक्रमेण शल्योद्धारः कर्त्तव्यः। स क्रमो यथा। प्रासादारम्भकाले च गृहादौ च विशेषतः। शल्योद्धारस्तु कर्त्तव्यो यदीच्छेच्छुभमात्मनः। प्रासादारम्भकाले च यदङ्गं स्पृशति पुमान्। वास्तुदेहे दृढं तत्र शल्यं दद्याद्विचक्षणः। कण्डूयति शिरः पुंसि शिरःशल्यं समुद्धरेत्। शल्यं तत्रास्ति विज्ञेयं खन्यमाने करत्रये। अग्निदाहश्च रोगश्च धनहानिश्च जायते। यत्नेनोत्पाटयेच्छल्यं यदीच्छेच्छुभमात्मनः। बाहौ कण्डूयमाने तु निर्दिशेल्लौहशृङ्खलम्। हस्तद्वयेन मानं तल्लक्षणं कथितं तव। स्वामिनो मरणं विद्याद्विदेशगमनं तथा। यत्नेनोत्पाटयेच्छल्यं यदीच्छेच्छुभमात्मनः। ऊरौ कण्डूयमाने तु कांस्यशल्यं विनिर्दिशेत्। हस्तैकेन च सन्तिष्ठेल्लक्षणं कथितं तव। असती च भवेद्भार्य्या यशोहानिः प्रजायते। यत्नेनोत्पाटयेच्छल्यं यदीच्छेच्छुभमात्मनः। हस्ते कण्डूयमाने कङ्कालञ्च विनिर्दिशेत्। त्रिहस्तेन तु सन्तिष्ठेत् खन्यमाने न चान्यथा। अग्निदाहश्च रोगश्च पीड़ा च मरणं भवेत्। यत्नेनोत्पाटयेच्छल्यं यदीच्छेच्छुभमात्मनः। पृष्ठे कण्डूयमाने तु बाहुशल्यं विनिर्दिशेत्। हस्तेनैकेन सन्तिष्ठेन्नात्र कार्य्या विचारणा। स्वामिनाशो भवेत्तत्र भार्य्या वा जायतेऽसती। पदे कण्डूयमाने तु हस्तशल्यं विनिर्दिशेत्। सार्द्धहस्तेन सन्तिष्ठेल्लक्षणं गदितं तव। अङ्गनाशो राजदण्डः शस्यहानिश्च जायते। यत्नेनोत्पाटयेच्छल्यं

यदीच्छेत् सिद्धिमात्मनः। कुक्षौ कण्डूयमाने तु पाषाणं तत्र निर्दिशेत्। हस्तद्वितयमानेन लक्षणं गदितं तव। भुजङ्गदंश-स्तत्र स्यात् तस्माच्छल्यं समुद्धरेत्। जानौ कण्डूयमाने तु भस्म तत्र विनिर्दिशेत्। हस्तद्वयेन खन्तिष्ठेल्लक्षणं गदितं तव। अग्निदाहो मनस्तापं क्लेशदुःखभयानि च। करोत्येवंविधं कर्म्म तस्मात्तं वै समुद्धरेत्॥ ज्योतिषे॥ सुनिश्चितां मन्दिरभूमिमादौ निखाय तोयावधियत्नतस्ताम्। कुर्य्याद्विशल्यामथवा न मानं स्याद्दाथवा प्रश्नवशाद्विधिज्ञः। दूर्वाप्रबालाक्षतपुष्पपाणिः शुचिः शुचिं दैवविदं समेत्य। पृच्छेद्विनीतो मधुरस्वरेण शल्यस्य तत्त्वं भवने तदीशः। तत्प्रश्नस्यादिमो वर्णः सम्भाव्यो यत्नतोऽथ वा। क्रमात् पुष्पापरादेव फलानां ब्राह्मणादितः। क्रमादित्य-नेन ब्राह्मणः पुष्पनाम वदेत् क्षत्रियो नदीनाम वैश्यो देवनाम शूद्रः फलनाम इत्यायातम्। प्रणवो धरणी धारिणी करी न तदनन्तरम्। भूत्यै नमश्च इत्येष मन्त्रो वह्निप्रियान्तकः। वह्नि-प्रिया स्वाहा। मन्त्रेणानेन कठिनीमभिमन्त्र्य विभाजयेत्। नवधा सदनक्षेत्रं तया पश्चाद्विलेखयेत्। वकचतएहाः शप-या नव चेत् प्रश्नाक्षराणि जायन्ते प्रागादिकोष्ठनवके वर्णास्ते शल्यमाख्यान्ति। प्रश्ने वकारः पुरतो नरास्थि ब्रवीति शल्यं मरकप्रदायि॥ १॥ क्षौणीशदंष्ट्रोरगहेतुमृत्युप्रदं ककारः खर-शल्यमग्नौ॥ २॥ याम्यां चकारः प्लवगास्थिवेश्म प्रभोर्विना-शावहमाह शल्यम्॥ ३॥ रक्षोदिशि श्वास्थिगृहस्थितानां मह-द्भयं वक्ति सुनिश्चितं तः॥ ४॥ एः पाशिदिश्यस्थिशिशोर्ब्रवीति मृत्युप्रवासाहवमाह शल्यम्॥ ५॥ हो वायुकोणे नररूपमाह दारिद्र्यमिष्टक्षयकृद्विधत्ते॥ ६॥ धनपदिशि शकारः प्राह विप्रास्थिवित्तक्षयकृत्॥ ७॥ अथ पकारो वक्ति ऋक्षास्थि-शम्भौ॥ ८॥ तदिह कुलविनाशं गोधनानाञ्च हानिं वितरति

गृहनाथस्यापि गुप्तस्य देवैः। यो मध्यभागे भसितं कपालं कालायसञ्चाह कुलक्षयाय ॥ ८ ॥ यत्नादपास्यान्यधुना प्रमाणं सर्वत्र तथ्यं कथयामि शल्ये। इन्द्ररक्षोजलेशाने शल्यं सार्द्धकरे कटौ। वह्न्यन्तककुवेरेषु पुरुषे मध्यवातयोः॥ देवीपुराणे॥ पुरुषाधःस्थितं शल्यं न गृहे दोषदं भवेत्। प्रसादे दोषदं शल्यं भवेद् यावज्जलान्तिकम्॥ इति शल्योद्धारः॥

पूर्वादिज्ञाननिश्चयमेव मण्डपादि कुर्य्यादन्यथा दोष उक्तो राघवभट्टधृतवचनेन यथा॥ यदि कुर्य्याद् यथा दृष्टं विपन्नो निरयं व्रजेत्। भानोर्गत्या दिशो ज्ञात्वा कुर्य्यात् कर्म्माणि देशिकः। वास्तुवैषम्यतो यत्र सम्यङ् न ज्ञायते किल। तत्र शङ्कुं प्रतिष्ठाप्य जानीयात् शुद्धदिक्स्थितिम्॥ शङ्कुप्रमाणन्तु ज्योतिस्तत्त्वे। अर्काङ्गुलाथ सूक्ष्मग्रा काष्ठी द्व्यङ्गुलमूलिका। शङ्कुसंज्ञा भवेत्तस्यास्तच्छायां परिकल्पयेत्॥ राघवभट्टधृतम्॥ तद्गत्वा दिक्परिज्ञानं शृणु वक्ष्ये यथाविधि। सुसमे भूतले कृत्वा वृत्तं भ्रमणरूपतः। तन्मध्यविन्दौ शङ्कुन्तु स्थापयेद् द्वादशाङ्गुलम्। अग्रच्छायान्वयवशाद्वृत्ते। पूर्वापराह्णयोः कृत्वा चिह्ने तमभितस्तथा। सुसमानपरिभ्रान्त्या कार्य्यं वृत्तद्वयं पुनः। तयोः संश्लेषसञ्जातमध्यदक्षोत्तरे स्थिते। सन्धिद्वये तु प्राक् प्रत्यक् सूत्रं मध्ये च विन्यसेत्। सूत्रदक्षोत्तरं तेषामग्रैः प्रागादि कल्पयेत्॥ क्रियासारेऽपि॥ कृत्वा भूमिं समां तत्र वृत्तं हस्तमितं समम्। द्वादशाङ्गुलमानोच्चं शङ्कुं खादिरनिर्मितम्। अलाभे यज्ञकाष्ठस्य तत्र संस्थापयेत् सुधीः। तच्छाया संस्पृशेद्यत्र तन्मध्ये मध्यमं स्मृतम्। तिर्य्यक् प्रसारयेत् सूत्रं मध्ये याम्योत्तरे स्मृते। कोणाः स्युरन्ये चत्वारश्चतुःसूत्रप्रसारणात्। एवमाशापरिज्ञानं समाख्यातं यथा स्फुटम्।

ज्ञात्वैवं मण्डपादीनि कुर्य्यात् सम्यग् विचारतः॥ मत्स्यसूक्ते पिलपञ्चरात्रे तु विशेषः। विषुवेऽनुगते सूर्य्ये शङ्कुमानं समाचरेत्। खादिरं विन्यसेच्छङ्कुं द्वादशाङ्गुलविस्तृतम्। इति पूर्व्वादिदिग्ज्ञाननिर्णयः॥ शङ्कुनिखननप्रकारोऽपि तत्रैव। निश्चलीकृत्य हन्तव्यं गृहीत्वा लौहमुद्गरम्। अष्टधा च समाहन्यात् प्रशस्तं क्रमतो लघु। हन्यमाने यदा शङ्कौ हस्तात् पतति मुद्गरः। तदा ताड़यितुः शोको जायते दुस्तरो महान्॥ इति शङ्कुनिखननप्रकारः॥ शङ्कुसूत्रकरणमपि तत्रैव॥ सौत्रकौशेयकार्पासं प्राणिबालजमेव वा। चतुर्यवपरीणाहं सूत्रं शङ्कौ तु वेष्टयेत्। वेष्ट्यमानं यदा सूत्रं शङ्कुं मुञ्चति लक्षणम्। पुत्रस्य मरणं विद्यात् छिन्ने वैश्यविनाशनम्॥ तत्रापि नारसिंहेन होमेनाशुभनाशनमिति॥ तथा॥ शङ्कुं सारं भूमिः प्रोक्तं तस्याग्रं चित्रवृत्तकम्। तस्य वृत्तादिनादौ तु स्थापयेत् समभूतले। शङ्कुद्विगुणमानेन तन्मध्ये वर्त्तुलं लिखेत्। पूर्व्वापराह्णयोश्छाया यदा तन्मण्डलान्तगा। तद्विन्दुद्वयगं सूत्रं पूर्व्वपरा दिगिष्यते। विन्दुद्वयान्तरभ्रान्तशफद्वयपुच्छगम्। दक्षिणोत्तरगं सूत्रमेवं सूत्रद्वयं न्यसेत्। तदग्राण्यपरान्तानि सूत्राणि च विनिक्षिपेत्॥ सूत्राणि स्थापयेत् प्राज्ञः प्रागुत्तरमुखानि चेति॥ हयशीर्षपञ्चरात्रेऽपि॥ भूमिं तोयसमां कृत्वा दर्पणोदरसन्निभाम्। द्वादशाङ्गुलमानेन तत्र वृत्तञ्च भ्रामयेत्। मध्ये तु निश्चलं शङ्कुं स्थाप्य छायां निरीक्षयेत्। वृत्तरेखा या वाह्यस्था शङ्कुच्छाया प्रकल्पिता। प्रवेशनिर्गमे तस्यां शङ्कुच्छायां निरूपयेत्। शङ्कुच्छायाग्रचिह्नाभ्यां प्राक्प्रतीच्यौ प्रसाधयेत। रात्रौ तु प्राचीसाधनं यथा॥ कृत्तिका श्रवणा पुष्या चित्रास्वात्योर्यदन्तरम्। एतत् प्राच्या दिशो रूपं युगमात्रोदिते पुर इति॥ त्रिकाण्डमण्डनेऽपि॥ श्रवणस्योदये

प्राची कृत्तिकायास्तथोदये। चित्रास्वात्यन्तरे चन्द्रसूर्य्ययोः।
इति शङ्कुप्रकरणम्॥

अथ मण्डपकरणम्। विश्वसारे द्वितीयपटले॥ दीक्षार्थं मण्डपं कुर्य्यात् सुन्दरं सुमनोहरम्। नानावर्णैश्चित्रवर्णैश्चित्रितं सुमनोहरम्। भित्तिस्तम्भादिसर्व्वेषु स्वर्णरत्नविभूषितम्। नानावर्णैश्चित्रवर्णैश्चित्रितं मणिमण्डपम्। वितानपत्रमाल्यैरलङ्कुर्य्याद्विधानतः। पताकाभिर्ध्वजं कुर्य्याच्चतुर्दिक्षु मनोहरम्। अष्टौ कुम्भानष्टदिक्षु मण्डपं रचयेत् सुधीः॥ अत्रेतिकर्त्तव्यता उक्ता शारदातिलके द्वितीयपटले॥ पुण्याहं वाचयित्वा तु मण्डपं रचयेच्छुभम्॥ पुण्याहमिति यजमानस्य। पुण्याहं भवन्तोऽधिब्रुवन्तु एवं स्वस्ति भवन्त इति ऋद्धिं भवन्त इति त्रिभिः पुण्याहवाचनम्॥ तदुक्तं राघवभट्टधृतबौधायनेन॥ पुण्याहं स्वस्ति ऋद्धिमित्योङ्कारपूर्वं त्रिस्त्रिरेकैकामाशिषं वाचयित्वेति। आशिषं वाचयित्वेति निर्द्देशात् सुतरां यजमाननामोल्लेख आयाति। तेन नामोल्लेखमकृत्वा केवलं पुण्याहमित्यादिवचनमनुभवविरुद्धमिति। शारदायाम्॥ पञ्चभिः सप्तभिर्हस्तैर्नवभिर्वा मितान्तरम्। षोड़शस्तम्भसंयुक्तं चत्वारस्तेषु मध्यगाः। अष्टहस्तसमुच्छ्राया: संस्थाप्य द्वादशाभितः। पञ्चहस्तप्रमाणास्ते निश्छिद्रा ऋजवः शुभाः॥ मध्यस्तम्भस्याष्टहस्तपरिमाणमितरेषां द्वादशानां पञ्चहस्तपरिमाणमिति॥ तत्पञ्चमांशं निखनेन्मेदिन्यां मन्त्रवित्तमः॥ नारिकेलदलैर्वंशैश्छादयेत्तत्समन्ततः॥ वंशैर्वंशदलैरुभयत्र बहुवचननिर्द्देशेनेत्यादिबहुवचनान्ता गणस्य संसूचका भवन्तीति न्यायाच्छादनोपयुक्तमन्यदपि लभ्यते। द्वारेषु तोरणानि स्युः क्रमात् क्षीरिमहीरुहाम्। स्तम्भोच्छ्रायः स्मृतस्तेषां सप्तहस्तैः पृथक् पृथक्। दशाङ्गुलप्रमाणेन तत्परीणाह ईरितः। तिर्य्यक् फलकमानं स्यात्

स्तम्भानामूर्द्ध्वमानतः। मूलानि कल्पयेन्मध्ये तोरणे हस्तमानतः। दिक्षु ध्वजानि बध्नीयात् लोकपालसमप्रभान्। वितानदर्भमानाद्यैरलङ्कुर्वीत मण्डपम्॥ चौरिमहीरुहामिति अश्वत्थोडुम्बरप्लक्षवटानाम्॥ तदुक्तं राघवभट्टधृतेन॥ न्यग्रोधतोरणं पूर्वे याम्ये तूडुम्बरं मतम्। पश्चिमेऽश्वत्थसम्भूतमुत्तरे प्लक्षतोरणम्॥ पूर्वे वा प्लक्षसम्भूतं न्यग्रोधश्चोत्तरे मतमिति॥ तोरणकरणकारणन्तु महाकपिलपञ्चरात्रे। देवास्तोरणरूपेण संस्थिता यज्ञमण्डपे। विघ्नविध्वंसनार्थञ्च रक्षार्थं त्वध्वरस्य च॥ अध्वरस्य यज्ञस्य। इति मण्डपादिकरणम्॥

अथाङ्कुरार्पणम्। प्रपञ्चसारे पञ्चमपटले॥ सप्ताहतो वा नवमाहतो वा प्रागेव दीक्षादिवशाद्यथावत्। सपालिकापञ्चमुखीशरावचतुष्टये वीजनिवापयुक्तम्। अन्यस्मिन् भवने च भूतलतले शुद्धे स्थले मण्डलं कुर्य्यात् प्राग्वरुणायतं पदचतुष्कोणे तु भानूदयम्। पीतारक्तसितासितं प्रतिपदं वक्रादिसम्रान्तिकम् याम्योदीच्यसमायतं प्रणिगदन्त्यन्येऽपि तन्मन्त्रिणः। वैणव्यस्त्वथ पालिका अपि चतुर्विंशाङ्गुलिव्यापका वैरिञ्चो घटिकास्तु पञ्चवदनाद्यष्टाङ्गुलोच्छ्रायकाः। शैवाः स्युर्द्विषडङ्गुला अपि शरावास्ता जलक्षालिताः सूत्रैश्च प्रकलय्य पंक्तिषु च ताः प्रोक्तक्रमाद्विन्यसेत्॥ पृथगपि शालीतण्डुलपूर्णासु सदर्भबद्धकूर्चासु। मृद्वालुकाकरीषैः क्रमेण पूर्णानि पात्राणि॥ शालीकङ्गुश्यामाकतिलसर्षपमुद्गमाषनिष्पावाः। खल्वाढ़कीसमेता वीजानि विदुः प्ररोहयोग्यानि॥ प्रक्षाल्य तानि निवपेदभिमन्त्र्य मूलवीजेन साधकवरस्त्वपि पात्रकेषु। विप्राशिषा च विधिवत् प्रतिपाद्यमानशङ्खादिमुख्यतमपञ्चकनिस्वनैश्च॥ हारिद्राद्भिः सम्यगभ्युक्ष्य वस्त्रैराच्छाद्याद्भिः सिञ्चतां पञ्चघोषैः। सायं प्रातः शर्वरीषु प्रदद्यादुच्चैर्द्रव्यैस्तद्वलिं साधकेन्द्रः॥ भूतपिशाचनागगणाधिपा

दैवताश्च विष्णून्ताः। ताभ्यः क्रमेण रात्रिषु सप्त सुरान् वसु वा तद्बलिर्देयः॥ लाजतैलरजनीदधिसक्तन्नानि भूतक्रूराख्यम्। पैत्रं तिलतण्डुलकं सान्नपूपं करम्भलाजकं याच्नम्॥ नारिकेलोदकसक्तुपिष्टं नागं पञ्चाच्चतञ्च वैरिञ्चम्। अन्नापूपं शैवं दुग्धान्नञ्च वैष्णवीयम्॥ यदि नवरात्रं क्रमेण बलिरुक्तः। तारादिकैर्नमोऽन्तैः स्वैः स्वैरपि नामभिर्बलिमन्त्रः। पात्राणि त्रिविधान्यपि परितः पुनरष्टदिक्षु बलिकृद्भिः। वीजारोपणकर्म्म प्रथितमिदं सार्वकामिकं भवति। सार्वकामिकमित्युपादानाद्वच्यमाणदीक्षायामित्यादिवचनाच्चास्यावश्यकत्वम्। एतेषामर्थस्तु विश्वसारशारदावच्यमाणप्रमाणैः स्पष्टीभविष्यत्यतोऽत्र व्याख्या न कृता। विश्वसारतन्त्रे तृतीयपटले च। जाताङ्कुराः प्रकुर्वीत चतुर्दिक्षु च पालिकाः। पालिकाः पञ्च मुख्यश्च शरावाश्च ततः क्रमात्। षोड़शद्वादशाष्टाभिरङ्गुलीभिः क्रमादिमाः। सुगन्धितोयपूर्णेन जाताङ्कुरसुदाहृतम्। सुधावीजेन वीजानि निक्षिपेत्तत्र सर्वतः। आचार्य्यो विधिना कुर्य्यात् सर्वशास्त्रार्थपारगः। श्यामाकमाषकङ्गूश्च व्रीहयः सर्वतः स्मृताः। दीक्षायाः सप्तमे पूर्वं दिवसे संयतः सदा। सप्तरात्रेषु कुर्वीत पूजनं सर्वदेवताः। नानोपहारबलिभिः पूजयेत् परमेश्वरि!। प्रणवाद्या नमोऽन्ताश्च पूजयेत् सर्वतः सुधीः। भूतानि पितरो यक्षा नागा ब्रह्मा शिवो हरिः। क्रमेण पूजयेत् सर्वान् सप्तरात्रिषु देशिकः। सप्तानामपि रात्रीणां देवताः सर्वसम्मताः। उपहारैः पूजयेत्तान् तानि वक्ष्यामि पार्वति!। लाजैश्च पूजयेद्भूतान् गन्धपुष्पादिचन्दनैः॥ भूताधिपं भूतगणं भूतेशञ्च क्रमेण तान्। तैलहरिद्रादधिसक्तुभिः पूजोपहारकैः। तण्डुलान् तिलसम्मिश्रान् सान्नपूपैः प्रपूजयेत्। पितॄणां पूजयेन्नित्यं कथितं पद्मयोनिना। करम्भलाजौ यक्षेभ्यो नारिकेलोदकान्वितम्। सक्तुं पिष्टञ्च नागेभ्यः

पूजयेद्विधिनामुना। पङ्कजातपतण्डुलदूर्वाशालिभिरुत्तमा। पूजयेत् कथिता देवि! ब्रह्मणः सर्वसम्मता। सापूपमन्नं सर्वाय सर्वतन्त्रस्य सम्मतम्। गुड़ोदकं गुड़ान्नञ्च नानारससमन्वितम्। दधि दुग्धं पायसान्नं दद्यात् प्रियतमं महत्। विष्णवे च निवेद्याथ सर्वसिद्धिं लभेन्नरः॥ अत्र बलिद्रव्याधिक्यदर्शनात् प्रागुक्तप्रपञ्चसारोदितबलिद्रव्यमुपलक्षणमात्रं शक्ताशक्तपरं वा। शारदातिलके तृतीयपटलेऽपि॥ प्रागेव दीक्षादिवसात् सप्तभिर्विधिवद्दिनैः। सर्वमङ्गलसम्पत्त्यै विदध्यादङ्कुरार्पणम्। मण्डलस्योत्तरे भागे शालां पूर्वापरायताम्। गूढ़ां कुर्य्यात्ततस्तस्यां मण्डलं रचयेत् सुधीः। पञ्चहस्तप्रमाणानि पञ्चसूत्राणि पातयेत्। पूर्वापरायतान्येषामन्तरं द्वादशाङ्गुलम्। दक्षिणोत्तरसूत्राणि तद्वदेकादशार्पयेत्। पदानि तत्र जायन्ते चत्वारिंशत् प्रमार्ज्जयेत्। पंक्त्या वीथीस्ततस्तोऽन्तश्चतुष्कोभयपार्श्वयोः। वीथ्यौ द्वे च चतुष्कोष्ठमेकमत्रावशिष्यते। पदानि रञ्जयेत्तानि श्वेतपीतारुणासितैः। रजोभिः श्यामलेनाथ वीथीरापूरयेत् सुधीः। पात्राणि त्रिविधान्याहुरङ्कुरार्पणकर्म्मणि। पालिकाः पञ्चमुख्यश्च शरावाश्च ततः क्रमात्। प्रोक्ताः स्युः सर्वतन्त्रेषु हरिब्रह्मशिवात्मकाः। एषामुत्सेधतोऽन्वयैः षोड़शद्वादशाष्टभिः। अङ्गुलैः क्रमशस्तानि शुभान्यावेष्ट्य तन्तुना। प्रक्षाल्य देशिकस्तेषु पादेष्वाहितशालिषु। सगन्धदर्भकूर्च्चेषु पश्चिमादि निवेशयेत्। करीषवालुकामृद्भिस्तानि पात्राणि पूरयेत्। सुधावीजेन वीजानि दुग्धैः प्रक्षाल्य तत्त्ववित्। मूलमन्त्रविजप्तानि पञ्चघोषपुरःसरम्। आशीर्वाग्भिर्द्विजातीनां मङ्गलाचारपूर्वकम्। निर्वपेत्तेषु पात्रेषु देशिको यतमानसः। शालिश्यामाढ़कीमुद्गतिलनिष्पावसर्षपाः। कुलत्थकङ्गुमाषाश्च वीजान्यङ्कुरकर्म्मणि। हरिद्राद्रिः समभ्युक्ष्य वस्त्रैराच्छाद्य देशिकः। बलिं विविधपात्राणां

दिक्षु पूर्वादितः क्षिपेत्। प्रणवाद्यैर्नमोऽन्तैश्च राशौ राशीश-नामभिः। भूतानि पितरो यक्षा नागा ब्रह्मा शिवो हरिः। सप्ता-नामपि राशीणां देवताः समुदीरिताः। भूतेभ्यः स्थूलंलाजतिल-हरिद्रादधिशक्तवः। शास्ताः पितृभ्यः सतिलास्तण्डुलाः परि-कीर्त्तिताः। करम्भलाजौ यक्षेभ्यो नारिकेलोदकान्वितम्। शक्तुं पिष्टञ्च नागेभ्यो ब्रह्मणे पङ्कजाक्षतम्। सपूपमन्नं सर्वाय विष्णवे स्यादगुडौदनम्। ततो लोकेश्वरेभ्योऽपि विधिवद्वितरेद्बलिम्। दीक्षायामभिषेकेषु नववेश्मप्रवेशने। उत्सवेषु च सम्पत्त्यै विदध्या-दङ्कुरार्पणम्॥ एतेषामर्थः॥ दीक्षादिवशात् पाकसप्तभिर्दिनै-रित्यनेन दीक्षादिनमष्टमं यथा भवति तथा कर्त्तव्यमित्युक्तम्। विधिवदित्यनेन नवभिः पञ्चभिस्त्रिभिर्वा इत्यायातम्॥ तदुक्तं सिद्धान्तशेखरे॥ प्रतिष्ठायाञ्च दीक्षायां स्थापने चोत्सवे तथा। सम्प्रोक्षणे च शान्त्यर्थं विवाहे मौञ्जिबन्धने। सर्वमङ्गलकार्य्येषु कारयेदङ्कुरार्पणम्॥ महाकपिलपञ्चरात्रेऽपि॥ पुण्याहघोषणं कृत्वा ब्राह्मणैः सह देशिकः। मङ्गलाङ्कुरयत्नञ्च कुर्य्यात्तत्रैव वाहनि॥ प्रशस्तयागदिवसात् पुरस्तात् सप्तमेऽहनि शुभे नवमे वा। पञ्चमेऽथ सुदिने सुमुहूर्त्ते मङ्गलाङ्कुरविधिं विदधीत॥ गुरुर्विशुद्धः प्रागेव शुद्धाहात् सप्तमेऽहनि। सङ्कल्पश्रोपोष्य कर्त्तव्यमङ्कुरारोपणं शुभम्। कुर्य्यान्नान्दीमुखश्राद्धं पूर्व्वेद्युः स्वस्तिवाचनम्। स्वगृह्योक्तप्रकारेण तदेतद्विदधीत वै। संहि-तायामपि॥ सर्व्वत्राभ्युदयश्राद्धमङ्कुरोत्पादनं तथा। आदावेव प्रकुर्वीत कर्म्मणोऽभ्युदयात्मनः॥ शालामिति विंशत्या तु करै-र्मानं दशायामेन विस्तृतेति शालाया उत्तममानम्। अत्रैतावत्याः प्रयोजनाभावादर्द्धेन मध्यममानेन शाला कार्य्या। तेन दशहस्त-दीर्घा पञ्चहस्तायामा अत्र शाला कर्त्तव्या तामेव पूर्वापरायाम-तामिति। दीर्घप्रहस्तचतुरस्ररूपां गूढां कपाटादिपरिष्कृतां

दक्षिणैकद्वारवतीं निवाताञ्च कुर्य्यात्। तदुक्तं प्रयोगसारे॥ सर्वादुदक्स्थितां कृत्वा निवातां तां कुटीं दृढ़ामिति। तत्र मण्डलकरणप्रकारमाह। पञ्चहस्तेति पूर्वपश्चिमक्रमेण पञ्च सूत्राणि पातयित्वा द्वादशाङ्गुलान्यैकैकान्तरितान्येकादशसूत्राणि दक्षिणोत्तरक्रमेण पातयेत् तेन चत्वारिंशत्कोष्ठा भवन्ति। मार्जयेदिति पश्चादन्वेति॥ पंक्त्यावाद्य चतस्रो वीथीर्मार्ज्जयेत् मार्ज्जनप्रकारस्तु॥ प्रथमं पूर्वस्यां चतुष्कोष्ठात्मिकामेकां वीथीम् ततो दक्षिणस्यामष्टकोष्ठात्मिकामपराम् पश्चिमायां चतुष्कोष्ठात्मिकामन्याम् उत्तरस्यामष्टकोष्ठात्मिकामितराञ्च मार्जयेत्। ततः अन्तश्चतुष्कस्य उभयपार्श्वयोर्द्वे वीथ्यौ द्विद्विकोष्ठरूपे पुनर्मार्जयेत्। तेनात्र मण्डले चतुष्कोष्ठत्रयमवशिष्यते। तानि शिष्टानि चतुष्कोष्ठत्रयस्थानि द्वादशपदानि प्रत्येकं चतुष्कोष्ठं श्वेतादिभीरजोभीरञ्जयेत्। तत्र वायुपदे श्वेतं आग्नेये पीतं नैर्ऋते अरुणं ईशाने कृष्णम्। ततः श्यामलेन वीथीरापूरयेत्। पत्राणीति स्थूलान्युच्चानि शरावाण्येव पालिकाशब्देनोच्यन्ते। पालिका एव नीचाः पञ्चमुखस्थिताः पञ्चमुख्य उच्यन्ते शरावाः प्रसिद्ध एव। पालिका हरिरूपाः पञ्चमुख्यो ब्रह्मरूपाः शरावाः शिवरूपाः। एतेन हरिब्रह्मेशा एषु पात्रेषु पूज्या इत्युक्तं भवति। तदुक्तं सारस्वततन्त्रे॥ प्रोक्तेषु तेषु पात्रेषु ब्रह्मविष्णुशिवान् यजेत्॥ सिद्धान्तशेखरेऽपि॥ सम्पूजयेत् शरावेषु रुद्रं चन्दनपुष्पकैः। पालिकासु तथा विष्णुं ब्रह्माणं घटिकासु चेति। उत्सेधत औन्नत्येन॥ महाकपिलपञ्चरात्रे॥ पालिका वक्त्रविस्तारा षोड़शाङ्गुल उच्यते। भवेत्कण्ठविलञ्चास्या गुदेऽष्टाङ्गुलविस्तृतम्। पादपीठस्य विस्तारः षड़ङ्गुल उदाहृतः। चतुरङ्गुल उत्सेधस्तत्सन्धिश्चाङ्गुलद्वयम्। तत्सन्धेश्च भवेन्नाहः पादपीठार्द्धमेव च। भवेत् पञ्चमुखी चैवं घटिका सर्वकामदा।

चतुरङ्गुलविस्ताराण्याहुर्वक्त्राणि पञ्च वै। चत्वारि च चतुर्दिक्षु ऊर्द्ध्वमेकं यथाविधि। घटिकायामविस्तारो द्वादशाङ्गुल उच्यते। आचार्य्याः कथयन्त्येके षोड़शाङ्गुलमेव वा। द्वादशाङ्गुलविस्तारं शरावस्य मुखं स्मृतम्। चतुरङ्गुलविस्तारमधस्तान्मूलमुच्यते। राघवभट्टधृतम्। तालमात्रमपि पञ्चमुखी स्याद्व्यासतोच्छ्रयमिता घटिका स्यात्। दिक्षु तन्मुखचतुष्टयमेकं मध्यमन्तु समवर्त्तित-भागम्। अत्रविस्तृतमुखे तु शरावं व्यासतोच्छ्रयगतार्द्धमिताङ्घ्रिः। दण्डमस्य चतुरङ्गुलनाहं कण्ठमध्यविलवर्ज्जमदग्रम्। सम्भवे कनकरूप्यताम्रतो मार्त्तिकाण्यभिनवान्यथवा स्युः॥ सिद्धान्त-शेखरे तु॥ यथासम्भवमानन्तु पालिकादि समाचरेदित्युक्तम्। शुभानीति कृष्णवर्णव्रणादिरहितानीति राघवभट्टः। तन्तुनेति त्रिगुणेन पूर्वं प्रक्षालनं पश्चात्त्रिगुणतन्तुना वेष्टनम्। दर्भकूर्च्चमग्रे वक्ष्यमाणम्। पश्चिमादीति पश्चिमचतुष्के पालिकाचतुष्टयम् मध्यमचतुष्के पञ्चमुखीचतुष्टयम् पूर्वचतुष्के शरावचतुष्टयं निवेशयेत्। तन्मध्ये आग्नेयादिस्थापनम्। देशिक इत्यनेनो-क्तम्॥ तदुक्तं प्रयोगसारे॥ एवं कृत्वा साधकस्तु तत्र पात्राणि विन्यसेत्। वह्न्यादीशानपर्य्यन्तं चतुष्केषु पृथक् पृथक्। करी-षेत्यादि॥ करीषं शुष्कगोमयचूर्णम्॥ एतैरुत्तरोत्तरं सर्वा-ण्यपि पात्राणि पूरयेत्। तदुक्तं हयशीर्षपञ्चरात्रे॥ पूरयेदु-त्तरोत्तर इति। प्रयोगसारेऽपि। मृद्वालुकाकरीषैश्चोर्द्ध्वतः पात्राणि पूरयेदिति॥ अत्र विशेषः सिद्धान्तशेखरे॥ गन्धादि-भिश्च कुद्दालं पूजयित्वा दिनान्तरे। गीतनृत्यसमायुक्तं गज-वाजिसमन्वितम्। गुर्वादयो रथारूढ़ा गजारूढ़ास्तथा परे। गत्वा तीरं तड़ागस्य नद्याः पुष्पवनस्य वा। तत्र शुद्धं भुवो भागं दर्भैः सम्मार्ज्य वास्ततः। अभ्युक्ष्य चार्घ्यतोयेन तत्तन्मन्त्रमनुस्म-रन्। हृदा भूमिं समावाह्य गन्धपुष्पैः समर्च्चयेत्। कुद्दाली-

मन्त्रमन्त्रेण खात्वा भूमिमथो मृदम् । गृहीत्वा वामदेशेन पूरयेत् कांस्यपात्रके । हृदा मृदन्तु सम्मृज्य वस्त्रेणाच्छाद्य धारयेत् । पुरं वा निलयं वापि सर्वमङ्गलनिस्वनैः । गुरुः प्रदक्षिणं कृत्वा मण्डपं वानयेत्ततः । तत्तत्कर्म्म दिवाकाले कुर्य्याद्रात्रौ न बुद्धिमान् । तेषु वीजारोपणमाह सुधेति ॥ सुधावीजेन वमितिमन्त्रेण । दुग्धैः प्रक्षाल्येति । महाकपिलपञ्चरात्रे तु विशेषः ॥ द्वादशाक्षरमन्त्रेण क्षालयित्वा तु वारिणेति ॥ सारस्वतमतेऽपि ॥ वीजानि तानि प्रक्षाल्य जलक्षीरेण च क्रमादिति । एतत्सर्वं तन्त्रविदित्यनेन सूचितम् । मूलेति मूलमन्त्रेण अभिजप्तानि अष्टोत्तरशतमित्यर्थः । तदुक्तं महाकपिलपञ्चरात्रे ॥ संख्यानुक्तौ शतं साष्टं सहस्रं वा जपादिष्विति ॥ पञ्चघोषस्तु ॥ पटहकांस्यमृदङ्गमुखवाद्यशङ्खाः । मङ्गलाचारेति । चतुरङ्गैः सुप्रसिद्धहुलहुलध्वन्यादिभिः । ततस्तानि वीजान्येकीकृत्य रात्रौ प्राङ्मुख उदङ्मुखो वा मूलमन्त्रेण पालिकादिषु निर्वपेदित्युक्तम् । तदुक्तं सिद्धान्तशेखरे । वीजमुख्येन मूलेन प्राङ्मुखो वाप्युदङ्मुखः । वापयेत् सर्ववीजानि पालिकादिष्वनुक्रमात् । वीजानामधिपः सोमस्तस्माद्रात्रौ तु निर्वपेत् ॥ सारस्वतमतेऽपि ॥ वीजेभ्यो दैवतेभ्यश्च स रात्रौ कान्तिमान् यतः । तस्माद् गुरुस्तु वीजानि निशायामेव वापयेदिति ॥ वीजान्याह शालीति । शालयो हैमन्तिकाः श्यामाः श्यामाकाः । कान्यकुब्जभाषायां साम्बा इति । गौड़भाषायां शामा इति प्रसिद्धिः । आढ़की तुवरी अरहर इति गौड़भाषाप्रसिद्धिः । निष्पावा वोरा इति गौड़भाषाप्रसिद्धिः । सारस्वतमते प्रत्येकं वीजेषु देवतापूजोक्ता यथा । स्कन्दं प्रियङ्गौ निष्पावे वायुमग्निं कुलत्थके । आढ़क्यां निरृतिं सोमं मुग्धे ! वैवस्वतं तिले । प्रजापतिं शालिवीजे त्वनन्तं सर्षपेऽर्च्चयेत । इमं श्यामे च माषे च

वरणन्तु नगात्मजे! इति। सिद्धान्तशेखरे तु प्रत्यहं सोमपूजाप्युक्ता यथा। सोमं सम्पूजयेन्नित्यमधिवासदिनावधि। अधिवासदिने प्राप्ते सोममुद्वासयेद्गुरुरिति। हरिरिन्द्रेति तत्तन्मन्त्रे उक्ताः। प्रयोगसारे। त्रिपञ्चकाय सर्व्वाय शङ्कराय शिवाय च। सर्व्वलोक-प्रधानाय शाश्वताय नमो नमः। विकीर्य्यानेन मन्त्रेण हरिद्रा-चूर्णमिश्रितम्। तोयं प्रवर्षयेत्तेषु सिञ्चेत् तोयैर्दिनं प्रति। प्रति-दिनमित्यर्थः। वस्त्रैर्नूतनवस्त्रैः। बहुवचनं कपिञ्जलाधिकरण-न्यायेन त्रित्वे पर्य्यवस्यति। आच्छाद्येति पात्रचतुष्टयमेकैकेन रात्रौ बलिं क्षिपेदित्यन्वयः। प्रातः पुनः स्थलमार्जनादि कृत्वा द्वितीयरात्रादौ बलिदानं प्रशस्तवाद्यैरिति तत्र मन्त्रः। ॐभूतेभ्यो नम एवमन्यत्रापि मन्त्रः। महाकपिलपञ्चरात्रे तु विशेषः। ततो गन्धविमिश्रेण सिञ्चेद्वै शुद्धवारिणा। त्रिरात्रन्तु यथान्यायं पञ्चरात्रमथापि वा। सारस्वतमते तु। प्ररूढान्यङ्कुराण्यन्यो न वीक्षेत कदाचन। आचार्य्य एव प्रविशेत् शिष्यो वापि तदा ज्ञयेति॥ सिद्धान्तशेखरेऽपि॥ वस्त्रैराच्छाद्य यत्नेन सुगुप्तानि च कारयेत्। समस्तु रात्रिषु पृथग्बलिद्रव्याण्याह भूतेभ्य इति। करम्भो दधिशक्तवः। अक्षता अखण्डतण्डुला इति राघवभट्टः। श्राद्धतत्त्वधृतवचने अक्षता यवा इति। यदा नवसु रात्रिषु बलिदानं तदा रात्रिद्वये बलिदानम्। द्रव्यं देवता च पुरैवोक्तम्। तत्तद्दिशि पायसादिना बलिर्विधेयः। तत्रेशानपूर्व्वयोर्मध्ये ब्रह्मणे नैर्ऋतपश्चिमयोर्मध्येऽनन्ताय बलिर्देयः॥ अथाङ्कुरप-रीक्षा॥ सिद्धान्तशेखरे। यजमानाभिवृद्ध्यर्थमङ्कुराणि परीक्षयेत्। सम्यगङ्कुरप्ररूढानि कोमलानि सितानि च। धूम्रवर्णान्यपूर्व्वाणि तथा तिर्य्यग्गतानि च। श्यामलानि च कुब्जानि वर्जयेदशुभानि तु। अवृष्टिं कुरुते कृष्णं धूम्राभं कलहं तथा। अपूर्वं जननाशञ्च कुभिक्षं श्यामलाङ्कुरम्। तिर्य्यग्गते भवेद्व्याधिः कुब्जे शत्रुभयं तथा।

सारस्वतमतेऽपि॥ प्ररूढ़ैरङ्कुरैः कर्त्तुर्निर्दिशेच्च शुभाशुभम्। श्यामैः कृष्णैरङ्कुरैरर्थहानिस्तिर्य्यगूढ़ैर्व्याधिरान्दोलितैस्तैः। कुजैर्दुःखं दुष्प्ररूढ़ैर्मृतिश्च रोगं भुङ्क्ते स्थानदेशेष्टहानिरिति॥ अशुभे चाङ्कुरे जाते शान्तिहोमं समाचरेत्। मूलमन्त्रेण जुहुयाद् गुरुश्च ब्राह्मणैः सह। अघोरास्त्रेण चास्त्रेण शतं वाथ सहस्रकमित्यङ्कुरारोपणम्॥

इति श्रीप्राणतोषिण्यां द्वितीये धर्मकाण्डे गुरुशिष्यविचाराद्यङ्कुरारोपणान्तकर्मकथनरूपपल्लव-
कथनं नाम तृतीयः परिच्छेदः।

दीक्षाव्युत्पत्तिस्तु रुद्रजामले। ददाति शिवतादात्म्यं क्षिणोति च मलत्रयम्। अतो दीक्षेति सम्प्रोक्ता दीक्षातन्त्रार्थवेदिभिः॥ लघुकल्पसूत्रे च॥ दीयते परमं ज्ञानं क्षीयते पापपद्धतिः। तेन दीक्षोच्यते मन्त्रे स्वागमार्थबलाबलात्। योगिनीतन्त्रे तृतीयभागे षष्ठपटलेऽपि। दीयते ज्ञानमत्यर्थं क्षीयते पाशबन्धनम्। अतो दीक्षेति देवेशि! कथिता तत्त्वचिन्तकैः। मनसा कर्मणा वाचा यत् पापं समुपार्जितम्। तेषां विशेषकरणी परमज्ञानदा यतः। तस्माद्दीक्षेति लोकेऽस्मिन् गीयते शास्त्रवेदकैः। विज्ञानफलदा सैव द्वितीया लयकारिणी। तृतीया मुक्तिदा चैव तस्माद्दीक्षेति धीयते॥ विश्वसारतन्त्रे द्वितीयपटले च॥ अथ दीक्षां प्रवक्ष्यामि शृणुष्व कमलानने!। यस्य विज्ञानमात्रेण देवत्वं लभते नरः। दिव्यज्ञानं यतो दद्यात् कुर्य्यात् पापक्षयं ततः। तस्माद्दीक्षेति सा प्रोक्ता सर्वतन्त्रस्य सम्मता॥ अथ दीक्षामाहात्म्यम्। रुद्रजामलपूर्वखण्डे तृतीयपटले॥ देवि! दीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः। तस्मात् सर्वप्रयत्नेन गुरुणा दीक्षितो भवेत्। विचारं चक्रसारस्य करणीयमवश्यकम्। अदीक्षितोऽपि मरणे रौरवं

नरकं व्रजेत्। तस्माद्दीक्षां प्रयत्नेन सदा कुर्य्याच्च तान्त्रिकीम्॥ पञ्चदशपटले॥ अदीक्षिता ये कुर्वन्ति जपपूजादिकाः क्रियाः। न भवन्ति प्रिये! तेषां शिलायामुप्तवीजवत्। कल्पसूत्रटीका-धृतकुलार्णवतन्त्रे॥ रसेन्द्रेण यथा विद्धमयः सुवर्णतां व्रजेत्। दीक्षाविद्धस्तथैवात्मा शिवत्वं लभते प्रिये!। दीक्षाग्निदग्धकर्मासौ यायाद्विच्छिन्नबन्धनः। गतस्तस्य कर्मबन्धो निर्जीवश्च शिवो भवेत्। गतं शूद्रस्य शूद्रत्वं विप्रस्यापि च विप्रता। दीक्षा-संस्कारसम्भिन्ने जातिभेदो न विद्यते। शिवलिङ्गे शिलाबुद्धिं कुर्वन् यत्पापमाप्नुयात्। दीक्षितस्यापि पूर्वत्वं स्मरन् तत्पाप-माप्नुयात्। दार्वश्मलोहमृद्रत्नजातिलिङ्गं प्रतिष्ठितम्। यथो-च्यते तथा शुद्धाः सर्वे वर्णाश्च दीक्षिताः। येन पूजितमात्रेण चाब्रह्मभुवनान्तिकम्। पूजितं तेन सर्वं स्याद्दीक्षितेन न संशयः। दीक्षितस्य न कार्य्यं स्यात्तपोभिर्नियमव्रतैः। न तीर्थगमने-नापि न च शारीरयन्त्रणैः॥ पञ्चमखण्डे षष्ठोल्लासेऽपि। गवां सर्पिः शरीरस्थं न करोत्यात्मपोषणम्। स्वकर्मचरितं दण्डं पुनस्तामेव पोषयेत्। एवं सर्वशरीरस्थसर्पिर्वत् परमेश्वरि!। विना चोपासनाद्देवि! न ददाति फलं नृणाम्॥ पुरश्चरण-रसोल्लासे प्रथमपटले। न च दीक्षापरं ज्ञानं न च दीक्षापरं तपः। न च दीक्षापरं कालं तस्माद्दीक्षा गरीयसी॥ इति दीक्षा-प्रशंसा॥ दीक्षायां वारतिथिनक्षत्रमासादिभद्राभद्रे अस्मद-त्यतिवृद्धप्रपितामहकृष्णानन्दागमवागीशेन तन्त्रसारे लिखिते ते तत्र द्रष्टव्ये। विशेषस्तु पुरश्चरणरसोल्लासे॥ दीक्षायां चञ्चलापाङ्गि! न कालनियमः क्वचित्। सद्गुरोर्दर्शनादेव सूर्य्य-पर्वं च सर्वदा। शिष्यमाहूय गुरुणा कृपया यदि दीयते। तत्र लग्नादिकं किञ्चिन्न विचार्य्यं कदाचन। एतत् सर्वं दिव्यवीर-विषयम्। तथा च इतः पूर्वम्। दिव्यवीरगुरुं लब्ध्वा दीक्षां

कृत्वा विचक्षणः। ततः समाहितो भूत्वा पुरश्चर्य्यां करिष्यति। इत्युक्तम् एतेन पशुगुरुतो दीक्षायां सर्वं विचार्य्यमित्यायातम्। कल्पसूत्रटीकाधृतकुलार्णवे॥ द्विजोऽपि दीक्षितः पश्चादन्त्यजः पूर्व्वदीक्षितः। द्विजः कनिष्ठः स ज्येष्ठ इति शास्त्रस्य निर्णयः। ज्येष्ठत्वेन च ते पूज्या नावमान्याः कथञ्चन॥ इति दीक्षाज्येष्ठत्वादिकथनम्॥ कुलार्णवेऽपि॥ दीक्षां विना न मोक्षः स्यात् प्राणिनां शिवशासनात्। सा च न स्याद्विनाचार्य्यमित्याचार्य्यपरम्परा; उपासनाशतेनापि यां विना नैव सिध्यति। तां दीक्षामाश्रयेद् यत्नात् श्रीगुरोर्मन्त्रसिद्धये॥ महाकपिलपञ्चरात्रनारायणीययोः॥ मन्त्रो यः साधयेदेकं जपहोमार्चनादिभिः। क्रियाभिर्भूरिभिर्यस्य सिध्यन्त्यन्येऽल्पसाधनात्। सम्यक् सिद्धैकमन्त्रस्य नासाध्यमिह किञ्चन। बहुमन्त्रवतः पुंसः का कथा हानिरेव सः॥ इत्येकमन्त्रसाधनफलं राघवभट्टधृतम्॥ पुस्तके लिखितो मन्त्रो येन सुन्दरि! जप्यते। न तस्य जायते सिद्धिर्हानिरेव पदे पदे॥ षट्कर्मदीपिकाधृतमपि॥ पुस्तके लिखिता विद्या येन सुन्दरि! जप्यते। सिद्धिर्न जायते तस्य कल्पकोटिशतैरपि। राघवभट्टधृतम्॥ द्विजानामनुपेतानां षट्कर्माध्ययनादिषु। यथाधिकारो नास्तीह स्याच्चोपनयनादनु। तथाचादीक्षितानाञ्च मन्त्रदेवार्चनादिषु। नाधिकारोऽस्त्यतः कुर्य्यादात्मानं शिवसंस्कृतमिति॥ दीक्षाया अकरणे दोषकथनम्॥ नारायणीये॥ यदृच्छया श्रुतं मन्त्रं छन्नेनापि छलेन वा। पत्रेक्षितं वा यथावत्तज्जघन्यमनर्थकृत्॥ इति निन्द्यदीक्षाकथनम्॥ राघवभट्टेऽपि॥ विप्रस्य विधिवद्दीक्षामभिषेकावसानिकाम्। श्रुत्वा तन्त्रं गुरोर्लब्धं साधयेद्दीक्षितं मनुम्। गुरुमुख्याः क्रियाः सर्व्वा भुक्तिमुक्तिफलप्रदाः। तस्मात् सेव्यो गुरुर्नित्यं मुक्त्यर्थं सुसमाहितैः। गुर्व्वनुज्ञाः क्रियाः

सर्वा निष्फलाः स्युर्यतो ध्रुवम्। जपो होमार्चनविधिः कार्य्यो दीक्षान्वितैर्नरैः॥ इति दीक्षाविधिकथनम्॥

मूलसूत्रम्॥ दीक्षास्तिस्रः शाक्ती शाम्भवी मान्त्री चेति। तत्र शाक्ती शक्तिप्रवेशनात् शाम्भवी चरणविन्यासात् मान्त्री मन्त्रोपदिष्टा सर्वाश्च कुर्य्यादेकैकमित्येके। एतद्व्याचष्टे श्रीशङ्कराचार्य्याः। शाक्तीति शक्तिः कुण्डलिनी परचिद्रूपा तस्याः क्रियासमभिव्याहारेण कुलाकुलभेदाद्व्रह्मनाद्यां परशम्भुमिलनं शक्तिप्रवेशः। शाम्भवी चरणविन्यासादिति ते चरणाश्चत्वारः शुक्लरक्तमिश्रपरस्वरूपाः। मान्त्री मन्त्रोपदिष्टेति। तदुक्तं रुद्रयामले॥ शाक्ती शक्तिभवा दीक्षा शक्तिः श्रीपरकुण्डली। तस्याः प्राणविलोमेन प्रवेशः परशाम्भवे। चरणद्वयसम्भूता शाम्भवी शीघ्रसिद्धिदा। मान्त्री मन्त्रोद्भवा दीक्षा तच्छक्तिः स्वात्मसम्भवा। मन्त्रयन्त्रार्च्चनादुक्तक्रियाभिर्भोगमोक्षदा। चरणद्वयं शिवशक्तिरूपम्। तत्र सत्त्वप्रधानः शुक्लः रजःप्रधानो रक्तः तमःप्रधानो मिश्रः। गुणातीतो निर्वाणः। साक्षात् परमानन्दनिर्भरः सदाशिवस्वरूपः। सहस्रदलकमलकर्णिका-मध्यवर्त्ति-चन्द्रमण्डलगतपीयूषधाराप्लाव्यमानाश्चिन्तनीयाः। उक्तञ्च भगवता दत्तात्रेयेण॥ भ्रूमध्यगौ विधिहरी तव शुक्लरक्तौ पादौ रजोमलगुणौ खलु सेव्यमानौ। सृष्टिस्थिती वितनुतो हृदये तृतीयमाद्यं भजन् हरति विश्वमुदग्रमुग्रः। तुर्य्यं तवार्य्यचरणं निरुपाधिबोध्यम् सान्द्रामृतं शिवपदे सततं नतोऽस्मि॥ रुद्रयामले॥ त्रिविधा सा भवेद्दीक्षा प्रथमा आणवी परा। शाक्ती च शाम्भवी चान्या सद्यो मुक्तिविधायिनी। मन्त्रार्च्चनासनन्यासध्यानोपचारकादिभिः॥ दीक्षा सा आणवी प्रोक्ता यथाशास्त्रोक्तरूपिणी। सिद्धैश्च शक्तिमालोक्य तया केवलया शिशोः। निरुपायं कृता दीक्षा

शाक्तेयी परिकीर्त्तिता । अभिसन्धिं विनाचार्य्यशिष्ययोरुभयो-रपि । देशिकानुग्रहेणैव शिवता व्यक्तिकारिणी ॥ षडन्वय-महारत्नेऽपि ॥ त्रिविधा सा भवेद्दीक्षा प्रथमा आणवी परा । शाक्तेयी शाम्भवी चान्या सद्योमुक्तिविधायिनी । मन्त्रार्चनासन-ध्यानस्थापनोपासनादिभिः । कृता दीक्षा सा त्वाणवी प्रोक्ता यथाशास्त्रोक्तरूपिणी । सिद्धैर स्वशक्तिमालोक्य तया केवलया शिष्योः । निरुपायं कृता दीक्षा शाक्तेयी परिकीर्त्तिता । अभिसन्धिं विनाचार्य्यशिष्ययोरुभयोरपि । देशिकानुग्रहेणैव शिवताव्यक्तिकारिणी । सेयन्तु शाम्भवी दीक्षा शिवादेशन-कारिणी । वायवीयसंहितायामपि । शाम्भवी चैव शाक्ती च मान्त्री चैव शिवागमे । दीक्षोपदिश्यते त्रेधा शिवेन परमात्मना । गुरोरालोकमात्रेण स्पर्शात् सम्भाषणादपि । सद्यः संज्ञा भवे-ज्जन्तोर्दीक्षा सा शाम्भवी मता । शाक्ती ज्ञानवती दीक्षा शिष्य-देहं प्रविश्य तु । गुरुणा ज्ञानमार्गेण क्रियते ज्ञानचक्षुषा । मान्त्री क्रियावती दीक्षा कुम्भमण्डलपूर्व्विका ॥ इति नामक्रियाभेदाद्दी-क्षाभेदकथनम् ॥ दीक्षाभेदान्तरन्तु शारदायां चतुर्थपटले ॥ चतुर्व्विधा सा सन्दिष्टा क्रियावत्यादिभेदतः । क्रियावती वर्ण-मयी कलात्मा वेधमय्यपि ॥ प्रयोगसारे ॥ मन्त्रमार्गानुसारेण साक्षात्कृत्वेष्टदेवताम् । गुरुश्चोद्बोधयेच्छिष्यं मन्त्रदीक्षेति सोच्यते ॥ सूत्रान्तरमाह सर्व्वाश्च कुर्य्यादेकैकां वेत्येके ॥ रुद्र-जामले ॥ आणवी बहुधा दीक्षा शाम्भवी च तथा पुनः । एकैका वापि विद्वद्भिः पठ्यते शास्त्रकोविदैः । शिवशक्तिसमायोगा-ज्जन्मान्तरकृतात् शुभात् । शिवपूजानुसन्धानात् कर्म्मसाम्यं यदा भवेत् । शिव एव तदा साक्षादाणव्या दीक्षया भवेत् । इति दीक्षाफलकथनम् ॥ विश्वसारतन्त्रे ॥ चतुर्व्विधा तु सा दीक्षा ब्रह्मणा भाषिता पुरा । क्रियावती कलावती वर्णवेध-

मयो गुन:। ता: क्रमेणापि कथ्यन्ते सर्वसम्पत्प्रदा: शुभा:॥ एवं सर्वासां दीक्षाणां मानसादिकैवल्यान्तं समानमेव फलम्॥ तदुक्तं रुद्रजामले॥ सर्वासामेव दीक्षाणां मुक्ति: फलमनुत्तमम्। अविरोधाद्भवत्येषा प्रासङ्गिक्यस्तु भक्तय:॥

अथाधिवासविधि:॥ तत्रादौ गृहप्रवेशानन्तरं विघ्ननिवारणपूर्वकं सूर्य्य: सोमादि पठित्वा भूरसीत्यादि मन्त्रैर्घटस्थापनं कुर्य्यात्। तदुक्तं विश्वसारतन्त्रे तृतीयपटले॥ गुरुणा वात्मना शिष्य: सर्वं कुर्य्याद्विधानत:। गुरुणा कारयेत् कर्म शिष्य: सर्वं हरेत् सुधी:। चन्दनागुरुकर्पूरैर्धूपयेद् यागमण्डपम्। गृहं प्रविश्य विधिना तत्र विघ्नान् विनाशयेत्। कृताञ्जलिपुटो भूत्वा मन्त्रमेनं समुच्चरेत्। ओं सूर्य्य: सोमो यम: कालो महाभूतानि पञ्च च। एते शुभाशुभस्येह कर्मणो नव साक्षिण:। घटस्यारोपणं कुर्य्यान्मन्त्रेणानेन देशिक:। घटारोपणमन्त्रोऽयं सर्वतन्त्रेषु सम्मत:। ओं भूरसि भूमिरस्यदितिरसि विश्वधा या विश्वस्य भुवनस्य धर्त्री पृथिवीं यच्छ पृथिवीं दृंह पृथिवीं मा हिंसी: भूमिशोधनमित्युक्तं सर्वतन्त्रसमन्वितम्। मन्त्रेणानेन देवेशि! शुक्लधान्यं विनिक्षिपेत्। ओं धान्यमसि धिनुहि देवान् धिनुहि यज्ञं धिनुहि यज्ञपतिं धिनुहि मां यज्ञनम्। ओं प्राणो मन्त्रोदा नाम त्वा कामाय मत्वा दीर्घां ननु प्रमितिद्दिशानुमेषां देवो व: सविता हिरण्यपाणि:। प्रतिगृह्णात्यच्छिद्रेण शिलाचक्षुषे त्वा मही मां पयोऽसि। हस्तमानं घटं कृत्वा नवरत्नोदरेण च। घटं संस्थापयेत्तत्र मन्त्रेणानेन देशिक:। ओं आजिघ्र कलसं मह्यात्मा विशन्तुन्दवम्। पुनरूर्जानि वर्त्तस्व सा न:। सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्माविशता द्रयि:। मन्त्रेणानेन देवेशि! घटं संस्थापयेत्तत:। मुक्तामाणिक्यवैदूर्य्यगोमेदवज्रविद्रुमान्। पद्मरागं मरकतं नीलञ्चैव क्रमान्नव। नवरत्नानि

तत्रैव निक्षिपेद् विभवावधि। मेरुतन्त्रेऽपि। पुष्पं नीलञ्च वैदूर्य्यं विद्रुमं मौक्तिकं तथा। ततो मरकतं वज्रं गोमेदं पद्मरागकम्। प्रोक्तानि नवरत्नानि देशिकैर्मन्त्रवित्तमैः। ॐ आप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यं भवावाजस्य सङ्गथे। मन्त्रेणानेन देवेशि! जलं दद्याद्घटोपरि। ॐ धन्वना गा धन्वना जिन्नयेम धन्वना तीव्राः समदो जयेम। धनुः शत्रोरपकामं कृणोतु धन्वनाः सर्वाः प्रदिशो जयेम। मन्त्रेणानेन देवेशि! शाखां दद्याद्घटोपरि। ताम्बूलं श्रीफलं दद्यात् कदलीं वा विशेषतः॥ ॐ श्रीश्च ते लक्ष्मीश्च पत्न्या अहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ। व्यात्तमिष्टुमीशानमु म ईशानः सर्वलोकमहेशानः॥ मन्त्रेणानेन देवेशि! घटे पुष्पं विनिक्षिपेत्। सफलं शालिचूर्णञ्च शरावञ्च घटोपरि। विनिक्षिप्याथ विधिना क्षीरशाखिसमन्वितम्। सुवस्त्राच्छादनं कुर्य्यान्मन्त्रेणानेन साधकः। ॐ वस्त्रञ्च पावनं श्वेतं बहुतन्तुविनिर्मितम्। मया निवेदितं भक्त्या वस्त्रञ्च प्रतिगृह्यताम्। क्वथितो जम्बुचूर्णेन इन्द्रवल्लीदलेन च। घटं संवेष्ट्य विधिना सिन्दूरादिविभूषितम्। स्थापयेत्तं घटं मन्त्रमुच्चार्य्य यत्नतः सुधीः॥ क्वथितो जम्बुचूर्णेनेति प्रदर्शनार्थमुक्तमन्येनापि तद्विशेषो मेरुतन्त्रे तृतीयप्रकाशे॥ पञ्चाशदोषधीः क्वाथैः पूरयेत्तदनन्तरम्। एकेन सहितास्ताश्च वर्णैश्चत्वाः क्रमादिमाः। चन्दनञ्चापि रक्ताख्यचन्दनञ्चागुरुस्तथा। कर्पूरोशीरकुष्ठानि बालकञ्चापि केशरम्। कक्कोलकं जातिफलं जटामांसीं मुरां तथा। ग्रन्थिकं रोचना जातीपत्रं पिप्पलविल्वकौ। पृश्निपर्णी चित्रकञ्च करञ्जं कत्तृणं तथा। कट्फलञ्चापि गुञ्जा च दद्रुहं वककाश्मरी। पद्मकोषं शङ्खपुष्पी मयूरस्य शिखा तथा। प्लक्षोऽग्निमन्थश्च तथा मुद्गपर्णी कुशाः पुनः। पाषाणभेदकः कृष्णशङ्खपुष्पी च रोहिणी। श्योणाकौ

वृहती चैव पाटली मुखकर्णिका। तुलसी शिखरा इन्द्रवल्ली भृङ्गाभिधा पुनः। ततोऽपराजिता तालमूली चापि कृताञ्जली। दूर्वा श्रीदेवकन्याख्या भार्ग्याख्या भद्रमुस्तकम्। लवङ्गरहिता-श्वेताः पञ्चाशत्संख्यका इति॥ यद्यपि प्रथमकाण्डे पञ्चाशदो-षधयो निरूपितास्तथाप्येकपञ्चाशत्त्वप्राप्त्यर्थमुक्तस्य दुरूहत्वनि-वृत्तये क्रमभेदज्ञापनाय च पुनर्दर्शिताः। दुग्धवृक्षत्वचः क्वाथै-र्ब्रह्मवृक्षोद्भवैस्तथा। गन्धपङ्कप्रसूनादिवासितैर्वाशृतैर्जलैरिति। ततो घटं स्थिरीकुर्य्यात् यावद्दीक्षाविधिर्भवेत्। ॐ स्थिरो भव विड़ङ्ग आशुर्भव वाय्यर्वन् पृथुर्भव सुषदस्त्वमग्ने पुरीशराहनः। मन्त्रेणानेन देवेशि! स्थिरीकरणमुत्तमम्। ततः कृताञ्जलि-र्भूत्वा मन्त्रमिनं पठेत्ततः। ॐ गुरुभ्यो गणपतिभ्यश्च वो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः। व्रातेभ्यो व्रातपतिभ्यश्च नमः। नमो गृह्येभ्यो गृह्यपतिभ्यश्च वो नमः। पुण्याहं वाचयेदादौ स्वस्तिवाचनपूर्वकम्॥ ॐ स्वस्ति न इन्द्रो वृद्ध-श्रवाः स्वस्ति नः पूषा विश्ववेदाः स्वस्ति नस्तार्क्ष्योऽरिष्टनेमिः। स्वस्ति नो वृहस्पतिर्दधातु॥ अस्त्राय फड़िति मन्त्रेण भौमान् विघ्नान् विदारयेत्। दिव्यदृष्ट्या दिव्यविघ्नान् दूरयेच्च चतु-र्दिशि। दिव्यदृष्टिलक्षणं तत्रैव। अनिमेषाच्चिदृष्टिश्च दिव्यदृष्टिः प्रकीर्त्तिता। माषभक्तेन चान्नेन यावकेन च संयुतम्। अजा-कर्णस्य रक्तेन दुग्धेन मधुरेण च। माषभक्तबलिं दद्याद्भूतप्रे-तपिशाचके। ॐ भूताः प्रेताः पिशाचाश्च पातालभूतले स्थिताः। पर्वताग्रे तथा वृक्षे गृहक्षेत्रादिषु स्थिताः। तुष्टा भवन्तु ते सर्वे मम गृह्णन्त्विमं बलिम्। यजेच्च रक्तकुसुमैरक्तमाहिषशोणितैः। मत्स्यमांसादिभिर्भक्ष्यैर्दुग्धैश्च विधिनामुना। बलिं दद्याच्च तत्रापि तदा मङ्गलमारभेत्। दीक्षाया धर्म्मकर्म्मरूपत्वेन तत्र विघ्ननि-रास उक्तो योगिनीतन्त्रे उत्तरखण्डेऽष्टमपटले। तीर्थे प्रासादः

कारणे धर्मारम्भे विशेषतः। व्रतयज्ञसमारम्भे विघ्नानि निव-सन्ति वै। तानि सम्पूजयेदादौ बलिभिर्मोदकादिभिः। अन्यथा जायते विघ्नमिति जानीहि मे प्रिये!। अथापराणि विघ्नानि शरीरे निवसन्ति वै। मानसाज्ञाननिर्हारास्तानि शृणु मम प्रिये!। कश्चिन्निवर्त्तको देवि! कश्चित् प्रवर्त्तकस्तथा। सन्निकर्षं विदूरं वा सहस्रं फलमेव वा। पापानुसरणञ्चैव आलस्येनापि दूषणम्। शोकमोहज्वराव्याधितारुण्यं धनलालसा। कलहं भार्य्यया सार्द्धं दुर्भिक्षं गृहसङ्कटम्। नानाव्रतसमाकीर्णं धार्मि-कोऽस्मीतिमानसः। प्राप्तशोकस्तु धर्म्मस्य कारणे हीनपत्नि-काम्। वृक्षपत्रञ्च तुलसी धात्री वृक्षफलं तथा। शालग्रामं शिला-खण्डं प्रतिमां दारुजां तथा। मानुषं ब्राह्मणञ्चैव स्वयम्भू-वर्त्तुलां शिलाम्। शङ्खं शम्बूकभेदञ्च खड्गस्य मांससम्भवम्। इत्याद्यावाभवेद्देवं तीर्थजातं जलं तथा। गङ्गायां वा नदीरूपं पुण्यक्षेत्रञ्च भूमिकाम्। इत्येतानि च विघ्नानि संयान्ति च पुनः पुनः। पूजयित्वा विधानेन द्वारदेशे न साधयेत्। कवचेनैव वीजेन सम्यक्त्वो जपेन च। निःसार्य्य विघ्नान् तान् सर्वान् तदा रक्षां दिशेत् पुनः॥ विश्वसारतन्त्रे॥ आत्मानं रक्षयेत् तत्र वह्निप्राचीरयोगतः। वह्निवीजे चतुर्दिक्षु प्राचीरं भावये-द्धिया। तदा तालत्रयं दद्याद्वह्निवीजेन देशिकः। ऊर्द्ध्वोर्द्ध्वं क्रम-योगेन गुरूंश्च प्रणमेत्ततः। ॐ गुरुभ्यो नमो नित्यं तदा च गुरुपादुकाम्। परं परापरं देवि! परात्परमतः परम्। क्रमेण प्रणमेद्धीमान् ॐकारादि उदीरितान्। गणेशं दक्षिणे नत्वा सम्मुखे चेष्टवताम्। गणेशं स्थापयेत्तस्य पूर्वोक्ते तु घटे सुधीः। आवाहयाम्यहं देवं गणेशं शिवनन्दनम्। व्याघ्रचर्माम्बरधरं व्याल-यज्ञोपवीतिनम्। गणकोट्या परिवृतं देवं मोदकभोजनम्। अविघ्नेशं महाकायं सर्वलोकैकपूजितम्। बलिनं सर्वशान्त्यर्थं

रौद्रमावाहयाम्यहम्। एह्येहि भगवन्! देव! सर्वविघ्नविनाशक!। इमां पूजां गृहाण त्वं सर्वं मे सफलं कुरु। सिन्दूररक्तपुष्पाद्यैः पूजयेच्छिवनन्दनम्। अञ्जल्यावाहयेदादौ सर्वत्रायं विधिः स्मृतः। स्वागतादि ततः प्रश्नं प्रत्युत्तरसमन्वितम्। आसनन्तु ततो दत्त्वा पाद्यमर्घ्यं निवेदयेत्। ॐ पाद्यं सुवासितं देव! सर्वभूतसुखावहम्। दूरयात्राश्रमहरं पाद्यं तत्प्रतिगृह्यताम्। पाद्यं नमः पादयुगे स्वाहार्घ्यं शिरसि स्थितम्। मधुपर्कं स्वधान्ते तु पुनराचमनीयकम्। स्नानीयञ्च नमो ब्रूयात् पुनर्गन्धादिकं ततः। वस्त्रं यज्ञोपवीतञ्च नमोऽन्ते परिकल्पयेत्। अन्नं भक्ष्यं स्वधान्ते तु धूपं दीपं विधानतः। क्रमेण निक्षिपेत्तत्र देवाय विधिनामुना। अर्घ्यपात्रे प्रदायार्घ्यं ततः शृणु वरानने!। अर्घ्योदकं भवेच्छुद्धं श्यामाकयवदूर्वकैः। नानागन्धसमायुक्तं कुशांश्च तिलसर्षपम्। विष्णुक्रान्ताञ्च यवकं षड़र्घ्योऽयं प्रकीर्त्तितः। ॐ काण्डाच्चैव मन्त्रेण अर्घ्यं दद्याच्च साधकः। पाद्यमन्त्रेष कुर्वीत तथा चाचमनीयकम्। ॐ नमः स्वाहासमायुक्तं ब्रह्मत्वफलहेतवे। मया निवेदितं भक्त्या मधुपर्कं गृहाण मे। मूलमन्त्रेण सर्वत्र ॐकारादिनमोऽन्विते॥ छान्दसत्वान्न वर्णनाशः। ॐकारादिनमोऽन्वितेन मूलमन्त्रेणेत्यर्थः॥ दध्ना च मधुसर्पिर्भ्यां मधुपर्कः प्रकीर्त्तितः। यज्ञोपवीतमन्त्रेण दद्याद्यज्ञोपवीतकम्। यज्ञोपवीतमन्त्रस्तु॥ ॐ यज्ञोपवीतं परमं पवित्रं वृहस्पतेर्यत् सहजं पुरस्तात्। आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः॥ ॐ नानारत्नैश्च घटितं विश्वकर्मादिनिर्मितम्। सर्वाङ्गशोभाभरणं गृहाण फलहेतवे। ओँ वनस्पतिरसोत्पन्नो गन्धाढ्यो गन्ध उत्तमः। आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्। ओँ सुप्रकाशो महादीपः सर्वतस्तिमिरापहः। सवाह्याभ्यान्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम्।

प्रदीपावलिभिः कुर्य्यान्निकटे धूपदीपकौ। प्रक्षालनाय हस्तस्य पश्चात्पात्रं क्षिपेत् सुधीः। शातकुम्भप्रपूर्णेन मण्डपं रचयेत् सुधीः। गणेशं पूजयित्वा च अर्कं विष्णुं शिवं शिवाम्। पूजयेद्विधिना तत्र घटे सर्व्वसमृद्धये। कूर्च्चमुष्टिं क्षिपेदादौ फड़्मन्त्रेण तु साधकः। तिलान् कुशान् सर्षपांश्च कूर्च्चमुष्टिः प्रकीर्त्तिता। विकिरान् प्रक्षिपेत्तत्र सप्त सप्त शराणुना॥ विकिरा दीक्षायां वक्ष्यन्ते॥ शराणुना अस्त्रमन्त्रेण। ततो गुरुः स वेद्यान्तु गत्वा स्वस्यासने विशेत्॥ मेरुतन्त्रे तृतीयप्रकाशे॥ सञ्चिन्त्य मन्त्रेण मूर्त्तिमेवं तस्मिन् गुरूत्तमः। तस्यां मूर्त्तौ समावाह्य पूजयेदिष्टदेवताम्। स्मृत्वा मूलमनुं मन्त्री सम्यङ् नाड़ीमुखाततः। निर्गमस्य च चैतन्यं नासिकाग्रविनिर्गतम्। अञ्जलौ मातृकापद्मे महः पुष्पान्विते गुरुः। मस्तकास्तं समुत्थाप्य तस्यामावाहयेत्ततः। संस्थापनं सन्निधानं सन्निरोधं ततश्चरेत्। सम्मुखीकरणञ्चापि सकलीकरणं ततः। ततोऽवगुण्ठनं कार्य्यममृतीकरणं ततः। परमीकरणं कुर्य्यात् क्रमशः स्वस्वमुद्रया। क्रमाद्धृदध्यायाश्च तत उपचारान् प्रकल्पयेत्। आसनादि प्रभूतानां उपचारान् प्रकल्प्य च। ततो मन्त्रविधानेषु प्रोक्ताङ्गावरणान्यपि॥ पुनः पूर्व्वादिकाष्ठासु क्रमादस्त्रादिकान् यजेत्। लोकपालान् मण्डलेषु कुम्भोपरि च तत्र वा। ऐरावतं पुण्डरीकं वामनं कुमुदाञ्जनौ। पुष्पदन्तं सार्व्वभौमं सुप्रतीकं तदग्रतः। सर्व्वान्ते लोकपालानां तदस्त्राणां प्रपूजनम्। इन्द्रादिपूजनात् पूर्व्वं ब्राह्म्यादिपूजनमपि। तथा च विश्वसारे॥ अष्टदिक्षु चाष्ट कुम्भान् क्वाथतोयप्रपूरितान्। ब्राह्म्यादिमातृकाः पूज्याः सर्व्वतन्त्रसमन्विताः। स्नात्वा स्नानविधानेन गन्धपुष्पाक्षवारिभिः। दण्डं कमण्डलुकरमक्षसूत्राभयं तथा। बिभ्रती कनकच्छायां ब्राह्मी कृष्णाजिनोज्ज्वला॥ १॥ शूलं कपालं

परशुं तृषां पीतं मनोहरम्। वहन्ती हेमसङ्काशा ध्येया माहेश्वरी शुभा ॥ २ ॥ अङ्कुशं दण्डखट्वाङ्गं पाशञ्च दधती करैः। ध्येया बन्धूकसङ्काशा कौमारी शर्म्मदायिनी ॥ ३ ॥ चक्रं घण्टां गदां खड्गं बिभ्रती सुमनोहरा। तमालश्यामला ध्येया वैष्णवी शर्म्मदायिनी ॥ ४ ॥ मुषलं करवालञ्च खेटकं दधती हलम्। करैश्चतुर्भिर्वाराही ध्येया कालघनच्छविः ॥ ५ ॥ अङ्कुशं तोमरं विद्युत् कुलिशं बिभ्रती करैः। इन्द्रनीलनिभेन्द्राणी ध्येया सर्वसमृद्धिदा ॥ ६ ॥ शूलं कपालं नृशिरः कपालं दधती करैः। मुण्डस्रङ्मण्डिता ध्येया चामुण्डा रक्तविग्रहा ॥ ७ ॥ अक्षस्रजं बीजपूरं कपालं पङ्कजं करैः। वहन्ती हेमसङ्काशा महालक्ष्मीर्हरिप्रिया ॥ ८ ॥ मेरुतन्त्रे। विधाय पूजामेवं हि धूपदीपनिवेद्यकैः। कृते निवेद्ये च ततो मण्डलं परितः क्रमात्। प्रवालाङ्कुरपत्राणि स्थापनीयानि मन्त्रिणा। वेदिकाया दक्षभागे कृत्वा स्थण्डिलमुत्तमम्। संस्थाप्य वह्निं संस्कृत्य वैश्वदेवं समारभेत्। यथाविधि ततस्तत्र गन्धाद्यैर्देवतां यजेत्। ततः प्रणवपूर्वाभिर्हुत्वा व्याहृतिभिः पुरा। जुहुयान्मूलमन्त्रेण पायसेन घृतेन च। पञ्चविंशतिभिः पश्चाद्धुत्वा व्याहृतिभिः पुरा। सम्पूज्य तां चन्दनाद्यैः पीठमूर्त्तौ नियोजयेत्। अग्निं विसृज्य शिष्टेन पायसेन बलिं हरेत्। पार्श्वदेभ्यश्चन्दनादिपुष्पाक्षतसमन्वितम्। तत उत्थाप्य नैवेद्यं ततस्थलं शोधयेत् सुधीः। पुनर्यजेच्चोपचारैः पञ्चभिर्दर्शयेत्ततः। दर्पणं व्यजनं छत्रं चामरं मुखवासकम्। सहस्रञ्च जपेन्मन्त्री मूलमन्त्रं समाहितः॥ विश्वसारे॥ जलं समर्प्य विधिना तदा कुर्वीत मङ्गलम्। द्विजस्त्रीणां ब्राह्मणानामाशीर्वादं प्रगृह्य च। जयशब्दैर्ब्रह्मशब्दैर्ब्राह्मणान् परितोष्य च। बन्धुवर्गं प्रतोष्याथ अधिवासं ततो दिशेत्। मन्त्रेणानेन द्रव्येण क्रमेण देशिकोत्तमः। अधिवासं

प्रकुर्वीत शिष्यस्य सावधानतः। ओँकारं पूर्वमुच्चार्य्य नमोऽन्तेन समर्पयेत्। ओँ भूरसीति च मन्त्रेण मृत्तिकां प्रक्षिपेत्ततः। ओँ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां त्वामिहोपह्वये श्रियम्। गन्धं दद्याच्च विधिना मन्त्रेणानेन साधकः। ओँ प्रपर्वतस्य वृषभस्य पुष्टां नावश्चरन्ती शशिच इयानाता आववृत्तमदधागुदन्ता। अहिं व्रध्नमनुरीयमणा विष्णो-र्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोः क्रान्तमसि वैष्णवे त्वा॥ मन्त्रेणानेन विधिना शिलां दद्याद्विचक्षणः। धान्यमन्त्रेण धान्यस्य दानं तन्त्रेषु सम्मतम्। ओँ काण्डात् काण्डात् प्ररो-हन्ती पुरुषं पुरुषः पवि। एतान् दूर्वे प्रतनु सहस्रेण शतेन च। मन्त्रेणानेन देवेशि! दूर्वां दद्याद्विधानतः। ओँ श्रीश्च तेति च मन्त्रेण पुष्पं दद्याद्विधानतः। ओँ याः फलिनीति च मन्त्रेण फलं दद्याद्विचक्षणः। ओँ दधिक्राव्णोऽत्यकार्षं जिष्णोरश्वस्य वाजि वः। सुरभीनो मुखाकरत् प्रणतानंसितायत्। मन्त्रे-णानेन तं ध्यात्वा अधिवासं समादिशेत्। ओँ घृतवती भुवना-नामभिश्रियोर्वी पृथ्वीमधुदुघे सुपेशसा। द्यावापृथिवी वरुणस्य धर्मणा विष्कभीते अजरे भूरिरेतसा। मन्त्रेणानेन देवेशि! दद्याच्छिष्यस्य मस्तके। ओँ स्वस्ति न इति मन्त्रेण स्वस्तिकं विनिक्षिपेत्। ओँ सिन्धोरिव प्राध्वने सुघनासो वातप्रमीय-पतन्ती जिह्वा घृतस्य धारा अरुषो न वाजीकाष्ठाभिन्दन्नूर्मिभिः पिन्वमानः। इति मन्त्रेण सिन्दूरं दद्याच्च शिष्यमस्तके। ओँ शङ्ख! त्वं शङ्खपुण्यानां मङ्गलानाञ्च मङ्गलम्। विष्णुना विधृता नित्यं मम शान्तिप्रदो भव। शङ्खस्पर्शनमन्त्रोऽयं सर्वतन्त्रस्य सम्मतः। ओँ समिधोऽङ्क्तं क्रदरं मतीनां घृतमग्ने मधुमत् पिन्वमानः। वाजीवहन् वाजिनं जातवेदा देवानां वाक्षि-प्रियमादधस्व। मन्त्रेणानेन देवेशि! कज्जलं विनिसज्जयेत्।

ओँ युञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्थुषः। रोचन्ते रोचना दिवि। रोचनां परितो दद्यान्मन्त्रेणानेन सुन्दरि!। ओँ अन्नपते अन्नस्य नो धेह्यनमीवस्य शुष्मिणः। प्रदातारं तार्ष ऊर्ज्जं नो धेहि द्विपदे चतुष्पदे। विश्वकर्म्मणे स्वाहा। मन्त्रेणानेन देवेशि! स्वर्णं परिकीर्त्तितम्। ओँ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम वा। मन्त्रेणानेन देवेशि! काञ्चनं परितो न्यसेत्। ओँ रूपेण वै रूपमर्त्यानां पृथोमा विश्ववेदा विभजतु मुत्तमस्य यथा वेदश्चन्द्रदक्षिणापश्यन्त रोचं यत् सुषदुच्चैः। मन्त्रेणानेन देवेशि! रूप्यं दद्याद्विधानतः। ओँ असौ यस्ताम्रोऽरुण उत बभ्रुः सुमङ्गलः। ये चैनं रुद्रा अभितो दिक्षु श्रिताः। सहस्रशो वै यां हेलषीमहे। मन्त्रेणानेन देवेशि! ताम्रं दद्याद्विधानतः। ओँ रक्षोहनो वलगहनः प्रोक्षयामि वैष्णवान् रक्षोहनो वलगहनो वलयामि वैष्णवान् रक्षोहनो वलगहनो वस्तृणामि वैष्णवान् रक्षोहनो वलगहन उपदधामि वैष्णवं रक्षोहनो वलगहनः पर्य्यूहामि वैष्णवीन् वैष्णवमसि वैष्णवाः स्थ। मन्त्रेणानेन सिद्धार्थं दत्त्वा बालस्य मूर्द्धनि। ओँ आकृष्णेन रजसा वर्त्तमानो निवेशयन्न मृतं मर्त्यञ्च। हिरण्मयेन सविता रथेना देवो याति भुवनानि पश्यन्। मन्त्रेणानेन देवेशि! दर्पणं प्रतिपादयेत्। ओँ मनोज्योतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोतु। अरिष्टं यज्ञमिमं दधातु विश्वे देवाः स इह मादयन्ता मोम्प्रतिष्ठ। मन्त्रेणानेन देवेशि। दीपं दद्याद्विधानतः॥ ओँ प्रतिपदसि प्रतिपदेत्वा अनुपदसि अनुपदे त्वा सम्पदसि सम्पदे त्वा तेजोऽसि तेजसेत्वा तेजोमयि धेहि। ओँ प्रशस्तमातमसि भूतपात्रे शिरसार्थं मम कुरु सर्वं देवीचरयुगलं वन्दनीयम्॥ शारदातिलके

चतुर्थपटले॥ अग्ने च ज्वालिते पात्रे नवे ताम्रमयादिके॥ तण्डुलान् शालिसम्भूतान् मूलमन्त्राभिमन्त्रितान्। प्रसृतीनाञ्च दशभिः क्षिप्त्वा चान्नमनु जपेत्। प्रक्षाल्य पात्रवदनं विधाय कवचानुना। प्राङ्मुखो मूलमन्त्रेण देशिकेन्द्रश्चरुं पचेत्। स्रुवेणाज्येन संस्विन्ने दद्यात्तत्राभिमारणम्। मूलेन पश्चात्तत्पात्रं कवचेनावतारयेत्। अस्त्रजप्ते कुशास्तीर्णे मण्डले विधिवद्गुरुः। तं विभज्य त्रिधा भागमेकं देवाय कल्पयेत्। अन्यदग्नौ च जुहुयादपरं देशिकः स्वयम्। शिष्येण सार्द्धं भुञ्जीत विहिताचमनं ततः। आचान्तं शिष्यमादाय सकलीकृत्य देशिकः। तालप्रमाणं हृज्जप्तं क्षीरिवृक्षादिसम्भवम्। दन्तकाष्ठं तदा दद्याच्छिष्याय नियतात्मने। दन्तान् विशोध्य स पुनस्तत् प्रक्षाल्य विसर्ज्जने। यथाविधि तमाचान्तं शिखाबन्धाभिरक्षितम्। विधाय सार्द्धममुना वेद्यां दर्भान्तरे गुरुः। शयीत तस्यां तां रात्रिमधिवासः समीरितः॥ विशेषस्तु मेरुतन्त्रे तृतीयप्रकाशे अनुसन्धेयः॥ इति अधिवासविधिः॥

अथाङ्कुरारोपणप्रयोगः। तत्र दीक्षादिवसात् प्राक् नवमे सप्तमे पञ्चमे शुभे तस्मिन् वह्निमण्डपप्रान्तरे पञ्चहस्तमितानि पञ्चसूत्राणि पूर्व्वपश्चिमक्रमेण पातयित्वा दक्षिणोत्तरक्रमेण द्वादशाङ्गुलान्तरितान्येकादशसूत्राणि पातयेत् तेन चत्वारिंशत्कोष्ठा भवन्ति। तेषां वहिश्चतुस्रो वीथीर्मार्ज्जयेत्। मार्ज्जनप्रकारश्च प्रथमं पूर्व्वस्यां चतुष्कोष्ठात्मिकामेकां वीथीं ततो दक्षिणस्यामष्टकोष्ठात्मिकामपरां पश्चिमायां चतुष्कोष्ठात्मिकामन्यामुत्तरस्यामष्टकोष्ठात्मिकामितराञ्च मार्ज्जयेत्। ततोऽन्तश्चतुष्कस्य पूर्व्वपश्चिमपार्श्वयोर्द्वे वीथ्यौ द्विकोष्ठात्मिके पुनर्मार्जयेत्। तेन मण्डले चतुष्कोष्ठात्मकं कोष्ठत्रयमवशिष्यते। ततश्चतुष्कोष्ठत्रयस्थानि द्वादशपदानि प्रत्येकं चतुष्कोष्ठं श्वेतादिभीरजोभी रञ्जयेत्।

तत्र वायुपदे श्वेतमाग्नेये पीतं नैर्ऋते अरुणमीशाने कृष्णम्। ततः श्यामलेन मार्जितवीथीरापूरयेत्। तेषु पदेषु पालिका-पञ्चमुखीशरावाणां सुप्रक्षालितं त्रिगुणसूत्रवेष्टितं शुष्कगोमय-चूर्णवालुकाभ्यङ्क्तिसत्तरोत्तरपरिपूरितम्। हरिब्रह्मरुद्रस्वरूपं कृष्णवर्णव्रणादिरहितं पश्चिमादिक्रमेणाग्निकोणमारभ्येशान-कोणपर्य्यन्तं प्रत्येकं चतुष्कोष्ठेषु स्थापयेत्। ततः पश्चिमदिशि पालिकाचतुष्के विष्णुं मध्ये पालिकाचतुष्के ब्रह्माणं पूर्वस्यां शरावचतुष्के रुद्रं ध्यात्वावाह्य पूजयेत्। ततो वमिति मन्त्रेण विष्णुविषये ओँ नमो भगवते वासुदेवायेति मन्त्रेण दुग्धेना-म्भसा च वीजानि प्रक्षाल्य वीजोपरि दातव्यमन्त्रमष्टोत्तरशतं जपेत्। ततः काङ्गौ स्कन्दं निष्पावे वायुं कुलत्थे वह्निमाढ़क्यां निर्ऋतिं मुद्गे सोमं तिले वैवस्वतं शालौ प्रजापतिं सर्षपेऽनन्तं श्यामाके सूर्य्यं माषे च वरुणं सम्पूज्य वीजानि मिश्रयित्वा तत्र सोमं पूजयित्वा प्राङ्मुख उदङ्मुखो वा। ओँ त्रिपञ्चकाय सर्वाय शङ्कराय शिवाय च। सर्वलोकप्रधानाय शाश्वताय नमो नमः। इति मन्त्रेण तेषु पात्रेषु वीजानि निर्वपेत्। ततो हरिद्राचूर्ण-मिश्रितजलेन गन्धमिश्रितजलेन च तानि सिञ्चेत्। उक्तप्रकार-जलसेचनं सोमपूजनञ्चाधिवासदिनपर्य्यन्तं प्रत्यहं कुर्य्यात्। ततो नूतनवस्त्रत्रयेण तानि पात्राण्याच्छाद्य प्रत्येकरात्रिषु देव-ताभ्यो बलिं दद्यात्। तत्र प्रथमरात्रौ ओँ भूतेभ्यो नम इति मन्त्रेण गन्धपुष्पे दत्त्वा लाजतिलदधिशक्तुभिर्बलिं दद्यात्। ततः स्थानमार्ज्जनादि कुर्य्यात्। द्वितीयरात्रौ ओँ पितृभ्यो नम इति गन्धपुष्पे दत्त्वा सतिलान्नतण्डुलैर्बलिं दद्यात्। तृतीयरात्रौ ओँ यक्षेभ्यो नम इति गन्धपुष्पे दत्त्वा दधिशक्तुलाजैर्बलिं द-द्यात्। चतुर्थरात्रौ ओँ नागेभ्यो नम इति गन्धपुष्पे दत्त्वा ना-रिकेलोदकशक्तुपिष्टकैर्बलिं दद्यात्। पञ्चमरात्रौ ओँ ब्रह्मणे

नम इति गन्धपुष्पे दत्त्वा सपङ्कजाक्षततण्डुलेन बलिं दद्यात्। षष्ठरात्रौ ओँ शिवाय नम इति गन्धपुष्पे दत्त्वा सपूपान्नबलिं दद्यात्। सप्तमरात्रौ ओँ विष्णवे नम इति गन्धपुष्पे दत्त्वा गुड़ौदनेन बलिं दद्यात्। ततः पायसादिना लोकपालेभ्यो बलिदानम्। तत्र ईशानपूर्वयोर्मध्ये ब्रह्मणे। नैऋतवरुणयोर्मध्ये अनन्ताय बलिर्देयः। प्ररूढ़ानङ्कुरानन्यो न पश्येत्। अशुभेषु अङ्कुरेषु शान्त्यादिकं कुर्य्यादित्यङ्कुरारोपणम्॥

अथ अधिवासप्रयोगः। तत्रादौ गुरुर्गृहं प्रविश्य चन्दनागुरुधूपाद्यैर्गृहं सुवासितं कृत्वा विघ्नान् विनाश्य ओँ सूर्य्यः सोम इत्यादि पठित्वा घटस्थापनं कुर्य्यात्। तत्क्रमस्तु ओँ भूरसीति भूमिशोधनम्॥ १॥ ओँ धान्यमसीति मन्त्रेण तत्र शुक्लधान्यनिक्षेपः॥ २॥ ओँ प्राण इति मन्त्रेण हस्तप्रमाणस्य घटस्योदरे नवरत्नदानम्॥३॥ ओँ आजिघ्र इत्यादिमन्त्रेण तत्र तस्य स्थापनम्॥ ४॥ ओँ आप्यायस्वेति मन्त्रेण घटोपरि जलदानम्॥ ५॥ ओँ धन्न नेति तदुपरि शाखादानम्॥ ६॥ तदुपरि ताम्बूलस्य श्रीफलस्य च दानं कदलीफलस्य वा॥ ७॥ ओँ श्रीश्च तेति तदुपरि पुष्पदानम्॥ ८॥ ततः सफलं शालिचूर्णयुतं शरावस्य घटोपरिनिधानम्॥ ९॥ ओँ वस्त्रश्चेति क्षीरशाखिशाखासहितवस्त्रार्पणम्॥ १०॥ जम्बूपञ्चाशदोषधिक्वाथेन घटपूरणम्॥ ११॥ इन्द्रवल्ल्या घटवेष्टनम्॥ १२॥ घटे सिन्दूरदानम्॥ १३॥ ओँ स्थिरो भवेति दीक्षापर्य्यन्तं घटस्य स्थिरीकरणम्॥ १४॥ एवं घटं संस्थाप्य ओँ गुरुभ्यो नम इत्यादि पठित्वा ओँ यजमानस्य पुण्याहमित्यादिना पुण्याहं वाचयित्वा ओँ स्वस्ति न इति स्वस्तिवाचनं कृत्वा ओँ अस्त्राय फड़िति भौमान् विघ्नाननिमिषाच्छिद्दृष्टिरूपदिव्यदृष्ट्या चतुर्दिशि दिव्यान् विघ्नानपसार्य्य ओँ भूताः प्रेता इति मन्त्रेण मांषभक्त-

भावेन यावकेनाजाकर्षरक्तेन दुग्धेन मधुरद्रव्येण वा बलिं दत्त्वा रक्तपुष्पैश्च तान् पूजयेत्। ततो हुमिति सप्तकृत्वो जप्तेन विकिरेण सर्वान् विघ्नान् निःसार्य रमिति जलधारया चतुर्दिक्षु वह्निप्राकारं कल्पयेत्। ततो वमित्यूर्द्ध्वोर्द्ध्वक्रमेण तालत्रयं दत्त्वा ओं गुरुभ्यो नम एवं गुरुपादुकाभ्यः परमगुरुभ्यः परापरगुरुभ्यश्च ऊर्द्ध्वोर्द्ध्वक्रमेण वामे नत्वा दक्षिणे ओं गणेशाय नमः मध्ये इष्टदेव्यै नमः इति प्रणमेत्। ओं आवाहयाम्यहमित्यादिना गणेशं ध्यात्वा एह्येहीत्यादिना घटे आवाह्य सिन्दूररक्तकुसुमादिना तं पूजयेत्। तत्क्रमस्तु स्वागतप्रश्नोत्तरानन्तरमासनदानम्। ओं पाद्यमिति पादयोर्नम इति पाद्यदानम्। शङ्खोदकश्यामाकदूर्वाकुशतिलसर्षपापराजितायवरूपषडङ्गार्घ्यं गन्धयुक्तं शङ्खे निधाय। ओं कामादिभिः स्वाहेति शिरस्यर्घ्यदानम्। पाद्यमन्त्रेणाचमनीयदानम्। ओं नम इति दधिमधुघृतरूप मधुपर्कस्य स्वधेति दानम्। मूलमन्त्रेण स्वधेति पुनराचमनीयदानम्। मूलमन्त्रेण नम इति स्नानीयदानम्। ओं यज्ञोपवीतमिति यज्ञसूत्रदानम्। ओं नानारत्नैश्चेत्याद्याभरणदानम्। मूलेन नम इति गन्धदानम्। मूलेन वौषड़िति पुष्पदानम्। वनस्पतीति धूपदानम्। ओं सुप्रकाश इति दीपदानम्। मूलेन दीप्तावल्लिभिर्नम इति नीराजनम्। मूलेन निवेदयामीति नैवेद्यदानम्। ततः प्रागुक्तनमो गुरुभ्य इति वन्दनम्। इति गणेशं सम्पूज्य। एवं क्रमेणार्कविष्णुशिवदुर्गा घटे पूजयेत्। तत ओं फड़िति मन्त्रेण तिलकुशसर्षपरूपकूर्चमुष्टिं प्रक्षिपेत्। तत ओं अस्त्राय फड़िति सप्तकृत्वः सञ्जप्य लाजचन्दनश्वेतसर्षपभस्मदूर्वारूप-विघ्नविनाशकविकिरप्रक्षेपं कुर्य्यात्। ततो गुरुर्वेदिकोपरि स्वीयासने उपविश्य मूलेन मूर्त्तिं कल्पयित्वावाह्य आवाहन्यादिमुद्राः प्रदर्श्यासनादि-

पुष्पान्तेनेष्टदेवतां सम्पूजयेत् । ततोऽङ्गावरणादिं सम्पूजयेत् । तत्क्रमस्तु तन्त्रसारेऽनुसन्धेयः । ततोऽष्टसु दिक्षु अष्ट कुम्भान् क्वाथतोय प्रपूरितान् पूर्वोक्तमन्त्रैः संस्थाप्य तेष्वष्टमातृकाध्याना-वाहनपूर्वकं पूजयेत् । ततो दशदिक्षु इन्द्रादिलोकपालानैरा-वतादीनष्टौ गजान् वज्राद्यस्त्राणि सम्पूज्य धूपदीपौ नैवेद्यञ्चेष्ट-देवतायै निवेद्य वेदिकाया दक्षभागे मण्डलं कृत्वाङ्कुरपात्राणि स्थापयेत् । ततो दक्षिणे स्थण्डिलं कृत्वाङ्कुरं संस्कृत्य तत्र देवतां सम्पूज्य ओं भूः स्वाहा ओं भुवः स्वाहा ओं स्वः स्वाहा इति व्याहृतिभिर्घृतेन हुत्वा पायसेन मूलमन्त्रेण पञ्चविंशति-वारं जुहुयात् । पुनर्व्याहृतिभिर्हुत्वा गन्धपुष्पादिभिः सम्पूज्याग्निं विसृजेत् । ततोऽवशिष्टपायसेन पार्श्वदेवेभ्यो बलिं दद्यात् । ततो नैवेद्यमुत्थाप्य स्थानमार्ज्जनं कृत्वा पुनर्दशोपचारैरिष्ट-देवतां घटे सम्पूज्य दर्पणं चामरं व्यजनं छत्रं मुखवासकताम्बू-लञ्च दर्शयेत् ततो मूलमन्त्रं सहस्रधा जप्त्वा जपं समाप्य प्रणम्य ब्राह्मणान् परितोष्य मङ्गलध्वनिनृत्यगीतपुरःसरमधिवासं कु-र्य्यात् ॥ यथा ओं भूरसीति शिष्यमस्तके मृत्तिकास्पर्शनम् ॥ १ ॥ ओं गन्धद्वारामिति गन्धः ॥ २ ॥ ओं प्रपर्वतस्येति शिला ॥ ३ ॥ ओं धान्यमसीति धान्यम् ॥ ४ ॥ ओं काण्डादिति दूर्वा ॥ ५ ॥ ओं श्रीश्चतेति पुष्पम् ॥ ६ ॥ ओं याः फलिनीति फलम् ॥ ७ ॥ ओं दधीति दधि ॥ ८ ॥ ओं घृतवतीति घृतम् ॥ ९ ॥ ओं स्वस्ति न इति स्वस्तिकम् ॥ १० ॥ ओं सिन्धोरिवेति सिन्दूरम् ॥ ११ ॥ ओं शङ्ख त्वमिति शङ्खः ॥१२॥ ओं समिध इति कज्जलम् ॥१३॥ ओं युञ्जन्तीति रोचना ॥ १४ ॥ ओं अन्नेति सिद्धान्नम् ॥ १५ ॥ ओं हिरण्येति काञ्चनम् ॥ १६ ॥ ओं रूपेणेति रूप्यम् ॥ १७ ॥ ओं असौ य इति ताम्रम् ॥ १८ ॥ ओं रक्षोहन इति सिद्धार्थः ॥ १९ ॥ ओं आकृष्णेनेति दर्पणम् ॥ २० ॥ ओं मनोज्योतिरिति

दीपः ॥ २१ ॥ ओं प्रतिपदेति प्रशस्तपात्रम् ॥ २२ ॥ सर्वाख्येतानि शिष्यमस्तके दद्यात् ॥ ततः फड़िति मन्त्रेण प्रक्षालिते नवे पात्रे मूलमन्त्राभिमन्त्रितदशप्रसृतिमितशालितण्डुलान् कृत्वा हुमिति मन्त्रेण पात्रवदनं प्रक्षाल्य चरुं पचेत्। सुखिन्ने चरौ मूलेनाभिघारणं कुर्य्यात्। ततो हुमिति तत्पात्रमवतार्य्य कुशास्तीर्णे मण्डले फड़िति मन्त्रेण स्थापयेत्। तं चरुं त्रिधा विभज्य एकं देवाय दद्यात् अपरं वह्नौ जुहुयात्। अपरं भागं शिष्येण सार्द्धं गुरुर्भुञ्जीत। तत आचान्ताय शिष्यायाङ्गन्यासं कृत्वा स्थिताय द्वादशाङ्गुलं दन्तकाष्ठं गुरुर्दद्यात्। शिष्यस्तु तेन दन्तकाष्ठेन दन्तान् संशोध्य तत् काष्ठं प्रक्षाल्य विसृजेत्। तत आचान्तशिष्येन सार्द्धं वेद्यां दर्भसंस्तरे तां रात्रिं गुरुः शयीतेत्यधिवासविधिः ॥

इति श्रीप्राणतोषिण्यां द्वितीये धर्मकाण्डे अधिवास-
रूपपुष्पकथनं नाम चतुर्थः परिच्छेदः।

अथ दीक्षा ॥ विश्वसारतन्त्रे ॥ गुरोर्निमन्त्रणं कृत्वा परेद्युः साधकस्तदा। वस्त्रालङ्कारवर्णाद्यैर्गोभिश्चैव विधानतः। ततः स्नात्वा विधानेन नद्यादौ साधकोत्तमः ॥ विधानेन सङ्कल्पादिना तान्त्रिककर्मणि सङ्कल्पादौ सौरमासोल्लेख उक्तः। पिच्छिलातन्त्रे पञ्चमपटले ॥ सौरे मासि शुभा दीक्षा न चान्द्रे न च तारके। प्रयोगादीनि सर्वाणि सौरेणैव समाचरेत् ॥ विश्वसारे द्वितीयपटले। अङ्कुरारोपणानन्तरम् ॥ मातृकाः पूजयेत्तत्र गौर्य्याद्याः सर्वसम्मताः। गणेशाद्याः पूजयेत्ताः क्षमस्वेति क्षमां वदेत् ॥ मातृकाः पूर्वमुक्ताः ॥ वसोर्धारा तदा देया सर्वविघ्नविनाशिनी। पूजयेत् परया भक्त्या राजोपरिचरं बुधः। तथा नान्दीमुखश्राद्धं कुर्य्याच्च विधिनामुना। पितरं पितामहञ्चैव तथैव प्रपितामहम्। जीवे पितरि तत् श्राद्धं कुर्य्यात्तत् पितृ-

पूर्व्वकम्। मातामहं प्रमातामहं वृद्धप्रमातामहं ततः। षट्-पिण्डान् प्रक्षिपेद्देवि! तानुपास्य सुसाधकः। नामगोत्रानुरूपेण श्राद्धं कुर्य्याद्विधानतः। देवतापूर्व्वकं श्राद्धं कुर्य्यान्नान्दीमुखं ततः। पुरोरवा माद्रवाश्च सर्व्वकार्य्येषु देवता। नान्दीमुखवसुः सत्या देवता परिकीर्त्तिता। सर्व्वं दैवक्रमेणैव श्राद्धे दद्याज्ज-लादि च। यत्तु मह्यां निर्व्वाणतन्त्रे दशमोल्लासे॥ नान्दीमु-खाश्च पितरो नान्दीमुख्यश्च मातरः। पितामहादयोऽप्येवं मातामहादयोऽपि च। श्राद्धे नान्द्याभ्युदयिके समुल्लेख्या वरानने!॥ तथा। तत्रादौ देवपक्षे तु वाक्यं शृणु शुचिस्मिते!। कालादीनि निमित्तानि समुल्लिख्य ततः परम्। तत्तत्कर्म्माभ्यु-दयार्थमुक्त्वा साधकसत्तमः। पित्रादीनां त्रयाणान्तु मात्रादीनां तथैव च। मातामहानाञ्च मातामह्यादीनामपि प्रिये!। ष-ष्ठ्यन्तं कीर्त्तयेन्नाम गोत्रोच्चारणपूर्व्वकम्। विश्वेषाञ्चैव देवानां श्राद्धं पदमुदीरयेत्। कुशनिर्म्मितयोः पश्चाद्द्विप्रयोरहमित्यपि। करिष्ये परमेशानीत्यनुज्ञावाक्यमीरितम्। विश्वान् देवान् परि-त्यज्य पितृपक्षे तु पार्व्वति!। तथा मातामहस्यापि पक्षेऽनुज्ञा प्रकीर्त्तिता॥ इति मात्रादीनां मातामह्यादीनाञ्च श्राद्धमुक्तं तद्द्वादशदैविकश्राद्धपरम्। विश्वसारोक्तवचनन्तु आभ्युदयिक-श्राद्धपरम्। तदपि सामगानामिव। ऋग्वेदयजुर्व्वेदयोस्तु नव-दैवतश्राद्धमिति। एवञ्च द्वादशदैवताभ्युदयिकश्राद्धयोरुक्तप्रमाण-दर्शनादिच्छाविकल्पयति॥ विश्वसारे तथा॥ पुण्याहं वाचयित्वा तु सर्व्वकार्य्यं समुद्दिशेत्॥ इति वृद्धिश्राद्धम्॥

पञ्चदेवपूजापि तत्रैव॥ सर्व्वत्र सर्व्वकार्य्येषु गणेशघटपूर्व्वकम्। गणेशं सवितारञ्च शिवां शिवमतः परम्। विष्णुञ्च पूजयेद् यत्नात् सर्व्वकार्य्यार्थसिद्धये। लक्ष्मीं सरस्वतीं गङ्गां यमुनाञ्च तथैव च। दिक्पालान् दिग्गजान् देवान्दृषीन् विघ्नवासिनीं ग्रहांस्ततः-

परम्। मासराशितिथीर्योगान् करणानि च पार्वति!। पूजयेत् परया भक्त्या सर्वतन्त्रसमन्वितान्॥ दिक्पालादिपूजा पूर्वमुक्ता तद्विशेषस्तत्रतोऽनुसन्धेयः। सम्प्रति ग्रहपूजार्थमादौ ग्रहमन्त्रा उच्यन्ते॥ ग्रहजामले चतुर्थपटले॥ प्रणवो वह्निमारूढः शिव आद्येन्दुसंयुतः। मायाद्याः सप्तमः सर्गश्चतुर्वर्णो रवेर्मनुः। मन्त्रस्तु ओं ह्रां ह्रीं सः॥१॥ प्रणवः कचतुर्थस्तु स मनुः स्वरविन्दुकः। हादिवह्निसमारूढश्चतुर्दशस्वरान्वितः। विन्दू रषष्ठः सर्गश्च इन्दोर्वेदार्णको मनुः। मन्त्रस्तु ओं घौं स्रौं सः॥२॥ तारः शिखिसमारूढः शिवो मुखसमन्वितः। विन्द्वाढ्यः पुटितानेन माघाह्रादिः ससर्गकः। पञ्चवर्णात्मको देवि! भौमस्य कथितो मनुः। मन्त्रस्तु ओं क्रां क्रीं सः॥३॥ तारो नादसमारूढः सतुर्य्यः समनुस्वरः। विन्दुरेतद्द्वयं भानोर्द्विचतुर्थार्णकस्तथा। पञ्चवर्णात्मको देवि! बुधमन्त्रः समीरितः। मन्त्रस्तु ओं ह्रौं ह्रौं ह्रां सः॥४॥ तारः कदशमार्णश्च समनुस्वरविन्दुकः। एतत्त्रयं सूर्य्यतुर्य्यो गुरोः पञ्चार्णको मनुः॥ मन्त्रस्तु ओं ज्रौं ज्रौं ज्रौं सः॥५॥ चन्द्रजादिद्वितीयश्च दिननाथत्रितुर्य्यकः। चतुर्वर्णात्मको मन्त्रः शुक्रस्य कथितः प्रिये!। मन्त्रस्तु ओं ह्रौं ह्रीं सः॥६॥ प्रणवो रचतुर्थस्तु समनुस्वरविन्दुकः। एतद्द्वयं सूर्य्यतुर्य्यश्चतुर्वर्णः शनेर्मनुः। मन्त्रस्तु ओं शौं शौं सः॥७॥ मनुस्वराढ्यो घतुर्य्यः सविन्दुस्तेन सम्पुटः। खषष्ठो मुखविन्द्वाढ्यो भानुतुर्य्यात्मकः प्रिये!। चतुर्वर्णात्मको मन्त्रः स्वीराहोः समुदीरितः। मन्त्रस्तु ओं छीं छां छौं सः॥८॥ तारो दपञ्चमो वर्णो मनुस्वरनभोऽन्वितः। साम्यविन्दुः खषष्ठार्णः सोष्ठावो विन्दुनाष्टमः। सूर्य्यतुर्य्यो महेशानि! केतोः पञ्चार्णको मनुः। मन्त्रस्तु ओं फीं फां फौं सः॥९॥ पूजाक्रमस्तु आदौ मन्त्रं समुच्चार्य्य पश्चात् द्रव्यमुदीरयेत्। सम्प्रदानपदं पश्चात्त्यागात्मकपदं ततः। इति

रुद्रजामलीयवचनानुसारेण मूलमुच्चार्य्य एतत्पाद्यं औं सूर्य्याय ग्रहाय नम इत्यादिना पूजयेत्। सर्वेषामेष क्रमो ज्ञेयः। प्रसङ्गात्तेषां पुरश्चरणादिकं लिख्यते॥ यथा ब्रह्मजामले शिववाक्यम्॥ त्रिगुणे तु ग्रहे देवि! व्याधिशत्रुनृपार्दने। राष्ट्रोपप्लवने घोरे आयुषो नाश आगते। जातिध्वंसे कुलोच्छेदे सर्वनाश उपस्थिते। धनपुत्रादिकामे च कुर्य्याद्‌ग्रहपुरश्क्रियाम्। दशोत्तवर्षसंख्येन सहस्रेण जपेन तु। पुरश्चरणमुद्दिष्टं सर्वेषां व्योमचारिणाम्। दशांशं जुहुयाद्वह्नौ त्रिमध्वाक्तसमिद्वरैः। कल्पोक्तैर्गन्धकर्पूरमिश्रितेनोदकेन च। तर्पयेद्देवतां देवि! तद्दशांशक्रमेण तु। अभिषिञ्चेत्तद्दशांशं कर्पूरवासितैर्जलैः। तद्दशांशक्रमेणैव कुर्य्याद्ब्राह्मणभोजनम्। आद्यन्ते महती पूजा दक्षिणा विभवावधि॥ इति ग्रहपुरश्चरणम्। वरदातन्त्रे तृतीयपटले॥ अतस्तत् साधकेनापि कर्त्तव्यं ग्रहपूजनम्। अन्यथा ग्रहदोषेण न कदाचित् फलं भवेत्। सर्वाणि साधनानीह कृत्वा भक्त्या विधानतः। ऐहिके फलफलभाङ् न स्याद्विना हि ग्रहपूजनम्। कथयामि समासेन ग्रहसाधनमुत्तमम्। चन्द्रतारानुकूलं हि दिनं ग्राह्यं विचक्षणैः। ये ग्रहाश्चाभवन् दुष्टास्तान् प्रयत्नेन पूजयेत्। वस्त्रपुष्पाणि सर्वाणि तत्तद्वर्णानि दापयेत्। जुहुयात्तु यथाशक्ति ग्रहेष्विष्टप्रसिद्धये। तत्तद्‌ग्रहोक्तद्रव्याणि तेभ्यो दत्त्वा द्विजे दिशेत्॥ ग्रहदानन्तु ग्रहजामले षष्ठपटले॥ श्रीदेव्युवाच॥ दीनबन्धो! दयासिन्धो! यदि तुष्टोऽसि मां प्रति। आपद्विनाशनं कर्म्म कृपया कथय प्रभो!॥ ईश्वरोवाच॥ तैलवर्त्तिप्रपन्नस्य दीपस्य पवनात् प्रिये!। विनाशः स्याद्यथा तद्वदकाले प्राणसंक्षयः॥ अत आपद्विनाशाय दीर्घायुष्कत्वहेतवे। सारमेकं प्रवक्ष्यामि यत्नाद्दानं समाचरेत्। तुलादानञ्च यो दद्याद्‌ग्रहविप्राय सुन्दरि!। आपन्मुक्तो भवेत् सोऽपि भुवि सम्मोदते

सुखम् ॥ १ ॥ सुवर्णस्य तुलां दद्याद् ग्रहविप्राय यः प्रिये !। तस्य तुष्टः सुरगुरुरायुर्वृद्धिं करोति सः। यस्तु रौप्यतुलादानं दद्याद् ग्रहद्विजाय च। सन्तुष्टस्तस्य शुक्रः सन् संहजेद्दीर्घजीवितम् ॥२॥ ग्रहद्विजाय यो दद्यात्तुलां ताम्रस्य पार्वति !। सन्तुष्टो मङ्गलस्तस्य दीर्घायुष्ट्वं करोति हि ॥ ३ ॥ यो दद्याद् ग्रहविप्राय पित्तलस्य तुलां प्रिये !। तस्य तुष्टो बुधः कुर्य्यादायुःपुष्टिं सुगौरवम् ॥ ४ ॥ ग्रहविप्राय लौहस्य तुलां यस्तु प्रयच्छति। प्रीतः शनैश्चरस्तस्य विपुलायुः प्रयच्छति ॥ ५ ॥ सीसकस्य तुलां दद्याद् ग्रहविप्राय यः प्रिये !। तस्याशु राहुः सुप्रीतः सौभाग्यायुः प्रयच्छति ॥ ६ ॥ यः खर्परतुलां दद्याद् ग्रहविप्राय सुन्दरि !। सन्तुष्टो भगवान् केतुस्तस्यायुर्वर्द्धयेत् सुखम् ॥ ७ ॥ तुलां ताम्रस्य यो दद्याद् ग्रहविप्राय सुन्दरि !। आदित्यस्तस्य सुप्रीतो दीर्घायुः परियच्छति ॥ ८ ॥ ग्रहविप्राय यो दद्यात्तुलां कांस्यस्य सुन्दरि !। सन्तुष्टस्तस्य रात्रीशो विभूत्यायुः प्रयच्छति ॥ ९ ॥ वैदूर्य्यं नीलमाणिक्ये पद्मरागञ्च मौक्तिकम्। वज्रं परेशं गोमेदं तथा मरकतं प्रिये !। दद्याद्गुरुत्सृज्य विप्राय स्वयञ्च विभृयात्करे ॥ इति ग्रहदानम् ॥

अथ ग्रहकवचम् ॥ अष्टादशपटले ॥ पार्वत्युवाच। श्रीशान ! सर्वशास्त्रज्ञ ! देवताधीश्वर ! प्रभो !। अक्षयं कवचं दिव्यं ग्रहादिदैवतं विभो !। पुरा संसूचितं गुह्यं सुभक्ताचयकारकम् ॥ कृपा मयि तवास्ते चेत् कथय श्रीमहेश्वर !॥ श्रीशिव उवाच.॥ शृणु देवि ! प्रियतमे ! कवचं देवदुर्लभम्। यद्धृत्वा देवताः सर्वे अमराः स्युर्वरानने !। तव प्रीतिवशाद्वच्मि न देयं यस्य कस्यचित्। ओं ह्रां ह्रीं सो मे शिरः पातु श्रीसूर्य्यग्रहभूपतिः। ओं घौं सौं ओं मे मुखं पातु श्रीचन्द्रो ग्रहराजकः। ओं ह्रां ह्रीं ह्रां सः करौ पातु ग्रहसेनापतिः कुजः। पायादथों

ङौं ह्रां सः पादौ ज्ञो नृपबालकः । ओं जौं जौं जौं सः कटिं पातु पायादमरपूजितः । ओं ष्ट्रौं ह्रीं सो दैत्यपूज्यो हृदयं परिरक्षतु । ओं शौं शौं सः पातु नाभिं मे ग्रहप्रेष्यं शनैश्वरः । ओं छौं छां छौं सः कण्ठदेशं श्रीराहुर्देवमर्द्दकः । ओं फौं फां फौं सः शिखी पातु सर्वाङ्गमभितोऽवतु । ग्रहाश्चैते भोगदेहा नित्यास्तु स्फुटितग्रहाः । एतदंशांशसम्भूताः पान्तु नित्यन्तु दुर्जनात् । अक्षयं कवचं पुण्यं सूर्य्यादिग्रहदैवतम् । पठेद्वा पाठयेद्वापि धारयेद्यो जनः शुचिः । स सिद्धिं प्राप्नुयादिष्टां दुर्लभां त्रिदशैस्तु याम् । तव स्नेहवशादुक्तं जगन्मङ्गलकारकम् । ऋषिः प्रोक्तो भैरवोऽस्य छन्दोऽनुष्टुप्प्रकीर्त्तितम् । श्रीसूर्य्यादिग्रहास्तत्र देवताः परिकीर्त्तिताः । सर्वकामार्थसंसिद्धेश्च विनियोगो मयोदितः । ग्रहयन्त्रान्वितं कृत्वाभीष्टमक्षयमाप्नुयात् ॥

इति ग्रहजामले पार्वतीश्वरसंवादे जगद्दुर्लभाक्षय नाम कवचं समाप्तम् ॥

अथ तिथिपूजा ॥ गायत्रीतन्त्रे । श्रीमहादेव उवाच ॥ तिथेर्ध्यानं विना देवि ! तिथेर्मन्त्रं तथैव च । अज्ञात्वा परमेशानि ! दिनकृत्यं करोति यः । तस्य सर्वं भवेद्व्यर्थं दिनकृत्यं वरानने ! । या तिथिः सा महामाया आद्यामूर्त्तिर्जगन्मयी । कृष्णपक्षे कृष्णवर्णा शुक्ले चन्द्र समप्रभा । द्विभुजां शुक्लरूपाञ्च खेलत्खञ्जनगामिनीम् । द्विलोचनां शशिकलां सिन्दूरतिलकोज्ज्वलाम् । तप्तहाटकनिर्माणनानालङ्कारभूषिताम् । दाड़िमीवीजसदृशदशनद्युतिशोभनाम् । ध्यायेत् प्रतिपदं देवीं जपपूजाविशुद्धये ॥ मन्त्रो यथा । ग्रीं प्रतिपद्भ्यः स्वाहा ॥ १ ॥ एवं द्विलोचनां शशिकलां शुद्धस्फटिकशोभनाम् । शुद्धाभरणशोभाढ्यां शुक्लवस्त्रपरिच्छदाम् । नानाकटाक्षसंयुक्तभ्रूलतापरिशोभिताम् ॥ सिन्दूरतिलकोद्दीप्तां खञ्जनाञ्चितलोचनाम् । द्विभुजां सुन्दरा-

क्रीडञ्च किशोरीं नवयौवनाम्। ध्यात्वा द्वितीयां चार्वङ्गि! जपेन्मन्त्रं यथा शृणु। ऐं द्वितीयायै स्वाहा॥ २॥ शुक्ल-पद्मप्रतीकाशां शुक्लवस्त्रपरिच्छदाम्। शुक्लाभरणशोभाढ्यां पुण्ड-रीकोपरिस्थिताम्। द्विलोचनां शशिकलां सिन्दूरतिलको-ज्ज्वलाम्। कटाक्षविशिखोपेतां द्विभुजां तृतीयां भजेत्। श्रीं ऐं तृतीयायै स्वाहा॥ ३॥ चतुर्थीं शुक्लचार्वङ्गीं यज्ज्ञात्वा सिद्धितां व्रजेत्। कुन्दपुष्पसमाभासां द्विभुजां लोललोचनाम्। शुक्लवस्त्रपरीधानां शुक्लाभरणभूषिताम्। सिन्दूरतिलकोद्दीप्तां खञ्जनाञ्चितलोचनाम्॥ ऐं हुं चतुर्थ्यै स्वाहा॥ ४॥ पञ्चमीं शृणु चार्वङ्गि! सर्वसिद्धिप्रदायिनीम्। यज्ज्ञात्वा परमेशानि! तिथेः फलमवाप्नुयात्॥ शुद्धस्फटिकसङ्काशां श्वेतपद्मोपरिस्थि-ताम्। हास्ययुक्तां प्रसन्नास्यां कटाक्षविशिखोज्ज्वलाम्। कन्द-र्पधनुराकारभ्रूलतापरिशोभिताम्। द्विभुजां श्वेतवर्णाञ्च श्वेता-लङ्कारभूषिताम्॥ लोचनद्वयसंयुक्तां सिन्दूरतिलकोज्ज्वलाम्। मृणालसदृशाकारबाहुवल्लीविराजिताम्। खेलत्खञ्जनगामीञ्च चारुचूड़ाविराजिताम्॥ ह्रीं ऐं ह्रीं पञ्चम्यै स्वाहा। ह्रीं ऐं ह्रीं विशेषः। श्रीपञ्चमीदिने कर्त्तव्यं पूजनं महत्। निरीक्ष्य दक्षिण-नाथे यद्ध्यानपूजादिकञ्चरेत्। ध्यायेत् परमयत्नेन पञ्चमीति-थिरूपिणीम्। ध्यात्वा पाद्यादिकं दत्त्वा प्रजपेद्दशधा मनुम्। ततस्तु पूजयेद्देवीं शारदां वाग्विलासिनीम्॥५॥ कुन्दपुष्पसमा-भासां द्विभुजां लोललोचनाम्। कटाक्षविशिखोद्दीप्तां सिन्दूर-तिलकोज्ज्वलाम्। दाड़िमीवीजसदृशदशनद्युतिमुज्ज्वलाम्। शुक्लालङ्कारसुभगां शुक्लासननिवासिनीम्। शुक्लवस्त्रपरिच्छिन्नां शुक्लहारविनोदिनीम्। द्विभुजां चन्द्रवदनां ध्यायेदात्मविभूतये। श्रीं ह्रीं षष्ठ्यै स्वाहा॥ ६॥ शरच्चन्द्रप्रतीकाशां द्विभुजां शशि-शेखराम्। लोचनद्वयसंयुक्तां खेलत्खञ्जनगामिनीम्। सिन्दू-

रतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम् । कटाक्षविशिखोपेतां भ्रूलतापरिशोभिताम् । शुक्लासनसमासीनां शुक्लाभरणभूषिताम् । शुक्लवस्त्रपरीधानां ध्यायेदात्मविभूतये । ह्रीं श्रीं सप्तम्यै स्वाहा श्रीं ह्रीं ॥ ७ ॥ राकाचन्द्रप्रतीकाशां द्विभुजां चन्द्रशेखराम् । पूर्णचन्द्रमुखश्रेणीं कुटिलालकशोभिताम् । हास्ययुक्तां प्रसन्नास्यां श्वेतवस्त्रपरिच्छदाम् । श्वेताभरणशोभाढ्यां किशोरीं नवयौवनाम् । मालाकटाक्षसंयुक्तां भ्रूलतापरिशोभिताम् । सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम् । क्रीं हुं ऐं अष्टम्यै स्वाहा ऐं हुं क्रीं ॥८॥ श्वेतपद्मप्रतीकाशां द्विभुजां लोललोचनाम् । दाड़िमीवीजसदृशदन्तपंक्तिपरिच्छदाम् । शुक्लपट्टाम्बरधरां शुक्लवस्त्रोत्तरीयिणीम् । ललाटे पट्टिकां शुद्धां सिन्दूरतिलकोज्ज्वलाम् । नानाभरणदीप्ताङ्गीं पीतगन्धप्रलेपिताम् । मुक्तावर्त्तुलहारेण कम्बुकण्ठसुशोभिताम् । नानामाल्यपरिच्छिन्नां चित्रराजविराजिताम् । श्रीं हुं नवम्यै स्वाहा हुं श्रीं ॥ ९ ॥ मल्लिकापुष्पसङ्काशां द्विभुजां लोललोचनाम् श्वेतासनोपविष्टाञ्च श्वेतांशुकपरिच्छदाम् । श्वेताभरणसंयुक्तां श्वेतगन्धविलेपनीम् । सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम् ॥ ऐं श्रीं दशम्यै स्वाहा श्रीं ऐं ॥ १० ॥ केतकीपुष्पसङ्काशां भ्रूलतापरिभूषिताम् । नानाकटाक्षसंयुक्तां मत्तद्विरदगामिनीम् । नानालङ्कारसुभगां पीतवस्त्रपरिच्छदाम् । पीतगन्धप्रलिप्ताङ्गीं सिन्दूरतिलकोज्ज्वलाम् । दाड़िमीवीजसदृशदन्तपंक्तिमनुत्तमाम् । द्विभुजां सुन्दरीं देवीं नमास्यात्मविभूतये ॥ ॐ क्रीं ॐ एकादश्यै स्वाहा ॐ क्रीं ॐ ॥ ११ ॥ पीतपद्मसमाभासां शुक्लवस्त्रपरिच्छदाम् । शुक्लचन्दनसिक्ताङ्गीं द्विभुजां लोललोचनाम् । शुक्लाभरणशोभाढ्यां शुक्लासनसमाश्रयाम् । दाड़िमीवीजसदृशदशनद्युतिशोभनाम् । सिन्दूरतिलकोद्दीप्तां ललाटपट्टिकां शुभाम् । ह्रीं श्रीं

ह्रीं द्वादश्यै स्वाहा ह्रीं श्रीं ह्रीं ॥ १२ ॥ रक्तचन्द्रप्रतीकाशां किशोरीं नवयौवनाम्। रक्तवस्त्रपरीधानां कुटिलालकमण्डिताम्। द्विभुजां सुन्दरीं शुद्धां पूर्णचन्द्रमुखप्रभाम्। द्विलोचनां चन्द्ररेखां विष्णुपूज्यां बृहत्कटीम्। सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम्। नानाकटाक्षसंयुक्तां नानाशृङ्गारशोभनाम्। ध्यात्वां त्रयोदशीं देवीं प्रजपेन्मन्त्रमुत्तमम्॥ श्रीं ऐं त्रयोदश्यै स्वाहा ऐं श्रीं ॥ १३ ॥ शुद्धस्फटिकसङ्काशां हरिहस्तविनोदिनीम्। नानालङ्कारसुभगां पीतमाल्यपरिच्छदाम्। श्वेतपद्मसमासीनां द्विभुजां लोललोचनाम्। कटाक्षविशिखोद्दीप्तां सिन्दूरतिलकोज्ज्वलाम्। दाड़िमीवीजसदृशदशनद्युतिमुज्ज्वलाम्। कदम्बकोरकाकारस्तनद्वयमनोहराम्। हास्ययुक्तां प्रसन्नास्यां किशोरीं नवयौवनाम्॥ क्रीं श्रीं ह्रीं चतुर्दश्यै स्वाहा ह्रीं श्रीं क्रीं ॥ १४ ॥ सप्तमपटले ॥ श्रीमहादेव उवाच ॥ पूर्णिमां शृणु चार्वङ्गि! यया सिद्धिमयो भवेत्। कोटिविद्युल्लताकारां चतुर्बाहुसमन्विताम्। पीतांशुकपरीधानां रत्नहारविराजिताम्। शङ्खकङ्कणकेयूरनानाशृङ्गारभूषिताम्। रत्नकुण्डलसंयुक्तस्फुरद्गण्डमनोहराम्। त्रिभङ्गललिताकारां सिन्दूरतिलकोज्ज्वलाम्। कटाक्षलक्षसंयुक्तां भ्रूलतापरिशोभिताम्॥ ह्रीं श्रीं क्रीं श्रीं पूर्णिमायै स्वाहा श्रीं क्रीं श्रीं ह्रीं ॥ १५ ॥ एतत्ते कथितं देवि! पूर्णमन्त्रं परात्परम्। एतास्तु तिथयो देवि! शुक्लपक्षे वरानने!। कृष्णपक्षे महेशानि! तिथयस्तु सुशोभनाः। नीलाञ्जनचयप्रख्याः किशोर्य्यो नवयौवनाः। तासां ध्यानं प्रवक्ष्यामि सावधानावधारय॥ दलिताञ्जनसङ्काशां पीतांशुकपरिच्छदाम्। पीतगन्धप्रलिप्ताङ्गीं पीताभरणभूषिताम्। पीतपद्मसमासीनां किशोरीं नवयौवनाम्। द्विलोचनां चन्द्ररेखां द्विभुजां कोरकस्तनीम्॥ ललाटपट्टिकाशुद्धां सिन्दूरतिलकोज्ज्वलाम्। खेलत्खञ्जन-

गामीञ्च त्रिभङ्गिललिताकृतिम् । दाड़िमवीजसदृशदशनज्योतिरुज्ज्वलाम् । कृष्णपक्षे महेशानि ! एतद्ध्यानं प्रशस्यते । सर्वासां परमेशानि ! एकेन भवति प्रिये ! । सर्वासां पूर्ववन्मन्त्रममावास्यां विना शिवे ! । अमावास्यामनुं देवि ! शृणुष्व वरवर्णिनि ! ॥ श्रीं ह्रीं ह्रीं श्रीं अमावास्यायै स्वाहा श्रीं ह्रीं ह्रीं श्रीं ॥ अथ वक्ष्यामि सफलं पक्षध्यानं वरानने ! ॥ शङ्खकुन्दसमाभासां नवयौवनसंयुताम् । चतुर्भुजां त्रिनयनां मत्तद्विरदगामिनीम् । ललाटपट्टिकामध्ये सिन्दूरतिलकस्थितिम् । भ्रमदभ्रमरनीलाभामञ्जनाञ्चितलोचनाम् । पीतांशुकपरीधानां कृष्णवस्त्रोत्तरीयिणीम् । नानालङ्कारसुभगां नीलपद्मोपरिस्थिताम् । घूर्णायमाननयनां नीलपद्मविधारिणीम् । सदा षोड़शवर्षीयां कदम्बकोरकस्तनीम् । हीरकद्युतिसङ्काशदशनज्योतिरुज्ज्वलाम् । नानापुष्पमयैर्हारैर्नानागन्धमयीं पराम् । प्रत्यहं भावयेद्देवीं शुक्लपक्षस्वरूपिणीम् ॥ ऐं ऐं क्रीं क्रीं शुक्लपक्षाय स्वाहा ऐं ऐं क्रीं क्रीं ॥ कृष्णपक्षे महेशानि ! अधुना निगदामि ते । महामरकतश्यामां चतुर्बाहुसमान्विताम् । पीनोत्तुङ्गकुचां रम्यां चित्रवस्त्रविलासिनीम् । नानाशृङ्गारवेशाढ्यां स्फुरच्चकितलोचनाम् । सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम् । कन्दर्पधनुराकारभ्रूलतापरिशोभिताम् । रत्नहारेण सहितनागहारविराजिताम् । पीतपद्मसमासीनां चित्रचूड़ाविराजिताम् । पीतविद्युत्समाकान्तुरत्तरीयवसनच्छविम् । पूर्णचन्द्रमुखीं देवीं कृष्णपक्षस्वरूपिणीम् ॥ श्रीं श्रीं कृष्णपक्षाय स्वाहा श्रीं श्रीं ॥ श्रीशिव उवाच ॥ तिथेर्ध्यानं तिथेर्मन्त्रं पक्षध्यानं तथैव च ॥ पक्षमन्त्रं तथा देवि ! दिवसे दिवसे सुधीः । प्रत्यहं कुरुते यस्तु तस्य सिद्धिरदूरतः । एतास्तु तिथयो देवि ! सूर्य्यमण्डलसंस्थिताः । पक्षध्यानं प्रथमतस्तिथिध्यानं ततः प्रिये ! । पक्षमन्त्रं ततो

जप्त्वा तिथिंमन्त्रं ततो जपेत्। ततः सिद्धिमवाप्नोति जपपूजादिका च या। दिनकृत्यं महेशानि! यः करोति दिने दिने। पञ्चपूजां प्रथमतः कृत्वा सिद्धिमवाप्नुयात्। तिथिपूजां विना देवि! जपयज्ञादिका क्रिया। सर्वं निष्फल याति आमपात्रमिवाम्भसि। दिवसे दिवसे देवि! तिथिमासाद्य यत्नतः। प्रातःकाले ततो धीमान् तिथिध्यानं समाचरेत्। दशधा प्रजपेन्मन्त्रं सूर्य्यं दृष्ट्वा प्रयत्नतः। तदा तिथिफलं प्राप्य सर्वं पूजाफल लभेत्। एतत्तत्त्वमविज्ञाय आयुर्याति दिने दिने। तिथिरूपा महादेवी महामाया जगन्मयी। ध्यानमन्त्रं विना देवि! सर्वेषां सिद्धिनाशिनी। प्रत्यहं कुरुते यस्तु जपध्यानं तिथेः प्रिये!। गङ्गास्नानफलं सोऽपि लभते नात्र संशयः। अश्वमेधमहायज्ञे व्यासो होता यदि प्रिये!। विफलमश्वमेधं हि तिथिध्यानं विना भवेत्। अमृतेनामृतं कृष्णे प्रीयन्ते देवताः क्रमात्। प्रथमां पिबते वह्निर्द्वितीयां तपनः कलाम्। विश्वदेवास्तृतीयान्तु चतुर्थीन्तु प्रजापतिः। पञ्चमीं वरुणश्चापि षष्ठीं पिबति वासवः। सप्तमीमृषयो दिव्या वसवोऽष्टौ तथाष्टमीम्। नवमीं कृष्णपक्षस्य पिबतीन्द्रः कलामपि। दशमीं मरुतश्चापि रुद्र एकादशीं कलाम्। द्वादशीन्तु कलां विष्णुर्धनदश्च त्रयोदशीम्। चतुर्दशीं पशुपतिः कलां पिबति नित्यशः। ततः पञ्चदशीञ्चापि पिबन्ति पितरः कलाम्॥

अथ तिथिकवचम्। अस्य तिथीनां कवचस्य अश्वत्थामबलिव्यासहनूमद्विभीषणकृपपरशुरामा ऋषयो गायत्रीच्छन्दः श्रीमृत्युञ्जयशिवो देवता धर्मार्थकाममोक्षेषु विनियोगः। पूर्वे पातु सदा नित्या क्रोङ्कारी प्रतिपत्तिथिः। क्लीङ्कारी पातु मे नित्यं द्वितीया ब्रह्मपूजिता। ऐङ्कारी पातु मे नित्यं तृतीया पश्चिमे परा। ब्लुङ्कारी पातु मे नित्या चतुर्थी विष्णुपूजिता।

ल्लुङ्कारी पातु मे नित्यमूर्द्ध्वं देहमहर्निशम्। क्लीङ्कारी पातु मे नित्यं पञ्चमी मुखमण्डलम्। श्रीङ्कारी पातु मे नित्यं षष्ठीरूपा च पार्वती। स्त्रीङ्कारी सप्तमी पातु नित्यं मे नाभिमण्डलम्। हुङ्कारी चाष्टमी नित्यं कण्ठं मे पातु सर्वदा। श्रीङ्कारी नवमी नित्यं स्वाधिष्ठानं सदावतु। दशमी पातु मे नित्यं हस्तयुग्मं यथा तथा। एकादशी सदा पातु चाक्षियुग्ममहर्निशम्। द्वादशी पातु मे नित्यं हस्तयुग्मं यथा तथा। त्रयोदशी महालक्ष्मीः नेत्रस्थाननिवासिनी। त्रयोदशी पातु नित्यं हंस इत्यक्षरात्मिका। हङ्कारः पातु मे नित्यं पादयुग्ममहर्निशम्। सःकारः पातु मे नित्यं पादाग्रात् केशमण्डलम्। चतुर्दशी महामाया सर्वत्र परिरक्षतु। स्वाकारश्चतुर्दशी नित्या नित्यं मे धनसम्पदम्। हाकारः पूर्णिमा नित्यं देहि मे आयुवर्द्धनम्। श्रीं हुं ह्रीं स्वाहा सर्वरूपा देवी तिथिरूपा च मां परिरक्षतु सर्वदा। हुं ह्रीं अमावास्या सदा पातु दारान् पुत्त्रपरिच्छदम्। ह्रीं हुं ह्रीं स्वाहा कथितं कवचं देवि! त्रैलोक्येषु च दुर्लभम्। इदं कवचमज्ञात्वा कवचान्यं पठेत्तु यः। अन्येषां कवचानाञ्च तेजांसि हरते तिथिः। तस्माद्यत्नेन हे देवि! तिथीनां कवचं पठेत्। ध्यानं मन्त्रं तथा स्तोत्रं कवचञ्च तथा प्रिये!। कलिकालमतं देवि! परतत्त्वं विनिर्गतम्। इति ते कथितं देवि! सारात्सारं परात्परम्॥

इति श्रीवर्णविलासतन्त्रे गणेशजतुकर्णसुभगासंवादे
तिथिकवचं समाप्तम्॥

मासादीनां ध्यानन्तु कामधेनुतन्त्रादावनुसन्धेयमत्र ग्रन्थगौरवभिया न लिखितम्॥ अथ वर्णानां ध्यानादिकं वर्णोद्धारतन्त्रोक्तम्। प्रणाममन्त्रस्तु सर्वत्र कामधेनुतन्त्रोक्त इति। तद्यथा॥ केतकीपुष्पगर्भाभां द्विभुजां हंसलोचनाम्। शुक्ल-

पट्टाम्बरधरां पद्ममाल्यविभूषिताम्। चतुर्वर्गप्रदां नित्यं नित्यानन्दमयीं पराम्। वराभयकरां देवीं नागपाशसमन्विताम्। एवं ध्यात्वा अकारन्तु तन्मन्त्रं दशधा जपेत्॥ अ॥ ध्यानमस्याः प्रवक्ष्यामि षड्भुजां रक्तलोचनाम्। रत्नकङ्कणकेयूरहारोज्ज्वलकलेवराम्। सिद्धां सिद्धिप्रदां सौम्यां सिद्धगन्धर्वसेविताम्। एवं ध्यात्वा सुरश्रेष्ठां तन्मन्त्रं दशधा जपेत्॥ आ॥ धूम्रवर्णां महारौद्रीं पीताम्बरयुतां पराम्। कामदां सिद्धिदां सौम्यां नित्योत्साहविवर्द्धिनीम्। चतुर्भुजान्तु वरदां हरिचन्दनभूषिताम्। एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्॥ इ॥ चतुर्भुजां रक्तवर्णां रक्तपुष्पोपशोभिताम्। चारुचन्दनदिग्धाङ्गीं रक्तपङ्कजलोचनाम्। रक्तचीरपरीधानां धर्मकामार्थमोक्षदाम्। एवं ध्यात्वा सुरश्रेष्ठां तन्मन्त्रं दशधा जपेत्॥ ई॥ पीतवर्णां त्रिनयनां पीताम्बरधरां पराम्। द्विभुजां जटिलां भीमां सर्वसिद्धिप्रदायिनीम्। एवं ध्यात्वा सुरश्रेष्ठां तन्मन्त्रं दशधा जपेत्॥ उ॥ द्विभुजां शुक्लवर्णाञ्च जटामुकुटशोभिताम्। शुक्लमाल्याम्बरधरां चारुचन्दनभूषिताम्। चतुर्वर्गप्रदां नित्यां रक्तपङ्कजलोचनाम्। एवं ध्यात्वा तु तन्मन्त्रं दशधा जपमाचरेत्॥ ऊ॥ षड्भुजां नीलवर्णाञ्च नीलाम्बरधरां पराम्। नानालङ्कारभूषाढ्यां सर्वालङ्कृतमस्तकाम्। भक्तिप्रदां भगवतीं भोगमोक्षप्रदायिनीम्। एवं ध्यात्वा सुरश्रेष्ठां तन्मन्त्रं दशधा जपेत्। पञ्चप्राणमयं वर्णं चतुर्ज्ञानमयं तथा। रक्तविद्युल्लताकारं ऋकारं प्रणमाम्यहम्॥ ऋ॥ ध्यानमस्य प्रवक्ष्यामि द्विभुजां पद्मलोचनाम्। सन्तप्तस्वर्णवर्णाभां सर्वालङ्कारभूषिताम्। रक्तपद्मेक्षणां देवीं रत्नहारविभूषिताम्। एवं ध्यात्वा सुरश्रेष्ठां तन्मन्त्रं दशधा जपेत्। चतुर्ज्ञानमयं वर्णं पञ्चप्राणमयं सदा। त्रिशक्तिसहितं वर्णं प्रणमामि सदा प्रिये!॥ ॠ॥ स्वर्णचम्पकवर्णाञ्च स्वर्णालङ्कार-

विग्रहाम् । चतुर्भुजां त्रिनयनां रक्तचन्दनचर्चिताम् । प्रण-
मामि सदा देवीं धर्मकामार्थमोक्षदाम् । एवं ध्यात्वा ब्रह्मरूपां
तन्मन्त्रं दशधा जपेत् ॥ ऌ ॥ ध्यानमस्याः प्रवक्ष्यामि पीतवर्णां
चतुर्भुजाम् । पीताम्बरपरीधानां नानालङ्कारमस्तकाम् । विचित्र-
माल्याभरणां देवदानवसेविताम् । चतुर्वर्गप्रदां नित्यां नित्यो-
त्साहविवर्द्धिनीम् । एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा
जपेत् ॥ ॡ ॥ रक्ताम्बरपरीधानां षड्भुजां रक्तलोचनाम् ।
विचित्राभरणां नित्यां चतुर्वर्गप्रदायिनीम् । ईषद्धास्यमुखीं
सौम्यां देवगन्धर्वसेविताम् । एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं
दशधा जपेत् ॥ ए ॥ विचित्ररूपिणीं देवीं विचित्राम्बरधारिणीम् ।
विचित्रमाल्याभरणां चतुर्बाहुसमन्विताम् ॥ नानालङ्कारसंयुक्तां
चतुर्वर्गफलप्रदाम् । देवदानवगन्धर्वैः सेवितां मोक्षकाङ्क्षिभिः ।
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ॥ ऐ ॥ रत्नालङ्कार-
संयुक्तां पद्मरागप्रभां शुभाम् । शरत्पूर्णेन्दुवदनां विचित्रवसना-
न्विताम् । चतुर्भुजां त्रिनयनां स्मेरास्यां नीलकुन्तलाम् । विद्यु-
द्दामसमानाङ्गीं मुक्तापंक्तिस्रजं भजे । एवं ध्यात्वा ब्रह्मरूपां
तन्मन्त्रं दशधा जपेत् ॥ ओ ॥ चतुर्भुजां त्रिनयनां जटामुकुट-
मण्डिताम् । श्वेतरोहितपीतादिपुष्पहारोपशोभिताम् । सदा
स्मेरमुखीं सौम्यां चतुर्वर्गप्रदायिनीम् । एवं ध्यात्वा ब्रह्मरूपां
तन्मन्त्रं दशधा जपेत् ॥ औ ॥ जवादाड़िमपुष्पाभां द्विभुजां
रक्तलोचनाम् । रक्ताम्बरपरीधानां रक्तालङ्कारभूषिताम् । चतु-
र्वर्गप्रदां सौम्यां वरदां नागशेखराम् । एवं ध्यात्वा ब्रह्मरूपां
तन्मन्त्रं दशधा जपेत् । अं ॥ सन्तप्तहेमवर्णाभां सर्वालङ्कार-
भूषिताम् । रत्नयज्ञोपवीताञ्च रत्नाकङ्कणराजिताम् । पूर्णेन्दु-
वदनां सौम्यां तुरीयकरसंयुताम् । चन्द्रसूर्य्याग्निरूपेण नयन-
त्रितयान्विताम् । साधकाभीष्टदां नित्यां धर्मकामार्थमोक्षदाम् ।

एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ॥ अः ॥ जवायावक-सिन्दूरसदृशीं कामिनीं पराम्। चतुर्भुजां त्रिनेत्राञ्च बाहुवल्ली-विराजिताम्। कदम्बकोरकाकारस्तनयुग्मविराजिताम्। रत्न-कङ्कणकेयूरहारनूपुरभूषिताम्। एवं ककारं ध्यात्वा तु तन्मन्त्रं दशधा जपेत् ॥ क ॥ बन्धूकपुष्पसङ्काशां रत्नालङ्कारभूषिताम्। वराभयकरां नित्यामीषद्धास्यमुखीं पराम्। एवं ध्यात्वा खका-रन्तु तन्मन्त्रं दशधा जपेत्। गुणत्रययुतं देवि! पञ्चदेवमयं सदा। त्रिशक्तिसंयुतं वर्णं खकारं प्रणमाम्यहम् ॥ ख ॥ दाड़िमी-पुष्पसङ्काशां चतुर्बाहुसमन्विताम्। रक्ताम्बरधरां नित्यां रत्ना-लङ्कारभूषिताम्। एवं ध्यात्वा गकारन्तु तन्मन्त्रं दशधा जपेत्। पञ्चप्राणमयं वर्णं सर्वशक्त्यात्मकं प्रिये!। तरुणादित्य-सङ्काशां कुण्डलीं प्रणमाम्यहम् ॥ ग ॥ मालतीपुष्पवर्णाभां षड्-भुजां रक्तलोचनाम्। शुक्लाम्बरपरीधानां शुक्लमाल्यविभूषिताम्। तदा स्मेरमुखीं रम्यां लोचनत्रयराजिताम्। एवं ध्यात्वा घकारन्तु तन्मन्त्रं दशधा जपेत्। निर्गुणं त्रिगुणोपेतं सदा त्रिगोलसंयुतम्। सर्वगं सर्वदा शान्तं घकारं प्रणमाम्यहम् ॥ घ ॥ धूम्रवर्णां महाघोरां ललज्जिह्वां चतुर्भुजाम्। पीता-म्बरपरीधानां साधकाभीष्टसिद्धिदाम्। एवं ध्यात्वा ब्रह्म-रूपां तन्मन्त्रं दशधा जपेत्। सर्वदेवमयं वर्णं त्रिगुणं लोल-लोचने!। पञ्चप्राणमयं वर्णं ङकारं प्रणमाम्यहम् ॥ ङ ॥ तुषारकुन्दपुष्पाभां नानालङ्कारभूषिताम्। सदा षोड़शव-र्षीयां वराभयकरां पराम्। शुक्लवस्त्रावृतकटिं शुक्लवस्त्रो-त्तरीयिणीम्। वरदां शोभनां रम्यामष्टबाहुसमन्विताम्। एवं ध्यात्वा चकारन्तु तन्मन्त्रं दशधा जपेत् ॥ च ॥ ध्यान-मस्याः प्रवक्ष्यामि द्विभुजान्तु त्रिलोचनाम्। पीताम्बरधरां नित्यां वरदां भक्तवत्सलाम्। एवं ध्यात्वा छकारन्तु तन्मन्त्रं

दशधा जपेत्। त्रिविन्दुसहितं वर्णं सदेवेश्वरसंयुतम्। पीत-विद्युल्लताकारं छकारं प्रणमाम्यहम्॥ छ॥ नानालङ्कारसंयुक्तै-र्भुजैर्द्वाशभिर्युताम्। रक्तचन्दनदिग्धाङ्गीं चित्राम्बरविधारिणीम्। त्रिलोचनां जगद्धात्रीं वरदां भक्तवत्सलाम्। एवं ध्यात्वा जका-रन्तु तन्मन्त्रं दशधा जपेत्॥ ज॥ सन्तप्तहेमवर्णाभां रक्ताम्बर-विभूषिताम्। रक्तचन्दनलिप्ताङ्गीं रक्तमाल्यविभूषिताम्। चतु-र्दशभुजां देवीं रत्नहारोज्ज्वलां पराम्। एवं ध्यात्वा झकारन्तु तन्मन्त्रं दशधा जपेत्॥ झ॥ चतुर्भुजां धूम्रवर्णां कृष्णाम्बरविभू-षिताम्। नानालङ्कारसंयुक्तां जटामुकुटराजिताम्। ईषद्धास्य-मुखीं नित्यां वरदां भक्तवत्सलाम्। एवं ध्यात्वा ञकारन्तु त-न्मन्त्रं दशधा जपेत्॥ ञ॥ मालतीकुन्दपुष्पाभां पूर्णचन्द्रनिभे-क्षणाम्। दशबाहुसमायुक्तां सर्वालङ्कारभूषिताम्। परमोक्ष-प्रदां नित्यां सदा स्मेरमुखीं पराम्। एवं ध्यात्वा टकारन्तु तन्मन्त्रं दशधा जपेत्॥ ट॥ पूर्णचन्द्रनिभां देवीं विकसत्पङ्कजे-क्षणाम्। सुन्दरीं षोड़शभुजां धर्मकामार्थमोक्षदाम्। एवं ध्यात्वा ठकारन्तु तन्मन्त्रं दशधा जपेत्॥ ठ॥ जवासिन्दूरसङ्काशां वरा-भयकरां पराम्। त्रिनेत्रां वरदां नित्यां परमोक्षप्रदायिनीम्। एवं ध्यात्वा डकारन्तु तन्मन्त्रं दशधा जपेत्। चतुर्ज्ञानमयं वर्ण-मात्मादितत्त्वसंयुताम्। पीतविद्युल्लताकारां डकारं प्रणमाम्य-हम्॥ ड॥ रक्तोत्पलनिभां रम्यां रक्तपङ्कजलोचनाम्। अष्टादश-भुजां भीमां महामोक्षप्रदायिनीम्। एवं ध्यात्वा ढकारन्तु त-न्मन्त्रं दशधा जपेत्। सदा त्रिगुणसंयुक्तमादितत्त्वमयं सदा। रक्तविद्युल्लताकारं ढकारं प्रणमाम्यहम्॥ ढ॥ द्विभुजां वरदां वन्द्यां भक्ताभीष्टप्रदायिनीम्। राजीवलोचनां नित्यां धर्म-कामार्थमोक्षदाम्। एवं ध्यात्वा णकारन्तु तन्मन्त्रं दशधा ज-पेत्॥ ण॥ चतुर्भुजां महाशान्तां महामोक्षप्रदायिनीम्। सदा

षोड़शवर्षीयां रक्ताम्बरधरां पराम्। नानालङ्कारभूषां वा सर्व-सिद्धिप्रदायिनीम्। एवं ध्यात्वा तकारन्तु तन्मन्त्रं दशधा जपेत् ॥ त ॥ नीलवर्णां त्रिनयनां षड्भुजां वरदां पराम्। पीतवस्त्र-परीधानां सदा सिद्धिप्रदायिनीम्। एवं ध्यात्वा थकारन्तु तन्मन्त्रं दशधा जपेत्। पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा। तरुणादित्य-सङ्काशं थकारं प्रणमाम्यहम् ॥ थ ॥ चतुर्भुजां पीतवस्त्रां नवयौव-नसंस्थिताम्। अनेकरत्नघटितहारनूपुरशोभिताम्। एवं ध्यात्वा दकारन्तु तन्मन्त्रं दशधा जपेत्। त्रिशक्तिसहितं देवि! त्रिविन्दु-सहितं सदा। आत्मादितत्त्वसंयुक्तं दकारं प्रणमाम्यहम् ॥ द ॥ षड्भुजां मेघवर्णाञ्च रक्ताम्बरधरां पराम्। वरदां शुभदां रम्यां चतुर्वर्गप्रदायिनीम्। एवं ध्यात्वा धकारन्तु तन्मन्त्रं दशधा जपेत् ॥ ध ॥ दलिताञ्जनवर्णाभां ललज्जिह्वां सुलोचनाम्। चतुर्भुजां चकोराक्षीं चारुचन्दनचर्च्चिताम्। कृष्णाम्बरपरीधानामीषद्धा-स्यमुखीं सदा। एवं ध्यात्वा नकारन्तु तन्मन्त्रं दशधा जपेत् ॥न॥ विचित्रवसनां देवीं द्विभुजां पङ्कजेक्षणाम्। रक्तचन्दनलिप्ताङ्गीं पद्ममालाविभूषिताम्। मणिरत्नादिकेयूरहारकेयूरविग्रहाम्। चतुर्व्वर्गप्रदां नित्यां नित्यानन्दमयीं पराम्। एवं ध्यात्वा पकारन्तु तन्मन्त्रं दशधा जपेत् ॥ प ॥ प्रलयाम्बुदवर्णाभां ललज्जिह्वां चतुर्भुजाम्। भक्ताभयप्रदां नित्यां नानालङ्कारभूषिताम्। एवं ध्यात्वा फकारन्तु तन्मन्त्रं दशधा जपेत् ॥ फ ॥ नीलवर्णां त्रिन-यनां नीलाम्बरधरां पराम्॥ नागहारोज्ज्वलां देवीं द्विभुजां पद्मलोचनाम्। एवं ध्यात्वा बकारन्तु तन्मन्त्रं दशधा जपेत्। त्रिशक्तिसहितं वर्णं विविधामृतलेपिताम्। स्वयं कुण्डलिनीं देवीं सततं प्रणमाम्यहम् ॥ ब ॥ तड़ित्प्रभां महादेवीं नागकङ्कण-शोभिताम्। चतुर्वर्गप्रदां देवीं साधकाभीष्टसिद्धिदाम्। एवं ध्यात्वा भकारन्तु तन्मन्त्रं दशधा जपेत्। त्रिशक्तिसहितं वर्णं

त्रिविन्दुसहितं प्रिये!। आत्मादितत्त्वसंयुक्तं भकारं प्रणमाम्यहम् ॥ भ ॥ कृष्णां दशभुजां भीमां पीतलोहितलोचनाम्। कृष्णाम्बरधरां नित्यां धर्म्मकामार्थमोक्षदाम्। एवं ध्यात्वा मकारन्तु तन्मन्त्रं दशधा जपेत्। त्रिशक्तिसहितं वर्णं त्रिविन्दुसहितं सदा। आत्मादितत्त्वसंयुक्तं हृदिस्थं प्रणमाम्यहम् ॥म॥ धूम्रवर्णां महारौद्रीं षड्भुजां रक्तलोचनाम्। रक्ताम्बरपरीधानां नानालङ्कारभूषिताम्। महामोक्षप्रदां नित्यामष्टसिद्धिप्रदायिनीम्। एवं ध्यात्वा यकारन्तु तन्मन्त्रं दशधा जपेत्। त्रिशक्तिसहितं वर्णं त्रिविन्दुसहितं सदा। प्रणमामि सदा वर्णं शक्तिमामोक्षमव्ययम् ॥ य ॥ ललज्जिह्वां महारौद्रीं रक्तास्यां रक्तलोचनाम्। रक्तवर्णामष्टभुजां रक्तपुष्पोपशोभिताम्। रक्तमाल्याम्बरधरां रक्तालङ्कारभूषिताम्। महामोक्षप्रदां नित्यामष्टसिद्धिप्रदायिकाम्। एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्। त्रिशक्तिसहितं देवि! आत्मादितत्त्वसंयुतम्। सर्वतेजोमयं वर्णं सततं प्रणमाम्यहम् ॥ र ॥ चतुर्भुजां पीतवस्त्रां रक्तपङ्कजलोचनाम्। सर्वदा वरदां भीमां सर्वालङ्कारभूषिताम्। योगीन्द्रसेवितां नित्यां योगिनीं योगरूपिणीम्। चतुर्वर्गप्रदां देवीं नागहारोपशोभिताम्। एवं ध्यात्वा लकारन्तु तन्मन्त्रं दशधा जपेत् ॥ ल ॥ कुन्दपुष्पप्रभां देवीं द्विभुजां पङ्कजेक्षणाम्। शुक्लमाल्याम्बरधरां रत्नहारोज्ज्वलां पराम्। साधकाभीष्टदां सिद्धां सिद्धिदां सिद्धसेविताम्। एवं ध्यात्वा वकारन्तु तन्मन्त्रं दशधा जपेत् ॥ व ॥ चतुर्भुजां चकोराक्षीं चारुचन्दनचर्च्चिताम्। शुक्लवर्णां त्रिनयनां वरदाञ्च शुचिस्मिताम्। रत्नालङ्कारभूषाढ्यां श्वेतमाल्योपशोभिताम्। देववृन्दैरभिवन्द्यां सेवितां मोक्षकाङ्क्षिभिः। एवं ध्यात्वा शकारन्तु तन्मन्त्रं दशधा जपेत् ॥श॥ शुक्लाम्बरां शुक्लवर्णां द्विभुजां रक्तलोचनाम्। श्वेतचन्दनलिप्ताङ्गीं मुक्ताहारोप-

शोभिताम्। गन्धर्वगीयमानाञ्च सदानन्दमयीं पराम्। अष्ट-सिद्धिप्रदां नित्यां भक्तानन्दविवर्द्धिनीम्। एवं ध्यात्वा षकारन्तु तन्मन्त्रं दशधा जपेत्। त्रिशक्तिसहितं वर्णमालादितत्त्व-संयुतम्। प्रणम्य सततं देवि! हृदि भावय सुन्दरि!॥ ष॥ करीषभूषिताङ्गीञ्च साट्टहासां दिगम्बरीम्। अस्थिमाल्यामष्ट-भुजां वरदामम्बुजेक्षणाम्। नागेन्द्रहारभूषाढ्यां जटामुकुट-मण्डिताम्। सर्वसिद्धिप्रदां नित्यां धर्मकामार्थमोक्षदाम्। एवं ध्यात्वा सकारन्तु तन्मन्त्रं दशधा जपेत्॥ स॥ चतुर्भुजां रक्त-वर्णां शुक्लाम्बरविभूषिताम्। रक्तालङ्कारसंयुक्तां वरदां पद्म-लोचनाम्। ईषद्धास्यमुखीं लोलां रक्तचन्दनचर्चिताम्। स्वाहा-ख्यीञ्च चतुर्वर्गप्रदां सौम्यां मनोहराम्। गन्धर्वसिद्धदेवाद्यैर्ध्याता-माद्यां सुरेश्वरीम्। एवं ध्यात्वा हकारन्तु तन्मन्त्रं दशधा जपेत्॥ ह॥ तन्मन्त्रपुटितं कृत्वा मूलमन्त्रं ततो जपेत्॥ इति सर्ववर्णेषु ज्ञेयम्। अन्यथा निष्फलं ज्ञेयं जपपूजादि-साधनम्। दीक्षा च निष्फला ज्ञेया तस्मात् कुर्य्यात् प्रयत्नतः। कृत्वा जपं प्रकुर्वीत यथोक्तफलमाप्नुयात्। शैवे शाक्ते वैष्णवे च सर्वतन्त्रेष्वयं विधिः। तन्मन्त्रपुटितं मन्त्रं दशधा दशधा जपेत्। दीक्षादौ गुरुणा सार्द्धं कर्त्तव्यं मन्त्रशोधनम्। अन्यथा निष्फला दीक्षा जपपूजादिकञ्च यत्। सद्गुरुः संयतो नित्यं ध्यात्वा-भ्यर्च्य जपादिकम्। गुरुचैतन्यमात्रेण चैतन्यं जनयेत्ततः। संस्का-रञ्च शोधनञ्च सागमेन विशेषतः। तन्मन्त्रपुटितं कृत्वा शत-मष्टोत्तरं जपेत्। दीक्षादौ गुरुणा पूर्वं कर्त्तव्योऽयं क्रमः सदा। पञ्चाशद्वर्णमनुना पुटिता मनवः प्रिये!। चतुर्वर्गप्रदाः शान्ता यथोक्तफलदाः सदा। अन्यथा निष्फला दीक्षा जपपूजादिसाध-नम्। विधिनानेन हीना या सा दीक्षा निष्फला भवेत्। इह दारिद्र्यमतुलमन्ते च निरयं व्रजेत्। दीक्षादौ गुरुकर्त्तव्यक्रम

एव प्रयत्नतः । आद्यावसाने वर्णेन पुटितं प्रजपेन्मनुम् । शिष्यः प्रयत्नतो नित्यं कुर्य्यादेतं क्रमं प्रिये ! । पूजादौ वा जपादौ वा अन्यथा विफलं भवेत् ॥ इति वर्णानां ध्यानम् ॥

एतेषां मन्त्रस्तु ॐ अकाराय नम इत्यादि द्रष्टव्यम् ॥ पञ्चदेवादिवर्णान्तपूजानां सर्वत्रोपयोगित्वेनादौ लिखितं सामान्यार्घ्यस्थापनमन्तरमेव कर्त्तव्यम् । शारदायां चतुर्थपटले ॥ आचम्य विधिना तत्र सामान्यार्घ्यं विधाय च । द्वारमन्त्राम्बुभिः प्रोक्ष्य द्वारपूजां समाचरेत् । सामान्यार्घ्यस्थापनन्तु मण्डपद्वार्य्येव । द्वारपूजा तु अर्थकाण्डेऽनुसन्धेया ॥ रुद्रजामले पूर्वखण्डे द्वितीयपटले ॥ मेरुपृष्ठ ऋषिः प्रोक्तः सुतलं छन्द उच्यते । कूर्म्मो देवतासनयोगे विनियोगः प्रकीर्त्तितः । मायावीजं समुच्चार्य्य कूर्म्मासनाय ते नमः । पार्ष्णिघातत्रयेणैव मारयेद्भूमिविघ्नकान् । तालत्रयेणान्तरीक्षान् तथा विघ्नान्निवारयेत् ॥ पिच्छिलातन्त्रे पञ्चमपटले ॥ सौरे मासीत्यादि प्रागुक्तम् ॥ विश्वसारे ॥ क्षेत्राधिपं क्षेत्रपालं गृहदेवीं ततः परम् । गन्धपुष्पौ धूपदीपौ नैवेद्यञ्च निवेदयेत् । एषां पूजां विलङ्घ्याथ नार्चयेद्देवतान्तरम् ॥ शारदायाम् ॥ पञ्चगव्यार्घ्यतोयाभ्यां प्रोक्षयेद्यागमण्डपम् । चतुष्पथान्तां तच्छुद्धिं विदध्याद्वीक्षणादिभिः । वीक्षणं मूलमन्त्रेण शरेण प्रोक्षणं मतम् । तेनैव ताड़नं दर्भैर्वर्म्मणाभ्युक्षणं मतम् । चन्दनागुरुकर्पूरैर्धूपयेदन्तरं सुधीः । विकिरान् विकिरेत्तत्र सप्तजप्तान्छराणुना । लाजचन्दनसिद्धार्थभस्मदूर्वाकुशाक्षताः । विकिरा इति सन्दिष्टाः सर्वे विघ्नौघनाशनाः । सोमशम्भोस्तु विशेषो राघवभट्टधृतो यथा । विकिरान् शुद्धलाजान् वा सप्तमन्त्राभिमन्त्रितान् । अस्त्राद्भिः प्रोक्षितानेतान् कवचेनावगुण्ठितान् । नानाप्रहरणाकारान् विघ्नौघविनिवारकान् । अस्त्रजप्तेन दर्भाणां मुष्टिमामार्ज्जयेच्च तत् । ईशस्य दिशि बध्नन्या

आसनाय प्रकल्पयेत्। पुण्याहं वाचयित्वा तु ब्राह्मणानुपवेश्य च। उक्तेषु मण्डलेष्वेकं वेदिकायां समालिखेत्। विशेन्मन्त्री द्वासने मन्त्री प्राङ्मुखो वाप्युदङ्मुखः। बद्धपद्मासनो मौनी समाहितो जितेन्द्रियः। ऋजुकायो जितेन्द्रिय इति मेरुतन्त्रे पाठः॥ मङ्गलाङ्कुरपात्राणि स्थापयेद्दिक्षु देशिकः। मङ्गलरूपाणि यान्यङ्कुरपात्राणि उक्तरीत्या उक्तानि तानि दिक्षु स्थापयेदित्यर्थः। कृताञ्जलिपुटो भूत्वा वामदक्षिणपार्श्वयोः। नत्वा गुरुं गणेशानं भूतशुद्धिं समाचरेत्। करशुद्धिं समापाद्य कुर्य्यात्तालत्रयं ततः। ऊर्द्धोर्द्धं मन्त्रमन्त्रेण दिग्बन्धमपि देशिकः। तेन सोऽज्वलितस्तेजोरक्षां कुर्य्यात् समन्ततः। ऋषिश्छन्दो देवतानि न्यसेन्मन्त्रस्य मन्त्रवित्। आत्मनो मूर्द्ध्नि वदने हृदये च यथाक्रमम्॥ प्रपञ्चसारेऽष्टमपटले॥ ऋषिर्गुरुत्वाच्छिरसैव धार्य्यश्छन्दोऽक्षरत्वाद्रसमागतं स्यात्। धियावगन्तव्यतया सदैव हृदि प्रविष्टा मनुदेवता च। विधाय मूलमन्त्रेण प्राणायामं यथाविधि। विदध्यान्मातृकान्यासं मन्त्रन्यासमतः परम्। अङ्गुष्ठादिष्वङ्गुलीषु न्यसेदङ्गैः सजातिभिः। अस्त्रं तत्तालयोर्न्यस्य कुर्य्यात्तालत्रयादिकम्। दिशस्तेनैव बध्नीयाच्छोटिकाभिः समाहितः। हृदादिषु च विन्यस्येदङ्गमन्त्रैस्ततः सुधीः। हृदयाय नमः पूर्वं शिरसे वह्निवल्लभा। शिखायै वषडित्युक्त्वा कवचाय हुमीरितम्। नेत्रत्रयाय वौषट् स्यादस्त्राय फड़िति क्रमात्। षड़ङ्गमन्त्रानित्युक्तान् षड़ङ्गेषु नियोजयेत्। अंसोरुयुग्मयोर्विद्वान् प्रादक्षिण्येन देशिकः। धर्मं ज्ञानञ्च वैराग्यमैश्वर्य्यं न्यस्य तु क्रमात्। मुखपार्श्वनाभिपार्श्वेष्वधर्मादीन् प्रकल्पयेत्। धर्मादयः स्मृताः पादाः पीठगात्राणि चापरे। अनन्तं हृदये पद्ममस्मिन् सूर्य्येन्दुपावकान्। एषु स्वस्वकला न्यस्येन्नामाद्याक्षरपूर्वकान्। सत्त्वादींस्त्रीन् गुणान् न्यसेत्तथैवात्र गुरूत्तमः। आत्मानमन्तरात्मानं परमात्मानमत्र

तु। ज्ञानात्मानं प्रविन्यस्य न्यसेत् पीठमनुं ततः एवं देहमये पीठे चिन्तयेदिष्टदेवताम्। मुद्रां प्रदर्श्य विधिवदर्घ्यं स्थापनमाचरेत्। शङ्खमन्त्राम्बुना प्रोक्ष्य वामतो वह्निमण्डले। साधारं स्थापयेद्विद्वान् विन्दुस्रुतसुधामयैः। तोयैः सुगन्धिपुष्पाद्यैः पूजयेत्तं यथाविधि। आधारं पावकं शङ्खं सूर्य्यं तोयं निशाकरम्। स्मरेद्वह्न्यर्कचन्द्राणां कलास्तास्तेष्वनुक्रमात्। कलास्तु प्रथमकाण्डे निरूपिताः। मूलमन्त्रं जपेत् स्पृष्ट्वा न्यासे तत्त्वाङ्गमन्त्रवित्। हृन्मन्त्रेणाभिसम्पृच्छ्य हस्ताभ्यां छादयन्नपः। जपेद्विद्वान् यथान्यायं देशिको देवताधिया। अस्त्रमन्त्रेण संरक्ष्य कवचेनावगुण्ठ्य च। धेनुमुद्रां समापाद्य बोधयेत् स्वस्वमुद्रया। दक्षिणे प्रोक्षणीपात्रमाधायाद्भिः प्रपूरयेत्। किञ्चिदर्घ्याम्बु संगृह्य प्रोक्षण्यम्भसि योजयेत्। अर्घ्यस्योत्तरतः कार्य्यं पाद्यमाचमनीयकम्। आत्मानं यागवस्तूनि मण्डलं प्रोक्षयेद्गुरुः। प्रोक्षणीपात्रतोयेन मनुनान्यदपि क्रमात्। न्यासक्रमेण देहे स्वे धर्मादीन् पूजयेत्ततः। पुष्पाद्यैः पीठमन्वन्तं तस्मिंश्च परदेवताम्। पञ्चकृत्वः पुनः कुर्य्यात् पुष्पाञ्जलिमनन्यधीः। उत्तमाङ्गहृदाधारपादसर्वाङ्गके क्रमात्। विना नैवेद्यं गन्धाद्यैरुपचारैः समर्च्चयेत्। गुरूपदिष्टविधिना शेषमन्यत् समापयेत्। सर्वमेतत् प्रयुञ्जीत प्रोक्षणीस्थेन वारिणा। विसृज्य तोयं प्रोक्षण्याः पूरयेत्तत् यथापुरा। ततस्तन्मण्डलं मन्त्री गन्धाद्यैः साधु पूजयेत्। शालिभिः कर्णिकामध्यमापूर्य्योपरि तण्डुलैः। अलङ्कृत्य पुनस्तेषु दर्भानास्तीर्य्य मन्त्रवित्। कूर्च्चमक्षतसंयुक्तं न्यसेत्तेषामथोपरि॥ मेरुतन्त्रे चतुर्थप्रकाशेऽपि॥ पूरयेत् कर्णिकां पूर्वं शालिभिस्तण्डुलैस्ततः। दर्भान्न्यसेदुपर्य्येषां साक्षतं कूर्च्चकं ततः। छिन्नमूलाः कुशा दीर्घाः सप्तविंशतिसंख्यकाः। ब्रह्मग्रन्थियुतास्त्वग्रदेशे कूर्च्चं इहोच्यते। आधार-

शक्तिमारभ्य पीठमन्त्रमयं यजेत्। अधः कूर्च्चशिलारूढां शर-
च्चन्द्रनिभप्रभाम्। आधारशक्तिं प्रयजेत् पङ्कजद्वयधारिणीम्।
मूर्ध्नि तस्याः समासीनं कूर्मं नीलाभमर्च्चयेत्। ऊर्द्ध्वन्तत्र शिला-
सीनमनन्तं कुन्दसन्निभम्। यजेच्चक्रधरं मूर्ध्नि धारयन्तं वसु-
न्धराम्। तमालश्यामलां तत्र नीलेन्दीवरधारिणीम्। सम-
र्च्चयेद्वसुमतीं स्फुरत्सागरमेखलाम्। तस्यां रत्नमयं द्वीपं
तस्मिंश्च मणिमण्डपम्। यजेत् कल्पतरुं तस्मिन् साधकाभीष्ट-
सिद्धिदम्। अधस्तात् पूजयेत्तस्य वेदिकां मण्डलोज्ज्वलाम्।
पश्चादभ्यर्च्चयेत्तस्यां पीठं धर्मादिभिः पुनः। रक्तश्यामहरिद्रेन्द्रनी-
लाभान् पादरूपिणः। वृषकेशविभूतेन्द्ररूपान् धर्मादिकान्
यजेत्। गात्रेषु पूजयेत्तांस्तु नञ्पूर्वानुक्तलक्षणान्। आग्ने-
यादिषु कोणेषु दिक्षु मध्येऽम्बुजं यजेत्। आनन्दकन्दं प्रथमं
संविन्नालमनन्तरम्। सर्वतत्त्वात्मकं पद्ममभ्यर्च्य तदनन्तरम्।
मन्त्री प्रकृतिपत्राणि विकारमयकेशरान्। पञ्चाशद्वर्णबीजाढ्य-
कर्णिकां पूजयेत्ततः। कलाभिः पूजयेत् सार्द्धं तस्यां सूर्य्येन्दु-
पावकान्। प्रणवस्य त्रिभिर्भागैरथ सत्त्वादिकान् गुणान्। आत्मा-
नमन्तरात्मानं परमात्मानमर्च्चयेत्। ज्ञानात्मानञ्च विधिवत्
पीठमन्त्रावसानकम्। पीठशक्तीः केशरेषु मध्ये च सवराभयाः।
हेमादिरचितं कुम्भं मन्त्राद्भिः क्षालितान्तरम्॥ चन्दनागुरु-
कर्पूरधूपितं शोभनाकृतिम्। आवेष्टिताङ्गं नीरन्ध्रं तन्तुना
त्रिगुणात्मना। अर्च्चितं गन्धपुष्पाद्यैः कूर्च्चाक्षतसमन्वितत्। नव-
रत्नोदरं मन्त्री स्थापयेत्तारमुच्चरन्। ऐक्यं सङ्कल्प्य कुम्भस्य
पीठस्य च विधानवित्। क्षीरद्रुमकषायेण पलाशत्वग्भवेन वा।
तीर्थोदकैर्वा कर्पूरगन्धपुष्पसुवासितैः। आत्मभेदेन विधिवत्
मातृकां प्रतिलोमतः। जपेन्मूलमनुं तद्वत् पूजयेद्देवताधिया।
शङ्के क्वाथाम्बुसम्पूर्णे गन्धाष्टकमभीष्टदम्। विलोड्य पूरयेत्तस्मि-

न्नावाह्य सकला: कला:। दश वह्नेः कला: पूर्वं द्वादश द्वादशात्मन:। षोड़शापि च सोमस्य पश्चात्पञ्चशतं कला:। जपित्वा प्रतिलोमेन मूलमन्त्रञ्च मन्त्रवित्। समाहितेन मनसा ध्यायन् मन्त्रस्य देवताम्। प्राणप्रतिष्ठां कुर्वीत तत्र तत्र विचक्षण:। कलात्मकं शङ्खसंस्थं क्वाथं कुम्भे विनिक्षिपेत्। पाशादित्र्यक्षरात्मान्ते स्यादमुष्य पदं पुन:। क्रमात् प्राणा इह प्राणास्तथा जीव इह स्थित:। अमुष्य सर्वेन्द्रियाणि भूयोऽमुष्य पदं वदेत्। वाङ्मनोनयनश्रोत्रघ्राणप्राणपदान्यथ। पश्चादिहागत्य सुखं चिरं तिष्ठन्तु ठद्वयम्। अयं प्राणमनु: प्रोक्त: सर्वजीवप्रदायक:। पश्चादश्वत्थपनसचूतकोमलपल्लवै:। इन्द्रवल्लीसमाबद्धै: स्वरद्रुमधिया गुरु:। कुम्भवक्त्रं पिधायास्मिंश्चषकं सकलाक्षतम्। संस्थापयेत् फलधिया विधिवत् कल्पशाखिनाम्। तत: कुम्भं निर्मलेन क्षौमयुग्मेन वेष्टयेत्। मूलमन्त्रं समुच्चार्य्य सुषुम्नावर्त्मना सुधी:। संस्थापनं सन्निधानं सन्निबोधमनन्तरम्। सकलीकरणं पश्चाद्विदध्यादवगुण्ठनम्। अमृतीकरणं कृत्वा कुर्वीत परमीकृतिम्। क्रमादेतानि कुर्वीत स्वमुद्राभि: समाहित:। अथोपचारान् कुर्वीत मन्त्रवित् स्वागतादिकान्। स्वागतं कुशलप्रश्नं निगदेद्यतो गुरु:। पाद्यं पादाम्बुजे दद्याद्देवस्य हृदयात्मना। हृदयात्मना मम इति मन्त्रेण। अर्घ्यं दिशेत्ततो मूर्द्ध्नि शिरोमन्त्रेण देशिक:। स्वधामन्त्रेण वदने दद्यादाचमनीयकम्। स्वधात्मना तत: कुर्य्यान्मधुपर्कं मुखाम्बुजे। तेनैव मनुना दद्याददिराचमनीयकम्। गन्धाद्भि: कारयेत् स्नानं वाससी परिधापयेत्। दद्याद्यज्ञोपवीतञ्च हाराद्याभरणै: सह। न्यासक्रमेण मनुना पुटितैर्मातृकाक्षरै:। अभ्यर्च्च देवं गन्धाद्यै रङ्गादीन् पूजयेत्तत:। तत्र तत्र जलं दद्यादुपचारान्तरान्तरा। अङ्गानि लोकपालान्तं यजेदावरणान्यपि। केशरेष्वग्निकोणादि हृदयादीनि पूज-

येत्। षड़ङ्गपूजादिक्रमस्तु गन्धर्वतन्त्रे चतुर्थपटले ॥ अग्नी-शासुरवायव्यमध्ये दिक्षु च पार्वति!। षड़ङ्गयुवतीः पश्चात् पूजयित्वा विधानतः। नेत्रमग्रे दिशां वस्त्रं ध्यातव्यान्यङ्गदेवताः। तुषारस्फटिकश्यामनीलकृष्णारुणाच्चिषः। वरदाभयधारिण्यः प्रधानतो वरस्त्रियः। पश्चादभ्यर्च्चनीयाः स्युः कल्पोक्ताष्टशक्तयः क्रमात्। अन्ते यजेल्लोकपालान् मूलपारिषदान्वितान्। हेति-जात्यधिपोपेतान् दिक्षु पूर्वादितः क्रमात्। एवं सम्पूज्य विधि-वन्नैवेद्यान्तं ततो गुरुः। दक्षिणे स्थण्डिलं कृत्वा तत्राधाय हुता-शनम्। संस्कृत्य विधिवद्विद्वान् वैश्वदेवमखं चरेत्। तत्र स-म्पूज्य गन्धाद्यै र्देवतामुक्तविग्रहाम्। तारस्य व्याहृतिं हुत्वा मूल-मन्त्रेण मन्त्रवित्। सर्पिष्मता पायसेन पञ्चविंशतिसंख्यया। हुत्वा व्याहृतिभिर्भूयो गन्धाद्यैः पुनरर्च्चयेत्। संयोजयित्वा पीठस्य-मूर्त्तौ वह्निं विसर्ज्जयेत्। अवशिष्टेन हविषा विकिरेत् परितो बलिम्। देवतायाः पार्षदेभ्यो गन्धपुष्पाक्षतान्वितम्। ततो निवेद्यमुद्धृत्य शोधयित्वा स्थलं पुनः। पञ्चोपचारैः सम्पूज्य दर्श-येच्छत्रचामरे। कर्पूरशकलोन्मिश्रं ताम्बूलञ्च निवेदयेत्। सह-स्रावृत्य सञ्जप्य मूलमन्त्रमनन्यधीः। तज्जप्तं सर्वसम्पत्त्यै देवतायै निवेदयेत्। ततः शम्भोर्दिशि गुरुर्विकिरेत् पूर्वसञ्चिते। हेम-वस्त्रादिसंयुक्तां घर्घरीं तोयपूरिताम्। संस्थाप्य तस्यां सिंहस्थां खड्गखेटकधारिणीम्। घोररूपां पश्चिमास्यां पूजयेदस्त्रदेवताम्। चलासनेन सम्पूज्य तामादाय गुरुः पुनः। रक्षेति लोकपालानां नालमुक्तेन वारिणा। देवाज्ञां श्रावयन्नन्तः परिवृत्ते प्रदक्षिणम्। अस्त्रमन्त्रं समुच्चार्य्य यथापूर्वं निवेशयेत्। विलोक्य दिव्यदृष्ट्या तं तच्चैतन्यं हृदम्बुजात्। गुरुरात्मनि संयोज्य कुर्य्यादध्वविशोधनम्। तं शिष्यम्। उक्तं कलाध्वा तत्त्वाध्वा भुवनाध्वेति च त्रयम्। वर्णाध्वा च पदाध्वा च मन्त्राध्वेत्यपरत्रयम्। निवृत्त्याद्याः कलाः

पञ्च कलाध्वेति प्रकीर्त्तितम्। तत्त्वाध्वा बहुधा भिन्नः शैवाद्यागमभेदतः। षट्त्रिंशच्छैवतत्त्वानि द्वात्रिंशद्वैष्णवानि तु। चतुर्विंशतितत्त्वानि मैत्राणि प्रकृतेः पुनः। उक्तानि दश तत्त्वानि सप्त च त्रिपदात्मनः। तत्त्वानि शैवान्युच्यन्ते शिवः शक्तिः सदाशिवः। ईश्वरो विद्यया सार्द्धं पञ्च शुद्धान्यमूनि तु। माया कालश्च नियतिः कालविद्या पुनः स्मृता। रागः पुरुष एतानि शुद्धाशुद्धानि सप्त च। प्रकृतिर्बुद्ध्यहङ्कारौ मनो ज्ञानेन्द्रियाण्यथ। कर्मेन्द्रियाणि तन्मात्राः पञ्च भूतानि देशिकाः। एतान्याहुरशुद्धानि चतुर्विंशतिमागमे। शैवानामिति तत्त्वानां विभागोऽत्र प्रदर्शितः। जीवः प्राणो धियश्चित्तं ज्ञानकर्मेन्द्रियाण्यथ। तन्मात्राः पञ्च भूतानि हृत्पद्मं तेजसां त्रयम्। वासुदेवादयश्चेति तत्त्वान्येतानि शार्ङ्गिणः। पञ्च भूतानि तन्मात्रा इन्द्रियाणि मनस्तथा। गर्वो बुद्धिः प्रधानञ्च मैत्राणीति विदुर्बुधाः। निवृत्ताद्याः कलाः पञ्च ततो विन्दुः कलाः पुनः। नादः शक्तिः सदापूर्वः शिवश्च प्रकृतिर्विंदुः। आत्मविद्या शिवः पश्चाच्छिवो विद्यात्मना पुनः। सर्वतत्त्वञ्च तत्त्वानि प्रोक्तानि त्रिपदात्मनः। तत्त्वाध्वा कथितो ह्येवं तत्तदागमवेदिभिः। ईरितो भुवनाध्वेति भुवनानि मनोषिभिः। वर्णाध्वेति वदन्त्यर्णानादीचान्तान्मनीषिणः। वर्णसङ्घः पदाध्वा स्यान्मन्त्राध्वा मन्त्रराशयः। क्रमादेतानध्वनः षट् शोधयेद्गुरुसत्तमः। पदान्धुनान्धुहृन्नालमूर्द्धस्वपि शिशोः स्मरेत्॥ अन्धुर्गुदस्थानम्॥ तत्र क्रमेण विधिवत्तत् स्पृशन् जुहुयाद्गुरुः। आचार्य्यकुण्डे संशुद्धैस्तिलैराज्यपरिप्लुतैः। शोधयाम्यमुमध्वानं स्वाहेति पृथगध्वनाम्। ताराद्यामाहुतीरष्टौ क्रमात्तान् विलयं नयेत्। शिवे शिवात्तान् संलीनान् जनयेत् सृष्टिमार्गतः। विलोकयन् दिव्यदृष्ट्या। ततस्थितं तच्च चैतन्यं पुनः शिष्ये नियोजयेत्। स्रुचा पूर्णाहुतिं

दत्त्वा मूलमन्त्रेण देशिकः। नेत्रे शिष्यस्य बध्नीयान्नेत्रमन्त्रेण वाससा। करे गृहीत्वा तत् शिष्यं कुण्डतो मण्डलं नयेत्। तस्याञ्जलिं पुनः पुष्पैः पूरयित्वा यथाविधि। कलसे देवताप्रीत्यै क्षेपयेन्मूलमुच्चरन्। व्यपोह्य तं नेत्रबन्धमासीनं दर्भसंस्तरे। आत्मयागक्रमाद्भूयः संहृत्योत्पाद्य देशिकः। तत्तन्मन्त्रोदितान्न्यासान् कुर्य्याद्देहे शिष्योस्तदा। पञ्चोपचारैः कुम्भस्थां पूजयित्वेष्टदेवताम्। तस्य तन्त्रोक्तमार्गेण विदध्यात् सकलीकृतिम्। मण्डलेऽलङ्कृते शिष्यमन्यस्मिन्नुपवेशयेत्। नदत्सु पञ्चवाद्येषु सार्द्धं विप्राशिषा गुरुः। विधिवत् कुम्भमुद्धृत्य तन्मुखस्थान् सुरद्रुमान्। शिष्योः शिरसि विन्यस्य मातृकां मनसा जपन्। मूलेन साधितैस्तोयैः सिञ्चेद्रक्षार्थमञ्जसा॥

अथाभिषेकविधिः॥ वामकेश्वरतन्त्रे पञ्चाशत्पटले॥ अभिषेकस्तु द्विविधः शाक्तश्च पूर्ण एव च। अवधूतेन गुरुणा शाक्ताभिषेकमाचरेत्। किञ्चिज्जलञ्च कुम्भानां ब्रह्मकुम्भे निवेशयेत्। आनीय ब्रह्मकलसं सम्मुखे स्थापयेद्बुधः। निरुत्तरतन्त्रे सप्तमपटले॥ श्रीशिव उवाच॥ अभिषेकश्च द्विविधो राज्ञो वा ज्ञानिनामपि। राजाभिषेके देवेशि ! वैदिकोक्तं क्रियाचरेत्। ज्ञानिनामभिषेकन्तु सर्वतन्त्रेषु गोपितम्। सर्वशान्तिकरं पुण्यं सर्वरोगनिवारणम्। धनदं कीर्त्तिदञ्चैव आयुर्वृद्धिकरं नृणाम्। सर्वसौभाग्यजननं महापातकनाशनम्। सर्वाशापूरकं सर्वमन्त्रदोषनिवारणम्। सर्वार्थसाधकं देवि! सर्वतीर्थफलप्रदम्। अभिचारहरं सर्वग्रहदोषविनाशकम्। भूतावेशादिशमनं डाकिनीनां भयापहम्। तेजोवृद्धिकरं देवि! बलवृद्धिकरं परम्। तक्षकेणापि दष्टस्य विषपीड़ाविनाशकम्। तेजोह्रासे बलह्रासे बुद्धिह्रासे धनक्षये। स्त्रीकृतेष्वपि दोषेषु शारीरे मानसे तथा। विकारे देशिकः कुर्य्यादभिषेकं विचक्षणः। असौभाग्ये

च नारीणामभिषेकः प्रवर्त्तते। गुरुत्वञ्च लभेद्देवि! कर्म्मणा-भिषेकवर्त्मना। वैष्णवो ज्ञानसम्पन्नः शैवश्चैव कुलेश्वरि!। अभिषेकं प्रकुर्वीत शाक्तश्च कुलभूषणः। मन्त्रतन्त्रञ्च सर्वेषामभि-षेकेण सिध्यति। अभिषेकेण सर्वेषामधिकारो भवेद्ध्रुवम्। अभिषेककृतो विप्रो ब्रह्मत्वं लभते ध्रुवम्। अभिषेककृतः क्षत्री विप्रधर्म्मत्वमागतः। वैश्यः क्षत्रियतां याति शूद्रो वैश्यत्वमागतः। अभिषेकेण सर्वेषां स्तुत्यां वर्णतां त्यजेत्। ब्राह्मणस्य सुरापाने ब्राह्मण्यं त्यजते क्षणात्। अभिषेककृते विप्रे सुरापानं विधीयते। आगमः पञ्चमो वेदः कौलश्च पञ्चमाश्रमः। शिवोऽपि पञ्चमो वर्णो महाविद्यां जपेद्यतः। स्वस्ववर्णं परित्यज्य शिवत्वञ्च प्रजायते। अभिषेकं विना नैव ब्राह्मणः प्रपिबेत् सुराम्। प्रगृह्य सिद्धविद्याञ्च सङ्केतज्ञस्ततो भवेत्। सङ्केतज्ञः कुला-चारे त्वभिषेकं समाचरेत्। अभिषेककृतो मन्त्री कुलपूजां समाचरेत्। कुलपूजाकृतो मन्त्री पितृभूमिं ततो व्रजेत्। पितृभूमिकृतं स्थानमेकाकी विहरेत्तदा। एकाकी विहरेद्वीरः प्रान्तरे रात्रिपान्तरे। तत्र सिद्धिं लभेद्देवि! देवानामपि दुर्लभाम्। कुलाचारं विना देवि! मन्त्रतन्त्रं न सिध्यति। सिद्धविद्या कुलाचारे द्रव्यं सिध्यति निश्चितम्। अभिषेकसुरां दद्याद् कुलकर्म युगे युगे। सुरां पीत्वा जपेद्विद्यां कालाधिपविशेषतः। विजयाञ्चानुकल्पञ्च सुराभावे निवेदयेत्। आनन्देन विना भोगो न च तृप्यन्ति देवताः। पञ्चमेनार्चयेत् कालीं कामाख्यायां विशेषतः। कामाख्यायां विशेषेण कालिका सिद्धिदा भवेत्। कुलाचारं विना नैव कालीमन्त्रश्च सिध्यति। अभिषेकं विना देवि! कुलकर्म्म करोति यः। तस्य पूजादिकं कर्म अभिचाराय कल्पते। अभिषेकं विना देवि! सिद्धविद्यां ददाति यः। तावत्कालं वसेद्घोरे यावच्चन्द्रदिवाकरौ। ब्रह्मत्वञ्च हरित्वञ्च

शिवत्वञ्च कुलेश्वरि!। सर्व्वसिद्धीश्वरत्वञ्च अभिषेकेण जायते। दिव्यो वीरश्च देवेशि! कुलभक्तिपरायणः। अभिषेकञ्चरेद्देवि! अधिवासपुरःसरम्। वृद्धिश्राद्धं ततः कृत्वा शिवशक्तीः प्रपूजयेत्। गुरुं सम्पूज्य विधिवत् स्वर्णालङ्कारभूषणैः। ततः सङ्कल्प्य विधिना गुरूणां वरणं चरेत्। ततः पूजां चरेद्देव्याः पञ्चमैश्च पृथक् पृथक्। प्रणम्य सद्गुरुं देवं देवीञ्च साधकेश्वरः। गुरुपूजां विधायाथ देव्या ध्यानपरायणः। अभिषेकं विधायाथ शुचौ देशे च साधकः। शून्यागारे नदीतीरे विल्वमूले त्रिपान्तरे। महान्तिपान्तरे वापि निर्ज्जने पितृकानने। ग्रामे पलान्तके वापि पर्व्वते तटिनीतटे। देवतायतने वापि स्थानञ्च परिचिन्तयेत्॥ अष्टमपटले॥ शिवशक्तिं पूजयित्वा स्थापयेद्घटमुत्तमम्। नातिह्रस्वं नातिदीर्घं स्वर्णरौप्यविनिर्म्मितम्। विशेषार्घ्यं स्वयन्त्रे वा त्रिकोणे वापि विन्यसेत्। गङ्गाद्याः सरितः सर्व्वाः समुद्राश्च सरांसि च। सर्व्वे समुद्राः सरितः सरांसि जलदा नदाः।। ह्रदाः प्रस्रवणाः पुण्याः स्वःपातालमहीगताः। सर्व्वतीर्थानि पुण्यानि घटे कुर्व्वन्ति सन्निधिम्। श्रीवीजेन प्रजप्तेन पल्लवं प्रतिपादयेत्। कूर्च्चेन फलदानं स्यात् स्त्रीवीजेन स्थिराकृतिः। सिन्दूरं वह्निवीजेन पुष्पं प्रेतेन विन्यसेत्। मूलेन दूर्व्वां प्रणवैः कुर्य्यादभ्युक्षणं ततः। हुं फट् स्वाहेति मन्त्रेण कुर्य्याद्धर्म्मेण ताड़नम्। विचिन्त्य देवि! पीठन्तु तत्रावाह्य प्रपूजयेत्। अनेनैव विधानेन सर्व्वकर्म्मसु सुन्दरि!। घटं संस्थापयेद्देवि! षट्कर्म्मसु विशेषतः। महापूजाञ्चरेद्देवि! षोड़शैरुपचारकैः। गुरूणाञ्च महापूजां शक्तीनाञ्च ततः परम्। तत्पश्चात् साधकानाञ्च कुमारीणाञ्च पूजनम्। कुमारीभ्यो बलिं दत्त्वा कुलजाभ्यो विशेषतः। अभिषेकं ततो देवि! कुर्य्यात् स्वगुरुमार्गतः। स्वतन्त्रोक्तविधानेन मन्त्रप्रोच्चारणेन च। चाल-

येत्तं घटं मन्त्री मन्त्रेणानेन देशिकः। ॐ उत्तिष्ठ ब्रह्मकलस! देवताभीष्टसिद्धिदः। सर्वतीर्थाम्बुपूर्णेन पूरयास्य मनोरथम्। ईशानेन्दुस्मरक्षौणी तदन्ते भुवनेश्वरी। मन्त्रेणानेन वादित्र-निर्घोषैश्चालयेद्घटम्। अभिषिञ्चेद्गुरुः शिष्यं यजमानं पुरोहितः। सिञ्चेदश्वत्थवृक्षोत्थैः पल्लवैर्भूतसङ्गमे। सिञ्चेदौडुम्बरैर्मन्त्रदोषे च करवीरजैः। यशोधनायुस्तेजः श्रीफलकामिन चूतजैः। तुलसीमञ्जरीभिश्च सर्वपापक्षयार्थिभिः। सर्वतीर्थफलावाप्त्यै भ्रान्तानां विल्वपल्लवैः। अभिचारे नारसिंहैरभिषेकः प्रवर्त्तते॥ नारसिंह चुनियाहागड़ा इति यस्य प्रसिद्धिः॥ कुर्य्याद्दुर्भैरगर्भैश्च दोषेषु स्त्रीकृतेष्वपि। असौभाग्ये च नारीणां दूर्वाभिरभिषेचनम्। सर्वकार्य्येषु मन्त्राणां सिद्ध्यर्थं चूतपल्लवैः। तस्याभिषेकमन्त्रस्य दक्षिणामूर्त्तिर्ऋषिरनुष्टुप्छन्दः शक्तिर्देवता सङ्कल्पसिद्धिप्राप्तये विनियोगः॥ ॐ राजराजेश्वरी देवी भैरवी कालभैरवी। श्मशानभैरवी देवी त्रिपुरानन्दभैरवी। त्रिकूटा त्रिपुरा देवी तथा त्रिपुरसुन्दरी। त्रिपुरेशी महादेवी तथा त्रिपुरकारिका। त्रिपुरानन्दिनी देवी तथैव त्रिपुरातनी। एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा॥ १॥ छिन्नमस्ता महादेवी तथा चैकजटेश्वरी। तारा च जयदुर्गा च शूलिनी भुवनेश्वरी। त्वरिताख्या महादेवी तथैव च त्रिखण्डिका। नित्या च नित्यरूपा च वज्रप्रस्तारिणी तथा। एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा॥ २॥ अश्वारूढ़ा महेशानी तथा महिषमर्दिनी। दुर्गा च वनदुर्गा च श्रीदुर्गा भगमालिनी। तथा भगन्दरी देवी भगक्लिन्ना तथापरा। सर्वचक्रेश्वरी देवी तथा नीलसरस्वती। सर्वसिद्धिकरी देवी सर्वगन्धर्वसेविता। उग्रतारा महादेवी तथा दक्षिणकालिका॥ एतास्त्वामित्यादि॥३॥ क्षेमङ्करी महाकाली चानिरुद्धसरस्वती। मातङ्गिनी चान्नपर्णा

राजराजेश्वरी तथा॥ एतास्त्वामित्यादि॥ ४॥ उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका। चण्डा चण्डवती चैव चण्डरूपातिचण्डिका। एतास्त्वामित्यादि॥ ५॥ उग्रदंष्ट्रा महादंष्ट्रा शुभदंष्ट्रा कपालिनी। भीमनेत्रा विशालाक्षी मङ्गला विजया जया॥ एतास्त्वामित्यादि॥ ६॥ मङ्गला नन्दिनी भद्रा कीर्त्तिर्लक्ष्मीर्यशस्विनी। पुष्टिर्मेधा शिवा साध्वी यशः शोभा जयः धृतिः। श्रीनन्दा च सुनन्दा च नन्दिन्यानन्दपूजिता॥ एतास्त्वामित्यादि॥ ७॥ विजया नन्दिनी भद्रा स्मृतिः शान्तिर्धृतिः क्षमा। सिद्धिस्तुष्टीरमा पुष्टिः श्रीर्वृद्धिश्च रतिस्तथा। दीप्तिः कान्तिर्यशो लक्ष्मीरीश्वरी बुद्धिरेव च। शाक्री मायावती ब्राह्मी जयन्ती चापराजिता। अजिता मानवी श्वेता दितिश्चादितिरेव च। माया चैव महामाया मोहिनी क्षोभिणी तथा। कमला विमला गौरी शरण्याम्बुधिसुन्दरी। दुर्गा क्रियारुन्धती च घण्टाकर्णा कपालिनी। रौद्री काली च मायूरी त्रिनेत्रा चापराजिता। स्वरूपा बहुरूपा च तथैव विग्रहात्मिका। चर्चिका चापरा ज्येष्ठा तथैव सुरपूजिता। वैवस्वती च कौमारी तारा माहेश्वरी परा। वैष्णवी च महालक्ष्मीः कार्त्तिकी कौषिकी तथा। शिवदूती च चामुण्डा मुण्डमालाविभूषिता॥ एतास्त्वामित्यादि॥ ८॥ इन्द्रो वह्निर्यमश्चैव नैर्ऋतो वरुणस्तथा। पवनो धनदेशानौ ब्रह्मानन्तौ दिगीश्वराः। एते त्वामित्यादि॥ ९॥ संवत्सरश्चायनौ च मासाः पक्षौ दिनानि च। तिथयश्चाभिषिञ्चन्तु मन्त्रपूतेन वारिणा॥ १०॥ रविः सोमः कुजः सौम्यो गुरुः शुक्रः शनैश्वरः। राहुः केतुश्च सततमभिषिञ्चन्तु ते ग्रहाः॥ ११॥ नक्षत्रं करणं योगः अमृतं सिद्धिरेव च। दग्धं पापं तथा भद्रा योगा वाराः क्षणास्तथा। वारवेला कालवेला दण्डा ह्रस्वादयस्तथा। अभिषिञ्चन्तु सततं

मन्त्रपूतेन वारिणा ॥ १२ ॥ असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्त-संज्ञकः। कपाली भीषणश्चैव संहारोऽष्टौ च भैरवाः। अभि-षिञ्चन्तु इत्यादि ॥ १३ ॥ डाकिनीपुत्रकाश्चैव राकिणीपुत्रका-स्तथा ॥ लाकिनीपुत्रकाश्चान्ये काकिनीपुत्रकाः परे। शाकिनी-पुत्रका भूयो हाकिनीपुत्रकास्तथा। ततश्च यक्षिणीपुत्रा देवी-पुत्रास्ततः परम्। मातृणाञ्च तथा पुत्रा ऊर्द्ध्वमुख्याः सुताश्च ये। अधोमुख्याः सुता ये च उन्मुख्याश्च सुताः परे ॥ एते त्वामि-त्यादि ॥ १४ ॥ ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः। एते त्वामित्यादि ॥ १५ ॥ पुरुषः प्रकृतिश्चैव विकाराश्चैव षोड़श। आत्मान्तरात्मपरमज्ञानात्मानः प्रकीर्त्तिताः। आत्मनश्च गुणा ये तु स्थूलाः सूक्ष्मास्तथा परे ॥ एते त्वामित्यादि ॥१६॥ वेदादि-वीजं हुंवीजं स्त्रीवीजं मीनकेतनम्। शक्तिवीजं रमावीजं मायावीजं सुधाकरम्। चिन्तारत्नं महावीजं नारसिंहञ्च शाङ्करम्। मार्त्तण्डभैरवं दौर्गं वीजं श्रीपुरुषोत्तमम्। गाण-पत्यञ्च वाराहं कालीवीजं भयापहम्। एते त्वामित्यादि ॥ १७ ॥ गङ्गा गोदावरी रेवा यमुना च सरस्वती। आत्रेयी भारती चैव सरयूर्गण्डकी तथा। करतोया चन्द्रभागा श्वेतगङ्गा च कौशिकी। भोगवती च पाताले स्वर्गे मन्दाकिनी तथा ॥ एतास्त्वामित्यादि ॥ १८ ॥ भैरवो भीमरूपश्च शोणो घर्घर एव च। सिन्धुतोयह्रदाः पान्तु तथा पातालसम्भवाः। यानि कानि च तीर्थानि पुण्यान्यायतनानि च। तानि त्वामभिषिञ्चन्त्वि-त्यादि ॥ १९ ॥ जम्बुद्वीपादयो द्वीपाः सागरा लवणादयः। अनन्ताद्यास्तथा नागाः सर्पा ये तक्षकादयः। एते त्वामित्यादि ॥ २० ॥ रतिश्च वल्लभा वह्निर्वषट्कूर्च्चमतः परम्। वौषट्कारस्तु फट्कारमभिषिञ्चन्तु सर्वदा ॥ २१ ॥ नश्यन्तु प्रेतकुष्माण्डा राक्षसा दानवाश्च ये। पिशाचा गुह्यका भूता अभिषेकेण ता-

ड़िता: ॥ २२ ॥ अलक्ष्मी: कालकर्णी च पापानि सुमहान्ति च। नश्यन्तु चाभिषिकेण तारावीजेन ताड़िता: ॥ २३ ॥ रोगा: शोकाश्च दौर्बल्यं दारिद्र्यं चित्तविक्रिया। नश्यन्तु चाभिषेकेण वाग्वीजेनैव ताड़िता: ॥ २४ ॥ लोकानुरागत्यागश्च दौर्भाग्यमपि दुर्यश:। नश्यन्तु चाभिषेकेण मन्मथेनैव ताड़िता: ॥ २५ ॥ तेजो-ह्रासो बलह्रासो बुद्धिह्रासस्तथैव च। नश्यन्तु चाभिषेकेण शक्तिवीजेन ताड़िता: ॥ २६ ॥ विषापमृत्युरोगश्च डाकिन्यादि-भयं तथा। घोराभिचारा: क्रूराश्च ग्रहा नागास्तथा परे। नश्यन्तु चाभिषेकेण कालीवीजेन ताड़िता: ॥ २७ ॥ नश्यन्तु श्वापद: सर्वा: सम्पद: सन्तु सुस्थिरा:। अभिषेकेण शाक्तेन पूर्णा: सन्तु मनोरथा: ॥ २८ ॥ शारदायाम् ॥ अवशिष्टेन तोयेन शिष्यमाचा-मयेद्गुरु:। ततस्तत् सकलीकुर्य्याद्देवतात्मानमात्मवित्। आचम्य वाग्यतो भूत्वा निषीदेत् सन्निधौ गुरो:। देवतामात्मन: शिष्ये संक्रान्तां देशिकोत्तम:। पूजयेद्गन्धपुष्पाद्यैरैक्यं सम्भावयं-स्तयो: ॥ निरुत्तरतन्त्रे ॥ एवं संसिच्य शिष्यन्तु पुन: पूजां समा-चरेत्। मेरुतन्त्रे तृतीयप्रकाशेऽपि ॥ अथ शिष्यञ्चाभिषिञ्चेदाशु सम्पदवाप्तये। कुम्भास्यस्थसुरद्रुञ्च मूर्द्ध न्यस्य शिशोर्गुरु:। अथ पञ्चनिनादैश्च विप्राशीर्वचनै: सह। गृहीत्वाभ्यर्च्चितं पूर्वं करकं ब्रह्मरूपिणम्। तत्तोयैरभिषिञ्चेत्तं रक्षायै देशिकोत्तम:। शिष्यो-ऽपि तत्र सम्पूज्य गुरवे दक्षिणां ददेत्। गोभूमिशिष्यसत्त्वञ्च रौप्यरत्नानि पार्वति!। सर्वस्वं वा तदर्द्धं वा तदर्द्धं वापि दक्षि-णाम् ॥ दक्षिणेषा तु मन्त्रग्रहणानन्तरं यदि अभिषेक: क्रियते तदा कर्त्तव्या। अभिषेकानन्तरं चेन्मन्त्रग्रहणं तदा तद्दक्षिणायै वा अङ्गीभूताभिषेकादिदक्षिणा सिद्धेति ॥ वामकेश्वरतन्त्रे वि-पञ्चाशत्पटले ॥ अभिषिक्त: साधकेन्द्र: क्रियादक्षो भवेत् प्रिये!। शरीरशोधनं देवि! न प्रसिध्येत् क्रियां विना ॥ शारदायाम् ॥

दद्याद्विद्यान्तरं तस्मै विनीतायाम्बुपूर्वकम्। गुरोर्लब्ध्वा पुन-र्विद्यामष्टकृत्वो जपेत् सुधीः। गुरुविद्यादेवतानामैक्यं सम्भा-वयन् धिया। प्रणमेद्दण्डवद्भूमौ गुरुं तं देवतात्मकम्। तस्य पादाम्बुजद्वन्द्वं निजमूर्द्धनि योजयेत्। शरीरमर्थं प्राणञ्च सर्वं तस्मै निवेदयेत्। ततः प्रभृति कुर्वीत गुरोः प्रियमनन्यधीः। ऋत्विग्भ्यो दक्षिणां दद्यात् समग्रां प्रीतमानसः। ब्राह्मणां-स्तर्पयेत् पश्चात् भक्ष्यभोज्यसदक्षिणान्। एषा क्रियावती दीक्षा प्रोक्ता सर्वसमृद्धिदा॥ बृहन्नीलतन्त्रे तृतीयपटले॥ तस्य छाया-नुसारी स्यान्निकटे त्रिदिनं वसेत्। नोचेत् सञ्चारिणी शक्ति-र्गुरुमेति न संशयः॥ इति क्रियावती दीक्षा॥

आणवी दीक्षा तु दशविधा। तद्यथा॥ आणवी बहुधा दीक्षा नादेयी शाम्भवी पुनः। एकधैवेति विद्वद्भिः पठ्यते शास्त्र-कोविदैः॥ राघवभट्टधृतं वचनम्॥ आणवी बहुधेत्युक्ता तद्भेद-मधुनोच्यते। स्मार्त्ती मानसिकी योगी चाक्षुषी स्पार्शिकी तथा। वाचिकी मान्त्रिकी हौत्री शास्त्री चेत्यभिषेचिका। विदेशस्थं गुरुं स्मृत्वा शिष्यं पापत्रयं क्रमात्। विश्लेष्य लय-भागाङ्गविधानेन परे शिवे। सम्यग्योजनरूपैर्या स्मार्त्ती दी-क्षेति कथ्यते। स्वसन्निधौ समासीनमालोक्य मनसा शुचिः। मलत्रयादुपायैर्या विज्ञेया सा तु मानसी॥ योगोक्तक्रमतो योगी शिष्यदेहं प्रविश्य तु। गृहीत्वा तस्य चात्मानं स्वदेहयोजना-त्मिका। योगदीक्षेति सा प्रोक्ता मलत्रयविनाशिनी॥ ३॥ शिवोऽहमिति निश्चित्य वीक्षणं करुणार्द्रया। दृशा सा चाक्षुषी दीक्षा सर्वपापप्रणाशिनी॥ ४॥ स्वयं परशिवो भूत्वा निःसन्दि-ग्धमना गुरुः। शिष्यहस्तेन शिष्यस्य स्वमन्त्रं मूर्द्ध्नि संस्पृशेत्। स्पर्शदीक्षेति सा प्रोक्ता शिवाभिव्यक्तिकारिणी॥ ५॥ शिवहस्त-लक्षणं यथा सोमशम्भौ॥ गन्धैर्मण्डलकं स्वीयैर्विदध्याद्दक्षिणे करे।

विधिना त्वर्च्चयेद्देवमित्यं स्याच्छिवहस्तकमिति। स्वीयैर्गन्धैः स्वस्वगन्धाष्टकैरित्यर्थः॥ गुरुवक्त्रं निजं वक्त्रं विभाव्य गुरुराद-रात्। गुरुवक्त्रप्रयोगेण दिव्यमन्त्रादिकं शिशोः। मन्त्रन्यासा-दिभिः सार्द्धं दद्यात् सेयञ्च वाचिकी॥६॥ दीपवातो यथा मन्त्र-न्याससंयुक्तविग्रहः। स्वयं मन्त्रतनुर्भूत्वा संक्रमं मन्त्रमादरात्। दद्यात् शिष्याय सा दीक्षा मान्त्री मलविघातिनी॥७॥ कुण्डे वा स्थण्डिले वापि निक्षिप्याग्निं विधानतः। लयभागक्रमेणैव प्रत्यध्वानं यथाक्रमम्। मन्त्रवर्णकला तत्र पदविष्टपमेव च। संशोध्य होमरूपैर्या हौत्री दीक्षा समीरिता॥८॥ योग्यशिष्याय भक्ताय शुश्रूषार्च्चापराय च। सार्द्धं शास्त्रपदा द्व्या शास्त्री दी-क्षेति सोच्यते॥ ९॥ शिवञ्च शिवपत्नीञ्च कुम्भे सम्पूज्य सादरम्। शिवकुम्भाभिषेकात्मा दीक्षा स्यादभिषेचिका॥ १०॥ शारदा-याम्॥ अथ वर्णात्मिकां वक्ष्ये दीक्षामागमचोदिताम्। पुंप्रकृ-त्यात्मका वर्णाः शरीरमपि तादृशम्। यतस्तस्मात्तनौ न्यस्येद्-वर्णान् शिष्यस्य देशिकः। तत्तत्स्थानयुतान् वर्णान् प्रतिलोमेन संहरेत्। आज्ञया देवताभावाद्विविधा देशिकोत्तमः। तदा विनीय तत्तोयं शिष्यो दिव्यतनुर्भवेत्। परमात्मनि संयोज्य तच्चै-तन्यं गुरूत्तमः। तस्मादुत्पादितान् वर्णान्न्यस्येच्छिष्यतनौ पुनः। सृष्टिक्रमेण विधिवच्चैतन्यञ्च नियोजयेत्। जायते देवताभावः परानन्दमयः शिशोः। एषा वर्णमयी दीक्षा प्रोक्ता ज्ञानप्रदा-यिनी॥ कलावती दीक्षा तु अस्मद्गोष्ठीगरिष्ठकृष्णानन्दागम-वागीशेन स्वकृततन्त्रसारग्रन्थे लिखिता। संक्षेपदीक्षापीत्यतो नैतयोरत्र प्रयोजनम्॥ वेधमयी दीक्षाप्यप्रचरद्रूपतया न लि-खिता॥ अन्वेषकैः शारदायां पञ्चमपटले अन्वेष्येति॥

अथ क्रमदीक्षा॥ कामाख्यातन्त्रे द्वात्रिंशत्पटले॥ देव्यु-वाच॥ क्रमदीक्षां ब्रूहि नाथ! यदि तेऽस्ति कृपा मयि। कथं

वा कुरुते दीक्षां क्रमेण जगदीश्वर!॥ शिव उवाच॥ श्रुता दीक्षा बहुविधा देवानां प्रीतिदायिका। इदानीं कथयिष्यामि यदि कस्मै न वक्ष्यसि। प्रकाशाद्बहवो दोषाः सर्वत्र गोपिता मया। कलौ पापसमाचारे सिद्धिर्न स्यात् कदाचन। सिद्धिर्न स्यात् सिद्धिर्न स्यात् कलौ नान्यविधानतः। क्रमदीक्षाविहीनस्य कलौ न स्यात् कथञ्चन। इति ज्ञात्वा महेशानि! क्रमदीक्षां समाचरेत्। रसैर्मन्त्रैर्यथा विद्धमयः सौवर्णतां व्रजेत्। क्रमदीक्षाप्रभावेण तथात्मा शिवतां लभेत्। जपो देवार्चनविधिः कार्य्यो दीक्षाक्रमेण वै। उपचारसहस्रैस्तु योजितां भक्तिसंयुताम्। क्रमदीक्षां विना देवि! न गृह्णन्ति कदाचन। आदौ काली ततस्तारा सुन्दरी तदनन्तरम्। क्रमदीक्षेति विख्याता सर्वदा सिद्धिकामतः। राज्यं देयं शिरो देयं न देयं क्रमयोगतः। विधानं क्रमतः सिद्धिरभिषेकाच्च पार्वति!। विशुद्धमातापितृको जितेन्द्रियः सर्वागमज्ञः परदुःखकातरः। एवंविज्ञो गुरुरेव शान्तः कुलीनशिष्यः क्रमतो विधानम्। नात्र शुद्धाद्यपेक्षास्ति न वा सिद्धादिचिन्तनम्। न चाधिकारिचिन्ता च ग्रहणे क्रमयोगतः। एकाहे वा वत्सरे वा वत्सरान्तेऽपि पार्वति!। तस्मात् शिष्यः प्रयत्नेन गृह्णीयात् क्रमयोगतः। गृहीत्वा गुरुवक्त्राच्च क्रमेण पूजयेच्च ताः। क्रमेण च यजेद्देवि! पुरश्चर्य्याक्रमेण च। प्रथमे दिवसे शिष्यः संयतात्मा जितेन्द्रियः। द्वितीये चोपवासश्च त्रिदिने दीक्षयेद्गुरुः। कुलीनत्वस्य स्वीकारं कारयित्वा मनून् वदेत्। एकाक्षरं त्र्यक्षरं वा द्वाविंशत्यक्षरं तथा। द्वितीयायास्तथा प्रोक्तं तृतीयायास्त्रिकूटतः। क्रमेण दिवसे वापि क्रमेण वत्सरेण च। वत्सरान्ते तथा देवि! क्रमेण दीक्षयेद्गुरुः। ग्रामान् दासांश्च दासीश्च सुवर्णञ्च यथाक्रमम्। गुरवे दक्षिणां दद्याद् विभवस्यानुसारतः। यदि भाग्यवशाद्

देवि ! क्रमदीक्षा च जायते। तदा सिद्धिर्भवेत्तस्य नात्र कार्य्या विचारणा। क्रमदीक्षाविहीनस्य कथं सिद्धिः कलौ भवेत्। सर्व्वाश्रमेषु भूतेषु सर्वदेवेषु सुव्रते !। क्रमं विना महेशानि ! सर्वं तेषां वृथा भवेत्। तस्मात् सर्वप्रयत्नेन गुरुणा दीक्षितो भवेत्। क्रममूलं जगत् सर्वं क्रममूलं परं तपः। अदीक्षिता यदि स्नाता किञ्चिदादाय भोजयेत्। वृथा दानं भवेत्तस्य तस्मात् सर्वं विवर्जयेत्। सद्गुरोराहिता दीक्षा सर्वकर्म्माणि कारयेत्॥ इति क्रमदीक्षा॥

शाक्तानन्दतरङ्गिणीधृतगुप्तदीक्षातन्त्रे॥ स्मृतमप्यनुगच्छेत विद्यामन्त्रो विशेषतः। मन एव मनुष्यस्य पूर्वकर्म्माणि शंसति। यदि न स्यान्महेशानि ! मनुष्यस्य कथं भवेत्। दीक्षायाश्च कथं तस्य मनो भवति पार्वति !। तस्मात्तु यत्नतो देवि ! पूर्वविद्यां समुद्धरेत्। वकुलाश्वत्थवटकं पत्रत्रं शृणु प्रिये !। वटपत्रे महेशानि ! शक्तिमन्त्रं लिखेत् प्रिये !। अश्वत्थे विष्णुमन्त्रञ्च वकुले शिवमन्त्रकम्। रक्तचन्दनेन देवेशि ! काश्मीरेण महेश्वरि !। शक्तिमन्त्रं लिखेद्देवि ! चन्दने विष्णुमन्त्रकम्। भस्मना शिवमन्त्रञ्च विलिखेत् परमेश्वरि !। सप्तसप्तकपत्रेषु तत्तद्देवताया मन्त्रं लिखेदित्यर्थः॥ प्राणप्रतिष्ठां तन्मन्त्रे कारयेद्यत्नतः सुधीः। तत्तद्देवतायाः प्राणप्रतिष्ठां कारयेत्। यथाशक्त्युपचारेण सम्पूज्य परमेश्वरि !। ततः शिष्योऽर्घ्यपात्रञ्च हस्ते कृत्वा महेश्वरि !। अनेन मनुना मन्त्री भास्कराय निवेदयेत्॥ अर्घ्यद्रव्यमाह॥ आपः क्षीरं कुशाग्राणि घृतं दधि तथा मधु। रक्तानि करवीराणि तथैव रक्तचन्दनम्। अष्टाङ्ग एषोऽर्घ्यो वै भानवे परिकीर्त्तितः। ओँ भो देव ! पृथिवीपाल ! सर्वशक्तिसमन्वितः। ममार्घ्यञ्च गृहाण त्वं पूर्वविद्यां प्रकाशय। अर्घ्यं दत्त्वा नमस्कृत्य कृताञ्जलिः पठेत्ततः॥ गान्धर्वे॥ न दद्या-

द्भास्कराया र्घ्यं शङ्खतोयैर्महेश्वरि!। ओं सूर्य्यः सोमो यमः कालो महाभूतानि पञ्च वै। एते शुभाशुभस्येह कर्म्मणो नव साक्षिणः। सर्व्वदेवाः शरीरस्था मम मन्त्रस्य साक्षिणः। पूर्व्वजन्मार्जितां विद्यां मम हस्ते प्रदापय। पठित्वेदं महेशानि! सत्वरं पत्रमुद्धरेत्। उद्धृत्य पत्रमेकन्तु गुरोर्हस्ते प्रदापयेत्। गुरुस्तु अक्षरश्रेणी-मुद्धृत्य परमेश्वरि!। सेतुं दत्त्वा महेशानि! तत्राष्टशतकं जपेत्। शिष्यस्य मस्तके हस्तं दत्त्वा चाष्टशतं जपेत्। गुरुस्तु प्राङ्मुखो भूत्वा शिष्यः प्रत्यङ्मुखः स्थितः॥ अन्यच्च। प्राङ्मुखो गुरुरासीनः शिष्यः प्रत्यङ्मुखः स्थितः। त्रिवारं दक्षिणे कर्णे वामकर्णे तथा सकृत्। स्त्रीशूद्रविषये कुर्य्याद्वैपरीत्येन चिन्तनम्। आचम्य संयतो भूत्वा प्राणायामं विधाय च। अष्टोत्तरशतं जप्त्वा ऋष्यादिकसमन्वितम्। अष्टकृत्वो जपेन्मन्त्रं वामकर्णे सुरेश्वरि!। इयं दीक्षा सर्व्वतन्त्रे शक्तेर्या परिकीर्त्तिता। गुरोर्लब्धां महाविद्यामष्टोत्तरशतं जपेत्। गुरवे दक्षिणां दद्याद्वित्तशाठ्यं न कारयेत्। गुरवे गुरुपुत्राय तत्पत्नै वा प्रदापयेत्॥ कुलार्णवे॥ गुरुप्रीतिसमुत्पन्ने देवता प्रीतिमाप्नुयात्। देवताप्रीतिमापन्ने मन्त्रसिद्धिर्भवेद्ध्रुवम्। पत्ररत्नं प्रधानेन दीक्षां कुर्य्यात् कलौ युगे। ततः सिद्धो भवेन्मन्त्री नात्र कार्य्या विचारणा। एतज्ज्ञानं विना देवि! दीक्षां कुर्य्याच्च यो नरः। दीक्षा तु विफला तस्य अन्ते तु नरकं व्रजेत्। ततः शिष्यो महेशानि! प्रणमेद्दण्डवद्भुवि॥ ततो गुरुर्व्वदेत्॥ उत्तिष्ठ वत्स! मुक्तोऽसि सम्यगाचारवान् भव। कीर्त्तिः श्रीकान्तिमेधायुर्बलारोग्यं सदास्तु ते॥ योगिनीहृदये॥ मन्त्रं दत्त्वा गुरुश्चैव उपवासं समाचरेत्। महान्धकारनरके कृमिर्भवति नान्यथा॥ रुद्रयामले॥ श्यामाभया भैरवी ताराच्छिन्नमस्तासु भैरवि!। मञ्जुघोषे तथा रौद्रे पञ्चाङ्गं न्यस्यते बुधैः॥ तत्रापि गुह्यकाली-

विषये पञ्चायतनदीक्षा तत् पुरैवोक्तम् ॥ कलौ तान्त्रिकसंस्कारः पवरत्नदीक्षादिकञ्चोक्तम् ॥ प्रस्तावक्रमेणेदानीं प्रबलकलिलक्षण-मुच्यते ॥ यथा महानिर्वाणतन्त्रे चतुर्थोल्लासे ॥ यदा तु वैदिकी दीक्षा दीक्षा पौराणिकी तथा । न स्थास्यति वरारोहे ! तदैव प्रबलः कलिः । यदा तु पुण्यपापानां परीक्षा वेदसम्भवा । न स्थास्यति शिवे ! शान्ते ! तदैव प्रबलः कलिः । क्वचिच्छिन्ना क्वचिद्भिन्ना यदा सुरतङ्गिणी । भविष्यति कुलेशानि ! तदैव प्रबलः कलिः । यदा स्त्रियोऽतिदुर्दान्ताः कर्कशाः कलहे रताः । यदा तु म्लेच्छजातीया राजानो धनलोलुपाः । भविष्यन्ति महाप्राज्ञे ! तदैव प्रबलः कलिः । यदा तु मानवा भूमौ स्त्रीजिताः काम-किङ्कराः । द्रुह्यन्ति गुरुमित्रादीन् तदैव प्रबलः कलिः । यदा क्षौणी स्वल्पफला न मेघास्तोयवर्षिणः । असम्यक्फलिनो वृक्षा-स्तदैव प्रबलः कलिः । भ्रातरः स्वजनामात्या यदा धनफले-च्छया । मिथः सम्प्रहरिष्यन्ति तदैव प्रबलः कलिः । प्रकटे मद्यमांसादौ निन्दारम्भविवर्जिते । गूढ़पानं प्रकुर्वन्ति तदैव प्रबलः कलिः । सत्यत्रेताद्वापरे च यथा मद्यादिसेवनम् । कला-वपि तथा कुर्य्यात् कुलवर्त्मानुसारतः ॥ इति प्रबलकलिलक्षणम् ॥

कलेरुपशमप्रकारोऽपि तत्रैव ॥ ये कुर्वन्ति कुलाचारं सत्य-पूता जितेन्द्रियाः । व्यक्ताचारदयाशीला न हि तान् बाधते कलिः ॥ गुरुशुश्रूषणे युक्ता भक्ता मातृपदाम्बुजे । अनुरक्ताः स्वदारेषु न हि तान् बाधते कलिः । सत्यव्रताः सत्यनिष्ठाः सत्य-धर्म्मपरायणाः । कुलसाधनसत्या ये न हि तान् बाधते कलिः । कुलमार्गेण तत्त्वानि शोधितानि च योगिने । ये दद्युः सत्य-वचसे न हि तान् बाधते कलिः । हिंसामात्सर्य्यरहिता दम्भद्वेष-विवर्ज्जिताः । कुलधर्मेषु निष्ठा ये न हि तान् बाधते कलिः । लौकिकैः सह संसर्गं वसितं कुलसाधुषु । कुर्वन्ति कौलसेवां ये

न हि तान् बाधते कलिः । नानावेशधराः कौलाः कुलाचारेषु निश्चलाः । सेवन्ते त्वां कुलाचारैर्न हि तान् बाधते कलिः । बीजसेकादिसंस्कारान् पितृश्राद्धादिकाः क्रियाः । ये कुर्व्वन्ति कुलाचारैर्न हि तान् बाधते कलिः । कुलतत्त्वं कुलद्रव्यं कुलयोगिनमेव च । नमस्कुर्व्वन्ति ये भक्त्या न हि तान् बाधते कलिः । कौटिल्यानृतहीनानां स्वच्छानां कुलमार्गिणाम् । परोपकारव्रतिनां साधूनां किङ्करः कलिः ॥

अथ कलेर्गुणः ॥ कलेर्दोषसमूहस्य महानेको गुणः प्रिये ! । सत्यप्रतिज्ञा कौलानां श्रेयः सङ्कल्पमात्रतः । अपरे तु युगे देवि! पुण्यपापञ्च मानसम् । नृणामासीत् कलौ पुण्यं मानसं न तु दुष्कृतम् । कुलाचारविहीना ये सततं सत्यभाषिणः । परद्रोहपरा ये च ते नराः कलिकिङ्कराः । कुलधर्म्मेष्वभक्ता ये परयोषित्सु कामुकाः । द्वेष्टारः कुलनिष्ठानां ते ज्ञेयाः कलिकिङ्कराः । प्रकटेऽत्र कलौ देवि ! सर्व्वे धर्म्माश्च दुर्ब्बलाः । स्थास्यत्येकं सत्यमात्रं तस्मात् सत्यमयो भवेत् । सत्यधर्म्मं समाश्रित्य यत्कर्म्म कुरुते नरः । तदेव सफलं कर्म्म सत्यं जानीहि सुव्रते ! । न हि सत्यात् परो धर्म्मो न पापमनृतात्परम् । तस्मात् सर्व्वात्मना मर्त्यः सत्यमेकं समाश्रयेत् । सत्यहीना वृथा पूजा सत्यहीनो वृथा जपः । सत्यमूलाः क्रियाः सर्व्वाः सत्यात् परतरं न हि । अत एव मया प्रोक्तं दुष्कृते प्रबले कलौ । कुलाचारोऽपि सत्येन कर्त्तव्यो व्यक्तभावतः । गोपनाद्धीयते सत्यं न गुप्तिरनृतं विना । तस्मात् प्रकाशतः कुर्य्यात् कौलिकः कुलसाधनम् । कुलधर्म्मस्य गुप्त्यर्थं नानृत्यं स्याज्जुगुप्सितम् । यदुक्तं कुलतन्त्रेषु न शस्तं प्रबले कलौ । कृते धर्म्मश्चतुष्पादस्त्रेतायां पादहीनकः । द्विपादो द्वापरे देवि ! पादमात्रं कलौ युगे । तत्रापि सत्यं बलवत्तपः शौचं दयापि च । सत्यपादे कृते लोपे धर्म्मलोपः प्रजायते ।

तस्मात् सत्यं समाश्रित्य सर्वकर्माणि साधयेत्। कुलाचारं विना यत्र नास्त्युपायः कुलेश्वरि!। तत्रानृतप्रवेशः स्यात् कुतो निःश्रेयसं भवेत्। सर्वथा सत्यपूतात्मा सम्मुखेरितवर्त्मना। सर्वं कर्म नरः कुर्य्यात् स्वस्ववर्णाश्रमोदितम्। दीक्षां पूजां जपं होमं पुरश्चरणतर्पणम्। ऋतोद्वाहौ पुंसवनं सीमन्तोन्नयनं तथा। जातकर्म तथा नाम चूड़ाकरणमेव च। यात्रां गृहप्रवेशञ्च नववस्त्रादिधारणम्। वापीकूपतड़ागानां संस्कारं तिथिकर्म च। गृहारम्भं प्रतिष्ठाञ्च देवतास्थापनं तथा। मयोक्तेन विधानेन तत्सर्वं साधयेन्नरः। यदि मन्मतमुत्सृज्य महेशि! प्रबले कलौ। तदा यत् क्रियते कर्म विपरीताय तद्भवेत्॥ अष्टमोल्लासे॥ अतोऽत्र कथितं देवि! द्विजानां प्रबले कलौ। गायत्रयामधिकारोऽस्ति नान्यमन्त्रेषु कर्हिचित्। द्विजातीनां प्रभेदार्थं शूद्रेभ्यः परमेश्वरि!। सन्ध्येयं वैदिकी प्रोक्ता प्रागेवाह्निककर्मणः॥

विश्वासो रामहर्य्याह्वय इह सुकृती पुण्यकीर्त्तिर्वरिष्ठः साक्षाद्धर्मो महात्मा स्म जनयति नरः श्रीलनारायणाभौ। शान्तौ दान्तौ सदन्तःकृतिमिलितजगन्मोहनप्राणकृष्णौ श्रीवाणीशौ प्रतापानलकलितमहारातिवंशाटवीकौ॥ श्रीप्राणकृष्णविश्वासः सुतान् सप्त महोदयान्। अजीजनद्देवविप्रभक्तान्नानागुणान्वितान्॥ श्रीलानन्दमयज्येष्ठः सदानन्दमयः कृती। श्रीरामचन्द्रस्तदनु दयाधर्मप्रतापवान्। श्रीविश्वनाथो विश्वात्मा तदनु ज्ञानदानवान्। श्रीशम्भुनाथस्तदनु स्निग्धमूर्त्तिर्दयामयः। श्रीकाशीनाथविश्वासो विश्वासकुलपावनः। श्रीचन्द्रनाथस्तदनु चन्द्रहृच्चो गुणाकरः। एतेऽप्युद्योगिनो ग्रन्थकारणार्थे यतः सदा। अतो नामान्यत्र तेषां निबध्नाम्यतियत्नतः॥ धीमान् श्रीमान् भुवनविदितस्तन्त्रसारस्य कर्त्ता कृष्णानन्दोऽजनि भुवि नवद्वीपदेशप्रदीपः। काशीनाथोऽभवदिह सुतस्तस्य सारावलीकृत् विद्वान्

मान्योऽजनि तदनुजो विश्वनाथाह्वयोऽत: ॥ गोपालो निर्णयकृतियशस्वी मधो: सूदनाच्चाभूतां पुत्री मधुसुत इत: कालिदास: प्रसिद्ध: । तत्पुत्रोऽभूद्रघुवरपरो नाथ एकान्तबुद्धिस्तत्सूनुश्चाभवदिह सुधीमङ्गल: कृष्णपूर्व: ॥ श्रीकृष्णमङ्गलसुतो नवपल्लिकाया: श्रीरामतोषण इदं कृतवान् द्वितीयम् । काण्डन्तु संस्कृतियुतं फलपुष्पशोभं धर्माभिधं कृतिमतां सकलेष्टसिद्ध्यै ॥

इति श्रीप्राणकृष्णविश्वासानुमतायां श्रीरामतोषणविद्यालङ्कारभट्टाचार्य्यविरचितायां श्रीप्राणतोषिण्यां टीक्षारूपफलकथनात्मकषष्ठपरिच्छेदान्वितधर्मकाण्डं समाप्तम् ॥

नवशशधरखण्डं बिभ्रती चन्द्रकान्तद्युतिरमरनराद्यैरर्चिता भारती न: । अवतु विशदपद्मे सन्निषस्ना प्रसन्ना नवरसरुचिरा सङ्गीतविद्याद्यधीशा ॥ श्रीप्राणकृष्णकृतिरस्य निदेशवर्त्ती मैत्रेयवंशजकुलाश्रितचक्रवर्त्ती । श्रीरामतोषण इदं विदधे निजेष्टदेवीप्रसादजनितं रुचिरार्थकाण्डम् ॥ तृतीयस्यार्थकाण्डस्य निर्घण्ट: क्रियते मया । केषाञ्चिदन्यन्निर्द्दिष्टं यथास्थानं विलोक्यताम् । आचारसप्तकं तत्र वेदाचारक्रमस्तथा । उत्थाय भूतशुद्ध्यादिकार्य्यं ध्यानं गुरोस्तत: । पञ्चभूतात्मकै: पञ्चोपचारैर्मानसार्च्चनम् । ततश्च सद्गुरुध्यानं कुलवृक्षनतिस्तत: । पादुकामन्त्रकथनं तस्य माहात्म्यकीर्त्तनम् । गुरुतत्स्त्रीपूजनस्य मन्त्रस्तु तदनन्तरम् । जपमन्त्रो गुरुस्तोत्रकवचानि गुरोर्नति: । सद्गुरोश्च नमस्कारो ब्राह्मणादिनमस्कृति: । स्त्रीगुरुध्यानस्तवनकवचानि तत: परम् । तन्माता गुरुपूजा च गुरुपङ्क्तिनिरूपणम् । इति ग्रन्थस्वरूपाद्यपरिच्छेदसमापनम् । तत: कुण्डलिनीध्यानं तत्स्तोत्रकवचे तत: । सौरगणेशमन्त्राद्यजपसमर्पणं तत: । हंसध्यानाजपासंख्या-

अपाभेदनिरूपणम्। आत्मध्यानादिकं तस्माद्बहिर्गतिक्रम-स्तथा। मैत्रं दन्तधावनञ्च नासाशुद्ध्यञ्जने तथा। देवालयो-पलेपादिक्रमस्तोत्रं ततः परम्। परिच्छेदो द्वितीयश्च समाप्त-स्तदनन्तरम्। स्नानफलं स्नानभेदाभ्यन्तरस्नाननिर्णयः। नित्य-स्नान स्नानविधिर्यस्तत् सदिति भाषणम्। सङ्कल्पश्च तन्निषिद्धपात्रं तत्पात्रनिर्णयम्। तीर्थावाहनाङ्कषट्कन्यासौ मूलजपस्तथा। मृत्तिकालम्भनादिश्च शङ्खतोयाभिषेचनम्। सङ्क्षेपतर्पणं पश्चात् परस्नातेतिकार्य्यता। तेन स्नाननिषेधश्च गात्रमार्जनवस्त्रकम्। गात्रमार्जननिषेधस्तत्कारणनिरूपणम्। गङ्गाध्यानमल्पफलं क्षेत्रमाहात्म्यमेव च। गङ्गानामादिमाहात्म्यं गङ्गामृत्युफलं ततः॥ तद्‌द्वयात्रिकस्याध्वमृत्युतत्तीरमृत्युज-फलम्। गङ्गाजलाच्चतुर्हस्तमध्ये पिण्डप्रदानजम्। फलं गङ्गा-तर्पणजं कालाकालविचारणम्। तत्र नास्ति च गङ्गायां चौर्य्यादिदोषनिर्णयः। अभिषेकामृतकृतमानसस्नानमेव च। परिधेयवस्त्रमानं कर्मभेदेऽंशुकं ततः। नीलांशुकादेश्च ततो निषेधश्चोत्तरीयकम्। त्रिधा योगपदं यज्ञोपवीतमार्जनं ततः। तिलकं स्थानभेदे तु तदाकारनिरूपणम्। ऊर्द्ध्वपुण्ड्रं तत्फलञ्च तद्दृते कर्मनिन्दनम्। ऊर्द्ध्वपुण्ड्रे त्रिपुण्ड्रस्य निषेधस्तदनन्तरम्। वैष्णवानामूर्द्ध्वपुण्ड्रं ब्राह्मणादेस्त्रिपुण्ड्रकम्। ऊर्द्ध्वपुण्ड्रस्य निर्माणविधिस्त्रेधोत्तमादिकः। तस्य वर्णभेदफलं निन्द्यपुण्ड्रं ततः परम्। ऊर्द्ध्वपुण्ड्राकृतिस्त्रेधा हरिमन्दिरलक्षणम्। पुण्ड्र-कृत्येऽङ्गुलीभेदफलं पुण्ड्रस्य मृत्तिका। गोपीचन्दनमाहात्म्यं तद्दानस्य फलं ततः। तुलसीमूलमृत्छाया माहात्म्यं तदन-न्तरम्। विष्णुनिर्माल्यानुलेपतिलकस्य तत. परम्। द्वादश-तिलकविधिवद्दाने चोपक्रमस्ततः। त्रिपुण्ड्रधारणस्थाननिरू-पणमतः परम्। भस्मान्तरं त्रिपुण्ड्रस्य पञ्चब्रह्मर्चस्ततः।

कालाग्निरुद्रोपनिषत्त्रिपुण्ड्रस्य फलं ततः। त्रिपुण्ड्राकरणे निन्दा भक्तितिलकनिर्णयः। इतिच्छेदतृतीयस्य समापनमथोच्यते। सन्ध्या वेदोदिता कार्य्या तान्त्रिकी तदनन्तरम्। सन्ध्याविहीननिन्दा च द्वादश्यादौ च तत्क्रिया। ततः परं योगिसन्ध्या योगिनां तर्पणं ततः। तेषामादित्यपूजापि कौलसन्ध्या ततः परम्। मार्जनस्य वैदिकस्य प्रकारस्तदनन्तरम्। गायत्रीव्याहृतेरर्थौ गायत्र्यर्थस्ततः परम्। सन्ध्यासवर्णरूपस्तु सवर्णदैवतन्तथा। सवर्णध्यानफलकन्तस्या यन्त्रं ततः परम्। ऋषयः प्रणवस्यापि गायत्र्याश्च ततः परम। पदन्यासः शिरोन्यासः षड़ङ्गन्यास एव च। ध्यानं तस्यास्ततो ध्यानान्तरे ऋष्यादिरेव च। निन्दा जपस्य न्यासेन विना न्यासस्य मुद्रिका। गायत्रीपूजनं पीठपूजनं तदनन्तरम्। दशावरणपूजा च द्रव्याभावे जलादिना। पुनर्जन्तु जपफलं विशेषो जपनक्रमः। अशौचेऽपि च गायत्र्या मानसो जप ईरितः। तस्यै जपार्पणं तस्याः कवचं तत्पुरस्क्रिया। तत्काम्यकर्म्म तान्त्रिक्या गायत्र्याः फलनिर्णयः। तज्जपस्य फलं तस्याः पुरश्चरणमेव च। तस्या ऋष्यादिविन्यासस्त्रिसन्ध्यध्यानमेव च। यागस्थानागतिः पादप्रक्षालनमतः परम्। द्वारपूजा वैष्णवादिमतभेदेन तत्परम्। पूजागृहप्रवेशश्चासनञ्च तदनन्तरम्। फलभेदे त्वासनस्य भेदश्च गृहमेधिनाम्। कृष्णाजिनविशेषश्चासनानाञ्च फलं ततः। काष्ठासनविशेषश्च मृद्वाद्यासनमेव च। परिमाणमासनस्य कर्म्मभेदासनं ततः। शवासनादि च ततः सलोमासननिन्दनम्। आसनस्य च ऋष्यादि यतीनामासनाकृतिः। यतिभिश्चासनं ज्ञेयं चतुरस्रं समन्ततः। प्रौढ़पादनिषेधश्च प्रौढ़पादस्य लक्षणम्। सिद्धासनं ततः पद्मासनं योगोपयोगि च। द्रव्यस्थापनदेशश्च त्रिविधं पात्रमेव च। पाद्यपात्रं ततः पाद्याधारपात्रस्य लक्षणम्।

चर्मपात्रलक्षणञ्च चामपात्रस्य लक्षणम्। पानीयपात्रताम्बु-लपात्रस्य लक्षणं ततः। इति पल्लवविच्छेदचतुर्थस्य समापनम्। भूतशुद्धिर्भूतशुद्धौ पापदेहविनाशनम्। पापपुरुषध्यानन्तु पृथि-व्यादिविलापनम्। आवश्यकं भूतशुद्धेः स्वप्राणानां प्रतिष्ठितिः। प्राणायामस्तु तत्पूजाधारो मन्त्रशिलार्चने। न यन्त्रकरणं मूर्त्तिनिकटेऽपि कदाचन। पूजाद्वयं कृते यन्त्रे पार्थिवेऽर्च्चा-निषेधनम्। विद्याविशेषे तत्रापि पूजासाधकसिद्धये। ब्रह्मणो मूर्त्तिराख्याता श्वेतकृष्णादिरूपिणी। कालिकाया रूपनेत्रादि-वीजं तदनन्तरम्। आविर्भावो देवतायाः प्रतिमादौ निरूपितः। कृष्णादिमूर्त्तेर्नित्यत्वं मन्त्रः प्राणप्रतिष्ठितेः। तस्य ऋष्यादि-विन्यासः षडङ्गन्यास एव च। मन्त्रन्यासस्ततो ध्यानं पूजा तस्य पुरस्क्रिया। प्राणदूत्यः प्रयोगश्च तद्यन्त्रकरणं ततः। आसनं पाद्यमर्घ्यञ्चाचमनीयं ततः परम्। मधुपर्कः पुनराच-मनीयं तदनन्तरम्। गन्धशब्दस्य व्युत्पत्तिर्गन्धस्तद्दानजं फलम्। गन्धाष्टकं पञ्चविधं पुष्पव्युत्पत्तिरेव च। पुष्पञ्च करवीरस्य फलं तदनु कीर्त्तितम्। करवीरादिमूले तु प्राणत्यागफलं ततः। श्वेतादिकरवीराणां माहात्म्यं तदनन्तरम्। अपराजितादि-माहात्म्यं विशेषपुष्पदानजम्। फलं पुष्पफलं कृष्णापराजिता-फलं ततः। रसालमञ्जरीत्यादिफलं श्रीचक्रपूजने। कृते पुष्प-विशेषेण प्रायश्चित्तं ततः परम्। ह्रस्वपुष्पदानस्य निषेध-कारणं ततः। मध्याह्नस्नानमर्त्त्यस्य पुष्पाहरणनिन्दनम्। पुष्प-मालायज्ञसूत्रमालाभेदनिषेधनम्। वर्ज्यपुष्पं कालभेदे देव-भेदेऽपि तत्परम्। धूपशब्दस्य व्युत्पत्तिर्धूपस्तद्दानजं फलम्। दीपशब्दस्य व्युत्पत्तिर्दीपो वस्त्रं ततः परम्। अलङ्कारश्च नैवेद्यं ताम्बूलं तदनन्तरम्। निषिद्धश्चैव ताम्बूलं नतिभेदस्ततः परम्। निर्माल्यकालविज्ञानं देवतायै निवेद्यकम्। सन्देशादि-

नारिकेलशस्यं मिष्टसमन्वितम् । इक्ष्वादिफलं शस्तं शाको मूलादिसम्भवः । तिन्तिड़ीगिरिकुष्माण्डे निषिद्धे वनजं तथा । वीजपूरं कदल्यादि चाकालपनसस्तथा । शस्यानि यानि देयानि निषिद्धानि ततः परम् । निषिद्धं लवणं क्षारं प्राचीभूतादिकं तथा । मार्गादिमांसं दातव्यं निषिद्धं माहिषं तथा । क्षीरं दधि घृतश्चैव पक्षिणां हरितादयः । देया मत्स्याश्चित्रकाद्या निषिद्धा च विड़ालिका । अभक्ष्या जालपादाद्याः शकुना ये तथा-भिधाः । अभक्ष्याश्च तथा प्रोक्ताः शाकाः कौसुम्भकादयः । निषिद्धं रामरम्भादि धान्यं श्रावणिकादि च । नारिकेलं सुवर्णाभं कर्कन्धुः शर्करान्विता । न देयस्तित्तकमठो मत्स्या गोमीनकादयः । भक्ष्या-भक्ष्ये देशभेदे तान्त्रिकैर्वर्ज्यमेव च । मृतमांसं त्रिरात्रावस्थितं मांसं तथैव च । मांसत्यागफलञ्चैव कार्त्तिकादौ विशेषतः । पक्षी भक्ष्योऽप्यभक्ष्योऽप्यभक्ष्या नृवानरादयः । कुक्कुरादिमांस-भोगे प्रायश्चित्तं ततः परम् । मांसत्यागे तुलादौ तु फलं नाना-विधं तथा । यावज्जीवनमांसादित्यागस्य फलमेव च । हवि-ष्यान्नं ततोऽन्यानि ज्ञेयानीति यथास्थलम् । नित्यातन्त्रे प्रथम-पटले ॥ चत्वारो देवि ! वेदाद्या पशुभावप्रतिष्ठिताः । वामाद्या-स्त्रय आचारा दिव्ये वीरे प्रतिष्ठिताः । एतान् सप्ताचारान् स्पष्ट-यति कुलार्णवे पञ्चमखण्डे ॥ सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं महत् । वैष्णवादुत्तमं शैवं शैवाद्दक्षिणमुत्तमम् । दक्षिणा-दुत्तमं वामं वामात् सिद्धान्तमुत्तमम् । सिद्धान्तादुत्तमं कौलं कौलात्परतरं न हीति ॥ नित्यातन्त्रे ॥ वेदाचारं प्रवक्ष्यामि शृणु सर्वाङ्गसुन्दरि ! । ब्राह्मे मुहूर्त्ते उत्थाय गुरुं नत्वा स्वनामभिः । आनन्दनाथशब्दान्ते पूजयेदथ साधकः । सह-स्रारामबुजे ध्यात्वा उपचारैस्तु पञ्चभिः । प्रजप्य वाग्भवं वीजं चिन्तयेत् परमां कलाम् ॥ रुद्रयामले उत्तरखण्डे द्वितीय-

पटले॥ प्रभाते च समुत्थाय अरुणोदयकालतः। प्रातःकृत्यादिकं कृत्वा पुनः शय्यास्थितो नरः। गुरुं सञ्चिन्तयेत् शीर्षाम्भोजे सहस्रके दले। अत्र पूर्वोक्तवचनेनैकवाक्यतया प्रभाते ब्राह्ममुहूर्त्ते एवं वक्ष्यमाणपश्चिमयामेत्यादावपि॥ तत्र रुद्रजामल प्रथमखण्डे प्रथमपटले। ब्राह्मेऽ मुहूर्त्ते उत्थाय बद्धपद्मासनः सुधीः। विधाय भूतशुद्ध्यादीन् गुरुं प्रातः स्मरेन्नरः। आदिशब्दादिष्टदेवताध्यानादिकमेव च॥ तथाच नीलतन्त्रे प्रथमपटले॥ उत्थाय पश्चिमे यामे चिन्तयेदुग्रतारिणीम्। आमूलाद्ब्रह्मरन्ध्रान्तं विषतन्तुस्वरूपिणीम्। मूलमन्त्रमयीं साक्षादमृतानन्दरूपिणीम्। सूर्य्यकोटिप्रतीकाशां चन्द्रकोटिसुशीतलाम्। तड़िल्कोटिसमप्रेक्षां कामानलशिखोपरि। तत्प्रभापटलव्याप्तपाटलीकृतदेहवान्। सहस्रदलपङ्कजे सकलशीतरश्मिप्रभं वराभयकराम्बुजं विमलगन्धपुष्पोच्चितम्। प्रसन्नवदनेक्षणं सकलदेवतारूपिणम्। स्मरेच्छिरसि हंसगं तदभिधानपूर्वं गुरुम्॥ रुद्रजामले पूर्वखण्डेऽपि एतत् किन्तु द्वितीयचरणान्ते पुष्पस्रजमिति पाठः॥ विश्वसारे द्वितीयपटलेऽपि॥ प्रातः शिरसि शुक्लेऽब्जे द्विनेत्रं द्विभुजं गुरुम्। वराभयकरं शान्तं स्मरेत्तन्नामपूर्वकम्॥ कङ्कालमालिनीतन्त्रे प्रथमपटले च। सहस्रदलपद्मस्थं अन्तरात्मानमुज्ज्वलम्। तस्योपरि नादविन्दोर्मध्ये सिंहासनोज्ज्वले। तत्र निजगुरुं नित्यं रजताचलसन्निभम्। वीरासनसमासीनं सर्वाभरणभूषितम्। शुक्लमाल्याम्बरधरं वरदाभयपाणिनम्। वामोरुशक्तिसहितं कारुण्येनावलोकितम्। प्रियया सव्यहस्तेन धृतचारुकलेवरम्। वामेनोत्पलधारिण्या रक्ताभरणभूषया। ज्ञानानन्दसमायुक्तं स्मरेत्तन्नामपूर्वकम्॥ पूर्वखण्डेऽपि॥ वामोरुन्यस्तशक्तिञ्च स्वपाण्यालिङ्गितप्रभम्। वामहस्तोत्पलां रक्तां ध्यायेत्परमदैवतीम्॥

यत्तु रुद्रयामले उत्तरखण्डे द्वितीयपटले॥ तरुणादित्यसङ्काशं तेजोविम्बं महागुरुम् । अनन्तानन्तमहिमासागरं शशिशेखरम् । महासूक्ष्मभास्वराङ्गं तेजोविम्बं महागुरुम् । महाशुक्लाम्बराजस्थं द्विनेत्रं द्विभुजं गुरुम् । आत्मोपलब्धिविषयं तेजसा शुक्लवाससम् । आज्ञाचक्रोर्द्धनिकरं कारणञ्च सतां सुखम् । धर्मार्थकाममोक्षाङ्गं वराभयकरं विभुम् । प्रफुल्लकमलारूढ़ं सर्वज्ञं जगदीश्वरम् । अन्तःप्रकाशचपलं वनमालाविभूषितम् । रत्नालङ्कारभूषाढ्यं देवदेवं सदा भजेत् ॥ इति रक्तवर्णगुरुध्यानमुक्तम् । तद्राजसगुरुपरम् । राघवभट्टमते तु शक्तिमात्रविषये रक्तवर्णस्यैव गुरोर्ध्यानम् । न तु शुक्लस्य तदितरविषये शुक्लवर्णमेव ध्यायेदिति तन्न समीचीनम् । शक्तिविषयेऽपि नीलतन्त्रादौ शुक्लवर्णध्यानदर्शनात् । गुरुकवचेऽपि । सहस्रारे महापद्मे कर्पूरधवलो गुरुरित्यस्य वक्ष्यमाणत्वाच्च । अर्वाचीनैस्तु कर्पूरैर्धवल इति तृतीयासमासाङ्गीकारेण धवलत्वमुक्तं वस्तुतो रक्तवर्णध्यानमिति वदति तदनुशासनविरुद्धं कर्पूरलेपनस्य कुत्रापि प्रमाणं नास्ति इति । रक्तवर्णशक्तिप्रभापटलेन रक्तं वा । एतत्तु सितरक्तप्रभमिति वक्ष्यमाणे व्यक्तीभविष्यति । अत्र तु जवास्फाटिकन्यायेन शक्तिप्रभाधिक्यद्योतनाय रक्तमात्रमित्युक्तम् । कश्चित्तु व्यत्ययो बहुलमिति पाणिनीयसूत्रबलाल्लिङ्गव्यत्ययेन स्त्रीगुरुध्यानमिदमाह । राजसे रक्तवर्णध्यानन्त्वग्रे प्रतिपादयिष्ये ॥ नीलतन्त्रे ॥ ततो मानसगन्धाद्यैरर्च्चयेत् स्वस्वमुद्रया । कनिष्ठा पृथिवी तत्त्वं तद्युयोगाद्गन्धयोजनम् । अङ्गुष्ठो गगनं तत्त्वं तेनैव पुष्पयोजनम् । तर्ज्जनी वायुतत्त्वं स्याद्धूपं तेनैव योजयेत् । तेजस्तत्त्वं मध्यमा स्याद्दीपं तेनैव योजयेत् । अनामा जलतत्त्वं स्यात्तेनैव योजयेच्च कम् । ततस्तु वाग्भवं जप्यादष्टोत्तरशतं सुधीः । जपं

समर्प्य भक्त्या च प्रणमेद्दण्डवद्भुवि॥ अन्नदाकल्पेऽपि॥ मिथुनं चिन्तयित्वा तु मानसैरुपचारकैः। भौतिकैः पूजयेद्विद्वान् मुद्रामन्त्रसमन्वितैः। भूम्याकाशमरुद्वह्निवारिमन्त्रैः सविन्दुकैः। कनिष्ठाङ्गुलितर्ज्जन्यौ मध्यमानामिके तथा। अङ्गुष्ठेन समायोगान्मुद्राः पञ्चप्रकीर्त्तिताः। पृथिव्यात्मकगन्धः स्यादाकाशात्मकपुष्पकम्। धूपो वाय्वात्मकः प्रोक्तो दीपो वह्न्यात्मकः परः। रसात्मकञ्च नैवेद्यं पूजा पञ्चोपचारिका। ततस्तु वाग्भवं जप्यादष्टोत्तरशतं सुधीः॥ कङ्कालमालिनीतन्त्रे प्रथमपटले च॥ मानसैरुपचारैश्च सम्पूज्याकल्पयेन्मुदा। गन्धं भूम्यात्मकं दद्याद्भावपुष्पं ततः परम्। धूपं वाय्वात्मकं देयं तेजसा दीपमेव च। नैवेद्यममृतं दद्यात् पानीयं वरुणात्मकम्। अम्बरं मुकुरं दद्याच्चामरं छत्रमेव च। तत्तन्मुद्राविधानेन सम्पूज्यात्मगुरुं जपेत्। यथाशक्ति जपं कृत्वा समाप्य कवचं पठेत्॥ पूजाक्रमस्तु कुलमूलावतारकल्पसूत्रटीकायां तृतीयकाण्डे। निजगुरुं ध्यात्वा मुकानन्दनाथामुकशक्त्यम्बा श्रीपादुकां पूजयामीति मानसैर्गन्धाक्षतकुसुमैरर्च्चयेत्॥ कनिष्ठाभ्यां लं पृथिव्यात्मकं गन्धं समर्पयामि नमः। अङ्गुष्ठाभ्यां हं आकाशात्मकं पुष्पं समर्पयामि नमः। तर्जनीभ्यां यं वाय्वात्मकं धूपं समर्पयामि नमः। मध्यमाभ्यां रं वह्न्यात्मकं दीपं समर्पयामि नमः। अनामिकाभ्यां वं अमृतात्मकं नैवेद्यकं समर्पयामि नमः॥ ध्यानान्तरन्तु गुरुगीतायाम्॥ हृदम्बुजे कर्णिकमध्यसंस्थं सिंहासने संस्थितदिव्यमूर्त्तिम्। ध्यायेद्गुरुं चन्द्रकलाप्रकाशं सच्चित्सुखाभीष्टवरप्रदानम्। मुक्ताफलाभूषितदिव्यमूर्त्तिं वामाङ्कपीठस्थितदिव्यशक्तिम्। श्वेताम्बरं श्वेतविलेपयुक्तं मन्दस्मितं पूर्णकलाविधानम्॥ अथ शिरःपद्मं गुरुस्थानमुत्तमम्। तत्कथं हृदम्बुजे ध्यानमिति चेन्न कदाचित् हृदयाम्भोजे कदाचिद्दृष्टिगोचरे। इति

पूर्वलिखितरुद्रजामलवचनेनैव तत्सन्देहनिरासः कृतः ॥ अथ सद्गुरुध्यानम् गुरुगीतायाम् ॥ ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्त्तिं द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् । एकं नित्यं विमलमचलं सर्वदा साक्षिभूतं भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ॥ इति सद्गुरुध्यानम् ॥ रुद्रजामले पूर्वखण्डे तु कुलवृक्षप्रणामानन्तरं गुरुध्यानमुक्तम् ॥ कुलवृक्षाश्च रेवतीतन्त्रे चतुर्थपटले उक्ताः ॥ यथा । हरीतकी तथा धात्री निम्बाश्वत्थकदम्बकाः । डुम्बरुर्वटविल्वौ च तिन्तिड़ी नवमः स्मृतः । कुलकाष्ठादिकं देवि ! होमार्थञ्च समाहरेत् ॥ एतेन तिन्तिड़ीप्रभृतिकाष्ठेनापि होमार्थवह्निप्रज्वालनम् । समिद्धोमस्तूक्तकाष्ठादिभिः कार्य्य इत्यायातम् ॥ रुद्रजामले ॥ ब्राह्मे मुहूर्त्ते उत्थाय कुलवृक्षं प्रणम्य च । शिरःपद्मे सहस्रारे चन्द्रमण्डलमध्यके । अकथादित्रिरेखोये हंसमन्त्रसुपीठके । ध्यायेन्निजगुरुं वीरो रजताचलसन्निभम् । पद्मासीनं स्मितमुखं वराभयकराम्बुजम् । शुक्लमाल्याम्बरधरं शुक्लगन्धानुलेपनम् । वामोरुस्थितया रक्तशक्त्यालिङ्गितविग्रहम् । तया स्वदक्षहस्तेन धृतचारुकलेवरम् । वामेनोत्पलधारिण्या सुरक्तवसनस्रजा । सितरक्तप्रभां बिभ्रच्छिवदुर्गास्वरूपिणम् ॥ परानन्दरसापूर्णं स्मरेत्तन्नामपूर्वकम् । तारत्रयं समुच्चार्य्य हसखफ्रें ततः परम् । हसक्षमलवरयूं हसखफ्रें हसौ ततः । अमुकानन्दनाथान्ते अमुकीदेव्यनन्तरम् । अम्बाश्रीपादुकां दत्त्वा पूजयामि नमोऽन्तकः । अयं श्रीपादुकामन्त्रः सर्वेप्सितफलप्रदः । मिथुनं चिन्तयित्वा तु इत्यादि । ततस्तु वाग्भवं जप्यादष्टोत्तरशतं सुधीरित्यन्तमन्नदाकल्पेन समानमिति ॥ पादुकामाहात्म्यन्तु कुलमूलावतारकल्पसूत्रटीकाधृतपद्मवाहिन्याम् ॥ पादुकाज्ञानमात्रेण जीवन्मुक्ता भवन्ति हि ॥ कुलार्णवे ॥ वागुरामूलवलयमुद्राद्याः कवलाः कृताः । एवं

कुलार्णवमन्त्रानां पादुकायां प्रतिष्ठितम्। कोटिकोटिमहादानात् कोटिकोटिमहाव्रतात्। कोटिकोटिमहायज्ञात् परा श्रीपादुकास्मृतिः। कोटिकोटिमहातन्त्रात् कोटितीर्थावगाहनात्। कोटिदेवार्च्चनाद्दे वि! परा श्रीपादुकास्मृतिः। महारोगे महोत्पाते महादोषे महाभये। महापदि महापापे स्मृता च गुरुपादुका॥ रुद्रजामले पूर्वखण्डे प्रथमपटले॥ मायां लक्ष्मीं पुरो दत्त्वा सर्वत्र पूजने विधिः। पृथिव्यां भूमिवीजञ्च गन्धं समर्पयेति च। आकाशात्मकं शम्भुवीजं नादविन्दुसमावृतम्। पुष्पं समर्पयामीति वायुवीजं ततः परम्॥ पुरश्चरणरसोल्लासे षष्ठपटले। गुरुपूजां विधायादौ स्रक्चन्दनविभूषणैः। अलङ्कारैर्विचित्रैश्च सुवर्णादिविनिर्म्मितैः। वसनैरतिसूक्ष्मैश्च शुक्लरक्तैस्तथापरैः। पीतैः कृष्णैश्च चार्वङ्गि! पूजयेद् गुरुमुत्तमम्। चतुर्विधैर्भोजनैश्च स्वर्णपात्रैर्मनोहरैः। षोड़शैरुपचारैश्च स्वर्णराजतनिर्म्मितैः। पानपात्रैर्महेशानि! शुद्धस्वर्णविनिर्म्मितैः। ताम्बूलैश्च सकर्पूरैर्नानागन्धसमन्वितैः। स्वर्णपात्रयुतैर्देवि! शिवसिंहं प्रपूजयेत्॥ शिवसिंहं गुरुम्। अनेन विधिना देवि! पूजयेज्जगदीश्वरम्। अतः परं वरारोहे! गुरुदारान् प्रपूजयेत्। षोड़शैरुपचारैश्च इष्टदेवीं सुभक्तिभिः। आदौ गुरुं ततो देवीं सम्पूर्णं पूजयेत् प्रिये!॥ एवं गुरुं ध्यात्वा अन्तर्यागक्रमेणैव पद्मपुष्पैः समर्च्चयेदितिवचनान्मानसोपचारैः सम्पूजयेत्। पूजामन्त्रस्तु मातृकाभेदतन्त्रे सप्तमपटले॥ वाग्वीजञ्च महामायां विष्णुशक्तिं समुच्चरेत्। हसखफ्रें तथानन्दभैरवस्य मनुं ततः। तस्य शक्तेर्मनुं पश्चात्तत्स्वैवं सेहौ सेहौ। श्रीगुरोश्च तथा शक्तेर्मन्त्रमेतत् सुरेश्वरि!। गुरुरानन्दनाथान्तश्चाम्बान्ता शक्तिरीरिता। पूजयामीति देवेशि! पूजाविधिरिति प्रिये!॥ अन्नदाकल्पेऽपि॥ तारत्रयं समुच्चार्य्य हसखफ्रें ततः परम्। हसक्षमलवरयूः

हसखफ्रें सेहौ ततः । अमुकानन्दनाथान्ते अमुकीदेव्यनन्तरम् । अम्बा श्रीपादुकां दत्त्वा चिन्तयामि नमोऽन्तकः । अयं श्रीपादुकामन्त्रः सर्वेप्सितफलप्रदः । रुद्रजामले पूर्वखण्डे प्रथमपटले ॥ त्रितारञ्च पुरो दत्त्वा शिवशक्तिखकारकम् ॥ फाग्निरेकारविन्दुञ्च शिवशक्तिक्रमेति च । भूमीन्दूवह्निवायू च उकारान्तं सुरेश्वरि ! । आनन्दनाथशक्तिश्च शिवस्य भुवनेश्वरः । सविसर्गो महत्येव प्रकाशिनी परेत्यपि । वह्नेः कारलक्ष्मीर्माया सरस्वती श्रीपादुकां पूजयामीति स्मृत्वा पादुकाम् । जपमन्त्रस्तु रुद्रजामले पूर्वखण्डे पञ्चदशपटले ॥ आनन्दनाथशब्दान्ते गुरुं ङेऽन्तं समुद्धरेत् । नमः पदं ततो ब्रूयात् प्रणवं सर्वसिद्धिदम् । महागुरोर्मनुं जप्वा सर्वसिद्धीश्वरो भवेत् । वाक्सिद्धिर्वंदनाम्भोजे गुरुमन्त्रप्रसादतः । शतमष्टोत्तरं नित्यं सहस्रं वा तथाष्टकम् । प्रजप्यार्पणमाकृत्य प्राणायामत्रयञ्चरेत् । वाग्भवेन ततः कुर्य्यात् प्राणायामविधिं मुदा । पूर्वोक्तानदाकल्पोक्तनीलतन्त्रोक्तवचनाभ्यां वाग्भवोऽपि जपमन्त्र इति । सम्प्रदायक्रमेणाष्टोत्तरशतं सहस्रं वा गुरुमन्त्रं जप्वा वाग्भवेन प्राणायामत्रयं कृत्वा गुह्यातीत्यादिना जपं समर्प्य स्तवकवचादिकं पठेत् ॥ स्तवो यथा ॥ शिरःस्थितसुपङ्कजे तरुणकोटिचन्द्रप्रभं वराभयकराम्बुजं सकलदेवतारूपिणम् । भजामि वरदं गुरुं किरणचारुशोभोज्ज्वलं प्रकाशितपदद्वयाम्बुजमलक्तकोटिप्रभम् ॥ १ ॥ जगद्भयनिवारणं भुवनभोगमोक्षप्रदं गुरोः पदयुगाम्बुजं भजति यत्र योगी जयम् । भजामि परमं गुरुं नयनपद्ममध्यस्थितं भवाब्धिभयनाशनं शमनरोगकालक्षयम् ॥ २ ॥ प्रकाशितसुपङ्कजे सुदलषोड़शाख्ये प्रभुं परापरगुरुं भजे सकलराज्यभोगप्रदम् । विशालनयनद्वयाम्बुजतड़ित्प्रभामण्डलं कड़ारमणिपाटलद्युतिमदिन्दुविन्दिन्दुकम् ॥ ३ ॥ महौजसमुमापतेर्विगतदक्षभागे

हृदि प्रभाकरशतोज्ज्वलं सुविमलेन्दुकोव्याननम्। भजामि परमेष्ठिनं गुरुगभीररावोल्वनं चलाचलकलेवरं प्रचपले दले द्वादशे॥ ४॥ गुर्वङ्घ्र्यब्जं शुभं मादनगणदहनं हेममञ्जीर-सारं नानाशब्दाङ्कुताक्लादितपरिचरणाचारुचक्रं त्रिभङ्गम्। नित्यं ध्यायेत् प्रभाते अरुणशतघटाशोभनं योगगम्यं नाभौ पद्मेति कान्ते दशदलमणिभे भाव्यते योगिभिर्यत्॥५॥ या माता मय-दानवादिसुभुजा निर्माणसीमा पुरे स्वाधिष्ठाननिकेतने रसदले वैकुण्ठमूले मया। जम्भोद्गारविकारभावलहरी वेदप्रभा भा-व्यते कन्दर्पार्पितशान्तियोनिजननी विष्णुप्रिया शाङ्करी॥ ६॥ या भासानलकुण्डलीकुलपथोद्दामाभशोभाकरी मूले पद्मचतु-र्दले कुलवती निश्वासदेशाश्रिता। साक्षात्काङ्क्षितकल्पवृक्ष-लतिका सुभा स्वयम्भूप्रिया नित्या योगिभयापहा विषहरा गुर्व-म्बिका भाव्यते॥ ७॥ ऊर्द्धाम्भोरुहनिःसृतामृतघटामोदाज्जला-प्लाविता गुर्वाद्या परिपातु सूक्ष्मपथगा तेजोमयी भास्वती। सूक्ष्मा साधनगोचरामृतमयी मूलादिशीर्षाम्बुजे पूज्या चेतसि भाव्यते भुवि कदा माता सदोर्द्धोत्तमा॥ ८॥ स्थितिपालनयोगेन ध्यानेन पूजनेन वा। यः पठेत् प्रत्यहं व्याप्य स देवो न तु मानुषः। कल्याणं धनदश्चैव कीर्त्तिमायुर्यशः श्रियम्। सायाह्ने च प्रभाते च पठेद्यदि सुबुद्धिमान्। स भवेत् साधकश्रेष्ठः कल्पद्रुमकलेवरः। स्तवस्यास्य प्रभावेण वागीशत्वमवाप्नुयात्॥ इति रुद्रजामले स्वशक्तिकगुरुस्तोत्रं समाप्तम्॥

कुलमूलावतारकल्पसूत्रटीकायाम्॥ पादुकापञ्चकस्तोत्र स्याधिकश्लोको वर्त्तते। सोऽप्यत्र लिखितः। आदि कादि किल खादि तारकं वर्णमण्डलमखण्डसिद्धिदम्। अन्तरुल्लसितहच्चला-क्षरं लक्षयन्ति पशवः कथं शिवे!॥१॥ ब्रह्मरन्ध्रसरसीरुहोदरे नित्यलग्नमवदातमद्भुतम्। कुण्डलीविवरकाण्डमण्डितं द्वाद-

मार्णक्षरसीरुहं भजे ॥ २ ॥ तस्य कन्दलितकर्णिकापुटे क्लृप्तरेखमकथादिरेखया। कोणलक्षितहलक्षमण्डलीभावलक्ष्यमबलालयं भजे ॥३॥ तत्पुटे पटुतड़ित्कड़ारिमस्पर्द्धमानमणिपाटलप्रभम्। चिन्तयामि हृदि चिन्मयं वपुर्बिन्दुनादमणिपीठमण्डलम् ॥४॥ ऊर्द्ध्वमस्य हुतभुक्शिखात्रयं तद्विलासपरिबृंहणास्पदं विश्वघस्मरमहोत्सवोत्कटं व्यामृषामि युगमादिहंसयोः ॥ ५ ॥ तत्र नाथचरणारविन्दयोः कुङ्कुमासवझरीमरन्दयोः। द्वन्द्वमिन्दुमकरन्दशीतलं मानसं स्मरति मङ्गलास्पदम् ॥ ६ ॥ निषक्तमणिपादुकानियमिताघकोलाहलस्फुरत्किशलयारुणं नखसमुल्लसच्चन्द्रकम्। परामृतसरोवरोदितसरोजसद्रोचिषं भजामि शिरसि स्थितं गुरुपदारविन्दद्वयम् ॥ ७ ॥ पादुकापञ्चकस्तोत्रं पञ्चवक्त्राद्विनिर्गतम्। षड़ाम्नायफलं प्राप्तं प्रपञ्चे चातिदुर्लभम् ॥ इति शिवपञ्चवक्त्राद्विनिर्गतं पादुकापञ्चकस्तोत्रं समाप्तम् ॥

कुब्जिकातन्त्रे ॥ अथ गुरुस्तोत्रम् ॥ ओं नमस्तुभ्यं महामन्त्रदायिने शिवरूपिणे। ब्रह्मज्ञानप्रकाशाय संसारदुःखतारिणे। अतिसौम्याय दिव्याय वीराय ज्ञानहारिणे। नमस्ते कुलनाथाय कुलकौलिन्यदायिने। शिवतत्त्वप्रबोधाय ब्रह्मतत्त्वप्रकाशिने!। नमस्ते गुरवे तुभ्यं साधकाभयदायिने। अनाचाराचारभावबोधाय भावहेतवे। भावाभावविनिर्मुक्तमुक्तिदात्रे नमो नमः। नमस्ते शम्भवे तुभ्यं दिव्यभावप्रकाशिने। ज्ञानानन्दस्वरूपाय विभवाय नमो नमः। शिवाय शक्तिनाथाय सच्चिदानन्दरूपिणे। कामरूपाय कामाय कामकेलिकलात्मने। कुलपूजोपदेशाय कुलाचारस्वरूपिणे। आरक्तनिजतच्छक्तिसमभागविभूतये। नमस्तेऽस्तु महेशाय नमस्तेऽस्तु नमो नमः। इदं स्तोत्रं पठेन्नित्यं साधको गुरुदिङ्मुखः। प्रातरुत्थाय

देवेशि! ततो विद्या प्रसीदति॥ इति कुब्जिकातन्त्रोक्तं गुरु-स्तोत्रं समाप्तम्॥

अथ गुरुकवचं कङ्कालमालिनीतन्त्रे॥ देव्युवाच॥ भूतनाथ! महादेव! कवचं तस्य मे वद। गुरुदेवस्य देवेश! साक्षाद्ब्रह्म-स्वरूपिणः॥ ईश्वर उवाच॥ अथातः कथयामीशि! कवचं मोक्ष-दायकम्। यस्य ज्ञानं विना देवि! न सिद्धिर्न च सद्गतिः॥ ब्रह्मादयोऽपि गिरिजे! सर्वत्र याजिनः स्मृताः। अस्य प्रसादात् सकला वेदागमपुरःसराः। कवचस्यास्य देवेशि! ऋषिर्विष्णु-रुदाहृतः। छन्दो विराड् देवता च गुरुदेवः स्वयं शिवः। चतुर्वर्गज्ञानमार्गे विनियोगः प्रकीर्त्तितः। सहस्रारे महापद्मे कर्पूरधवलो गुरुः। वामोरुस्थितशक्तिर्यः सर्वत्र परिरक्षतु। परमाख्यो गुरुः पातु शिरसं मम वल्लभे!। परापराख्यो नासां मे परमेष्ठी मुखं सदा। कण्ठं मम सदा पातु प्रह्लादानन्द-नाथकः। बाहू द्वौ सनकानन्दः कुमारानन्द एव च। वशिष्ठा-नन्दनाथश्च हृदयं पातु सर्वदा। क्रोधानन्दः कटिं पातु सुखा-नन्दः पदं मम। ध्यानानन्दश्च सर्वाङ्गं बोधानन्दश्च कानने। सर्वत्र गुरवः पान्तु सर्वे ईश्वररूपिणः। इति ते कथितं भद्रे! कवचं परमं शिवे!। भक्तिहीने दुराचारे दद्यैतन्मृत्युमाप्नुयात्। अस्यैव पठनाद्देवि! धारणात् श्रवणात् प्रिये!। जायते मन्त्र-सिद्धिश्च किमन्यत् कथयामि ते। कण्ठे वा दक्षिणे बाहौ शिखायां वीरवन्दिते!। धारणान्नाशयेत् पापं गङ्गायां कल्मषं यथा। इदं कवचमज्ञात्वा यदि मन्त्रं जपेत् प्रिये!। तत् सर्वं निष्फलं कृत्वा गुरुर्याति सुनिश्चितम्। शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन॥ इति कङ्कालमालिनीतन्त्रे गुरुकवचं समाप्तम्॥

पुरश्चरणरसोल्लासे द्वितीयप्रश्ने दशमपटले॥ ईश्वर उवाच।

शृणु देवि! प्रवक्ष्यामि गुह्याद्गुह्यतरं महत्। लोकोपकारकं प्रश्नं न केनापि कृतं पुरा। अद्यप्रभृति कस्यापि नाख्यातं कवचं मया। देशिका बहवः सन्ति मन्त्रसाधनतत्पराः। न तेषां जायते सिद्धिर्मन्त्रैर्वा चक्रपूजनैः। गुरोर्विधानं कवचमज्ञात्वा क्रियते जपः। वृथा श्रमो भवेत्तस्य न सिद्धिर्मन्त्रपूजनैः। गुरुपादं पुरस्कृत्य प्राप्यते कवचं शुभम्। तदा मन्त्रस्य यन्त्रस्य सिद्धिर्भवति तत्क्षणात्। सुगोप्यन्तु प्रजप्तव्यं न वक्तव्यं वरानने!॥ ॐ नमोऽस्य श्रीगुरुकवचनाममन्त्रस्य परमब्रह्मर्षिः सर्ववेदानुज्ञो देवदेव श्रीआदिशिवो देवता नमो ह्सौं हंसः हसक्षमलवरयूं बीजं सोऽहं हंसः हसक्षमलवरयूं शक्तिः हंसः सोऽहं कीलकं श्रीसमस्तगुरुमण्डलप्रीत्यर्थे जपे विनियोगः। अथ ध्यानम्। श्रीसिद्धमानवमुखा गुरवः स्वरूपं संसारदाहशमनं द्विभुजं त्रिनेत्रम्। वामाङ्गशक्तिसकलाभरणैर्विभूषं ध्यायेज्जपेत् सकलसिद्धिफलप्रदश्च। इति मनसा प्रणम्य॥ ह्सां हृदयाय नमः। ह्सीं शिरसे स्वाहा। ह्सूं शिखायै वषट्। ह्सैं कवचाय हुं। ह्सौं नेत्रत्रयाय वौषट्। ह्सः अस्त्राय फट्। एवं कराङ्गन्यासं कृत्वा उपचारैः सम्पूज्य। ॐ नमः प्रकाशानन्दनाथश्च शिखायां पातु मे सदा। परशिवानन्दनाथश्च शिरो मे रक्षयेत् सदा। परशक्तिदिव्यानन्दनाथो भाले च रक्षतु। कामेश्वरानन्दनाथो मुखं रक्षतु सर्वधृक्। दिव्यौघो मस्तकं देवि! पातु सर्वं शिरः सदा। कण्ठादिनाभिपर्य्यन्तं सिद्धौघा गुरवः प्रिये!। भोगानन्दनाथगुरुः पातु दक्षिणबाहुकम्। समयानन्दनाथश्च सन्ततं हृदयेऽवतु। सहजानन्दनाथश्च कटिं नाभिञ्च रक्षतु। एषु स्थानेषु सिद्धौघा रक्षन्तु गुरवः सदा। अधरे मानवौघाश्च गुरवः कुलनायिके!। गगनानन्दनाथश्च गुल्फयोः पातु सर्वदा। नीलौघानन्दनाथश्च रक्षयेत्पादपृष्ठतः। स्वात्मानन्दनाथगुरुः

पादाङ्गुलीश्च रक्षतु। कन्दोलानन्दनाथश्च रक्षेत्पादतले सदा। इत्येवं मानवौघाश्च न्यसेन्नाभ्यादिपादयोः। गुरुर्मे रक्षयेदुर्व्यां सलिले परमो गुरुः। परापरगुरुर्वह्नौ रक्षयेत् शिववल्लभे!। परमेष्ठी गुरुश्चैव रक्षयेद्वायुमण्डले। शिवादिगुरवः साक्षादाकाशे रक्षयेत् सदा। इन्द्रो गुरुः पातु पूर्वे आग्नेय्यां गुरुरग्नयः। दक्षे यमो गुरुः पातु नैर्ऋत्यां निर्ऋतिर्गुरुः। वरुणो गुरुः पश्चिमे च वायव्यां मारुतो गुरुः॥ उत्तरे धनदः पातु ऐशान्यामीश्वरो गुरुः। ऊर्द्ध्वं पातु गुरुर्ब्रह्मा अनन्तो गुरुरप्यधः। एवं दश दिशः पान्तु इन्द्राद्या गुरवः क्रमात्। शिरसः पादपर्य्यन्तं पान्तु दिव्यौघसिद्धयः। मानवौघाश्च गुरवो व्यापकं पान्तु सर्वदा। सर्वत्र गुरुरूपेण संरक्षेत् साधकोत्तमम्। आत्मानं गुरुरूपञ्च ध्यायेन्मन्त्रं सदा बुधः। इत्येवं गुरुकवचं ब्रह्मलोकेऽपि दुर्लभम्। तव प्रीत्या मयाख्यातं न कस्य कथितं प्रिये!। पूजाकाले पठेद् यस्तु जपकाले विशेषतः। त्रैलोक्यदुर्लभं देवि! भुक्तिमुक्तिफलप्रदम्। सर्वमन्त्रफलं तस्य सर्वयन्त्रफलं तथा। सर्वतीर्थफलं देवि! यः पठेत् कवचं गुरोः। अष्टगन्धेन भूर्जे च लिख्यते चक्रसंयुतम्। कवचं गुरुपङ्क्तेस्तु भक्त्या च शुभवासरे। पूजयेद्धूपदीपाद्यैः सुधाभिः सितसंयुतैः। तर्पयेद्गुरुमन्त्रेण साधकः शुद्धचेतसा। धारयेत् कवचं देवि! इह भूतभयापहम्। पठेन्मन्त्री त्रिकालं हि स मुक्तो भवबन्धनात्। एवं कवचं परात्परं दिव्यौघसिद्धौघकालवान्॥ इति गुरुकवचं समाप्तम्॥

शक्तश्चेत्तदा योगसारोक्तं गुरुसहस्रनामस्तोत्रमपि पठेत्॥ इह तु ग्रन्थगौरवभिया तन्न लिखितम्॥ रुद्रजामले॥ एकान्तभक्त्या प्रणमेदायुरारोग्यवृद्धये। अखण्डमण्डलाकारं व्याप्तं येन चराचरम्। तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः। अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया। चक्षुरुन्मीलितं

येन तस्मै श्रीगुरवे नमः। देवताया दर्शनञ्च करुणावरुणालयम्। सर्वसिद्धिप्रदातारं श्रीगुरुं प्रणमाम्यहम्। वराभयकरं नित्यं श्वेतपद्मनिवासिनम्। महाभयनिहन्तारं गुरुदेवं नमाम्यहम्। महाज्ञानाच्छादिताङ्गं नराकारं वरप्रदम्। चतुर्वर्गप्रदातारं स्थूलसूक्ष्मदयान्वितम्। सदानन्दमयं देवं नित्याञ्जननिरञ्जनम्। शुद्धसत्त्वमयं देवं नित्यकालं कुलेश्वरम्। ब्रह्मरन्ध्रे महापद्मे तेजोविम्बे निराकुले। योगिभिर्योगगम्ये च चारुशुक्लविराजिते। सहस्रदलसङ्काशे कर्णिकामध्यमध्यके। महाशुक्लभास्वरार्ककोटिकोटीमहौजसम्। सर्वपीठस्थममलं परहंसं परात्परम्। वेदोद्धारकरं नित्यं काम्यकर्मफलप्रदम्। सदा मनःशक्तिमयलयस्थानपदाम्बुजम्। शरज्ज्योत्स्नाज्वलन्मालाशोभेन्दुकोटिवन्मुखम्। वाञ्छातिरिक्तदातारं सर्वसिद्धीश्वरं गुरुम्। भजामि तन्मयो भूत्वा तं हंसमण्डलोपरि। आत्मानं सुनिराकारं साकारब्रह्मरूपिणम्। विद्यामन्त्रप्रदातारं श्रीगुरुं परमेश्वरम्। सर्वसिद्धिप्रदातारं गुरुदेवं नमाम्यहम्। कायेन मनसा वाचा ये नमन्ति निरन्तरम्। अवश्यं श्रीगुरोः पादाम्भोरुहे ते वसन्ति हि। प्रभाते कोटिपुण्यञ्च प्राप्नोति साधकोत्तमः। मध्याह्ने दशलक्षञ्च सायाह्नेऽनन्तपुण्यदम्॥ इति रुद्रजामले उत्तरखण्डे गुरुप्रणामस्तुतिकथनम्॥

नित्यं शुद्धं निराभासं निरकारं निरञ्जनम्। नित्यबोधचिदानन्दं गुरुं ब्रह्म नमाम्य ्हम्। आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजबोधयुक्तम्। योगीन्द्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं नित्यमहं नमामि॥ इति गुरुगीतोक्तसद्गुरुप्रणामः॥ निर्वाणतन्त्रे तृतीयपटले॥ तुरीयधाम! महादेव! परमात्माशयि स्थितः। शिरःपद्मे स्थिते वाद्ये नमस्कारः कथं भवेत्॥ शिव

उवाच॥ शिरःपद्मे महादेवस्तथैव परमो गुरुः' तत्समो न तु देवेशि! पूज्योऽस्ति भुवनत्रये। तद्रूपं चिन्तयेन्मन्त्री वाह्ये गुरुचतुष्टयम्। तदंशभावसम्भूता ये चान्ये गुरवो जनाः। तथैव ब्राह्मणाः सर्व्वे चांशावतारसंस्थिताः। यदैव वाह्ये चैतांश्च प्रत्यक्षे भावयेत्तदा। सहस्रारे महापद्मे सदा चित्तं विवर्ज्जयेत्। प्रत्यक्षदर्शने देवि! साक्षात्तं ब्रह्म चिन्तयेत्। नमस्कारादिकं देवि! कुर्य्यात् साधकसत्तमः। ब्राह्मणादीन् समालोक्य ब्रह्मचारियतित्रयम्। दृष्टिमात्रेण गिरिजे! प्रणमेद्दण्डवद्भुवि। महापातकयुक्तोऽपि मुक्तो भवति नान्यथा। न कुर्य्याद् यदि मोहेन महापातकवान् भवेत्। रक्तवस्त्रं समालोक्य तथा भस्माङ्गभूषणम्। दण्डहस्तं त्रिशूलञ्च दृष्ट्वा प्रदक्षिणत्रयम्। प्रकुर्य्यात् साधकश्रेष्ठश्चान्यथा पातकी भवेत्। इति वाह्यगुर्व्वादिदर्शने जाते तदानीं सहस्रारे गुरुचिन्तानिषेधः॥ अथ स्त्रीगुरुध्यानं गुप्तसाधनतन्त्रे द्वितीयपटले॥ पार्व्वत्युवाच॥ गुरुध्यानं श्रुतं नाथ! सर्व्वतन्त्रेषु गोपितम्॥ स्त्रिया दीक्षा शुभा प्रोक्ता सर्व्वकामफलप्रदा॥ बहुजन्मार्जितात् पुण्यात् बहुभाग्यवशाद् यदि। स्त्रीगुरुर्लभ्यते नाथ! तस्या ध्यानन्तु कीदृशम्। कुत्र वा सा गुरुर्ध्येया श्रोतुमिच्छामि साम्प्रतम्॥ कथयस्व महादेव! यद्यहं तव वल्लभा। शिव उवाच॥ शृणु पार्व्वति! वक्ष्यामि तव स्नेहपरिप्लुतः। रहस्यं स्त्रीगुरोर्ध्यानं यथा ध्येया च सा गुरुः। सहस्रारे महापद्मे किञ्जल्कगणशोभिते। प्रफुल्लपद्मपत्राक्षी घनपीनपयोधरा। प्रसन्नवदना क्षीणमध्या ध्यायेच्छिवां गुरुम्। पद्मरागसमाभासां रक्तवस्त्रसुशोभनाम्। रक्तकङ्कणपाणिञ्च रक्तनूपुरशोभिताम्। शरदिन्दुप्रतीकाशां रक्तोद्भासितकुण्डलाम्। स्वनाथवामभागस्थां वराभयकराम्बुजाम्। इति ते कथितं देवि! स्त्रीगुरोर्ध्यानमुत्तमम्। गोपनीयं प्रयत्नेन न प्रकाश्यं

कदाचन ॥ अथ स्तुतिः ॥ मातृकाभेदतन्त्रे सप्तमपटले ॥ देव्युवाच ॥ स्तुतिञ्च कवचं नाथ! श्रोतुमिच्छामि साम्प्रतम्। श्रीगुरोः कवचं प्रोक्तं त्वया नाथ! पुरा प्रभो!। इदानीं स्त्रीगुरोः स्तोत्रं कवचं मयि कथ्यताम्। यस्य विज्ञानमात्रेण पुनर्जन्म न जायते ॥ श्रीशिव उवाच ॥ शृणु देवि! प्रवक्ष्यामि स्तोत्रं परमगोपनम्। यस्य श्रवणमात्रेण संसारान्मुच्यते नरः। नमस्ते देवदेवेशि! नमस्ते हरपूजिते!। ब्रह्मविद्यास्वरूपायै तस्यै नित्यं नमो नमः ॥ १ ॥ अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया। यया चक्षुरुन्मीलितं तस्यै नित्यं नमो नमः ॥ २ ॥ भवबन्धनपारस्य तारिणी जननी परा। ज्ञानदा मोक्षदा नित्यं तस्यै नित्यं नमो नमः ॥ ३ ॥ श्रीनाथवामभागस्था सदया सुरपूजिता। सदा विज्ञानदात्री च तस्यै नित्यं नमो नमः ॥ ४ ॥ सहस्रारे महापद्मे सदानन्दस्वरूपिणी। महामोक्षप्रदा देवी तस्यै नित्यं नमो नमः ॥ ५ ॥ ब्रह्मविष्णुस्वरूपा च महारुद्रस्वरूपिणी। त्रिगुणात्मस्वरूपा च तस्यै नित्यं नमो नमः ॥६॥ चन्द्रसूर्य्याग्निरूपा च मदाघूर्णितलोचना। स्वनाथञ्च समालिङ्ग्य तस्यै नित्यं नमो नमः ॥ ७ ॥ ब्रह्मविष्णुशिवत्वादिजीवन्मुक्तिप्रदायिनी। ज्ञानविज्ञानयोर्दात्री तस्यै श्रीगुरवे नमः ॥ ८ ॥ इदं स्तोत्रं महेशानि! यः पठेद्भक्तिसंयुतः। स सिद्धिं लभते नित्यं सत्यं सत्यं न संशयः ॥ प्रातःकाले पठेद् यस्तु गुरुपूजापुरःसरम्। स एव धन्यो लोकेशो देवीपुत्र इव क्षितौ। इति मातृकाभेदतन्त्रे स्त्रीगुरोः स्तोत्रं सम्पूर्णम् ॥

स्तोत्रं समाप्तं देवेशि! कवचं शृणु सादरम्। यस्य स्मरणमात्रेण वागीशसमतां व्रजेत्। स्त्रीगुरोः कवचस्यास्य सदाशिव ऋषिः स्मृतः। ताराख्या देवता ख्याता चतुर्वर्गफलप्रदा। ह्रीं वीजं चक्षुषोर्मध्ये सर्वाङ्गं मे सदावतु। ऐं वीजं मे मुखं

पातु क्लीं जिह्वां परिरक्षतु। श्रीं वीजं स्कन्धदेशं मे हसखफ्रें भुजद्वयम्। हकारः कण्ठदेशं मे सकारः षोड़शं दलम्। क्षवर्ण-स्तंदधः पातु लकारो हृदयं मम। वकारः पृष्ठदेशञ्च रकारो दक्षपार्श्वकम्। यूङ्कारो वामपार्श्वञ्च सकारो मेरुमेव च। स्ह-कारो मे दक्षभुजं क्षकारो वामहस्तकम्। मकारस्त्वाङ्गुलीं पातु लकारो मे नखं वतु। वकारो मे नितम्बञ्च रकारो जठरं वतु। षौङ्कारः पादयुगलं हसौः सर्वाङ्गं मेऽवतु। हसौर्लिङ्गञ्च लोमानि केशञ्च परिरक्षतु। ऐं वीजं पातु पूर्वे मे क्लीं वीजं दक्षिणे-ऽवतु। श्रीं वीजं पश्चिमे पातु उत्तरे भूतसम्भवम्। श्रीं पातु चाग्निकोणे च वेदाख्या नैर्ऋतेऽवतु। देवाम्बा पातु वायव्यां शम्भौ श्रीपादुकां तथा। पूजयामि तथा चोर्द्ध्वं नमश्चाधः सदा-ऽवतु। इति ते कथितं कान्ते! कवचं परमाद्भुतम्। गुरुमन्त्रं जपित्वा तु कवचं प्रपठेद्यदि। ससिद्धः सगणः सोऽपि शिव एव न संशयः। पूजाकाले पठेद् यस्तु कवचं मन्त्रविग्रहम्। पूजा-फलं भवेत्तस्य सत्यं सत्यं सुरेश्वरि!। त्रिसन्ध्यं यः पठेद्देवि! स सिद्धो नात्र संशयः। भूर्ज्जे विलिख्य गुलिकां स्वर्णस्थां धार-येद् यदि। तस्य दर्शनमात्रेण वादिनो निष्प्रभां गताः। विवादे जयमाप्नोति रणे च निर्ऋतेः समः। सभायां जयमाप्नोति मम तुल्यो न संशयः। सहस्रारे भावयन् यस्त्रिसन्ध्यं प्रपठेद् यदि। स एव सिद्धो लोकेशो निर्वाणपदमीयते। समस्तमङ्गलं नाम कवचं परमाद्भुतम्। यस्मै कस्मै न दातव्यं न प्रकाश्यं कदाचन। देयं शिष्याय शान्ताय चान्यथा पतनं भवेत्। अभक्तेभ्यश्च देवेशि! पुत्रेभ्योऽपि न दर्शयेत्। इदं कवचमज्ञात्वा दशविद्याश्च यो जपेत्। स नाप्नोति फलं तस्य चान्ते च नरकं व्रजेत्। समाप्तं कवचं देवि! किमन्यत् श्रोतुमिच्छसि। तव स्नेहानुबन्धेन किं मया न प्रकाशितम्॥ इति मातृकाभेदतन्त्रे श्रीगुरुकवचं समाप्तम्॥

अथ श्रीगुरुगीता ॥ कङ्कालमालिनीतन्त्रे द्वितीयपटले ॥ पार्वत्युवाच ॥ लोकेश ! कथ्यतां देव ! गुरुगीता मयि प्रभो !। श्रीभगवानुवाच ॥ शृणु तारिणि ! वक्ष्यामि गीतां ब्रह्ममयीं पराम्। गुरुस्त्वं सर्वशास्त्राणामहमेव प्रकाशकः। त्वमेव गुरुरूपेण लोकानां त्राणकारिणी। गया गङ्गा काशिका च त्वमेव सकलं जगत्। कावेरी यमुना रेवा करतोया सरस्वती। गोमती चन्द्रभागा च त्वमेव कुलपालिके !। ब्रह्माण्डं सकलं देवि ! कोटिब्रह्माण्डमेव च। न हि ते वक्तुमर्हामि क्रियाजालं महेश्वरि !। उक्ता चोक्ता भावयित्वा भिक्षुकोऽहं नगात्मजे !। कथं त्वं जननी भूत्वा वधूस्त्वं मम देहिनाम्। तव चक्रं महेशानि ! अतीतं परमात्मनि। इति ते कथिता गीता गुरुदेवस्य ब्रह्मणः। सङ्क्षेपेण महेशानि ! प्रभुरेव गुरुः स्वयम्। जगत् समस्तमास्थाय गुरुस्त्वेको हि केवलम्। इति तं तोषयित्वा च नुतिभिः स्तुतिभिस्तथा। नानाविधद्रव्यदानैः सिद्धः स्यात् साधकोत्तमः ॥ इति श्रीगुरुगीता समाप्ता ॥

अत्र प्रसङ्गप्राप्तगुरुपूजनमपि लिख्यते। बृहन्नीलतन्त्रे द्वितीयपटले ॥ गुरुपूजाविधानञ्च कथयामि वरानने !। आदौ भद्रासनं दद्यात् पाद्यं दद्यात्ततः परम्। अर्घ्यं दद्याद्विशेषेण तथा चाचमनीयकम्। स्नानीयं वसनं दद्याद्गन्धं पुष्पञ्च शोभनम्। धूपञ्च गुग्गुलुं दद्याद्दीपं दद्यात् सुशोभनम्। चर्व्यं चोष्यं तथा लेह्यं पेयं दद्यान्मनोहरम्। नानाविधं फलं दद्यान्नानारससमन्वितम्। भक्ष्यं भोज्यं विशेषेण दद्याच्चैव वरानने !। पुष्पाणामञ्जलिं दद्याच्चन्दनेन समन्वितम्। शय्यां दद्यान्महेशानि ! विचित्रां सर्वमोहिनीम्। खट्वां दद्यान्महेशानि ! विचित्राम्बरधारिणीम्। पादसेवां गुरोः कुर्य्यादतियत्नेन सुन्दरि !। गुरुवत् गुरुपुत्त्रेषु गुरुवत्तत्सुतादिषु ॥

अथ सपत्नीकगुरुपूजनम्॥ पुरश्चरणरसोल्लासे दशमपटले। आनीय स्वगुरुं देवि! सपत्नीकं प्रयत्नतः। नानागन्धैर्युतैस्तैलै-रञ्जयेदङ्गयष्टिकाम्। स्नापयेद्विविधैः शुद्धैरुदकैः सुरपूजितैः। दिव्यवस्त्रेण तद्‌गात्रं सम्मार्ज्य वरवर्णिनि!। पूजयेद्विविधैः पुष्पैर्गन्धैश्च विविधैस्तथा। धूपदीपैस्तथा पेयैस्ताम्बूलाद्यैः सुवासितैः। प्रकृत्या सह चार्वङ्गि! पूजयेद्‌गुरुदैवतम्। गुरोरङ्गं महेशानि! चन्दनैः परिलेपयेत्। गुरोः कण्ठे महेशानि! मालां दद्याद्विलक्षणाम्। नानालङ्कारसुभगैः पूजयेद् गुरुदैवतम्। पट्टवस्त्रादिभिर्देवि! स्वर्णरत्नादिभूषणैः। तत्पत्नीं तोषयेद्भक्त्या साक्षात्तां जगदीश्वरीम्। शङ्खकङ्कणकेयूरनूपुरादिविलक्षणैः। हारैरत्नमयैर्देवि! तत्पत्नीं पूजयेत् प्रिये!। तस्यास्तु वामतस्तिष्ठेद् भक्त्यापि च शुभस्मिते!। तुल्यं निष्कं प्रदद्याद्वै भक्त्या रत्नानि पार्वति!। तन्मन्त्रं शृणु चार्वङ्गि! अतिगुह्यं परात्परम्। कामबीजं समुद्धृत्य तस्याश्चाख्यानमुद्धरेत्। पुनः कामं समुद्धृत्य मन्त्रमेतदुदीरितम्। सपत्नीकं गुरुं देवि! पूजयेद् यस्तु साधकः। अनेन विधिना देवि! सम्पूज्य गुरुपादयोः। सहस्रारे महेशानि! तत्र कोषोपरि प्रिये!। भावयेत्तु सपत्नीकं पूजयेद्‌गुरुराज्ञया। गुरोराज्ञां मूर्द्ध्नि धृत्वा एकधा पूजयेद् यदि। तदैव सहसा सिद्धिर्जायते वीरवन्दिते!। अयुतं प्रजपेद् यस्तु किं तस्य शतकोटिभिः। एवन्तु प्रत्यहं कुर्य्याद् यावल्लक्षं समाप्यते। दिवा लक्षं महेशानि! पशुवत् साधकाग्रणीः। रात्रौ लक्षं जपित्वा तु दिव्यवीरमतैः प्रिये!। समाप्य विधिवद्भक्त्या गुरवे दक्षिणां ततः। दत्त्वा सिद्धिमवाप्नोति चन्द्रसूर्य्यग्रहेण किम्॥

अथ सिद्धौघगुरुपंक्तिचिन्तनम्॥ बृहन्नीलतन्त्रे द्वितीयपटले॥ सिद्धौघा गुरवो देवि! दिव्यौघा गुरवस्तथा। मान-

बोधाः समासेन कथ्यन्ते गुरवस्तथा। ऊर्द्ध्वकेशो व्योमकेशो नीलकण्ठो वृषध्वजः॥ कुलचूड़ामणौ॥ मूलादिब्रह्मरन्ध्रान्तं कुलं ध्यात्वा गुरुं स्मरेत्। प्रह्लादानन्दनाथाख्यं सनकानन्दमेव च। कुमारानन्दनाथञ्च वशिष्ठानन्दनाथकम्। क्रोधानन्दसुखानन्दौ ध्यानानन्दं ततः परम्। बोधानन्दं ततश्चैव ध्यायेत् कुलमुखोपरि। कुलमुखोपरि सहस्रारास्थितचन्द्रमण्डले इत्यर्थः। महारसरसोल्लासहृदया घूर्णलोचनाः। कुलालिङ्गनसंयुक्ताश्चूर्णिताशेषतामसाः। कुलशिष्यैः परिवृताः पूर्णान्तःकरणोद्यताः। वराभययुताः सर्वे कुलतन्त्रार्थवेदिनः। कुलमूलावतारकल्पसूत्रटीकायां तृतीयकाण्डे॥ प्रातः प्रभृति सायान्तं सायादिप्रातरन्ततः। यत् करोमि जगत्यर्थे तदस्तु तव पूजनम्॥

इति प्राणतोषिण्यां तृतीयेऽर्थकाण्डे आचारसप्तकादि-
गुरुपंक्तिनिरूपणान्तरूपग्रन्थिकथनं नाम
प्रथमः परिच्छेदः।

इति सर्वं गुरवे निवेद्य मनसा गुरोराज्ञां गृहीत्वा मूलाधारकर्णिकान्तःस्थत्रिकोणान्तर्गताधोमुखस्वयम्भूलिङ्गवेष्टिनीं प्रसुप्तभुजगाकारां सार्द्धत्रिवलयां विद्युत्पुञ्जप्रभां नीवारशूकवत्तन्वीं कुलकुण्डलिनीं निजेष्टदेवतारूपां हुङ्कारेण मनुना हंस इति मनुना वा त्रिकोणमण्डलाग्निना पवनदहनयोगाच्चैतन्यं विधाय ब्रह्मवर्त्मना सहस्रारं नीत्वा तत्रत्यपरशिवे संयोज्य तयोः सामञ्जस्यं विभाव्यात्यन्तं श्यामारहस्योक्तम्। तत्प्रमाणं तद्धृतकालिकाश्रुतिर्यथा॥ मूलाधारे स्मरेन्नित्यं त्रिकोणं तेजसां निधिम्। तस्याग्निरेखामानीय अध ऊर्द्ध्वव्यवस्थिताम्। नीलतोयदमध्यस्थतड़िल्लेखेव भास्वराम्। नीवारशूकवत्तन्वीं पीतां भास्वदनुपमाम्। नीवारशूकवदिति उड़िधान्यसुङ्गा इति प्रसिद्धिः। तस्याः शिखाया मध्ये च परमोर्द्ध्वव्यवस्थिताम्। स

ब्रह्मा स शिवः सूर्य्यः शङ्करः परमस्वराट्। स एव विष्णुः स प्राणः स कालाग्निः स चन्द्रमाः। इति कुण्डलिनीं ध्यात्वा सर्व्वपापैः प्रमुच्यते। इति गुरोराज्ञां गृहीत्वेति प्रमाणशून्यलिखनम्। कुण्डलीध्यानान्तरं योगसारे॥ मूलाधारे कुण्डलिनीं ध्यात्वा सम्पूजयेन्नरः। ध्यानं तथा प्रवक्ष्यामि येन योगी प्रजायते। ॐ प्रसुप्तभुजगाकारां स्वयम्भूलिङ्गमाश्रिताम्। विद्युत्कोटिप्रभां देवीं विचित्रवसनान्विताम्। शृङ्गारादिरसोल्लासां सर्व्वदा कारणप्रियाम्। एवं ध्यात्वा कुण्डलिनीं ततो यजेत् समाहितः। मनसा गन्धपुष्पाद्यैः सम्पूज्य वाग्भवं जपेत्। ततो वै तोषयेत्ताञ्च स्तवेनानेन साधकः। रुद्रजामले॥ अथ प्रातः समुत्थाय पशुरुत्तमपण्डितः। गुरूणां चरणाम्भोजमङ्गलं शीर्षपङ्कजे। विभाव्य पुनरेवं हि श्रीपदं भावयेद् यदि। पूजयित्वा च विविधैरुपचारैर्नमेत् स्तवैः॥ त्रैलोक्यं तेजसा व्याप्तं मण्डलस्थां महोत्सवाम्। तड़ित्कोटिप्रभादीप्तिं चन्द्रकोटिसुशीतलाम्। सार्द्धत्रिबलयाकारस्वयम्भूलिङ्गवेष्टिताम्। उत्थापयेन्महादेवीं महावक्त्रां मनोन्मनीम्। श्वासोच्छ्वासादुद्गच्छन्तीं द्वादशाङ्गुलरूपिणीम्। योगिनीं खेचरीं वायुरूपां मूलाम्बुजस्थिताम्। चतुर्व्वर्णस्वरूपां तां वकारादिसमान्तकाम्। कोटिकोटिसहस्रार्ककिरणोज्ज्वलमोहिनीम्। महासूक्ष्मपथप्रान्तरान्तरान्तरगामिनीम्। त्रैलोक्यरचितां वाक्यदेवतां शब्दरूपिणीम्। महाबुद्धिप्रदां देवीं सहस्रदलगामिनीम्। महासूक्ष्मपथे तेजोमयीं मृत्युस्वरूपिणीम्। कालरूपां ब्रह्मरूपां सर्व्वत्र सर्व्वचिन्मयीम्। ध्यात्वा पुनः पुनः शीर्षे सुधाब्धौ विनिवेष्टिताम्। सुधापानं कारयित्वा पुनः स्थाने समानयेत्। समानयनकाले तु सुषुम्नामध्यमध्यके। अमृताभिप्लुतं कृत्वा पुनः स्थानेषु पूजयेत्। ऊर्द्धोद्गमनकाले तु महातेजोमयीं स्मरेत्। प्रतिप्रयाणकाले तु

सुधाधाराभिराप्लुताम्। महाकुण्डलिनीं देवीमम्टतानन्दविग्रहाम्। ध्यात्वा ध्यात्वा पुनर्ध्यात्वा सर्वसिद्धीश्वरो भवेत्। तस्मिन् स्थाने महादेवीं विभाव्य किरणोज्ज्वलाम्। अम्टतानन्दमूर्त्तिं तां पूजयित्वा शुभां मुदा। मानसोच्चारवीजेन मायां वा कामवीजकम्। पञ्चाशद्वर्णमालाभिर्जप्त्वानुलोमतस्तथा। विलोमेन पुनर्जप्त्वा सर्वत्र शुभदं स्तवम्। पठित्वा सिद्धिमाप्नोति तत् स्तोत्रं शृणु भैरव!॥

अथ कुण्डलिनीस्तोत्रम्॥ जन्मोद्धारिणि! रक्षिणीह तरुणी वेदादिवीजादिमा नित्यं चेतसि भाव्यते भुवि कदा महावाक्यसञ्चारिणी। मां सा तु प्रियदा सदा सविपदं सन्त्रातय श्रीश्वरि धात्री त्वं स्वयमादिदेववनिता दीनातिदीनं परम्॥ १॥ रक्ताभाम्टतचन्द्रिका लिपिमयी सर्पाकृतिर्निद्रिता जाग्रद्धर्मसमाश्रिता भगवती त्वं सांयलोकाश्रयः। मांसोद्गन्धकगन्धदोषजड़ितं वेदादिकार्य्यान्वितं सम्पात्यामलचन्द्रकोटिकिरणै नित्यं शरीरं कुरु॥ २॥ सिद्धार्थी निजदोषवित् खलगतिर्व्याधीयते विद्यया कुण्डल्याकुलमार्गयुक्तनगरी सायाह्नमात्राश्रया। यद्येवं भजति प्रभातसमये मध्याह्नकालेऽथवा नित्यं यः कुलकुण्डलीनिजपदाम्भोजं स सिद्धो भवेत्॥ ३॥ ये वाकाशचतुर्दलेऽतिविमले वाञ्छाफलोन्मूलके नित्यं सम्प्रति नित्यदेहघटिता सङ्केतिता भाविता। विद्याकुण्डलमालिनी स्वजननी सारक्रिया भाव्यते यैस्तैः सिद्धिकुलोद्भवैः प्रणतिभिः कीर्त्या परं शम्भुभिः॥४॥ वाचा शङ्करमोहिनी त्रिपलयाच्छायापटोद्गामिनीं साराद्यादिमहासुखप्रहरणी नेत्रस्थिता योगिनी। सर्वग्रन्थिविभेदिनी सुभुजगा सूक्ष्मातिसूक्ष्मा परा ब्रह्मज्ञानविनोदिनी कुलकुठाराघातिनी भाव्यते॥ ५॥ वन्दे श्रीकुलकुण्डलीं त्रिवलिभिः सार्द्धं स्वयम्भूप्रियां प्रावेष्ट्याम्बरसारचित्तचपलां वालावलां निष्कलाम्। या देवी

परिभाति वेदवदना सम्भावना भावना तामिष्टां शिरसि स्वय-म्भुवनितां सम्भावयामि क्रियाम् ॥६॥ वाणीकोटिमृदङ्गनादमदना निःश्रेणिकोटिध्वनिः प्राणेशीवशवामसूलकमलोल्लासैकपूर्णानना। आषाढ़ोद्भवमेघराजनियुतध्वान्तान्तरस्थायिनी माता सा परि-पातु सूक्ष्मपथगे ! मां योगिनं संस्कुरु ॥ ७ ॥ त्वामाश्रित्य नरा व्रजन्ति सहसा वैकुण्ठकैलासयोरानन्दैकविलासिनीं शशिगता-नन्दाननां कारणम्। मातः ! श्रीकुलकुण्डलिप्रियकले ! काली-कुलोद्दीपने ! भूयस्त्वां प्रणमामि रुद्रवनिते ! मामुद्धर त्वं पथि ॥ ८ ॥ कुण्डलीशक्तिमार्गस्थं स्तोत्राष्टकं महाफलम्। यः पठेत् प्रातरुत्थाय स योगी भवति ध्रुवम्। क्षणादेव हि पाठेन कवि-नाथो भवेदिह। परत्र कुण्डलीयोगाद्ब्रह्मलीनो भवेन्महान्। इति ते कथितं नाथ ! कुण्डलीकोमलस्तवम्। एतत्स्तोत्रप्रसा-देन देवेषु गुरुगीष्पतिः। सर्वे देवाः सिद्धियुक्ता अस्याः स्तोत्र-प्रसादतः। द्वापरार्द्धचिरञ्जीवी ब्रह्मा सर्वसुरेश्वरः। त्वञ्चापि मम निकटे स्थितो भगवतीपतिः। मां विद्धि परमां शक्तिं स्थूलसूक्ष्मस्वरूपिणीम्। सर्वप्रकाशकरणीं विन्ध्यपर्वतवासि-नीम्। हिमालयसुतां सिद्धां सिद्धमन्त्रस्वरूपिणीम्। वेदान्त-शक्तितन्त्रस्थां कुलतन्त्रार्थगामिनीम्। रुद्रजामलमध्यस्थां स्थिति-स्थापकभावनाम्। पञ्चमुद्रास्वरूपाञ्च शक्तिजामलमालिनीम्। रत्नमालाबलाकाढ्यां चन्द्रसूर्य्यप्रकाशिनीम्। सर्वभूतमहाबुद्धि-दायिनीं दानवापहाम्। स्थित्युत्पत्तिलयकरीं करुणासागर-स्थिताम्। महामोहनिवासाढ्यां दामोदरशरीरगाम्। छत्र-चामररत्नाढ्यां महाशूलकरां पराम्। ज्ञानदां बुद्धिदां विद्यां रत्नमालाकलापदाम्। सर्वतेजःस्वरूपां मामनन्तकोटिविग्र-हाम्। दरिद्रधनदां लक्ष्मीं नारायणमनोरमाम्। सदा भावय

शम्भो ! त्वं योगनायक ! पण्डित ! ॥ इति रुद्रजामले उत्तरखण्डे कुण्डलीस्तोत्रं समाप्तम् ।

कुण्डलिन्यां स्तोत्रान्तरं योगसारे तृतीयपटले ॥ ओं नमस्ते देवदेवेशि ! योगीशप्राणवल्लभे ! सिद्धिदे ! वरदे ! मातः ! स्वयम्भूलिङ्गवेष्टिते ॥ १ ॥ ओं प्रसुप्तभुजगाकारे ! सर्वदा कारणप्रिये ! । कामकलान्विते ! देवि ! ममाभीष्टं कुरुष्व च ॥२॥ असारे घोरसंसारे भवरोगात् कुलेश्वरि ! । सर्वदा रक्ष मां देवि ! जन्मसंसारसागरात् ॥ ३ ॥ इति कुण्डलिनीस्तोत्रं ध्यात्वा यः प्रपठेत् सुधीः । मुच्यते सर्वपापेभ्यो भवसंसाररूपकैः ॥ इति कुण्डलिनीस्तोत्रं समाप्तम् ।

अथ कुण्डलिनीकवचम् ॥ रुद्रजामले उत्तरखण्डे पञ्चत्रिंशत्पटले ॥ ओं आनन्दभैरव्युवाच ॥ अथ वक्ष्ये महादेव ! कुण्डलीकवच शुभम् । परमानन्ददं सिद्धं सिद्धवृन्दनिषेवितम् । यद्धृत्वा योगिनः सर्वे धर्म्माधर्म्मप्रदर्शकाः । ज्ञानिनो मानिनो धीरा विचरन्ति यथा नराः । सिद्धयोऽप्यणिमाद्याश्च करस्थाः सर्वदेवताः । एतत्कवचपाठेन देवेन्द्रो योगिराड्भवेत् । ऋषयो योगिनः सर्वे जटिलाः कुलभैरवाः । प्रातःकाले त्रिवारञ्च मध्याह्ने वारयुग्मकम् । सायाह्ने वारमेकन्तु पठेत् कवचमेव च । पाठादेव महायोगी कुण्डलीदर्शनं लभेत् । कुण्डलीकवचस्य ब्रह्मा ऋषिर्गायत्रीच्छन्दः कुण्डलीदेवता सर्वाभीष्टसिद्ध्यर्थे विनियोगः । ओमीश्वरी जगद्धात्री ललिता सुन्दरी परा । कुण्डली कुलरूपा तु पातु मां कुलचण्डिका । शिरो मे ललिता देवी पातूग्राख्या कपोलकम् । ब्रह्मरन्ध्रेण पुटितं भ्रूमध्यं पातु मे सदा । नेत्रत्रयं महाकाली कालाग्निभक्षिका शिखाम् । दन्तावलीं विशालाक्षी ओष्ठमिष्टान्नवासिनी । कामबीजात्मिका विद्या अधरं पातु मे सदा । दृगण्डस्था चाण्डयुग्मं मायाबीजा

रससप्रिया। भुवनेशी कर्णयुग्मं चिबुकं क्रोधकालिका। कपिला मे गलं पातु सर्व्ववीजस्वरूपिणी। मातृकावर्णपुटिता कुण्डली कल्पमेव च। हृदयं कालपुत्री च कङ्काली पातु मे सुखम्। भुज-युग्मं चण्डदुर्गा चण्डदोर्दण्डखण्डिनी। स्कन्धयुग्मं पातु देवी चिबुकं क्रोधकालिका। अङ्गुल्यग्रं कुलानन्दा श्रीविद्या नख-मण्डलम्। कालिका भुवनेशानी पृष्ठदेशं सदाऽवतु। पार्श्वयुग्मं महावीरा वीरासनधराऽभया। पातु मां कुलदर्भस्था नाभिमुदर-मल्लिका। कटिदेशं पृष्ठसंस्था महामहिषघातिनी। लिङ्गस्थानं महामुद्रा भगमाला मनुप्रिया। भगीरथप्रिया धूम्रा मूलाधारं गणेश्वरी। चतुर्दलं कामविद्या दलाग्रं मे वसुन्धरा। धीर्धरा धारणाख्या च ब्रह्माणी पातु मे मुखम्। भेदिनी पातु कमला वाग्देवी पूर्णगं दलम्। छेदिनी दक्षिणे पार्श्वे पातु चण्डा महातपाः। चण्डघण्टा सदा पातु योगिनी वारुणं दलम्। उत्तरस्थं दलं पातु पृथिवीमिन्द्रलालिताम्। चतुष्कोणं काम-विद्या ब्रह्मविद्याष्टकोणकम्। अष्टदलं सदा पातु सर्व्ववाहन-वाहना। चतुर्भुजा सदा पातु डाकिनी कुलचञ्चला। मेढ्रस्थ-मदनाधारा पातु मे चारुपङ्कजम्। स्वयम्भूलिङ्गं चार्व्वङ्गी कोट-राक्षी ममासनम्। कदम्बवनगा पातु कदम्बवनवासिनी। वैष्णवी परमा माया पातु मे वैष्णवं पदम्। षड्‌दलं राकिणी पातु रङ्गिनी कामवासिनी। कामेश्वरी कामरूपा कृष्णं मे पीतवाससम्। धनुः सा वनदुर्गा मे शङ्खं मे शङ्खिनी शिवा। चक्रं चक्रेश्वरी पातु कमलाक्षी गदां मम। पद्मं मे पद्मगन्धा च पद्ममालामनोहरा। वादिसान्ताक्षरं पातु लाकिनी लोक-पावनी। षड्‌दलस्थितदेवांश्च पातु कैलासवासिनी। अग्निवर्णा सदा पातु गलं मे परमेश्वरी। मणिपूरं सदा पातु मणिमाला-विभूषणा। दशपत्रं दशवर्णं कादिफान्तं त्रिविक्रमा। पातु

नीला महाकाली भद्रा भीमा सरस्वती। अयोध्यावासिनी देवी महापीठनिवासिनी। वाग्भवाद्या महाविद्या कुण्डली कालरूपिणी। दशच्छदशतं पातु रुद्रं रुद्रात्मकं मम। सूक्ष्मा सूक्ष्मतरा पातु सूक्ष्मस्थाननिवासिनी। लाकिनी लोकजननी पातु कूटाक्षरान्विता। तैजसं पातु नियतं रजकी राजपूजिता। विजया कुलवीजस्था तवर्गं तिमिरापहा। चन्द्रात्मिका मणिग्रन्थिं भेदिनी पातु सर्वदा। भगमाला भृगुसुता पातु मां नाभिवासिनी। नन्दिनी पातु सकलं कुण्डली कालकल्पिता। हृत्पद्मं पातु कालाख्या धूम्रवर्णा मनोहरा। दलद्वादशवर्णञ्च भास्करी भावसिद्धिदा। पातु मे परमा विद्या कवर्गं कामचारिणी। चवर्गं चारुरसना व्याघ्रास्या टङ्कधारिणी। टकारं पातु कृष्णाख्या काकिनीं पातु कालिका। ठङ्कुराङ्गी ठकारं मे वीजभाषा महोदया। ईश्वरं पातु विमला मम हृत्पद्मवासिनी। कालिकां कालसन्दर्भा योगिनी योगमातरम्। इन्द्राणी वारुणी पातु कुलमाला कुलान्तरम्। तारिणी शक्तिमाता च कण्ठवाक्यं सदाऽवतु। विप्रचित्ता महोग्रोग्रा प्रभादीप्ता घनामला। वाक्स्तम्भिनी वज्रदेहा वैदेही वृषवाहिनी। उन्मत्ता नन्दचित्ता च कुलेशी सा भगातुरा। मम षोड़श पत्राणि पातु मातृतया स्थिता। सुरान् रक्षतु वेदज्ञा सर्वभाषा च कालिकाम्। ईश्वरार्द्धासनगता प्रपायान्मे सदाशिवा। शाकम्भरी महामाया शाकिनी पातु सर्वदा। भवानी भवमाता च पयोद्रुमध्यपङ्कजम्। द्विदलं व्रतकामाख्या अष्टाङ्गसिद्धिदायिनी। पातु मामखिलानन्दा मनोरूपा जपप्रिया। लकारं लक्षणाक्रान्ता सर्वलक्षणलक्षणा। कृष्णाजिनधरा देवी चकारं पातु सर्वदा। द्विदलस्थं सर्वदेवं सदा पातु वरानना। बहुरूपा विश्वरूपा हाकिनी पातु चण्डिका। हरा परशिवं पातु मानसं पातु पञ्चमी। षट्चक्रस्था

सदा पातु षट्चक्रकुलवासिनी। अकारादिच्चकारान्ता विन्दु-सर्गसमन्विता। मातृकार्णा सदा पातु कुण्डली ज्ञानकुण्डली। पूर्णकाली गतिप्रेता पूर्णगिरितटं शिवा। उड्डीयानेश्वरी देवी सकलं पातु सर्वदा। कैलासपर्वतं पातु कैलासगिरिवा-सिनी। डाकिनी राकिणी शक्तिर्लाकिनी काकिनी कला। साकिनी हाकिनी देवी षट्चक्रादीन् प्रपातु मे। कैलासाख्यं सदा पातु पञ्चाननतनूद्भवा। हिरण्यवर्णा रजनी चन्द्रसूर्य्याग्नि-भच्चिणी। सहस्रदलपद्मं मे सदा पातु कुलाकुला। सहस्रदल-पद्मस्था दैवतं पातु भैरवी। काली तारा षोड़शाख्या मातङ्गी पद्मवासिनी। शशिकोटिगलद्रूपा पातु मे सकलां तनुम्। रणे घोरे जले दोषे युद्धे वादे श्मशानके। सर्वत्र गमने ज्ञाने सदा मां पातु शैलजा। पर्वते विविधावासे विनाशे पातु कुण्डली। पदादिब्रह्मरन्ध्रान्तं सर्वाकाशा सुरेश्वरी। सदा पातु सर्वविद्या सर्वज्ञानं सदा मम। नवलच्चमहाविद्या दशदिच्चु प्रपातु माम्। इत्येतत् कवचं देवि! कुण्डलिन्याः प्रसिद्धिदम्। ये पठन्ति ध्यानयोगे योगमार्गव्यवस्थिताः। ते यान्ति मोच्चपदवीमैहिके-नात्र संशयः। मूलपद्मे मनोयोगं कृत्वा दृढ़ासनस्थितः। मन्त्री ध्यायेत् कुण्डलिनीं सूच्मपद्मप्रकाशिनीम्। धर्मोदयां दयारूढ़ामाकाशस्थानवासिनीम्। अमृतानन्दरसिकां विकलां सकलां सिताम्। असितां रक्तरहितां विरक्तां रक्तविग्रहाम्। रक्तनेत्रां कुलच्चिप्तां ज्ञानाकुलजलोज्ज्वलाम्। विप्रकारां मनो-रूपां मूले ध्यात्वा प्रपूजयेत्। यो योगी कुरुते एवं स सिद्धो नात्र संशयः। रोगी रोगात् प्रमुच्येत बद्धो मुच्येत बन्धनात्। वस्तु प्रियमवाप्नोति वस्तुहीनः पठेद् यदि। पुत्रहीनो लभेत् पुत्रं योगहीनो भवेद्वशी। कवचं धारयेद्यस्तु शिखायां दच्चिणे भुजे। वामा वामकरे धृत्वा सर्वाभीष्टमवाप्नुयात्। स्वर्णे रौप्ये

तथा ताम्रे स्थापयित्वा प्रपूजयेत् । सर्वदेशे सर्वकाले पठित्वा सिद्धिमाप्नुयात् । स भूयात् कुण्डलीपुत्रो नात्र कार्य्या विचारणा ॥ इति रुद्रजामले उत्तरखण्डे कन्दवासिनीकवचं समाप्तम् ॥

तत आचारात् स्वेष्टदेवताप्रणाममन्त्रेण कुण्डलिनीं नत्वा दशसु द्वारेषु चौरगणेशमन्त्रं कवाटवत् न्यसेत् तदुक्तं गणेशविमर्षिण्याम् ॥ चक्षुर्द्वयं तथा कर्णद्वयं नासापुटद्वयम् । मुखं नाभिं लिङ्गमूलं गुदस्थानं तथैव च । मनोद्वारं भ्रुवोर्मध्ये दशैव द्वारसंज्ञिताः । अङ्कुशं प्रथमं वीजं हृदये दशधा जपेत् । प्रजपान्ते ततो मातः ! कवाटं निक्षिपेत्ततः । कर्णयोश्च तथा कूर्च्चं कालीं नासापुटे ततः । मुखे स्त्रीं द्विविधं वीजं नाभौ वाणीं ततो जपेत् । हसौः वीजं लिङ्गमूले ग्लुं मूले परिकीर्त्तितम् । ॐकारञ्च भ्रुवोर्मध्ये मनःस्थाने तथैव च । एतदेकादशं वीजं प्रतिद्वारे कवाटवत् ॥ चौरगणेशमन्त्रं न जप्त्वा कर्म्ममात्रं न कुर्य्यात् । यदि कुर्य्यात्तदा दोष उक्तो वर्णविलासतन्त्रे ॥ गणेश उवाच ॥ अधुनाहं प्रवक्ष्यामि चौरमन्त्रमतः शृणु । चौरमन्त्रपरिज्ञानं विना हे ब्राह्मणीश्वरि ! । पुराणं प्रपठेद्यस्तु स एव मूर्त्तिमान् कलिः । परजन्मनि पापिष्ठः स भवेच्चौरकुक्कुरः । शिवपूजा विष्णुपूजा शक्तिपूजा तथैव च । सर्वपूजासु यत्तेजो हरते गणपः स्वयम् । पञ्चाशद्गणदेवानां ज्योतींषि मुनिपुङ्गवाः । प्रतिद्वारपथे गत्वा प्रतिपद्मेषु जृम्भते । हरन्ति जपतेजांसि प्रतिपद्मेषु संस्थिताः । जपपूजासु यत्तेजस्तत्र चौरगणाधिपः । तस्माच्चौरप्रबोधार्थं चौरमन्त्रान् जपेद्दश । ततस्तु पूजयेद्धीमान् यस्य या इष्टदेवताः । ततः फलमवाप्नोति ब्रह्मादित्रिदिवौकसः । चौरमन्त्रं महामन्त्रं पञ्चाशद्गणतोषणम् । चौरमन्त्रं विना भद्रे ! शान्तिस्वस्त्ययनं कुतः । कर्णद्वयं तथा चक्षुर्द्वयं

नासामुखं ततः। नाभिस्थाने लिङ्गमूले गुदस्थाने तथैव च। मनोद्वारे भ्रुवोर्मध्ये दशैकं द्वारमीरितम्। प्रतिद्वारे न्यसेन्मन्त्रं चौराख्यं ब्राह्मणीश्वरि!। चौरमन्त्रञ्चाह भद्रे! प्रतिद्वारे कवाट-वत्। रहस्यं ते प्रवक्ष्यामि पश्चाद्यद्गणतोषणम्। अङ्कुशं पञ्चमं वीजं प्रथमे दशधा जपेत्। प्रजप्य सुभगे! मातः! कवाटं विक्षि-पेत्ततः। अन्यथा अङ्कुशैर्वीजैः कवाटं भेदिरे गणाः। चन्द्रिकान्त-र्गता नित्यं शङ्करं वरसुन्दरम्। चन्द्रिका सुषमा सीता शिञ्जिनी अणिमागुणा। चन्द्रविन्द्वात्मिका नित्या गणेशपरिपूजिता। क्रीं क्रीं वीजद्वयमिति विन्यसेन्नयनद्वये। कर्णयोश्च तथा क्रीं क्रीं हुं हुं नासाद्वये तथा। मुखे स्त्रीं द्विविधं वीजं नाभौ क्लीं सुभगेश्वरि!। हेसौर्वीजं लिङ्गमूले गुदे ब्लुं परिकीर्त्तितम्। हुङ्कारञ्च भ्रुवो-र्मध्ये मनःस्थाने तथैव च। एतदेकादशद्वारे चौरमन्त्राणि विन्यसेत्। दशधा चौरमन्त्रञ्च एकधा वापि वीजकम्। अनेनैव जपेनापि प्रतिद्वारे कवाटकम्॥ जपकालोऽपि तत्रैव॥ शृणु चापि प्रवक्ष्यामि मन्त्रस्य जपनिर्णयम्। प्रातःकाले च शय्यायां सुप्तस्वापः स्वदेहके। पूर्ववन्मातृकान्यासं विन्यसेन्मातृकास्थले। तथा एकादशद्वारे चौरमन्त्राणि विन्यसेत्। दशधा चौरमन्त्रञ्च एकधा वापि सञ्जपेत्। चौरमन्त्रजपात् तुष्टिर्गणेशस्य तदा भवेत्। यमस्य नाधिकारोऽपि चौरमन्त्रजपात् प्रिये!। सर्वमन्त्रजपा-त्तेजः सर्वस्मात् समुपस्थितम्। तत्तेजोहरणे शक्तिर्गणेशस्य न चैव हि॥ इति॥

अथ प्रयोगः॥ हृदि क्रोमिति दशधा जपेत् दक्षिणचक्षुषि क्रीं क्रोमिति॥१०॥ वामचक्षुषि क्रीं क्रोमिति॥१०॥ दक्षकर्णे क्रीं क्रोमिति॥१०॥ वामकर्णे ह्रीं ह्रोमिति॥१०॥ दक्षिणनासायां हुं हुं इति॥ १०॥ वामनासायां हुं हुं इति॥ १०॥ मुखे क्रीं क्रीं क्रीं ह्रीं ह्रोमिति॥ १०॥ नाभौ ऐं सौमिति॥ १०॥

लिङ्गे ह्रौः इति ॥ १० ॥ गुह्ये क्लुमिति ॥ १० ॥ भ्रूमध्ये ङमिति ॥ १० ॥ सर्वत्र दशधा जपेत् ॥ ततः स्थाने स्थानेऽजपा-मन्त्रसमर्पणं कुर्य्यात् ॥ कुलमूलावतारकल्पसूत्रटीकायां तृतीय-काण्डे अस्याजपागायत्रीमन्त्रस्य शिरसि हंस ऋषये नमः ॥ मुखे अव्यक्तगायत्रीच्छन्दसे नमः ॥ हृदि परमहंसदेवतायै नमः । लिङ्गे हं वीजाय नमः ॥ आधारे सः शक्तये नमः । पर-मात्मप्रीतये उच्छ्वासनिश्वासाभ्यां षट्शताधिकैकविंशतिसहस्र-जपेन पूर्वभूतेभ्यो निवेदयामि । मूलाधारमण्डपे स्वर्णवर्णचतु-र्दलपद्मे वादिसान्तचतुर्वर्णान्विते गायत्रीसहिताय गणनाथाय षट्शतसंख्यजपमहर्निशं समर्पयामि नमः । स्वाधिष्ठानमण्डपे अनेकविद्युन्निभे वादिलान्तषड्वर्णान्विते षड्दलपद्मे सावित्री-सहिताय ब्रह्मणे अजपामन्त्रषट्सहस्रं निवेदयामि नमः । मणिपूरमण्डपे नीलोत्पलमेघनिभे डादिफान्तदशवर्णान्विते दशदलपद्मे लक्ष्मीसहिताय विष्णवे षट् सहस्रजपं समर्पयामि नमः । अनाहतमण्डपे तरुणरविनिभे द्वादशवर्णयुते द्वादश-दलपद्मे गौरीसहिताय शिवाय अजपाषट् सहस्रजपं समर्प-यामि नमः । विशुद्धमण्डपे षोड़शदलकर्णिकामध्ये जीवात्मने अकारादिअःकारान्ते अजपासहस्रसंख्यजपं निवेदयामि नमः । आज्ञामण्डपे श्रीचन्द्रप्रभे द्विदलपद्मे हक्षवर्णान्विते मायासहित-गुरुमूर्त्तये एकसहस्रजपं निवेदयामि नमः । ब्रह्मरन्ध्रमण्डपे नानावर्णोज्ज्वले सहस्रशब्दोऽसंख्यपर इति बोध्यम् । उक्तञ्च पद्मं कोटिसमन्वितमिति । सहस्रपद्मस्थिताय परमात्मने अकारादिक्षकारान्तसहिताय एकसहस्रजपं निवेदयामि नमः । इति जपं समर्प्य अष्टोत्तरशतसंख्यमजपाजपं कुर्य्यात् । अका-रादिक्षकारान्ता वर्णा हंस इति शिवशक्तिविन्दुना ब्रह्माणं अ इति विसर्गरूपविन्दुभ्यां हरिहरयोरभेदः । सोऽहमित्यभेद-

भावनया ब्रह्मरूपता स्वं स्वं परिभाव्य उक्तः। षट्‌शताधिकैक-विंशतिसहस्रजपेन परदेवतारूपः श्रीपरमेश्वरः प्रीयतामित्येक-वारं सङ्कल्प्य हंसस्य ध्यानं यथा॥ आराधयामि मणिसन्निभ-मात्मलिङ्गं मायापुरीहृदयपङ्कजसन्निविष्टम्। श्रद्धानदीविमल-चित्तजलावगाहं नित्यं समाधिकुसुमैरपुनर्भवाय॥ प्रसङ्गाज्ज-परहस्यं लिख्यते। पञ्चाशद्वर्णसम्पुटत्वेनानुलोम्यप्रातिलोम्येन ब्रह्मरूपं मेरुं चकारं परिकल्प्य तया सह जपं कुर्य्यादिति दोषलेशैर्न बाध्यते। एतेन विश्वमेव हंसमातृकयोरैक्याकारेण कालात्मना लोके चिदात्मा उच्यते। अजपाविधानं विना श्रीविद्या-दिसकलविद्याया अनधिकारी भवेत्। तदुक्तम्। हंसज्ञानविमु-ग्धेन कृतमप्यकृतं भवेत्। इति। तद्धृतपद्मकोषराघवभट्टधृतत-न्त्रान्तरदक्षिणामूर्त्तिसंहितासप्तमपटलेषु। अजपाधारणं देवि! कथयामि तवानघे!। यस्य विज्ञानमात्रेण परं ब्रह्मैव देशिकः। हंसः पदं परेशानि! प्रत्यहं प्रजपेन्नरः। मोहरन्ध्रं न जानाति मोक्षस्तस्य न विद्यते। श्रीगुरोः कृपया देवि! ज्ञायते जप्यते यदा। उच्छ्वासनिश्वासतया तदा बन्धक्षयो भवेत्। उच्छ्वासे चैव निश्वासे हंस इत्यक्षरद्वयम्। तस्मात् प्राणस्तु हंसात्मा आत्माकारेण संस्थितः। नाभेरुच्छ्वासनिश्वासात् हृदयाग्रेर्व्यव-स्थितिः॥ अहोरात्रमध्येऽजपाजपसंख्यापि तत्रैव। षष्टिश्वासै-र्भवेत् प्राणः षट् प्राणा नाड़िका मता। षष्टिनाड्या अहोरात्रं जपसंख्याक्रमो मतः। एकविंशतिसाहस्रं षट्शताधिकमीश्वरि!। जपते प्रत्यहं प्राणी सान्द्रानन्दमयीं पराम्। उत्पत्तिश्च जपा-रम्भो मृत्युस्तस्य निवेदनम्। अजपानामकारणमपि तत्रैव। विना जपेन देवेशि! जपो भवति मन्त्रिणः। अजपेयं ततः प्रोक्ता भवपाशनिकृन्तनी। एवं जपं महेशानि! प्रत्यहं विनि-वेदयेत्। गणेशब्रह्मविष्णुभ्यो हराय परमेश्वरि!। जीवा-

त्मने क्रमेणैव तथैव परमात्मने। षट् शतानि सहस्राणि सहस्रञ्च तदेव हि। पुनः सहस्रं गुरवे क्रमेण च निवेदयेत्। एवं यथा स्थानावस्थितेभ्यो गणेशादिभ्यस्तज्जपसमर्पणमुक्त्वा तत्तत्-स्थानानां तत्तदवस्थितमातृकार्णानाञ्च रूपमाह तत्रैव॥ आधारे स्वर्णवर्णेऽस्मिन् वादिसान्तानि संस्मरेत्। द्रुतसौवर्णानि तथा वर्णानि परमेश्वरि!। स्वाधिष्ठाने विद्रुमाभे वादिलान्तानि च स्मरेत्। विद्युत्पुञ्जप्रभाभाणि सुनीले मणिपूरके। डफान्तानि महानीलप्रभाणि च विचिन्तयेत्। पिङ्गवर्णे महावह्निकलिका-भानि चिन्तयेत्। कादिठान्तासिवर्णानि चतुर्थेऽनाहते प्रिये! विशुद्धौ धूम्रवर्णे च रक्तवर्णान् स्वरान् यजेत्। आज्ञायां विद्यु-दाभायां क्षभौ हक्षौ विचिन्तयेत्। कर्पूरद्युतिसंराजत्सहस्र-दलनीरजे। नादात्मकं ब्रह्मरन्ध्रं जानीहि परमेश्वरि!। एतेषु सप्तचक्रेषु स्थितेभ्यः परमेश्वरि!। जपं निवेदयित्वा तु अहोरात्रभवं प्रिये!। सहजं परमेशानि! न्यासं कुर्य्याद्विचक्षणः। ऋषिर्हंसो व्यक्तरूपो गायत्रीच्छन्द उच्यते। देवता परमादिस्तु हंसोऽहं वीजमुच्यते। सः शक्तिः कीलकं सोऽहं प्रणवस्तु त्वमेव हि। नेत्रस्थलं भवेत् श्वेतं वर्णञ्च परमेश्वरि!। तदा तत् सह इत्येवं मनोरस्य प्रकीर्त्तितः। मोक्षार्थे विनियोगः स्यादेवं जानी-हि पार्वति!। ततः षडङ्गविन्यासं कुर्य्याद्देहस्य सिद्धये। सूर्य्यं सोमं महेशानि! निरञ्जनमतः परम्। निराभासं चतुर्थ्यन्तं स्वाहान्ते क्रमतो न्यसेत्। कवचान्तं प्रविन्यस्य ततोऽनन्तपदं स्मरेत्॥ अजपाया द्वैविध्यमुक्तं यथा निरुत्तरतन्त्रे चतुर्थपटले-ऽपि॥ हंसेति प्रकृतिर्ज्ञेया ॐकारः प्रकृतेर्गुणः। हङ्कारेण वहिर्य्याति सकारेण विशेत् पुनः। हंसेति परमं मन्त्रं जीवो जपति सर्वदा। षट् शतानि दिवारात्रौ सहस्राण्येकविंशतिः। अजपा नाम गायत्री योगिनां मोक्षदायिनी। अजपा द्विविधा

देवि! व्यक्ता गुप्ता क्रमेण च। व्यक्ता च द्विविधा प्रोक्ता शब्दज्योतिःस्वरूपिणी। ज्योतीरूपा च सा देवी हृदि स्थाने प्रतिष्ठिता। ठकाररूपा गुप्ता च शिवशक्तिः प्रकीर्त्तिता। चन्द्रवीजं ठकारस्तु वीप्सितः स्वर उच्यते। अजपार्थमयी गुप्ता वह्निजाया प्रकीर्त्तिता। अस्याः सङ्कल्पमात्रेण पुरश्चरणमुच्यते। इति स्वेष्टदेवतागुरुकुण्डलिनीध्यानेन परिपूतमनःकायश्चिन्तयेद् यथा। राघवभट्टधृतम्॥ अहं देवो न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक्। सच्चिदानन्दरूपोऽहं नित्यमुक्तस्वभाववान्। गुरुदेवात्मनामैक्यं भावयित्वा तु प्रार्थयेत्॥ भावनाप्रकारस्तु धर्मकाण्डे दर्शितः। त्रैलोक्यचैतन्यमयाधिदेव! श्रीनाथ! विष्णो! भवदाज्ञयैव। प्रातः समुत्थाय तव प्रियार्थं संसारयात्रामनुवर्त्तयिष्ये। जानामि धर्मं न च मे प्रवृत्तिः जानाम्यधर्मं न च मे निवृत्तिः। केनापि देवेन हृदि स्थितेन यथानियुक्तोऽस्मि तथा करोमि॥ अत्र श्रीनाथविष्णो इति शैवादावूहः कार्य्यः। अतएव शाक्तानन्दतरङ्गिण्यां पञ्चमोल्लासे। त्रैलोक्यचैतन्यमयेश्वरेशि! श्रीपार्वति! त्वच्चरणाज्ञयैव। इति शक्तिविषये अर्द्धमुक्तम् इति प्रार्थनामन्त्रः॥ तत उत्थाय भूमिनतिं कृत्वा वामपदपुरःसरं मूत्रपुरीषे कुर्य्यात्तदुक्तं तत्रैव। एवं सञ्चिन्त्य मनसा गृहान्निर्गत्य संयतः। आचम्य प्रयतो मन्त्री दन्तधावनमाचरेत्। प्रयत इत्यनेन मूत्रपुरीषोत्सर्गान्तशुद्ध इति सूचितम्। तथाच। महानिर्वाणतन्त्रे पञ्चमोल्लासे॥ नमस्कृत्य वहिर्गच्छेद्वामपादपुरःसरम्। त्यक्त्वा मूत्रपुरीषञ्च दन्तधावनमाचरेत्। गन्धर्वतन्त्रे पञ्चमपटले॥ सर्वमङ्गलसम्पन्नो वहिर्निर्गत्य साधकः। त्यक्त्वा मूत्रपुरीषे तु दन्तधावनमाचरेत्। दन्तकाष्ठमखादित्वा पूजयेद् यस्तु देवताम्। सा पूजा विफला देवि! मृते तु नरकं व्रजेत्। दक्षिणामूर्त्तौ॥ क्लीमात्मकं कामदेवं सर्वज्ञनमथालिखेत्।

प्रियाय इदयान्तोऽयं मनुर्दन्तविशुद्धये। चतुर्दशाक्षरैर्वक्त्रं क्षालयेत् सिद्धिहेतवे॥ मन्त्रतन्त्रप्रकाशे। विधायावश्यकं शौचमाचमं दन्तधावनम्। मुखप्रक्षालनादीनि कृत्वा स्नानं समाचरेत्॥ पदार्थदर्शने॥ ब्राह्मे मुहूर्त्ते उत्थाय करपादौ विशोधयेत्। मुखं प्रक्षाल्य देवेशि! नासारन्ध्रद्वयं तथा। नेत्राञ्जनं विधायैव शुद्धस्थानं समाश्रयेत्। नेत्राञ्जनमकृत्वा तु यः पश्येत् सौरमण्डलम्। जन्मार्जितफलं नश्येत् का कथा तस्य दुर्मतेः। इति निन्दार्थवादो हरिद्वारादावावश्यकत्वप्रतिपादको यस्मिन् देशे इत्याद्युक्तवचनादन्यत्र काम्यत्वज्ञापक इति। स्मृत्युक्तविधानेन शौचादिकं देहशुद्धिञ्च विधाय रात्रिवासः परित्यज्य वासोऽन्तरं परिधाय मन्त्रस्नानं कृत्वा देवगृहमागत्य सम्मार्जनोपलेपादिं कृत्वा देवस्य निर्माल्यमपसार्य्य पूर्वदिनावशिष्टपत्रादिनाभ्यर्च्य नमस्कुर्य्यात्। अन्यथा दोषः। यदाहुः॥ तृषार्त्तान्तः पशुर्वद्धः कन्यका च रजस्वला। देवता च सनिर्माल्या हन्ति पुण्यं पुराकृतम्। मन्त्रतन्त्रप्रकाशे॥ स्मृत्युक्तेन विधानेन सम्यक् शौचं विधाय च। प्रक्षाल्य पादावाचम्य कृत्वा न्यासं यतात्मवान्। प्रविश्य देवतास्थानं निर्माल्यमपकृष्य च। दद्यात् पुष्पाञ्जलिं विद्वानर्घ्यपाद्ये तथैव च। मुखप्रक्षालनं दद्यात् दद्याद्वै दन्तधावनम्। दद्यादाचमनीयञ्च दद्याद्वासोऽमलं शुभम्॥ सम्मार्जनन्तु योगिनीतन्त्रे तृतीयभागे नवमपटले॥ सम्मार्जनं प्रवक्ष्यामि तत् शृणुष्व वरानने!। यां गतिं पुरुषा यान्ति स्त्रियो वा कर्मनिश्चिताः। यावद्धूलिनिःसृताश्च भूमिसम्मार्जने प्रिये!। तावद्वर्षसहस्राणि सप्तद्वीपे महेश्वर इति। विधिनिषेधद्रव्यमपि तत्रैव॥ न काष्ठेन न पत्रेण न कुशेन कदाचन। वस्त्रेण तृणगुच्छेन वीरणेन नलेन च। मार्जयेद्वर्जयेद् गुच्छं कुशकाशांश्च वर्जयेत्। इति देवगृहसम्मार्जनम्।

उपलेपनमपि तत्रैव॥ स्वङ्गोमयेन वै भूमिः क्रियते लेपनं प्रिये!। एकेनैवोपलेपेन स योन्यां नैव जायते। स्नात्वावलेपने देवि! सलिलं यो ददाति च। तस्य पुण्यं महाभागे! शृणु तत्त्वेन सुन्दरि!। यावन्ति जलविन्दूनि लिप्यमानस्य सुन्दरि!। तावद्वर्षसहस्राणि स्वर्गलोके महीयते। मृत्तोयैः प्रोक्षणं कुर्य्या-द्देवस्य च विलेपनम्। सर्वपापविनिर्मुक्तो वारुणं लोकमश्नुते। इत्युपलेपनम्। ततः स्तवनमात्रेण नमस्कुर्य्याद् यथा विश्व-सारतन्त्रे तृतीयपटले॥ ईश्वर उवाच॥ प्रातरेव समुत्थाय हस्तपादौ विशुध्य च। उत्तराभिमुखीभूय कुर्य्याद्भक्त्या गुरो-र्नतिम्। मनसा वचसा वापि कायेन च विशेषतः। क्षेत्रेशं वास्तुराजञ्च विघ्नराजं ततः परम्। दुर्गां विनायकं शम्भुं भैरवं वटुकान्वितम्। ब्रह्माणं नैर्ऋतिञ्चैव चक्रपाणिं नमेत् सदा। विघ्नेभ्यो विघ्ननाथेभ्य ऋषिभ्योऽपि नमेत्ततः। देवेभ्यो वेदशास्त्रेभ्यो वेदार्थेभ्यश्च वै नमः। रामायणेभ्यो भागवतेभ्यः पुराणेभ्यः सदा प्रिये!। ब्राह्मणेभ्यो गुरुभ्यश्च योगिनीभ्यो विशेषतः। यतिभ्यो मनुवंशेभ्यो मनुष्येभ्यो नमेत् सदा। वृक्षेभ्य ओषधिभ्यश्च लतागुल्मेभ्य एव च। कुलाचलेभ्यो दिग्भ्यश्च दिक्पालेभ्यो नमो नमः। संहिताभ्यः शिवेभ्यश्च रुद्रेभ्योऽपि नमो नमः। योगेभ्यः करणेभ्यश्च तिथिभ्यस्तेभ्य एव च। दिवसेभ्यश्च पक्षेभ्यः सर्वकालेभ्य एव च। योगिनीभ्योऽपि कालेभ्यः प्रणमेत् सर्वकालतः। क्षणेभ्यो निमिषेभ्यश्च कर्म्मभ्यः कारणेभ्यश्च। पीठेभ्यः सागरेभ्यश्च तीर्थेभ्योऽपि नमो नमः। नदीभ्यः कर्मयोगिभ्यो मन्त्रेभ्यः प्रणमेत् पुरा। वृक्षेभ्य ओषधि-भ्यश्च लतागुल्मेभ्य एव च। कृत्रिमाकृत्रिमेभ्यश्च ह्रदेभ्यः प्रणमेत् सदा। जीवेभ्यः सर्वभावेभ्यो रसेभ्योऽपि विशेषतः। पुष्पेभ्यश्च प्रणम्याथ चागमेभ्यो नमेत्ततः। भाष्येभ्यश्चार्थशास्त्रेभ्य,

आख्यानेभ्यो नमेत् सदा। अस्त्रेभ्यः सर्वशास्त्रेभ्यो मातृका-भ्यश्च पार्वति!। पुरुषेभ्यश्च शक्तिभ्यो धर्मशास्त्रेभ्य एव च। भूतेभ्यः पञ्चभूतेभ्यो महाभूतेभ्य एव च। ज्योतिर्भ्यो ज्योतिषे-भ्यश्च आचार्य्येभ्यश्च पार्वति!। श्रुतिभ्यश्च प्रणम्याथ ऋतुभ्यः प्रणमेत् सदा। वर्णेभ्यो वर्णशक्तिभ्यः कलाभ्यः प्रणमेत् सदा। सब्रह्मविष्णुरुद्रेभ्यो मुद्राभ्यः प्रणमेत् सदा। स्थानेभ्यः स्थान-देवेभ्यः सर्वकालात्मने नमः। विघ्नेभ्यः कालपीठेभ्यो योगिनी-गणपालिके!। भैरवेभ्यस्तत्पत्नीभ्यो मातृमण्डलचक्रके। रत्ने-भ्यश्च स्वरेभ्यश्च देवीप्रीतिकरेष्वपि। एवं प्रणम्य देवेशि! ध्याये-द्देवीं विचक्षणः। प्रान्तरे वा श्मशाने वा शून्यावासे तथा गृहे। अद्वैतभावनां कुर्य्याद् ब्रह्माण्डसदृशीं तनुम्। आधारशक्तिं सञ्चिन्त्य पङ्कजद्वयधारिणीम्। तन्मूर्द्ध्नि चिन्तयेद्देवि! कूर्म-रूपं जनार्दनम्। नीलमेघनिभं देवं सर्वतत्त्वसमन्वितम्। तस्य पृष्ठे स्थितं देवमनन्तं चिन्तयेद्धिया। सहस्रफणसंयुक्तं शुद्धस्फटिकसन्निभम्। ककुदंशे हलं ध्यायेन्मुद्गरं वामपार्श्वके। एककुण्डलरत्नेन भूषणेनातिभूषितम्। एकचक्रस्य उपरि पृथिवीं चिन्तयेद्धिया। यथा पृथिव्याः सिद्धयर्थं तथेमां चिन्तयेत् सुधीः। कृष्णवर्णां शुकव्रीहिभुजयुग्मेन भूषिताम्। तत्रापि मण्डपं ध्यायेन्मनसा मणिभूषितम्। तत्र कल्पतरुं ध्यायेत् सर्ववाञ्छाफलप्रदम्। तदधःस्थं चिन्तयेच्च स्वर्णसिंहासनं महत्। तत्र सञ्चिन्तयेद्देवीं हृत्पद्मस्थां सुरेश्वरीम्॥ इति छिन्नमस्ताया विशेषः। यद्यपि सुरीक्रमस्तव एव फलमुक्तं न तु छिन्न-मस्तादीनां तथाप्येकत्र निर्णीतः शास्त्रार्थो बाधकमन्तरेणान्य-त्रापि तथेति न्यायात् सर्वत्र क्रमस्तवे तत्फलमुन्नेयम्। अन्यथा क्रमस्तवस्यानित्यत्वप्रसङ्गः स्यादिष्टापत्तिरिति चेन्न। प्राचीन-निबन्धृभिरुल्लिखितस्य तच्छङ्केति। दक्षिणकाल्यास्तु॥ ब्राह्मे

मुहूर्त्ते उत्थाय हस्तपादौ विशुध्य च। पूर्वोक्तञ्च गुरुध्यानं कुर्य्यात् साधकसत्तमः। प्रणम्य विधिवद्देवीं ध्यायेत्तां वै सनातनीम्। अष्टोत्तरसहस्रं हि जपित्वा विधिनामुना। क्रमस्तवं पठेन्नित्यं विधिनानेन देशिकः। ॐ नमो गुरुभ्यो देवेभ्यस्तथा परतराय च॥ परापरेभ्यस्तद्वच्च तथा परात्पराय च। क्षेत्रपालं नमस्कृत्य द्वारदेवान् विधानतः। लक्ष्मीं सरस्वतीं दुर्गां गङ्गां गोदावरीं तथा। भोगवतीं नमस्कृत्य वास्तुदेवान्नमेत्तदा। विघ्नराजञ्च वास्त्वीशं क्षेत्रेशं प्रणमाम्यहम्। नैरृतञ्चैव ब्रह्माणं ब्रह्मकर्मात्मकं प्रिये!। विघ्नान् प्रणम्य विधिना तान् देवांश्च नमेत्ततः। आधारशक्तिं तां नत्वा पङ्कजद्वयधारिणीम्। नीलवर्णां महामायां द्वादशाक्षररूपिणीम्। ततो धर्मगणैः सेव्यां तां देवीं शक्तिरूपिणीम्। नीलवर्णं महाकायं कूर्मं हिमाद्रिसंस्थितम्। सर्वशक्तितनुं विष्णुं कूर्माकारं नमाम्यहम्। तस्य पृष्ठे स्थितं देवमनन्तं तं नमाम्यहम्। सहस्रफणसंयुक्तं सर्पाकारं हरिं नमः। हिमाद्रिसदृशं विष्णुं एकदण्डधरं विभुम्। फणासहस्रैर्मणिभिर्भूषितं तं नमाम्यहम्। तस्य कुक्षगतं ध्यायेल्लाङ्गलञ्चाशुभावहम्। मुद्गरं वामभागे च तत्रैकादशसंयुतम्। तस्य मूर्द्ध्नि स्थितं ध्यायेद्वराहं विष्णुमव्ययम्। एकदन्तं महाकायं कालमेघसमप्रभम्। तस्य दन्ते सदा ध्यायेत् पृथिवीं पद्मपायिनीम्। नीलवर्णां महादेवीं शालिशूकविभूषिताम्। अणिमादिगुणैर्युक्तां सर्वतत्त्वविभूषिताम्। तस्या मूर्द्ध्नि सदा ध्यायेत् समुद्रान् रत्नसंयुतान्। नानापर्वतसंयुक्तां पृथिवीं चिन्तयेद्धिया। पर्वतांश्चिन्तयेत्तस्यां सर्वत्र कुलभूषितान्। दिग्गजेभ्यो नमस्कृत्य योगिभ्यः प्रणमेत् सदा। मुनीन्द्रेभ्य ऋषिभ्यश्च योगशास्त्रधराय च। शाक्तेभ्यो वैष्णवेभ्यश्च शैवेभ्यः प्रणमेत् सदा। यन्त्रेभ्यो मन्त्रदेवेभ्यः सर्वशास्त्रपराय च। चन्द्राय

चन्द्रवंशेभ्यः सूर्य्यवंशेभ्य एव च। मनुवंशमनुष्येभ्यः पञ्चभूतेभ्य एव च। महाभूतेभ्यो भूतेभ्यः कलाभ्यः प्रणमेत् सदा। रसेभ्योऽपि नमस्कृत्य गन्धेभ्यः प्रणमेत् सदा। पुष्पेभ्यः पुष्पहासेभ्यो गन्धर्वेभ्यो नमो नमः। यक्षेभ्यो भूतवर्गेभ्यः प्रेतेभ्यः सर्वकर्मसु। शब्दब्रह्मस्वरूपेभ्यः प्रणमामि सदा प्रिये!। रुद्रेभ्यो रुद्रवंशेभ्यो भैरवेभ्यो नमो नमः। लिङ्गेभ्यो लिङ्गदेवेभ्यो वेदशास्त्रेभ्य एव च। वेदेभ्योऽपि च शास्त्रेभ्यस्तेभ्यो नित्यं नमो नमः। स्थावरेभ्यो नमस्कृत्य ऋषिभ्यः प्रणमेत् सदा। प्रणमामि सदार्थेभ्यो वेशेभ्योऽपि नमो नमः। मन्त्रेभ्योऽपि नमस्कृत्य मन्त्रार्थेभ्यो नमो नमः। पूजोपकरणेभ्यश्च ब्राह्मणेभ्यो नमो नमः। योगिनीभ्यो नमस्कृत्य शक्तिभ्योऽपि नमो नमः। रत्नेभ्योऽपि नमस्कृत्य नदीभ्यः प्रणमेत् सदा। पीठेभ्योऽपि नमस्कृत्य मातृभ्यः प्रणमेत् सदा। अन्नेभ्योऽपि नमस्कृत्य इन्द्रेभ्योऽपि नमो नमः। क्षेत्रेभ्योऽपि नमस्कृत्य क्षेत्रपालेभ्य एव च। कुलाचलेभ्यो नत्वा तु प्रादुर्भावेभ्य एव च। उक्तानुक्तञ्च यत् किञ्चित्तेभ्यो नित्यं नमो नमः। ॐ नमामि कालिकां देवीं कलिकल्मषनाशिनीम्। नमामि शम्भुपत्नीञ्च नमामि भवसुन्दरीम्। आद्यां देवीं नमस्कृत्य नमस्त्रैलोक्यमोहिनीम्। नमामि सत्यसङ्कल्पां सर्वपर्वतवासिनीम्। पार्वतीञ्च नमस्कृत्य नमो नित्यं नगात्मजे!। मातस्त्वदीयचरणं शरणं सुराणां ध्यानास्पदैर्दिशति वाञ्छितवाञ्छनीयम्। येषां हृदि स्फुरति तच्चरणारविन्दं धन्यास्त एव नियतं सुरलोकपूज्याः। गन्धैः शुभैः कुङ्कुमपङ्कलेपैर्मातस्त्वदीयं चरणं हि भक्ताः। स्मरन्ति शृण्वन्ति लुठन्ति धीरास्तेषां जरा नैव भवेद्भवानि!। तवाङ्घ्रिपद्मं शरणं सुराणां परापरा त्वं परमा प्रकृष्टिः। दिने दिने देवि! भवेत् करस्थः किमन्यमुच्चैः कथयन्ति सन्तः। कवीन्द्राणां दर्पं

करकमलशोभापरिचितं विधुन्वज्जङ्घा मे सकलगणमेतद्गिरि-सुते!। अतस्त्वत्पादाब्जं जननि! सततं चेतसि मम हितं नारी-भूतं प्रणिहितपदं शाङ्करमपि। ये ते दरिद्राः सततं हि मात-स्त्वदीयपादं मनसा नमन्ति। देवासुराः सिद्धवराश्च सर्वे तव प्रसादात् सततं लुठन्ति॥ हरिस्त्वत्पादाब्जं निखिलजगतां भूति-रभवत् शिवो ध्यात्वा ध्यात्वा किमपि परमं तत्परतरम्। प्रजानां नाथोऽयं तदनु जगतां सृष्टिविहितं किमन्यत्ते मातस्तव चरण-युग्मस्य फलता॥ इन्द्रः सुराणां शरणं शरण्ये! प्रजापतिः काश्यप एव नान्यः। वरः पतिर्विष्णुभवः परेशि! त्वदीयपादाब्जफलं समस्तम्॥ त्वदीयनाभीनवपल्लवे वा नवाङ्कुरैर्लोमवरैः प्रफुल्लम्। सदा वरेण्ये! शरणं विधेहि किंवापरं चित्तवरैर्विभाव्यम्। त्वदीयपादार्च्चितवस्तुसम्भवः सुरासुरैः पूज्यमवाप शम्भुः। त्वदीय-पादार्च्चनतत्परो हरिः सुदर्शनाधीश्वरतामुपालभत्। धरित्री गन्धरूपेण रसेन च जलं धृतम्। तेजो वह्निस्वरूपेण प्रणवे ब्रह्मरूपधृक्। मुखं चन्द्राकारं त्रिभुवनपदे यामसहितं त्रिनेत्रं मे मातः! परिहरति यः स्यात् स तु पशुः। न सिद्धिस्तस्य स्यात् सुरतसततं विश्वमखिलं कटाक्षैस्ते मातः! सफलपदपद्मं स लभते॥ क्रतुस्त्वं हविस्त्वं स्वधा त्वं मुरारेः पुरा त्वं परा त्वं सदा-शीर्मुरारेः। हरस्त्वं हरिस्त्वं शिवस्त्वं शिवानां गतिस्त्वं गतिस्त्वं गतिस्त्वं भवानि!॥ नवाहं नवा त्वं नवा वा क्रियाया वरस्त्वं चरुस्त्वं शरण्यं धरायाः। नदस्त्वं नदी त्वं गतिस्त्वं निधीनां सुतस्त्वं सुता त्वं पिता त्वं गृहिणाम्॥ त्वदीयमुण्डाख्य भवानि! मालां विधाय चित्ते भवपद्मजादयः। सुराधिपत्वं लभते मुनीन्द्रः शरण्यमेतत् किमपीह चान्यत्। नरस्य मुण्डञ्च तथा हि खड्गं भुजद्वये ये मनसा जपन्ति। सव्येतरे देवि! वराभयञ्च भवन्ति ते सिद्धजना मुनीन्द्राः। शिवोपरि त्वां हृदये निधाय

जपन्ति विद्यां हृदये कदाचित्। सदा भवेत् काव्यरसस्य वेत्ता अन्ते पदद्वन्द्वमुपाश्रयेत॥ दिगम्बरीं त्वां मनसा विचिन्त्य जपेत् पराख्यां जगतां जनीति। जपेत्पराख्यां जगतां मतिश्च किंवा पराख्याशरणं भवामः। शिवाविरावैः परिवेष्टितां त्वां निधाय चित्ते सततं जपन्ति। भवेय देवेशि! परा-परादिनिरीशतां देवि! परा वदन्ति॥ त्वदीयशृङ्गाररसं निधाय जपन्ति मन्त्रं यदि वेदमुख्याः। भवन्ति ते देवि! जना-पवादं कविः कवीनामपि चाग्रजन्मा॥ विकीर्णवेशां मनसा निधाय जपन्ति विद्यां चकितं कदाचित्। सुधाधिपत्यं लभते नरः स किमस्ति भूम्यां शृणु कालकालि!॥ त्वदीयबीजत्रयमा-तरेतज्जपन्ति सिद्धास्तु विमुक्तिहेतोः। तदेव मातस्तव पादप-द्मगा भवन्ति सिद्धिश्च दिनत्रयेऽपि॥ त्वदीयकूर्चद्वयजापकत्वात् सुरासुरेभ्योऽपि भवेच्च वर्णः। धनित्वपाण्डित्यमयन्ति सर्वे किं वा परां देवि! परापराख्या॥ त्वदीयलज्जाद्वयजापकत्वाद्भवेन्महे-शानि! चतुर्थसिद्धिः। त्वदीयसक्षिद्धिवरप्रसादात्तवाधिपत्यं लभते नरेशः॥ ततः स्वनाम्नः शृणु मातरेतत् फलं चतुर्वर्गं वदन्ति सन्तः। वीजत्रयं वै पुनरप्युपास्य सुराधिपत्यं लभते मुनीन्द्रः॥ पुनस्तथा कूर्चयुगं जपन्ति नमन्ति सिद्धा नरसिंहरूपाः। ततो-ऽपि लज्जाद्वयजापकत्वाल्लभन्ति सिद्धिं मनसो जनास्ते। अन्ते पदं क्षिप्य विभा विभावसोस्त्वन्मन्त्रमुद्धारमिदं वदन्ति॥ चिप-च्चारे चक्रे जननि! सततं सिद्धिसहितां विचिन्वन् सञ्चिन्वन् परममसृतं दक्षिणपदम्। सदा कालीं ध्यात्वा विधिविहित-पूजापरिकरा विशेषाख्यानं ते न खलु भवभङ्गाभयपदः॥ त्वं श्रीस्त्वमीश्वरी काली त्वं ह्रीस्त्वञ्च करालिका। लज्जा लक्ष्मीः सती गौरी नित्याचिन्त्या चितिः क्रिया॥ परा आद्या पराख्या च परमा परमा वसुः। अकुल्याद्येस्त्रित्ते प्रचयपदपद्यैः पदयुतैः

सदा अम्बा स्तुत्वा जपति हृदि मन्त्रं मनुविदा। न तेषां संसारे विभवपरिभङ्गप्रमथने क्षणं चित्तं देवि! प्रभवति विरुद्धे परिकरम्॥ त्रयस्त्रिंशैः श्लोकैर्यदि जपति मन्त्रं स्तवति च नमेच्चैतानेतान् परमसृतकल्पं सुरवरम्। भवेत् सिद्धिः शुद्धौ जगति शिरसा त्वत्पदयुगं प्रणम्य प्राकाम्यं वरसुरजनैः पूज्यविततिम्॥ इति विश्वसारतन्त्रे दक्षिणकालिकाक्रमस्तोत्रं नाम चतुर्थः पटलः॥

यासां यासां क्रमस्तोत्रं तासां तासां दक्षिणाप्रकृतिकत्वेनापवादविषयम् परित्यज्योत्सर्गस्य प्रवृत्तित्वात् दक्षिणकालिकाक्रमस्तोत्रपाठेनैव तत्फलनिर्वाहः। सम्प्रति गुह्यकाल्या अपि विशेष उक्तस्तत्रैव षष्ठपटले तत्क्रवचात् परम्॥ क्रमस्तवं प्रवक्ष्यामि शृणुष्व कमलानने!। ब्राह्मे मुहूर्त्ते उत्थाय गुरुदेवान्नमेत् सदा। वारुणीमुखमाश्रित्य नमस्कुर्य्यादुपर्य्यधः। गुरुभ्योऽपि नमो नित्यं नमस्तत्पादुकाय च। परं परेभ्यश्च परापरेभ्यः परात्परेभ्योऽपि नमोऽस्तु ते च। आधारशक्तिं नमस्कृत्य कुलाचलान्नमस्कुर्य्यात्। धर्म्मकर्म्मणे नमस्कृत्य कूर्म्मराजाय वै नमः। अनन्ताय नमो नित्यं वराहाय नमो नमः। पृथिव्यै च नमो नित्यं कुलाचलेभ्यो नमो नमः। समुद्रेभ्यो नमो नित्यं सरत्नैरमृतैर्जलैः। कुलवृक्षेभ्यो नमो नित्यं कल्पवृक्षेभ्यो नमो नमः। स्वर्णसिंहासनेभ्यश्च मणिवेद्यै नमो नमः। चतुर्द्दिशि नमस्कुर्य्यात् सर्व्वदेवान् नमस्ततः। वेदेभ्योऽपि नमो नित्यं वेदार्थेभ्यो नमो नमः। शाखाभ्यस्तस्य वै नित्यं तत्पादेभ्यो नमो नमः। लक्षणेभ्यो नमो नित्यं वर्णार्थेभ्यो नमो नमः। असंस्कारपदेभ्यश्च नमो वै परमात्मने। विद्याभ्योऽपि नमो नित्यमविद्याभ्यो नमो नमः। शास्त्रेभ्योऽपि नमो नित्यमशास्त्रेभ्यो नमो नमः। धर्मेभ्योऽपि नमो नित्यमधर्मेभ्यो नमो नमः। भागवतेभ्यो नमो

नित्यं विद्याभ्योऽपि नमो नमः। श्रुतिभ्योऽपि नमो नित्यं श्रुत्यर्थेभ्यो नमो नमः। श्रीरामभागवतेभ्यश्च दण्डवत् प्रणमेत् सदा। भागवतेभ्यो नमो नित्यं भागवतार्थेभ्यो नमो नमः। तत्त्वार्थेभ्यो नमो नित्यं तत्त्वेभ्योऽपि नमो नमः। योगिभ्योऽपि नमो नित्यं योगार्थेभ्यो नमो नमः। संहिताभ्यो नमो नित्यं तदर्थेभ्यो नमो नमः। मातृकाभ्यो नमो नित्यं तदर्थेभ्यो नमो नमः। कलाभ्योऽपि नमो नित्यं शक्तिभ्योऽपि नमो नमः। स्वरेभ्योऽपि नमो नित्यं रागेभ्योऽपि नमो नमः। रागिणीभ्यो नमो नित्यं तदर्थेभ्यो नमो नमः। अस्त्रेभ्योऽपि नमो नित्यं शस्त्रेभ्योऽपि नमो नमः। जीवेभ्योऽपि नमो नित्यं वीजेभ्योऽपि नमो नमः। भूचरेभ्यो नमो नित्यं खेचरेभ्यो नमो नमः। योगिभ्योऽपि नमो नित्यं करणेभ्यो नमो नमः। मुहूर्त्तेभ्यो नमो नित्यं यामेभ्योऽपि नमो नमः। ऋतुभ्योऽपि नमो नित्यं वत्सरेभ्यो नमो नमः। डाकिनीभ्यो नमो नित्यं रुद्रेभ्योऽपि नमो नमः। भूतेभ्योऽपि नमो नित्यं प्रेतेभ्योऽपि नमो नमः। यक्षेभ्योऽपि नमो नित्यं विघ्नेभ्योऽपि नमो नमः। भूतेभ्योऽपि नमो नित्यं महाभूतेभ्यो नमो नमः। आचार्य्येभ्यो नमो नित्यं शङ्करेभ्यो नमो नमः। वैष्णवेभ्यो नमो नित्यं ये च मायाविमोहिताः। मायायै प्रणमेन्नित्यं तत्त्वेभ्योऽपि नमो नमः। शरीरेभ्यो नमो नित्यं व्यापकेभ्यो नमो नमः। मन्त्रेभ्योऽपि नमो नित्यं यन्त्रार्थेभ्यो नमो नमः। नमो वर्णात्मिकाभ्यश्च देवताभ्यो नमो नमः। तत्पदेभ्यो नमो नित्यं सत्पदेभ्यो नमो नमः। भावनाभ्यो नमो नित्यं भावशास्त्रेभ्य एव च। स्तवेभ्यः कवचेभ्यश्च नामभ्योऽपि नमो नमः। आगमेभ्यो नमो नित्यं तदर्थेभ्यो नमो नमः। तत्क्रियाभ्यो नमो नित्यं श्रेष्ठशास्त्रेति कीर्त्त्यते। रसेभ्योऽपि नमो नित्यं गन्धेभ्योऽपि नमो

नमः। पीठेभ्योऽपि नमो नित्यं तत्स्थेभ्योऽपि नमो नमः। सत्त्वेभ्योऽपि नमो नित्यं राजसेभ्यो नमो नमः। तामसेभ्यो नमो नित्यं गुणेभ्योऽपि नमो नमः। सर्वविद्यावतारेभ्यः सिद्धेभ्योऽपि नमो नमः। आनन्दकन्दाय नमस्कृत्य कन्दनाय नमो नमः। सर्वतत्त्वात्मकमलाय प्रकृतिपत्रेभ्य एव च। सिद्धपीठाय सत्त्वस्य शवरूपशिवाय च। त्रिपञ्चाराय चक्राय नमो नित्यं नमो नमः। तत्रस्थायै कालिकायै गुह्यायै कामरूपिण्यै। गुरुकुलादिशक्तिभ्यः कालिकायै नमो नमः। नमो नमो नमस्तेऽस्तु परापराभ्यो नमो नमः। विशालनेत्रां सुरसङ्घवन्दितां सुरासुराभ्यर्च्चितपादपद्माम्। नृमुण्डमालाकलिताशताङ्गैः परावरे ते प्रभवन्ति सिद्धाः॥ स्थूलेति केचित् प्रवदन्ति सिद्धाः सूक्ष्मेति केचिन्मुनयो वदन्ति। तामम्बिकां नौमि विशालनेत्रसुमङ्गलं धेहि मदीयदेहे॥ त्वदीयपादाम्बुजमेवमेतत् निषेव्य सिद्धाः प्रभवं प्रयान्ति। मातस्तवार्य्यं पापात् सर्वशोकदुःखाज्जगज्जनरम्ये। ये त्वा ध्यायेयुर्मनसि विधानाः सर्वे ते सकलफलाः॥

इति विश्वसारतन्त्रे गुह्यकाल्याः क्रमस्तवो नाम षष्ठपटले॥

अथ त्रिपुरासुन्दर्य्याः क्रमस्तवः सप्तमपटले॥ क्रमस्तवं प्रवक्ष्यामि शृणुष्व कमलानने!। ॐगुरुभ्यो नमो नित्यं परात्परतराय च। परापरेभ्यः परेभ्यश्च नमो नित्यं नमो नमः। गोभ्यो नमो ब्राह्मणेभ्यो ब्रह्मपुत्रेभ्यो वै नमः। मुनिभ्यो मुनिपत्नीभ्यो मुनिपुत्रेभ्यो वै नमः। दिग्भ्यो नमो दिक्पतिभ्यो दिगम्बरेभ्यश्च वै नमः। श्रमणेभ्यो नमो नित्यं रसनाभ्यश्च वै नमः। वेदेभ्यो वेदशास्त्रेभ्यो वेदार्थेभ्यो नमो नमः। भागवतेभ्यो नमो नित्यं श्रीभागवतेभ्यो नमो नमः। श्रीरामभागतेभ्यो नमो नित्यं भागवतेभ्यो नमो नमः। तीर्थेभ्यः पर्वतेभ्यश्च पीठेभ्यः सततं नमः। योगिभ्यो योगिनीभ्यश्च योगादिभ्यश्च वै नमः।

ध्यानेभ्यो मन्त्रवर्णेभ्यो मातृकाभ्यो नमो नमः। आचार्य्येभ्यो नमो नित्यं भैरवेभ्यो नमो नमः। रुद्रेभ्यो रुद्रपत्नीभ्यो गन्धर्वेभ्यो नमो नमः। किन्नरेभ्यः पिशाचेभ्यः कुष्माण्डेभ्यो नमो नमः। अवतारेभ्यो मूर्त्तिभ्य आदित्येभ्यो नमो नमः। नमः संवत्सरेभ्यश्च दिवसेभ्यो नमो नमः। नक्षत्रग्रहयोगेभ्यः करणेभ्यश्च वै नमः। तिथिभ्यः सर्वकालेभ्य ऋतुभ्योऽपि नमो नमः। ककाराद्यैर्महादेव्यै कालिकायै नमो नमः। एकारस्थां महादेवीं सर्वाधारस्वरूपिणीम्। ईकारस्थां महादेवीं रतिं कामाङ्गसुन्दरीम्। लकारस्थमहादेव्यै इन्द्राण्यै सर्वसिद्धये। ह्रकारस्थमहादेव्यै शिवायै सर्वतो नमः। एतैर्वर्णैर्महामाया पातु मां सुन्दरी शुभा। सकारस्था महामाया सावित्री पातु मां सदा। शिवा मां पातु देवेशी हकाराद्या सुरेश्वरी। शिवानी सर्वदा पातु हकारस्था महोदया। वकारस्था महादेवी पातु मां कामदायिनी। लकारस्था महादेवी इन्द्राणी पातु सर्वदा। सर्वाङ्गं पातु मां देवी सर्वाणी सर्वसुन्दरी। एतैर्वर्णैर्महामाया पातु मां सुन्दरी सदा। ककारस्था महामाया ब्रह्माणी पातु मां सदा। हकारस्था शिवा पातु सर्वत्र शिवदूतिका। ककारस्था शिवा पातु हकारस्था सुरेश्वरी। सकारस्था सदा पातु सावित्री शर्मदायिनी। लकारस्था महादेवी लक्ष्मीर्मां सर्वदावतु। भुवनेशी सदा पातु सर्वाङ्गे भवसुन्दरी। अनन्ता सर्वदा पातु अकारस्था सुरेश्वरी। अकाराद्या सदा पातु शिवदूती सुरेश्वरी। सकारस्था सदा पातु कामिनी कामदायिनी। लकारे पातु मां सर्वक्षेत्रे त्रिभुवनेश्वरी। लकारस्था सदा पातु इन्द्राणी सर्वदा मम। मकारस्था सदा पातु सर्वत्र मां सुरेश्वरी। एभिर्वर्णैः स्थिता देवी पातु मां भुवनेश्वरी। शिवानी मां सदा पातु सर्वत्र हरसुन्दरी। चन्द्रवीजस्थिता विद्या सावित्री शम्भु-

रूपिणी। पातु मां सर्व्वतत्त्वेषु देवता भुवनेश्वरी। एतैर्वर्णै-र्महामाया पञ्चविंशतिवर्णिका। भुवनेशी सदा पातु सर्वाङ्गे त्रिपुराम्बिका। सर्व्ववीजेषु सर्वत्र योजयेद्भुवनेश्वरीम्। सर्वाङ्गे मां सदा पातु देवी त्रिभुवनेश्वरी। शिखायां भ्रूयुगे चाक्ष्णोरो-ष्ठयोर्गण्डयोर्नसि। तथा च चिवुके दन्ते जिह्वायां तालुमूलके। हृदये पार्श्वयुगले पृष्ठे नाभौ तथोदरे। नितम्बे च तथोपस्थे गुह्ये च जानुयुग्मके। जानुचक्रे च जङ्घायां कटिके पादके पुनः। सर्वाङ्गे पातु मां देवी श्रीमत्त्रिपुरसुन्दरी। शास्त्रे वादे च संग्रामे राजद्वारे सुरार्च्चने। प्रान्तरे गिरिदुर्गे च शत्रु-मध्ये तथापरे। चौरे व्याघ्रे च सिंहे च विषमादिभयादिषु। अत्यन्तरोगयुक्तेषु पातु मां त्रिपुराम्बिका। सुन्दरी पातु सर्वत्र सुन्दरी परिरक्षतु। इदं त्रिपुरसुन्दर्य्याः क्रमस्तोत्रमुदाहृतम्। यत्र तत्र न वक्तव्यं यदीच्छेदात्मनो हितम्। शठाय भक्तिशून्याय निन्दकाय महेश्वरि!। न्यूनाङ्गे चातिरिक्ताङ्गे दर्शयेन्न कदाचन। शूद्राय न च दद्याच्च स्तवराजं महेश्वरि!। वदेद्वा दर्शयेद्वापि शङ्करेण च भाषितम्। श्लोकं वा स्तवमेकं वा पूजयेद्वा पठन्नपि। ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः। सर्वमाशु तरत्येव स्तव-स्यास्य प्रसादतः। अपुत्रो लभते पुत्रं दरिद्रो लभते धनम्। अरोगी बलवांश्चैव जायते स्पर्शनादपि। किमन्यद्बहुना देवि! यद्यद्वाञ्छितमात्मनः। तत्सर्वं लभते देवि! स्तवस्यास्य प्रसा-दतः॥ इति विश्वसारतन्त्रे त्रिपुरासुन्दरीक्रमस्तवः समाप्तः।

इति श्रीप्राणतोषिण्यां तृतीयेऽर्थकाण्डे प्रातःकृत्यविधि-रूपशाखाकथनं नाम द्वितीयः परिच्छेदः।

जामले॥ स्नानमूलाः क्रियाः सर्वाः श्रुतिस्मृत्युदिता नृणाम्। तस्मात् स्नानं निषेवेत श्रीपुष्ट्यारोग्यवर्द्धनम्। एतद्वचनं मत्स्य-सूक्ते दशमपटलेऽपि॥ स्नानाकरणे दोष उक्तो राघवभट्टेन॥

यतश्चाशुचिवस्त्रमस्नानमनलङ्कारं पुरुषं देवता नाधितिष्ठन्तीति ॥ स्नानभेदमाह रुद्रजामले उत्तरखण्डे एकविंशतिपटले ॥ स्नानन्तु द्विविधं प्रोक्तं मज्जनं गात्रमार्ज्जनम्। मन्त्रजलादिभिः स्नानमुत्तमं परिकीर्त्तितम् ॥ तत्प्रकारं शृणु प्राणवल्लभ ! प्रियकारणम् ॥ विश्वसारतन्त्रे द्वितीयपटले ॥ मान्त्रं भौमं तथाग्नेयं वायव्यं दिव्यमेव च। वारुणं मानसञ्चैव सप्तस्नानं प्रकीर्त्तितम्। एवं स्नात्वा विधानेन शुचिर्भवति नान्यथा ॥ तत्र मान्त्रस्नानादिकं विशेषयति तत्रैव ॥ आपो हिष्ठादिभिर्मान्त्रं भौमं देहप्रमार्ज्जनम्। आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम्। यत्तदातपवर्षेण स्नानं दिव्यमिहोच्यते। वारुणञ्चावगाहः स्यान्मानसं विष्णुचिन्तनम्। तत्र मन्त्रस्नानं द्विविधमान्तरं वाह्यञ्च। तत्र वैष्णवस्नानमान्तरमुक्तम् वशिष्ठसंहितायाम्। अनन्तादित्यसङ्काशं वासुदेवं चतुर्भुजम्। शङ्खचक्रगदापद्ममुकुटं वनमालिनम्। द्वादशार्णाम्बुजगतं ध्यायेन्नारायणं विभुम् ॥ विश्वसारतन्त्रे द्वितीयपटले ॥ खस्थितं पुण्डरीकाक्षं मूर्त्तिमन्तं प्रभुं स्मरन्। तत्पादोदकजां धारां निपतन्तीं स्वमूर्द्धनि। चिन्तयेद्ब्रह्मरन्ध्रेण प्रविशन्तं स्वकां तनुम्। तया संक्षालयेत् सर्वमेतद्देहगतं मलम्। तत्क्षणाद्विरजो मन्त्री जायते स्फटिकोपमः। इदं स्नानवरं मान्त्रात् सहस्रमधिकं स्मृतमिति ॥ इति वैष्णवान्तरस्नानम् ॥ शाक्तमभ्यन्तरस्नानमुक्तं श्रीपञ्चमीमते ॥ स्नानप्रकारो द्विविधो वाह्याभ्यन्तरभेदतः। आन्तरं स्नानमत्यन्तं रहस्यमपि सादरात्। कथयामि भवध्वस्त्यै चतुर्वर्गफलाप्तये। संविन्नयमनुस्मृत्य चरणत्रयमध्यतः। स्रवन्तं सच्चिदानन्दप्रवाहं भावगोचरम्। विमुक्तिसाधनं पुंसां स्मरणादेव योगिनाम्। तेन प्लावितमात्मानं भावयेद्भवशान्तये ॥ इति शाक्ते आन्तरस्नानम्। शैवा न्तरस्नानं शैवागमे उक्तम्। मनसा मूलमन्त्रेण प्राणायामपुरः-

सरम्। कुर्वीत मानसस्नानं सर्वत्र विहितञ्च यत्॥ गन्धर्वतन्त्रे षष्ठपटले॥ स्नानञ्च त्रिविधं प्रोक्तं सन्ध्या च त्रिविधा स्मृता। आन्तरञ्च भवेद्देवि! वाह्यं मानसमेव च। मानसं वै भवेत् स्नानं यः सदा शुद्धमानसः। स्पर्शलेपादिके वापि निर्विकल्पः सदैव हि। वाह्यमन्त्रैश्च सम्प्रोक्तमान्तरं शृणु साम्प्रतम्। प्रागुक्तक्रमयोगेन प्राणायामपरो बुधः। शक्तिं परशिवेनैव सङ्गमय्य विधानतः। तदुद्भवामृते शश्वन्निमज्ज्य पुनरेवह्वोति॥ अथ नित्यस्नानफलम् मत्स्यसूक्ते दशमपटले॥ याम्यं हि यातनादुःखं नित्यस्नायी न पश्यति। नित्यस्नानेन पूज्यन्ते येऽपि पापकृतो जनाः। अगम्यागमनात् पापात् पापिभ्यश्च प्रतिग्रहात्। रहस्याचरितात् पापान्मुच्यते स्नानमाचरन्॥ अथ वाह्यस्नानम्॥ रुद्रजामले पूर्वखण्डे द्वितीयपटले॥ नदी-सरस्तडागेषु कूपवापीषु वा पुनः। प्रातर्मध्याह्नसायाह्ने नरः स्नायाद् यथाविधि॥ विश्वसारतन्त्रे द्वितीयपटले॥ विधिना स्नानमुद्दिश्य कुर्य्यात् पूर्वाह्निकीं क्रियाम्। नदीं वा देवखातं वा दीर्घिकां सागरं तथा॥ एतान् प्राप्य स्नानमुद्दिश्य पौर्वा-ह्निकीं क्रियां कुर्य्यादित्यन्वयः। नद्यादीनामुद्धृतजलापेक्षया स्थानस्थजलस्य प्राशस्त्यमुक्तम् तत्रैव॥ गङ्गाद्याः सरितः सर्वाः शस्यन्ते स्थानतो बुधैः। काश्यादिसर्वतीर्थानि भारते यानि सन्ति वै। तानि स्थाने प्रशस्यन्ते सर्वपापहराणि वै॥ इति वक्ष्य-माणवचने योजनपर्य्यन्तदेशस्य गङ्गात्वात् कैमुतिकन्यायसिद्धं गङ्गाजलस्योद्धृतस्यापि प्राशस्त्यमिति। एवञ्च गङ्गाद्या इत्यत्र तद्गुणसंविज्ञानबहुव्रीहिणा गङ्गाभिन्ना इति ज्ञेयम्॥ नीलतन्त्रे द्वितीयपटले॥ मृत्कुशानपि संगृह्य गत्वा जलान्तिकं ततः। मलापकर्षणं स्नात्वा मन्त्रस्नानं समाचरेत्॥ शाक्ते कुशान् विशेषयति श्यामारहस्यधृतम्॥ तर्ज्जन्या रजतं धार्य्यं स्वर्णं

धार्य्यमनामया। एष एव कुशः शाक्ते न दर्भो वनसम्भवः॥ इति शाक्तकुशः। महानिर्वाणतन्त्रे पञ्चमोल्लासे॥ आदावप उपस्पृश्य प्रविशेत् सलिले ततः। नाभिमात्रजले स्थित्वा मलानामपनुत्तये। सकृत् स्नात्वा तथोन्मज्ज्य मन्त्रस्नानमथाचरेत्॥ एतेन मलापकर्षणं विना सङ्कल्पपूर्वकस्नानमात्रमनुशासनविरुद्धम्। केचित्तु प्रागुक्तविश्वसारवचने पौर्वाह्णिकक्रियानन्तरस्नानदर्शनादन्ततत्क्रियास्तैलाभ्यक्ता अपि स्नानात् पूर्वं पौर्वाह्णिककृत्यमाचरन्ति। तन्न मनोरमम्। प्रागुक्तजामलवचनेन क्रियामात्रस्य स्नानमूलकत्वादत एव राघवभट्टेन मन्त्रस्नानं कृत्वा देवगृहमागत्य सम्मार्ज्जनादीत्याद्युक्तम्॥ नीलतन्त्रे॥ विद्यया त्रिर्निमज्जैवमाचरेत् पाथसा तथा। पुनर्निमज्ज्य पयसि सङ्कल्पञ्च समापयेत्। इष्टदेव्याः पूजनार्थं कुर्य्यात् स्नानं जलाशये॥ मन्त्रतन्त्रप्रकाशे॥ अरुणेऽनुदिते मन्त्री तीर्थे वा विमले जले। वैदिकं स्नानमाचर्य्य तान्त्रिकं स्नानमाचरेत्। इति वैदिकस्नानानन्तरं तान्त्रिकस्नानम्॥ गन्धर्वतन्त्रे प्रथमपटले॥ प्रणवं पूर्वमुद्धृत्य तदिति परतस्ततः। सदिति तु समाभाष्य कर्म कुर्य्याद्विचक्षणः। स्मरणात् कर्मणामाद्ये ब्रह्मभूयाय कल्पते। इति तत्सदिति निर्देशफलम्। तोड़लतन्त्रे द्वितीयपटले॥ अद्येत्यादि समुच्चार्य्य सौरमासं समुच्चरेत्। देवताप्रीतये पश्चात् स्नायाच्च शुद्धवारिणा॥ कुलचूड़ामणौ॥ कृष्णरक्तहरिन्नीला विविधा मम मूर्त्तयः। तत्र यः कुलगः शिष्यः स तद्रूपं परामृषन्। दिवं सर्वामधोर्वीञ्च पातालं भूतसम्भवम्। आचान्तः कुलदर्भेण सदर्भकुलपुण्ड्रकः। कुलपात्रं सदूर्वञ्च सतिलं सजलं ततः। गृहीत्वा कुलदेवस्य प्रीतये स्नानमाचरेत्। कृतसङ्कल्प एवादौ कुलचक्रं जले न्यसेत्॥ कुलपात्रं ताम्रपात्रम्। कुलचक्रं त्रिकोणकमिति सङ्कल्पविधिः॥ मत्स्यसूक्ते॥ नित्ये

नैमित्तिके काम्ये पितृदैवतकर्म्मणि । सङ्कल्पपूर्व्वकं कर्म्म अन्यथा न फलं स्मृतम् ॥ इति सङ्कल्पाकरणे दोषः ॥ सङ्कल्पार्थं निषिद्धविहितपात्रमपि तत्रैव ॥ शुक्तिशङ्खाश्महस्तैश्च कांस्य-रौप्यादिभिस्तथा । सङ्कल्पो नैव कर्त्तव्यो मृण्मयैश्च कदाचन ॥ इति सङ्कल्पे निषिद्धपात्रम् ॥ गृहीत्वौडुम्बरं पात्रं सौवर्णञ्च विशेषतः । सङ्कल्पन्तु बुधः कुर्य्यान्मेध्यपत्रपुटेन वा ॥ इति सङ्कल्पे विहितपात्रं तत्रैव ॥ स्नानकाले तु हस्तेन ताम्रपात्रेण वा ततः । पैतृके श्राद्धपात्रेण दैवे शङ्खः प्रशस्यते ॥ इति कर्म्म-विशेषे पात्रविशेषः ॥ मज्जनप्रकारमाह तत्रैव ॥ स्रोतसोऽभि-मुखो मज्जेत् सूर्य्याभिमुखतोऽथ वा । स्मरेन्नारायणं गङ्गामिष्ट-देवं ततः परम् । मज्जनं मुक्तकेशेन बध्नीयाच्च शिखां पुनः । ततः कृताञ्जलिर्भूत्वा तीर्थान्यावाहयेत्ततः । ॐ गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्म्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु । ब्रह्माण्डे देवतीर्थानि करैः स्पृष्टानि ते रवेः । तेन सत्येन मे देव! तीर्थं देहि दिवाकर! । प्रियव्रतानि तीर्थानि सूर्य्यरश्मिस्थितानि च । आगत्यार्घ्यं गृहीत्वा च सर्व्वसिद्धिं प्रयच्छ मे । चतुरस्रं विनिर्म्माय तत्र स्नानं दिशेत् सुधीः ॥ राघवभट्टधृतम् । आवाहयामि त्वां देवि! स्नानार्थमिह सुन्दरि! । एहि गङ्गे! नमस्तुभ्यं सर्व्वतीर्थसमन्विता । इति मन्त्रैरङ्कुश-मुद्रया आदित्यमण्डलात्तीर्थमावाह्य वमित्यम्भसि संयोज्य सोम-सूर्य्याग्निमण्डलानि तत्र सञ्चिन्त्य वमित्यमृतवीजेन द्वादशधा अभिमन्त्र्य कवचेनावगुण्ठ्य अस्त्रेण संरक्ष्य मूलमन्त्रेणैकादशधा अभिमन्त्रयेत् । तत्प्रमाणं वशिष्ठसंहितायाम् ॥ हृन्मन्त्रोऽङ्कुश-मुद्राभ्यां तीर्थमाकृष्य मण्डलात् । आवाह्याम्भसि संयोज्य सोम-सूर्य्याग्निमण्डलम् । सञ्चिन्त्य मन्त्री तन्मध्ये निमज्जेत् सुसमा-हितः । मूलमन्त्रं समावर्त्त्य मनसोल्लिख्य मृचाकृति ॥ ज्ञानार्णवे ॥

विन्यस्याङ्गे षड़ङ्गानि प्राणायामपुरःसरम्। श्रीसूर्य्यमण्डला-त्तीर्थमाकृष्याङ्कुशमुद्रया। वमित्यनेन चाप्लाव्य कवचेनावगुण्ठ-येत्। संरक्ष्यास्त्रेण मूलेन मन्त्रयेत् रुद्रसंख्यया। निमज्ज्य तस्मिन् श्रीदेवं ध्यायेच्छक्त्या जपेन्मनुम्। मत्स्यसूक्तेऽपि। रुद्र-संख्यं जपेन्मन्त्रमाच्छाद्य मीनमुद्रया। सूर्य्यायाभिमुखं तोयं निक्षिप्य रविसंख्यया। रविसंख्यया द्वादशसंख्याया। मूलमन्त्रं समुच्चार्य्य चालयेच्च करद्वयम्। चरणान्निःसृते तोये त्रिर्निमज्ज्य जपेन्मनुम्। अथ मृदालम्भनं विश्वसारतन्त्रे॥ मृदोदकञ्च गङ्गायां स्वच्चयित्वा विधानतः। स्नानं कुर्वीत विधिना महा कालवचो यथा॥ मृत्तिकालम्भनप्रकारस्तु मन्त्रतन्त्रप्रकाशे॥ मूलेनानीय मृत्स्नान्तु त्रिभागं तत्र कारयेत्। भागमेकं जलेनैव क्षिपेन्मन्त्रं समुच्चरन्। एवं मूर्द्धादिनाभ्यन्तं तथैव परिलेपयेत्। तथैव भागान्तरेण परिलेपयेदधोभागमिति शेषः॥ लेपनप्रकारो मत्स्यसूक्ते॥ नासाभाले च गण्डे च चिवुके पार्श्वयोः पदे। पृष्ठे नाभ्यूरुजङ्घासु निरग्नेर्मृत्तिकाविधिः॥ क्षेपणमन्त्रस्तु तत्रैव॥ इदं विष्णुरिति मन्त्रस्य मेधातिथिर्ऋषिर्गायत्रीच्छन्दो विष्णु-र्देवता तोये मृत्तिकालम्भने विनियोगः। ॐ इदं विष्णुर्विच-क्रमे त्रेधा निदधे पदं समूढ़मस्य पांशुले॥ गात्रलेपनमन्त्रस्तु विश्वसारे॥ ओं अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे!। मृत्तिके! हर मे पापं यन्मया दुष्कृतं कृतम्। ओं उद्धृतासि वराहेण कृष्णेन शतबाहुना। नमस्ते सर्वदेवानां प्रभवारणि! सुव्रते!। ततः। ओं आधारं सर्वरूपस्य विष्णुरतुलतेजसः। तद्रू-पाश्च ततो जाता अग्रे ताः प्रणमाम्यहम्। इत्युपदिश्याम्भसि च त्रिर्निमज्जेत् ततो बुधः॥ वशिष्ठसंहितायाम्॥ उत्थायाचम्य तत्पश्चात् षड़ङ्गन्याससंयुतः। आत्मानं मूलमन्त्रेण मुद्रया कल-साख्यया। सप्तकृत्वोऽभिषिच्याथ मूलेनामन्त्रितैर्जलैः॥ कलस-

मुद्रा यथा ज्ञानार्णवे॥ वामहस्ते कृता मुष्टिर्दचहस्तस्य पार्वति!। कलसाख्या भवेन्मुद्रा सर्वपापहरा शुभा॥ वशिष्ठसंहितायाम्॥ उन्मज्ज्य कुम्भमुद्रान्तु बद्ध्वा स्नायाद्दषट् ततः। शालग्रामशिला- तोयं तुलसीगन्धमिश्रितम्। कृत्वा शङ्खं भ्रामयन् त्रिः प्रक्षि- पेन्निजमूर्द्धनि। ततः संक्षेपतो विप्रान् मनुष्यान् तर्पयेत् पितॄन्। पीड़यित्वा स्वकं चोरु प्रक्षाल्याचम्य यत्नतः॥ इति संक्षेपतर्प- णम्॥ परखाते तु विशेषोऽस्ति विश्वसारे द्वितीयपटले॥ पर- खाते तु कर्त्तव्यः पञ्चपिण्डोद्धरः सदा। उत्तिष्ठोत्तिष्ठ पङ्क! त्वं त्यज पुण्यं परस्य च। पापानि विनाशय मे शान्तिं देहि सदा मम॥ इति परखातेतिकर्त्तव्यता॥ अथ शयनादौ तैलस्नान- निषेधः॥ योगिनीतन्त्रे उत्तरखण्डे नवमपटले॥ अयने विषुवे चैव भौमवारे दिनक्षये। द्वादश्यां राहुग्रस्ते च तैलस्नानं न कारयेत्॥ अथ गात्रमार्ज्जनं तत्रैव॥ वस्त्रेण मार्जयेद्देवि! कार्पा- सेनाथ वाल्कलैः। रक्तवस्त्रैर्भवेत् कुष्ठी पाण्डरैर्व्याधिमाप्नुयात्। न कुर्य्यात् कुसुमैश्चैव कृत्वा नाशमवाप्नुयात्। पटैश्चक्षुः समा- प्नोति नीलैरन्नक्षयं व्रजेत्। मध्याह्नस्नाने तु गात्रमार्जननिषेधो मत्स्यसूक्ते दशमपटले॥ मध्याह्नस्नानं देवेशि! वस्त्रेण वाथ पाणिना। न च प्रमार्जयेद्गात्रं प्रातर्भोग्यं न दुष्यति। प्रेतस्नाने च तीर्थे च गङ्गायां सार्वकालिकम्। न तूलिकस्य वीजेन गात्रं नैव प्रमार्जयेत्। एषु गात्रं नैव मार्जयेत्। अधिकदोषदर्शनार्थं न तूलिकस्य वीजेनेत्युक्तम्। मध्याह्ने गात्रमार्जननिषेधकारणमपि तत्रैव॥ देवाः पिबन्ति शिरसो मुखस्य पितरस्तथा। उरसः पितृगन्धर्वा अधरे सर्वजन्तवः। तस्मान्न मार्जयेद् गात्रं मध्याह्ने तु विशेषतः। पुरश्चरणरसोल्लासे॥ गङ्गास्नानं विना देवि! पूजयेद् यस्तु कालिकाम्। दशविद्या महेशानि! पूजयेद् यस्तु भक्तितः। सर्वं तस्य वृथा देवि! गङ्गास्नानं विना प्रिये!।

गङ्गामन्त्रं समुच्चार्य्य चेत्रे नद्यान्तु पार्वति!। स्नापयेद् यस्तु पापात्मा सर्वपापैः प्रमुच्यते। ध्यानञ्चैव तथा मन्त्रं गङ्गायाः शृणु सुन्दरि!। तन्त्रोक्तं ध्यानमन्त्रञ्च प्रशस्तं भारते कलौ॥ अथ ध्यानम्॥ शुद्धस्फटिकसङ्काशां शुक्लाम्बरविभूषिताम्। शुक्लमुक्तावलीमालां हृदयोपरिशोभिताम्। श्वेतमालाधरां देवीं श्वेताभरणभूषिताम्। सदा षोड़शवर्षीयां ब्रह्मादिपरि-षेविताम्। एवं ध्यात्वा जपेद्विद्यां गङ्गायाः शृणु शङ्करि!। प्रणवं पूर्वमुच्चार्य्य मायावीजं समुद्धरेत्। गङ्गायै परमेशानि! ततः परमुदीरयेत्। पूर्ववीजद्वयञ्चोक्त्वा वह्निजायां समुद्धरेत्। एषा नवाक्षरी विद्या सुषुम्नामार्गसंस्थिता॥ १॥ अपरैकं प्रवक्ष्यामि मन्त्रं परमगोपनम्। प्रणवं पूर्वमुद्धृत्य गङ्गायै तद-नन्तरम्। पुनः प्रणवमुद्धृत्य मन्त्रमेतदुदीरयेत्॥ २॥ अपरैकं प्रवक्ष्यामि सुषुम्नामार्गसंस्थितम्। मायावीजं समुद्धृत्य पुनः प्रणवमुद्धरेत्। ततो गङ्गापदं देवि! चतुर्थ्यन्तं कुरु प्रिये!। पूर्ववीजद्वयं प्रोक्त्वा मन्त्रमेतं जपं कुरु। एषा सप्ताक्षरी विद्या सदा मे शिरसि स्थिता॥ ३॥ अपरैकं प्रवक्ष्यामि मन्त्रं परम-दुर्लभम्। मायावीजं समुद्धृत्य गङ्गायै तदनन्तरम्। पुनर्मायां समुद्धृत्य मन्त्रमेतदुदीरयेत्॥ ४॥ अनेन ध्यानमार्गेण मन्त्र-मार्गेण पार्वति!। पूजयेत् सततं गङ्गां तस्य सिद्धिरदूरतः। दिने दिने च जप्त्वा वैं गङ्गास्नानफलं लभेत्। तथा। तस्मादादौ जपेद्विद्यां गङ्गायाः सुरपूजिते!। गङ्गापि स्वयमायाति पूतार्थं साधकस्य च॥ इति गङ्गामन्त्रफलम्॥ या गङ्गा महती माया कुण्डली परकुण्डली। सा गङ्गा परमेशानि! ब्रह्माण्डं व्याप्य तिष्ठति। महानदनदीरूपा सर्वं व्याप्य हि तिष्ठति॥ गङ्गा-क्षेत्रमाहात्म्यमपि तत्रैव॥ यत्र क्षेत्रे नदी देवि! आयामे योजनात् प्रिये!। सा गङ्गा चञ्चलापाङ्गि! किञ्चिन्नास्त्यत्र

संशयः। न हि गङ्गासमं पुण्यं मम ज्ञाने हि विद्यते। योगिनीतन्त्रे पूर्वखण्डे अष्टादशपटले॥ माहात्म्यं किमु वक्ष्यामि गङ्गायाश्च सुरेश्वरि!। यन्नामस्मरणादेव पापिनो मुक्तिभागिनः। गङ्गा गङ्गेति यो ब्रूयात् पापिनामपि पातकी। तेषाञ्च पातकं हित्वा तेर्गच्छेद्वैष्णवीं पुरीम्॥ इति गङ्गानाममाहात्म्यम्। यानि कानि च पापानि प्रोक्तानि ते महेश्वरि!। प्रायश्चित्तविहीनानि प्रायश्चित्तपराण्यपि। तानि सर्वाणि नश्यन्ति गङ्गानीराभिषेकतः॥ इति गङ्गाजलमाहात्म्यम्॥ नगरी घर्घराद्यम्बु पतेद्‌गङ्गा प्रवाहयेत्। सर्वं गङ्गा भवत्येव मन्त्रमाहात्म्यतः शिवे!। यत्र देशे वहेद् गङ्गा स देशः पुण्यभाजनः। पुण्यञ्चैव समुद्दिष्टं पवित्रं योजनद्वयम्। तत्र यत् क्रियते कर्म्म गङ्गायां नात्र संशयः। गङ्गायां यत् कृतं देवि! तदक्षयफलं लभेत्। सङ्गमं वा विहीनं वा कथितं शम्भुवल्लभे!। तत्रस्थाः प्राणिनः सर्वे देवलोकविनिःसृताः। भुक्त्वा च विविधान् भोगान् कृत्वा च सुकृतं सदा। अनायासेन यास्यन्ति स्थानं परमदुर्लभम्। इति सगङ्गदेशफलम्॥ यत्र गङ्गा न शोचन्ति देवर्षिगणसंस्तुताः। गङ्गायां त्यजते प्राणान् यस्तु पुण्यप्रभावतः। ज्ञानतो मोक्षमाप्नोति वैकुण्ठं तदभावतः। स्वर्लोकाद्यामहेशानि! गङ्गा पापविवर्जितः॥ इति गङ्गायां प्राणत्यागफलम्॥ गङ्गामुद्दिश्य व्रजतः पथि प्राणान् विमुञ्चति। विष्णुलोकं बहुगुणं पापी चेत्सोऽपि गच्छति॥ इति गङ्गायात्रिकस्य पथि मृत्युफलम्। तत्तीरे यस्त्यजेत् प्राणान् न्यायतोऽन्यायतोऽपि वा। सोऽपि स्वर्गमवाप्नोति सर्वसम्भारसंयुतम्। इति गङ्गातीरमृत्युफलम्। यावदस्थीनि गङ्गायां निक्षिप्यन्ते मृतस्य च। तावदब्दसहस्राणि स्वर्गलोके महीयते। इति गङ्गायां मृतास्थिनिक्षेपफलम्॥ गङ्गाजलसमायोगान् म्रियते यत्र कुत्रचित्। सर्वपापविनिर्मुक्तो

विष्णुलोके महीयते। इत्यन्यत्र गङ्गाजलसमायोगमरणफलम् ॥ गङ्गातीरे चतुर्हस्ते पिण्डं दद्यात् समाहितः। पितॄणां निष्कृतिं कृत्वा विष्णुलोके महीयते॥ इति चतुर्हस्तमध्ये पिण्डदान-फलम्॥ गङ्गायां तर्पणं देवि! पुण्यवान् यः समाचरेत्। महादृप्तिर्भवेत् सत्यं पितॄणाञ्च शताब्दिकी। ऋषीणां देवता-नाञ्च तथैव समुदाहृतम्। इति गङ्गायां तर्पणफलम्॥ दिवा वा यदि वा रात्रौ सन्ध्यायां वा महानिशि। स्नानं दानं तपो होमस्तर्पणं पूजनं शिवे!। सर्वं कुर्य्यात्तु गङ्गायां कालभेदं न चाचरेत्। इति गङ्गायां पर्य्युदस्तकालाभावः। कालभेदं समाचर्य्य यदि कार्य्यं त्यजेत् शिवे!। ततस्तु स्थावरो भूया-दरण्ये तदनन्तरम्। दावाग्निना शिखा तस्य दग्धाशु भस्मनै-कधा। तदन्ते परमेशानि! चाण्डालो नित्यदुःखितः। जायते सप्तजन्मानि तदन्ते रजको भवेत्। जन्मत्रयं महेशानि! तदन्ते शूद्रयोनिषु। दशजन्म महेशानि! ततो वैश्यत्वमाप्नु-यात्। चतुर्जन्मव्यतीते तु क्षत्रियत्वं त्रिजन्मतः। ब्राह्मणत्वं ततः प्राप्य लभेत् पुण्यगतिं नरः। इति गङ्गायां कालाकाल-विचारनिन्दा॥ गङ्गायां हरते यो हि यत्किञ्चित् परमेश्वरि!। तस्य मोहान्धतमसो रौरवान्नास्ति निष्कृतिः। आभूतसंप्लवं देवि! कथितं ते सुरेश्वरि!। इति गङ्गायां किञ्चिद्धरण-दोषः॥ गङ्गातीरे च गङ्गायां प्रतिगृह्णाति यो नरः। श्वपचो जायते नित्यं दशजन्मनि कामिनि!। ततो दारिद्र्यदोषेण परिभ्रमति मेदिनीम्। सप्तजन्म महादेवि! तदन्ते निष्कृतिं लभेत्॥ इति गङ्गादौ प्रतिग्रहणदोषः॥ एवन्ते कथितं तस्य मन्त्रमाहात्म्यमुत्तमम्। कालिकाया महेशानि! गङ्गामाहात्म्य-कारणम्॥ इति योगिनीतन्त्रे गङ्गामाहात्म्यम्॥

ॐ सिद्धयोर्निखिलं विश्वं मुहुः शुक्रं प्रजायते। मातरः

सर्वभूतानामापो देव्यः पुनन्तु माम्। तारवारुणवीजेन पुटितं तत् समुच्चरेत्। अलक्ष्मीं मलरूपां यां सर्वभूतेषु संस्थिताम्। चालयन्ति निजस्पर्शादापो नित्यं पुनन्तु माम्। इति मन्त्राभ्यां राघवभट्टधृताभ्यामात्मानमभिषिच्य। ॐ यन्मे केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि। ललाटे कर्णयोरक्ष्णोरापस्तत्त्वं तु वो नमः। आयुरारोग्यमैश्वर्य्यमरिपक्षक्षयं सुखम्। सन्तोष-क्षान्तिरास्तिक्यं विद्या भवतु वो नमः। इत्यनेन राघवभट्ट-धृतेन जलं नमेत्॥ अथ मानसस्नानम्॥ तत्र प्रथमं बन्ध-मोक्षादौ मनसः कारणत्वं दर्शयति॥ योगिनीतन्त्रे तृतीय-भागे अष्टमपटले॥ मन एव तु वै नित्यं मन एव तु कारणम्। मन एव मनुष्याणां कारणं बन्धमोक्षयोः। तस्य नियन्त्रणा-देव संसारी न भवेत् क्वचित्। वदत्यन्यं करोत्यन्यं यत्तु वाङ्म-नसि स्थितम्। दर्शयति तथा चान्यं वृथा तस्य क्रिया भवेत्। इत्यधिकं मत्स्यसूक्ते षड्विंशतिपटले॥ चिन्तयेद् यः कृतं दुष्टं तीर्थस्नानेन तस्य किम्। शतशोऽपि जलैर्धौतं सुराभाण्डमिवा-शुचिरित्यपि मत्स्यसूक्ते॥ योगिनीतन्त्रे॥ तन्नेष्टं तत्परं जातं तन्मुख्यं दुःखकारणम्। चित्तमन्तर्गतं दुष्टं तीर्थस्नाने निषि-ध्यते। सर्वदापि जलैर्धौतं सुराभाण्डमिवाशुचिः। यदि वसति गुहायां पर्वताग्रे चिरं वा यदि वसति त्रिखण्डं तस्य पिण्डं पटं वा। यदि पठति पुराणं वेदसिद्धान्ततत्त्वं यदि हृदयम-शुद्धं सर्वमेतद्विरुद्धम्। न तीर्थानि न दानानि न व्रतानि न चाश्रमाः। दुष्टाशयं दुष्टमतिं पावयन्ति कदाचन। इति दुष्टमनसो दोषकथनम्॥ तथैव॥ इतिं चेतो वशीकृत्य यत्र तत्र वसेन्नरः। तत्र तस्य कुरुक्षेत्रं प्रयागं पुष्करं गया॥ इति शुद्धचेतसः फलकथनम्। ज्ञानसङ्कुल्याम्॥ इदं तीर्थमिदं तीर्थं भ्रमन्ति तामसा जनाः। आत्मतीर्थं न जानन्ति कथं मुक्ता

वरानने !॥ रुद्रजामले उत्तरखण्डे एकविंशतिपटले॥ स्नानमात्रेण मुक्तः स्यात् पापशैलादनन्तगः। स्नायाच्च विमले तीर्थे हृदयाम्भोजपुष्करे। विन्दुतीर्थेऽथवा स्नायात् सर्वजन्माघमुक्तये। इड़ासुषुम्ने शिवतीर्थकेऽस्मिन् ज्ञानाम्बुपूर्णे वहतः शरीरे। ब्रह्माम्बुभिः स्नाति तयोः सदा यः किं तस्य गाङ्गैरपि पुष्करैर्वा॥ एतद्वचनद्वयं कल्पसूत्रटीकायामुदयाकरपद्धत्यामिति कृत्वा लिखितम्॥ स्नानसङ्कुल्याम्॥ इड़ा भागीरथी गङ्गा पिङ्गला यमुना नदी। तयोर्मध्यगता नाड़ी सुषुम्नाख्या सरस्वती। त्रिवेणीसङ्गमो यत्र तीर्थराजः स उच्यते। तत्र स्नानं प्रकुर्वीत सर्वपापैः प्रमुच्यते॥ इति मानसप्रयोगः॥ रुद्रजामले॥ इड़ा मलस्थाननिवासिनी या सूर्य्यात्मिका या यमुना प्रवाहिका। तथा सुषुम्ना मलदेशगामिनी सरस्वती रचति मज्जनात्मकम्। मनोगतस्नानपरो मनुष्यो मन्त्रक्रियायोगविशिष्टतत्त्ववित्। महोस्थतीर्थे विमले जले मुदा मूलाम्बुजे स्नाति सुमुक्तिभाग् भवेत्। सर्वाणि तीर्थे सुरतीर्थपावनी गङ्गा महासत्त्वविनिर्गता सती। करोति पापक्षयमेव मुक्तिं ददाति साक्षादमलार्थपुण्यदा। इति मूलाधारस्थतीर्थम्॥ स्वर्गस्थं यावता तीर्थं स्वाधिष्ठाने सुपङ्कजे॥ मनो निधाय योगीन्द्रः स्नाति गङ्गाजले यथा। इति स्वाधिष्ठानस्थतीर्थम्। मणिपूरे देवतीर्थं पञ्चकुण्डं सरोवरम्। तत्र श्रीकामनातीर्थं स्नाति यो मुक्तिमिच्छति। इति मणिपूरतीर्थम्॥ अनाहते सर्वतीर्थं सूर्य्यमण्डलमध्यगम्। विभाव्य सर्वतीर्थानि स्नाति यो मुक्तिमिच्छति। इत्यनाहततीर्थम्॥ विशुद्धाख्ये महापद्मे अष्टतीर्थसमुद्भवः। कैवल्यमुक्तिदं ध्यात्वा स्नाति वीरो विमुक्तये। इति विशुद्धस्थतीर्थम्। मानसं विन्दुतीर्थञ्च कालीकुण्डं कलाधरम्। आज्ञाचक्रे सदा ध्यात्वा स्नाति निर्वाणसिद्धये। इत्याज्ञास्थतीर्थम्॥ एतत्

कुलप्रियस्नानं कुर्व्वन्ति योगिनो मुदा। अतो वीराः सत्त्वयुक्ताः सर्व्वसिद्धियुताः सुराः। नानापापं सदा कृत्वा ब्रह्महत्याविनिर्गतम्। कृत्वा स्नानं महातीर्थे सिद्धाः स्युरणिमादिगाः। स्नानमात्रेण निष्पापोऽशक्तः स्याद्वायुसंग्रहे। तीर्थानां दर्शनादेषां मुक्तो योगी भवेद् ध्रुवम्॥ इति मानसस्नानफलम्॥ मत्स्यसूक्ते दशमपटले। जलादुत्थाय कर्त्तव्यं जले चैवोपविश्य यत्। अनयोर्विपरीतेन यत्करोति न तत्कृतम्। यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा। न कुर्य्यादाह्निकं कर्म जले चापि स्थलेषु च। इति जले शुष्कवाससा स्थले चार्द्रवाससा कर्म्मनिषेधः॥ गीतमीये॥ पीड़यित्वाम्बरं चोरु प्रक्षाल्याचम्य वाग्यतः। धारयेद्वाससी शुद्धे परिधानोत्तरीयके। अच्छिन्ने सदशे शुक्ले आचामेत् पीठसंस्थितः॥ मत्स्यसूक्ते॥ उत्तीर्य्य वाससी धौते परिधाय विचक्षणः। न रक्तं मलिनञ्चैव न नीलञ्च प्रशस्यते। अष्टौ सप्त तथा षष्ठ चतुर्हस्तान्यनुक्रमात्। ब्राह्मणादिक्रमेणैव पिधानाम्बरमीरितम्। इति परिधेयवस्त्रपरिमाणम्॥ मात्स्ये॥ श्वेतं रक्तं तथा पीतं कृष्णञ्चेत्यनुपूर्व्वशः। अनुपूर्व्वश इति ब्राह्मणाद्यनुक्रमेण। वस्त्रमन्यधृतञ्चैव सदैव परिवर्जयेत्। वस्त्रमूलं समुद्धृत्य पृष्ठवंशे षड़ङ्गुलम्। दशायां त्र्यङ्गुलं त्यक्त्वा नाभिमात्रे विनिर्दिशेत्। दशाहीनं न कर्त्तव्यं परिवर्त्तं न कारयेत्। इति वस्त्रपरिधानप्रकारः॥ अथ कर्म्मविशेषे वस्त्रविशेषः॥ उदयभानुनाथकृतकृष्णार्च्चनचन्द्रिकायाम्॥ श्यामारहस्यधृतस्वतन्त्रतन्त्रे॥ मोक्षार्थी रक्तवस्त्रे द्वे भोगार्थी श्वेतवाससी। मारणे कृष्णवासस्तु वश्ये रक्तं सदा गृही। एवञ्च पूर्व्वोक्तमत्स्यसूक्तवचने यद्रक्तवस्त्रस्याप्रशस्तत्वमुक्तं तन्मोक्षादिविशेषकर्म्मातिरिक्तकर्म्मपरं सामान्यविशेषन्यायात्। अतएव अन्नदाकल्पोक्तवक्ष्यमाणवचने

रक्तवस्त्रपरिधानं वच्यते। उच्चाटे व्याघ्रचर्म्माणि वृक्षत्वक् स्तम्भ-कर्म्मणि। परिधाय ततो मन्त्री यागभूमिमथाविशेत्। मत्स्य-सूक्ते॥ न चैवं धुनयेद्वस्त्रं न केशान् धुनयेत् क्वचित्॥ नीलो-रक्तेन वस्त्रेण यत्कर्म्म कुरुते द्विजः। स्नानं दानं जपं होमं तत्सर्वं विफलं भवेत्॥ इति नीलादिवस्त्रेण कर्म्मकरणनिषेधः॥ कलौ कार्पासवस्त्रञ्च पट्टं चौमं प्रशस्यते। नित्यं कार्पाचतं कुर्य्यादशुद्धं शुद्धतानियात्। केन जलेनापचितं प्रचालितमि-त्यर्थः। इति कलौ कार्पासादिवस्त्रप्रशंसा॥ सूचीविद्धेन वस्त्रेण आखुदष्टेन वा द्विजः। कटिशून्येन देवेशि! सर्वं स्नानफलं हरेत्॥ इति सूचीविद्धादिवस्त्रनिषेधः। वस्त्रान्तरेण यद्वस्त्रं क्रमिजं वा प्रदृश्यते। न देयं दैवे पैत्रे च कोष्ठजञ्च प्रशस्यते॥ इति विजातीयवस्त्रनिषेधः। क्रमिजेन तु वस्त्रेण यः स्नानं कुरुते नरः। सर्वकालकृतं पुण्यं स्नानमात्रेण नश्यति॥ इति क्रमिजवस्त्रेण स्नाननिषेधः। एतदेव श्वेतजातञ्चेज्जाते न दुष्यति। श्वेतक्रमेश्च सम्भूतं प्रशस्तं दैवपैत्रयोः॥ इति क्रमिज-श्वेतवस्त्रप्रशंसा॥ अथोत्तरीयम्॥ मत्स्यसूक्ते॥ शतद्वयेन सूत्रेण उत्तोरयस्य मानकम्॥ तदर्द्धेनाथ वा कार्य्यमभावे सर्वतः स्वयम्। योगपट्टादीनां पूजादावुपयोगात्तल्लक्षणं वीरमित्रोदय-धृतसिद्धान्तशेखरे॥ त्रिविधं योगपट्टकमाद्यं व्याघ्राजिनोद्भ-वम्। द्वितीयं मृगचर्म्माढ्यं तृतीयं तन्तुनिर्म्मितम्। चतुर्म्मात्र-प्रविस्तारं दैर्घ्येण यज्ञसूत्रवत्। चतुर्मात्रं चतुरङ्गुलमात्रम्॥ यज्ञोपवीतमार्जनस्य स्नानात् परतः कर्त्तव्यत्वं तदत्र लिख्यते॥ गायत्रीतन्त्रे चतुर्थब्राह्मणपटले॥ सम्मार्ज्य दधिदुग्धेन घृतेन बहुयत्नतः। घृताद्यभावे चार्वङ्गि! मार्जयेत्तण्डुलपिष्टकैः। तद-भावे सार्षपेण तिलतैलं परित्यजेत्। विल्वस्य फलनिर्यासैर्मा-र्जयेत् द्विजसत्तमः। शुद्धसत्त्वात्मकं सूत्रं तदा भवति प्रत्यहम्।

इति यज्ञोपवीतमार्जनद्रव्याणि॥ यज्ञोपवीतमार्जनप्रकारस्तु तत्रैव॥ वामस्कन्धात् समुत्तार्य्य वामाङ्गुष्ठे नियोजयेत्। वामाङ्गुष्ठं वामस्कन्धमेवमेव न चान्यथा। वामाङ्गुष्ठयुतं सूत्रं कृत्वा सम्मार्जयेद् द्विजः॥ इति यज्ञोपवीतमार्जनप्रकारः। कण्ठादौ यज्ञोपवीतकरणदोषस्तु तत्रैव॥ कण्ठे शिरसि दक्षकरे कृत्वा शूद्रत्वमर्हति। गायत्र्या अयुतं जप्त्वा तस्मात् पापात् प्रमुच्यते। तथा। वर्णविप्रे तथा भट्टे मार्जनं न हितं सदा। धारणं यज्ञसूत्रस्य जातिभेदे पृथक् पृथक्। रक्तचन्दनतोयेन मार्जयेत् क्षत्रजातयः। हारिद्रैर्मार्जयेद्वैश्य इति शास्त्रस्य निर्णयः॥

अथ तिलकं मत्स्यसूक्ते दशमपटले॥ अथोपविश्य पूर्व्वाशामुखो भूत्वा सुसंयुतः। प्रकुर्य्यात्तिलकं मन्त्री उत्तराशामुखेन वा। गोपीचन्दनकेनाथ रोचनाकुङ्कुमेन वा। मृत्तिकया मलयजेन तुलसीविल्वजेन वा॥ योगिनीतन्त्रे तृतीयभागे नवमपटले॥ मलयजेन गन्धेन गोपीचन्दनकेन वा। विल्वकाष्ठोद्भवेनाथ तुलसीकाष्ठकेन वा। पद्मकेन तमालेन तथा रोचनयाथवा। पिधाय तिलकं श्रेष्ठमेषामेकतमेन वा॥ विल्वकाष्ठोद्भवेनेत्युदासीनपरम्। तत्काष्ठचन्दनं भाले यो धारयति सम्भ्रमादित्यादि योगिनीतन्त्रीयपूर्व्वखण्डे पञ्चमपटलोक्तवचनात्॥ मृदादिफलं मत्स्यसूक्ते॥ मृदा तु मुक्तिमाप्नोति आयुष्यं चन्दनेन तु। कुङ्कुमेन भवेत्काम्यं रोचना वश्यमीरितम्। जलस्था मृत्तिका वर्ज्या तीरस्थं पुण्यदायकम्। तस्मात्तीरोद्भवं ग्राह्यमश्वक्रान्तेति सम्पठन्। नोत्थाय तिलकं कुर्य्यात् सदा स्त्रीसरितो बुधः। शस्तञ्च जाह्नवीतीरोद्भवैर्वा गोपिचन्दनैः॥ इति तिलकस्य मृत्तिकाविधिनिषेधौ। तिलककरणमन्त्रस्तु मत्स्यसूक्ते। केशवानन्त! गोविन्द! वराह! पुरुषोत्तम!। पुण्यं यशस्यमायुष्यं तिलकं मे प्रसीदतु॥ चन्दनधारणमन्त्रोऽपि तत्रैव। कान्तिं

लक्ष्मीं धृतिं सौख्यं सौभाग्यमतुलं मम । ददातु चन्दनं नित्यं सततं धारयाम्यहम् । इत्यनेन च मन्त्रेण प्रदद्यान्मन्त्रवित्तमः ॥ तिलकधारणस्थानानि मत्स्यसूक्ते ॥ ललाटे प्रथमं दद्यान्मूर्द्ध्नि दद्यात्ततो हृदि । कण्ठे च श्रोत्रयोर्बाह्वोर्बाहुमूलद्वयेऽपि च । नाभौ पृष्ठे च सन्दध्यात् पार्श्वयोश्च युगं युगम् । तिलकानि लिखेच्चैव मुच्यते सर्व्वपातकैः । भाले दीपशिखाकारं बाहुभ्यां विल्वपत्रवत् । हृदये कमलाकारं ग्रीवायां चन्द्रमुद्दिशेत् ॥ वैष्णवतिलके तु विशेषः ॥ ललाटे तु गदा कार्य्या मूर्द्ध्नि चापं शरं तथा । नन्दकञ्चैव हृन्मध्ये शङ्खं चक्रं भुजद्वये । शङ्खचक्राङ्कितो विप्रः श्मशाने म्रियते यदि । प्रयागे या गतिः प्रोक्ता सा गतिस्तस्य नारद ! । श्यामाप्रदीपे द्वितीयपरिच्छेदे । यज्ञपार्श्वे मा तिलकी कर्म्म कुर्व्वीतेति । तस्मान्मृदा जलेनापि कर्त्तव्यं तिलकं बुधैः । अन्यथा निष्फलं ज्ञेयं वीजोप्तमिवोषरे यथा । तिलकाकरणनिन्दापि तत्रैव मत्स्यसूक्ते ॥ अकृत्वा तिलकं भाले चण्डालं यस्तु पश्यति । पुनः स्नानन्तु कर्त्तव्यं विण्मूत्रोत्सारणे तथा । जले च घटे च छायायां संवीक्ष्य तिलकं चरेत् । दर्पणे वीक्षयेद्यत्नादमावास्यां विवर्जयेत् ॥ इत्यमावास्यायां तिलकनिषेधः । तथा । तिलके निजदेवास्त्रं विलिखेद्दक्षिणादितः । वीजं वाहृदरोत्सङ्गे भाले वा प्रणवादिकम् । उत्सङ्गे क्रोड़े ॥ राघवभट्टधृतब्रह्माण्डपुराणे ॥ ऊर्द्ध्वपुण्ड्रमृजुं सौम्यं ललाटे यस्य दृश्यते । स चण्डालोऽपि शुद्धात्मा पूज्य एव न संशयः । ऊर्द्ध्वपुण्ड्रं मृदा सौम्येति पद्मपुराणे प्रथमचरणे पाठः । अशुचिर्वाप्यनाचारो मनसा पापमाचरेत् । शुचिरेव भवेन्नित्यमूर्द्ध्वपुण्ड्रान्वितो नरः । मत्प्रियार्थं शुभार्थं वा रक्षार्थं चतुराननन ! । मद्भक्तो धारयेन्नित्यमूर्द्ध्वपुण्ड्रमतन्द्रितः । मत्पूजाहोमकाले च सायं प्रातः समाहितः । मद्भक्तो धारयेन्नित्यमूर्द्ध्व-

पुण्ड्रं भवापहम्। इति भगवद्भक्तिविलासधृतपद्मपुराणे अधिकम्। तद्धृतस्कन्दपुराणे कार्त्तिकप्रसङ्गे॥ ऊर्द्ध्वपुण्ड्रो मृदा शुभ्रो ललाटे यस्य दृश्यते। चण्डालोऽपि विशुद्धात्मा याति ब्रह्म सनातनम्। ऊर्ध्वपुण्ड्रे स्थिता लक्ष्मीः ऊर्द्ध्वपुण्ड्रे स्थितं यशः। ऊर्द्ध्वपुण्ड्रे स्थिता मुक्तिरूर्द्ध्वपुण्ड्रे स्थितो हरिः। उत्तरखण्डे शिवपार्वतीसंवादे॥ ऊर्द्ध्वपुण्ड्रस्य मध्ये तु विशाले सुमनोहरे। लक्ष्म्या सार्द्धं समासीनो देवदेवो जनार्दनः। तस्माद् यस्य शरीरे तु ऊर्द्ध्वपुण्ड्रं धृतं भवेत्। तस्य देहं भगवतो विमलं मन्दिरं स्मृतम्। ऊर्द्ध्वपुण्ड्रधृतो विप्रः सर्वलोकेषु पूजितः। विमानवरमारुह्य याति विष्णोः परं पदम्। ऊर्द्ध्वपुण्ड्रधरं विप्रं दृष्ट्वा पापैः प्रमुच्यते। नामस्मृत्या तथा भक्त्या सर्वदानफलं लभेत्। ऊर्द्ध्वपुण्ड्रधरं विप्रं यः श्राद्धे भोजयिष्यति। आकल्पकोटिपितरस्तस्य तृप्ता न संशयः। ऊर्द्ध्वपुण्ड्रधरो यस्तु कुर्य्यात् श्राद्धं शुभानने!। कल्पकोटिसहस्राणि वैकुण्ठे वासमाप्नुयात्। यज्ञदानतपश्चर्य्याजपहोमादिकञ्चरेत्। ऊर्द्ध्वपुण्ड्रधरः कुर्य्यात्तस्य पुण्यमनन्तकम्॥ ब्रह्माण्डपुराणे विष्णुवाक्यम्॥ ऊर्द्ध्वपुण्ड्रधरो मर्त्यो म्रियते यत्र कुत्रचित्। श्वपाकोऽपि विमानस्थो मम लोके महीयते। ऊर्द्ध्वपुण्ड्रधरो मर्त्यो गृहे यस्यान्नमश्नुते। तदा विंशत्कुलं तस्य नरकादुद्धराम्यहम्॥ इत्यूर्द्ध्वपुण्ड्रमाहात्म्यम्॥ पद्मपुराणे नारदोक्तौ॥ यज्ञो दानं तपो होमः स्वाध्यायः पितृतर्पणम्। व्यर्थं भवति तत् सर्वमूर्द्ध्वपुण्ड्रं विना कृतम्॥ उत्तरखण्डे॥ ऊर्द्ध्वपुण्ड्रविहीनस्तु किञ्चित् कर्म करोति यः। इष्टापूर्त्तादिकं सर्वं निष्फलं स्यान्न चान्यथा। ऊर्द्ध्वपुण्ड्रविहीनस्तु सन्ध्याकर्मादिकञ्चरेत्। तत्सर्वं राक्षसं ज्ञेयं नरकञ्चाधिगच्छति। यच्छरीरं मनुष्याणामूर्द्ध्वपुण्ड्रं विना कृतम्। द्रष्टव्यं नैव तत्तावच्चाण्डालसदृशं भवेत्॥

स्कान्दे॥ यस्योर्द्ध्वपुण्ड्रं दृश्येत ललाटे न नरस्य हि। तद्दर्शनं न कर्त्तव्यं दृष्ट्वा सूर्य्यं निरीक्षयेत्॥ इत्यूर्द्ध्वपुण्ड्राकरणे दोषः॥ उत्तरखण्डे॥ ऊर्द्ध्वपुण्ड्रं धरेद्विप्रो मृदा शुभ्रेण वैदिकः। न तिर्य्यग्धारयेद्विद्वानापद्यपि कदाचन। भगवद्भक्तिविलासधृतम्॥ ऊर्द्ध्वपुण्ड्रे त्रिपुण्ड्रं यः कुरुते स नराधमः। भुङ्क्त्वा विष्णुगृहं पुण्यं स याति नरकं ध्रुवम्॥ स्कन्दपुराणे॥ तिर्य्यक् पुण्ड्रं न कुर्वीत सम्प्राप्ते मरणेऽपि च। नैवान्यनाम च ब्रूयात् पुमान्नारायणादृते॥ इत्यूर्द्ध्वपुण्ड्रे त्रिपुण्ड्रकरणनिषेधः॥ शाक्तानन्दतरङ्गिणीधृतम्॥ ऊर्द्ध्वपुण्ड्रं त्रिपुण्ड्रं वा कृत्वा सन्ध्यां समाचरेत्। तदेव व्यवस्थापितम् स्कन्दपुराणे॥ वैष्णवानां ब्राह्मणानामूर्द्ध्वपुण्ड्रं विधीयते। अन्येषान्तु त्रिपुण्ड्रं स्यादिति ब्रह्मविदो विदुः॥ पद्मपुराणे॥ त्रिपुण्ड्रं यस्य विप्रस्य ऊर्द्ध्वपुण्ड्रे न दृश्यते। तं दृष्ट्वाप्यथवा स्पृष्ट्वा सचेलः स्नानमाचरेत्॥ ऊर्द्ध्वपुण्ड्रे न कुर्वीत वैष्णवानां त्रिपुण्ड्रकम्। कृतत्रिपुण्ड्रमर्त्यस्य क्रिया न प्रीतये हरेः॥ अथोर्द्ध्वपुण्ड्रनिर्माणविधिः ब्रह्माण्डपुराणे॥ वीक्ष्य दर्शे जले वापि यो विदध्यात् प्रयत्नतः। ऊर्द्ध्वपुण्ड्रं महाभाग! स याति परमां गतिम्। दशाङ्गुलप्रमाणन्तु उत्तमोत्तममुच्यते। नवाङ्गुलं मध्यमं स्यादष्टाङ्गुलमतः परम्। एतैरङ्गुलिभेदैस्तु कारयेन्न नखैः स्पृशेत्॥ ऊर्द्ध्वपुण्ड्रलक्षणन्तु मत्स्यसूक्ते॥ नासिकाकेशपर्य्यन्तमूर्द्ध्वपुण्ड्रं विधीयते। मध्ये छिद्रन्तु कर्त्तव्यं तच्छिद्रं हरिमन्दिरम्॥ पद्मपुराणे उत्तरखण्डे॥ एकान्तेन महाभागाः सर्वभूतहिते रताः। सान्तरालं प्रकुर्वन्ति पुण्ड्रं हरिपदाकृतिम्। श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं तथा। श्रीकरं पीतमित्याहुः श्वेतं मोक्षप्रदं शुभम्॥ इति कर्मविशेषे वर्णविशेषत्रिपुण्ड्रम्। वर्त्तुलं तिर्य्यगच्छिद्रं ह्रस्वं दीर्घतरं तनुम्॥

वक्रं विरूपं बक्रग्रं भिन्नमूलं पदच्युतम्। अशुभं ह्रस्वमासन्नं तथा नाङ्गुलिकल्पितम्। विगन्धमपसव्यञ्च पुण्ड्रमाहुरनर्थकम्॥ इति निन्दितपुण्ड्रम्॥ नाङ्गुलिकल्पितमिति विहितकाष्ठिकाभिन्नोपलक्षणम्॥ अन्यथा मत्स्यसूक्ते दशमपटलोक्तवचनमनर्थकं स्यात्। तद्वचनन्तु॥ कुशेनैव सुवर्णेन न काष्ठेनायसेन च। न शङ्खेन न ताम्रेण न कांस्येन कदाचन॥ तुलस्या विल्वकाष्ठेन रजतेन समुल्लिखेत्॥ ऊर्द्ध्वपुण्ड्राकारस्तु उत्तरखण्डे॥ अश्वत्थपत्रसङ्काशो वेणुपत्राकृतिस्तथा। पद्मकुड्मलसङ्काशो मोहनं त्रितयं स्मृतम्। आरभ्य नासिकामूलं ललाटान्तं लिखेन्मृदा। ललाटान्तमिति न्यूनत्वव्यवच्छेदकमन्यथा दशाङ्गुलस्योत्तमत्वकीर्त्तनं व्यर्थं स्यात्। दशाङ्गुलपरिमाणन्तु नासिकात्रितीयभागावधि ब्रह्मरन्ध्रपर्य्यन्तमेव। मृदेति विहितद्रव्योपलक्षणम्। मृदमिति पाठे व्यत्ययो बहुलमिति सूत्राद्विभक्तिव्यत्ययेन स एवार्थः॥ नासिकायास्त्रयो भागा नासामूलं प्रचक्षते। समारभ्य भ्रुवोर्मध्यमन्तरालं प्रकल्पयेत्॥ त्रयो भागा इति निर्देशबलात् पूरणप्रत्ययार्थावगतेस्तृतीयो भागो लभ्यते। स च भागो यत्र मस्तकावस्थितो नासिका निर्गता तत्रैव॥ तस्माच्छिद्रान्वितं पुण्ड्रं दण्डाकारं सुशोभनम्। विप्राणां सततं कार्य्यं स्त्रीणाञ्च शुभदर्शने!। नासिकाकेशपर्य्यन्तं ऊर्द्ध्वपुण्ड्रं सुशोभनम्। मध्ये छिद्रसमायुक्तं तद्विद्याद्धरिमन्दिरम्॥ इति हरिमन्दिरलक्षणम्॥ वामभागे स्थितो ब्रह्मा दक्षभागे सदाशिवः। मध्ये विष्णुं विजानीयात् तस्मान्मध्यं न लेपयेत्॥ यजुर्वेदीयस्य हिरण्यकेशीयशाखायाम्॥ हरेः पदाक्रान्तिम् आत्मनो निधाय यन्मध्ये छिद्रमूर्ध्वपुण्ड्रं यो धारयति स परस्य प्रियो भवति स पुण्यवान् भवति स मुक्तिभाग्भवतीति। तिलकरचनायामङ्गुलिनियममाह भगवद्भक्तिविलासधृता स्मृतिः॥ अनामिका

कामदोक्ता मध्यमायुष्करी भवेत्। अङ्गुष्ठः पुष्टिदः प्रोक्त-स्तर्जनी मोक्षसाधनी॥ ऊर्द्ध्वपुण्ड्रस्य मृत्तिका तु पद्मपुराणे॥ पर्वताग्रे नदीतीरे विल्वमूले जलाशये। सिन्धुतीरे च वल्मीके हरिक्षेत्रे विशेषतः॥ विष्णोः स्नानोदकं यत्र प्रवाहयति नित्यशः। पुण्ड्राणां धारणार्थाय गृह्णीयात्तस्य मृत्तिकाम्। श्रीरङ्गे वेङ्कटाद्रौ च श्रीकुर्म्मद्वारके शुभे। प्रयागे नारसिंहाद्रौ वाराहे तुलसीवने। गृहीत्वा मृत्तिकां भक्त्या विष्णुपाद-जलैः सह। धृत्वा पुण्ड्राणि चाङ्गेषु विष्णुसायुज्यमाप्नुयात्॥ पर्वताग्रे इत्यादौ षष्ठीसप्तम्योरर्थं प्रति भेदाभाव इति न्यायात् पर्वताग्रस्येत्यादि लभ्यते। गृहीत्वा मृत्तिकामिति परेणा-न्वयः। व्यत्ययो बहुलमिति षष्ठ्यर्थे सप्तमी वा। नदी-तीर इति गङ्गातीरस्येति ज्ञेयम्। प्रागुक्तमत्स्यसूक्तवचनेन स्रो-सरितो मृत्तिकाग्रहणनिषेधादिति। श्रीरङ्गः कावेरीमध्यस्थः क्षेत्रविशेषो दक्षिणदेशेषु प्रसिद्धः। वेङ्कटाद्रिः शेषाचलनाम्ना तैलङ्गदेशे प्रसिद्धः। श्रीकूर्म्मः कलिङ्गदेशे प्रसिद्धः क्षेत्रविशेषः॥ गोपीचन्दनमाहात्म्यन्तु मत्स्यसूक्ते॥ दुर्लभं चन्दनं लोके गोपीनां विष्णुनिर्मितम्। यत् कृत्वा तिलकं सद्यो ब्रह्महत्यां व्यपोहति॥ स्थितस्येत्यध्याहारादेककर्त्तृकता। पद्मपुराणे नारदवाक्येऽपि॥ ब्रह्मघ्नो वाथ गोघ्नो वा हैतुकः सर्वपापकृत्। गोपीचन्दनसम्प-र्कात् पूतो भवति तत्क्षणात्। गोपीचन्दनखण्डन्तु यो ददा-तीह वैष्णवे। कुलमेकोत्तरं तेन स्वं भवेत्तारितं शतम्॥ इति वैष्णवे गोपीचन्दनदानफलम्॥ स्कन्दपुराणे ध्रुववाक्यम्॥ शङ्ख-चक्राङ्कितततनुः शिरसा मञ्जरीधरः। गोपीचन्दनलिप्ताङ्गो दृष्ट-श्चेत्तदघं कुतः। गोपीस्तत्तुलसी शङ्खः शालग्रामः सचक्रकः। गृहेऽपि यस्य पञ्चैते तस्य पापभयं कुतः॥ सचक्रकं सश्री-चक्रकमित्यर्थः। काशीखण्डे॥ श्रीखण्डे न स आमोदः स्वर्णे

वर्णः क्व तादृशः। तत्पवित्रं क्व वै तीर्थं श्रीगोपीचन्दने यथा॥ गरुड़पुराणे श्रीनारदवाक्यम्। यो मृत्तिकां द्वारवतीसमुद्भवां करे समादाय ललाटपट्टे। करोति नित्यन्त्वथ चोर्द्ध्वपुण्ड्रं क्रियाफलं कोटिगुणं सदा भवेत्। क्रियाविहीनं यदि मन्त्रहीनं श्रद्धाविहीनं यदि कालवर्जितम्। कृत्वा ललाटे यदि गोपिचन्दनं प्राप्नोति तत्कर्म्मफलं सदाक्षयम्। गोपीचन्दनसम्भवं सुरुचिरं पुण्ड्रं ललाटे द्विजो नित्यं धारयते यदि द्विजपते! रात्रौ दिवा सर्व्वदा। यत् पुण्यं कुरुजाङ्गले रविग्रहे माघ्यां प्रयागे तथा तत्प्राप्नोति खगेन्द्र! विष्णुसदने सन्तिष्ठते देववत्॥ यस्मिन् गृहे तिष्ठति गोपिचन्दनं भक्त्या ललाटे मनुजो बिभर्त्ति। तस्मिन् गृहे तिष्ठति सर्व्वदा हरिः श्रद्धान्वितः कंसनिहा विहङ्गम!॥ यो धारयेत् कृष्णपुरीसमुद्भवां सदा पवित्रां कलिकल्मषापहाम्। नित्यं ललाटे यदि मन्त्रसंयुतां यमं न पश्येद् यदि पापसंवृतः। यस्यान्तकाले खग! गोपिचन्दनं बाह्वोर्ललाटे हृदि मस्तके च। प्रयाति लोकं कमलालयाप्रभोर्गोबालघाती यदि ब्रह्महा भवेत्॥ ग्रहा न पीड़न्ति न रक्षसां गणो यक्षाः पिशाचोरगभूतदानवाः। ललाटपट्टे खग! गोपिचन्दनम् सन्तिष्ठते यस्य हरेः प्रसादतः॥ पद्मपुराणे॥ अम्बरीष! मद्भक्तस्य क्षयार्थं कुरु वीक्षणम्। ललाटे यैः कृतं नित्यं गोपीचन्दनपुण्ड्रकम्॥ काशीखण्डे यमोक्तिः। दूताः! शृणुत यद्भालं गोपीचन्दनलाञ्छितम्। ज्वलदिन्धनवत् सोऽपि दूरे त्याज्यः प्रयत्नतः॥ इति गोपीचन्दनमाहात्म्यम्॥

भगवद्भक्तिविलासधृतकाशीखण्डे॥ अथ तस्योपरि श्रीमत्तुलसीमूलमृत्स्नया। तथैव वैष्णवैः कार्य्यमूर्ध्वपुण्ड्रं मनोरमम्। स्कन्दपुराणे तुलसीमूलमृत्तिकामुपक्रम्य॥ तन्मृदं गृह्य यैः पुण्ड्रं ललाटे धारितं नरैः। प्रयाणकं कृतं तैस्तु सोद्धाय गमनं

प्रति॥ तुलसीमृत्तिकापुण्ड्रं ललाटे यस्य दृश्यते। देहं न स्पृशते पापं क्रियमाणन्तु नारद!॥ गरुड़पुराणे॥ तुलसीमृत्तिकापुण्ड्रं यः करोति दिने दिने। तस्यावलोकनात् पापं याति वर्षकृतं नृणाम्॥ तुलसीमूलमृत्तिकामाहात्म्यम् गारुडे। तस्योपरिष्टाद्गन्धगन्धनिर्म्माल्यमनुलेपनम्। तथैव धार्य्यमेवं हि त्रिविधं तिलकं स्मृतमिति॥ पूर्व्वोक्त्या अथ तस्योपरि गोपीचन्दनतिलकोपरि। तत्र तु तस्योपरिष्टात्तुलसीमूलमृत्तिका तिलकोपरिष्टादित्यर्थः॥ तेन प्रथमं गोपीचन्दनतिलकं कृत्वा तदुपरि तुलसीमूलमृत्तिकातिलकं करणीयम्॥ तदुपरि च विष्णुनिर्म्माल्यानुलेपने तिलकं कार्य्यमिति त्रिविधं तिलकम्॥ अथ द्वादशतिलकविधिः॥ ब्रह्मपुराणे॥ ततो द्वादशभिः कुर्य्यान्नामभिः केशवादिभिः। द्वादशाङ्गेषु विधिवदूर्ध्वपुण्ड्राणि वैष्णवः॥ पद्मपुराणे उत्तरखण्डे॥ ललाटे केशवं ध्यायेन्नारायणमथोदरे। वक्षःस्थले माधवन्तु गोविन्दं कण्ठकूपके। विष्णुञ्च दक्षिणे कुक्षौ बाहौ च मधुसूदनम्। त्रिविक्रमं स्कन्धदेशे वामनं वामपार्श्वके। श्रीधरं वामबाहौ तु हृषीकेशन्तु कन्धरे। पृष्ठे तु पद्मनाभञ्च कट्यां दामोदरं न्यसेत्। तत्प्रक्षालनतोयन्तु वासुदेवेति मूर्द्धनि। योगिनीतन्त्रे॥ पिधाय तिलकं श्रेष्ठमेषामेकतमेन वा। चतुःसमञ्च त्रिसमं द्विसमञ्च सुरेश्वरि!। अथालिप्य ततो देहमयने तु विवर्जयेत्। चतुःसममित्यादिपूर्व्वोक्तमलयजगोपीचन्दनविल्वतुलसीकाष्ठपद्मकतमालगोरोचनानाम्। शीते रात्रौ पुनः स्नाने नानुलिप्य सुगन्धिभिः। ललाटे तु विशेषेण वराङ्गे न कदाचन॥ मत्स्यसूक्ते॥ न रात्रौ तिलकं कुर्य्याद् भुक्त्वा नैव च नैव च। महागुरुनिपाते च तिलकं छेदयेन्नरः। बह्वृचपरिशिष्टम्। तच्चादावनुलेपेन भगवच्चरणाब्जयोः। निर्म्माल्येन प्रसादेन सर्व्वाण्यङ्गानि मार्जयेत्॥ ब्रह्मपुराणे॥ शालग्रामशिलालग्नं चन्दनं

धारयेत् सदा। सर्वाङ्गेषु महाशुद्धिसिद्धये कमलासनम्॥ इत्यू-र्ध्वपुण्ड्रप्रकरणम्।

अथ त्रिपुण्ड्रधारणविधिः॥ राघवभट्टधृतम्॥ भस्माग्नि-होत्रसम्भूतमानयेच्छोधिनं बुधः। यद्वा धरामसंस्पृष्टं सद्ये-नानीय गोमयम्॥ सद्येन प्रणवेन॥ वामेन पात्रे संशोध्य अघो-रेण विनिर्दहेत्॥ तत्पुरुषेण समुद्धृत्य ईशानेन विशोधयेत्। इत्थन्तु संस्कृतं भस्म अग्निरित्यादिमन्त्रतः। विमृज्याङ्गानि संस्पृश्य पुनरादाय मन्त्रतः। तस्माद्ब्रह्मेति यजुषा मन्त्रयेद्रुद्र-संख्यया। प्रणवाद्यैश्चतुर्थ्यी हृदन्तैस्त्वघोर ईशकैः। पञ्चवर्णा-क्षराद्यैश्च भालांशोदरहृत्सु च। त्रिपुण्ड्रधारणं कुर्य्यान्मूर्द्ध्नि पञ्चाक्षरेण च। त्रिपुण्ड्रं धारयेन्मन्त्री साक्षाच्छिव इवापरः॥ वायवीसंहितायाम् भस्मग्रहणमन्यदप्युक्तम्॥ यथा। शिवा-ग्नेर्भस्म संग्राह्यमग्निहोत्रोद्भवन्तु वा। वैवाह्याग्न्युद्भवं वापि पक्वं शुचि सुगन्धि च। कपिलायाः शकृच्छुद्धं गृहीतं गगने पतत्। न क्लिन्नं नापि कठिनं न दुर्गन्धि न चोषितम्। उषितं पर्य्युषितमित्यर्थः॥ उपर्य्यधः परित्यज्य गृह्णीयात् पतितं यदि। पिण्डीकृत्य शिवाग्नौ तु प्रक्षिपेन्मूलमन्त्रतः। अपक्वमतिपक्वञ्च सन्त्यज्य भसितं सितम्। आदाय यस्माच्छुद्धं तद् यथा भस्म प्रजायत इति कालाग्निरुद्रोपनिषदा वृषगोमय-स्याप्येवम्प्रकारः प्रदर्शितः॥ वामेनेति॥ ॐ वामदेवाय नमो ज्येष्ठाय नमो रुद्राय नमः। कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः॥ अघोरेणेति मन्त्रस्तु ॐ अघोरेभ्यो-ऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वतः सर्वसर्वेभ्यो नमस्ते रुद्र-रूपेभ्यः॥ तत्पुरुषेणेति मन्त्रस्तु ॐ तत्पुरुषाय विद्महे महा-देवाय धीमहि तन्नो रुद्रः प्रचोदयात्॥ ईशानेनेति मन्त्रस्तु।

ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मेऽस्तु सदाशिवोम्। अग्निरित्यादिमन्त्रस्तु। अग्निरिति भस्मवायुरिति भस्मजलमिति भस्मस्थलमिति भस्मव्योमेति भस्मसर्वंहरा इदम्। भस्ममन एतानि चक्षूंषि तस्माद्व्रतमितत् पाशुपतं यत्। भस्मनाङ्गानि संस्पृशेत्। तस्माद्ब्रह्म तदेतत् पाशुपतं पशुपतं पशुपाशविमोक्षाय। यजुषा यजुर्मन्त्रेण पञ्चाक्षरेण नमः शिवायेति मन्त्रेण वा कुलमूलावतारकल्पसूत्रतृतीयकाण्डटीकाधृता श्रुतिः॥ शुद्धद्रव्यं तदाग्नेयभस्मत्रिपुण्ड्रकं त्रिरेखात्मकमर्द्धचन्द्ररूपात्मकमर्द्धचन्द्ररूपम्॥ अथ सनत्कुमारप्रमाणस्य त्रिधा ललाटादाचक्षुः पश्चाद् भ्रुवोर्मध्यतः। यस्येह प्रथमा रेखा सा आह्वनीयोऽकं ऋग्वेदः। प्रातः सवनं महेश्वरः। यस्येह द्वितीया रेखा सावसथ्य उकारो यजुर्वेदः सदाशिवः। यस्येह तृतीया रेखा सा गार्हपत्यः परमात्मज्ञानशक्तिमंकाराद्यैरिति॥ अथ कालाग्निरुद्रोपनिषत्॥ संवर्त्तोऽग्निऋषिर्विराड्विश्वरूपी रुद्रो देवता अनुष्टुप्छन्दः श्रीविश्वरूपप्रीत्यर्थे विनियोगः। अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छ अधीहि भोस्त्रिपुण्ड्रविधिं सतत्त्वं किं द्रव्यं किञ्च स्थानं कति प्रमाणं का रेखाः के मन्त्राः किं दैवतं कः कर्त्ता किं फलमिति तं होवाच भगवान् कालाग्निरुद्रः। सत्यमुक्तं यद्द्रव्यं यदाग्नेयं यद्भस्म सद्योजातादि पञ्चरुद्रब्रह्ममन्त्रैः परिगृह्य अग्निरिति भस्म अनेनाभिमन्त्र्य मानस्तोक इति संक्षुभ्य त्र्यायुषमित्यादिना शिरोललाटस्कन्धकण्ठहृद्बाहुहृदयेषु त्रिभिरायुषैस्त्र्यम्बकैस्तिर्य्यक् तिस्रो रेखाः प्रकुर्वीत एतदेव तच्छाम्भवं सर्ववेदेषु वेदविद्भिरुक्तम्। तत् समाचरन् मुमुक्षुर्न पुनर्भवाय। भेदमाललाटादाचक्षुषोराभ्रुवोर्मध्यतः। कर्णादाकर्णपर्य्यन्तं तिर्य्यक् तिस्रो रेखाः प्रकुर्वीत। या स्यात् प्रथमा रेखा सा गार्हपत्याग्नि-

आकारा भूर्लोक आत्मक्रियाशक्तिश्च ऋग्वेदः। प्रथमं सवनं महेश्वरः या स्याद् द्वितीया रेखा सा दक्षिणाग्निरुकारः। सत्यमन्तरीक्षमन्तरात्मा चेच्छाशक्तिर्यजुर्वेदः। मध्यन्दिनं द्वितीय-सवनं सदाशिवदेवेतेति। या स्यात् तृतीया रेखा सा आह-वनीयोऽग्निर्मकारस्तमो द्यौः परमात्मा ज्ञानशक्तिः सामवेद-स्तृतीयसवनं शिवदेवेति। त्रिपुण्ड्रकं भस्मना करोति यो विद्वान् ब्रह्मचारी गृही वानप्रस्थो यतिर्वा स समस्तमहापातकोपपात-केभ्यः पूतो भवति सर्वान् वेदान् पठिता भवति सर्वतीर्थेषु स्नातो भवति स सन्ततं सर्वमन्त्रजापी भवति। सकलभोगभुग्देहं त्यक्त्वा शिवसायुज्यमेति न पुनरावर्त्तते। स वैष्णवः शिवः सोऽपि स च ब्रह्मा प्रजापतिः। स मुक्तः सर्वपापेभ्यो न पुन-र्भवमिष्यते। इत्यस्ति भगवान् कालाग्निरुद्रः पुनराह। अग्नि-रिति भस्मजलमिति भस्मवायुमिति भस्मस्थलमिति भस्मसर्वं विश्वं तदाग्नेयं यास्त्रंग्र वृषपुरीषभस्म तेन त्रिपुण्ड्रकं तेन तद्विद्वान् किञ्चिदयाज्ञिकं कर्म्म इत्याह भगवान् भवः॥ इति कालाग्निरुद्रोपनिषत् समाप्ता॥

वायवीयसंहितायां त्रयोदशसु स्थानेषु त्रिपुण्ड्रधारणमुक्तम्॥ यथा राघवभट्टधृतम्॥ ललाटे ब्रह्म विज्ञेयं हृदये हव्यवाहनः। नाभौ स्कन्धे गले पूषा रुद्रो दक्षिणबाहुके। आदित्यो बाहु-मध्ये च शशी च मणिबन्धके। वामदेवो वामबाहौ बाहुमध्ये प्रभञ्जनः। मणिबन्धे च वसवः पृष्ठदेशे हरः स्मृतः। शम्भुः ककुदि सम्प्रोक्तः परमात्मा शिवः स्मृतः। तस्मात् कालाग्निरुद्रोप-निषद्वायवीयसंहितोक्तस्थानानामिच्छाविकल्पः॥ पुरश्चरणलह-रीतन्त्रे द्वितीयपटले॥ आग्नेयमुच्यते भस्म दग्धगोमयसम्भवम्। शोध्यं षड़क्षरैर्मन्त्रैर्वेदमन्त्रविवर्ज्जितैः। शिरोदेशे ललाटे च स्कन्धे च भ्रूप्रदेशके। मध्यमानामिकाङ्गुल्यङ्गुष्ठेन तिलकं ततः।

तिलकस्तिस्रो रेखा स्याद्रेखाणां नव देवताः। पृथिव्यग्निस्तथा आत्मा क्रियाशक्तिर्महेश्वरः। देवता आद्यरेखाया भक्त्या ते परिकीर्त्तिताः। लभस्व त्वञ्च सुभगे! द्वितीयायाश्च देवताः। परमात्मा शिवो देवस्तृतीयायास्तु देवते। एतान्नित्यं नमस्कृत्य त्रिपुण्ड्रं धारयेद् यदि। महेश्वरव्रतमिदं कृत्वा सिद्धीश्वरो भवेत्। ब्रह्मचारी गृहस्थो वा वनस्थो यतिरेव वा। महापातकसङ्घातैर्मुच्यते सर्वपातकात्। तथान्ये चत्रविट्शूद्रस्त्रीहत्यादिकपातकैः। वीरब्राह्मणहत्याभ्यां मुच्यते सुभगेश्वरि!। अमन्त्रेणापि यत् कुर्य्यात् कृत्वा चैव महोन्नतिम्। त्रिपुण्ड्रभालतिलको मुच्यते सर्वपातकैः। परद्रव्यापहरणं परदाराभिमर्षणम्। परनिन्दा परचेत्रहरणं परपीड़नम्। असत्यवाक्यं पैशुन्यं पारुष्यं देवविक्रयम्। कूटसाक्ष्यं व्रतत्यागं कैतवं नीचसेवनम्। गोभूहिरण्यमहिषीतिलकम्बलवाससाम्। अन्नधान्यजलादीनां नीचेभ्यश्च प्रतिग्रहः। दासीवेश्यासु कृष्टासु वृषलीषु नटीषु च। रजःस्वलासु कन्यासु विधवासु च सङ्गमः। मांसचर्म्मवसादीनां लवणस्य च विक्रयः। एवंरूपाण्यसंख्यानि पापानि विविधानि च। सद्य एव विनश्यन्ति त्रिपुण्ड्रस्य च धारणात्। शिवद्रव्यापहरणात्तन्निन्दायाश्च कुत्रचित्। निन्दायाः शिवभक्तानां प्रायश्चित्तैर्न शुध्यति। देवद्रव्यापहरणे ब्रह्मस्वहरणेन च। कुलान्याशु विनश्यन्ति ब्राह्मणातिक्रमेण च। रुद्राक्षा यस्य देहेषु ललाटे च त्रिपुण्ड्रकम्। यदि स्यात् स च चाण्डालः सर्ववर्णोत्तमोत्तमः। यानि तीर्थानि लोकेऽस्मिन् गङ्गाद्याः सरितश्च याः। स्नातो भवति सर्वत्र यल्ललाटे त्रिपुण्ड्रकम्। सप्तकोटिर्महामन्त्रा उपमन्त्रास्तथैव च। श्रीविष्णोः कोटिमन्त्राश्च कोटिमन्त्राः शिवस्य च। ते सर्वे तेन जप्ताः स्युर्यो बिभर्त्ति त्रिपुण्ड्रकम्। सहस्रं पूर्वजातानां सहस्रञ्च जनि-

षताम्। स्ववंशजानां मर्त्यानामुद्धरेद्‌यस्त्रिपुण्ड्रधृक्। अष्टै-श्वर्य्यगुणोपेतः प्राप्य दिव्यत्रिपुण्ड्रतः। दिव्यं विमानमारुह्य दिव्यस्त्रीशतसेवितः। विद्याधराणां सिद्धानां गन्धर्वाणां महौ-जसाम्। इन्द्रादिलोकपालानां लोकेषु च यथाक्रमम्। भुक्त्वा भोगान् सुविपुलान् प्राक्तनानां पुरेषु च। ब्रह्मणः पदमासाद्य तत्र कल्पायुतावधि। विष्णोर्लोके च रमते आब्रह्मणः शतायु-षम्। शिवलोकं ततः प्राप्य रमते कालमक्षयम्। शिवसायुज्य-माप्नोति न स भूयो विजायते॥ इति त्रिपुण्ड्रधारणफलम्॥

शाक्तानन्दतरङ्गिणीधृतभविष्यपुराणे॥ त्रिपुण्ड्रेण विना कुर्य्याद् यां काञ्चिद्वैदिकीं क्रियाम्। सा निष्फला भवेद्देवि! ब्रह्मणापि कृता यदि॥ श्यामाप्रदीपे तु स्कन्दपुराणीयमिति कृत्वा लिखितम्॥ कूर्म्मपुराणे॥ वैष्णवो वाथ शैवो वा शाक्तो वा सौर एव वा। त्रिपुण्ड्रेण विना पूजां कुर्वाणो यात्यधो-गतिम्॥ शिवधर्म्मे। सितेन भस्मना कुर्य्यात् ललाटे च त्रिपु-ण्ड्रकम्। सर्वपापविनिर्म्मुक्तः शिवलोके महीयते॥ भस्मेत्युप-लक्षणं द्रव्यान्तरेणापि त्रिपुण्ड्रं कार्य्यम्॥ सर्वैस्त्रिपुण्ड्रकं कुर्य्यात् सर्वदा यज्ञभस्मना। तदभावे चन्दनेन मृदा वा वारि-णापि वा। इति भविष्यपुराणवचनात्। यत्किञ्चित् कुरुते कर्म्म विना विप्रस्त्रिपुण्ड्रकम्। व्यर्थमेव भवेत् सर्वं बन्ध्यास्त्रीसङ्गमो यथा। सच्छिद्रं कुरुते यस्त्रिपुण्ड्रं पञ्चमतिर्द्विजः। धर्मार्थकाम-मोक्षेषु तस्य छिद्रं प्रजायते। इति सच्छिद्रत्रिपुण्ड्रधारणनिन्दा। ननूर्ध्वपुण्ड्रे त्रिपुण्ड्रकरणमुक्तवचनजातात् निषिद्धं पूर्वोक्तकूर्म्म-पुराणवचनेन वैष्णवादीनां त्रिपुण्ड्रेण विना पूजाकरणे दोष-श्रुतिश्चेति लम्बोदरस्य रतिकाले प्रियामुखचुम्बनमिवैकं सन्धित्सतोऽन्यत् प्रच्यवत इति चेत् नैवम्। ऊर्ध्वपुण्ड्रत्रिपुण्ड्रयोः सच्छिद्रकरणनिषेधो वैधेतरपर इत्यवेहि। सर्वत्रैव निषिद्धस्य

वैधभिन्नपरत्वाद् यथा विशिखनिन्दा प्रायश्चित्ताद्यनाम्नातपरा। अतएव शैवैस्तूर्द्ध्वपुण्ड्रधारणानन्तरमेव भस्मना त्रिपुण्ड्रधारणमपि कार्य्यं यतो द्विजानामूर्द्ध्वपुण्ड्रस्यावश्यकत्वमिति राघवभट्टः॥ अथ शक्तितिलकम्॥ शाक्तानन्दतरङ्गिणीधृतगौतमीये॥ तिलकं रक्तगन्धेन चन्दनेनाथ वा प्रिये!। देव्यस्त्रं विलिखेद्भाले तारावीजं ततो हृदि। शक्तिमध्यगतां कुर्य्यादित्येतच्छक्तितिलकम्॥ तिलके निजदेवास्त्रमिति प्रागुक्तेनैकवाक्यतया देव्यस्त्रं स्वीयेष्टदेवतावीजमिति॥ अन्नदाकल्पे पञ्चमपटले॥ प्रक्षाल्य पाणिपादौ च रक्तवस्त्रयुगं ततः। परिधायार्द्धचन्द्राभं सविन्दुं तिलकं चरेत्। चन्दनेन सुरक्तेन कुङ्कुमेनाथ वा पुनः। सिन्दूरविन्दुसंयुक्तं रेखात्रयविराजितम्। देवीपादाम्बुजरजो ध्यात्वा मूलेन साधकः। पूजाधिकारी दुर्गाया यथासौ चन्द्रशेखरः॥ कृष्णार्च्चनचन्द्रिकाधृतमालिनीविजयेऽपि॥ भाले चन्द्रार्द्धरेखा त्रितयविरचितं विद्युदाभाविलासं तस्याधश्चान्तरालेऽरुणकिरणनिभं भ्रूयुगस्याथ विन्दुम्। हृन्मध्ये पद्मरूपं शशधरविशदं दोर्युगे वीरणाभं स्थानेष्वन्येषु विन्दून् रचयति तिलकं सो हि विश्वेशरूपः॥ भ्रू युगस्यान्तराले मध्ये रक्तवर्णं विन्दुं रचयतीत्यन्वयः। हृन्मध्ये श्वेतपद्मरूपमित्यर्थः। दोर्युगे बाहुद्वये। वीरणाभं वीरणपत्राकारम्। अन्येषु स्थानेषु पूर्वोक्तेषु इति एतच्छब्दस्य प्रयोगस्तच्छब्दार्थमभिधत्ते। उक्तञ्च सर्व्वनामसूत्रटीकायां त्यत्तदावेकार्थौ यदि निर्दिष्टार्थौ। इतरे त्वयः साभिनयप्रत्यक्षे साभिनयो हस्तभङ्गिमादिरिति कुलचन्द्रः। अन्यथा विसर्गलोपे सतीत्यनेन छन्दोभङ्गः स्यात्। प्रक्रान्तवाचिनस्तस्य न यच्छब्दापेक्षा। उक्तञ्च काव्यप्रकाशे॥ एवं प्रक्रान्तप्रसिद्धानुभूतार्थविषयकस्तच्छब्दोऽपि यच्छब्दस्योपादनं नापेक्षते। ऋजवस्तु तन्त्रेऽपशब्दविचारनिषेधात् सो हीति पठन्ति।

जले यदि सन्ध्यादि क्रियते तदा यागमण्डपं गत्वा उपविश्य तिलकं कार्य्यम्॥ अन्नदाकल्पे तथोक्तत्वात्॥

इति श्रीप्राणतोषिण्यां तृतीये अर्थकाण्डे स्नानादितिल-
कान्तप्रथाख्याकथनरूपस्तृतीयः परिच्छेदः॥

अथ सन्ध्या॥ वैदिकसन्ध्यानन्तरं तान्त्रिकी सन्ध्या कार्य्या॥ तथाच पुरश्चरणरसोल्लासे प्रथमपटले। प्रातःस्नानं समासाद्य सन्ध्यां परमदुर्लभाम्। उपास्य चञ्चलापाङ्गि! गायत्रीं प्रजपेत्ततः। ततस्तु तान्त्रिकीं सन्ध्यां गायित्रीं तान्त्रिकीं तथा। सूर्य्यार्घ्यञ्च ततो दत्त्वा पूजार्थं गृहमाविशेत्॥ वृहन्नीलतन्त्रे प्रथमपटलेऽपि॥ आदौ च वैदिकीं सन्ध्यां कृत्वा चागमसम्मताम्। सन्ध्यां कृत्वा ततो वीरः कुलकोटीः समुद्धरेत्। तथा। एतत्सन्ध्यात्रयेणैव दिवारात्रौ च वन्दनेति॥ गन्धर्वतन्त्रे षष्ठपटले॥ अपरां कथयाम्यत्र सर्वपापविनाशिनीम्। उपविश्य शुचौ देशे त्रितत्त्वेन त्रिधाचमेत्। प्राणायामत्रयं कृत्वा त्रिधावीजैस्त्रिधाविधम्। वामहस्ते जलं गृह्य गलितोदकविन्दुभिः। सप्तधा प्रोक्षणं कुर्य्यान्मूर्द्ध्नि मन्त्रमनुस्मरन्। अवशिष्टोदकं दक्षहस्ते संगृह्य साधकः। नासामाश्लिष्य तोयेन ततस्तेनाघमर्षणम्। इड़याकृष्य देहान्तः क्षालितैः पापसञ्चयैः। कृष्णवर्णं तदोदकं वामनाड्या विरेचितम्। दक्षहस्ते तु तन्मन्त्री पापरूपं विचिन्त्य च। पुरतो वज्रपाषाणे निक्षिपेदस्त्रमन्त्रतः। इत्यघमर्षणं कृत्वा पुनराचमनं तथा। अभिषिञ्चेत्ततो मूर्द्ध्नि विधिना साधकोत्तमः। ॐ आपो देवी रसोऽमृतं पूतं ब्रह्म पुनीमहे। जलाञ्जलित्रयं भूमौ मार्त्तण्डभैरवाय च। ऊर्द्ध्वबाहुस्ततो मन्त्री मार्त्तण्डं समुपाश्रयेत्। ॐ उदुत्यं जातवेदसं देवं वहन्ति केतवः दृशे विश्वाय सूर्य्यम्। मार्त्तण्डशेषे देवेशि! भैरवं पदमीरयेत्। एतादृक् सन्ध्या तु गौड़-

देशे न प्रचरद्रूपा। गौड़देशीया तु तोड़लतन्त्रे तृतीयपटले॥ आत्मविद्याशिवैस्तत्त्वैराचामेत् पाथसा तथा। वह्निजायान्विता मन्त्रा विज्ञेयाः प्रणवादिकाः। गङ्गे चेत्यादिना देवि! तीर्थावाहनमाचरेत्। मूलेन मनुना भूमौ त्रिवारं निक्षिपेत् सुधीः। तज्जलेन सप्तवारमात्माभिषेकमाचरेत्। अङ्गन्यासं ततः कृत्वा वामहस्ते सुरेश्वरि!। गगनं वायुबीजञ्च वरुणं भूमिबीजकम्। वह्निबीजं बिन्दुयुतं त्रिवारं जपमाचरेत्। अनेन मनुना देवि! तज्जलञ्चाभिमन्त्रितम्। मूलमन्त्रं समुच्चार्य्य सप्तधा तत्त्वमुद्रया। आत्माभिषेकमात्रेण मुच्यते सर्वपातकैः। शेषं जलं महेशानि! दक्षहस्ते समानयेत्। इड़या पूरयेत्तोयं चालयेद्देहमध्यगम्। ततः पिङ्गलया देवि! तत्तोयन्तु विरेचयेत्। कृष्णवर्णं तदुदकं पापरूपं विचिन्तयेत्। पुरतो वज्रपाषाणे फट्कारेण विनिक्षिपेत्। हस्तं प्रक्षाल्य चाचम्य सूर्य्यायार्घ्यं निवेदयेत्। देवतार्घ्यं ततः पश्चात् गायत्रीं परमाक्षरीम्। प्रपठेत्तु ततो धीमान् त्रिवारं जलमुत्क्षिपेत्। ततो जपेन्महामन्त्रं गायत्रीं परमाक्षरीम्। अङ्गन्यासं ततः कृत्वा आचम्य परमेश्वरि!। इष्टदेवीं महेशानि! ध्यात्वा तु रविमण्डले। प्राणायामादिकं कृत्वा चाष्टोत्तरशतं जपेत्॥ कल्पसूत्रटीकाधृततोयकाण्डधृतलक्ष्मीकुलार्णवे॥ सन्ध्यया तु विहीनो यो न दीक्षाफलमाप्नुयात्। मन्त्रसन्ध्यापूर्व्विका सन्ध्या कार्य्या तदुक्तं नवरत्नेश्वरे॥ वैदिकी तान्त्रिकी सन्ध्या यथानुक्रमयोगत इति॥ महानिर्वाणतन्त्रे पञ्चमोल्लासेऽपि॥ सन्ध्यां समाचरेन्मन्त्री तान्त्रिकीं शृणु कथ्यते। आचम्य पूर्ववत्तोये तीर्थान्यावाहयेच्छिवे!। गङ्गे चेत्यादिमन्त्रेण मुद्रयाङ्कुशसंज्ञया। आवाह्य तीर्थं सलिले मूलं द्वादशधा जपेत्। ततस्तत्तोयतो बिन्दून् त्रिधा भूमौ विनिक्षिपेत्। अङ्गुष्ठानामिकायोगान्मूलोच्चारणपूर्व्वकम्। सप्त-

वारं स्वमूर्द्धानमभिषिच्य ततो जलम् । वामहस्ते समादाय छादयेद्दक्षपाणिना । ईशानवायुवरुणवह्नीन्द्रवीजपञ्चकम् । प्रजप्य वेदधा तोयं दक्षहस्ते समानयेत् । वीक्ष्य तेजोमयं ध्यात्वा चेड़याकृष्य साधकः । देहान्तः कलषं तेन रेचयेत् पिङ्गला-ख्यया । निष्कृष्य पुरतो वज्रशिलायां वज्रमुच्चरन् । त्रिवारं ताड़येन्मन्त्री हस्तौ प्रक्षालयेत्ततः । आचम्योक्तेन मन्त्रेण सूर्य्या-यार्घ्यं निवेदयेत् । तारमाया हंस इति घृणिसूर्य्यस्ततः परम् । इदमर्घ्यं तुभ्यमुक्त्वा दद्यात् स्वाहेत्युदीरयन् । ततो ध्यायेन्महा-देवीं गायत्रीं परदेवताम् । प्रातर्मध्याह्नसायाह्ने त्रिरूपं गुण-भेदतः । प्रातर्वह्निरक्तवर्णां द्विभुजाञ्च कुमारिकाम् । कमण्डलुं तीर्थपूर्णमक्षमालाञ्च बिभ्रतीम् । कृष्णाजिनाम्बरधरां हंसारूढ़ां शुचिस्मिताम् ॥ १ ॥ श्यामवर्णां वैष्णवीञ्च चतुर्भुजां महेश्वरि ! । शङ्खचक्रगदापद्मधारिणीं गरुड़ासनाम् । पीनतुङ्गकुचद्वन्द्वां वनमालाविभूषिताम् । युवतीं सततं ध्यायेन्मध्ये मार्त्तण्ड-मण्डले ॥ २ ॥ सायाह्ने वरदां देवीं गायत्रीं संस्मरेद्यतिः । शुक्लां शुक्लाम्बरधरां वृषासनकृताश्रयाम् । त्रिनेत्रां वरदां पाशं शूलञ्च नृकरोटिकाम् । बिभ्रतीं करपद्मैश्च वृद्धां गलितयौवनाम् ॥ ३ ॥ एवं ध्यात्वा महादेव्यै जलानामञ्जलित्रयम् । दत्त्वा जपेत्तु गायत्रीं दशधा शतधापि वा । त्रिसन्ध्यमेतां प्रजपन् सन्ध्यायाः फलमाप्नुयात् । ततस्तु तर्पयेद्देवि ! देवर्षिपितृदेवताः । प्रणवः स द्वितीयाख्यस्तर्पयामि नमः पदम् । शक्तौ तु प्रणवो मायां नमः स्थाने द्विठं वदेत् । ततश्चार्घ्यं महादेव्यै दत्त्वा मूलं जपेत् सुधीः । यथाशक्ति जपं कृत्वा देव्या वामकरेऽर्पयेत् । प्रणम्य देवीपूजार्थं जलमादाय साधकः । नत्वा तीर्थं पठन् स्तोत्रं देवता-ध्यानतत्परः । यागमण्डपमागत्य पाणिपादौ विशोधयेत् ॥ वृहन्नीलतन्त्रे प्रथमपटले ॥ सन्ध्यां सायन्तनीं कुर्य्याद् द्वादशा-

दिष्वपि प्रिये !। अकुर्वन्निरयं याति यतो नित्यागमक्रिया। एतद्वचनमविज्ञाय वैदिकी तान्त्रिकी सन्ध्या यथानुक्रमयोगत इति तन्त्रसारधृतवचने अनुक्रमपदस्वरसात् यत्र वैदिकी सन्ध्या न विद्यते तत्र तान्त्रिक्यपि न करणीया। तेन द्वादश्यादौ सायम् एवमशौचादौ तान्त्रिकसन्ध्या न कार्य्येति कश्चिद्वदति तन्न। अशौचस्य वैदिकविषयत्वादिति॥ तथा च विश्वसारतन्त्रे द्वितीयपटले॥ मृत्युगुरुनिपातादौ न पूजाया विकल्पना। मोहाद्वा यदि वा दैवात् पूजयेन्न कदाचन। तस्य सर्वविनाशः स्यादित्युक्तन्तु सदाशिवैरिति। पूजयेदिति तान्त्रिकनित्यकर्मोपलक्षणम्। यथा कामदतन्त्रे नवमपटले॥ उपासका ये श्रीकाल्यास्ते शुद्धाः सर्वदैव हि। जनुर्मरणजाशौचं तथान्यद् यदशौचकम्। सर्वं न बाधते क्वापि कालिकाया उपासके। गङ्गेव शुद्धः सततं किमशौचं सुरेश्वरि!। कालीमुद्दिश्य पूजादिजपहोममशौचके। न त्याज्यं तेन शाक्तेन सर्वं कार्य्यं सदैव हि। कालीमुद्दिश्य दानादि न च त्याज्यमशौचके। सर्वदा परमः शुद्धः शाक्त एव महेश्वरि!। अत्र शाक्त इति सामान्येनोपदानात् पूर्ववचने काल्या इति शक्तिमात्रोपलक्षणम्॥ अथ योगिनां सन्ध्या कल्पसूत्रटीकायां तृतीयकाण्डे॥ या गुरुरूपिणी मृणालसूत्रान्तरगा स्वप्रकाशा कुण्डलिनीशक्तिः कुलाकुलसमरसभावेन साधनान्तर्ध्येया। तथा मध्याह्नसमये तरुणावयवामतिभास्वरां कामराजरूपिणीं मूलादिब्रह्मरन्ध्रान्तं ब्रह्मरन्ध्रादिमूलान्तं ध्यायेत्। तथा सायंसमये श्वेतवर्णां शक्तिवीजस्वरूपां मृणालतन्तुनिभां कुलाकुलयोगेनानुसन्दध्यात्। अर्द्धरात्रे परापरकुण्डलिनीरूपां पद्मरागवर्णां मूलादिहृदयावध्यन्तं वाग्भववीजरूपिणीं हृदयाद्भ्रूमध्यपर्य्यन्तं कामवीजरूपां भ्रूमध्याद्ब्रह्मरन्ध्रान्तं शक्तिवीजरूपां ध्यायेत्। तदुक्तमुदयाकरपद्धत्याम्॥ आद्या मृणाल-

सूत्राभा पीता रक्ता तु मध्यमा। श्वेता त्वन्तर्गता शक्तिः सन्ध्या चोभयरूपिणी। तर्पणन्तु मूलाधारात् सोमसूर्य्याग्निरूपिणीम्। कुण्डलिनीं समुत्थाप्य परविन्दुं निर्भिद्य तदुद्भवामृतेन स्वेष्ट-देवतां तर्पयेत्। तदुक्तं नवचक्रेश्वरे॥ चन्द्रार्कानलसङ्घट्टाद् गलितं यत्परामृतम्। तेनामृतेन दिव्येन तर्पयेत् सुन्दरीं पराम्॥ अथ सूर्य्यपूजा॥ मूलाधारात् कुलकुण्डलिनीमुत्थाप्य हृदयार्क-मण्डलं नीत्वा तत्कर्णिकान्तर्गतसुधाधारया मूलमन्त्रं स्मरन् सिञ्चेदिति योगिनामन्तर्यागः॥ अथ कौलानां सन्ध्या गन्धर्व-तन्त्रे षष्ठपटले॥ आत्मानं सर्वदा सम्यक् ध्यायेद् ध्यानपरा-यणः। देवताभेदतः सन्ध्या मानसीयं परा प्रिये!। शिवशक्त्योः समायोगो यस्मिन् काले प्रजायते। सा सन्ध्या कुलनिष्ठानां समाधिस्थैः प्रतीयते। भूतशुद्धितन्त्रे प्रथमपटलेऽपि॥ अन्तः सन्ध्यां महेशानि! शृणु यत्नेन पार्वति!। शिवशक्तिसमायोगो यस्मिन् काले प्रजायते। सा सन्ध्या कुलसाधूनां समाधिस्थैः प्रतीयते॥ वैदिकसन्ध्यादिप्रयोगस्तु ब्राह्मणसर्वस्वादावनुस-न्धेयः। केवलमार्जनस्य विशेषो निर्वाणतन्त्रे तृतीयपटले यथा। आपो मार्जनमन्त्रस्य प्रकारं शृणु यत्नतः। भूमौ शिरसि चाकाशे आकाशे भूमिमस्तके। मूर्ध्नि भूमौ तथाकाशे यजुर्वेदे सुरेश्वरि!। सामाथर्वैरिदं देवि! ऋग्वेदे शृणु शैलजे!। शून्ये शिरसि चाकाशे भूमौ शून्ये शिरे तथा। भूमौ शून्ये तथा मूर्ध्नि चापो मार्जनमाचरेत्। आपोहिष्ठेति मन्त्रस्य अष्टाक्षरक्रमेण तु। मार्जनं तत्क्रमेणैव सर्वपापविनाशनम्। व्यतिक्रमेण चार्वङ्गि! ब्रह्महत्या पदे पदे। वरयस्त्रीन् मूर्ध्नि दद्याद् ये सवो व्योम्नि चोच्यते। भूमौ दद्यान्न चयेण इति सम्मार्जनं विदुः। अतएव क्रमं सर्वं तव स्नेहात् प्रकाशितम्। स्तुतिञ्च कवचं देवि! पठित्वा प्रणमेत् सुधीः। अथ गायत्री॥

निर्वाणतन्त्रे तृतीयब्राह्मणपटले ॥ गायत्रीं शृणु चार्वङ्गि ! च
वेदप्रपूजिताम् । वेदमातेति विख्यातां त्रिवर्गफलदायिनीम्
हालाहलं समुद्धृत्य इत्यादि गायत्री ज्ञेया ॥ इति जप्त्वा मं
शानि ! मुक्तो भवति नान्यथा । अन्त्ययकारयोः स्थाने य इ
च यः पठेत् । स चण्डाल इति ख्यातो ब्रह्महत्या दिने दिने
अतएव महेशानि ! तव स्नेहात् प्रकाशितम् । सावित्री परम
विद्या त्रैलोक्ये च सुदुर्लभा । अस्या ग्रहण मात्रेणाभूद्ब्रह्मा ना
संशयः ॥ यत्तु गायत्रीतन्त्रस्य प्रथमब्राह्मणपटले ॥ प्रण
त्रयसंयुक्तं ब्राह्मणेषु प्रकीर्त्तितम् । चैत्रादौ परमेशानि ! अस्य
प्रणवद्वयम् ॥ द्वितीयब्राह्मणपटलेऽपि ॥ प्रणवत्रयसंयुक्तां गायत्र
प्रजपेत्तु यः । गायत्र्याः फलमाप्नोति अन्यथारण्यरोदनमिति
प्रणवत्रययुक्तगायत्रीकथनम् । तत्प्रबलकलौ तत्पुटितत्वाभि
प्रायेण तथाच तत्रैव ॥ विद्या वा उपविद्या वा प्रणवैः पुटि
कलौ । जप्त्वा सिद्धिमवाप्नोति तद्दते विफलं भवेत् । अस्यार्थः
राघवभट्टधृतम् ॥ तत्र प्रणवेन ब्रह्म प्रतिपाद्यते व्याहृतिभिर
तदेव प्रतिपाद्यते । भूरिति सन्मात्रमुच्यते सर्वं भावय
प्रकाशयति इति व्युत्पत्त्या भुवमिति चिद्रूपमुच्यते । सर्वप्रेरणा
स्वरिति तेजोरूपत्वात् पूजनीयत्वात् मह इति । सर्वजनन
त्वाज्जन इति । ज्ञानस्वरूपतया सर्वतापनतया वा तप इति
परत्वात् सर्वात्मकत्वात् अनन्तज्ञानत्वात् सत्यमिति सप्तव्याहृ
तिभिः परं ब्रह्मैवोच्यते । प्रणवेन सह आसामान्तरः सम्बन्ध
यथा । प्रणवस्य अकारादिसप्तमात्राः सप्तव्याहृतय इति य
भूरादिसप्तलोकाः प्रणववाच्यब्रह्मात्मकास्तदतिरिक्तं न किञ्चिद
स्तीत्यर्थः । तत्पदेन ब्रह्मोच्यते । ॐ तत् सदिति निर्देश
ब्रह्मणस्त्रिविधो मत इति वचनात् । सुञ् प्राणिप्रसव इति धात
र्जातत्वात् सर्वप्रपञ्चोपदेशकत्वेन सवितुरिति । निरतिशय

नन्दरूपत्वात् सर्ववरणीयत्वात् सर्वसेवनीयमिति वरेण्यम्। पाप-तर्जनाद्भक्तवर्त्मनाऽभयाद्भर्गः। सर्वप्रकाशकत्वेन देवस्येति सवितुर्देवस्येत्यत्र षष्ठीप्रयोगो राहोः शिरवदौपचारिकत्वयं भूतम्। ब्रह्म धीमहि ध्यायेमहि नोऽस्माकं धियो बुद्धीर्यः प्रचोदयात् प्रेरयेत्। अत्र य इति लिङ्गव्यत्ययः छान्दसत्वात्। तेन सर्वान्तःकरण-प्रकाशकः सर्वसाक्षी परमात्मोक्तः। व्याप्नोतीत्यापः सर्वप्रकाशक-मिति ज्योतिः सर्वातिशायित्वात् कृत्स्नः। यद्वा। आपोज्योती-रस इति सोमाग्न्योस्तेज उच्यते। यतस्तदात्मकं जगत्। अनाशित्वादमृतं वृहत्त्वाद्बृंहणत्वाद् ब्रह्म सत्यज्ञानानन्दलक्षणम्। भूर्भुवःस्वःपदवाच्यं सोऽहमित्यास्पदवाच्यमिति। एवं सर्वात्मकब्रह्मबोधको गायत्रीमन्त्रः। प्रणवाद्या इति व्याहृतिः सम्बध्यते। तत्पदादिकेत्यग्रिमेण सम्बध्यते॥ अत्र सप्त व्याहृतयः॥ ओं भूः ओं भुवः ओं स्वः ओं महः ओं जनः ओं तपः ओं सत्यम्। एतदग्रे तत् सवितुरिति ऋक् तदन्ते ओं आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवःस्वरोमिदं शिवः। अस्यास्तन्त्रान्तरोक्तं वीजादिर्यथा। रे इत्येतत्तु वीजं स्याद् यवर्णं शक्तिरुच्यते। नीत्येतत् कीलकं प्रोक्तं गायत्र्यास्त्रिपदात्मन इति। पत्सन्धिष्विति पादद्वयसन्धिचतुष्के अक्षरचतुष्कं तदुक्तं पदद्वयसन्धि-चतुष्कमिति। एवं भुजद्वयसन्धिचतुष्के अक्षरचतुष्कम्। अन्यत्रैकैकमक्षरम् एवं चतुर्विंशत्यक्षराणि न्यसनीयानि। नीयेत्यस्य पृथक् तेन चतुर्विंशत्यक्षरात्मकं प्रत्येकमक्षराणाम् ऋषिच्छन्दो-देवताध्यानमुच्यते। अक्षराणाञ्च सर्वेषां प्रजापतिरृषिस्तथा। विनियोगोऽङ्गविन्यासे गायत्रीच्छन्द उच्यते। अक्षराणान्तु सर्वेषां वक्ष्यन्ते देवताः क्रमात्। अग्निवायुसूर्य्यविद्युद्यमा वरुण एव च। वृहस्पतिश्च पर्जन्य इन्द्रो गन्धर्व एव च। पूषा शिवश्च त्वष्टा च वासवश्च मरुत्तथा। सोमोऽङ्गिरा विश्वेदेवा अश्विनौ च

प्रजापतिः। सर्वदेवश्च रुद्रश्च ब्रह्मा विष्णुस्तु देवताः। जपकाले चिन्तनीयास्तासां सायुज्यमाप्नुयात्। तत्कारं चम्पकापीतं ब्रह्मविष्णुशिवात्मकम्। शतपत्रासनारूढं ध्यायेत् सुस्थासनस्थितम्। सकारं चिन्तयेद्देवमतसीपुष्पसन्निभम्। पद्ममध्यस्थितं सौम्यमुपपातकनाशनम्। अतसीकुसुमाभा तेउड़ीति यस्य भाषा नत्वतसी शोणपुष्पं वक्ष्यमाणगायत्रीतन्त्रोक्तवचने श्यामवर्णदर्शनात्॥ विकारं कपिलं नित्यं कमलासनसंस्थितम्। ध्यायेच्छान्तः द्विजश्रेष्ठो महापातकनाशनम्। तुकारं चिन्तयेत् प्राज्ञ इन्द्रनीलसमप्रभम्। निर्दहेत् सर्वपापाणि ग्रहरोगसमुद्भवम्। वंकारं वह्निदीप्ताभं चिन्तयेच्च विचक्षणः। भ्रूणहत्याकृतं पापं तत्क्षणादेव नश्यति। रेकारं विमलं ध्यायेत् शुद्धस्फटिकसन्निभम्। पापं नश्यति तत् क्षिप्रमगम्यागमनोद्भवम्। णोकारं चिन्तयेद् योगी शुद्धस्फटिकसन्निभम्। अभक्ष्यभक्षणं पापं तत्क्षणादेव नश्यति। यकारं तारकावर्णमिन्दुशेषविभूषितम्। योगिनां वरदं ध्यायेद् ब्रह्महत्याविनाशनम्। भकारं कृष्णवर्णन्तु नीलमेघसमप्रभम्। ध्यात्वा पुरुष इत्यादि पापं नाशयति द्विजः। र्गोकारं रक्तवर्णञ्च कमलासनसंस्थितम्। गोहत्यादिकृतं पापं ध्यात्वा नश्यति तत्क्षणात्। देकारं रक्तसङ्काशं कमलासनसंस्थितम्। चिन्तयेत् सततं योगी स्त्रीहत्यादहनं परम्। वकारं चिन्तयेच्छुद्धं जातीपुष्पसमप्रभम्। गुरुहत्याकृतं पापं ध्यात्वा नश्यति तत्क्षणात्। स्यकारन्तु तथा पीतं सुवर्णसदृशप्रभम्। मनसा चिन्तितं पापं ध्यात्वा नुदति चानघः। धीकारं चिन्तयेच्छुक्लं कुन्दपुष्पसमप्रभम्। पितृमातृवधात् पापान्मुच्यते नात्र संशयः। मकारं पद्मरागाभं चिन्तयेद्दीप्ततेजसम्। पूर्वजन्मार्ज्जितं पापं तत्क्षणादेव नश्यति। हिकारं शङ्खवर्णन्तु पूर्णचन्द्रसमप्रभम्। अशेषपाप-

दहनं ध्यायेन्नित्यं विचक्षणः। धिकारं पाण्डवं ध्यायेत् पद्मस्यो-परिसंस्थितम्। प्रतिग्रहकृतं पापं स्मरणादेव नश्यति। योकारं रक्तवर्णन्तु इन्द्रगोपसमप्रभम्। ध्यात्वा प्राणिवधे पापं निर्दहेन्मुनिपुङ्गवः। द्वितीयस्यैव यः प्रोक्तो योकारो रक्तसन्निभः। निर्दहेत् सर्वपापाणि नान्यैः पापैः प्रलिप्यते। नःकारन्तु मुखंःपूर्व-मादित्योदयसन्निभम्। सकृद्ध्यात्वा द्विजश्रेष्ठः स गच्छेत् परमं पदम्। नीलोत्पलदलश्यामं प्रकारं दक्षिणायनम्। सकृद्ध्यात्वा द्विजश्रेष्ठः स गच्छेदैश्वरं पदम्। सौम्यं गोरोचनापीतं चोकारं चतुराननम्। सकृद्ध्यात्वा द्विजश्रेष्ठः स गच्छेद्वैष्णवं पदम्। शुक्लवर्णेन्दुसङ्काशं दकारं पश्चिमाननम्। सकृद्ध्यात्वा द्विजश्रेष्ठः स गच्छेद्ब्रह्मणः पदम्। यात्कारन्तु शिवं प्रोक्तं चतुर्वदनसप्रभम्। प्रत्यक्षफलदो ब्रह्मविष्णुरुद्र इति स्मृतिः। एतद्ध्यात्वा तु मेधावी जपं होमं करोति यः। न भवेत् सूतकं तस्य मृतकञ्च न विद्यते। यस्त्वेवं न विजानाति गायत्रीञ्च तथाविधाम्। कथितं सूतकं तस्य मृतकञ्च मयानघ!। नैव दानफलं तस्य न च यज्ञ-फलं भवेत्। न च तीर्थफलं प्रोक्तं तस्यैव सूतके सतीति॥

अथ वर्णकल्पः। तथा गायत्रीतन्त्रे॥ तकारं चम्पकापीतं ब्रह्मविष्णुशिवात्मकम्। सकारं चिन्तयेत् श्यामं विकारं कपिलं तथा। तुकारमिन्द्रनीलाभं वंकारं वह्निसन्निभम्। रेकारं वह्नि-सङ्काशं णिकारं रक्तवर्णकम्। यङ्कारं धूम्रसङ्काशं भकारं कृष्ण-मेव च। गोंकारं रक्तवर्णञ्च देकारं श्यामलं तथा। वकारं शुक्लसङ्काशं स्यकारं नीलशोभितम्। धीकारं कुन्दपुष्पाभं मकारं शुक्लमेव च। हिकारं चन्द्रसङ्काशं धिकारं पीतमेव च। यो-कारं तड़िदाकारं योकारं धूम्रवर्णकम्। अशेषं शोषयेत् पापं वायुवीजं यथा तथा। नकारन्तु मुखं प्रोक्तं प्रतप्तकनकप्रभम्। नकारस्य समीपे तु विन्दुद्वयं विशेषतः। ऊर्ध्वविन्दुरक्तवर्णमधः

श्यामं प्रकीर्त्तितम्। नीलोत्पलदलश्यामं प्रकारं दक्षिणामुखम्। सौम्यं गोरोचनापीतं चोकारं पश्चिमामुखम्। शुक्लशङ्खसमाकारं दकारं चतुरामुखम्। यात्कारं मूर्ध्नि विज्ञेयं ऊर्ध्वास्यं ब्रह्ममन्दिरम्॥ पूर्वोक्तगायत्रीवर्णध्यानोक्तवर्णेन यत्र यत्र विशेषस्तत्र तत्राम्नायभेदेन ज्ञेयः॥ अथ गायत्रीयन्त्रम्॥ आदौ त्रिकोणं विन्यस्य षट्कोणं तद्बहिर्न्यसेत्। वृत्तञ्चाष्टदलं पद्मं तद्बहिश्चतुरस्रकम्। चतुर्द्वारसमायुक्तं सावित्रीयन्त्रमीरितम्॥ शारदायाम्॥ विधाय मण्डलं विद्वान् त्रिकोणोज्ज्वलकर्णिकम्। मण्डलमिति सर्वतोभद्रमण्डलम्॥ त्रिकोणोज्ज्वलमिति तत्कर्णिकायां त्रिकोणं लिखेत्॥

अथ गायत्र्या ऋष्यादिन्यासः॥ शारदातिलके एकविंशतिपटले॥ ऋष्याद्याः प्रणवस्यैते मुनिभिः परिकीर्त्तिताः। जमदग्निभरद्वाजभृगुगौतमकाश्यपान्। विश्वामित्रवशिष्ठाख्यौ व्याहृतीनामृषीन् विदुः। गायत्र्युष्णिगथानुष्टुब्बृहतीपङ्क्तयः पुनः। त्रिष्टुब्जगत्यौ छन्दांसि कथितानि मनीषिभिः। समार्चिर्बलिनः सूर्य्यो वाक्पतिर्वरुणो वृषा। विश्वेदेवाः क्रमादासां देवताः परिकीर्त्तिताः। गायत्र्या मुनिराख्यातो विश्वामित्रो महाद्युतिः। गायत्रीच्छन्द इत्युक्तं देवता सविता स्मृता। शिरसोऽस्य मुनिर्ब्रह्मा छन्दोदेव्यादिका स्मृता। गायत्री परमात्मा स्याद्देवता कथिता बुधैः। व्याहृतीः सप्त ताराद्या हृन्मुखांसोरुयुग्मके। जठरे न्यस्य मन्त्रज्ञो गायत्र्यर्णान् तनौ न्यसेत्। पत्सन्धिषु ध्वजे नाभौ हृत्कण्ठभुजसन्धिषु। आस्यनासाकपोलाक्षिकर्णभ्रूमस्तके पुनः। पाश्चात्योत्तरयाम्यग्राम्यूर्ध्ववक्त्रेषु साधकः। पदानि दश विन्यस्येदेषु स्थानेषु मन्त्रवित्। शिरोभ्रूमध्यदृक्कण्ठकण्ठहृन्नाभिगुह्यके। जानुनोः पादयोर्युग्मे तच्छिरः शिरसि न्यसेत्॥

अथ षड़ङ्गन्यासः॥ निर्वाणतन्त्रे॥ षड़ङ्गन्यासमन्त्रं यत् तत् शृणुष्व प्रियंवदे!। प्रणवद्वयं हृत्पद्मे भूःकारं शीर्षदेशके। भुवः शिखायां स्वःकारं कवचे विन्यसेत् सुधीः। नेत्रत्रये भूर्भुवःस्वः स्वःकारं करयुग्मके। नमः स्वाहा वषट् कूर्च्चं वौषट् फट् क्रमतो न्यसेत्॥ शारदायान्तु॥ ब्रह्मणे हृदयं प्रोक्तं विष्णवे शिर ईरितम्। शिखा रुद्राय कवचमीश्वराय समीरितम्। नेत्रं सदाशिवायोक्तमस्त्रं सर्व्वात्मने स्मृतम्। षड़ङ्गान्येवमुक्तानि यथास्थानं प्रविन्यसेत्॥ अथ ध्यानम्॥ निर्वाणतन्त्रे॥ ध्यानं शृणु वरारोहे! यथा ध्यात्वा जपेन्नरः। श्वेतवर्णा समुद्दिष्टा कौशेयवसना तथा। श्वेतैर्विलेपनैः पुष्पैरलङ्कारैश्च भूषिता। आदित्यमण्डलान्तःस्था ब्रह्मलोकगताथ वा। अक्षसूत्रधरा देवी पद्मासनगता तथा। ॐ तेजोऽसि शुक्रमस्यमृतमसि धामनामासि प्रियं देवानामनाधृष्टं देवयजनमसि। गायत्र्यसि एकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे नमस्ते तुरीयाय दर्शिताय पराय परोरजसे। शारदोक्तध्यानं यथा। मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीचणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्णवर्णात्मिकाम्। गायत्रीं वरदाभयाङ्कुशकरां शुभ्रं कपालं गुणं शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे॥ गायत्रीतन्त्रप्रथमब्राह्मणपटले॥ चतुर्भुजां शशिकलां जटाजूटसमन्विताम्। ऋक्सामयजुषां नाथां प्रफुल्लकमलेक्षणाम्। पञ्चाशद्वर्णग्रथितमालाद्योतितहृत्स्थलाम्। अनेकरत्ननिर्माणकण्ठदेशविराजिताम्। दिव्यगन्धप्रलिप्ताङ्गीं शुक्लवस्त्रपरिष्कृताम्। शुक्लपद्मसमासीनां शुक्लवस्त्रोत्तरीयिणीम्। ब्रह्मादिदेवतावृन्दैः संस्तुतां नित्यनूतनाम्। एवं ध्यात्वा न्यसेद्वर्णं पठित्वा छन्द उत्तमम्। अस्याग्निमुखीगायत्र्याः परंब्रह्म ऋषिर्ऋग्यजुःसामाथर्व्वच्छन्दः सविता

देवता परंब्रह्ममातुर्न्यासे" विनियोगः। पादादिमस्तकान्तञ्च न्यासं कुर्य्याद्विशालधीः। विना न्यासं जपेद् यस्तु गायत्री विफला भवेत्। विना मुद्रां न्यसेद् यस्तु न्यासो भवति निष्फलः। यतिस्तु पञ्चमुद्राभिर्न्यासं कुर्य्यात् प्रयत्नतः। गृही च यत्नतः कुर्य्यात् त्रिसन्ध्यं तत्त्वमुद्रया। कनिष्ठानामिकाङ्गुष्ठा अङ्गुष्ठा तर्ज्जनी तथा। अङ्गुष्ठामध्यमाभ्याञ्च अङ्गुष्ठानामिका तथा। कनिष्ठाङ्गुष्ठसंयोगात् पञ्चमुद्राः प्रकीर्त्तिताः। पादादि मस्तकान्तञ्च भूर्भुवः स्वर्न्यसेत् सुधीः। सप्तधा विन्यसेद्विद्वान् गायत्रीं क्रम-योगतः। पादाङ्गुष्ठे न्यसेद्योगी तकारं भावयेत् परम्। सकारं गुल्फयोर्मध्ये विकारं जङ्घयोस्तथा। तुकारं जानुनोर्मध्ये वंकार-मूरुमध्यतः। रेकारं गुह्यदेशे च णिकारं वृषणे न्यसेत्। यङ्कारं कटिदेशे च भकारं नाभिमण्डले। र्गोकारं जठरे न्यसेद्देकारं स्तनयोर्न्यसेत्। वकारं हृदि मध्ये च स्यकारं कण्ठतो न्यसेत्। धीकारं वदने भद्रे मकारं तालुनि न्यसेत्। ह्निकारं नासि-काग्रे च धिकारं चक्षुषोर्न्यसेत्। योकारं प्रथमं योगी भ्रुवो-र्मध्ये च विन्यसेत्। द्वितीयञ्च ततो ज्ञेयं ललाटे च न संशयः। नःकारन्तु मुखे ज्ञेयं प्रकारं दक्षिणामुखम्। चोकारं पश्चिमे तद्वद्दकारं चोत्तरे तथा। यात्कारं मूर्ध्नि विज्ञेयं सर्वं व्याप्य स्थितं सदा॥ गायत्रीतन्त्रे दशमब्राह्मणपटले॥ अधुना सम्प्रवक्ष्यामि गायत्र्याः पूजनं प्रिये!। उपासितस्य मन्त्रस्य यथा पूजा विधीयते। गायत्र्याः पूजनं भद्रे! तथैव कथयामि ते। शिवपूजा शक्तिपूजा विष्णुपूजादिका च या। सर्वा पूजा वृथा भद्रे! गायत्रीपूजनं विना। पूजामण्डपमागत्य गायत्र्याचमनं चरेत्। गायत्र्याः प्रथमं वीजं पूजास्थाने न्यसेत् सुधीः। कुशा-सने चोपविश्य प्राणायामं समाचरेत्। पूरकादिक्रमेणैव गा-यत्र्याः प्राणधारणम्। सामान्यार्घ्यं ततः कुर्य्यात् पूर्वोक्तक्रम-

वर्त्मना। गायत्रीं सकृदुच्चार्य्य ताम्रपात्रे जलं क्षिपेत्। तीर्थमावाह्य यत्नेन गायत्रीं प्रजपेत्ततः। ततो धेन्वामृतीकृत्य प्रथमाष्टाक्षरेण वै। द्वितीयाष्टाक्षरे विप्रो जलं वीक्ष्य प्रशान्तये। तृतीयाष्टाक्षरे देवि! जलैरात्मविशोधनम्। अनेनैव विधानेन सृष्टिस्थितिलयात्मकम्। पूजनं परमेशानि! तदेव फलदायकम्। यन्त्रन्यासध्यानादिकन्तु पूर्वमेव लिखितम्॥ सौरं पीठं यजेत्तत्र दीप्तादिनवशक्तिभिः। तत्र सर्वतोभद्रमण्डले दीप्तादयस्तु चतुर्दशपटले॥ यथा॥ दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला पुनः। अघोरा विद्युता सर्वतोमुखी पीठशक्तयः। सौरपीठं सूर्य्यप्रकरणेऽनुसन्धेयम्॥ मूलमन्त्रेण क्लृप्तायां मूर्त्तौ देवीं प्रपूजयेत्॥ निर्वाणतन्त्रे॥ जीवन्यासादिकं कृत्वा पूजयेत्तां त्रिवर्गदाम्। हालाहलादिकं मन्त्रं समस्तं परमेश्वरि!। समुच्चार्य्य वदेत् पाद्यं सावित्रीं ङेयुतां ततः। त्यागात्मकमनुं पश्चाद् यथा विभवविस्तरैः। पूजयेद्बहुयत्नेन चान्यथा ब्राह्मणः स्मृतः। शारदायाम्॥ कोणेषु त्रिषु सम्पूज्याः ब्राह्मराद्याः शक्तयो वहिः। आदित्याद्यास्ततः पूज्या ऊषादिसहिताः क्रमात्। आदित्याद्याश्चोषादयश्च सूर्य्यप्रकरणे वेदितव्याः। ततः षडङ्गान्यभ्यर्च्चेत् केशरेषु यथाविधि। प्रह्लादिनीं प्रभां पश्चान्नित्यां विश्वम्भरां पुनः। विलासिनीप्रभावत्यावूर्षां शान्तां यजेत् पुनः। कान्ति दुर्गासरस्वत्यौ विद्यारूपास्ततः परम्। विशालासहितामीशां व्यापिनीं विमलां जपेत्। तमोऽपहारिणीं सूक्ष्मां विश्वयोनिं जयावहाम्। पद्मालयां परां शोभां पद्मरूपां ततोऽर्च्चयेत्। ब्राह्मराद्याः सारुणा वाह्ये पूजयेत् प्रोक्तलक्षणाः। ततोऽभ्यर्च्चेद् ग्रहान् वाह्ये शक्रादीनायुधैः सह। इत्थमावरणैर्देवीं दशभिः परिपूजयेत्। धर्म्मार्थकाममोक्षाणां भोक्ता स्याद्द्विजसत्तमः॥ निर्वाणतन्त्रे॥ द्रव्याभावे वरारोहे! पाद्याद्यैरुदकात्मकैः। पूज-

यित्वा जपेद्देवीं गायत्रीं परमाक्षरीम्। एतेन द्रव्याभावे जला-
दिना पूजायां कर्त्तव्यायामपि एतत्पाद्यमित्यादिवक्तव्यमतएव
स्मृतिः। तैलं प्रतिनिधिं कुर्य्यात् यज्ञार्थे याज्ञिको यदि। प्रक्ष-
ल्यैव तदा हेतोर्ब्रूयाद् घृतवतीमिति। तेनैतत्पाद्यार्थं जलमिति
वाक्यमनुशासनविरुद्धमिति। जपफलमपि तत्रैव॥ दशभिर्जन्म-
जनितं शतेनापि पुराकृतम्। त्रिजन्मजं सहस्रेण गायत्री हन्ति
पातकम्। जपे तु विशेष उक्तो गायत्रीतन्त्रे॥ गायत्र्या पुटितं
कृत्वा इष्टमन्त्रं जपेच्छतम्। इष्टमन्त्रेण पुटितं गायत्रीं प्रजपे-
च्छतम्। एतज्जपं महेशानि! आधाराधेयमुत्तमम्। विनाधारं
महेशानि! आधेयेन विना तथा। नाधारं सिध्यते भद्रे! आधे-
यञ्च न सिध्यति। सर्वेषु विष्णुमन्त्रेषु सौरगाणपते तथा॥
आधाराधेयभावस्तु सर्वत्र वरवर्णिनि!। साङ्गनात्लोचनाद्
यस्तु झटिति प्रविशेद् गृहम्। न पश्येच्चक्षुषा किञ्चिद् गृह-
मध्येषु यत् स्थितम्। एवमाधारमाधेयं यः करोति द्विजातिकः।
अङ्कुरो जायते भद्रे! लक्षजापान्न संशयः। नच जीवात्मनोर्भिन्ना
गायत्री ब्रह्मरूपिणी। गायत्री न हि भिन्ना स्याज्जीवात्मा तत्स्व-
रूपिणी। सर्वदा उभयोरैक्यं नारिकेले यथोदकम्। द्विजातिः
कथ्यते देवभाव एव हि ब्राह्मणः। यथा स्पर्शमणिस्पर्शात्
ताम्रोऽपि काञ्चनं सदा। गायत्रीसहित आत्मा द्विजात्मा तेन
ईरितः॥ गायत्रीतन्त्रे॥ जपेत् सूर्य्यमुखो विप्रो नास्ति दिङ्नियमः
क्वचित्। गायत्रीं प्रजपेन्नित्यं त्रिसन्ध्यं नात्र संशयः। अशौचे
तु महेशानि! गायत्रीं मनसा स्मरेत्। गायत्री बहुरूपा च
त्रिसन्ध्या ध्यानमेव॥ तत्रैव॥ ॐ महेश्वरवदनोत्पन्ना विष्णो
र्हृदयसंस्थिता। ब्रह्मणा समनुज्ञाता गच्छ देवि! यथेच्छया।
इति मन्त्रं समुच्चार्य्य देव्या वामकरे बुधः। समर्पयेज्जपफलं
ततः स्तोत्रादिकं पठेत्॥ अथ गायत्रीकवचम्॥ श्रीदेव्युवाच॥

देवदेव ! महादेव ! संसारार्णवतारक ! । गायत्रीकवचं देव ! कृपया कथय प्रभो ! ॥ श्रीदेवदेव उवाच ॥ मूलाधारेषु या नित्या कुण्डली तत्त्वरूपिणी । सूक्ष्मातिसूक्ष्मा परमा विसतन्तुस्वरूपिणी । विद्युत्पुञ्जप्रतीकाशा कुण्डलाकृतिरूपिणी । परमब्रह्मगृहिणी पञ्चाशद्वर्णरूपिणी । शिवस्य नर्त्तकी नित्या परंब्रह्मप्रपूजिता । ब्रह्मणः सैव गायत्री सच्चिदानन्दरूपिणी । तद्भ्रमावर्त्तवातोऽयं प्राणात्मा नित्यनूतनः । नित्यं तिष्ठतु सानन्दा कुण्डली भवविग्रहे । अतिगोप्यं महत् पुण्यं त्रिकोटीतीर्थसंयुतम् । सर्वयज्ञमयं देवि ! सर्वदानमयं सदा । सर्वज्ञानमयं देवि ! परंब्रह्ममयं सदा । कवचं कथयाम्यद्य पार्वति ! प्राणवल्लभे ! । ओं ओं भूः ओं ओं ओं ओं भुवः ओं ओं ओं ओं स्वः ओं ओं ओं ओं त ओं ओं त्स ओं ओं वि ओं ओं तु ओं ओं वं ओं ओं रे ओं ओं णि ओं ओं यं ओं ओं भ ओं ओं र्गो ओं ओं दे ओं ओं व ओं ओं स्य ओं ओं धी ओं ओं म ओं ओं हि ओं ओं धि ओं ओं यो ओं ओं यो ओं ओं नः ओं ओं प्र ओं ओं चो ओं ओं द ओं ओं यात् ओं ओं ओं ओं । ओंः भूः ओं पातु मे मूलं चतुर्दलसमन्वितम् । ओं भुवः ओं पातु मे लिङ्गं षड्दलसमन्वितम् । ओं स्वः ओं पातु मे कण्ठं साकाशं दलषोड़शम् । ओं त ओं पातु मे रूपं ब्रह्मण्यकारणं परम् । ओं त्स ओं वदनं पातु रसनासंयुतं मम । ओं वि ओं पातु मे गन्धं सदा शरीरसंयुतम् । ओं तु ओं पातु मे स्पर्शं शरीरस्य च कारणम् । ओं वं ओं पातु मे शब्दं शब्दविग्रहकारणम् । ओं रे ओं पातु मे नित्यं त्वचं शरीररक्षकम् । ओं णि ओं पातु मे अक्षं सर्वतत्त्वैककारणम् । ओं यं ओं पातु मे श्रोत्रं श्रवणस्य च कारणम् । ओं भ ओं पातु मे घ्राणं गन्धोपादानकारणम् । ओं र्गो ओं पातु मे वाक्यं सभायां शब्दरूपिणी ।

ओँ दे ओँ पातु मे बाहुयुगलं ब्रह्मकारणम्। ओँ व ओँ पातु मे पादयुगलं ब्रह्मकारणम्। ओँ स्य ओँ पातु मे लिङ्गं सजलं षड़्दलैर्युतम्। ओँ धी ओँ पातु मे नित्यं प्रकृतिं शब्दकारणम्। ओँ म ओँ पातु मे नित्यं मनोब्रह्मस्वरूपिणीम्। ओँ हि ओँ पातु मे बुद्धिं परंब्रह्ममयं सदा। ओँ धि ओँ पातु मे नित्यमहङ्कारं यथा तथा। ओँ यो ओँ पातु मे नित्यं पृथिवीं पार्थिवं वपुः। ओँ यो ओँ पातु मे नित्यं जलं सर्वत्र सर्वदा। ओँ नः ओँ पातु मे नित्यं तेजःपुञ्जं यथा तथा। ओँ प्र ओँ पातु मे नित्यमनिलं शरीरकारणम्। ओँ चो ॐ पातु मे नित्यमाकाशं शशिसन्निभम्। ॐ द ओँ पातु मे जिह्वां जपयज्ञस्य कारणम्। ओँ यात् ओँ पातु मे चित्तं शिवज्ञानमयं सदा। ओँ तत्त्वानि पातु मे नित्यं गायत्री परदेवता। ओँ भूर्भुवःस्वः पातु मे नित्यं ब्रह्माणी जठरं क्षुधा। त्वष्टा मे सततं पातु ब्रह्माणी भूर्भवःस्वरः। अस्याः श्रीगायत्र्याः परं ब्रह्म ऋषिर्ऋग्यजुःसामाथर्वाँश्छन्दांसि श्रीगायत्रीब्राह्मणी देवता धर्मार्थकाममोक्षार्थे विनियोगः॥ ततो गायत्रीं पठेत्। कामक्रोधादिकं सर्वं स्मरणाद् याति साम्यताम्। इदं कवचमज्ञात्वा गायत्रीं प्रजपेद् यदि। शतकोटिजपेनैव न सिद्धिर्जायते प्रिये!। गायत्रीवाचनात् सर्वं स्मरणं सिध्यति ध्रुवम्। पठित्वा कवचं विप्रो गायत्रीं सकृदुच्चरेत्। सर्वपापविनिर्मुक्तो जीवन्मुक्तो भवेद्द्विजः। इदं कवचमज्ञात्वा कवचान्यं पठेत्तु यः। सर्वं तस्य वृथा देवि! त्रैलोक्यमङ्गलादिकम्। गायत्रीकवचं यस्य जिह्वायां विद्यते सदा। तदामृतमयी जिह्वा पवित्रा जपपूजने। इदं कवचमज्ञात्वा ब्रह्मविद्यां जपेद् यदि। व्यर्थं भवति चार्वङ्गि! तज्जपं वनरोदनम्। ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महान्ति पातकान्येव स्मरणा-

ब्राह्ममाप्नुयुः। त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रविनिर्म्मितम्। वात-पित्तकफैर्युक्तं स्थूलदेहं तदुच्यते। सूक्ष्मं ज्योतिर्मयं देहं पञ्च-भूतात्मकं विदुः। महापद्मवनान्तःस्थं सर्व्वावयवसंयुतम्। आधाराधेयसम्बन्धाद् गायत्री ब्राह्मणः स्वयम्। अतएव परं ब्रह्म कथ्यते चोभयात्मकम्। ब्राह्मणस्यैव जीवात्मा गायत्री-सहितं वपुः। आत्मनो हृदयाम्भोजे प्रदीपकलिकोपमम्। निर्धूमञ्च यथा ज्योतिस्तैलाग्निवर्त्तियोगतः। तज्ज्योतिः परमं ब्रह्म स एव परमः शिवः। गायत्रीकवचन्यासं मातृकास्थान-सन्धिषु। यः कृत्वा ब्राह्मणः श्रेष्ठो ह्यन्यन्यासं समाचरेत्। अन्यन्यासस्तदा सिद्धो ह्यन्यथारण्यरोदनम्। गायत्रीन्यास-मात्रेण परंब्रह्ममयो द्विजः। इदं कवचमज्ञात्वा ब्रह्मचर्य्यं करोति यः। ब्रह्मचर्य्यं भवेद्व्यर्थं गायत्रीकवचं विना। कव-चस्य प्रसादेन ब्राह्मणो ज्वलदग्निवत्। कवचं परमेशानि! सृष्टिस्थितिलयात्मकम्। कवचस्य प्रसादेन ब्रह्मा सृष्टिं करोति हि। स्थितिञ्च कुरुते विष्णू रुद्रोऽहं लयकारणः। अन्यद्धि क-वचं देवि! सृष्टिस्थितिलयं विना। इदमेव ब्रह्ममयं सृष्टि-स्थितिलयात्मकम्। कवचं ब्राह्मणो नाम प्रातरुत्थाय यः पठेत्। गायत्रीञ्च सकृत् स्मृत्वा जपलक्षफलं लभेत्। गायत्रीं दशधा जप्त्वा शतलक्षफलं लभेत्। एवं क्रमेण गायत्रीं शतधा प्रजपेद् यदि। शतलक्षफलं प्राप्य विहरेद्देववद्भुवि। ग्रहणे चन्द्रसूर्य्यस्य पठित्वा कवचं द्विजः। सकृद् यदि जपेद्विद्वान् गायत्रीं परमाक्षरीम्। तत्क्षणात् स भवेत् सिद्धो ब्रह्मसा-युज्यमाप्नुयात्। इदं कवचमज्ञात्वा गायत्रीं प्रजपेत्तु यः। जप एव स एव स्यान्निस्तेजा न च सिद्धिदः। यः पठेत् कवचं देवि! सततं शिवसन्निधौ। सन्निधौ विष्णुदेवस्य कवचं शक्तिसन्निधौ। तेजःपुञ्जमयो विप्रस्तत्क्षणाज्जायते ध्रुवम्॥

इत्यागमसन्दर्भे ज्ञानदर्पणे गायत्रीब्राह्मणसर्वस्वे देवदेवीसंवादे गायत्रीकवचं समाप्तम्॥

अथास्याः पुरश्चरणम्॥ शारदायाम्॥ लक्षं तत्त्वविधानेन भिक्षाशी विजितेन्द्रियः। क्षीरौदनं तिलान् दूर्वाः क्षीरद्रुमसमिद्वरान्। पृथक् सहस्रत्रितयं जुहुयान्मन्त्रसिद्धये। लक्षं तत्त्वविधानेनेत्यनेन चतुर्विंशतिलक्षं पुरश्चरणमुक्तम्। विधानेन पुरश्चरणोक्तविधानेन। क्षीरौदनमिति क्षीरमोदनम्। तिलान् दूर्वाश्चेति द्रव्यचतुष्टयम्। क्षीरद्रुमेति अश्वत्थोडुम्बरप्लक्षवटा इति द्रव्यचतुष्टयम्। पृथक् सहस्रत्रितयमित्यनेन चतुर्विंशतिसहस्रहोमः॥ निर्वाणतन्त्रे तु॥ विधिवल्लक्षजापेन पुरश्चरणमीरितम्। तद्दशांशं हुनेत् पश्चात् पुरश्चरणसिद्धये। होमस्य तु दशांशेन तर्पणं समुदीरितम्। तर्पणस्य दशांशेन चाभिषेकं ततः परम्। अभिषेकदशांशेन कुर्य्याद्ब्राह्मणभोजनम्। ततः सिद्धो भवेद्देवि! त्रिवर्गफलसाधकः। माहात्म्यं चास्य मन्त्रस्य चतुर्वेदेन भाषितम्॥ अथ काम्यकर्माणि शारदायाम्। तत्त्वसंख्यसहस्राणि मन्त्रविज्जुहुयात्तिलैः। सर्वपापविनिर्मुक्तो दीर्घमायुः स विन्दति। आयुषे साज्यहविषा केवलेनाथ सर्पिषा। दूर्वात्रिकैस्तिलैर्मन्त्री जुहुयात् त्रिसहस्रकम्। अरुणाब्जैस्त्रिमध्वक्तैर्जुहुयादयुतं ततः। महालक्ष्मीर्भवेत्तस्य षण्मासान्नात्र संशयः। ब्रह्मश्रिये प्रजुहुयात् प्रसूनैर्ब्रह्मवृक्षजैः। बहुना किमिहोक्तेन यथावत् साधुसाधिता। द्विजन्मनामियं विद्या सिद्धिकामदुघा मता॥ अथ तान्त्रिकगायत्री अन्नदाकल्पे पञ्चमपटले॥ मोचनी सर्वपापानां शोषणी सकलापदाम्। दारिद्र्यदमनी नित्यं सुखमोक्षप्रदायिनी। एकोच्चारेण सकलं ब्रह्महत्यादिपातकम्। नाशमायाति नियतं जन्मान्तरसमुद्भवम्। दशभिर्दशजन्मोत्थं शतेन शतजन्मजम्। सहस्रेण सहस्रोत्थ-

मित्थं पातकनाशिनी। सर्व्वागमानां साङ्गानां सारभूता सना-
तनी। चित्कलेयं समाख्याता सहस्रेण पुरस्क्रिया॥ इति
पुरश्चरणम्॥ ऋषिर्ब्रह्मास्य गायत्रीच्छन्दो देवी प्रकीर्त्तितम्।
देवतान्नप्रदा देवी चतुर्व्वर्गप्रदायिनी॥ अन्नप्रदेति स्वीयेष्टदेवतो-
पलक्षणम्॥ मायाबीजं नमः शक्तिः कीलकं स्यात् प्रचोदयात्॥
ध्यायेत् कालत्रये देवीं त्रिगुणां गुणभेदतः। प्रातः ब्राह्मी रक्त-
वर्णा द्विभुजा च कुमारिका। कमण्डलुं तीर्थपूर्णमक्षमालाञ्च
बिभ्रती। कृष्णाजिनाम्बरधरा हंसारूढ़ा शुचिस्मिता। मध्याह्ने
सा श्यामवर्णा वैष्णवी च चतुर्भुजा। शङ्खचक्रगदापद्मधारिणी
गरुड़ासना। पीनोन्नतकुचद्वन्द्वा वनमालाविभूषिता। युवती
च सदा ध्येया मध्ये मार्त्तण्डमण्डले। सायं सरस्वतीरूपा
चन्द्रार्द्धकृतशेखरा। अर्द्धास्तमितमार्त्तण्डे ध्येया सतत-
यौवना। गायत्री तु तन्त्रसारे सर्व्वासां देवतानां प्रायेण
द्रष्टव्या॥ अन्नदाकल्पे॥ पूजार्थं जलमानीय तीर्थं नत्वा यथा-
विधि। देवीं ध्यायन् पठन् स्तोत्रं यागमण्डपमाविशेत्॥ मत्स्य-
सूक्ते पञ्चदशपटले च। दैशिको विधिवत् स्नात्वा कृत्वा पूर्व्वा-
ह्निकीः क्रियाः। यायादलङ्कृतो मन्त्री यागार्थं यागमण्डपम्॥
रुद्रजामले पूर्व्वखण्डे द्वितीयपटलेऽपि॥ पूजामण्डपमागत्य
प्रक्षाल्याङ्घ्रिकरौ ततः। अस्त्रेण द्वारमभ्युक्ष्य वामदक्षिण-
शाखयोः। गङ्गायै यमुनायै च नम उच्चार्य्य पूजयेत्। ऊर्द्ध-
द्वारे श्रियै अधोदेहल्यै च नमस्ततः॥ यागमण्डपमित्यत्र
लक्षणया यागमण्डपसमीपमिति लभ्यमन्यथा अङ्गं सङ्कोचय-
न्नन्तः प्रविशेद्दक्षिणाङ्घ्रिणा इति न सङ्गच्छते॥ मत्स्य-
सूक्ते॥ आचम्य विधिवत्तत्र सूर्य्यार्घ्यन्तु विधाय च। पश्चिम-
द्वारमासाद्य प्रविशेद्दक्षिणाङ्घ्रिणा। द्वारानस्त्राम्बुना प्रोक्ष्य द्वार-
पूजां समाचरेत्। ऊर्द्धाधःक्रमभावेन गणेशं विघ्ननाशनम्।

महालक्ष्मीं महामायां तथा देवीं सरस्वतीम्। चेत्रेशञ्च तथा गङ्गां यमुनां पुष्पवारिभिः। अस्त्रमन्त्रेण देवेशि! देहलीञ्च समर्चयेत्॥ अस्त्रमन्त्रेण अस्त्राय फडिति मन्त्रमुच्चार्य्य द्वार-मभ्युच्येत्यर्थः॥ शारदायाम्॥ ऊर्द्धोडुम्बरके विघ्नं महालक्ष्मीं सरस्वतीम्। ततो दक्षिणशाखायां विघ्नं चेत्रेशमन्यतः॥ ऊर्द्धो-डुम्बरके देहल्यां गृहदक्षिणद्वारि देहल्यां कोणद्वये विघ्नं सरस्वतीं मध्ये महालक्ष्मीं पूजयेदिति तात्पर्य्यम्। दक्षिण-शाखायां विघ्नम् अन्यतः वामशाखायां चेत्रेशमर्च्चयेदित्यर्थः। तयोः पार्श्वगते गङ्गायमुने पुष्पवारिभिः। देहल्यामर्च्चयेदस्त्रं प्रतिद्वारमिति क्रमात्॥ तयोः पार्श्वे इति विघ्नचेत्रेशयोः पार्श्वे। दुर्गापूजनमप्युक्तं राघवभट्टधृतेन॥ कोणेषु विघ्नं दुर्गाञ्च वाणीं चेत्रेशमर्च्चयेत्॥ एतेषां मन्त्रस्तु॥ तारं सविन्दुमानाद्यच्चरं चतुर्थ्यन्तं नाम नमोऽन्वितम्। तदुक्तमुड्डामरेश्वरे॥ ओङ्कारं विन्दुसंयुक्तं नामधेयाद्यमच्चरम्। ङेयुतं नाम सर्व्वेषां मन्त्रो देवि! नमोऽन्वितः॥ वैष्णवमते द्वारपूजा तु राघवभट्टेनोक्ता यथा॥ वैष्णवादिप्रभेदेन द्वारपालान् समर्च्चयेत्। प्रतिद्वारं पार्श्व-योस्तु द्वौ द्वावष्टाविति क्रमात्। नन्दः सुनन्दश्चण्डाख्यः प्रचण्ड-श्चण्डनायकः। प्रबलो भद्रनामा च सुभद्रो वैष्णवा मताः॥ शैव-द्वारपालास्तु॥ अथ नन्दिमहाकाली गणेशवृषभौ पुनः। ततो भृङ्गरिटिः स्कन्दः पार्व्वतीशश्च सप्तमः। चण्डेश्वरोऽष्टमः शैवा द्वारपालाः क्रमादमी॥ गणेशस्य तु॥ वक्रतुण्डैकदंष्ट्रौ च महो-दरगजाननौ। लम्बोदराख्यश्च कठो विघ्नराजश्च सप्तमः। धूम्र-राजोऽष्टमो ज्ञेया गाणपत्या इति क्रमात्। ब्राह्म्याद्या मातरः प्रोक्ताः शाक्तेया द्वारपालकाः॥ शारदायाम्॥ अनन्तरं साध-केन्द्रो दिव्यदृष्ट्यावलोकनात्। दिव्यानुत्सारयेद्विघ्नानस्त्राद्भिरा-न्तरीच्चगान्। पार्ष्णिघातैस्त्रिभिर्भौमानिति विघ्नान् निवारयेत्।

किञ्चित् स्पृशन् वामशाखां देहलीं लङ्घयेत्ततः। अङ्गं सङ्कोचयन्नन्तः प्रविशेद्दक्षिणाङ्घ्रिणा। मत्स्यसूक्तेऽपि॥ अवलोक्य दिव्यदृष्ट्या विघ्नानुत्सारयेत्ततः। त्रिः कृत्वा च पदाघातं दत्त्वा तालत्रयं ततः। अङ्गं सङ्कोचयन्नन्तः प्रविशेत् साधकोत्तमः॥ अथासनम्। शाक्तानन्दतरङ्गिणीधृतगौरीजामले॥ सलिले यदि कुर्वीत देवतानां प्रपूजनम्। तथाप्यासनमासीनो नोत्थितस्तु तथाचरेत्। आसनं कल्पयित्वा तु मनसा पूजयेज्जले॥ आसनस्थो जपेत् सम्यङ्मन्त्रार्थगतमानसः॥ सम्मोहनतन्त्रे॥ रक्तासनोपविष्टस्तु लाक्षागुरुगृहे स्थितः। नमःकल्पितरक्तो वा साधकः स्थिरमानसः। तूलकम्बलवस्त्राणां सिंहव्याघ्रमृगाजिनम्। कल्पयेदासनं धीमान् सौभाग्यज्ञानवर्द्धनम्। कौशेयं वाथ वा चर्म तैलतौलमथापि वा। शरपत्रं तालपत्रं कम्बलं दारवासनम्॥ कृष्णाजिने ज्ञानसिद्धिर्मुक्तिः स्याद्व्याघ्रचर्म्मणि। कृष्णाजिने गृहस्थानां नाधिकारः कथञ्चन। नादीक्षितो विशेज्जातु कृष्णसाराजिने गृही। विशेद्यतिर्वनस्थश्च ब्रह्मचारी च भिक्षुकः। वस्त्रासने व्याधिनाशः कम्बलं दुःखमोचनम्। जपध्यानतपोहानिं वस्त्रासनं करोति हि॥ अत्र वस्त्रनिषेधः केवलवस्त्रपरः अन्यथा विरोधापत्तेः। कुशासने भवेदायुर्मोक्षः स्याद्व्याघ्रचर्म्मणि। अजिने तु भवेत् पुत्री कम्बले सिद्धिरुत्तमा। शान्तिके धवलः प्रोक्तः सर्वार्थं चित्रकम्बले। स्यात् पौष्टिके तु कौशेयं कम्बले दुःखमोचनम्। त्रिपुरापूजने देवि! प्रशस्तं रक्तकम्बलम्। नैतद्द्विहस्ततो दीर्घं सार्द्धहस्तान्न विस्तृतम्। न त्र्यङ्गुलात् समुच्छ्रायं पूजाकर्म्मणि संग्रहम्। आसनञ्च ततः कुर्य्यान्नातिनीचं न चोच्छ्रितम्॥ गन्धर्वतन्त्रे॥ धरण्यां दुःखसम्भूतिर्दौर्भाग्यं दारुजासने। आम्रनिम्बकदम्बानामासनं वंशनाशनम्। वकुले किंशुके चैव पनसेषु हतश्रियः। वंशेष्टका

च धरणी तृणपल्लवनिर्म्मितम्। वर्ज्जयेदासनं मन्त्री दारिद्र्यव्याधिदुःखदम्॥ एतेषां फलान्तरमुक्तम्॥ धरण्यां दुःखसम्भूतिर्दौर्भाग्यं दारुजासने। वंशासने दरिद्रः स्यात् पाषाणे व्याधिपीड़नम्। तृणासने यशोहानिः पल्लवे चित्तविभ्रमः। जपध्यानतपोहानिर्वस्त्रासने विधीयते। मृद्वासने यदा मन्त्री चैलाजिनकुशोत्तरे। नादौच्चितो विशेज्जातु कृष्णाजिनासने गृही। विशेद्यतिर्वनस्थो वा ब्रह्मचारी च भिक्षुकः। इत्युक्तम्॥ दारुजासनं विशेषयति गन्धर्वतन्त्रे॥ गाम्भारीनिर्म्मितं शस्तं नानादारुमयं शुभम्। चतुर्विंशत्यङ्गुलं हि दीर्घं काष्ठासनं प्रिये!। षोड़शाङ्गुलविस्तीर्णमुच्छ्राये चतुरङ्गुलम्। कम्बलं चार्म्मणं शैलं महामायाप्रपूजने। प्रशस्तमासनं देवि! कथितं वरवर्णिनि!। मुण्डमालातन्त्रे तृतीयपटले॥ व्याघ्राजिनं सर्वसिद्ध्यै ज्ञानसिद्ध्यै मृगाजिनम्। वस्त्रासनं रोगहरं वेत्रजं प्रीतिवर्द्धनम्। कौशेयं पुष्टिदं प्रोक्तं कम्बलं सर्वसिद्धिदम्। शुक्लं वा यदि वा कृष्णं विशेषाद्रक्तकम्बलम्। उत्तराम्नायासनन्तु तत्रैव॥ मृदु कोमलमास्तीर्णं संग्रामपतितं हि यत्। जन्तुव्यापादितं वापि मृतं वानरमासनम्। गर्भच्युतां त्वचं वापि नारीणां योनिजां त्वचम्। सर्वसिद्धिप्रदं देवि! सर्वतोऽतिसमृद्धिदम्। त्वचं वा यौवनस्थानां कुर्य्याद्वीरतरासनम्। श्मशानकाष्ठघटितं पीठं वा दारुजं शुभम्। नादौच्चितो विशेज्जातु कृष्णसाराजिने गृही। उदासीनवदासीनः स्नातकब्रह्मचारिणाम्। कुशाजिनाम्बरैणाढ्यं चतुरस्रं समन्ततः। एकहस्तं द्विहस्तं वा चतुरस्रं समाचरेत्। कर्म्मविशेषे आसनविशेषस्तु समयाचारतन्त्रे द्वितीयपटले॥ मेषासनन्तु वश्यार्थमाकृष्टौ व्याघ्रचर्म्म च। शान्तौ मृगाजिनं शस्तं मोक्षार्थं व्याघ्रचर्म्म च। गोचर्म्म स्तम्भने देवि! सम्भवे वाजिचर्म्म च। चर्म्मोष्ट्रस्य तु

पोच्चाटे विद्वेषे स्थानचर्म्म च। मारणे माहिषं चर्म्म कर्म्मोद्दिष्टं समाचरेत्। सर्व्वकामार्थदं देवि! वस्त्रपट्टासनं तथा। ऊर्णासनं कम्बलं वा सर्व्वकर्म्मसु पूजितम्। दुःखदारिद्र्यकरणं काष्ठपाषाणजासनम्। स्वर्णादिरत्नजं देवि! महासौभाग्यवर्द्धनम्। शृणु देवि! विशेषेण उत्तराम्नायस्य चासनम्। येनाशु लभते पुण्यं फलं देवस्य दुर्लभम्। शवासनन्तु सुभगे! मृतमुण्डासनं तथा। श्मशानमासनं देवि! भगस्य दर्शनं तथा। भगदर्शासनञ्चैव मैथुनासनकं तथा। कृतमैथुनकं वापि वाञ्छितार्थफलप्रदम्॥ मात्स्ये पञ्चदशे॥ रुरुचर्मणि सत्काम: श्रीमोच्चौ व्याघ्रचर्मणि। शक्तेः शस्तं कृष्णचर्म कृष्णव्याघ्रस्य भाविनि!। प्रस्तारम्लेच्छिले चैव रक्ते पीते च वाससी। कम्बले द्रुतसिद्धिः स्याद्भद्रदारुमयेऽपि च। तथा। योगासनञ्च कूर्मञ्च विशेत् चौणीमनुस्मरन्॥ योगसारे द्वितीयपरिच्छेदे॥ कम्बलं कोमलञ्चैव कौशञ्च दारवं तथा। एतेषामासनं प्रोक्तं चर्मासनं तथैव च। लोम्नि चैव यदासीनस्तदा सर्व्वं विनश्यति। लोमदर्शनमात्रेण सिद्धिहानिः प्रजायते। काम्यार्थं कम्बलं प्रोक्तं श्रेष्ठं स्याद्रक्तकम्बलम्। कृष्णाजिने ज्ञानसिद्धिः श्रीमोच्चौ व्याघ्रचर्मणि। कुशासने मन्त्रसिद्धिर्नात्र कार्य्या विचारणा॥ रुमयाचारतन्त्रे॥ पृथ्वीमन्त्रस्य च ऋषिर्मेरुपृष्ठ उदाहृतः। सुतलञ्च तथा छन्दः कूर्मो देवोऽस्य सुन्दरि!। आसने विनियोगः स्याद्बद्धपद्मासने विशेत्। बद्धपद्मासन इत्युपलक्षणम्॥ पद्मस्वस्तिकवीरादिष्वेकासनसमास्थितः। जपार्च्चनादिकं कुर्य्यादन्यथा निष्फलं भवेत्। इति राघवभट्टवचनात्॥ आसनन्तु यतीनां कूर्माकारमन्येषां चतुष्कोणम्। यथा राघवभट्टधृतम्॥ यतीनामासनं स्लक्ष्णं कूर्माकारन्तु कारयेत्। अन्येषान्तु चतुष्पादं चतुरस्रन्तु कारयेत्॥ तथा॥ दानमाचमनं होमं भोजनं देवता-

र्जनम्। प्रौढ़पादो न कुर्वीत स्वाध्यायञ्चैव तर्पणम्॥ प्रौढ़पाद-लक्षणमपि तत्रैव। आसनारूढपादस्तु जानुनोर्वाथ जङ्घयोः। कृतावसक्तकोषस्तु प्रौढ़पादः स उच्यते॥ इति राघवभट्टधृतप्रौढ़-पादलक्षणम्॥ गोरक्षसंहितायाम्॥ आसनानि च तावन्ति यावन्तो जीवजन्तवः। एतेषामखिलान् भेदान् विजानाति महेश्वरः। चतुरशीतिलक्षाणामेकैकं समुदाहृतम्। तथा शिवेन पीठानां षोड़शानां शतं कृतम्। आसनेषु समस्तेषु इयमेतदुदाहृतम्। एकं सिद्धासनं प्रोक्तं द्वितीयं कमलासनम्। योनिस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढ़ं विन्यसेत् मेढ्रे पाद-मथैकमेव हृदयं कृत्वा समं विग्रहम्। स्थाणुः संयमितेन्द्रियोऽ-न्यनदृशा पश्यन् भ्रुवोरन्तरम एतन्मोक्षकपाटभेदनकरं सिद्धा-सनं प्रोच्यते॥ इति सिद्धासनम्॥ १॥ वामोरूपरि दक्षिणं नियमतः संस्थाप्य वामं तथा दक्षोरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां धृतम्। अङ्गुष्ठं हृदये निधाय चिवुकं नासाग्र-मालोकयेत् एतद्व्याधिविकारनाशनकरं पद्मासनं प्रोच्यते॥ अन्यदत्रापि॥ वामोरूपरि दक्षिणं हि चरणं संस्थाप्य वामं तथा-प्यन्योरूपरि तस्य वन्धनविधौ धृत्वा कराभ्यां दृढ़म्। अङ्गुष्ठौ हृदये निधाय चिवुकं नासाग्रमालोकयेदेतद्व्याधिविनाशकारि यमिनां पद्मासनं प्रोच्यते॥ २॥ इति पद्मासनम्॥ इत्याद्या-सनानि योगोपयोगीन्येव। पूजायां नैतेषां प्रयोजनम्॥ मत्स्य-सूक्ते॥ पञ्चगव्येन संशोध्य मण्डपं यागभूमिकम्। शरेण प्रोक्षणं कुर्य्यान्मूलमन्त्रेण वीक्षणम्। विकिरान् विकिरेत्तत्र सप्तजप्तान् शराणुना। धूपयेदन्तरे पश्चाच्चन्दनागुरुभिस्तथा॥ तथा॥ आत्मनो दक्षिणे भागे पूजाद्रव्याणि स्थापयेत्। सव्ये सुवासितं कुम्भं तीर्थतोयेन पूरितम्। वस्त्रपूतं ततः कार्य्यं रात्रि-तोयं विवर्ज्जयेत्॥ शारदायाम्॥ प्रक्षालनाय करयोः पतद्ग्रा

पात्रं निवेशयेत्। घृतप्रज्वालितान् दीपान् स्थापयेत् परितः शुभान्॥ पाद्यार्घ्याचमनमधुपर्काचमनपात्राण्यप्यधुनैव स्थापयेत्॥ देवीपुराणे॥ हेमराजतताम्राणि मृच्छिलाशैलजानि च। बलिदानादिपात्राणि शुभरेखोत्कराणि च। अर्घ्यनैवेद्यपूजार्थं बलिदाने प्रकल्पयेदिति। शिवरहस्ये शेषार्द्धम्॥ हैमपात्राणि सर्वाणि विहितानि भवन्तु मे। अर्घ्यं दत्त्वा तु रौप्येण आयूराज्यसुतांल्लभेत्। ताम्रपात्रेण सौभाग्यं धर्मं मृण्मयसम्भवे। सर्वाभावे तु माहेयं स्वहस्तघटितं यदि। माहेयं मृण्मयम्॥ आसनं चार्घ्यपात्रञ्च भग्नमासादयेत्ततः। सर्वत्र स्वर्णकं ताम्रमन्यमार्गे ततोऽधिकम्। पात्राणामादरः कार्य्यः पात्राण्येवोत्तमादरः। बलिहोमक्रियार्थं हि विना पीठन्तु सिध्यति। षट्त्रिंशदङ्गुलं पात्रमुत्तमं परिकीर्त्तितम्। मध्यमं तत्त्रिभागोनं कनिष्ठं द्वादशाङ्गुलम्॥ चतुर्विंशाङ्गुलं मध्यं कनिष्ठं द्वादशाङ्गुलमिति क्वचित् पाठः। वस्वङ्गुलविहीनन्तु न पात्रं कारयेद्बुध इति पाठान्तरम्॥ सर्वाभावे त्यजेत् पात्रं स्रवते यत्र वारि तत्। यत्रोदकं न स्रवते तत् कर्मार्हमिति कार्य्यञ्चमोपलम्भकमिति। नाभीविवररूपाणि पुण्डरीकाक्षतीनि च। शङ्खशुक्तित्वचजानि पात्राणि परिकल्पयेत्॥ अथ पाद्यपात्रलक्षणम्। वैखानसग्रन्थे॥ पादावनेजनजलग्रहणं पात्रमद्भुतम्। लौहजं वा सरोजातं हैमं राजतमेव वा। ताम्रं सचरणमपि वायवे न सतामिति॥ सिद्धान्तशेखरे॥ षडङ्गुलप्रविस्तारमुत्सेधं चतुरङ्गुलम्। ओष्ठमेकाङ्गुलं कुर्य्यान्नासिकां चतुराङ्गुलाम्। पृष्ठे पादसमायुक्तं चतुरङ्गुलमानतः। पाद्यपात्रमिति ख्यातं सर्वदेवप्रपूजने॥ इति पाद्यपात्रलक्षणम्॥ अथ पाद्यप्रक्षेपणीयपात्रलक्षणम्॥ तत्रैव॥ अष्टाङ्गुलसमुत्सेधं विस्तारं षोड़शाङ्गुलम्। ओष्ठमेकाङ्गुलं कुर्य्याच्छरावा-

क्षतिपात्रकम्। पात्रयोरुभयोः कुर्य्याद्दत्तकं कणके समे। पृष्ठे पादसमायुक्तं षड़ङ्गुलसुविस्तृतम्। पादोत्सेधं चतुर्मात्रं पाद्याधारं प्रकीर्त्तितम्। इति पाद्यप्रक्षेपणीयपात्रलक्षणम्। अथार्घ्यपात्रलक्षणम्॥ सिद्धान्तशेखरे॥ अर्घ्यस्य लक्षणं वक्ष्ये पलद्रव्यादिभेदतः। सामान्यार्घ्यं तिरोधार्घ्यं विशेषार्घ्यं-पराङ्मुखम्। अर्घ्यपात्राणि चत्वारि स्वर्णदूर्वाक्षतानि च॥ दुर्बलं राजतं ज्ञेयमधमानि ततः परम्। ताम्रशुक्तिशिलादारु-कर्मंमृत्पात्रजानि च। उत्तमं पलविंशत्या मध्यमं दशभिः पलैः। हीनं पञ्चपलं कुर्य्यादेवमाचम्य पाद्ययोः। चतुःपर्वाणि तानि स्युः निःसृतान्यष्टपर्वभिः। पृष्ठेनाङ्कशुभाङ्गानि कृताकाराणि वा पुनः। चतुरस्राणि कुर्वीत चतुष्पात्राणि चार्घ्यके। कर्पूरं कुङ्कुमं दूर्वां सिद्धार्थं विल्वपत्रकम्। यवदर्भान् कुशांश्चेति सामान्यार्घ्यं विनिक्षिपेत्। तिलप्रसूनसिद्धार्थदर्भदूर्वायवाक्षतान्। द्रव्याण्येतानि सप्तैव तिरोधाय विनिक्षिपेत्। तिलतण्डुलसिद्धार्थदूर्वामुद्गयवानपि। पराङ्मुखार्घ्यदाने च द्रव्यशुद्धिं प्रकल्पयेत्॥ इत्यर्घ्यपात्रलक्षणम्॥ अथाचमनपात्रलक्षणं वैखानसग्रन्थे॥ आचम्य वारिग्रहणपात्रमुत्तमलौहजम्। सरोजकर्णिकाकारं कुर्य्यादद्भुतदर्शनम्॥ कार्त्तस्वरमयं स्थूलं राजतं वाथ पावनम्॥ कार्त्तस्वरं सुवर्णमिति॥ उत्तमलौहमपि तथा॥ सर्वन्तु तैजसं लौहमिति स्वरसात् रजतं ताम्रं वा॥ सिद्धान्तशेखरे॥ द्वादशाङ्गुलविस्तारं कुक्षिमध्यं सवृत्तकम्। षड़ङ्गुलं तद्दलान्तमोष्ठं कुर्य्यात्तथाङ्गुलम्॥ अस्य तारं त्रिमात्रं स्यात् पार्श्वे नासागुणाङ्गुलम्। रन्ध्रं कनिष्ठकातुल्यमग्रे तदद्विगुणं त्वधः। पृष्ठे पादं चतुः कुर्य्यादुत्सेधं द्व्यङ्गुलं ततः। षड़ङ्गुलप्रविस्तारं पात्रमाचमनार्थकम्॥ इति आचमनपात्रलक्षणम्॥ अथ गन्धपात्र-

लक्षणम् ॥ सिद्धान्तशेखरे ॥ अर्घ्यवद्गन्धपात्रं स्यादिति। अत्र अर्घ्यपात्रवदित्यनेन सम्पूर्णार्घ्यपात्रलक्षणातिदेशः। यथा अर्घ्यपात्रं क्रियते तथैव गन्धपात्रं कर्त्तव्यमित्यर्थः॥ इति गन्धपात्रलक्षणम् ॥ अथ धूपपात्रलक्षणं वैखानसग्रन्थे ॥ धूपपात्रं सरोजातं सुवर्णादिविनिर्मितम्। पादयोरपि तस्य स्यादुत्सेधं चतुरङ्गुलम्। अनेकशुषिरं तस्य पिधानं सदृशं भवेत्। शुषिरं छिद्रम् ॥ पिधानमाच्छादनम्। सिद्धान्तशेखरे॥ धूपपात्रविधिं वक्ष्ये पलद्रव्यादिपूर्ववत्। चतुःपञ्चरसाश्वैर्वा पात्रविस्तारमङ्गुलैः। रसाः षट् अश्वाः सप्त। पात्रोत्सेधतो दैर्घ्यं स्यादोष्ठमर्द्धान्तकं मतम्। पद्माभं परितः पात्रं द्व्यङ्गुलोऽधोगलो भवेत्। पादमेकाङ्गुलोत्सेधं विस्तृतं द्व्यङ्गुलं ततः। षट्पर्वदीर्घनाभं स्यादुन्नतं द्व्यङ्गुलं मतम्। पूर्वकोत्सेधसंयुक्तं वृत्तञ्च चक्रचापवत्। पिधानं द्व्यङ्गुलोत्सेधं नानाच्छिद्रसमन्वितम्। एकच्छिद्रयुतं कुर्य्यात् कलसाकारमूर्द्धतः॥ इति धूपपात्रलक्षणम् ॥ वैखानसग्रन्थे ॥ दीपपात्रं तता नालमध्ये कुमुदकोज्ज्वलम्। वर्त्त्याधारैः शतेनापि युक्तमष्टाभिरेव च। त्रिसप्तकाष्टभिश्चैव द्वाभ्यां वा दशभिश्च वा। पञ्चभिर्वा यथाशक्ति कल्पयेच्चिह्नवित्तमः। सिद्धान्तशेखरे॥ दीपपात्रविधिं वक्ष्ये पलद्रव्यादिरर्घ्यवत्। पदेन नागलाद्यं हि धूपपात्रवदुच्यते। एकपत्रं चतुष्पत्रं षड्दलं वाष्टपत्रकम्। तत्रैकपत्रं मध्ये स्यान्निम्नाश्वत्थदलाकृति। चतुष्पत्रं चतुर्दिक्षु मध्यमा निम्नकर्णिका। षड्दले तु स्मृतं तद्वदुपपत्रसमन्वितम्॥ इति दीपपात्रलक्षणम्॥ अथ दीपमालालक्षणम् ॥ सिद्धान्तशेखरे॥ दार्वयस्ताम्रसम्भूता दीपमालाऽधमा मता। मध्यमा च तथा श्रेष्ठा स्वर्णा वा रौप्यजा क्रमात्। यष्ट्या तु द्वारवत् कुर्य्यात् लिङ्गपृष्ठे प्रभाकृतिम्। द्वाराभामन्यदेशे तु दीपमालां सुशोभनाम्। चतुर्भिरङ्गुलैर्दीर्घं स्कन्धमङ्गुलविस्तृ-

तम्। एवं कृत्वा विभागैकं दण्डमध्ये नियोजयेत्। स्कन्धात् स्कन्धं समं कुर्य्यादन्तरं भूतमात्रकम्। दीपमालेति कथिता सर्वदेवादिपूजने। इति दीपमालालक्षणम्॥ अथ दीपाधारलक्षणम्॥ सिद्धान्तशेखरे॥ हैमताम्रादिसम्भूतं विदध्यादुत्तमादिकम्। द्वादशाङ्गुलमारभ्य द्विद्व्यङ्गुलविवर्द्धितः। अष्टादशोदितोत्सेधा दीपाधारस्य चोच्छ्रता। स्नेहाधारस्य पादे तून्नाहं दैर्घ्यसमं सतम्। पादनावशरावांशः स्नेहाधारोऽपि तत्समः। तदूर्द्धं मुकुलं कुर्य्यात् प्रादिकादिसमन्वितम्। नानापरीसमायुक्तं नानाकुम्भांशमालिकम्। दीपाधार इति प्रोक्तो लौहजान् दीपकांस्तु तान्। नानावर्णान् तथा रम्यान् चतुर्हस्तप्रमाणकान्। त्रिहस्तानेकहस्तान् वा द्विहस्तान् वा यथाबलम्। ताम्रजान् राजतीयान् वा युग्मैस्तैः स्नेहधारकैः॥ इति दीपाधारलक्षणम्॥ वैखानसग्रन्थे॥ नीराजनक्रियापात्री हैमाद्रिद्रव्यनिर्म्मिता। त्रितालोपेतविस्तीर्णवृत्तमध्या मनोहरा॥ सिद्धान्तशेखरे॥ हिरण्यतारताम्रादिनिर्म्मितं ह्युत्तमादिकम्। षट्त्रिंशताङ्गुलैः श्रेष्ठं मध्यमं त्रिंशताङ्गुलैः। चतुर्विंशतिमात्रैः स्यादधमं विस्तृतौ क्रमात्। अग्निभागैकभागेन कुर्य्यान्मध्ये च कर्णिकाम्। उत्तरकासमुत्सेधं कर्णिकायाः प्रमाणतः। पीठिकं परितः कुर्य्यात् यवयुग्मेन विस्तृतम्। तत्समानोन्नतानीह परितोऽष्टदलानि च। परितोऽर्द्धप्रमाणेन काष्ठानामष्टकं समम्। ओष्ठमेकाङ्गुलं कुर्य्याद्विस्तारात् कर्णिकोन्नते। समानं पूर्णचन्द्राभं दीपाधारस्व कुम्भवत्॥ उन्नतादिचतुर्मात्रैर्विस्तृतैस्त्र्याङ्गुलद्वयम्। तत्र रन्ध्रद्वयं कुर्य्यात् कर्णिकामध्यमं समम्॥ इति नीराजनपात्रलक्षम्॥ अथ घण्टालक्षणम्॥ वैखानसग्रन्थे। शब्दब्रह्ममयी घण्टा हस्तोत्सेधप्रमाणिका। ब्रह्माण्डगोलकाकारा सुराद्यालतमा भवेत्। अधोमुखतालमानविस्तारोत्सेधनं

ततः। नानाविधाश्चतस्रो वा घण्टाः प्रतिदिशः कृताः। चक्राङ्का पङ्कजाङ्का वा सा घण्टा परिकीर्त्तिता। एवंविधा भवेद्घण्टा यद्वा चित्तानुसारतः॥ सिद्धान्तशेखरे॥ पञ्चाङ्गुलोन्नता घण्टा तद्वद्विस्तारसंयुता। घण्टायास्तु परीणाहो विस्तारार्द्धेन कीर्त्तितः। अङ्गुलस्तु भवेद्दण्डो दैर्घ्यं वृत्तसमं मतम्। दण्डाग्रे वृषभं शूलं नलिनं वापि कारयेत्। शुद्धकांस्येन कर्त्तव्यं घण्टालक्षणमीरितम्॥ इति घण्टालक्षणम्॥

अथ नैवेद्यपात्रलक्षणम्॥ वीरमित्रोदये॥ नैवेद्यपात्रं वक्ष्यामि केशवाय महात्मने। हैरण्यं राजतं ताम्रं कांस्यं मृण्मयमेव वा। पालाशं मध्यमं प्लाक्षपात्रं विष्णोरतिप्रियम्। हविर्द्रव्यप्रमाणानि पात्राणि परिकल्पयेदिति॥ सिद्धान्तशेखरे॥ सुवर्णरूप्यताम्रेभ्यः स्थालिकां ह्युत्तमादिकाम्। शुद्धकांस्येन वा कुर्य्याद्देवनैवेद्यपात्रके। एकपात्रं समारभ्य चासप्तात्तु ततः क्रमात्। कुर्य्यान्नैवेद्यपात्राणि हीननैवेद्यकादिषु। पात्रं शतं पलं श्रेष्ठं तदर्द्धं मध्यमं मतम्। तदर्द्धं मध्यमं ज्ञेयं पात्रसंख्येति कीर्त्तिता। स्थालिका नवधा कार्य्या भावाः षट्त्रिंशदङ्गुलम्। अङ्गुलार्द्धमितैर्मूलैरष्टधाङ्गुलकैः क्रमात्। इति विस्तारमाख्यातं स्थालिकानवके क्रमात्। उत्तमत्रयमग्रे स्यान्मध्यमे मध्यमत्रयम्। पुनस्त्रयमधस्तात् स्यात् स्थालिकानां यथाक्रमम्॥ इति नैवेद्यपात्रलक्षणम्॥ अथ पानीयपात्रलक्षणम्॥ वैखानरसंहितायाम्॥ पानीयपात्रं सौवर्णं राजतं ताम्रमेव वा। वृत्तायतसुवृत्तं वा भवेदायतमेव वा। प्रस्थमानप्रमाणाभः पुरयोग्यान्तरं शुभम्॥ इति पानीयपात्रलक्षणम्॥ अथ ताम्बूलपात्रलक्षणम्॥ वैखानसग्रन्थे॥ कल्पयेन्नागलतिका दलपत्रसमन्विता। अरत्निमानविस्तीर्णं कारयेद्वा यथाबलम्। इति ताम्बूलपात्रलक्षणम्॥

इति प्राणतोषिण्यां तृतीयेऽर्थकाण्डे गन्धादिपात्र-
स्थापनान्तरूपपल्लवकथनं नाम चतुर्थः
परिच्छेदः।

शारदायाम्॥ कृताञ्जलिपुटो भूत्वा वामदक्षिणपार्श्वयोः। नत्वा गुरुं गणेशानं भूतशुद्धिमथाचरेत्॥ करशुद्धिं समापाद्य कुर्य्यात्तालत्रयं ततः। ऊर्द्धोर्द्धमस्त्रमन्त्रेण दिग्बन्धमपि देशिकः। तेन संज्वलितं तेजो रक्षां कुर्य्यात् समन्ततः। चतुर्थपटले॥ सुषुम्नावर्त्मनात्मानं परमात्मनि योजयेत्। योगयुक्तेन विधिना चिन्मन्त्रेण समाहितः। आत्मानं हृदयकमलस्थितं सुषुम्नावर्त्मना कुण्डलिन्या सह योगयुक्तेन विधिना चिन्मन्त्रेण हंस इति मन्त्रेण परमात्मनि योजयेदित्यन्वयः। सुषुम्ना वर्त्म यस्याः सा तया। हृदयकमलस्थ आत्मा तु। हृदम्बुजे ब्रह्मरन्ध्रसम्भूते ज्ञाननालके। तारायमग्रे जीवस्तु चिन्तनीयो मनीषिभिरिति राघवभट्टधृतवचनेन ज्ञातव्यः। योगयुक्तेन विधिना इत्यस्यायमर्थः। गुरूपदिष्टमार्गेण हुङ्कारेण कुण्डलिनीमुत्थाप्यैतां हृदयकमलगतां विभाव्य ततो जीवं मुखे गृहीत्वा सहस्रारगतां विभावयेत्। तेन व्यो हंसमन्त्रेण द्वादशार्णोषिते परे। इतिवचनेनैकवाक्यतया चिन्मन्त्रो हंस इति। शारदायाम्॥ कारणे सर्वभूतानां तत्त्वान्यपि विचिन्तयेत्। वीजभावेन लीनानि व्युत्क्रमात् परमात्मनि। सर्वभूतानां कारणे परमात्मनि वीजभावेन लीनानि तत्त्वानि चिन्तयेदित्यर्थः॥ व्युत्क्रमादिति सृष्टिक्रमापेक्षया। अपि शब्दाद्वर्णानपि। तदुक्तं पिङ्गलामते॥ सङ्कल्प्यैवं ततो न्यासस्थानाद्वर्णांश्च संहरेत्। प्रतिलोमेन क्षलयो लकारस्य हकारके। हलयश्च सकारेऽथ सलयश्च यकारके। क्रमेणैवमपर्य्यन्तं लयमुत्पाद्य यत्नतः। अकारं ब्रह्मरन्ध्रे च सहस्रारे नियोजयेदिति॥

शारदायाम्॥ ततः संशोषयेद्देहं वायुवीजेन वायुना। वह्नि-वीजेन तेनैव सन्दहेत् सकलां तनुम्। वायुवीजेन यकारेण वायुना तदुत्थवायुना। वह्निवीजेन रेफेण तेनैवाग्निवीजोत्थ-वह्निना सकलामिति कलं पापं पापपुरुषसहितां तनुं निदहे-दित्यर्थः। सविशेषणविधितया न प्रकृतशरीरनाशः। तत्-कारणन्तु सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इति न्यायः। बाधस्त्वन्वयानुपपत्तिः। तात्पर्य्य-विषयीभूते अर्थे अन्वयानुपपत्तौ। यत्र तु विशिष्टे तात्पर्य्यं तत्र विशिष्टमप्युपगच्छतो विधिनिषेधौ न विशेष्यमात्रम्। तथाच भर्तृहरिः॥ नीलं पटं विधेहीति लोकेऽपि द्वयमोक्ष्यते। क्वचि-न्नीलगुणस्यैव विशिष्टस्य विधिः क्वचित्॥ अतएव गुप्तसाधन-तन्त्रे षष्ठपटले॥ भूतशुद्धौ महादेव! यदि देहन्तु नाशयेत्। कुत्र स्थाने भवेत् सृष्टिरमृतं कुत्र सञ्चयेदिति देवीसन्देहप्रश्न-स्योत्तरम्॥ महादेव उवाच॥ वामकुक्षौ स्थितं पापपुरुषं कज्जलप्रभम्। तस्य संहरणार्थाय महती प्रकटीकृता। लिङ्ग-देहो महेशानि! तस्य देहो न संशयः। पापदेहं भवेद्दग्धं स्वदेहं नैव नाशयेत्॥ इति शिववचनम्॥ पापपुरुषध्यानन्तु राघवभट्टधृतम्॥ ब्रह्महत्याशिरस्कन्तु स्वर्णस्तेयभुजद्वयम्। सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम्। तत्संसर्गिपदद्वन्द्व-मङ्गप्रत्यङ्गपातकम्। उपपातकरोमाणं रक्तश्मश्रुविलोचनम्। खड्गचर्मधरं पापमङ्गुष्ठपरिमाणकम्। अधोमुखं कृष्णवर्णं वामकुक्षौ विचिन्तयेत्॥ शारदायाम्॥ विश्लेषयंस्तदा दोषा-नमृतेनामृताम्भसा। आपाद्य प्लावयेद्देहमापादतलमस्तकम्। दोषस्वरूपपापपुरुषभस्मविश्लेषोऽपि वायुवीजेनैव। तथाच गणेशविमर्षिण्याम्॥ तद्भस्मकूटमखिलं वायुवीजोत्थवायुना। विकीर्य्यामृतवीजेन स्वदेहं प्लावयेत्ततः। अमृतेनेति अमृत-

वीजेन वमित्यनेन। अमृताम्भसा तदुत्थेनामृतेनापादतलमस्तकं देहमापाद्याप्लावयेदित्यन्वयः॥ शारदायाम्॥ आत्मलीनानि तत्त्वानि स्वस्थानं प्रापयेत्तदा। आत्मानं हृदयाम्भोजमानयेत् परमात्मनः। मनुना हंसदेवस्य कुर्य्यान्न्यासादिकं ततः। परमात्मनः सकाशात् हंसदेवस्य मनुना आत्मानं हृदयाम्भोजमानयेदित्यन्वयः॥ हंसस्य वीजस्य देवः परमात्मा उपास्यत्वात् तन्मन्त्रेण सोऽहमित्यनेन। तदुक्तं वशिष्ठसंहितायाम्॥ सोऽहं मन्त्रेण तां मन्त्री नादान्ते सिद्धिभाविताम्। ध्यात्वैवं ब्रह्मरन्ध्राच्च हृदि जीवं न्यसेदिति॥ तत्र गुरूपदेशतः प्रकारो लिख्यते। ओमद्येत्यादि श्रीदेवपूजाद्यधिकारसिद्धये भूतशुद्धाद्यहं करिष्ये इति सङ्कल्प्य मूलाधारादुत्थितां विद्युत्सहस्रप्रभाभास्वरां विसतन्तुरूपां सुषुम्नामार्गेण हृदयकमलगतां कुण्डलिनीं विभाव्य हृदयकमलाज्जीवं प्रदीपकलिकाकारं मुखे गृहीत्वा द्वादशार्णाम्बुजं सहस्रदलगतं विभाव्य तत्र जीवात्मानं हंसमन्त्रेण परमात्मनि योजयेत्। ततः पादादिजानुपर्य्यन्तं चतुरस्रं पृथिवीमण्डलं विभाव्य तत्र पादगमनक्रियागन्तव्यगन्धघ्राणपृथिवीब्रह्मनिवृत्तिं समानवायुं संस्मृत्य ॐ ह्लीं ब्रह्मणे पृथिव्यधिपतये निवृत्तिकलात्मने हुं फट् स्वाहा इत्यमुं मन्त्रमुच्चार्य्य तान् कुण्डलिनीद्वारा अप्सु प्रविलापयेदित्यप्स्थाने संहरेत्। जान्वादिनाभिपर्य्यन्तं शुक्लमर्द्धचन्द्राकारं जलमण्डलं विभाव्य तत्र हस्तादानदातव्यरसरसनाजलविष्णुं प्रतिष्ठेदनिलस्य ॐ ह्लीं विष्णवे जलाधिपतये प्रतिष्ठाकलात्मने हुं फट् स्वाहा इत्यमुं मन्त्रमुच्चार्य्य तान् सर्व्वान् कुण्डलिनीद्वारा अग्नौ प्रविलापयामीत्यग्निस्थाने संहरेत्। नाभ्यादिहृदयपर्य्यन्तं त्रिकोणं वह्निमण्डलं रक्तवर्णं विभाव्य तत्र पायुविसर्जनीयरूपचक्षुस्तेजोरुद्रविद्याव्यानानिलं संस्मृत्य ओं हुं रुद्राय

तेजोऽधिपतये विद्याकलात्मने हुं फट् स्वाहा इत्यमुं मन्त्रमुच्चार्य्य तान् सर्वान् कुण्डलिनीद्वारा वायौ प्रविलापयामीति वायुस्थाने संहरेत्। ततो हृदयाद्भ्रूपर्य्यन्तं कृष्णवर्त्तुलं षड्बिन्दुलाञ्छितं वायुमण्डलं विभाव्य तत्रापस्थानतद्विषयस्पर्शस्प्रष्टव्यवायवीयशान्त्यपानान् संस्मृत्य ओं ह्रौं ईशानाय वायुधिपतये शान्तिकलात्मने हुं फट् स्वाहा इत्यमुं मन्त्रमुच्चार्य्य तान् सर्वान् कुण्डलिनीद्वारा आकाशे प्रविलापयामीत्याकाशस्थाने संहरेत्। ततो भ्रूमध्यादिब्रह्मरन्ध्रान्तपर्य्यन्तं शुक्लवर्त्तुलमाकाशमण्डलं विभाव्य तत्र वाग्वदनवक्तव्यशब्दश्रोत्राकाशसदाशिवशान्त्यतीतप्राणान् संस्मृत्य ओं ह्रौं सदाशिवाय आकाशाधिपतये शान्त्यतीतकलात्मने हुं फट् स्वाहा। इत्यमुं मन्त्रमुच्चार्य्य तान् सर्वान् कुलकुण्डलिनीद्वारा अहङ्कारे प्रविलापयामीत्यहङ्कारे प्रविलाप्य महत्तत्त्वं मातृकासंज्ञकशब्दब्रह्मस्वरूपायां हृल्लेखानुभूतायां प्रकृतौ प्रविलापयामीति प्रविलाप्य तां तथाविधां नित्यशुद्धस्वभावे परमब्रह्मणि प्रविलापयामीति प्रविलापयेत्॥ तदुक्तं मन्त्रतन्त्रप्रकाशे॥ गन्धादिघ्राणसंयुक्तां पृथिवीमप्सु संहरेत्। रसादिजिह्वया सार्द्धं जलमग्नौ विलापयेत्। रूपादिचक्षुषा सार्द्धमग्निं वायौ विलापयेत्। समीरमीश्वरे विद्वान् स्पर्शादित्वक्समन्वितम्। अहङ्कारे हरेद्व्योम सशब्दं तन्महत्यपि। महच्च सर्वशक्तानामव्यक्ते कारणे परे। सच्चिदानन्दरूपं यद्वैष्णवं परमं पदम्॥ पृथिव्यादिक्रमात् सर्वं तत्र लीनं विचिन्तयेत्। ततः शरीरस्यान्तर्य्यामी ऋषिः सत्यं देवता प्रकृतिपुरुषं छन्दः शोधनेन विनियोगः। इत्युक्त्वा वामकुक्षिषु मुक्तरूपं पापपुरुषं विचिन्त्य यमिति वायुबीजस्य किष्किन्ध ऋषिर्वायुर्देवता जगतीच्छन्दः शरीरपापपुरुषशोधने विनियोगः। इत्युक्त्वा नाभिमूले बिन्दुद्वयलाञ्छितमण्डले यं विचिन्तयेत्।

तद्वायुवीजं धूम्रं चञ्चलध्वजसंयुक्तं धूं धूं शब्दयुतं सर्वशोषणं हंसदैवतमिति ध्यात्वा पूरकप्रयोगेण षोड़शवारं वीजमुच्चार्य्य तद्बीजोत्थवायुना स्वशरीरस्थं पापपुरुषं शोषितं विभावयेत्। ततो रमित्यग्निवीजस्य कश्यप ऋषिरग्निर्देवता त्रिष्टुप्छन्दः तद्दाहे विनियोगः। इत्युक्त्वा हृदये रक्तं त्रिकोणं वह्निमण्डलं विद्याकलायुतं रुद्रदैवतमिति ध्यात्वा प्रयोगेण चतुःषष्टिवारं वीजमावर्त्त्य तद्बीजोत्थाग्निना तद्भस्मीभूतं विभावयेत्। ततो रेचकेण द्वात्रिंशन्मात्रया पूर्व्वोक्तरूपं वायुवीजमावर्त्त्य पापपुरुष-भस्म रेचयेत्। ततो वमिति वरुणवीजस्य हिरण्यगर्भ ऋषिर्हंसो देवता त्रिष्टुप्छन्दः प्लावने विनियोगः। इत्युक्त्वा। वारुणं मण्डलं मूर्द्ध्नि शुभ्रं चन्द्रार्द्धसन्निभम्। सितपङ्कजयुग्माभयकरं स्याद्वरुणदैवतम्॥ इति ध्यात्वा तद्बीजोत्थसुतांस्तेन तच्छरीर-भस्म पिण्डीभूतं विभावयेत्। ततो लमिति पृथिवीवीजस्य ब्रह्म-ऋषिरिन्द्रो देवता गायत्रीच्छन्दः कठिनीकरणे विनियोगः। इत्युक्त्वा। आधारमण्डले पृथ्वीमण्डलं वज्रलाञ्छितम्। चतु-ष्कोणञ्च कठिनं पीतवर्णेन्द्रदैवतम्। लंवीजेन समायुक्तं ध्यायन् मनसि पूर्व्ववत्॥ इति ध्यात्वा तद्बीजोत्थकाठिन्येन तनुं दृढ़ां भावयेत्। ततो हमित्याकाशवीजस्य ब्रह्म ऋषिराकाशं देवता पंक्तिच्छन्दः व्यूहने विनियोग इत्युक्त्वा। आकाशमण्डलं वृत्तं द्वादशान्ते ह्यनुज्ज्वलम्। शान्त्यतीताकलायुक्तं विचिन्त्याकाश-दैवतम्। इति ध्यात्वा तदुत्थेनाकाशेनाकाशं विभावयेत्। तद्वत् हमिति वीजेनावायूकरणं भवेदिति। एवं स्वशरीरं विचिन्त्य परमात्मनः सकाशात् सृष्टिक्रमेण तत्त्वानि स्वस्वस्थानं प्रापये-दिति। ततः परमात्मनः सकाशात् सोऽहं मन्त्रेण जीवं हृत्प-द्ममानयेदिति संक्षेपः। इयञ्च भूतशुद्धिरावश्यकी॥ पञ्चशुद्धि-विहीनेन कृता पूजाभिचारवत्। विपरीतफलं दद्यादभक्त्या

पूजनं यथा। निऋ तिर्विधिहीनानां फलं हन्ति हि कर्म्मणाम्। निशाचराधिपत्यञ्च कुरुते शङ्कराज्ञया॥ इति शैवागमोक्तेः। अन्यत्रापि। देहकारणभूतानां भूतानां यद्विशोधनम्। अवयवः ब्रह्मसंयोगाद् भूतशुद्धिरियं मता। भूतशुद्धिं विना कर्म्म जप-होमार्च्चनादिकम्। भवेत्तु निष्फलं सर्वं प्रकारेणाप्यनुष्ठितम्॥ इति मत्स्यसूक्ते पञ्चदशपटले॥ नत्वा गुरुं गणेशानं भूतशुद्धिं समाचरेत्। उभाभ्यामपि पाणिभ्यां तर्ज्जन्यङ्गुष्ठयोगतः। गृही-त्वा यं क्षमं देवि! यमित्याघ्राय निक्षिपेत्॥ महानिर्वाणतन्त्रे पञ्चमोल्लासे च॥ स्वाङ्के निधाय च करावुत्तानौ साधकोत्तमः। मनो निवेश्य मूले च हुङ्कारे शैवकुण्डलीम्। उत्थाप्य हंसमन्त्रेण पृथिव्या सहितान्तु ताम्। स्वाधिष्ठानं समानीय ततस्तत्त्वे नियोजयेत्। घ्राणादिघ्राणसंयुक्तां पृथिवीमप्सु संहरेत्। रसादि जिह्वया सार्द्धं जलमग्नौ विलापयेत्। रूपादि चक्षुषा सार्द्ध-मग्निं वायौ विलाप्य च। स्पर्शादि त्वग्युतं वायुमाकाशे दिप्रला-पयेत्। अहङ्कारे तरेद्व्योम सशब्दं तन्महत्यपि। महत्तत्त्वञ्च प्रकृतौ तां ब्रह्मणि विलापयेत्। एवं विलाप्य मतिमान् वाम-कुक्षौ विचिन्तयेत्। पुरुषं कृष्णवर्णञ्च रक्तश्मश्रुविलोचनम्। खड्गचर्म्मधरं क्रुद्धमङ्गुष्ठपरिमाणकम्। सर्वपापस्वरूपञ्च सर्वं-दाधोमुखस्थितम्। ततस्तु वामनासायां यं वीजं धूम्रवर्णकम्। सञ्चिन्त्य पूरयेत्तेन वायुं षोड़शमात्रया। तेन पापात्मकं देहं शोधयेत् साधकाग्रणीः। नाभौ रं रक्तवर्णञ्च ध्यात्वा तज्जात-वह्निना। चतुःषष्ठ्या कुम्भकेन दहेत् पापवतीं तनुम्। ललाटे वरुणं वीजं शुक्लवर्णं विचिन्त्य च। द्वात्रिंशता रेचकेन प्लावयेद-मृताम्भसा। आपादशीर्षपर्य्यन्तमाप्लाव्य तदनन्तरम्। उत्पन्नं भावयेद्देहं नवीनं देवतामयम्। पृथ्वीवीजं पीतवर्णं मूलाधारे विचिन्तयन्। तेन दिव्यावलोकेन दृढ़ीकुर्य्यान्निजां तनुम्।

हृदये हस्तमादाय आं ह्रीं क्रों हं स उच्चरन्। सोऽहं मन्त्रेण सद्देहे देव्याः प्राणान् प्रतिष्ठयेत्। भूतशुद्धिं विधायेत्थं देवीभावपरायणः॥ नीलतन्त्रे चतुर्थपटलेऽपि॥ भूतशुद्धिं ततो वक्ष्ये शृणुष्वावहितानघे!। अपानमूर्द्ध्वगं कृत्वा दिव्यतत्त्वैः प्रपूर्य्य च। हंसमन्त्रेण चाधाराच्छक्तिं कुण्डलिनीं पराम्। क्रमाच्चक्राणि निर्भिद्य जीवात्मानं ततोऽम्बुजम्। सहस्रारं ततो नीत्वा परे ब्रह्मणि योजयेत्। इन्द्रियाणि दशैकञ्च महत्तत्त्वानि तद्गुणान्। शुद्धं करोति चित्तानि तत्त्वानि प्रकृतेर्वपुः। चतुर्विंशतितत्त्वानि वीजभावेन योजयेत्। ततः शून्ये शरीरे च वामभागे विचिन्तयेत्। निर्लेपं निर्गुणं शुद्धमात्मानं तारिणीमयम्। अन्तरीक्षे ततो ध्यायेदाः काराद्रक्तपङ्कजम्। भूयस्तस्योपरि ध्यायेत् टाङ्कारेच्छ्वेतपङ्कजम्। पुनस्तस्योपरि ध्यायेद् हुङ्कारं नीलसन्निभम्। ततो हुङ्कारवीजे तु कर्त्तृका वीजभूषितम्। कर्त्तुः परिगतां ध्यायेदात्मानं तारिणीमयम्। तथा। वश्यादौ रक्तवर्णं तमाकृष्टौ पीतरूपिणम्। मारणोच्चाटनैर्धूम्रं कृष्णं तत्तदपेक्षया। एवम्भूतं स्वमात्मानं ध्यायेच्च तारिणीमयम्॥ विश्वसारतन्त्रे द्वितीयपटले॥ यमिति वायुवीजेन षोड़शेन तु पूरयेत्। चतुः षष्ठ्या च तेनैव पापदेहं प्रशोधयेत्। तेन वीजेन विधिना पिङ्गलायाञ्च रेचयेत्। द्वात्रिंशन्मात्रया भस्म श्वासमार्गेण वै शनैः। एवं वारत्रयं कृत्वा भूतानां शोधनं स्मृतम्। पूरयेत् प्रतिलोमेन वह्निवीजेन देशिकः। षोड़शेन चतुःषष्ठ्या कुम्भयेद्रेचयेत्ततः। द्वात्रिंशन्मात्रया चैव दहनं परिकीर्त्तितम्। चतुर्द्धा च प्रजप्याथ तद्वर्णं प्रजपेत् क्रमात्। शोषणं दहनञ्चैव प्लावनं परिकीर्त्तितम्। किस्किन्धः कश्यपश्चैव हिरण्यगर्भस्ततः परम्। वीजानां ऋषयः प्रोक्ताः शृणुष्व कमलेक्षणे!। प्राणायामं ततः कुर्य्यात् क्रमेण देशिको-

त्तमः । सहस्रारे महापद्मे चिन्तयेदिष्टदेवताम् । यथा ध्यानं यथोक्तेन गुरुमार्गेण देशिकः । तदा भूतानि तज्ज्ञानि सगुणानि विधानतः । सकलाशक्तियुक्तानि वर्णमात्रक्रमेण च । प्रतिलोमेन संहृत्य सतत्त्वधातुसंयुतैः । मूलाधारं सहस्रारं षट्चक्रक्रमयोगतः । व्युत्क्रमेण विचिन्त्याथ सहस्रारं ततोऽवधि । ॐ मन्त्रे चालयेद्बीजं षट्चक्रक्रमयोगतः । ऐक्यं विभाव्य तत्स्थाने मन्त्रमेकं समभ्यसेत् । सोऽहं मन्त्रं समुच्चार्य्य सूक्ष्मब्रह्म विचिन्तयेत् । तत्क्षणान्निर्म्मलं देहं निर्द्वन्द्व निष्परिग्रहम् । अद्वैतं चिन्तयेत्तत्र मनसा वह्नियोगतः । अकारादिक्षकारान्तवर्णमालाक्रमेण च । चिन्तयेत् श्वासरोधेन पूरकुम्भकरेचकैः । एवं विचिन्त्य तान् वर्णान् ततश्चन्द्रमनुं स्मरेत् । टान्तं विन्दुसमायुक्तमर्द्धचन्द्रविभूषितम् । चतुर्द्धा प्रजपेन्मन्त्रं मनसा वायुना सुधीः । इन्द्रवीजं जपेद्देवि ! तत्त्ववीजं ततः परम् । दूरीकृत्य विधानेन धारया सुधया पुनः । ततः सञ्चिन्तयेद्देवि ! पूर्वोक्तं मातृकामयम् । सकलानादसंयुक्तं स्वशक्तिसहितं ततः । पञ्चाशद्वर्णसंयुक्तं महाभूतसमन्वितम् । पञ्चभूतात्मकं देहमनुलोमेन चिन्तयेत् । अन्तर्य्यामी ऋषिस्तस्य प्राणायामस्य देवता । वक्षःस्थले दक्षहस्तं दत्त्वा साधकसत्तमः । पूर्वोक्तप्राणमनुना ऋषिश्छन्दःसमन्वितम् । हंसमन्त्रेण तं प्राणमावाहनमुदाहृतम् । सधातूनि सतत्त्वानि इहागत्य चिरं सुखम् । तिष्ठन्तु वह्निजायान्तं मन्त्रमेनं समुद्धरेत् । अकारादिक्षकारान्तं पञ्चाशद्वर्णसंयुतम् । विचिन्त्य मनसा देहं तदा देवी भवेन्नरः । प्राणायामं त्रिरावृत्य बलं प्राणेषु निक्षिपेत् । अकारादिक्षकारान्तं पूरकुम्भकरेचकैः । प्रतिलोमानुलोमेन विचिन्त्य प्राणमावहन् । तत्क्षणाद्विरजो मन्त्री भवेत् साक्षात् सदाशिवः । नृसिंहेनैव मन्त्रेण देहे वीजं विनिक्षिपेत् ।

मूलाधारं ततः प्राप्य जीवात्मानं विचिन्तयेत्। कुण्डलीरूप-सम्भूता विद्युदग्निसमप्रभा। निर्म्मला निर्विकारस्था सर्वसिद्धि-समन्विता। तदन्ते विन्यसेद्देहे मातृकां वर्णरूपिणीम्। मन्त्र-णानेन तां ध्यात्वा विन्यसेत् सकलां तनुम्॥

अथ प्राणायामः॥ दक्षिणामूर्त्तितन्त्रे सप्तमपटले॥ मूल-मन्त्रेण देवेशि! वामेनापूर्य्य चोदरम्। कुम्भकेन स्थिरावृत्त्या दक्षिणेन च रेचयेत्। कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम्। प्राणायामः स विज्ञेयस्तर्ज्जनीमध्यमे विना॥ प्राणायामे विशेषः पश्चाद्वक्ष्यते॥ ततो दीक्षापद्धत्युक्तं तन्त्रसारधृततत्तत्कल्पोक्तञ्च न्यासादिकं कुर्य्यात्॥ अथ पूजाधारनिरूपणम्। मातृकाभेद-तन्त्रे द्वादशपटले॥ शालग्रामे मणौ यन्त्रे प्रतिमायां घटे जले। पुस्तिकायाञ्च गङ्गायां शिवलिङ्गे प्रसूनके। आधारभेदे फल-विशेषस्तत्रैव। शालग्रामे शतगुणं मणौ तद्वत् फलं लभेत्। यन्त्रे लक्षगुणं पुण्यं मूर्त्तौ लक्षं सुलोचने!। घटे चैकगुणं पुण्यं जले चैकगुणं प्रिये!। पुस्तिकायां सहस्रन्तु गङ्गाया-स्तत्समं फलम्। शिवलिङ्गे ह्यनन्तं हि विना पार्थिवलिङ्गकम्। पुष्पयन्त्रे महेशानि! पूजनात् सर्वसिद्धिभाक्। शालग्रामादि-निकटे यन्त्रकरणनिषेधोऽपि। शालग्रामे च पूजायां न लिखेद् यन्त्रमुत्तमम्। मणौ स्थिते महेशानि! न लिखेद्यन्त्रमुत्तमम्। प्रतिमायाश्च पुरतो घटं संस्थाप्य यत्नतः। परिवारान् यजेत्तत्र घटे तु परमेश्वरि!। यन्त्राधिष्ठातृदेवांश्च घटवक्त्रे प्रपूजयेत। समस्तदेवतारूपं घटञ्च परिचिन्तयेत्। सुरद्रुमस्वरूपो हि घटोऽयं परमेश्वरि!॥ प्रतिमानिकटे यन्त्रकरणनिषेधोऽपि तत्रैव। जन्मस्थानं महायन्त्रं यदि कुर्य्यात्तु साधकः। तत्र मूर्त्तिं न कुर्य्यात्तु यदि यन्त्रञ्च कारयेत्। यदि कुर्य्यात्तु मोहेन यजेद्वार-द्वयं प्रिये!। द्विगुणं पूजनं तत्र द्विगुणं बलिदानकम्। द्विगुणं

प्रजपेन्मन्त्रं द्विगुणं होममाचरेत्। अन्यथा विफला पूजा विफलं बलिदानकम्। सर्वं हि विफलं यस्मात्तस्माद् यन्त्रं न कारयेत्। गुप्तसाधनतन्त्रे अष्टमपटले। सामान्ये च जले देवि! पूजा दोषादिशान्तये। तथा। न कुर्य्यात् पार्थिवे लिङ्गे देवीपूजादिकाः क्रियाः। पार्थिवे पूजनाद्देवि! सिद्धिहानिः प्रजायते। यदि दैवान्महेशानि! मृत्तिकास्खलनं भवेत्। तावद्वर्षसहस्राणि नरके पूयशोणिते। कुम्भीपाके महाघोरे पितृभिः सह पच्यते। अत एव महेशानि! पार्थिवे न हि पूजयेत्। स्फाटिकादीन् समानीय लिङ्गं निर्माय यत्नतः। तत्र लिङ्गे पूजनाद्धि सर्वसिद्धियुतो भवेत्॥ तन्त्रान्तरे॥ कालिकां तारिणीञ्चैव त्रिपुरां भुवनेश्वरीम्। योऽर्चयेत् पार्थिवे लिङ्गे स याति परमां गतिम्। तारिण्याः कालिकायाश्च सुन्दर्य्याः परमेश्वरि!। पार्थिवे पूजनाद्देवि! चतुर्वर्गफलं लभेत्। एवञ्च गुप्तसाधनोक्तवचनं कालिकादिविशेषितरपरम् समान्यविशेषन्यायात्। यद्यपि देवताया निराकारत्वेन ध्यानादिकमसम्भवं तथापि साकारतया ध्यानं सर्वसमञ्जसं तस्याः साकारत्वकारणन्तूक्तम् मुण्डमालातन्त्रे सप्तमपटले॥ शिव उवाच॥ निर्गुणा प्रकृतिः सत्यमहमेव च निर्गुणः। यदैव सगुणा त्वं हि सगुणोऽहं सदाशिवः। सत्यं हि सगुणा देवी सत्यं हि निर्गुणः शिवः। उपासकानां सिद्ध्यर्थं सगुणा सगुणो मतः॥ महानिर्वाणतन्त्रे पञ्चमोल्लासे॥ ध्यानन्तु द्विविधं प्रोक्तं स्वरूपारूपभेदतः। अरूपं तव यद्ध्यानमवाङ्मनसगोचरम्। अव्यक्तं सर्वतो व्याप्तमिदमित्थं विवर्ज्जितम्। अगम्यं योगिभिर्गम्यं कृत्स्नैर्बहुसमाधिभिः। मनसो धारणार्थाय शीघ्रं स्वाभीष्टसिद्धये। सूक्ष्मध्यानं पुरोधाय स्थूलध्यानं वदामि ते। त्रयोदशोल्लासे॥ देव्युवाच॥ महादेवेशादिशक्तेर्महाकाल्या महाद्युतेः। सूक्ष्मातिसूक्ष्मभूतायाः कथं रूपनिरूपणम्॥ रूपं

प्रकृतिकार्य्याणां सातु साक्षात् परात्परा। एतन्मे संशयं देव! विशेषाच्छेत्तुमर्हसि ॥ इति देवीप्रश्नानन्तरं श्रीसदाशिव उवाच ॥ उपासकानां कार्य्याय पुरैव कथितं प्रिये!। गुणक्रियानुसारेण रूपं देव्याः प्रकल्पितम्॥ इत्युक्तम्॥ श्वेतपीतादिको वर्णो यथा कृष्णे विलीयते। प्रविशन्ति तथा काल्यां सर्वभूतानि शैलजे!। अथ तस्याः कालशक्तेर्निर्गुणाया निराकृतेः। हिताया: प्रासमूर्त्तेस्तु वर्णः कृष्णो निरूपितः। नित्यायाः कालरूपाया अरूपायाः शिवात्मनः। अमृतत्वाल्ललाटेऽस्याः शशिचिह्नं निरूपितम्। शशिसूर्य्याग्निभिर्नेत्रैरखिलं कालिका जगत्। सम्पश्यति यतस्तस्मात् कल्पितं नयनत्रयम्। ग्रसनात् सर्व-सत्त्वानां कालदण्डेन चर्वणात्। तद्रक्तवासोरूपेण भासितं सकलं जगत्। समये समये जीवरक्षणं विपदः शिवे!। प्रेरणं स्वस्वकार्य्येषु वरञ्चाभयमीरितम्। रजोजनितविश्वानि विष्टभ्य परितिष्ठति। अतो हि कथितं भद्रे! रक्तपद्मासन-स्थिताम्॥ कुलार्णवे पञ्चमखण्डे षष्ठोल्लासेऽपि॥ चिन्मयस्या-प्रमेयस्य निष्कलस्याशरीरिणः। साधकानां हितार्थाय ब्रह्मणो रूपकल्पना। लिङ्गस्थण्डिलवह्न्यम्बुयन्त्रकुड्यपटेषु च। मण्डले फलके मूर्ध्नि हृदि वा दश कीर्त्तिताः। एषु स्थानेषु देवेशि! यजन्ति परमां शिवाम्। अरूपां रूपिणीं कृत्वा कर्मकाण्डरता नराः। गवां सर्वाङ्गजक्षीरं स्रवेत् स्तनमुखाद् यथा। तथा सर्वगतो देवः प्रतिमादिषु राजते। आभिरूप्याच्च विम्बस्य पूजा-याश्च विशेषतः। साधकस्य च विश्वासाद्देवतासन्निधिर्भवेत्। नारदपञ्चरात्रे द्वितीयरात्रे च॥ नारद उवाच॥ भक्तिज्ञानञ्च भक्तानां योगज्ञानञ्च योगिनाम्। केषां वर्त्म प्रशस्तञ्च तन्मां कथितुमर्हसि॥ श्रीमहादेव उवाच॥ ध्यायन्ति योगिनः सर्वे ज्योतीरूपं सनातनम्। निर्गुणस्य शरीरञ्च न मन्यन्ते च योगिनः।

शरीरं प्राक्तनं ; वं निर्गुणं प्रकृतेः परम् । गुणेन सञ्जातदेहो निर्गुणस्य कुतो भवेत् । इति सर्वं योगशास्त्रं योगविद्भिः प्रकीर्त्तितम् । वैष्णवास्तं न मन्यन्ते कुमाराद्या वयं द्विज ! । वदन्ति वैष्णवाः सर्वे तेजस्तेजस्विनां विना । कृष्णो नित्यशरीरी च तस्य तेजो हि वर्त्तते । तेजोऽभ्यन्तर एवाहुः कृष्णमूर्त्तिः सनातनी । ध्यायन्ते योगिनः सर्वे तत्तेजो भक्तिपूर्वकम् । सुपक्व-भक्त्या कामिन स योगी वैष्णवो भवेत् । तेजोऽभ्यन्तररूपञ्च ध्यायन्ते योगिनः सदा । दासानाञ्च कुतो दास्यं विना देहेन नारद ! । वैष्णवानां मतं शस्तं सर्वेभ्योऽपि च नारद ! । न वैष्णवात् परो ज्ञानी ब्रह्माण्डेषु च ब्रह्मणाम् ॥ एवं देवतायाः साकारत्वे सिद्धे स्वस्वकल्पोक्तं तन्त्रसाराद्युक्तं देवताध्यानं कृत्वा मानसैः सम्पूज्य शङ्खस्थापनाद्यावरणपूजान्तं तन्त्रसारोक्तं कर्म्म कुर्य्यात् । मानसपूजान्तु अग्रे उपपादयिष्ये । सम्प्रति प्राणप्रतिष्ठायां विशेषो लिख्यते ॥ शारदातिलके त्रयोविंशतिपटले ॥ प्राणप्रतिष्ठामन्त्रस्य विधानमभिधीयते । येन प्रागीरिता मन्त्राः प्राणवन्तो भवन्ति ते । यद्यपि मन्त्राणां प्राणप्रतिष्ठा नास्ति तेषां स्वत एव समर्थत्वात् तथापि यन्त्रादौ लिखितानां प्राणप्रतिष्ठा क्रियते तद्द्वारेण प्राणवन्त इत्युक्तिः । प्राणप्रतिष्ठया समस्तयन्त्रविहितयन्त्रप्रयोग-पुत्तल्यादि सर्वं प्रतिष्ठितप्राणं क्रियते इत्यर्थः ॥ पाशाङ्कुशपुटा शक्तिर्वाणीबिन्दुविभूषितः । याद्याः सप्त कलावन्तो व्योम सार्द्धेन्दु-संयुतम् । प्रथमं पाशवीजं ततः शक्तिवीजं ततोऽङ्कुशवीजं वाणी यः विन्दुभूषित इत्यनेन यं याद्या इति उद्धृतयकारानुवादेन सप्तमन्तु तदयमिति भिन्नवीजम् । पूर्वं पृथगुद्धारस्तु सप्तानामपि सविन्दुताख्यापनाय । तथा च राघवभट्टधृतम् ॥ पाशाङ्कुशान्तरितः शक्तिमनोः परस्तादुच्चार्य्य यदि वसुवर्णगुणं सहंसमिति व्योम हकारः सार्द्धेन्दुसंयुतं हं । क्वचित्तु सनेन्दुसंयुतमिति

पाठस्तदा ह्रोमिति । तदन्ते हंसमन्त्रः स्यात्ततोऽमुष्य पदं वदेत् । प्राणा इति वदेत् पश्चादिह प्राणास्ततः परम् । अमुष्य जीव इहतः स्थितोऽमुष्य पदं वदेत् । सर्व्वेन्द्रियाख्यमुष्यान्ते वाङ्मनश्चक्षुरन्ततः । श्रोत्रघ्राणपदे प्राणा इहागत्य सुखं चिरम् । तिष्ठन्त्वग्निवधूरन्ते प्राणमन्त्रोऽयमीरितः । प्रत्यमुष्य पदं पूर्व्वं पाशादीनि प्रयोजयेत् । षड़धिकषष्ट्यक्षरोऽयं मन्त्रः । प्रयोगेषु समाख्यातः प्राणमन्त्रो मनीषिभिः । केवलमेतत्साधनार्थं जपव्यतिरेकेण सर्व्वत्रान्यत्र प्रयोग एव । तेनात्मनि यत्र पुत्तल्यादावपि प्राणप्रतिष्ठासमये प्रत्यमुष्य पदं पाशादीनि संयोज्य अमुष्य पदस्थाने षष्ठ्यन्तं साध्यनाम संयोज्य मन्त्रमुच्चरेदिति ज्ञेयम् ॥ ब्रह्मविष्णुशिवाः प्रोक्ता मुनयस्तन्त्रवेदिभिः । उक्तमृग्यजुषां सामच्छन्दश्छन्दोविशारदैः । चैतन्यरूपाः प्राणा मे देवताशक्तिरीरिता । कवर्गेण वियत्पूर्व्वं भूते हृदयमीरितम् । शिवश्च वर्गसन्धाद्यैरीरितं तदनन्तरम् । ज्ञानेन्द्रियैऽष्टवर्गाद्यैस्तच्छिखा परिकीर्त्तिता । कर्म्मेन्द्रियैस्तवर्गाद्यैः कवचं परिकीर्त्तितम् । वचनाद्यैः पवर्गाद्यैर्विलोचनमुदीरितम् । बुद्ध्याद्यैर्यादिसंयुक्तैरस्त्रस्य न्यासमीरितम् । आत्मनेऽन्ताः समाख्याता अङ्गमन्त्राः सजातिभिः ॥

प्रयोगो यथा ॥ ङं कं खं घं गं आकाशवायुवह्निसलिलभूम्यात्मने हृदयाय नमः । ञं चं छं झं जं शब्दस्पर्शरूपरसगन्धात्मने शिरसे स्वाहा । णं टं ठं ढं डं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने शिखायै वषट् । नं तं थं धं दं वाक्पाणिपादपायूपस्थात्मने कवचाय हुं । मं पं फं भं बं वचनादानविहरणविसर्गानन्दात्मने नेत्रत्रयाय वौषट् । हं यं रं वं लं क्षं शं षं लं सं बुद्धिमनोऽहङ्कारचित्तज्ञानात्मने अस्त्राय फट् ॥ नाभेश्चरणपर्य्यन्तं पाशवीजं प्रविन्यसेत् । हृदयान्नाभिपर्य्यन्तं शक्तिवीजं ततः परम् । मूर्द्धादिहृदयं याव-

दङ्गुग्मं विन्यसेत्ततः। हृदये धातुषु न्यस्येदतिदीप्तं यथाक्रमम्। प्राणे जीवे ततो न्यस्येद्धंसवर्णद्वयं पृथक्॥ प्राणजीवयोरपि हृदय एव न्यासः। पृथगिति प्रत्येकम्॥ कुर्य्याद्व्यापकमेतेन समस्तेन विधानवित्॥ समस्तेन मूलेनेत्यर्थः॥ ततो विचिन्तयेद्देवीं जीवभूतां जगन्मयीम्। रक्ताब्धिपोतारुणपद्मसंस्थां पाशाङ्कुशा-विक्षुशरासवाणान्। शूलं कपालं दधतीं कराब्जै रक्तां त्रिनेत्रां प्रणमामि देवीम्। एवं ध्यात्वा जगद्धात्रीं लक्षमेकं जपेन्मनुम्। जुहुयात्तद्दशांशेन चरुभिर्घृतसंयुतैः। सपाशाद्यशक्तिपीठे विधि-नानेन पूजयेत। अर्च्चयेत् षट्सु कोणेषु ब्रह्माणं विष्णुमीश्व-रम्। वाणीं लक्ष्मीमुमां पश्चात् षडङ्गानि प्रपूजयेत्। पूजा-क्रमस्तु॥ आग्नेयवारुणैशेषु ब्रह्मविष्ण्वीशा ऐन्द्रनैरृतवायव्येषु वाणीलक्ष्म्युमाः पूज्याः। प्रमाणन्तु प्रागुक्तम्॥ दलेषु मातरः पूज्यास्तद्वाह्ये लोकनायकाः। एवं सम्पूजयेद्देवीं सुगन्धिकुसु-मादिभिः। इति संसाधितो मन्त्रः षट्कर्म्मफलदो भवेत्। स्थापयेन्मनुनानेन प्राणान् सर्वत्र देशिकः। वीजान्ते ऽमुष्यशब्दा-नामादौ दूतीः प्रयोजयेत्॥ सर्वत्र सर्वकर्म्मसु पुत्तल्यादौ च प्राणप्रतिष्ठास्थापनप्रकारोऽनेन दर्शितः। वीजान्ते पाशादिहंस-मन्त्रान्ते। अमुष्यशब्दानामादाविति साध्यनाम्न आदौ। तदुक्तं राघवभट्टधृतेन। गत्वा बद्धा पाशवीजेन साध्यं शक्त्या गृह्णन् शक्तिवीजेन भूयः। प्राणानाकृष्याङ्कुशेनाथ यादीन् दूतीश्चोक्ता साध्यनामाथ मन्त्री॥ मृतवैवस्वता भूयो जीवहा प्राणहा ततः। आकृष्याग्रहणा पश्चात् प्रमदा विस्फुलिङ्गिनी। चेतन्या प्रतिष्ठा प्रोक्ताः प्राणदूत्यो नव स्मृताः। पाशेन बद्धचेष्टस्य शक्त्या स्वीकृत-चेतसः। अङ्कुशेनाहृतस्याङ्गिः सार्द्धस्याशु समाहरेत्। द्वादशा-ङ्गुलमानेन कृत्वा साध्यस्य पुत्तलीम्। तस्यां प्राणात्मकं मन्त्रं सकीटं हृदये न्यसेत्। निशीथसमये साध्ये सुप्तेऽस्य हृदया-

म्बुजे। दलेषु वायुवह्नीन्द्रवरुणानामतः परम्। ईशराक्षस-प्रीताांशुयमानां कर्णिकान्तरे। यादीन् हंससमायुक्तान् भृङ्गाकारानुस्मरेत्। शिवो विन्दुसमुद्भूतं तन्तुसम्बद्धविग्रहान्। एवमात्महृदम्भोजे भृङ्गीरूपा सवर्त्मना। एकैकां साध्यहृत्पद्मां भृङ्गमेकैकमानयेत्। पुत्तल्यां स्थापयेन्मन्त्री सचित्ते वा विधानवित्॥ अत्र प्रथमवत् द्वितीयादीनामपि साध्यनाम्नामेकैकस्यादौ पाशादिहंसमन्त्रान्तानि वीजान्युच्चार्य्य सम्बुद्ध्यन्तं प्रथमदूतीनाम एवं चतुर्षु स्थानेषु प्रथमं प्रयुज्यते। एवं दूत्यन्तरेष्वपि। नवकृत्वो मन्त्रावृत्तिः। मन्त्रोऽयमित्यमुदितो ग्रहसंख्ययैवेति राघवभट्टधृतवचनात्। अत्रैकैकस्यामावृत्तौ एकैकभृङ्गानयनमिति ज्ञेयम्। प्रथमदूतीनामप्रयोगे प्रथमभृङ्गानयनं द्वितीयदूतीनामप्रयोगे द्वितीयभृङ्गानयनमिति नवान्तमयमेव क्रमः। तन्तुच्छेदं प्रकुर्वीत वह्निवीजेन संयुतः। आकृष्टा साध्यहृद्भृङ्गांस्ततः संत्रभ्रमेिद्भवा। एवमेकादशावृत्तीः कुर्य्यात् सर्वेषु कर्मसु। वश्याकर्षणयोर्यादीन् वरुणान् संस्मरेत् सुधीः। मोहविद्वेषयोर्धूम्रान् कृष्णान् मारणकर्मणि। पीतान् संस्तम्भने ध्यायेत् प्राणाकर्षणकर्मवित्। आकृष्टान् साध्यहृत्प्राणान् स्थापयेदात्मनो हृदि। क्रूरकर्मसु पुत्तल्यां तेषां स्थापनमीरितम्। प्राणान् साध्यस्य मण्डूकानात्मानन्तु भुजङ्गमान्। संस्मरेत्तत्र निपुणः सदा क्रूरेषु कर्मसु। वायुग्निशक्रवरुणेश्वरराक्षसेन्दुप्रेतेशपत्रलिखितैरथ यादिवर्णैः। विन्द्वन्तिकैः च्चगत हंससमेतसाध्यं प्राणात्मयन्त्रमथ वर्णवृतं धरास्थम्। इत्थं प्रयोगकुशलो मनुनानेन मन्त्रवित्। वशयेत् सकलान् देवान् किं पुनः पार्थिवान् जनान्॥ आवाहनादिमुद्रा तु तन्त्रसारकारेण धृता न त्वत्र प्रयोजनं तासामिति। अथासनं मातृकाभेदतन्त्रे पञ्चमपटले। चतुरङ्गुलविस्तारमित्यादि॥ अथ पाद्यम्॥

प्रपञ्चसारे षष्ठपटले॥ पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्ता-भिरुच्यते इति पाद्यम्॥ अथार्घ्यम्॥ गन्धपुष्पाक्षतयवकुशाग्र-तिलसर्षपाः। दूर्वा चेति क्रमादर्घ्यं द्रव्याष्टकमुदीरितम्। शाक्तेयार्घ्ये विशेषो योगिनीतन्त्रे सप्तमपटले॥ वक्रधान्योद्भवं यच्च सूक्ष्मधान्योद्भवं तथा। तत्तु तण्डुलमक्षुण्णं सप्ताष्टनव-संख्यया। दूर्वाङ्कुरसमेतञ्च भगवत्यै निवेदयेत्। अष्टम्यां वा नवम्यां वा सोऽश्वमेधफलं लभेत्॥ इत्यर्घ्यम्॥ अथाच-मनीयम्॥ जातीलवङ्गकक्कोलैर्निर्मिताचमनीयकम्॥ इत्याच-मनीयम्। अथ मधुपर्कम्॥ मधुपर्कञ्च सक्षौद्रं दधि प्रोक्तं मनीषिभिः॥ शारदायाम्॥ आज्यं दधि मधून्मिश्रमेतदुक्तं मनी-षिभिरिति मधुपर्कम्॥ अथ पुनराचमनीयम्॥ शुद्धाभि-रद्भिर्विहितं पुनराचमनीयकम्॥ इति पुनराचमनीयम्। अथ गन्धः। गन्धशब्दव्युत्पत्तिस्तु कुलार्णवे पञ्चमखण्डे सप्तदशो-ल्लासे॥ गम्भीरापारदौर्भाग्यक्लेशनाशनकारणात्। धर्मज्ञान-प्रदानाच्च गन्ध इत्यभिधीयते॥ प्रपञ्चसारे। चन्दनागुरु-कर्पूरपङ्कं गन्धमिहोच्यते॥ तद्दानफलन्तु योगिनीतन्त्रे॥ गन्धानुलेपनं दत्त्वा ज्योतिष्टोमफलं लभेत्। कुङ्कुमेन विलि-प्यार्य्यां गोसहस्रफलं लभेत्। चन्दनागुरुकर्पूरैः शुक्लपुष्पैः स-कुङ्कुमैः। विलिप्तां पूजयेद्दुर्गां वह्निष्टोमफलं लभेत्। अथ गन्धाष्टकम्॥ मेरुतन्त्रे चतुर्थप्रकाशे॥ गन्धाष्टकं तस्य तस्य देवस्याथ प्रकीर्त्त्यते। चन्दनागुरुकर्पूररोचनाकुङ्कुमं मदम्। रक्तचन्दनजावासगाणपत्यमुदाहृतमिति गणेशगन्धाष्टकम्॥ ह्रीवेरं चन्दनं कुष्ठमगुरुं चन्दनं मुरा। सेव्यकञ्च जटामांसी वैष्णवं तदुदाहृतमिति विष्णुगन्धाष्टकम्॥ चन्दनागुरुकर्पूरजल-कुङ्कुमरोचना। जटामांसी कपियुतं शाक्तं गन्धाष्टकं विदुरिति शक्तिगन्धाष्टकम्॥ जलकाश्मीरकुष्ठैस्तु रक्तचन्दनचन्दनैः।

उशीरागुरुकर्पूरैः सौरं गन्धाष्टकं विदुरिति सूर्य्यगन्धाष्टकम् ॥ गोरोचना च कुष्ठञ्च कर्पूरागुरुकुङ्कुमैः। चन्दनेन सदास्यञ्च वरदेन च पत्रकम् ॥ शारदायाम् ॥ चन्दनागुरुकर्पूरतमालजल-कुङ्कुमम्। कुशीतकुष्ठसंयुक्तं शैवं गन्धाष्टकं स्मृतमिति शैव-गन्धाष्टकम् ॥ अथ पुष्पम् ॥ पुष्पशब्दव्युत्पत्तिस्तु कुलार्णवे ॥ पुण्यसंवर्द्धनाच्चापि पापौघपरिहारतः। पुष्कलार्थप्रदानाच्च पुष्पमित्यभिधीयते ॥ प्रपञ्चसारे ॥ तुलस्यौ पङ्कजे जात्यौ केतक्यौ करवीरकौ। शस्तानि दश पुष्पाणि तथा रक्तोत्पलानि च। उत्पलानि च नीलानि कह्लारकुमुदानि च। विश्वसार-तन्त्रे द्वितीयपटले शेषचरणे बहूनि कुसुमानि चेति पाठः ॥ मालतीं कुन्दमन्दारं नन्द्यावर्त्त्यादिकानि च। पलाशपाटला-पार्थपरन्त्यावर्त्तकानि च। चम्पकानि स नागानि रक्तमन्दार-काणि च। अशोकोद्भवविल्वाख्यकर्णिकारोद्भवानि च ॥ विश्व-सारतन्त्रे शक्तिविषये विशेष उक्तो यथा ॥ अथ देव्या मते वक्ष्ये पुष्पाणि शृणु पार्वति !। इत्युक्त्वा तुलस्यौ पङ्कजे इत्याद्युक्तम् ॥ तदनन्तरम्। एतान्यन्यानि तन्त्रेऽस्मिन् पुष्पाणि सन्ति वै प्रिये !। नानादेशोद्भवानि स्युः सर्वकालोद्भवानि च। कुलानि चैव पुष्पाणि दद्याद्देव्यै विशेषतः। अथ पुष्पं प्रवक्ष्यामि कर्मयोगे महेश्वरि !। शृणुष्व परया भक्त्या यथोक्तं ब्रह्मणा पुरा। कमले करवीरे द्वे कुसुम्भे तुलसीद्वयम्। जात्यशोके केतके द्वे कुमारी-चम्पकोत्पलम्। कुन्दमन्दारपुन्नागपाटलानागचम्पकम्। आर-ग्वधं कर्णिकारं पावन्ती नवमल्लिका। सौगन्धिकं सकोरण्डं पलाशाशोकसर्जकाः। सिन्धुवार अपामार्गं वापुलीकञ्च काम-जम्। व्याघ्रचेलं दमनकं मरुवकञ्च ततः परम्। लवङ्गं जलकर्पूरं तगरञ्च जवा तथा। शिवपुष्पं द्रोणपुष्पं कामराजं सुकेतकम्। अन्यानि वनपुष्पाणि जलजस्थलजानि च। गिरिजानि देशजानि

नामापुष्पाण्यतः परम्॥ शारदायामपि॥ कमले करवीरे द्वे कुमदे तुलसीद्वयम्। जातीद्वयं केतके द्वे कह्लारं चम्पकोत्पले। कुन्दमन्दारपुन्नागपाटला नागचम्पकम्। आरग्वधं कर्णिकारं पावन्ती नवमल्लिका। सौगन्धिकं सकोरण्टं पलाशाशोकमल्लिकाः। धुस्तूरं सर्जकं विल्वमर्जुनं मुनिपुष्पकम्। अन्यान्यपि सुगन्धीनि पत्रपुष्पाणि देशिकैः। उपदिष्टानि पूजायामाददीत विचक्षणः॥ योगिनीतन्त्रे तृतीयभागे सप्तमपटलेऽपि॥ शृणु देवि! प्रवक्ष्यामि पुष्पाध्यायं समासतः। ऋतुकालोद्भवैः पुष्पैर्मल्लिकाजातिकुङ्कुमैः। सितरक्तैस्तथा पुष्पैर्नीलपद्मैश्च पाण्डरैः। किंशुकैस्तगरैश्चैव जवाकनकचम्पकैः। वकुलैश्चैव मन्दारैः कुन्दपुष्पैः कुरुण्डकैः। धुस्तूरकादियुक्तैश्च बन्धूकागस्त्यसम्भवैः। मदनैः सिन्धुवारैश्च दूर्वाङ्कुरसुकोमलैः। मञ्जरीभिः कुशानाञ्च विल्वपत्रैः सुकोमलैः॥ नवमपटलेऽपि॥ तुलसी द्वे मालती तमालामलकी तथा। पुन्नागं मुनिपुष्पञ्च मल्लिकाञ्च निवेदयेत्। करवीरस्य कुसुमैर्येऽर्चयन्ति जनार्द्दनम्। दर्शनात्तस्य देवेशि! नरकाग्निः प्रणश्यति॥ अथ करवीरादिमाहात्म्यम्। पुरश्चरणरसोल्लासे दशमपटले॥ करवीरं जवा देवि! स्वयं काली न चान्यथा। तारा च अपरा चैव स्वयं त्रिपुरसुन्दरी। तथा। करवीरजवामूले तुलस्या नगनन्दिनि!। यदि प्राणांस्त्यजेद्देवि! माहात्म्यं तस्य सुन्दरि!। वक्त्रकोटिशतेनापि जिह्वाकोटिशतेन च। वर्णितुं तस्य माहात्म्यं न शक्नोमि कदाचन॥ इति करवीरजवामूले प्राणत्यागफलम्। शुक्लकृष्णां तथा पीतं हरितं लोहितं तथा। करवीरं महेशानि! जवापुष्पं तथैव च। स्वयं काली महामाया स्वयं त्रिपुरसुन्दरी। अनादरो न कर्त्तव्यः कृत्वा च नरकं व्रजेत्॥ दशमपटले॥ कृष्णापराजिता साक्षाद्भद्रकाली न संशयः॥ करवीरञ्च

भुवना द्रोणं भुवनसुन्दरी। जवा साक्षाद्भगवती सर्वविद्यास्वरूपिणी। ये साधका जगन्मातरर्च्चयन्ति शिवप्रियाम्। एतैश्च कुसुमैश्चण्डि! स शिवो नात्र संशयः। किं जपैः किं तपोभिर्वा किं दानैर्वा किमध्वरैः। येनार्च्चिता जगद्धात्री द्रोणकृष्णाजवादिभिः। राजसूयाश्वमेधाद्यैर्वाजपेयाग्निहोत्रकैः। फलं यज्जायते चण्डि! तत्सर्वं कुसुमार्च्चनात्। जवा द्रोणं तथा कृष्णा मालूरं करवीरकम्। साक्षाद्ब्रह्मस्वरूपञ्च महादेव्यै निवेदयेत्। श्वेतचन्दनसंयुक्तं रक्तचन्दनलेपितम्। यो दद्याद्भक्तिभावेन स विःश्वेशो न संशयः॥ अथ सकामस्य पुष्पविशेषस्तत्रैव॥ करवीरस्य माघ्यस्य सहस्राणि ददाति यः। स कामान् प्राप्य चाभीष्टान् देवीलोके महीयते। तत्रैककरवीरेण पद्मानां द्वे सहस्रके। महाघोरे महोत्पाते महापदि च सङ्कटे। महादुःखे महारोगे महाशोके महाभये। पूजयेत् कालिकां तारां भुवनां षोड़शीं शिवाम्। वालां छिन्नाञ्च वगलां धूमां भीमां करालिनीम्। कमलामन्नपूर्णाञ्च दुर्गां दुःखविनाशिनीम्। सर्वविद्या जवाद्रोणकरवीरैर्मनोहरैः। मालूरपत्रैः कृष्णाभिः कृष्णां सम्पूज्य भूतले। साधकेन्द्रो महेशानि! भवेन्मुक्तो न संशयः॥ मुण्डमालायां दशमपटले॥ जवापुष्पैर्द्रोणपुष्पैः करवीरैर्मनोहरैः। कृष्णापराजितापुष्पैरर्केश्च मुनिपुष्पकैः। पूजयेत् परया भक्त्या चण्डिकां परमेश्वरीम्॥ योगिनीतन्त्रमत्स्यसूक्तयोः॥ येऽर्च्चयन्ति जनाध्यक्षं करवीरैः सितासितैः। चतुर्युगाणि देवेशि! प्रीतो भवति माधवः। सितासितैरिति श्वेतकृष्णमित्याद्युक्तवचनैनैकवाक्यतया असितशब्देन रक्तपीतादिकमवगम्यते न तु कृष्णमात्रम्। योगिनीहृदये॥ वकपुष्पं जातिपुष्पं तथा रुद्रजटस्य च। वाजपेयस्य यज्ञस्य फलं प्राप्नोति नान्यथा। सर्वेषामेव पुष्पाणां प्रवरं नीलमुत्पलम्। नीलोत्पलसहस्रेण यस्तु मालां प्रयच्छति।

दुर्गायै विधिवद्देवि! तस्य पुण्यफलं शृणु। वर्षकोटिसहस्राणि वर्षकोटिशतानि च। देव्या अनुचरी भूत्वा रुद्रलोके महीयते। मुण्डमालायाम्॥ लक्षाणां महिषैर्मेषैरजैर्दानैर्मखैः शुभैः। पूजिता सा जगद्धात्री यद्येषा कुसुमार्च्चिता। माहात्म्यञ्चैव कृष्णायाः कृष्णा जानाति तत्त्वतः। तदर्द्धञ्चाप्यहं देवि! तदर्द्धं श्रीपतिः सदा। तदर्द्धमब्जजन्मा वै तदर्द्धं वेदसाधकः। अन्य पुष्पस्य माहात्म्यं संक्षेपाद्वच्मि शङ्करि!। पृथिव्या मण्डले स्वर्गे वैकुण्ठे कालिकापुरे। जवादिकरवीरैश्च दलैः किं किं फलं लभेत्। न जानाति जगद्धात्रि! को वेद पार्वतीं विना। करवीरैः श्वेतरक्तै रक्तचन्दनमिश्रितैः। पूजयेत् क्ष्मातले यस्तु स विश्वेशो भवेद्ध्रुवम्। कृष्णापराजितापुष्पैर्यस्तु देवीं प्रपूजयेत्। सोऽश्वमेधसहस्राणां फलं प्राप्य शिवां व्रजेत्। महाविपत्तौ यो दद्याज्जवां कृष्णापराजिताम्। द्रोणं वा करवीरं वा स गच्छेत् कालिकापुरम्॥ इति महाविपत्तिनिवृत्तिकारणजवादिदानेनापि कालीपुरगमनम्॥ तत्रैव॥ किञ्च पाद्यैः किञ्च वाद्यैर्नैवेद्यैः किञ्च पूजनैः। मधुदानैर्मधुपर्कैः कुम्भकैः किञ्च रेचकैः। पूरकैः किञ्च वा ध्यानैः प्राणायामैश्च किञ्च वा। किं जपैः किं तपोभिर्वा मत्स्यैर्मांसैश्च पञ्चमैः। किमन्यमन्त्रैः किं तन्त्रैः किं यन्त्रैः किञ्च साधनैः। किं वेदैरासवैः किं वा श्मशानैर्मन्त्रसाधनैः। किमध्वरैर्मन्त्रपूतैर्मन्त्रार्थैर्मन्त्रजीवनैः। किं योनिमुद्रया किं वा तीर्थैः किं ब्रह्मसाधनैः। किं मातृकान्यासगणैः किं कटैः किं घटैः पटैः। किं काकचञ्चुभिः षोढ़ान्यासैः किं धर्म्मसाधनैः। येनार्च्चिता महादेवी करवीरैर्जवादिभिः। कृष्णापराजितापुष्पैः करवीरैर्मनोहरैः। द्रोणैस्तु केतकीपुष्पैर्जवामालूरपत्रकैः। पूजिता यैर्भगवती तेषां किं कर्म्मसाधनैः॥ नित्यातन्त्रे एकादशपटले॥ न तुलस्या यजेत्

कालीं नाच्चतैर्विष्णुमर्च्चयेत् । अपराजिताया दानेन साक्षात्तुष्टा भवेच्छिवा । कालिकायाश्च तारायाः करवीरमतिप्रियम् । जवा-पुष्पं महेशानि ! दद्यान्न धारयेत् क्वचित् । रक्तोत्पलेन देवेशि ! कालिकां पूजयेत् सकृत् । शतवर्षसहस्राणां पूजायाः फलमा-प्नुयात् ॥ तथा । दूर्व्वापि गर्भसंयुक्ता देवीतुष्टिकरी भवेत् । पुरश्चरणरसोल्लासे ॥ मञ्जरीं सहकारस्य केशवाय निवेदयेत् । जम्बु तिन्दुकयोरेव तथा वै केशवस्य च । शेफालिकाञ्च तगरं बन्धूकञ्च निवेदयेत् । रुद्रजटां शिरीषञ्च दाड़िमं काञ्चनं तथा । नीलकण्ठं मयूरञ्च योन्याकारञ्च वर्ज्जयेत् । पुष्पदाने काम्यफलं नित्यातन्त्रे तत्रैव ॥ ईश्वर उवाच ॥ ब्रह्महत्यादिपापानां प्रायश्चित्तं सुरेश्वरि ! । रक्तपुष्पैर्महादेवि ! चक्रराजं प्रपूजयेत् । कुलाचारक्रमेणैव कर्पूरक्षोदमण्डितम् । महापातककोटीश्च जन्मान्तरकृता अपि । मासमात्रेण हन्यन्ते सत्यं सत्यं न संशयः । लक्ष्मीस्तस्य भवेद्गेहे सुस्थिरा वीरवन्दिते ! । जवापुष्पै-र्महेशानि ! पूर्व्ववद्यदि पूजयेत् । मासमात्रेण नश्यन्ति सप्त-जन्मकृतान्यपि । ब्रह्महत्यादिपापानि धनवान् जायते कविः । पूर्व्ववत् केतकीपुष्पैः पत्रैर्वा यदि पूजयेत् । मासमात्रेण देवेशि ! उपपातककोटयः ॥ नश्यन्तीति पूर्व्वोक्तेनान्वयः । लभते राज-सौभाग्यं साधको नात्र संशयः । शतपत्रैर्महेशानि ! पूर्व्ववत् पूजयेच्छिवाम् । मासमात्रेण देवेशि ! सर्व्वपापं विनाशयेत् । चम्पकैः पूजयेद्देवीं पूर्व्ववन्मासमात्रकम् । निहत्य परमेशानि ! पातकं शतजन्मजम् । सौभाग्यं लभते मन्त्री त्रिषु लोकेषु पार्व्वति ! । श्वेतपद्मैर्महेशानि ! मासमात्रं प्रपूजयेत् । त्रिंशज्जन्म-कृतान् पापान्नाशयेन्नात्र संशयः । बन्धूकैः पूर्व्ववद्देवि ! मासमात्रं प्रपूजयेत् । निहत्य सर्व्वपापानि त्रैलोक्यं वशमानयेत् । मालती-मल्लिकाजातीकुन्दैः श्वेतोत्पलैः सह । सुमिश्रैः पूर्व्ववद्देवि !

मासमात्रं प्रपूजयेत्। ब्रह्महत्यादिपापानि शतजन्मकृतान्यपि। नाशयेत् परमेशानि! मुक्तिस्तस्य करे स्थिता। रक्तोत्पलजवा-वह्निबन्धूकागस्त्यकैः शिवाम्। पूर्ववत् परमेशानि! मासमात्रं प्रपूजयेत्। पातकं नाशयित्वासौ मम तुल्यो भवेन्नरः। नाग-केशरकह्लारवकुलैः सिन्धुवारकैः। पाटलैः पूजयेद्देवि! श्री-पीठान्तर्निवासिनीम्। पूर्ववत् पूजयेद्देवि! मासमात्रं प्रस-न्नधीः। सहस्रजन्मजं पापं नाशयेन्नात्र संशयः। सौभाग्यमतुलं तस्य भवेद्देवीप्रसादतः॥ योगिनीतन्त्रे॥ नोत्सृज्य दद्यात् पुष्पाणि वनस्थानि कदाचन। न शक्नुवन्ति वै देवाः समाकर्षि-तुमुद्यताः। एकैकं कुसुमं यत्ना रक्षन्ति दश वै यतः। तथा यक्षा-ङ्गनाः पञ्च सर्वतः कुसुमावृताः। तस्मादाहृत्य कुसुमं यजेद्देवान् पितॄनपि॥ इति वृक्षस्थपुष्पदाननिषेधः॥ मत्स्यसूक्ते॥ स्नात्वा मध्याह्नसमये यश्छिन्द्यात् कुसुमं नरः। तत्पुष्पैरर्चने देवि! रौरवे प्रतिपद्यते॥ मध्याह्न इत्युपादानात् प्रातःस्नातस्य पुष्पा-हरणे न दोषः॥ अथ पुष्पमाला॥ विश्वसारतन्त्रे॥ नीलो-त्पलसहस्रेण यस्तु मालां प्रयच्छति। दुर्गायै विधिवद्देवि! तस्य पुण्यफलं शृणु। वर्षकोटिसहस्राणि वर्षकोटिशतानि च। देव्या अनुचरो भूत्वा रुद्रलोके महीयते॥ योगिनीतन्त्रे नवमपटले॥ मालतीमालया विष्णुरर्च्चितो येन कार्त्तिके। पापाचरकृत-माला नाशिता तस्य विष्णुना। षष्ठे सौरे प्रमार्ज्जिता इति मत्स्यसूक्ते चतुर्दशपटले शेषचरणे पाठः॥ तथा॥ करवीरकृतां मालां माधवाय प्रयच्छति। देवेन्द्रोऽपि महेशानि! करोति करसम्पुटम्॥ अथ मासविशेषे धात्रीफलादिदानफलं तत्रैव॥ धात्रीफलेन पत्रेण योऽर्च्चयेन्मेषगे रवौ। दशानामश्वमेधानां फलन्तु लभते प्रिये!। मञ्जरीं सहकारस्य केशवाय निवेदयेत्। जम्बूतिन्दुकयोरेव तथा वै केशवस्य च॥ मत्स्यसूक्ते॥ करवीर-

कृतां मालां यो दद्यान्माधवाय च। देवेन्द्रोऽपि महेशानि! करोति करसम्पुटम्॥ चकारादन्यस्यै देवतायै च॥ तत्रैव॥ न भेदयेद् यज्ञसूत्रं मालाञ्चैव न भेदयेत्। विशेषे मालतीमाला व्याघ्रचर्म्म तथैव च॥ वृहन्नीलतन्त्रे द्वितीयपटले॥ कोकनदञ्च बन्धूकं कर्णिकाद्वयमेव। वकमन्दाररक्तानि करवीराणि शस्यते। मल्लिकात्रितयं जाती चौमपुष्पं जयन्तिका। विल्वपत्रं कुरु-वकं मुनिपुष्पञ्च केशरम्। वासन्तीञ्चैव सौगन्धं कालपुष्पं मनो-हरम्। आमलकञ्च कादम्बं वकुलं यूथिकां तथा। विल्वैर्मरु-वकाद्यैश्च तुलसीवर्जितैः शुभैः। ओड्रपुष्पैर्विशेषेण वज्रपुष्पेण शोभितम्। सर्वं पुष्पं प्रदद्याच्च भक्तियुक्तेन चेतसा। जवापुष्पं महेशानि! दद्याद्देव्यै विशेषतः। पद्मं प्रियतरं देव्याः शेफाली वकुलं तथा। रक्तोत्पलेन देवेशि! पूजयेत् परमां शिवाम्। लक्षवर्षसहस्राणां पूजायाः फलमाप्नुयात्। शिरीषं परमं देव्याः प्रीतिदं तगरं तथा। स्थलपद्मं सुष्ठुतरं लक्षसंख्यक्रमेण तु। यदि दद्यान्महेशानि! सर्वसिद्धिः सुरेश्वरि!। तदैव मन्त्रसिद्धिः स्यान्नात्र कार्य्या विचारणा। विजातीं तुलसीं रम्यां तस्यां प्रीतिकरां पराम्। काञ्चनं रक्तवर्णञ्च आदिप्रियतरं महत्। भक्तियुक्तो महेशानि! सर्वं पुष्पं निवेदयेत्॥ वृहन्नीलतन्त्रे॥ चातुर्मास्ये तु लक्षैकमालत्या योऽर्च्चयेद्धरिम्। शतजन्मकृतं पापं तत्क्षणादेव नश्यति। करवीरस्य कुसुमैर्येऽर्च्चयन्ति हरेर्दिने। दर्शनात्तस्य देवेशि! नरकाग्निः प्रणश्यति॥ अथ वर्ज्यपुष्पाणि॥ नार्च्चयेत् झिण्टिपुष्पेण पीतैश्च तगरैस्तथा। श्वेतेनोड्रेण कृष्णेन विजयेन न चार्च्चयेत्॥ प्रपञ्चसारे षष्ठपटले॥ अङ्गने पति-तैर्माल्यैः शीर्णैर्वा जन्तुदूषितैः। आघ्रातैरङ्गसंस्पृष्टैरूषितैर्नापि चार्च्चयेत्॥ शारदायाम्॥ मलिनं भूमिसंस्पृष्टं कृमिकेशादिदूषि-तमङ्गस्पृष्टं समाघ्रातं त्यजेत् पर्य्युषितं गुरुः॥ मत्स्यसूक्ते

चतुर्द्दशपटले॥ शेफालिकान्तु कह्लारं शरत्काले प्रशस्यते। अन्यत्र न स्पृशेद्देवि! प्रायश्चित्तन्तु पूजनात्। नार्चयेद्रक्तकृष्णेन तथोग्रगन्धिकेन च। करवीरस्य माध्यस्य बन्धूजीवस्य चैव हि। केशरस्य च वज्रस्य रक्तं देवि! प्रशस्यते॥ योगिनीतन्त्रे॥ विल्वपत्रं शमीपत्रं तमालामलकीदलम्। अपाङ्गभृङ्गपत्रञ्च कुशं दूर्वां तथैव च। पुष्पाणामप्यभावे तु फलान्यपि निवेदयेत्। फलानामप्यभावे तु तत्पत्रैः पूजयेद्धरिम्॥ इति पुष्पाद्यभावे पत्रेणापि पूजनम्॥ गुप्तपूजापुष्पञ्च तत्रैव॥ सिंहास्यञ्चैव मायूरं धुस्तूरञ्च चतुर्विधम्। तथा रुद्रजटे द्वे च गुह्यपुष्पञ्च शङ्करि!॥ पद्मे नीलोत्पले देवि! वकमन्दारकाञ्चने। माधवो द्वे तमालञ्च गुप्तमेतद्धरार्चने॥ दिवारात्रिभेदेन पुष्पविशेषेण पूजनमुक्तं तत्रैव॥ कनकानि सुगन्धीनि रात्रौ देयानि शङ्करि!। दिवा चान्यानि पुष्पाणि दिवा रात्रौ च मल्लिका॥ देवालयस्य पुष्पेण यो देवं प्रतिपूजयेत्। अन्धत्वं प्राप्नुयात् सोऽपि दश वर्षाणि पञ्च च॥ देवताविशेषे पुष्पविशेषवर्ज्जनमपि तत्रैव॥ शिवे विवर्जयेत् कुन्दं माधे माध्यं प्रशस्यते। गणेशे वर्ज्जयेन्माध्यमशोकं तगरं तथा। सूर्य्ये माध्यञ्च मन्दारं कनकञ्च तथैव च। महालक्ष्म्यै च तुलसीं झिण्टिकां काञ्चनं तथा। अत्र झिण्टिकावर्जनमधिकदोषार्थम्॥ बन्धूजीवञ्च द्रोणञ्च सरस्वत्यै न दापयेत्। ग्रहाणां विल्वपत्रञ्च शमीपत्रं तथैव च। ब्रह्मणे वर्जयेत् काशं कौसुम्भं शमिपुष्पकम्। धात्रीपुष्पं कुरुण्टञ्च जलपुष्पं तथैव च। दुर्गायै न प्रदद्याच्च सोमपुष्पं तथैव च। त्रिपुरायै काञ्चनञ्च कनकं वासकं तथा। किंशुकं कृष्णकान्ताञ्च इन्द्राचीं वर्च्चनां तथा॥ योगिनीतन्त्रे॥ विल्वपत्रञ्च माध्यञ्च तमालामलकीदलम्। कह्लारं तुलसीञ्चैव पद्मञ्च मुनिपुष्पकम्। एतत् पर्य्युषितं न स्यात् यच्चान्यत् कलिकात्मकम्। न दुष्येच्छिन्नभिन्नञ्च जातीपुष्पञ्च शङ्करि!।

धूपशब्दव्युत्पत्तिस्तु कुलार्णवे ॥ धूताशेषमहादोषपूतिगन्धप्रभावतः। परमानन्दजननाद्धूप इत्यभिधीयते ॥ प्रपञ्चसारे ॥ सगुग्गुल्वगुरूशीरसिताज्यमधुचन्दनैः। साराङ्गारे विनिक्षिप्तैर्मन्त्री पीठे: प्रधूपयेत् ॥ योगिनीतन्त्रे ॥ कृष्णागुरुसकर्पूरं चन्दनं सिह्लकं तथा। भगवत्यै नरो यस्तु इदं दत्त्वा महेश्वरि!। इह काममवाप्नोति दुर्गालोके महीयते ॥ इति धूपः ॥ दीपव्युत्पत्तिस्तु कुलार्णवे ॥ मोहध्वान्तप्रशमनात् क्षयजन्मनिवारणात्। दिव्यरूपप्रदानाच्च परतत्त्वप्रकाशनात्। मोक्षदीप इति ख्यातो मोक्षमार्गैकसाधनम् ॥ प्रपञ्चसारे ॥ गोसर्पिषा वा तैलेन वर्त्त्या च लघुगर्भया। दीपितं सुरभिं दुग्धं दीपमुच्चैः प्रदीपयेत् ॥ इति दीपः ॥ वस्त्रदानन्तु वरदातन्त्रे चतुर्थपटले ॥ षट्त्रिंशदङ्गुलान्यूनायामं वस्त्रं न चार्पयेत्। विभवे सति देवेशि! काम्ये कर्मणि कुत्रचित् ॥ अलङ्कारस्तु तत्रैव ॥ अष्टवर्षकन्यकाया नोपयुक्तं भवेत्तु यत्। अलङ्कारं न दद्याच्च वित्तशाठ्यं विवर्जयेत् ॥ हीनोत्तमयोः फलन्तु सर्वोपचाराणां तत्रैव ॥ हीने हीनफलं देवि! श्रेष्ठे श्रेष्ठफलं लभेत् ॥ नैवेद्यशब्दव्युत्पत्तिस्तु कुलार्णवे ॥ चतुर्विधं कुलेशानि द्रव्यं ते षड्रसान्वितम्। निवेदनाद्भवेत्तृप्तिर्नैवेद्यं तदुदाहृतम् ॥ प्रपञ्चसारे ॥ सुसितेन सुशुद्धेन पायसेन ससर्पिषा। सितौदनं सकदलीदध्याद्यैश्च निवेदयेत्। इति नैवेद्यम् ॥ ताम्बूलं मत्स्यसूक्ते षड्विंशतिपटले ॥ अथ वास्तुगुवाकञ्च कृत्वा पर्णसमन्वितम्। शङ्खशम्बूकचूर्णेन विलिप्तेन निवेदयेत्। तथा। कर्पूरवासितं देवि! मृगदर्पसमन्वितम्। धन्याकमधुरीकाद्यैः साधितन्तु निवेदयेत्। एलाचम्पकमुस्ताद्यैर्मुखवासः प्रशस्यते ॥ निषिद्धचूर्णपर्णे अपि तत्रैव ॥ कपर्दकस्य वृक्षस्य पलाशस्य च शङ्करि!। तच्चूर्णं वर्ज्जयेद्देवि! वृक्षपर्णं न दापयेत्। कलिवृक्षस्थितं पर्णं

पनसस्थं न दापयेत्। अशोकशाल्मलिस्थं वा सदैव परिवर्ज-येत्॥ कलिवृक्षो भूतावासः गौड़े वयड़ा इति यस्य प्रसिद्धिः। शस्तमपि तत्रैव॥ आम्रनिम्बगतस्यैव शस्तं पर्णं मम प्रिये!। इति ताम्बूलम्॥ ततः प्राणायामादिकं कृत्वा अष्टोत्तरसहस्रं शतं वा मूलमन्त्रं जप्त्वा जपं समर्प्य स्तवकवचादिकं पठित्वा प्रणमेत्॥ तदुक्तं गन्धर्वतन्त्रे पञ्चदशपटले॥ स्तुवन्नानाविधैः स्तोत्रैर्भक्तिभावसमन्वितः। प्रणमेत् परमेशानीं विधिना साधको-त्तमः। देवमानुषगन्धर्वा यक्षराक्षसपन्नगाः। नमस्कारेण तुष्यन्ति महात्मानः समन्ततः। नमस्कारेण लभते चतुर्वर्गं महोदयम्। सर्वत्र सर्वसिद्ध्यर्थं नतिरेका प्रवर्त्तते। नत्या विजयते लोकान् नत्या धर्मः प्रवर्त्तते। नमस्कारेण दीर्घायुरच्छिन्ना लभते प्रजाः। चतुर्वर्गं लभेन्नत्वा न चिरादेव साधकः। नमस्कारो महायज्ञः प्रीतिदः सर्वतः सदा। नमस्कुरु महादेवीं प्रदक्षिणञ्च भक्तितः॥ योगिनीतन्त्रे पूर्वखण्डेऽष्टमपटले॥ प्रदक्षिणत्रयं कुर्य्यात् पश्चा-त्कारं नमेत्ततः। दक्षिणादुत्तरं गत्वा देवस्य च महेश्वरि!॥ प्रदक्षिणत्रयमित्यादि मध्यावसाने ज्ञेयम्। तथा च कुमारी-पूजामधिकृत्य रुद्रजामले उत्तरखण्डे षष्ठपटले॥ प्रदक्षिणत्रयं कुर्य्यादादौ मध्ये तथान्ततः। पश्चात्तु दक्षिणां कुर्य्याद्रजतैः स्वर्णमौक्तिकैः। कृताञ्जलिं ततो बद्ध्वा भ्रामयित्वा नमेत्ततः। प्रत्येकभ्रमणे देवि! दण्डवत् प्रणिपातयेत्। यो नो नमेद्भ्रमित्वा तु अपराधी भवेत्तदा। अबद्धाञ्जलिना यस्तु नमस्कारं करोति सः। मोहान्धकारनरके पच्यते नात्र संशयः। पातान्तरे च प्रणमेन्मूर्ध्ना न च क्षितिं स्पृशेत्। शपन्ति देवतास्तस्य विफलं तत् प्रकीर्त्तितम्। प्रणामे देवदेवस्य यावत्यो मृत्तिकाः प्रिये!। शरीरे वा महेशानि! तस्य पुण्यफलं शृणु। यावन्तो रेण-वस्तस्य यावत्कालञ्च तिष्ठति। तावद्वर्षसहस्राणि ब्रह्मलोके

स्त्रीयते ॥ गन्धर्वतन्त्रे ॥ कायिको वाग्भवश्चैव मानसस्त्रिविधः स्मृतः । नमस्कारास्तु विज्ञेया उत्तमाधममध्यमाः । कायिकैस्तु नमस्कारैर्देवास्तुष्यन्ति सर्वदा । नमस्कारेषु सर्वेषु कायिकः प्रथमः स्मृतः । जानुभ्यामवनीं गत्वा संस्पृश्य शिरसा क्षितिम् । क्रियते यो नमस्कारः प्रोच्यते कायिकस्तु सः । पुटीकृत्य करौ शीर्षे सर्वधर्मार्थसाधनम् । प्रसार्य्य दक्षिणं हस्तं स्वयं नम्रशिराः पुनः । दर्शयन् दक्षिणं पार्श्वं भक्तिश्रद्धासमन्वितः । सकृत प्रदक्षिणं कृत्वा वर्त्तुलाकृति साधकः । स तु प्रदक्षिणो ज्ञेयः सर्वदेवैकतुष्टिदः । अष्टोत्तरशतं यस्तु देव्याः कुर्य्यात् प्रदक्षिणम् । स सर्वकाममासाद्य पश्चान्मोक्षमवाप्नुयात् । त्रिकोणमथ षट्कोणमर्द्धचन्द्रं प्रदक्षिणम् । दण्डमष्टाङ्गमुग्रञ्च सप्तधा नतिलक्षणम् । दक्षिणाद्वायवीं गत्वा तस्मादावृत्य दक्षिणम् । गत्वा योऽसौ नमस्कारः सोऽर्द्धचन्द्रो मम प्रियः । नमस्कारेषु जानीयादासां प्राकृतमद्रिजे ! । त्यक्त्वा स्वमासनं स्थानं पश्चाद्गत्वा नमस्कृतः । निपत्य दण्डवद्भूमौ दण्ड इत्युच्यते बुधैः । तथैव दण्डवद्भूमौ निपत्य हृदयेन च । चिवुकेन मुखेनाथ नासया हनुकेन च । चक्षुषा चाथ कर्णाभ्यां ब्रह्मरन्ध्रेण चैव हि । तदष्टाङ्गमिति प्रोक्तं यद्भूमिं स्पृशते क्रमात् ॥ मेरुतन्त्रे ॥ हस्ताभ्यां चरणाभ्याञ्च जानुभ्यां वक्षसा तथा । मूर्द्ध्ना दृष्ट्या तथा वाचा चित्ते चाष्टाङ्ग ईरितः । हस्तजानुशिरोवाक्यधीभिः पञ्चाङ्ग ईरितः ॥ गन्धर्वतन्त्रे ॥ ब्रह्मरन्ध्रेण संसर्गः क्षितेर्यस्या नमस्कृतेः । स उग्र इति विज्ञेयो विष्णोस्तुष्टिप्रदायकः । या स्वयं गद्यपद्याभ्यां घटिताभ्यां नमस्कृतिः । क्रियते भक्तियुक्तेन वाचिकस्तूत्तमः स्मृतः । पौराणिकैर्वैदिकैर्वा तान्त्रिकैः क्रियते नतिः । स मध्यमो नमस्कारो भवेदाचारतः सदा । परेषां गद्यपद्याभ्यां नमस्कारो यदा भवेत् । स वाचिकोऽधमो ज्ञेयो नमस्कारेषु

सर्वतः। दृष्टमध्यानिष्टगतैर्मनोभिस्त्रिविधं भवेत्। नमनं मानसं प्रोक्तमुत्तमाधममध्यमम्। त्रिविधे च नमस्कारे कायिकश्चोत्तमः स्मृतः॥ ततो देवतां विसृज्य नैवेद्यावशेषेण तत्तत्कल्पोक्तां देवतां सम्पूज्य स्थानमार्ज्जनादिकं कुर्य्यात्॥

अथ निर्माल्यकालनिरूपणम् योगिनीतन्त्रे तृतीयभागे सप्तमपटलीयवचनन्तु तन्त्रसारकारेणैव धृतं न त्वत्र प्रयोजनम्। मत्स्यसूक्ते षोड़शपटले॥ मणिमुक्ताप्रवालानि देवदत्तानि यानि च। न निर्माल्यं द्वादशाब्दं तैजसानि तथैव च। तूलिका चैव षण्मासमविजं पञ्चवत्सरम्। पटनिर्माणकञ्चैव कार्पासं वस्त्र-मेव च। वत्सरञ्च तदर्द्धञ्च मृदुवस्त्रं तदर्द्धकम्। नैवेद्यं दर्शनादेव महापूजावसानकं। यावदुष्णं भवेदन्नं यन्त्रसूत्रं ततः स्मृतम्। सोदकं क्षणरञ्चैव यामार्द्धेन महेश्वरि!। करवीरस्रजो देवि! तथा पद्मोत्पलानि च। यामार्द्धेन महेशानि! तथा विल्व-स्रयस्य च। मस्तकं रुधिरञ्चैव अहोरात्रेण सुन्दरि! तुलसी द्वे मालती द्वे तमालामलकौ तथा। पुन्नागमुनिपुष्पञ्च मल्लिका त्रिविधानि च। जाती द्वे केतकी द्वे च कुमुदे पद्मकद्वयम्। वासुदेवाय यो दद्यात्तस्य पुण्यमनन्तकम्॥ अथ देवतासम्प्रदा-नकविहितनिषिद्धद्रव्याणि॥ बृहन्नीलतन्त्रे षष्ठपटले॥ सन्देशं परमं दद्याद्दिव्यै द्रव्येण संयुतम्। गुड़ं चीरं मधु द्राचामिक्षुदण्डं पुरातनम्। रम्भाफलं वीजपूरं तथा च नारिकेलकम्। मधु-युक्तं नारिकेलशस्यं दद्यान्महेश्वरि!। मधुयुक्तं मिष्टयुक्तं व्यव-हारोऽपि च तथा॥ योगिनीतन्त्रोत्तरखण्डीयाष्टमपटले॥ इङ्गुदीफलविल्वानि वदरामलकानि च। खर्ज्जूरं पनसञ्चैव मातुलुङ्गं मधूनि च। आम्रातोडुम्बरञ्चैव तथा तालफलानि च। दाड़िमं कदलञ्चैव प्रयत्नेन नियोजयेत्। लकुचं मधुकं युक्तं तथा पूगफलानि च। वीजपूरञ्च मधुरं कर्कन्धूञ्च निवेदयेत्। मूल-

कस्य च शाकञ्च अन्यञ्च विविधं तथा। सर्षपस्य च शाकञ्च राजीवस्य तथैव च। यस्य मूलं विशालञ्च शाकं तस्य प्रशस्तकम्। वास्तूकस्य शाकञ्च पालङ्कस्य मम प्रिये!। देयानि वर्ज्जनीयानि तथा च तिन्तिड़ीफलम्। कुष्माण्डं पर्वतीयञ्च यथा चारण्यसम्भवम्। कदलं बीजपूरञ्च वामकं पौण्ड्रकं तथा। अकालपनसञ्चैव तथान्यदपि वर्ज्जयेत्॥ इति विहितनिषिद्धफलकथनम्। व्रीहीणाञ्च प्रवक्ष्यामि उपयोग्यानि शङ्करि!। एकचित्तं समाधाय प्रापणं शृणु शङ्करि!। सोमधान्यं हंसधान्यं रक्तशालिकमेव च। महद्धान्यं यवञ्चैव तिलमाषञ्च मुद्गकम्। कलायं वर्त्तुलञ्चैव सिद्धार्थं कुङ्कुमानि च। शुक्लजीरञ्च मधुरीमितान्यपि नियोजयेत्॥ वर्ज्ज्यशस्यान्यपि तत्रैव॥ कालशाकं कलायञ्च जीवकीयं तथैव च। चणकं कोद्रवञ्चैव वर्ज्जयेन्मम सुन्दरि!॥ अत्र कलायं त्रिकोणम् चिपिटं वा। वर्त्तुलस्य विहितत्वात्तेनातसीमसूरादीनि वर्ज्जयेदित्यर्थः॥ जीरञ्च कृष्णाज्जीरञ्च लवणं मृत्तिकोद्भवम्। लवणं प्राचीसम्भूतं तथोत्तरसमुद्भवम्॥ जीरं कृष्णागव्यादिक्षीरम्॥ पशूनाञ्च प्रवक्ष्यामि वन्यानां ग्रामवासिनाम्। येन चाप्युपयोज्यानि गव्यं देवि! पयो घृतम्। मार्गं मांसं तथा छागं शालभं शाशकस्तथा। एतैस्तु प्रापणं दद्याद्विष्णोश्चैव प्रियावहम्। माहिषं वर्ज्जयेन्मांसं क्षीरं दधि घृतं ततः। पक्षिणाञ्च प्रवक्ष्यामि ये प्रयोज्या मम पिये। यांश्चैव विष्णुयागेषु उपयुञ्जन्ति नित्यशः। हरितञ्च मयूरञ्च लावकं वर्त्तकं तथा। कपिलश्चैव चासञ्च काककुक्कुटकौ गिरः। वन्यकुक्कुटकश्चैव शरारिश्च कपोतकम्। वेल्लकः कुलिकश्चैव रक्तपुच्छञ्च टिट्टिभः। कृष्णो मल्लाग्निनाश्चैव पतत्रीणां विशिष्यते। अभक्ष्यश्चैव मांसञ्च यदा पञ्चनखस्य च। यदा यदिवार्थे। मांसमभक्ष्यं यदि वा भक्ष्यं तदा पञ्चनखस्

चकारादेव तत्प्रत्ययः॥ चित्रमत्स्यं रोहितञ्च पाठीनं नलमीन-कम्। मद्गुशालञ्च शालञ्च राजीवं सिंहतुण्डकम्। मत्स्या-न्येतानि देयानि वड़ालीञ्च विवर्जयेत्। चित्रमत्स्यश्चितल इति। नलमीनश्चिङ्ड़ीति प्रसिद्धः। सिंहतुण्डः रिठा इति प्रसिद्धः। वड़ाली भेदा इति प्रसिद्धः॥ जानपादांश्च शकुनान् चुद्रवारा-हकं तथा। कौसुम्भशाकपिण्याकं रक्तपादांश्च वर्जयेत्। खर्जूरं पनसं द्राक्षां मातुलङ्गञ्च शीरकम्। कदलीं नागरङ्गञ्च तथा जम्बूफलानि च। आलुकं मधुकञ्चैव प्रयत्नेन निवेदयेत्। कदलं वीजपूरञ्च दुग्धपक्वं निवेदयेत्। कन्दुपक्वं कर्मरञ्च जम्बूं बालप्रियं भवेत्। आर्द्रकं लवणञ्चैव जीरकं पिप्पलीय-कम्। जातीकोषं तिन्दुकञ्च देव्याः प्रियतरं भवेत्। वर्ज-नीयफलमाह तत्रैव॥ रामरम्भाफलं पक्वं कदलं धूम्रतापितम्। न योजयेन्महादेव्यै उत्पलस्य च वीजकम्। धान्यं श्रावणिकं मर्त्यो द्विःखिन्नञ्च विवर्जयेत्। नारिकेलं सुवर्णाभं नारिकेलञ्च रामकम्। निवेदयेन्महादेव्यै तोयं तस्य विशेषतः। नारिके-लञ्च भाण्डीरं देवि श्राद्धे विवर्जयेत्। वकुलस्य फलं पक्वं पद्मस्य च फलं तथा। नियोजयेन्महादेव्यै चान्द्रायणफलं लभेत्॥ निषिद्धमाह तत्रैव॥ कर्कन्धूं शर्करायुक्तं दण्डशाकं तथैव च। कुष्माण्डं पर्वतीयञ्च दूरतः परिवर्जयेत्॥ मत्स्यसूक्ते षड्विंशति-पटले॥ शृणु देवि! प्रवक्ष्यामि मांसभेदान्निबोध मे। न देयं तित्तिकमठं पशुश्टङ्गिणमेव च। गोमीनं चक्रशकुलं वड़ालं राघवं तथा। वामीनं चनवर्णञ्च सचक्रं चेङ्गमेव च। भूविलं स्थानिकञ्चञ्च गाङ्गेयानि विवर्जयेत्। श्रातोषिणीहिरण्यानि चक्र-विम्बानि वर्जयेत्। अजञ्च हृहदाजञ्च पर्वतीयं तथैव च। मेषञ्च द्विविधञ्चैव एणं चैव चतुर्विधम्। शकलो तु गवां मांसं गोधा-मांसञ्च शाशकम्। लुलापश्चैव नेपाले वाराहं कामरूपके।

खड्गं चतुर्मुखं भक्ष्यं चाहारे परमेश्वरि!। गवयं गन्धमृगश्चैव महिषन्तु विशिष्यते। सर्व्वत्र चुद्रवाराहं नीलहयं तथैव च। मलये सगुणे चैव तथा जालन्धरेषु च। अभक्ष्यं मत्स्यमांसञ्च वड़ालं सर्व्वपीठके। अत्र देशविशेषे मत्स्यमांसभोजननिषेधाद् देशान्तरे गौड़नेपालादौ मत्स्यमांसभोजनमनुमतं भवति। वड़ाली तु अभक्ष्या सर्व्वदेश इत्यर्थः॥ माल्लिको वर्ज्जयेन्नित्यं पार्व्वतं शृङ्गवेरकम्। कुष्माण्डं पर्व्वतीयञ्च स्वर्णरोहितकं त्यजेत्। स्वर्णाभां गोधिकाञ्चैव वाराहं श्वेतमेव च। चक्राङ्कितञ्च कमठं राजहंसं न भक्षयेत्। ग्राम्यं जलचरं चैव भक्ष्यं तस्य विवर्ज्जयेत्। कपोतं कुक्कुटं चैव मयूरं क्रौञ्चमेव च। वर्द्धनं वभ्रुबालञ्च दात्यूहं कोकिलं तथा। टभ्रोलूकञ्च कङ्कञ्च विस्ताराचं न भक्षयेत्। अलावुं वार्त्ताकुं चैव तित्तिरञ्च मयं तथा। भारद्वाजं मत्स्यचक्रं दशावतारमेव। अकामेन द्विजो भुक्ता प्राणायामेन शुध्यति। त्रिरात्रावस्थितं मांसं तत्सर्व्वं परिवर्ज्जयेत्। भुक्तस्य पर्व्वतीयस्य सिंहतुण्डस्य पार्व्वति!। न हि स्वेदातपे शुद्धं वह्निशुद्धं तथैव च। संस्कृतं गन्धपुत्रेन पक्वं परमेश्वरि!। तन्मांसभक्षणाद्देवि! भूयश्च तत्र विद्यते। यो मांसं वर्ज्जयेद्देवि! मांसमात्रं विशेषतः। सर्व्वयज्ञफलं सम्यक् लभते नात्र संशयः। संवत्सरे दशगुणं षण्मासे च चतुर्गुणम्। पर्व्वकाले त्वशक्ते तु पितृमेधफलं लभेत्। विष्णोः शयनकाले च चातुर्मास्ये च यत्नतः। अग्निष्टोमस्य यज्ञस्य लभते फलमुत्तमम्। अशक्तः कार्त्तिके देवि! मत्स्यमांसौ विवर्ज्जयेत्। कार्त्तिके शौकरं मांसं गोमीनं मत्स्यमेव च। तस्मात् सर्व्वप्रयत्नेन कार्त्तिके परिवर्ज्जयेत्। भक्षयेल्लावकं वर्त्तं हरिच्चित्रकरं तथा। चासं चित्रकपोलञ्च त्वणाचञ्च मयूरकम्। कामञ्च कलभञ्चैव तोलिकालकमेव। एतान्येव च भक्ष्याणि प्रवदन्ति मनीषिणः॥

निषिद्धमपि तत्रैव ॥ भृङ्गराजद्वयञ्चैव पिकं कादलमेव च ।
सारङ्गं दीर्घतुण्डञ्च दीर्घग्रीवं हिरण्मयम् । नर्त्तञ्चलं रक्तकण्ठं
रक्तपच्छिणमेव च । चिल्लं कीलालकञ्चैव गङ्गाचिल्लकमेव च ।
एतान्येव द्विजातीनामभच्याणीति शब्दितम् । रक्तपुच्छं तथारख्यं
कुक्कुटं शोणतुण्डकम् । श्वेतग्रीवो नीलकण्ठो रक्तकण्ठस्तथैव
च । शशकः पत्रवाहश्च पीड़को जीवकस्तथा । एतानि शस्त-
मांसानि काले प्राशानि भच्चयेत् ॥ अभच्यमांसमाह तत्रैव ॥
नरवानरऋक्षांश्च व्याघ्रमार्जारकच्छपान् । विड्वराहञ्च शरलं
हयमांसं तथैव च । न भच्चयेत् शुनो मांसं भुक्त्वा चान्द्रायण-
ञ्चरेत् । सकामो गवयञ्चैव गवां मांसं तथैव च । हस्तिमांसं
प्रमादेन भुक्त्वा चान्द्रायणद्वयम् । शूकरस्य च खड्गस्य स्थूलमांसं
तथाशयम् । स्थूलं द्वाभ्यां त्रिभिर्वर्षैश्चतुर्भिः षड्भिरेव च । अति-
स्थूलमिति प्रोक्तं तन्न भक्षेत् कदाचन । एणस्य शशकस्यैव अजस्य
वृषभस्य च । तथा खस्य भृगस्यैव वराहमहिषस्य च । अति-
स्थूलानि मांसानि भच्यं मांसं कलौ युगे । अकलौ तु गवां मांसं
देशाचारेण शौकरम् । न भच्चयेन्मृतं मांसं द्विविधं मूषिकस्य
च । भेकस्य चुद्राटकस्य शम्बूककर्कटस्य च । अकामेन द्विजो
भुक्त्वा प्राणायामेन शुध्यति । अनुक्तमत्स्यमांसस्य भोक्ता स्नानेन
शुध्यति । गोमांसं मांसकामेन भुक्त्वा चान्द्रायणञ्चरेत् । फेर-
वस्य तथा भुक्त्वा ऋषिचान्द्रायणञ्चरेत् । पूतिगन्धसकीटानि
भुक्त्वा चान्द्रायणञ्चरेत् । रौद्रशुष्काणि भुक्त्वा वै प्राणायामेन
शुध्यति । त्रिरात्रावस्थितं मांसं तत्सर्वं परिवर्ज्जयेत् । शल्लस्य
पर्वतीयस्य सिंहतुण्डस्य पार्वति ! । न दुष्येदातपे शुष्कं वह्नि-
शुष्कं तथैव च । संस्कृतं गन्धघृतेन यन्नवं परमेश्वरि ! । तन्मांस-
भच्चणाद्देवि ! प्रायश्चित्तं न विद्यते । अत्र भच्चणनिषेधादनि-
षिद्धभच्चणदोषदर्शनेन सुतरां देवतासम्प्रदानकल्पम् । मांसत्याग-

फलमपि तत्रैव ॥ तुलामकरमेषेषु यो मांसं परिवर्ज्जयेत्। हय-मेधस्य यज्ञस्य तदेव फलमाप्नुयात्। यावज्जीवं त्यजेद्वापि राज-सूयफलं लभेत्। एकस्य वर्ज्जनाद्देवि! मत्स्यमांसस्य वर्जनम्। गृहमेधी महेशानि! पितृश्राद्धं विना त्यजेत्। प्रमादाद्वा तथा-ज्ञानात् सङ्कल्पं वा समाचरेत्। चान्द्रायणं ततः कृत्वा पौर्ण-मास्यां समाचरेत्। पितृश्राद्धं ततः कृत्वा कृत्वा यस्तु निरा-मिषम्। मत्स्यं वर्जयेद्वापि पितृहत्याव्रतञ्चरेत्। सर्वव्रताधि-कतरं सर्वयज्ञाधिकं परम्। पितृमेधं महेशानि! सर्वस्वेनापि कारयेत्। तस्याधिकतरं वापि स्वभार्य्यार्त्तिवलङ्घने। षोड़शे दिवसे पूर्णे भर्त्ता प्रोषित आगतः। हरिवासरकन्यान्यमथवा श्राद्धवासरम्। ऋतुं न लङ्घयेत्तत्र तदेव व्रतमेव हि। ऋतुह्वा परमेशानि! ब्रह्महत्याव्रतञ्चरेत्। व्रते विनष्टे देवेशि! प्राय-श्चित्तं भवेदनु। तस्मात् पुण्यतमं ज्ञेयं स्वभार्य्यापरितोषणम्॥

अथ हविष्यादौ भक्ष्याभक्ष्यविधिः॥ विश्वसारे द्वितीयपटले॥

अथ भक्ष्यं प्रवक्ष्यामि शृणुष्व कमलानने!। अन्नं दुग्धं तथा तक्रं पायसं पूपसूपकम्। नवनीतं फलान्येव गुड़पायससंयुतम्। सर्वाणि फलपुष्पाणि विविधानि विधानवित्। न मूलं गृञ्जनं लक्ष्म मसूरं लसुनं तथा। जम्बीरं लकुचं कांस्यमलावुञ्चाम्ल-मेव च। राजमाषं तथा माषं शाकञ्चैव पलाण्डुकम्। आमिषं रक्तशाकादीन् ताम्बूलञ्चाथ तैलकम्। तालखर्ज्जूरमुषितं दुग्ध-वृष्टादिकञ्च यत्। कुचेलञ्च तथा तैलं माध्वीञ्च नखलोमकान्। अभ्यङ्गमसदालापं हविष्याशी विवर्ज्जयेत्। हरिष्येषु सुधा मुख्या तदनु व्रीहयो मताः। अक्षारलवणञ्चैव शङ्करस्य मतेन च। यवगोधूममुद्गाश्च दुग्धं शर्करसंयुतम्। फलमूलादिकं कृद्यमक्षारलवणं घृतम्। रक्तवस्त्रं तथा क्षौरं हविष्येषु विव-र्ज्जयेत्॥ शारदायां द्वितीयपटले॥ भैक्ष्यं हविष्यं शाकानि

र्विहितानि फलं पयः। मूलं शक्तुर्यवोत्पन्नो भक्ष्यास्त्वेतानि भक्षिणाम्। भैक्ष्यमिति ब्रह्मचारियतिपरम्। भिक्षास्वरूपमुक्तं राघवभट्टधृतवचने॥ वैदिकाचारयुक्तानां शुचीनां श्रीमतां गृहे। सत्कुलस्थानजातानां भिक्षा स्यादग्रजन्मनाम्। हविष्यमुक्तं स्मृतौ॥ हैमन्तिकं सितास्विन्नं धान्यं मुद्गास्तिला यवाः। कलायकङ्गुनीवारा वास्तूकं हिलमोचिका। षष्टिका कालशाकञ्च मूलकं केमुकेतरत्। कन्दं सैन्धवसामुद्रे गव्ये च दधिसर्पिषी। पयोऽनुद्धृतसारञ्च पनसाम्रौ हरीतकी। तिन्तिड़ीजीरकञ्चैव नागरङ्गञ्च पिप्पली। कदली लवली धात्रीफलान्यगुडमैक्षवम्। अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते। फलं पयो मूलं विहितमित्यनुषज्यते॥ अथाभक्ष्यं मत्स्यसूक्ते॥ नारिकेलोदकं कांस्ये अजाक्षीरञ्च काचके। पाषाणे महिषीक्षीरमभक्ष्यं परिकीर्त्तितम्॥ पञ्चदशपटले॥ वराहपूजको यस्तु कोलं कूर्मं न भक्षयेत्। ब्रह्माणं पूजयेद् यस्तु माहिषं चामरं चरम्। गणेशयाजी मधुकं पनसं कोरदूषणम्। आदित्यभक्तो देवेशि! मयूरं कुण्डसाहकम्। शिवयाजी तिलपिष्टं चिञ्चाञ्च चक्रपूजकः। तथा च मद्गुरं मत्स्यं शक्तिचिञ्चां वड़ालकम्। कुसुम्भशाकं देवेशि! लशुनं शृङ्गिणं तथा। त्रिपुरे तु निम्बतिक्तं त्वरितार्थी तथाम्लकम्। गोपालार्थी तु पालङ्कमाममत्स्यं न भक्षयेत्। पारावतं वामनार्थी चक्रशाकं वड़ालकम्। निम्बं सारस्वतैर्वर्ज्यं लक्ष्म्यर्थी च करञ्जकम्। कालान्धं कोद्रवञ्चैव चन्द्रमत्स्यं तथैव च। सर्वमन्त्रे वड़ालञ्च सर्वयन्त्रेषु शङ्करि!। श्वेतपूतीञ्च वार्त्ताकीं कुष्माण्डं पर्वतीयकम्॥ चिञ्चाञ्चैव परान्नञ्च यत्नेन परिवर्जयेत्। वैष्णवैः पलशाकञ्च मूलं कन्दं प्ररोहकम्। शुष्कं राजीववास्तूकं पालङ्कीञ्च तथैव च। यदा सङ्कल्पपूर्वेण यस्त्यजेद्वैष्णवः क्वचित्। तथापि न त्यजेद्देवि! प्रायश्चित्तं समाचरेत्। सौर-

व्रते घृतं वर्ज्यं ताम्बूलं वैष्णवेषु च। गव्यत्यागी महापापी मधुत्यागी श्रियं हरेत्। सप्तविंशतिपटले॥ जम्बूखर्ज्जूर-दाड़िम्बनारिकेलञ्च पूगकम्। जलविम्बा त्रपूषा तु उर्व्वारुं पीनकन्तथा। वदरीलवलीधात्रीपनसाम्रहरीतकी। शालूकं पद्मषण्डञ्च कशेरु करमर्द्दकम्। नागरङ्गञ्च मधुकं मधुरं तिन्दु-कानि च। आनाड़ञ्चैव कुष्माण्डं वासन्त्याः फलमेव च। तिलकान्नं कलायञ्च माषञ्च राजमाषकम्। तण्डुलं यवधान्यञ्च नीवारं कुङ्कुमं तथा। जीरकञ्च लवङ्गञ्च धन्याकं जातिकोष-कम्। एलकञ्चैव कर्पूरं चन्दनागुरुमुस्तकम्। सरलं देवदा-रुञ्च कृष्णभल्लातकानि च। शृङ्गवेरः कटुद्रव्यं मरिचं लवणं कणा। फलं यच्च शिवायाश्च त्वचाम्लं पनसस्य च। कृष्णकोषं ग्रन्थिपर्णं स्वर्गादेवाङ्कुराणि च। द्राक्षाञ्च वकुलं कच्वीफलञ्चेक्षु च खण्डितम्। एतान्याचमनीयानि सुरभिः पाचकान्यपि। तथा। पर्व्वतीयं तथा वर्त्तुं तथा कैतवजानि च। लक्ष्मीलकुचकञ्चैव तिलकं क्षुद्रतिल्लकम्। हिन्तालं पनसाम्रञ्च पीवरं बद्रजीर-कम्। वृहच्छोटा च वदरी पर्व्वतीयं विवर्जयेत्। क्षुद्र उर्व्वा-रुकञ्चैव जीवन्त्याः क्षुद्रमेव च। मधुकं मधुरीं द्राक्षां कलायं यन्न वर्त्तुलम्। श्वेतमुद्गं तथा कृष्णं फलं तस्य विवर्जयेत्। नारि-केलफलञ्चैव स्वर्णाभं नागरङ्गकम्। नारिकेलञ्च स्वर्णाभं दुग्ध-शस्यं तथैव च। सोमधान्यं नीवारञ्च कलम्बं षष्टिकानि च। वृहद्धान्यं क्षुद्रधान्यं वाल्कलिकसुपासुकम्। एतानि व्रीहि-मुख्यानि हविष्याण्येव भोजने। मौक्तिकं रक्तशाकञ्च उत्तमौघैः प्रचक्ष्यते। इक्षुञ्च श्वेतत्रपुषं तथा मृगफलानि च। मद्यकुम्भ प्ररोपञ्च जग्धान्नं तटसम्भवम्। तथा श्रावणिकं देवि! हवि-ष्यान्ने विवर्जयेत्। व्रतेषु आमिषं देवि! ताम्बूलं पर्णचूर्णके। निरामिषं चातुरे च आमिषं लकुचानि च। अभक्ष्यं वर्त्तुलं

तस्य हस्तभग्नस्तथैव । वार्त्ताकुं श्वेतरक्तञ्च श्वेतपूतिकमेव च । व्रते तु वर्ज्जयेद्देवि ! फलाहारविधिं शृणु । नमस्कारं फलाहारं सगव्यं वा विशिष्यते । त्रिभागपूरणं कृत्वा जलाहारं कलौ त्यजेत् । फलाहारं महेशानि ! गृहस्थानां कलौ युगे । शतं तिलं तदर्द्धं वा,तिलाहारे महेश्वरि ! । चीराहारे च चणकं पञ्चगव्ये फलं भवेत् । आज्याहारे तु तोलैकं हविष्यस्य विधिं शृणु । पक्वमन्नं स्वयं वाथ भार्य्यया सोदरेण तु । मातापितुर्गुरोर्वापि न भुक्त्वा यदि वा पचेत् । लघ्वाहारो जितक्रोधो हविष्यव्रतभोजने । तथा । वेत्राङ्कुरं तथा मुस्तां सैन्धवं सिन्धुसम्भवम् । तथा पर्वतसम्भूतं हविर्द्रव्यादि कीर्त्तितम् । विल्वामलतिलस्यैव वदर्य्याः पत्रमेव च । हविष्यभोजने प्राप्ते हविष्यान्नं प्रचच्चते । स्वन्दार्घ्यपात्रे पत्रे वा पलाशस्य च पत्रके । कदल्याश्च त्वचे पत्रे हविष्यव्रतभोजने । सौरव्रते कटुद्रव्यं शैवे चान्नं विवर्जयेत् । वैष्णवे कोरदूषञ्च शाक्ते शालिं विवर्जयेत् । पूगं सर्वव्रते त्याज्यं आरनालकमेव च । न भक्षयेल्लौहच्छिन्नं हस्तभग्नं न भक्षयेत् । कलिकासु स्थितं द्रव्यं तथा पनसपत्रके ॥ विख्यातस्तोयकीर्त्त्याऽजनि जगति दयारामविश्वासनामा धर्म्मात्मा तस्य सूनुः सकलगुणयुतो रामहर्य्याख्य एव । जातौ तस्यात्मजौ श्रीसुकृतियुतजगन्मोहनप्राणकृष्णौ ज्येष्ठः श्रीप्राणकृष्णो गुणिगणकुमुदश्रेणिपूर्णौषधीशः ॥ तदादिष्टः शिष्टविद्वन्मनःसन्तुष्टिकारिणीम् । श्रीप्राणतोषिणीं वल्लीं निर्ममे रामतोषणः ॥ आदिष्टसत्वरतया गुरुताभिया च ग्रन्थस्य सर्वरचनं न समाचचक्षे । धीराः ! कृताञ्जलिरहं विनिवेदयामि युष्माभिरेव सकलन्तु विचरणीयम् ॥

इति श्रीप्राणकृष्णविश्वासानुमतायां श्रीरामतोषणविद्यालङ्कारभट्टाचार्य्यविरचितायां श्रीप्राणतोषिण्यां तृतीयमर्थकाण्डाङ्गं समाप्तम् ॥

नित्यानन्दमयी नितान्तनिपुणा भक्तेष्टसिद्धैर निराकारा नूतन-नूतनोल्लिखितकृत् प्रज्ञास्वरूपा कवेः। शब्दार्थोभयरूपिणी शतसुधांशूद्दीप्तशोचिः सदा ध्याता चेतसि मे चकास्तु रुचिरा वागीश्वरी निर्मला॥ श्रीयुक्तः प्राणकृष्णो गुरुचरणसरोजातसंलीनचेता दाता ख्यातः प्रमाता सुविहितकृतिको ब्रह्मसंस्थापकः स्तात्। भोगाढ्यो दीर्घजीवी यदनुमतिवशादुन्नतेयं विपश्चिद्वृन्दं श्रीप्राणतोषिण्यतिमृदुललता ह्लादयत्वद्रिकाण्डैः। आदेष्टृत्यन्तशीघ्रत्वहेतुना दोषराशयः। अत्र जाता बुधैः शोध्या इति भूयो निवेदनम्॥ काम्यकाण्डस्य निर्घण्ट आदौ चैतन्यमेव च,। सर्वासामेव विद्यानां मन्त्रार्थस्तदनन्तरम्। कुल्लुका च तथा सेतुर्महासेतुस्ततः परम्। निर्वाणं मुखशुद्धिश्च प्राणयोगस्ततः परम्। दीपनीसूतकोन्मुक्तिजपक्रमनिरूपणम्। कुल्लुकादेस्तथा स्थानं पुरश्चर्य्या ततः परम्। वारमासपुरश्चर्य्यारहस्यादिपुरस्क्रिया। ग्रहकालपुरश्चर्य्या तत्र सङ्कल्पवारणम्। मालाप्रकरणमिति प्रथमच्छेद उच्यते॥ १॥ साधनस्थाननिर्णीतिमहापीठनिरूपणम्। महापीठानि पीठानि तथैव पीठदेवताः। पूजाकालस्तद्विशेषस्तथा देवार्च्चनाविधिः। एकाहादिक्रमाद्बाधे कर्त्तव्यनिर्णयस्ततः। प्रायश्चित्तमितिच्छेदद्वितीयस्य समापनम्॥ २॥ शकलासाखुमार्जारसृगालश्वादिसाधनम्। दुष्टसाधनभेदाश्च त्रिवाटादेश्च साधनम्। कार्त्तवीर्य्यप्रयोगस्तत्कवचं तदनन्तरम्। परिच्छेदतृतीयस्य समापनमतः परम्॥ ३॥ कुक्कुटस्य प्रयोगश्चोच्छिष्टचाण्डालिनी ततः। धूमावती ततः कृत्या परिमालात्मिका ततः। जयदुर्गादिरिति वै तुर्य्यच्छेदसमापनम्॥ ४॥ दुर्गोत्सवस्य षष्ठ्यादिकल्पतत्कालनिर्णयः। पूजाधारस्य मृण्मय्या निषेधविधिकीर्त्तनम्। ब्राह्मणादिवर्णभेदे विल्वयुग्मस्य निर्णयः। पूर्वादिदिक्समारूढयुग्मस्य फलकीर्त्तनम्।

मित्रयुग्मस्य मृतस्यास्यात्र दोषयुक्तौ तथा। तत्प्रायश्चित्त-
कथनमुत्सवादिनिरूपणम्। तत्रान्यकर्मत्यागश्च पूजाकर्म ततः
परम्। देशभेदे मूर्त्तिभेदो मण्डपन्तु ततः परम्। षष्ठीकृत्यञ्च
दिक्पालास्त्रपूजाविधिरेव च। बलिदानादि च ततो बिल्व-
वृक्षनिमन्त्रणम्। ततश्च सप्तमीकृत्यं कार्त्तिकादेः प्रपूजनम्।
पत्रिकापूजनं स्तोत्रमष्टमीकृत्यमेव च। निशीथकृत्यं नवमीकृ-
त्यञ्च दशमीक्रिया। परिच्छेदपञ्चमस्य समाप्तिरिति कीर्त्तितम्
॥ ५ ॥ दुर्गामन्त्रस्तस्य ऋषिः पुरश्चर्या च यन्त्रकम्। ध्यानं
स्तुतिस्ततो दुर्गानाममहात्म्यकीर्त्तनम्। दुर्गायाः शतनामाख्य-
स्तोत्रं गीतावलिस्ततः। होमप्रकरणं तस्य द्रव्यस्य परिमा-
णकम्। मानाध्याय इदं षष्ठपरिच्छेदसमापनम् ॥ ६ ॥ मास-
कृत्यं ततः खञ्जरीटदृष्टिश्च तत्फलम्। कोजागराख्यकृत्यञ्च
कृत्यं कार्त्तिकमासिकम्। अग्रहायणकृत्यानि पौषकृत्यं ततः
परम्। माघकृत्यं फाल्गुनस्य कृत्यानि तदनन्तरम्। वर्षकृत्यं
हृतराज्यराज्याप्तिसाधनं ततः। देवीषोड़शयात्रा च मासि-
मासि यथादितः। वैशाखे मञ्जुयात्रा च प्रथमा परिकीर्त्तिता।
ज्यैष्ठे महास्नानयात्रा रथयात्रादिका शुचौ। श्रावणे जलयात्रा
च भाद्रे च धूननं तथा। आश्विने च महापूजा कार्त्तिके दीप-
यात्रिका। मार्गे नवान्नयात्रा च पौषेऽङ्गरागरूपिणी। माघे
यात्रा रटन्त्याख्या फाल्गुने दोलयात्रिका। दूतीयात्रा रास-
यात्रा वासन्तीमीत्ययात्रिका। एतास्तत्सर्वैते तु षोड़शी-
यात्रिका मता। दिग्दर्शनार्थं सङ्क्षेपान्निर्घण्टो विहितो मया।
अन्यान्यपि यथास्थानं वेदितव्यानि पण्डितैः॥ इदं ग्रन्थशाखा-
प्रशाखासुपत्रैस्तथा तारकैः सुप्रसूनैः फलैश्च। सदाशां जनानां
सुधीपासकानां प्रपूर्णां विधाता द्रुतं काम्यकाण्डम्॥ कालि हृदब्जे
शङ्करि! नित्यम्। राजतु देवाधीश्वरपूज्ये!। अथ चैतन्यम्॥

कुब्जिकायन्त्रे पञ्चमपटले ॥ श्रीपार्वत्युवाच ॥ भगवन्! सर्वदेवेश! लोकानां हितकारक!। चतुर्वर्गप्रदं देव! चैतन्यं मे प्रकाशय ॥ शङ्कर उवाच ॥ शृणु देवि! प्रवक्ष्यामि चैतन्यं परमाद्भुतम्। रहस्यं परमं पुण्यं गोपनीयं त्वया पुनः। चिच्छक्त्या ध्वनितं देवि! परिणामक्रमेण तु। वर्णभावं समात्यज्य निर्मलं विमलात्मकम्। षट्चक्रञ्च तथा भित्त्वा शब्दरूपं सनातनम्। नादविन्दुसमायुक्तं चैतन्यं परिकीर्त्तितम्। अथ वान्यप्रकारेण श्रूयतां पद्मलोचने!। विना येन न सिध्येत्तु जपपूजादि किञ्चन। अनाहतस्य मध्ये तु ग्रथितं वर्णमुत्तमम्। सुषुम्नावर्त्मना देवि! कण्ठदेशं विनिर्गतम्। चैतन्यञ्च महेशानि! योगिनां योगरूपकम्। सहस्रारे वर्णरूपं परिणामक्रमेण तु। कर्णिकामध्यसंस्थे तु नादविन्दुसमन्वितम्। एवं सञ्चिन्तयेद्वीरो चैतन्यञ्च पुनः पुनः। मन्त्राक्षराणि चिच्छक्तौ ग्रथितानि महेश्वरि!। तानि सञ्चिन्तयेद्देवि! सहस्रारदले तथा। चैतन्यमन्त्ररूपा च चैतन्यानन्ददायिनी। चैतन्यनादशक्तिश्च चैतन्यवर्णरूपकम्। मणिपूरे सदा चिन्त्यं मन्त्राणां प्राणरूपकम्। अथवान्यप्रकारेण श्रूयतां वरवर्णिनि!। कामवीजं रमावीजं शक्तिवीजं सुरेश्वरि!। एतानि पूर्वमुच्चार्य्य मातृकां तदनन्तरम्। पुटितं मूलमन्त्रञ्च शतमष्टोत्तरं जपेत्। कोटिकोटिगुणञ्चैव लभते नात्र संशयः। अथवान्यप्रकारेण चैतन्यं शृणु पार्वति!। येन विज्ञानमात्रेण परमं पश्यति ध्रुवम्। सूर्य्यमण्डलमध्यस्थं चिन्तयेन्मूलमन्त्रकम्। अष्टोत्तरशतं जाप्यं मूलविद्यास्वरूपकम्। गुरुं सञ्चिन्तयेत्तत्र शिवरूपं सनातनम्। शक्तिञ्च चिन्तयेत्तत्र ब्रह्मरूपां सनातनीम्। एवं सञ्चिन्तयेद्यस्तु जपेद्वा सुरसुन्दरि!। नासाध्यं तस्य लोकेऽस्मिन् मुक्तिर्देवि! करे स्थिता। तथा प्रथमपटले ॥ मन्त्रार्थं मन्त्र-

चैतन्यं योनिमुद्रां न वेत्ति यः। न सिध्यति वरारोहे! कल्पकोटिशतैरपि। शतकोटिजपेनापि तस्य विद्या न सिध्यतीति सरस्वतीतन्त्रे पाठः॥ कथयामि महामन्त्रं मन्त्रार्थञ्च महेश्वरि!। येन विज्ञानमात्रेण सर्वसिद्धीश्वरो भवेत्। केवलं भावबुद्ध्या च मन्त्रार्थं प्राणवल्लभे!। केवलं ज्ञानयोगेन जीवन्मुक्तो भवेद्ध्रुवम्। कालीतारा महाविद्या षोड़शी भुवनेश्वरी। भैरवी छिन्नमस्ता च विद्या धूमावती प्रिये!। वगला चैव मातङ्गी कमला च प्रकीर्त्तिता। ब्रह्मविष्णुमहेशाद्यैश्चतुर्वेदैर्नमस्कृता। भोगदा मोक्षदा देवि! कोटिब्रह्माण्डगोपिता। अस्या ग्रहणमात्रेण जीवन्मुक्तस्तु साधकः॥ वरदातन्त्रे षष्ठपटले। शिव उवाच॥ मन्त्रार्थं कथयाम्यद्य शृणुष्व परमेश्वरि!। विना येन न सिध्येत्तु साधनैः कोटिशः शिवे!। आदौ प्रासादवीजस्य मन्त्रार्थं शृणु पार्वति!। शिववाची हकारस्तु औकारः स्यात् सदाशिवः। शून्यं दुःखहरार्थन्तु तस्मात्तेन शिवं यजेत्॥ हौं॥ द दुर्गावाचकं देवि!। उकारश्चापि रक्षणे। विश्वमाता नादरूपः कुर्वर्थो विन्दुरूपकः। तस्मात्तेनैव वीजेन दुर्गामाराधयेच्छिवे!॥दूं॥ क काली ब्रह्म र प्रोक्तं महामायार्थकश्च ई। विश्वमातार्थको नादो विन्दुर्दुःखहरार्थकः। तेनैव कालिकादेवीं पूजयेद्दुःखशान्तये॥ क्रीं॥ हकारः शिववाची स्यात् रेफः प्रकृतिरुच्यते। महामायार्थ ईशब्दो नादो विश्वप्रसूः स्मृतः। दुःखहरार्थको विन्दुर्भुवनां तेन पूजयेत्॥ ह्रीं॥ महालक्ष्म्यर्थकः शः स्याद्धनार्थो रेफ उच्यते। ईस्तुष्ट्यर्थोऽपरो नादो विन्दुर्दुःखहरार्थकः। लक्ष्मीदेव्या वीजमेतत्तेन देवीं प्रपूजयेत्॥ श्रीं॥ सरस्वत्यर्थ ऐशब्दो विन्दुर्दुःखहरार्थकः। सरस्वत्या वीजमेतत्तेन वाणीं प्रपूजयेत्॥ ऐं॥ क कामदेव उद्दिष्टोऽप्यथवा कृष्ण उच्यते। ल इन्द्र ई तुष्टिवाची सुखदुःखप्रदश्च अं। कामवीजार्थं

उक्तस्ते तव स्नेहान्महेश्वरि!। क्लीं॥ क प्रियः कथितो देवि! ल भैरव इहोच्यते। परार्थो नादशब्दस्तु बिन्दुर्दुःखहरार्थकः। वर्म्मवीजार्थको ह्यत्र कथितस्तव यत्नतः॥ हूं॥ गणेशार्थो ग उक्तस्ते बिन्दुर्दुःखहरार्थकः। गं बीजार्थन्तु कथितं तव स्नेहान्महेश्वरि!॥ गं॥ ग गणेशव्यापकार्थो लकारस्तेज ओ मतः। दुःखहरार्थको बिन्दुर्गणेशं तेन पूजयेत्॥ ग्लौं॥ क्षनृसिंहो ब्रह्म रश्च ऊर्द्धदन्तार्थकश्च औ। दुःखहरार्थको बिन्दुर्नृसिंहं तेन पूजयेत्। क्ष्रौं॥ नामादिवर्णः सर्वेषां नाम उक्तं स्वयम्भु वा। तेनैवार्थन्तु जानीयाद्दर्थलक्ष्यन्तु चिन्तयेत्। यथायथं विभक्तयन्तं मन्त्रार्थं चिन्तयेच्छिवे!। तत्तद्वर्णादियोगेन संक्षेपात् कथितं त्वयि। दुर्गोत्तारणवाच्यः स तारकार्थस्तकारकः। मुक्त्यर्थो रेफ उक्तोऽत्र महामायार्थकश्च ई! विश्वमातार्थको नादो बिन्दुर्दुःखहरार्थकः॥ वधूवीजार्थं उक्तोऽत्र तव स्नेहान्महेश्वरि!॥ स्त्रीं॥ यत्र बिन्दुद्वयं मन्त्रे एकं दुःखहरार्थकम्। अन्यत् सुखप्रदं देवि! ज्ञात्वा चार्थं विचिन्तयेत्। यत्र बिन्दुद्वयं मन्त्रे अन्यत् पूर्णार्थकं मतम्। स्वाहामात्रार्थका देवि! परार्थ्या त्वां प्रकीर्त्तिता। शक्रमाता वषट् प्रोक्ता हरिप्रियार्थका गिरा। स्तुत्यार्थ फट् हयग्रीवे त्रिविं बीजं विनिर्दिशेत्। यं बीजं वायुवाची स्यात् लमैन्द्रं परिकीर्त्तितम्। अनेकाक्षरबीजे च स्वस्वबीजं स्वनामकम्। एवं ज्ञात्वा महेशानि! मन्त्रार्थं परिचिन्तयेत्। एकबीजद्वयं यत्र पृथगर्थं प्रकल्पयेत्। वीप्सार्थं वा महेशानि! ज्ञात्वा मन्त्रं जपेत्प्रिया। इति ते कथितो देवि! मन्त्रार्थः परमेश्वरि!। ईं बीजेनैव पुटितं मूलमन्त्रं जपेद् यदि। तदेव मन्त्रचैतन्यं अत्रैव सुनिश्चितम्॥ सरस्वतीतन्त्रे प्रथमपटले॥ ईश्वर उवाच॥ मन्त्रार्थं परमेशानि! सावधानावधारय। मूलाधारे मूलविद्यां भावयेदिष्टदेवताम्। शुद्धस्फटिकसङ्काशां भाव-

येत् परमेश्वरीम्। धारयेदक्षरश्रेणीमिष्टविद्यां सनातनीम्। मुहूर्त्तार्द्धं विभाव्यैतां पश्चाद्ध्यानपरो भवेत्। ध्यानं कृत्वा महेशानि! मुहूर्त्तार्द्धं ततः परम्। ततो जीवो महेशानि! मनसा कमलेक्षणे!। स्वाधिष्ठानं ततो गत्वा भावयेदिष्टदेवताम्। बन्धूकारुणसङ्काशां जवासिन्दूरसन्निभाम्। विभाव्य अक्षरश्रेणीं पद्ममध्यगतां पराम्। ततो जीवः प्रसन्नात्मा पक्षिणा सह सुन्दरि!। मणिपूरं ततो गत्वा भावयेदिष्टदेवताम्। विभाव्य अक्षरश्रेणीं पद्ममध्यगतां पराम्। शुद्धस्फटिकसङ्काशां शिरःपद्मोपरिस्थिताम्। ततो जीवो महेशानि! पक्षिणा सह पार्वति!। हृत्पद्मं प्रययौ शीघ्रं नीरजायतलोचने!। इष्टविद्यां महेशानि! भावयेत् कमलोपरि। विभाव्य अक्षरश्रेणीं महामरकतप्रभाम्। ततो जीवो वरारोहे! विशुद्धं प्रययौ प्रिये!। हृत्पद्मगहनं गत्वा पक्षिणा सह पार्वति!। इष्टविद्यां महेशानि! आत्मांशे परिचिन्तयेत्। पक्षिणा सह देवेशि! खञ्जनाक्षि! शुचिस्मिते!। इष्टविद्यां महेशानि! साक्षाद्ब्रह्मस्वरूपिणीम्। विभाव्य अक्षरश्रेणीं हरिद्वर्णां वरानने!। आज्ञाचक्रे महेशानि! षट्चक्रे ध्यानमाचरेत्। षट्चक्रे परमेशानि! ध्यानं कृत्वा शुचिस्मिते!। ध्यानेन परमेशानि! यद्रूपं समुपस्थितम्। तदेव परमेशानि! मन्त्रार्थं विद्धि पार्वति!॥

अथ कुल्लुकादि। सरस्वतीतन्त्रे तृतीयपटले॥ तारायाः कुल्लुका देवि! महानीलसरस्वती। पञ्चाक्षरी कालिकायाः कुल्लुका परिकीर्त्तिता। काली कूर्च्चं वधूर्माया फट्कारान्ता महेश्वरि!। छिन्नायास्तु महेशानि! कुल्लुकाष्टाक्षरी भवेत्। वज्रवैरोचनीये च अन्ते वर्मं प्रपूजयेत्। सम्पत्प्रदायाः प्रथमं भैरव्याः कुल्लुका भवेत्। श्रीमत्त्रिपुरसुन्दर्य्याः कुल्लुका द्वादशा-

श्वरी। वाग्भवं प्रथमं वीजं कामवीजमनन्तरम्। लज्जावीजं ततः पश्चात्त्रिपुरेति ततः परम्। भगवतीति तत्पश्चादन्ते ठद्वयमुद्धरेत्। अथवा कामवीजञ्च कुल्लुका परिकीर्त्तिता। प्रासादवीजं शम्भोश्च मञ्जुघोषे षड़क्षरम्। एकार्णा भुवनेश्वर्य्या विष्णोः स्यादष्टवर्णकम्। नमो नारायणायेति प्रणवाद्यञ्च कुल्लुका। मातङ्ग्याः प्रथमं वीजं माया धूमावतीं प्रति। बालायाश्च बधूवीजं लक्ष्म्याश्च निजवीजकम्। सरस्वत्या वाग्भवञ्च अन्नदाया अनङ्गका। अपरेषाञ्च देवानां मन्त्रमात्रं प्रकीर्त्तितम्। इयं ते कथिता देवि! सङ्क्षेपात् कुल्लुका मया। अज्ञात्वा कुल्लुकामेतां यो जपेदधमः प्रिये!। पञ्चत्वमाशु लभते सिद्धिहानिस्तु जायते। तथा जपादिकं सर्वं निष्फलं नात्र संशयः। तस्मात् सर्वप्रयत्नेन धारयेन्मूर्ध्नि कुल्लुकाम्॥ तथा। विप्राणां प्रणवः सेतुः क्षत्रियाणां तथैव च। वैश्यानाञ्चैव फट्कारो माया शूद्रस्य कथ्यते। अजप्त्वा हृदि देवेश! यो वै मन्त्रं समुच्चरेत्। सर्वेषामेव मन्त्राणामधिकारी न तस्य हि। महासेतुश्च देवेशि! सुन्दर्य्या भुवनेश्वरी। कालिकायाः स्ववीजञ्च तारायाः कूर्चवीजकम्। अन्यासान्तु बधूवीजं महासेतुर्वरानने!। आदौ जप्त्वा महासेतुं जपेन्मन्त्रमनन्यधीः। धने धनेशतुल्योऽसौ वाग्मी वाणीश्वरोपमः। युद्धे कृतान्तसदृशो नारीणां मदनोपमः। जपकालो भवेत्तस्य सर्वकालो न संशयः। अथ वक्ष्यामि निर्वाणं शृणुष्वावहितानघे!। प्रणवं पूर्वमुच्चार्य्य मातृकाद्यं समुद्धरेत्। ततो मूलं महेशानि! ततो वाग्भवमुद्धरेत्। मातृकास्तु समस्तास्तु पुनः प्रणवमुद्धरेत्। एवं पुटितमूलन्तु प्रजपेन्मणिपूरके। एवं निर्वाणं महेशानि! यो न जानाति पामरः। कल्पकोटिसहस्रेण तस्य सिद्धिर्न जायते॥

अथ मुखशोधनम्॥ पञ्चमपटले॥ ईश्वर उवाच॥ अप-

रैकं प्रवक्ष्यामि मुखशोधनमुत्तमम्। यत्र कृत्वा महादेवि! जपपूजा वृथा भवेत्। अशुद्धजिह्वया देवि! यो जपेत् स तु पापकृत्। तस्मात् सर्वप्रयत्नेन जिह्वाशोधनमाचरेत्। महात्रिपुरसुन्दर्य्या मुखस्य शोधनं शुभे!। श्रीवीजं प्रणवो लक्ष्मीस्तारः श्रीप्रणवस्तथा। इमं षड़क्षरं मन्त्रं सुन्दर्य्या दशधा जपेत्। शृणु सुन्दरि! श्यामाया मुखशोधनमुत्तमम्। निजवीजत्रयं देवि! प्रणवत्रितयं पुनः। कामत्रयं वह्निविन्दुरतिचन्द्रयुतं पृथक्। एषा नवाक्षरी विद्या मुखशोधनकारिणी। तारायाः शृणु चार्वङ्गि! अपूर्वमुखशोधनम्। जीवनं मध्यमं लज्जां भुवनेशीं ततः प्रिये!। त्र्यक्षरीयं महाविद्या विज्ञेयाऽमृतवर्षिणी। दुर्गायाः शृणु चार्वङ्गि! मुखशोधनमुत्तमम्। द्वादशस्वरमुद्धृत्य विन्दुयुक्तं त्रयं तथा। अपरैकं प्रवक्ष्यामि वगलामुखशोधनम्। वाग्भवं भुवनेशीञ्च वाग्वीजं सुरवन्दिते!। मातङ्ग्याः शोधनं देवि! अङ्कुशं वाग्भवं तथा। वीजत्र्याङ्कुशमेतद्धि विज्ञेयं त्र्यक्षरीयकम्। लक्ष्म्याश्च शोधनं देवि! श्रीवीजं कमलानने!। दुर्गायाः शोधनं माया वाग्वीजपुटिता भवेत्। दुर्गे! स्वाहा-पुनर्माया वाग्वीजञ्च पुनश्च वाक्। प्रणवं दान्तमुद्धृत्य वामकर्णविभूषितम्। पुनः प्रणवमुद्धृत्य धनदामुखशोधनम्। एवं मन्त्रं महेशानि! धूमावत्या भवेदपि॥ प्रणवो विन्दुमान् देवि! पश्चान्तको गणेश्वितुः। वेदादिगगनं वह्निमनुयुग्मन्तु चन्द्रवत्। द्व्यक्षरं परमेशानि! विष्णोश्च मुखशोधनम्। अन्यासां प्रणवं देवि! वालादीनां प्रकीर्त्तितम्। स्त्रीणाञ्च शूद्रतुल्यं हि मुखशोधनमीरितम्। मुखशोधनमात्रेण जिह्वाऽमृतमयी भवेत्। अन्यथा मुखविड़्युक्ता जिह्वा भवति सर्वदा। भक्ष्यैर्दूषिता जिह्वा मिथ्यावाक्येन दूषिता। कलहैर्दूषिता जिह्वा तत्कथं प्रजपेन्मनुम्। तच्छोधनमनाचर्य्य न जपेत् पामरः क्वचित्।

शैवशाक्तवैष्णवादेः सर्व्वस्यावश्यमेव वा। अन्यथा प्रजपेन्मन्त्रं मोहेन यदि भाविनि!। सर्व्वं तस्य वृथा देवि! मन्त्रसिद्धिर्न जायते। अन्ते नरकवासी च भवेत् सोऽपि न चान्यथा। देवो यदि जपेन्मन्त्रमकृत्वा मुखशोधनम्। पतनं तस्य देवेशि! किं पुनर्मर्त्त्यवासिनाम्॥ षष्ठपटले॥ ईश्वर उवाच॥ अथ वक्ष्यामि देवेशि! प्राणयोगं शृणुष्व मे। विना प्राणं यथा देहः सर्व्वकर्म्मसु न क्षमः। विना प्राणं तथा मन्त्रः पुरश्चर्य्याशतैरपि। मायया पुटितो मन्त्रः सप्तधा जपतः पुनः। सप्राणो जायते देवि! सर्व्वत्रायं विधिः स्मृतः। तथैवं दीपनं वक्ष्ये सर्व्वमन्त्रे च भाविनि!। अन्धकारे गृहे यद्वन्न किञ्चित् प्रतिभासते। दीपनी-रहितो मन्त्रस्तथैव परिकीर्त्तितः। वेदादिपुटितं मन्त्रं सप्तवारं जपेत् पुनः। दीपनीयं समाख्याता सर्व्वत्र परमेश्वरि!। वेदादिपुटितं कृत्वा प्रयत्नेन सुरेश्वरि!। दशधा प्रजपेन्मन्त्रं सूतकद्वयमुक्तये। अथोच्यते जपस्याद्य क्रमस्य परमाद्भुतः। यं कृत्वा सिद्धसङ्घानामधिपो जायते नरः। नतिर्गुर्व्वादिनामादौ ततो मन्त्रशिखां भजेत्। ततोऽपि मन्त्रचैतन्यं मन्त्रार्थभावना ततः। गुरुध्यानं शिरःपद्मे हृदीष्टध्यानमाहरन्। कुल्लुकाञ्च ततः सेतुं महासेतुमनन्तरम्। निर्व्वाणञ्च ततो देवि! योनिमुद्राविभावना। अङ्गन्यासं प्राणायामं जिह्वाशोधनमेव च। प्राणयोगं दीपनीञ्च अशौचभङ्गमेव च। भ्रूमध्ये वा नसोरग्रे दृष्टिसेतुं जपं पुनः। सेतुमशौचभङ्गञ्च प्राणायाममिति क्रमाः॥ चतुर्थपटले॥ कुल्लुकां मूर्द्ध्नि सञ्जप्य हृदि सेतुं विचिन्तयेत्। महासेतुं विशुद्धौ च कण्ठदेशे समुद्धरेत्। मणिपूरे तु निर्व्वाणं महाकुण्डलिनीमधः। स्वाधिष्ठाने कामवीजं राकिणीमूर्द्ध्नि संस्थितम्। विचिन्त्य विधि-वद्देवि! मूलाधारान्तिकां शिवे!। विसृज्यान्तं स्मरेद्देवि! विसतन्तुतनीयसीम्। वेदिस्थानं हि जीवान्तं मूलमन्त्रावृतं

मुहुः॥ अन्यस्तु वीजचिन्तामण्यादावनुसन्धेयोऽत्र ग्रन्थगौरव-भिया न लिखितः॥

पुरश्चरणन्तु तन्त्रसारकारेणैव धृतम्। पुरश्चरणविशेषो लिख्यते। कङ्कालमालिनीतन्त्रे॥ अथवान्यप्रकारेण पुरश्चरण-मुच्यते। अष्टम्याञ्च चतुर्दश्यां नवम्यां वीरवन्दिते!। सूर्य्योदयं समारभ्य यावत् सूर्य्योदयान्तरम्। तावज्जप्त्वा निरा-तङ्कः सर्वसिद्धीश्वरो भवेत्। अथवान्यप्रकारेण पुरश्चरणमुच्यते। अष्टम्याञ्च चतुर्द्दश्यां पक्षयोरुभयोरपि। अस्तमारभ्य सूर्य्यस्य यावत् सूर्य्यास्तमं भवेत्। तावज्जप्त्वा निरातङ्कः सर्वसिद्धीश्वरो भवेत्॥ अथवा विजनस्थश्च अस्थिशय्यासमश्च वा। उदयास्तं दिवा जप्त्वा सर्वसिद्धीश्वरो भवेत्। तेनासने च वा देवि! अस्त-मारभ्य भास्वतः। जपित्वोदयपर्य्यन्तं सर्वसिद्धीश्वरो भवेत्। अथवान्यप्रकारेण पुरश्चरणमुच्यते। सूर्य्योदयात् समारभ्य घटि-कादशकं क्रमात्। ऋतवः स्युर्वसन्ताद्या अहोरात्रं दिने दिने। वसन्तग्रीष्मवर्षाख्यशरद्धेमन्तशैशिराः। वसन्तश्चापि पूर्वाह्णे ग्रीष्मो मध्याह्न उच्यते। अपराह्णः प्राविषः स्युः प्रदोषः शरदः स्मृतः। अर्द्धरात्रे च हेमन्तः शेषे च शिशिरं स्मृतम्। सूर्य्योदयात् समारभ्य वसन्तान्तं समाहितः। तावज्जपेन्महेशानि! पुरश्चर्य्या हि सिध्यति। ततः पूजादिकं कृत्वा शक्तियुक्तश्च साधकः। गुरवे दक्षिणां दत्त्वा सर्वसिद्धीश्वरी भवेत्। अथवान्यप्रकारेण पुरश्चरणमुच्यते। ग्रीष्मादिषु महेशानि षड़्तुषु च साधकः। पृथगजप्त्वा वरारोहे! पुरश्चर्य्या हि सिध्यति। पूर्वोक्तविधिना सर्वं कर्त्तव्यं वीरवन्दिते!। ऋतौ जप्त्वा तु ऋत्वन्ते शक्तितः पूज-येच्छिवाम्। एवमाचर्य्य कृत्यं वै धनानामीश्वरो भवेत्॥

अथ वारपुरश्चरणं स्वतन्त्रतन्त्रे॥ रविवारादिसर्वेषु वार-संख्यसहस्रकम्। जप्त्वा मन्त्रं सदा देवि! साधकः सिद्धिभाग्भ-

वेत् । पुरश्चरणमेतद्धि नात्र कार्य्या विचारणा । एवंविधं समाचर्य्य दशांशन्तु तदाचरेत् । गुरवे दक्षिणां दत्त्वा सर्वकाममवाप्नुयात् ॥ अथ तिथिपुरश्चरणं तत्रैव ॥ प्रतिपत्तिथिमारभ्य कुहुर्यावद्भवेत् प्रिये ! । तिथिसंख्याक्रमेणैव वर्द्धयेच्च सहस्रकम् । एवं जप्त्वा तदा मन्त्री सर्वकाममवाप्नुयात् । पुरश्चरणमेतद्धि कथितञ्च वरानने ! । प्रतिपत्तिथिमारभ्य राका यावद्भवेत् प्रिये ! । तावन्मन्त्रं प्रजपति तिथिसंख्याक्रमेण तु । सर्वभावसमायुक्तो जायते भुवि साधकः । एतेनैव समृद्धिः स्यान्नात्र कार्य्या विचारणा ॥

अथ मासनियतकार्य्यम् ॥ अद्येत्यादि वैशाखे कार्त्तिके माघे वा मासि अमुकराशिस्थे भास्करे अमुकपक्षेऽमुकतिथावारभ्य अमुकगोत्रः श्रीअमुकदेवशर्म्मा अमुकदेवताया अमुकमन्त्रसिद्धिकामोऽमुकसंक्रान्त्यामारभ्य मेषतुलामकरस्थरविं यावत् प्रत्यहममुकदेवताया अमुकमन्त्रसहस्रसंख्यकजपमेषादावनन्तरतद्दशांशहोम-तद्दशांशतर्पणतद्दशांशाभिषेकतद्दशांश-ब्राह्मणभोजनरूपपुरश्चरणमहं करिष्ये इति सङ्कल्प्य मासं व्याप्य हविष्यान्नभुक् नियमस्थः प्रत्यहं सहस्रकृत्वो जपेत् ॥ ततः सौरज्यैष्ठसौरमार्गशीर्षसौरफाल्गुनप्रथमदिनेषु होमादिकं कृत्वा दक्षिणां कुर्य्यात् यथा । अद्येत्यादि कृतैतत् अमुके मासि अमुकराशिस्थे भास्करे अमुके पक्षे अमुकतिथौ अमुकगोत्रः श्रीअमुकदेवशर्म्मा अमुकराशिस्थरविकालीनामुकदेवताया अमुकमन्त्र इयत्संख्यकजपतद्दशांशहोमतद्दशांशतर्पणतद्दशांशाभिषेकतद्दशांश-ब्राह्मणभोजनरूपपुरश्चरणकर्म्मणः साङ्गतार्थं दक्षिणामिदं काञ्चनं वह्निदैवतम् अमुकगोत्राय श्रीअमुकदेवशर्म्मणे गुरवे तुभ्यमहं सम्प्रददे । ततोऽच्छिद्रावधारणं कुर्य्यात् ॥

अथ वारादिपुरश्चरणसङ्कल्पमाह ॥ अद्येत्यादि अमुके मासि

अमुकराशिस्थे भास्करे अमुके पक्षे अमुकतिथावारभ्य अमुकगोत्रः श्रीअमुकदेवशर्म्मा अमुकदेवताया अमुकमन्त्रसिद्धिकामः रविवारादिसर्व्ववारेषु अमुकदेवताया अमुकमन्त्रस्य वारसंख्यकसहस्रजपरूपपुरश्चरणमहं करिष्ये। इति सङ्कल्पयेत्। ततः शेषदिने तत्परदिने वा अद्येत्यादि कृतैतत् अमुकदेवताया अमुकमन्त्रस्य रविवाराद्यधिकरणकवारसंख्यकसहस्रजपतद्दशांशहोमतद्दशांशतर्पणतद्दशांशाभिषेकतद्दशांशब्राह्मणभोजनकर्म्माण्यहं करिष्ये। ततो दक्षिणा। अद्येत्यादि कृतैतत् रविवाराद्यधिकरणकवारसंख्यक-सहस्रजपतद्दशांशहोमतद्दशांशतर्पणतद्दशांशाभिषिक्ततद्दशांशब्राह्मणभोजनरूपपुरश्चरणकर्म्मणः साङ्गतार्थं दक्षिणामिदमित्यादि॥

तिथिपुरश्चरणे सर्व्वमेवं सर्व्वत्र वारशब्दस्थाने तिथिशब्द-प्रयोगः। अथ ऋतुपुरश्चरणसङ्कल्पः॥ अद्येत्यादि अमुकगोत्रः श्रीअमुकदेवशर्म्मा अमुकदेवताया अमुकमन्त्रसिद्धिकामः सूर्य्योदयं समारभ्य वसन्तान्तं यावत् अमुकदेवताया अमुकमन्त्रस्य जपरूपपुरश्चरणमहं करिष्ये॥ अन्यत्र ग्रीष्मऋतुव्यापकजपरूप-पुरश्चरणमहं करिष्ये एवं सर्व्वत्र॥ जपान्ते पूजां कृत्वा दक्षिणां कुर्य्याद् यथा। अद्येत्यादि अमुकदेवताया अमुकमन्त्रस्य वसन्तऋतुव्यापकजपरूपपुरश्चरणकर्म्मणः साङ्गतार्थं दक्षिणा-मिदमित्यादि। एवं सर्व्वत्र॥ तर्पणाभिषेकप्रयोगो यथा। आचम्य सामान्यार्घ्यं कृत्वा आसनशुद्धिं कृत्वा प्राणायामं ऋष्यादि-न्यासकराङ्गन्यासौ च कृत्वा ध्यात्वा मानसैः सम्पूज्य पुनर्ध्यात्वा जले देवं समावाह्य इदमुदकात्मकं पाद्यम् अमुकदेवतायै नमः। इदमुदकात्मकमर्घ्यम्। इत्यनेन उदकात्मकैरुपचारैः सम्पूज्य सन्ध्योक्तविधिना परिवारान् सन्तर्प्य मूलमुच्चार्य्य अमुकदेवतां तर्पयामि नमः। इत्यनेन सन्तर्प्य आत्मानं देवतारूपं

ध्यात्वा नमोऽन्तमूलमुच्चार्य्य अमुकदेवतामहमभिषिञ्चामि इति कुम्भमुद्रया मूर्द्धानमभिषिच्य संहारमुद्रया देवतां विसर्ज्जयेत् ॥

अथ श्रीदुर्गाया रहस्यपुरश्चरणं स्वतन्त्रतन्त्रे॥ श्रीपार्वत्युवाच॥ कथयस्व महादेव! सिद्धिकारणमुत्तमम्। येन सिद्धिं समायान्ति सर्वे मन्त्राश्च सिद्धिदाः। येषु येषु च कालेषु पुरश्चरणं भवेद्ध्रुवम्॥ शिव उवाच॥ कथयामि समासेन श्रूयतां पर्वतात्मजे!। मेषे दशसहस्रञ्च प्रजपेन्मन्त्रमुत्तमम्। पुरश्चरणमेतद्धि जायते हरवल्लभे!। वृषराशौ यदा मन्त्रमयुतं प्रजपेत् सुधीः। तेन तत्र सुसिद्धिः स्यान्नात्र कार्य्या विचारणा। मिथुने च तथा मन्त्री अयुतं मन्त्रमुत्तमम्। प्रजपेत् प्रयतो नित्यं पुरश्चरणमुच्यते। कर्कटे च यदा मन्त्री सहस्रं प्रत्यहं जपेत्। तेन सर्वार्थसिद्धिः स्यात् पुरश्चरणकृद्भवेत्। सिंहे च सर्वमन्त्राणामयुतानां द्वयं जपेत्। धर्मार्थकाममोक्षाणां फलभाग् भवति ध्रुवम्। कन्यायाञ्च यदा मन्त्री मन्त्रं मन्त्रपरायणः। सहस्रद्वादशञ्चैव जपेन्नियतमानसः। पुरश्चरणमेतद्धि सर्वकामार्थसाधनम्। इह लोके सुखं भुक्त्वा चान्ते देवीपुरं व्रजेत्। तुलायां प्रत्यहं मन्त्री सहस्रं साधको जपेत्। अनेन विधिना देवि! पुरश्चरणकृद्भवेत्। वृश्चिके चायुतं मन्त्रं शय्यायां प्रजपेत् सुधीः। तेन सर्वार्थसिद्धिः स्यात् पुरश्चर्य्याफलं लभेत्। धनुषि च यदा मन्त्रं जपेदयुतमादरात्। इहैव कन्दर्पसमो धनवान् बलवान् सुखी। मकरे च यदा मन्त्रं जपेत् साधकसत्तमः। अयुतानि च चत्वारि प्रत्यहं यतमानसः। धमार्थं भावयेन्नित्यं पुरश्चरणमुच्यते। कुम्भे चैव यदा मन्त्रं जपेदयुतमादरात्। तेन सर्वार्थसिद्धिः स्यात् पुरश्चरणकृद्भवेत्। मीने चैव यदा देवि! प्रजपेदयुतद्वयम्। पुरश्चरणमित्याहुः सर्वागमविशारदाः। सर्वत्र

जपनं कार्य्यं रात्रौ वा मैथुनेऽपि वा। भय्यायाञ्च विशेषेण परयोषित्समागमे। हविष्याशी तदा देवि! जपेन्नियतमानसः। एवंविधं जपं कृत्वा दशांशञ्च तदाचरेत्। दक्षिणां गुरवे दत्त्वा सिद्धिभाग्भवति ध्रुवम्। येषु येषु नक्षत्रेषु जायते सिद्धिरुत्तमा। कथयामि समासेन श्रूयतां पर्वतात्मजे!। अश्विन्यां प्रजपेन्मन्त्रं साधकश्च सहस्रकम्। तेनास्मिन् सिद्धिमाप्नोति साधको नात्र संशयः। द्विसहस्रं यदा मन्त्रं भरण्याञ्च जपेत् सुधीः। यमलोकं परित्यज्य धनेन च धनाधिपः! कृत्तिकायां जपेन्मन्त्रं द्विसहस्रञ्च साधकः। रोहिण्याञ्च यदा मन्त्रं जपेत् साधकसत्तमः। सहस्रं वा शतं वापि सर्वकाममवाप्नुयात्। मृगशीर्षे यदा मन्त्रं नियतं प्रजपेत् सुधीः। सहस्रपञ्चकञ्चैव वृहस्पतिसमो भवेत्। आर्द्रायां जप्यते मन्त्रं साधकैः सुसमाहितैः। षट्सहस्रं यदा देवि! सर्वकामार्थसिद्धये। पुनर्वसुसमायोगे सहस्रं मन्त्रमुत्तमम्। जपनात् साधको नित्यं लभते च सुरोत्तमम्। पुष्यायाञ्च जपेन्मन्त्रं सप्तानाञ्च सहस्रकम्। तेन सर्वसुसिद्धिः स्यात् पुरश्चर्य्याधिको विधिः। अश्लेषायां यदा मन्त्रं मन्त्री देवि! समाहितः। सहस्रषट्ककञ्चैव जपेत् सर्वार्थसिद्धये। दशसहस्रं मघायाञ्च जप्त्वा मन्त्रं समाहितः। पुरन्दरसमो भूत्वा साधको विचरेद्भुवि। एकादशसहस्रन्तु पूर्वात्रये जपेत् सुधीः। कुवेर इव वित्ताढ्यो जायते साधको भुवि। उत्तरात्रितये देवि! सहस्रद्वादशं तथा। जप्यते साधकैर्नित्यं सर्वकामार्थसिद्धये। हस्तायाञ्च जपेद्देवि! त्रयोदशसहस्रकम्। सूर्य्यस्येव समो भूत्वा विचारेद्भुवि साधकः। चित्रायाञ्च जपेन्मन्त्रं द्विसहस्रञ्च साधकः। नानाभोगसमायुक्तो भवेद्भुवि पुरन्दरः। स्वात्यां सर्वार्थसिद्धिः स्याद्विसहस्रस्य जापनात्। साधकोऽव्याहतगतिर्जायते नात्र संशयः। विशाखायां यदा मन्त्रं

चतुःसाहस्रकं प्रिये!। जपेच्च साधको नित्यं सोमवत् प्रियदर्शनः। अनुराधायां यदा देवि! मन्त्री मन्त्रं सदा जपेत्। पुत्रपौत्रसमायुक्तः खेचरो जायते ध्रुवम्। ज्येष्ठायाञ्च यदा मन्त्रं द्विसहस्रं विचक्षणः। जपनाल्लभते सिद्धिं नात्र कार्य्या विचारणा। मूलायाञ्च जपेन्मन्त्रं सहस्रपञ्चकं प्रिये!। नानासिद्धिमवाप्नोति साधको नात्र संशयः। श्रवणायां यदा मन्त्रं द्विसहस्रं जपेत् सुधीः। अष्टसिद्धिर्भवेत्तस्य नात्र वै संशयः प्रिये!। धनिष्ठायां जपेन्मन्त्रं द्विसहस्रं समाहितः। वरुणेन समो भूत्वा जायते साधको भुवि। शतभिषायां यदा मन्त्रं द्विसहस्रं जपेत् सुधीः। स महापातकान्मुच्येत् फलभाग्भवति ध्रुवम्। रेवत्याञ्च महामन्त्रं चतुःसाहस्रकं तथा। जप्त्वा स्तुत्वा सदा देवि! सोमलोकमाप्नुयात्। रात्रौ वा मैथुने वापि शय्यायाञ्च व्यवस्थितः। प्रजपेत् साधको नित्यं साधयेदात्मनो हितम्। सर्वदा प्रजपेन्मन्त्रं हविष्याशी दिवा शुचिः। दक्षिणां गुरवे दद्याद्यथाविभवविस्तरम्। अथवान्यप्रकारेण पुरश्चरणमुच्यते। ववादिकरणेनैव पुरश्चरणमुच्यते। विष्कुम्भादिषु योगेषु यो जपेद्योगसंख्यया। सहस्रं साधको नित्यं सर्वसिद्धिपरायणः। पुरश्चरणमेतद्धि तन्त्रे तन्त्रे निरूपितम्। संक्रान्तिषु च सर्वासु विषुवादिषु पार्वति!। संक्रान्तेरनुसारेण वर्द्धयेच्च सहस्रकम्। पूर्वमुखो जपेन्मन्त्रं धनार्थी सर्वदा प्रिये!। शत्रुनाशाय सततं प्रजपेत् पश्चिमामुखः। लोकानां वश्यहेत्वर्थं मुक्त्यर्थं वा यदा प्रिये!। उत्तराभिमुखो भूत्वा जपेन्मन्त्रं समाहितः। शत्रुनाशाय सततं दक्षिणाभिमुखो जपेत्॥ इति हरगौरीसंवादे रहस्यपुरश्चरणम्॥

अथ ग्रहणपुरश्चरणम्॥ ग्रहणन्तु चक्षुषा राहोर्दर्शनम्। स तु चण्डालस्वरूप इति किंवदन्ती। तस्य दर्शनं कथं पुण्यजनक-

मिति सन्देहे मातृकाभेदतन्त्रे षष्ठपटले ॥ चण्डिकोवाच ॥ राहुश्चाण्डालविख्यातः सर्वत्र परमेश्वर!। पुण्यं कालं कथं देव! तस्य स्पर्शे दिवाकरे। निशाकरे तथा नाथ! चेति मे संशयो हृदि। कथयस्व परानन्द! पश्चादन्यं प्रकाशय ॥ श्रीशङ्कर उवाच ॥ शृणु सर्वाङ्गसुभगे! ग्रहणञ्चोत्तमोत्तमम्। ग्रहणं त्रिविधं देवि! चन्द्रसूर्य्याग्निसंयुतम्। शक्तेर्ललाटे नेत्रे च वह्निस्तिष्ठति सर्वदा। वामनेत्रे तथा चन्द्रो दक्षे सूर्य्यः प्रतिष्ठितः। शम्भुनाथेन देवेशि! रमणं क्रियते यदि। तदेव ग्रहणं देवि! शक्तियुक्तः सदाशिवः। वामनेत्रे चुम्बिते च शशाङ्कग्रहणं तदा। दक्षनेत्रे चुम्बिते च भास्करग्रहणं तथा। ललाटे चुम्बिते चाग्निग्रहणं परमेश्वरि!। शिववीर्य्यं यतो वह्निरतो दृश्यः सुरेश्वरि!। राहुः शिवः समाख्यातस्त्रिगुणा शक्तिरीरिता। शिवशक्त्योः समायोगाद् ग्रहणं परमेश्वरि!। शिवशक्त्योः समायोगकालो ब्रह्ममयः प्रिये!। अतएव महेशानि! राश्यादीन् न विचारयेत्। तिथिनक्षत्रयोगे तु यद्योगं परमेश्वरि!। तदेव परमेशानि! राश्यादिगणनं चरेत्। शिवशक्तिसमायोगात् सर्वं ब्रह्ममयं जगत्। मासपक्षतिथीनाञ्च नोच्चार्य्यं परमेश्वरि!। दृष्टिमात्रेण जप्तव्यं तदा सिद्धो भवेद् ध्रुवम्। तत्कालं परमं कालं विज्ञेयं वीरवन्दिते!। तत्र यद्यत् कृतं सर्वं बहु किं कथ्यतेऽधुना। एतत् सुगुप्तभेदं हि तव स्नेहात् प्रकाशितम्। न वक्तव्यं पशोरग्रे प्राणान्तेऽपि सुरेश्वरि!॥ अत्रानन्तफलकीर्त्तनात् जपदशांशहोमादिकमपि न कर्त्तव्यम् ॥ तदुक्तं गायत्रीतन्त्रे प्रथमब्राह्मणपरिच्छेदे ॥ चन्द्रसूर्य्योपरागे च जप्त्वा ब्रह्ममयो भवेत्। मन्त्रस्य परमेशानि! न च होमादिकञ्चरेत्। कृते होमादिके भद्रे! तज्जपं विफलं भवेत्। जपमात्रे महेशानि! अनन्ततन्मनुर्यथा। अनन्तस्य

महेशानि! दशांशं केन जायते॥ शाक्तानन्दतरङ्गिणीधृत-शोल्लासधृतवीजार्णवतन्त्रीयषोड़शपटले॥ एकदा परमेशानि! कामाख्यायां महेश्वरि!। दृष्टोपरागं यत्कार्य्यं तच्छृणुष्व वरानने!। कुतः स्नानं कुतः सन्ध्या प्राणायामः कुतः प्रिये!। भूतशुद्धिः कुतो भद्रे! कुतः पूजा वरानने!। कालातीतभयाद्देवि! सर्वं सन्त्यज्य कामिनि!। सङ्कल्पं मानसं कृत्वा जपं कृत्वा वरानने!। पञ्चाङ्गैस्तु विहीनोऽपि सिद्धो भवति नान्यथा। मन्त्रं विद्या महेशानि! कवचं स्तवमेव वा। ध्यानं वा परमेशानि। न्यासं वा कमलेक्षणे!। एकोच्चारेण गिरिजे! तन्न-वेदशकोटयः। असंख्यं तज्जपं देवि! ग्रहणे चन्द्रसूर्य्ययोः। तत्कथं परमेशानि! क्रियते जपसंख्यकम्। अतएव महेशानि! होमो नास्ति शुचिस्मिते!। अभिषेकञ्च देवेशि! तथा तर्पणमेव च। भोजनञ्च महेशानि! नास्त्यत्र कमलानने!। चन्द्रसूर्य्य-ग्रहे देवि! पञ्चाङ्गं नास्ति कामिनि!। पञ्चाङ्गेन विहीनोऽपि सिद्धो भवति नान्यथा। सङ्कल्पं विधिवद्देवि! मानसं यदुपस्थितम्। तत्सङ्कल्पं विजानीयाद्ग्रहणे चन्द्रसूर्य्ययोः। तस्मात्तु चपलापाङ्गि! सङ्कल्पं नैव कारयेत्। सङ्कल्पं मानसं देवि! चतुर्वर्गफलप्रदम्। ततो हि मानसं देवि! मुख्यं सङ्कल्पमीरितम्। व्यर्थं हि स्थूलसङ्कल्पं ग्रहणे परिकीर्त्तितम्। सङ्कल्पेन विना देवि! यत्किञ्चित् कुरुते नरः। व्यर्थमेव हि तत् सर्वं तस्मात्तन्मानसं परम्। प्रथमे प्रहरे देवि! चन्द्रग्रासं यदा भवेत्॥ तदैव दिवसे भुक्त्वा सत्वरं नरकं व्रजेत्। निशीथे तु यदा देवि! ग्रसेच्चन्द्रं यदा तमः। तदैव दिवसे भुक्त्वा पीत्वानन्दमयो भवेत्। चन्द्रग्रहणकाले तु जपयज्ञादिकञ्चरेत्। रात्रौ भुक्त्वा च पीत्वा च जपयज्ञादिकं चरेत्। सर्वेषु विष्णु-मन्त्रेषु सौरे गाणपते तथा। शक्तिमन्त्रे महेशानि! प्रशस्तं

सततं जपम्। इति वीजार्णवे तन्त्रे शिवेन परिकीर्त्तितम्। एतत् कल्पं ज्ञानिनाञ्चाज्ञानिनामपि चोच्यते॥ गान्धर्वे॥ अथवान्यप्रकारेण पुरश्चरणमुच्यते। ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्वमुपोषितः। नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः। ग्रहणादिविमोक्षान्तं जपेन्मन्त्रं समाहितः। दृष्ट्वा स्नात्वा सुसङ्कल्पो विमोक्षान्तं जपञ्चरेत्॥ जपस्य तु दशांशेन होमं कुर्य्याद् यथाविधि। होमार्थं तद् द्विगुणं जपेन्मन्त्रं समाहितः॥ होमस्य तु दशांशश्च तर्पणं समुपाचरेत्। अभिषेकदशांशेन ब्राह्मणान् भोजयेत्ततः। तदन्ते महतीं पूजां कुर्य्यात् साधकसत्तमः। गुरवे दक्षिणां दत्त्वा भक्त्या विप्रांश्च तर्पयेत्॥ कालीतन्त्रे॥ अथवान्यप्रकारेण पुरश्चरणमिष्यते। चन्द्रसूर्य्यग्रहे चैव ग्रासावधिविमुक्तितः। यावत्संख्यं मनुं जप्त्वा तावद्धोमादिकं चरेत्। जामले॥ अपि शुद्धोदके स्नात्वा शुचौ देशे समाहितः। ग्रासाद्विमुक्तिपर्य्यन्तं जपेन्मन्त्रमनन्यधीः। एवं जप्त्वाप्यसन्दिग्धो जपस्य फलभाग्भवेत्॥ ग्रहणपूर्वाह्ने उपवासाशक्तस्य फलदुग्धादिभोजनाप्रामाण्यात् वरं हविष्याचरणं शास्त्रं निमित्तानिश्चये तस्याङ्गत्वाभावादुपवासं विनैव पुरश्चरणमिति गुरवः। अत्र श्राद्धमकुर्वाणः पङ्के गौरवसीदतीति निन्दाश्रवणमुपदिष्टविषयम्। उपदिष्टस्य तु जपस्यावश्यकत्वं वैधहिंसावदिति मान्याः। सनत्कुमारीये। श्राद्धादेरनुरोधेन यदि जापं त्यजेन्नरः। स भवेद्देवताद्रोही पितॄन् सप्त नयत्यध इत्यारब्धपुरश्चरणविषयम्। त्यजेदिति श्रवणात्॥

अथ मालाप्रकरणम्॥ नित्यातन्त्रे नवमपटले॥ ईश्वर उवाच। अक्षमालां समाश्रित्य मातृकावर्णरूपिणीम्। अथ मुक्ताफलमयी भोगमोक्षप्रदायिनी। राजवश्यकरी सर्वसिद्धिदा नात्र संशयः। यथा मुक्ताफलमयी तथा स्फटिकनिर्मिता।

रुद्राक्षमाला गिरिजे! मोक्षदा च समृद्धिदा। प्रबालघटिता माला वश्यदा कर्मसाधिनी। माणिक्यरचिता माला साम्राज्य-फलदायिनी। पुत्रञ्जीवकमाला तु विद्यालक्ष्मीप्रदायिनी। पद्मवीजाक्षमाला तु महालक्ष्मीप्रदायिनी। रक्तचन्दनवीजाक्ष-माला वश्यफलप्रदा॥ मुण्डमालातन्त्रे द्वितीयपटले। स्फाटिकै-र्मोक्षलाभ: स्यात् रुद्राक्षैर्बहुपुत्रदा। जीवपुत्रैश्च धनदा पाषाणै-र्भोगमोक्षदा। शुद्धस्फटिकमाला तु महासम्पत्प्रदा प्रिये!। श्मशानधूस्तुरैर्माला एका धूमावतीविधौ। तथा। मणिरत्नप्रबा-लैश्च हैमराजतसम्भवा। माला कार्य्या कुशग्रन्थ्या सर्वभोगफल-प्रदा। समयाचारतन्त्रे द्वितीयपटले॥ पूर्वाम्नायादि सर्वेषां मालां शृणु यथाक्रमम्। जप्त्वा येनाशु लभते फलं देवैश्च दुर्लभम्। अक्ष-माला प्रथमतो मातृकार्णस्वरूपिणी। अथ मुक्तामयी माला रतिमोक्षफलप्रदा। सर्वसिद्धिकरी माला सर्वराजवशङ्करी। प्रबालमाला वश्यार्थं सर्वकार्य्यफलप्रदा। माणिक्यरचिता माला साम्राज्यफलदायिनी। पुत्रञ्जीवकमाला सा लक्ष्मीविद्याप्रदा-यिनी। पद्माक्षरचिता माला यशोलक्ष्मीप्रदा सदा। सुवर्ण-रचिता माला स्फाटिकी सर्वकामदा। रक्तचन्द्रनमाला च भोगदा मोक्षदा भवेत्। रुद्राक्षरचिता माला सर्वकामफल-प्रदा। सर्वमालां प्रपूज्याथ चन्दनेन विलेपिताम्। समाश्रित्य जपेन्नित्यं यथोक्तफलमाप्नुयात्। एता मालाश्च सुभगे! पञ्चा-म्नायेषु पूजिता:॥ मुण्डमालातन्त्रे॥ देव्युवाच॥ अक्षमाला तु कथिता यत्नतो न प्रकाशिता। अक्षमालेति किं नाम फलं वा किं वदस्व मे॥ ईश्वर उवाच॥ अक्षमाला तु देवेशि! काम्य-भेदादनेकधा। भवन्ति शृणु तन्वाङ्गि! विस्तरादुच्यते मया। अनुलोमविलोमेन क्लृप्तया वर्णमालया। आदिलान्तलादि आन्त क्रमेण परमेश्वरि!। क्षकारं मेरुरूपञ्च लङ्घयेन्न कदाचन। मेरु-

लङ्घनदोषस्तु तत्रैव ॥ मेरुहीना च या माला मेरुजङ्घा च या भवेत्। अशुद्धा प्रतिकाशा च सा माला निष्फला भवेत्। चित्रिणी विसतन्त्वाभा ब्रह्मनाड़ीगतान्तरा। तथा संग्रथिता माला सर्वकामफलप्रदा। अष्टोत्तरशतं जप्त्वा आदिक्लीवं समाचरेत्। ऋॠऌॡद्वयं यत्तु तद्धि क्लीवं प्रचक्षते। वर्गाणामष्टभिर्वापि काम्यभेदात् क्रमेण तु। अकचटतपयशा अष्टौ वर्गाः प्रकीर्त्तिताः॥ मालया जपविशेषेण फलविशेषस्तु नित्यातन्त्रे॥ अक्षमालां प्रपूज्याथ चन्दनेन सुलोचने!। समाश्रित्य जपेद्विद्वान् लक्षमात्रमनन्यधीः। योषितः सकला वश्याः सप्तद्वीपस्य पार्वति!। ततो द्वितीयलक्षञ्च प्रजपेद्वीरवन्दिते!। पातालतलनागेन्द्रकन्या वश्या भवन्ति हि। ततो लक्षत्रयं भद्रे! प्रजपेत् साधकोत्तमः। देवाङ्गना भवन्त्येव वश्यास्तस्य महेश्वरि!। महापातककोटिश्च नाशयेत् कमलेक्षणे!। अभिमानेन सौभाग्यं सौख्यं सौन्दर्य्यमाप्नुयात्। चतुर्लक्षं प्रजप्याथ महायोगीश्वरो भवेत्। पञ्चलक्षजपाद्देवि! कुवेरपदवीं व्रजेत्। षड्लक्षजपमात्रेण सर्वविद्यासु कोविदः। सप्तलक्षजपाद्देवि! खेचरो भवति ध्रुवम्। अष्टलक्षं प्रजप्याथ देवपूज्यो भवेन्नरः। अणिमाद्यष्टसिद्धीनां नायको नात्र संशयः। राजानो वशगास्तस्य योषितश्च विशेषतः। नवलक्षं महादेवि! यो जपेत् साधकोत्तमः। रुद्रमूर्त्तिः स्वयं साक्षात् कर्त्ता हर्त्ता न संशयः॥ समयाचारतन्त्रे॥ उत्तराम्नायेषु या माला भूयः शृणु वदामि ते। अथ वर्णमयी माला सर्वोत्कृष्टा च सा मता। महाशङ्खमयी माला वाञ्छितार्थफलप्रदा। उडुम्बरफलस्याथ सूक्ष्मस्याथ क्षता मता॥ योगिनीतन्त्रे पूर्वखण्डे द्वितीयपटले॥ ईश्वर उवाच॥ वर्णमाला शुभा प्रोक्ता सर्वमन्त्रप्रदीपनी। तस्याः प्रतिनिधिर्देवि! महाशङ्खमयी शुभा। महाशङ्खः करे यस्य तस्य सिद्धिरदूरतः।

तदभावे वीरवन्द्ये ! स्फाटिकी सर्वसिद्धिदा ॥ मणिभेदेन फलभेदमाह मुण्डमालातन्त्रे ॥ त्रिंशतैश्वर्य्यफलदा पञ्चविंशैस्तु मोक्षदा । चतुर्दशमयी मोक्षदायिनी भोगवर्द्धिनी । दशपञ्चात्मिका देवि ! मारणोच्चाटने स्थिता । स्तम्भने मोहने वश्ये बोधने अञ्जने तनोः । पादुकासिद्धिसङ्के च शतसंख्या प्रकीर्त्तिता । अष्टोत्तरशतं कुर्य्यादथ वा सर्वकामदम् । योगिनीतन्त्रे ॥ मणिसंख्यां महादेवि ! मालायाः कथयामि ते । पञ्चविंशतिभिर्मोक्षं पुष्ट्यै तु सप्तविंशतिः । त्रिंशद्भिर्धनसिद्धिः स्यात् पञ्चाशन्मन्त्रसिद्धये । अष्टोत्तरशतैः सर्वसिद्धिरेव महेश्वरि ! । एतत्साधारणं प्रोक्तं विशेषं कामिनां वद ॥ श्रीशिव उवाच ॥ दन्तमाला जपे कार्य्या गले धार्य्या नृणां शुभे ! । दशनैर्यदि कर्त्तव्या संख्या दन्तस्य ते प्रिये ! । सर्वसिद्धिप्रदा माला राजदन्तेन मेरुणा । अन्यत्वाधि महेशानि ! मेरुत्वेनैवमादिशेत् । नित्यं जपं करे कुर्य्यान्न काम्यमवरोधनात् । काम्यमपि करे कुर्य्यान्मालाभावे प्रियंवदे ! । अत्राङ्गुल्या जपं कुर्य्यात् साङ्गुष्ठाङ्गुलिभिर्जपेत् । अङ्गुष्ठेन विना कर्म कृतं तन्निष्फलं भवेत् ॥ उत्पत्तितन्त्रे प्रथमपटले ॥ नित्यं नैमित्तिकं काम्यं करे कुर्य्याद्विचक्षणः । करमाला महादेवि ! सर्वदोषविवर्ज्जिता । छिन्नभिन्नादिदोषोऽपि करे नास्ति कदाचन । अक्षयस्तु करो देवि ! माला भवति तादृशी । ग्रन्थिः सा कुण्डलीशक्तिः पञ्चाशद्वर्णरूपिणी । अतएव महेशानि ! करमाला महाफला ॥ योगिनीतन्त्रे ॥ तथा तथातो ग्रथनं मालानां तव बोधनम् । पूजां विधाय भक्त्या तु शुचिः पूर्वमुपोषितः । विजने ग्रथयेन्मौनी स्वयं मालाञ्च साधकः । कृतनित्यक्रियः शुद्धः शुद्धोऽक्षेषु च मन्त्रवित् । यथाकालं यथाकाममक्षानानीय यत्नतः । अन्योन्यसमरूपाणि नातिस्थूलकृशानि च । कीटादिभिरदुष्टानि न जीर्णानि नवानि च । गव्यैस्तु पञ्चभि-

स्त्राणि प्रक्षाल्य च पृथक् पृथक्। पृथ्वी देवेन्द्रपुत्रस्त्रीनिर्मितं ग्रन्थिवर्ज्जितम्। त्रिगुणं त्रिगुणीकृत्य पट्टसूत्रमथापि वा। शुक्लं रक्तं तथा पीतं शान्तिवश्यविचारके। सूत्रं सम्पातयेद्विद्वान् तत् प्रक्षाल्य च पूर्ववत्। मालामेकैकमादाय सूत्रे सम्पातयेत् सुधीः। मुखे मुखन्तु संयोज्य पुच्छे पुच्छन्तु योजयेत्। गो-पुच्छसदृशी कार्य्याथवा सर्पाकृतिर्भवेत्। तत्सजातीयमेकाक्षं मेरुत्वेनाग्रतो न्यसेत्। एकैकमालामध्ये तु ब्रह्मग्रन्थिं प्रकल्प-येत्॥ उत्पत्तितन्त्रे षष्टिपटले॥ क्रमोत्क्रमाच्छताद्वृत्त्या पञ्चा-शद्वर्णमालया। यो जपः स तु विज्ञेय उत्तमः परिकीर्त्तितः।

इति श्रीप्राणतोषिण्यां चतुर्थे काम्यकाण्डे ग्रन्थिकथनरूपः प्रथमः परिच्छेदः।

अथ साधनस्थानम्॥ शारदायां द्वितीयपटले॥ पुण्यक्षेत्रं नदीतीरं गुहापर्वतमस्तकम्। तीर्थप्रदेशाः सिन्धूनां सङ्गमः पावनं महत्। उद्यानानि विविक्तानि विल्वमूलं तटं गिरेः। देवतायतनं कूलं समुद्रस्य निजं गृहम्। साधनेषु प्रशस्यन्ते स्थानान्येतानि मन्त्रिणाम्। नदीतीरं पुण्यनदीतीरं सामान्य-नदीतीरस्य निषिद्धत्वात्। विविक्तानि विजनानि॥ राघवभट्ट-धृतम्। प्रत्यङ्मुखः शिवस्थाने वृषभादिविवर्ज्जिते। अश्वत्थ-विल्वतुलसीवने पुष्पान्तरावृते। गवां गोष्ठेऽश्वत्थमूले पुण्यक्षेत्रेषु शस्यते॥ गोष्ठ इत्यनेनैव गोस्थाने लब्धे गवामिति यदुक्तं तत् तात्कालिकगोसम्बन्धज्ञापनाय तेन गोसमीपे जपादि-कर्म प्रशस्तमतएव गवां समीप इत्युक्तम्॥ वायवीयसंहि-तायाम्। यथा। सूर्य्यस्याग्नेर्गुरोरिन्दोर्दीपस्य च जलस्य च। विप्राणाञ्च गवाञ्चैव सन्निधौ शस्यते जपः। अथवा निवसे-त्तत्र यत्र चित्तं प्रसीदति। मुण्डमालातन्त्रे तृतीयपटले च॥ नदीतीरे विल्वमूले श्मशाने शून्यवेश्मनि। एकलिङ्गे

पर्व्वते वा देवागारे चतुष्पथे। शवस्योपरि मुण्डे वा जले वा काष्ठपूरिते। संग्रामभूमौ योनौ वा स्थाने वा विजने वने। यत्र कुत्र स्थले रम्ये यत्र वा स्यान्मनोलयः॥ बृहन्नीलतन्त्रे द्वितीयपटले॥ एकलिङ्गे श्मशाने वा शून्यागारे चतुष्पथे। हर्म्ये वा साधयेद्देवीं सर्व्वाभीष्टप्रदायिनीम्। एकलिङ्गलक्षणमाह॥ पञ्चक्रोशान्तरे यत्र न लिङ्गान्तरमीक्ष्यते। तदेकलिङ्गमाख्यातं तत्र सिद्धिरनुत्तमा। इति श्यामारहस्यधृतेनैकलिङ्गं ज्ञातव्यम्॥ तथा। उज्जटे पर्व्वते वापि निर्जने वा चतुष्पथे। देवागारे देवशून्ये विल्वमूले नदीतटे। स्वगृहे निर्जनेऽरण्ये तथा चाश्वत्थसन्निधौ। इत्यपि श्यामारहस्ये नित्यातन्त्रे प्रथमपटले च॥ एकलिङ्गे श्मशाने वा शून्यागारे नदीतटे। पातालभवने वापि गिरौ वा दीर्घिकातटे। शक्तिक्षेत्रे महापीठे विल्वमूले शिवालये। धात्रीवृक्षतलेऽश्वत्थमूले चैव तरोस्तले॥ पातालभवने भूमिमध्ये॥ समयाचारतन्त्रे द्वितीयपटलेऽपि॥ जपस्थानानि देवेशि! सिद्धपीठानि यानि च। सिद्धपीठे च शय्यायां खट्टाशय्याविशेषतः। चतुष्पथे सिद्धलिङ्गे गुरुदेवालये तथा। वटाश्वत्थविल्वमूले रम्भाया विपिने तथा। नदीतीरे शिवागारे गुहापर्व्वतमस्तके। जपस्थानानि देवेशि! कथितानि नगात्मजे!। शृणु देवि! विशेषेण उत्तराम्नायहेतवे। वेश्यागृहे श्मशाने वा गत्वा मैथुनमाचरेत्। ततो जपादिकं देवि! कृत्वा च लभते फलम्। अथवा स्वगृहे रात्रौ भक्तिमान् सुसमाचरेत्। स प्राप्नोति फलं सर्व्वं चिन्तादिभयवर्जितः॥ पुरश्चरणरसोल्लासतन्त्रे चतुर्थपटले॥ गोष्ठं चतुष्पथञ्चैव त्रिपथञ्च वरानने!। निर्ज्जनञ्च तथारण्यं शून्यगेहं तथैव च। पर्व्वतञ्च नदीतीरं तथैव दीर्घिकातटम्। अश्वत्थवृक्षमूले च वटवृक्षतले तथा। धात्रीवृक्षतले देवि! तथैव

वकुलस्य च। यत्र पद्मवनं भद्रे! शुक्लं रक्तं वरानने!। द्रोण-पुष्पस्य चार्वङ्गि! यदि भाग्येन लभ्यते। अरुणादित्यसङ्काशं जपकालं परात्परम्। स्थानविशेषे अन्नदाकल्पे द्वितीय-पटले॥ गोशालायां पुण्यभूमौ गुरोर्गेहे विशेषतः। विल्वमूले नदीतीरे पर्वते शिवसन्निधौ। स्वगृहे पुण्यनिलये तथा साधक-मन्दिरे। श्रीदुर्गाप्रतिमास्थाने युवतीनाञ्च सन्निधौ। एव-मादिषु देशेषु दीक्षाकर्म प्रशस्यते॥ फलविशेषस्तु राघवभट्टे-नोक्तो यथा॥ गृहे जपः समः प्रोक्तो गोष्ठे शतगुणस्तु सः। आरामे च तथारण्ये सहस्रगुण उच्यते। अयुतः पर्वते पुण्ये नद्यां लक्षगुणस्तु सः। कोटिर्देवालये प्राहुरनन्तं शिव-सन्निधौ॥

अथ सिद्धपीठम्॥ कुब्जिकातन्त्रे सप्तमपटले॥ शिव उवाच॥ श्रूयतां सावधानेन सिद्धपीठं पतिव्रते!। यस्मिन् साधन-मात्रेण सर्वसिद्धीश्वरो भवेत्। मायावती मधुपुरी काशी गोरक्ष-कारिणी। हिङ्गुला च महापीठं तथा जालान्धरं पुनः। ज्वालामुखी महापीठं पीठं नगरसम्भवम्। रामगिरिर्महापीठं तथा गोदावरी प्रिये!। नेपालं कर्णसूत्रञ्च महाकर्णं तथा प्रिये!। अयोध्याञ्च कुरुक्षेत्रं सिंहनादं मनोरमम्। मणिपूरं हृषीकेशं प्रयागञ्च तपोवनम्। वदरीञ्च महापीठं अम्बिका अर्द्धनालकम्। त्रिवेणी च महापीठं गङ्गासागरसङ्गमम्। नारिकेलञ्च विरजा उड्डीयानं महेश्वरि!। कमला विमला चैव तथा माहिष्मतीपुरी। वाराही त्रिपुरा चैव वाग्मती नीलवाहिनी। गोवर्द्धनं विन्ध्यगिरिः कामरूपं कलौ युगे। घण्टाकर्णो हयग्रीवो माधवश्च सुरेश्वरि!। चीरग्रामं वैद्यनाथं जानीयाद्वामलोचने!। कामरूपं महापीठं सर्वकामफलप्रदम्। कलौ शीघ्रफलो देवि! कामरूपे जपः स्मृतः। अन्यत्र जपे-

ऽलिकामाख्यावस्त्रयोगेन फलमुक्तं तत्रैव॥ कामाख्यावस्त्र-मादाय जपपूजां समाचरेत्। पूर्णकामं लभेद्देवि! सत्यं सत्यं न संशयः॥ तन्त्रचूड़ामणौ महापीठनिरूपणं यथा। ईश्वर उवाच॥ मातः! परात्परे! देवि! सर्वज्ञानमयीश्वरि!। कथ्यतां मे सर्वपीठं शक्तिभैरवदेवता॥ देव्युवाच॥ शृणु वत्स! प्रवक्ष्यामि दयालो! भक्तवत्सल!। याभिर्विना न सिध्यन्ति जपसाधनसत्क्रियाः। एकपञ्चाशतं पीठं शक्तिभैरवदेवता। अङ्गप्रत्यङ्गपातेन विष्णुचक्रक्षतेन च। ममास्य वपुषो देव-हिताय त्वयि कथ्यते। ब्रह्मरन्ध्रं हिङ्गुलायां भैरवो भीम-लोचनः। कोट्टरीशो महादेवस्त्रिगुणा या दिगम्बरी॥ १॥ करवीरे त्रिनेत्रं मे देवी महिषमर्दिनी। क्रोधीशो भैरवस्तत्र ।२। सुगन्धायाञ्च नासिका। देवस्त्र्यम्बकनामा च सुनन्दा तत्र देवता॥ ३॥ काश्मीरे कण्ठदेशश्च त्रिसन्ध्येश्वरभैरवः। महामाया भगवती गुणातीता वरप्रदा॥ ४। ज्वालामुख्यां महाजिह्वा देव उन्मत्तभैरवः। अम्बिका सिद्धिदानाम्नी। ५। स्तनं जालान्धरे मम। भीषणो भैरवस्तत्र देवी त्रिपुरमालिनी॥६॥ हृत्पीठं वैद्यनाथे वैद्यनाथस्तु भैरवः। देवता जयदुर्गाख्या।७। नेपाले जानु मे शिव!। कपाली भैरवः श्रीमान् महामाया च देवता॥ ८॥ मानवे दक्षहस्तं मे देवी दाक्षायणी हर!। अमरो भैरवस्तत्र सर्वसिद्धिप्रदायकः॥ ९॥ उत्कले नाभिदेशस्तु विरजाक्षेत्रमुच्यते। विमला सा महादेवी जगन्नाथस्तु भैरवः॥१०॥ गण्डक्यां गण्डपातश्च तत्र सिद्धिर्न संशयः। तत्र सा गण्डकी चण्डी चक्रपाणिस्तु भैरवः॥ ११॥ बहुलायां वामबाहुर्बहु-लाख्या च देवता। भीरुको भैरवस्तत्र सर्वसिद्धिप्रदायकः॥१२॥ उज्जयिन्यां कूर्परञ्च माङ्गल्यकपिलाम्बरः। भैरवः सिद्धिदः साक्षाद्देवी मङ्गलचण्डिका॥१३॥ चट्टले दक्षबाहुर्मे भैरवश्चन्द्र-

शेखर: । व्यक्तरूपा भगवती भवानी तत्र देवता । विशेषत: कलियुगे वसामि चन्द्रशेखरे ॥ १४ ॥ त्रिपुरायां दक्षपादो देवी त्रिपुरसुन्दरी । भैरवस्त्रिपुरेशश्च सर्व्वाभीष्टप्रदायक: ॥ १५ ॥ त्रिस्रोतायां वामपदो भ्रामरी भैरवेश्वर: ॥ १६ ॥ योनिपीठं कामगिरौ कामाख्या तत्र देवता । यत्रास्ते त्रिगुणातीता रक्तपाषाणरूपिणी । यत्रास्ते माधव: साक्षादुमानन्दोऽथ भैरव: । सर्व्वदा विहरेद्देवी तत्र मुक्तिर्न संशय: । तत्र श्रीभैरवी देवी तत्र न क्षेत्रदेवता । प्रचण्डचण्डिका तत्र मातङ्गी त्रिपुरात्मिका । वगला कमला तत्र भुवनेशी सधूमिनी । एतानि नव पीठानि शंसन्ति वरभैरवा: ॥ १७ ॥ अङ्गुलीवृन्दं हस्तस्य प्रयागे ललिता भव ! ॥ १८ ॥ जयन्त्यां वामजङ्घा च जयन्ती क्रमदीश्वर: । सर्व्वत्र विरला चाहं कामरूपे गृहे गृहे । गौरीशिखरमारुह्य पुनर्जन्म न विद्यते ॥ १९ ॥ भूतधात्री महामाया भैरव: क्षीरकण्ठक: । युगाद्या सा महामाया दक्षाङ्गुष्ठ: पदो मम । नकुलीश: कालीपीठे दक्षपादाङ्गुलीषु च ॥ २० ॥ करतोयां समारभ्य यावद्दिक्करवासिनी । शतयोजनविस्तारं त्रिकोणं सर्व्वसिद्धिदम् । देवा मरणमिच्छन्ति किं पुनर्मानवादय: ॥ इति कामरूपमाहात्म्यम् ॥ भुवनेशी सिद्धिरूपा किरीटस्था किरीटत: । देवता विमलानाम्नी संवर्त्तो भैरवस्तथा ॥ २१ ॥ वाराणस्यां विशालाक्षी देवता कालभैरव: । मणिकर्णीतिविख्याता कुण्डलञ्च मम श्रुते: ॥ २२ ॥ काल्याश्रमे च मे पृष्ठं निमिषो भैरवस्तथा । सर्व्वाणी देवता तत्र । २३ । कुरुक्षेत्रे च गुल्फत: । स्थाणुनाम्नी च सावित्री अश्वनाथस्तु भैरव: ॥ २४ ॥ मणिबन्धे च गायत्री सर्व्वानन्दस्तु भैरव: ॥ २५ ॥ श्रीशैले च मम ग्रीवा महालक्ष्मीस्तु देवता । भैरव: संवरानन्दो देशे देशे व्यवस्थित: ॥ २६ ॥ काञ्चीदेशे च कङ्कालो भैरवो रुरुनामक: ।

देवता देवगर्भाख्या। २७। नितम्बः कालमाधवे। भैरवश्चा-सिताङ्गश्च देवी काली सुसिद्धिदा॥ २८॥ दृष्ट्वा दृष्ट्वा नमस्कृत्य मन्त्रसिद्धिमवाप्नुयात्। शोणाख्ये भद्रसेनस्तु नर्मदाख्या नित-म्बके॥ २९॥ रामगिरौ तथा नाला शिवानी चण्डभैरवः। ३०॥ वृन्दावने केशजाल उमानाम्नी च देवता। भूतेशो भैरव-स्तत्र सर्वसिद्धिप्रदायकः॥ ३१॥ संहाराख्य ऊर्द्ध्वदन्ते देवी नारायणी शुचौ॥३२॥ अधोदन्ते महारुद्रो वाराही पञ्चसा-गरे॥ ३३॥ करतोयातटे तल्पं वामे वामनभैरवः। अपर्णा देवता तत्र ब्रह्मरूपा करोद्भवा॥ ३४॥ श्रीपर्वते दक्षगुल्फं तत्र श्रीसुन्दरी परा। सर्वसिद्धीश्वरी सर्वा सुनन्दानन्दभैरवः॥३५॥ कपालिनी भीमरूपा वामगुल्फं विभाषके। भैरवश्च महादेवः सर्वानन्दः शुभप्रदः॥ ३६॥ उदरञ्च प्रभासे मे चन्द्रभागा यश-स्विनी। वक्रतुण्डो भैरवश्च॥३७॥ ऊर्द्धौष्ठे भैरवपर्वते। अवन्त्याञ्च महादेवी लम्बकर्णस्तु भैरवः॥३८॥ चिबुके भ्रामरी देवी किकु-भाख्या जले स्थले। भैरवः सर्वसिद्धीशस्तत्र सिद्धिरनुत्तमा॥३९॥ गण्डो गोदावरीतीरे विश्वेशो विश्वमातृका। दण्डपाणिर्भैर-वस्तु। ४०। वामगण्डे तु राकिणी। भैरवो वत्सनाभस्तु तत्र सिद्धिर्न संशयः॥४१॥ रत्नावल्यां दक्षस्कन्धे कुमारीभैरवः शिवः॥ ४२॥ मिथिलायां महादेवी वामस्कन्धे महोदरः। ४३। नलाहाट्यां नलापातो योगीशो भैरवस्तथा। तत्र सा कालिका देवी सर्वसिद्धिप्रदायिका॥ ४४॥ कालीघाटे मुण्डपातः क्रो-धीशो भैरवस्तथा। देवता जयदुर्गाख्या नानाभोगप्रदायिनी॥ ४५॥ वक्रेश्वरे मनःपातो वक्रनाथस्तु भैरवः। नदी पाप-हरा तत्र देवी महिषमर्दिनी॥ ४६॥ यशोहरे पाणिपद्मं देवी यशोहरेश्वरी। चण्डश्च भैरवस्तत्र यत्र सिद्धिमवाप्नुयात्॥ ४७॥ अट्टहासे चौष्ठपातो देवी सा फुल्लरा स्मृता। विश्वेशो भैरवस्तत्र

सर्व्वाभीष्टप्रदायकः॥ ४८॥ व्हारपातो नन्दिपुरे भैरवो नन्दिकेश्वरः। नन्दिनी सा महादेवी तत्र सिद्धिर्न संशयः॥ ४९॥ लङ्कायां नूपुरञ्चैव भैरवो राक्षसेश्वरः। इन्द्राक्षी देवता तत्र इन्द्रेणोपासिता पुरा॥ ५०॥ विराटदेशमध्ये तु पादाङ्गुलिनिपातनम्। भैरवश्चामृताख्यश्च देवी तत्राम्बिका स्मृता॥ ५१॥ तत्रास्ते कथिताः पुत्र! पीठनाथाधिदेवताः। चैत्राधीशं विना देवं पूजयेच्चान्यदेवताम्। भैरवैः क्रियते सर्व्वं जपपूजादिसाधनम्। अज्ञात्वा भैरवं पीठं पीठशक्तिञ्च शङ्कर!। प्राणनाथ! न सिध्येत्तु कल्पकोटिजपादिभिः। न देयं परशिष्येभ्यो निन्दकाय दुरात्मने। शठाय क्रूरकार्य्याय दत्त्वा मृत्युमवाप्नुयात्। दद्याच्छान्ताय शिष्याय मन्त्री मन्त्रार्थसिद्धये। महानीलतन्त्रे पञ्चमपटले॥ पीठार्च्चनं महादेवि! यत्र सिद्धिरनुत्तमा। पीठानां परमं पीठं कामरूपं महाफलम्। तत्र या क्रियते पूजा सकृद्वापि महेश्वरि!। विहाय सर्व्वपीठानि तस्य देहे वसाम्यहम्। तस्माच्छतगुणं प्रोक्तं कामाख्यायोनिमण्डलम्। तेषां फलं महेशानि! वक्तुं किं शक्यते मया। तत्र कोटिगुणैः सार्द्धमाद्या वसति तारिणी। यत्पीठं ब्रह्मणा गुप्तं वक्तुं सर्व्वसुखावहम्। यतो देवाश्च वेदाश्च मुनयश्चैव भावजाः। सर्व्वेऽप्याविर्भवन्त्येते तेन गुप्तं सदा कुरु। द्विविधञ्चैव यत्पीठं गोप्तव्यं तन्महेश्वरि!। यत्नाद्गुप्तं महापुण्यं दुरापं साधकाधमैः। व्यक्तं सर्व्वत्र देवेशि! लभ्यते कुलसुन्दरि!। पीठप्रसङ्गाद्देवेशि! पीठानि शृणु भैरवि!। शृणु तानि महाप्राज्ञे! श्रेष्ठस्थानानि यानि च। सिद्धिप्रदानि साधूनां महद्भिः सेवितानि च। पुष्करञ्च गयाचैत्रमक्षयाख्यवटस्तथा। वराहपर्व्वतञ्चैव तीर्थञ्चामरकण्टकम्। नर्म्मदा यमुना पिङ्गी गङ्गाद्वारं तथा प्रिये!। गङ्गासागरसङ्गञ्च कुशावर्त्तञ्च विल्वकम्। श्रीनीलपर्व्वतञ्चैव कलम्बकुब्जके तथा। भृगुतुङ्गञ्च केदारं

सर्वप्रियं महाबलम्। ललिता च सुगन्धा च शाकम्भरी पुर-प्रियम्। कर्णतीर्थं महागङ्गा तण्डुलिकाश्रम एव च। कुमा-राख्यप्रभासौ च तथा धन्या सरस्वती। अगस्त्याश्रममिष्टं मे कर्णाश्रममतः परम्। कौशिकीसरयूशोणज्योतिःसरपुरः-सरम्। कालोदकं प्रियं श्रीमत् प्रियमुत्तममानसम्। पतङ्ग-वापी सप्तार्च्चिर्महाविष्णुपदं महत्। वैद्यनाथं महातीर्थं प्रियः कालञ्जरो गिरिः। रामोच्छेदं गर्गोच्छेदं हरोच्छेदं महा-ननम्। भद्रेश्वरं महातीर्थं लक्ष्मणच्छेदमेव च। जानीहि प्रियश्रेष्ठा च कावेरी कपिलोदका। सोमेश्वरं शुक्लतीर्थं कृष्ण-वेल्वाप्रभेदकम्। पाठला च महाबोधिर्नगतीर्थं मदन्तिके!। पुण्यं रामेश्वरं देवि! तथा मेघवनं हरेः। ऐलमवनकञ्चैव गोवर्द्धनमजप्रियम्। हरिश्चन्द्रं पुरश्चन्द्रं पृथूदकमतिप्रियम्। इन्द्रनीलं महानादं तथैव प्रियमैनकम्। पञ्चासरं पञ्चवटी वटी पर्वटिका तथा। गङ्गाविल्वप्रसङ्गञ्च प्रियनादवटं तथा। गङ्गारामाचलञ्चैव तथैव ऋणमोचनम्। गौतमेश्वरतीर्थञ्च वशिष्ठ-तीर्थमेव च। हारीतञ्च तथा देवि! ब्रह्मावर्त्तं शिवप्रियम्। कुशा-वर्त्तमतिश्रेष्ठं हंसतीर्थं तथैव च। पिण्डारकवनं ख्यातं हरिद्वारं तथैव च। तथैव वदरीतीर्थं रामतीर्थं तथैव च। जयन्ती-विजयन्तञ्च सर्वकल्याणदं प्रिये!। विजया शारदातीर्थं भद्र-कालेश्वरं तथा। अश्वतीर्थं सुविख्यातं तथा देवशिवप्रियम्। ओघवती नदी चैव तीर्थमश्वप्रदं तथा। छागलिङ्गमाहगणं करवीरपुरं तथा। सप्तगोदावरं तीर्थं लिङ्गाख्यं सर्वमोहनम्। किरीटमुत्तरे तीर्थं दक्षिणे तीर्थमुत्तमम्। विशालतीर्थं काम्याश्च वनं वृन्दावनं तथा। ज्वालामुखी हिङ्गुला च महातीर्थं गणे-श्वरम्। जानीहि सर्वतीर्थानां हेतुस्थानानि सुन्दरि!। अत्र सन्निहिता नित्यं सर्वे देवा महर्षयः। पितरो योगिनश्चैव

ये ये सिद्धिपरायणाः। आशु सिध्यन्ति कर्माणि श्रद्धाभक्तिमतां प्रिये!। पुण्यकाले पठेद् यस्तु तत्पुण्यमक्षयं भवेत्। श्राद्धकाले पठेत् यस्तु जुहुयाद्वापि भक्तितः। अक्षयं तद्भवेत् कव्यं पितॄणां परमं सुखम्। अस्मिन् स्थाने पठेद् यस्तु सिद्धिर्भवति तत्क्षणात्॥ अथ वक्ष्ये महेशानि! यत्र या देवता शृणु। यत्र ते यानि नामानि कथयिष्यामि तत् शृणु। मग्नोऽहं परमानन्दे तत्कथामृतवारिधौ। पुष्करे कमलाक्षी च गयायाञ्च गयेश्वरी। अक्षया अक्षयवटेऽमरेशोऽमरकण्टके। वराहपर्वते च त्वं वराही धरणीप्रिया। नर्म्मदा नर्म्मदायाञ्च कालिन्दी यमुनाजले। शिवामृता च गङ्गायां अम्बा देहलिकाश्रमे। शारदा सरयूतीरे शोणे च कनकेश्वरी। अप्रकाशा यदा देवी ज्योतिर्म्मय्यब्धिसङ्गमे। श्रीरहं श्रीगिरौ चैव काली कालोदके तथा। महोदरी महातीर्थे नीला चोत्तरमानसे। मातङ्गिन्यां मतङ्गे च गुप्तार्चिर्विष्णुपादुके। स्वर्गदा स्वर्गमार्गे च गोदावर्य्यां गवेश्वरी। विमुक्तिश्चैव गोमत्यां पिपाशायां महाबला। शतद्रूां शतरूपा च चन्द्रभागा च तत्र वै। ऐरावत्याञ्च ईर्नाम सिद्धिदा सिद्धितीरके। दक्षपञ्चनदे चैव दक्षिणाहं प्रकीर्त्तिता। श्रीजसे वीर्य्यदा च त्वं सङ्गमा तीर्थसङ्गमे। बाहुदायामनन्ताहं कुरुक्षेत्रे रणेक्षणा। तपस्विनी पुण्यतमा भारती भारताश्रमे। सुकथा नैमिषारण्ये पाण्डी च पाण्डराननी। विशालायां विशालाक्षी मुण्डपृष्ठे शिवात्मिका। श्रद्धा कनखले तीर्थे शुद्धबुद्धिर्मुनीश्वरी। सुवेशा सुमना गौरी मानसे च सरोवरे। नन्दापुरे महानन्दा ललिता ललितापुरे। ब्रह्माणी ब्रह्मशिरसि महापातकनाशिनी। पूर्णिमा चेन्दुमत्याञ्च काञ्चग्रामतिप्रिया सदा। जाह्नवीसङ्गमे तृप्तिः स्वधा च पितृतुष्टिदा। पुष्पाहं बहुसित्याञ्च प्रपायां पापनाशिनी। शङ्खसंहारिणी

चैव घोररूपा महोदरी। स्वर्गोच्छेदे महावारिः प्रबला च महावने। भद्रा च भद्रकाली च भद्रेश्वरी शिवप्रिया। भद्रेश्वरे रमा विष्णुप्रिया विष्णुपदे तथा। दारुणा नर्म्मदाच्छेदे कावेर्य्यां कपिलेश्वरी। भेदिनी कृष्णवेत्तायां सम्भेदे शुभवासिनी। श्रद्धा च शुक्लतीर्थे च प्रभासे चेश्वरी तथा। महाबोधी महाबुद्धिः पटले पाटलेश्वरी। सुबला नागतीर्थे च नागेशी नागवन्दिता। मदन्ती च मदन्ती च प्रमदा च मदन्तिका। मेघस्वना मेघवामे विद्युत् सौदामिनीच्छदा। रामेश्वरे महाबुद्धिर्वीरा चेलापुरे सती। प्रिया च मार्गके दुर्गा सुरेशा सुरसुन्दरी। कात्यायनी महादेवी गोवर्द्धनेऽखिलात्मिका। शुभेश्वरी हरिश्चन्द्रे पुरचन्द्रे पुरेश्वरी। पृथूदके महावेगा मैनाकेऽखिलवर्द्धिनी। इन्द्रनीले महाकान्ता रत्नेशा सुशोभना। माहेश्वरी महानादे महातेजा महाबले। पत्यपासरसि सारङ्गा पञ्चकर्ण्यां तपस्विनी। वटीशावटिकायाञ्च सर्व्ववर्णा सुरङ्गिणी। सङ्गमे विन्ध्यगङ्गायां विन्ध्ये श्रीविन्ध्यवासिनी। महानन्दा नन्दतटे गङ्गबालाचले शिवा। आर्य्यावर्त्ते महार्य्या त्वं विमुक्तिर्ऋणमोचने। अट्टहासे च चामुण्डा तन्त्रे श्रीगौतमेश्वरी। वेदमयी ब्रह्मविद्या वशिष्ठे त्वमरुन्धती। हरिते हरिणाची च ब्रह्मावर्त्ते ब्रजेश्वरी। गायत्री चैव सावित्री कुशावर्त्ते कुशप्रिया। हंसेश्वरी महातीर्थे परहंसेश्वरेश्वरी। प्रिण्डारकवने धन्या सुरसा सुखदायिनी। नारायणी वैष्णवी च गङ्गाद्वारे विमुक्तिदा। श्रीविद्या वदरीतीर्थे रामतीर्थे महाधृतिः। जयन्ती च जयन्ते त्वं विजयन्तेऽपराजिता। विजया च महाशुद्धिः शारदायाञ्च शारदा। सुभद्रे भद्रदा भव्या भद्रकालेश्वरे तथा। महाभद्रा महाकाली हयतीर्थे गवीश्वरी। वेददा वेदमाता च विटेशे वेदमस्तके। युवत्याञ्च महाविद्या ब्रह्मानद्यां महोदया।

चण्डा च त्रिपदे चैव छागलिङ्गे बलिप्रिया। मातङ्गे जगन्माता करवीरपुरे सती। मलिनी रङ्गिणी रामा परमा परमेश्वरी। सप्तगोदावरे तीर्थे देवर्षिरखिलेश्वरी। अयोध्यायां भवानी च जयदा जयमङ्गला। माधवी मथुरायाञ्च देवकी यादवेश्वरी। वृन्दा गोपेश्वरी राधा रासवृन्दावने रमे। कात्यायनी महामाया भद्रकाली कलावती। चन्द्रमाला महायोगा महायोगिन्यधीश्वरी। वज्रेश्वरी यशोदेति वज्रश्रीगोकुलेश्वरी। काञ्च्यां कनककाञ्ची स्यादवन्त्यामतिपावनी। विद्या विद्यापुरे चैव विमला नीलपर्वते। रामेश्वरी सेतुबन्धे विमला पुरुषोत्तमे। विरजा यागपुर्य्याञ्च भद्रेऽपि भद्रकर्णिका। तमोलिप्ते तमोघ्नी च स्वाहा सागरसङ्गमे। कुलश्रीर्वंशवृद्धिश्च माधवी माधवप्रिया। मङ्गला मङ्गले कोटे राढ़े मङ्गलचण्डिका। ज्वालामुखी शिवापीठे मन्दरे भुवनेश्वरी। कालिघट्टे गुह्यकाली किरीटे च महेश्वरी। किरीटेश्वरी महादेवी लिङ्गाख्ये लिङ्गवाहिनी। साक्षी सर्वत्र भक्तानामभक्तानां कुतोऽपि न॥ अथान्यत् सम्प्रवक्ष्यामि सिद्धस्थानानि सुन्दरि!। सर्वपापविनाशार्थं सर्वसिद्धिप्रदं नृणाम्। निर्मितानि शिवेनेह सिद्धस्थानानि यानि च। श्रुत्वा मनसि भाव्यानि प्रकाश्यान्यधिकारिषु। अमरेशमहापीठे कुशतुङ्गारसंज्ञकः। तत्र दुर्गाद्वयं नाम चण्डिका च महेश्वरी। प्रभासे सोमनाथोऽसौ देवी च पुष्करेक्षणा। देवदेवाधिपः शम्भुर्नैमिषे च महेश्वरः। तत्र प्रज्ञा च देवी च शिवानी लिङ्गधारिणी। पुष्करे च राजगन्धिः पुरहूता महेश्वरी। श्रीपर्वते श्रियो नाम शङ्करस्त्रिपुरान्तकः। मायावी शङ्करी तत्र भक्तानामखिलार्थदा। जप्येश्वरे महास्थाने शङ्करी च त्रिशूलिनी। त्रिशूली शङ्करस्तत्र सर्वपापविमोचकः। आम्रातकेश्वरे सूक्ष्मा सूक्ष्माख्या परमेश्वरी।

गणचेत्रे मङ्गलाख्या शिवो यः प्रपितामहः। कुरुचेत्रे शिव-स्थाणुः शिवास्थाणुः श्रिया परा। इष्टलाभे स्वयम्भूश्च देवी स्वाय-म्भुवा मता। उग्रः कनखले प्रोक्तः शिवोग्रे शिववल्लभा। विमले-श्वरे विश्वशम्भुर्विश्वाविश्वप्रिया सदा। अट्टहासे महानन्दी महा-नन्दा महेश्वरी। महान्तको महेन्द्रश्च पार्वती च महान्तका। भीमेश्वरो भीमपीठे शिवा भीमेश्वरी तथा। वस्त्रपादे भवो नाम भवानी भुवनेश्वरी। अद्रिकूटे महायोगी रुद्राणी परमे-श्वरी। अविमुक्ते महादेवो विशालाची शिवा परा। महामाये हरो रुद्री महाभागा शिवा तथा। महाबलश्च गोकर्णे शिव-भद्रा च चण्डिका। भद्रकर्णे महादेवो भद्रा च कर्णिका तथा। सुपर्णाख्ये सहस्राख्य उत्पला परमेश्वरी। स्थाणुसंज्ञे शिवस्था श्रीस्वरस्था श्रीधरा शिवा। कनकालये महास्थाने कमलाख्यो महेश्वरः। कमलाची महेशानि! सकलार्थप्रदायिनी। छागला तु कपर्दी च प्रसभा च महेश्वरी। ऊर्द्धरेता वरेण्ये च सन्ध्याख्यपरमेश्वरी। साकोटाख्यमहाकोटा शिवा च मुण्डके-श्वरी। मातुलेश्वरपीठे च करवीरा च शेखरा। श्रीमद्व्याघ्रपुरे साचाद्धरनामा सभापतिः। शिवः सभापतिर्नाम यत्र नृत्यति शङ्करः। आत्मानन्दमहानादपूर्णानन्दमहार्णवम्। नृत्यन्तं यत्र देवेशं देवेशी परिपश्यति। यत्र आशु महादेवो भक्तानां वरदो भवेत्। नृत्यन्तं यत्र सर्वेशं वीच्य लोको विमुच्यते। पुण्यस्थानेषु सर्वेषु स्थानमेतन्महोत्तमम्। यद् यत्कर्माणि सर्वाणि अचयाणि भवन्ति वै। तस्मिन् महोत्तमे स्थाने शिव-गङ्गाख्यमद्भुतम्। तड़ागमस्ति तत्तीरे दच्चिणे नृत्यतीश्वरः। तड़ागेऽस्मिन् वसन् स्नात्वा सभानाथं समीचते। अष्टोत्तर-सहस्रन्तु जपेच्छुद्धो मुदान्वितः॥ यानि ते कथितान्यत्र सदा तिष्ठन्ति देवताः। पितरः सिद्धगन्धर्वाः सिद्धयः सर्वसिद्धिदाः।

यत्र दत्तं हुतं जप्तं स्नानमक्षयपुण्यदम्। यद् यत् प्रकीर्त्तितं नाम भैरवं परिपूज्य च। प्रणवादि हृदन्ते च लभतेऽभीष्टमुत्तमम्। भोजयेद् ब्राह्मणान् योऽत्र अक्षयं फलमश्नुते। इह नानासुखं भुक्त्वा हरगौरीपुरं व्रजेत्। शोकदुःखविनाशोऽयं करुणानिधिरीश्वरः। निर्ममे सर्वसम्प्रीत्यै पुण्यक्षेत्राणि भूतले। अकाले पुण्यशुद्धानामनेकैः पुण्यसाधनैः। आस्तिकानां भवेदत्र निवासः साधनं प्रति। तस्माद् यत्नेन कर्त्तव्यमत्र साधनमुत्तमैः। इदानीं शृणु चार्वङ्गि! पीठं सर्वाङ्गसुन्दरम्। अक्षमालामयं पीठं ब्रूहि मे परमेश्वरि!। यत्र सिध्यन्ति कार्य्याणि स्थितिस्ते शङ्करस्य च। विष्णोरगाधबोधस्य तत्प्रियाया महेश्वरि!। अन्येषाञ्चैव देवानां युग्मं पदनिवासिनाम्। प्रसादो हि भवत्याशु तत्र च प्रीतिरुत्तमा॥

अथ पूजाकालः समयाचारतन्त्रे प्रथमपटले॥ पूजनादिषु यः कालो देवानाञ्च पृथक् पृथक्। स कालः समयो नाम यज्ज्ञात्वाऽमृतमश्नुते॥ तथा। प्रातर्मध्याह्नकः कालः प्रदोषश्च तृतीयकः। रात्रिप्रथमयामश्च चतुर्थः परिकीर्त्तितः। पञ्चमस्त्वर्द्धरात्रश्च पञ्च कालाः प्रकीर्त्तिताः। दिनस्य प्रथमस्यादौ कालः प्रथम ईरितः। दिनमध्ये तु यः कालो द्वितीयः परिकीर्त्तितः। सूर्य्यास्तरजनीकादौ प्रदोषो यस्तृतीयकः। ब्राह्ममुहूर्त्तावधिकमर्द्धरात्रादनन्तरम्। कालः षष्ठात्मको ज्ञेयो देवानामपि दुर्लभः। शान्तिकर्म तथा वश्यं स्तम्भद्वेषणमोहनम्। उच्चाटनं मारणञ्च कर्माणि च पृथक् पृथक्। शान्त्यर्थं प्रथमः कालो मध्याह्नस्तदनन्तरम्। सायं सूर्य्यास्तसमयस्त्रिकालानामयं क्रमः॥ मत्स्यसूक्ते पञ्चमपटले॥ अनुक्तकाले सर्वत्र दिवसादौ शुभेऽहनि। भागानुक्ते समं कुर्य्याद् वारानुक्ते गुरोर्दिने। तिथ्यनुक्तेऽष्टमी ग्राह्या नक्षत्रे रोहिणी

मता। योगेऽनुक्ते ध्रुवो योगः सर्व्वत्रैव विधिः स्मृतः। योगिनी-तन्त्रे पूर्व्वखण्डे द्वितीयपटले ॥ गते तु प्रथमे यामे तृतीयप्रहरा-वधि। कालो नक्तं जपस्योक्तं पूजाकालमिति शृणु। सार्द्ध-यामगते नक्ते सार्द्धयामः स्थितो यदा। पूजाकालो भवेद् याम-श्चतुर्वर्गप्रदः सदा। श्लिष्टे द्वे घटिके ये तु रात्रेर्मध्यमयामयोः। सा महारात्रिरुद्दिष्टा तत्कृतं त्वक्षयं फलम्। यद् यज्जप्तं हुतं यद्‌ यत् यत् कृतं मोक्षसाधनम्। सर्वं तदक्षयं याति तथा-नन्त्याय कल्पते ॥

गुप्तसाधनतन्त्रे षष्ठपटले ॥ निशा तु परमेशानि! सूर्य्ये चास्तमुपागते। प्रहरे च गते रात्रौ घटिके द्वे परे च ये। महानिशा समाख्याता तत्रातिमहानिशा। तन्त्रान्तरे घटिका-द्वयमेव चेति पाठः। अतिमहानिशान्तमुक्त्वा तु। तत्र न पूजयेद्देवीं पशुभावः कदाचन। दशदण्डे तु या पूजा तत्सर्व-मक्षयं भवेत्। षष्ठक्रोशे महेशानि! तत् सर्वममृतं प्रिये!। सप्तमक्रोशके देवि! सर्वं क्षीरोपमं भवेत्। अष्टमक्रोशक इत्यादि समानम्। अर्द्धरात्रे गते देवि! सर्वं क्षीरोपमं स्मृतम्। अष्टमक्रोशके देवि! द्रव्यतुल्यं न संशयः। अतः परं महेशानि! विषतुल्यं न संशयः। एतत् सर्वं महेशानि! पशुभावे मयो-दितम्। दिव्यवीरमते देवि! तत्तत्काले प्रपूजयेत्। पञ्चतत्त्वं समानीय यदि पूजापरो भवेत्। कालाकालविचारन्तु देवि! तत्र विवर्ज्जयेत्। अर्द्धरात्रे गते देवि! मूलपूजा प्रकीर्त्तिता। तत्तत्तन्त्रानुसारेण सर्वपूजादिकञ्चरेत् ॥

बृहन्मुण्डमालातन्त्रे ॥ आगमप्रकाशधृते ॥ शरत्कालेऽथवा चैत्रे सूर्य्येन्दुसङ्गमेऽसिता। अर्द्धरात्रेऽर्चिता देवी भोगस्वर्गाप-वर्गदा। सूर्य्येन्दुसङ्गमेऽमावस्यायाम्। असिता श्यामा कालि-केति यावत् ॥ आगमसारे ॥ तुलामकरमेषेषु कुष्टुं प्राप्य सुरे-

श्वरि ! । पूजयेत् कालिकां देवीं चतुर्वर्गफलाप्तये ॥ नन्दिकेश्वर-
तन्त्रे ॥ निशीथे कार्त्तिके कुह्वां यजेद्दीपान्विताद्दिने । कालिकां
कालिका तस्य सर्वाभीष्टप्रदायिका । प्रतिसंवत्सरं कुर्य्यात्
कालिकाया महोत्सवम् । कार्त्तिके तु विशेषेण अमावस्यां
निशार्द्धके । तस्यां सम्पूजयेद्देवीं भोगमोक्षप्रदायिनीम् । तुलायां
कुजवारेऽपि कुहुरेव यदा भवेत् । प्रगल्भान्तु जगद्धात्रीं पूज-
येद्गीतमङ्गलैः । मुण्डमालातन्त्रे ॥ तुलादित्यनिशार्द्धे तु पञ्च-
दश्यां नगात्मजे ! । पूजयेत् कालिकां तत्र प्रचण्डां मुण्डमा-
लिनीम् ॥ षष्ठपटले ॥ दिवापूजा विधातव्या निशापूजा महे-
श्वरि ! । सन्ध्यापूजा विधातव्या तदा सिद्धिमवाप्नुयात् । न दिवा
न निशाभागे न सन्ध्यायां कदाचन । पूजयेन्न जगद्धात्रीं छलायां
परिपूजयेत् । दिवा न पूजयेद्देवीं रात्रौ नैव च नैव च ।
सर्वदा पूजयेद् देवीं दिवा रात्रौ न पूजयेत् । वचनत्रयाणां
इति दिव्यवीरविषयत्वेन समाधानमतो न कश्चिद्दोषः । तथा च
निरुत्तरतन्त्रे प्रथमपटले ॥ न दिवा पूजयेद्वीरः पशूरात्रौ न
पूजयेत् । विपरीतं महेशानि ! अभिचाराय कल्पते ॥ ननु
प्रागुक्तगुप्तसाधनतन्त्रोक्तवचनेन पशूनां षोड़शदण्डात्मक-
रात्रिमध्ये पूजाश्रवणात् रात्रौ पशुकर्त्तृकपूजननिषेधः कथं
सङ्गच्छत इति चेत् सत्यम् । नन्दिकेश्वरमुण्डमालातन्त्रयोर्वच-
नैरागमप्रकाशधृतैः सहैकवाक्यतया गुप्तसाधनतन्त्रोक्तवचनं
दीपान्वितादिनिमित्तकर्त्तव्यश्यामादिपूजाविषयकम् । निरुत्तर-
तन्त्रन्तु नित्यपूजाविषयमिति सर्वं समञ्जसम् । दिवावीरपूजा-
निषेधोऽपि पञ्चतत्त्वहीनपूजाविषयत्वेन बोद्धव्यः । अन्यथा पूर्वोक्त-
कालाकालेतिवचनमनर्थकं स्यात् । अतिनिशायां पूजानिषेधस्तु
अप्रशस्तकालार्थः । अन्यथा द्रव्यस्यामृतत्वादिकीर्त्तनस्य वैयर्थ्यं
स्यात् । सार्द्धयामेत्यादि वस्तुतस्तु कुलपूजाविषयम् । महानि-

वीणतन्त्रे चतुर्दशोल्लासे॥ देव्युवाच॥ यद्यकस्माद्देवतानां पूजा-बाधो भवेद्विभो!। विधेयं तत्र किं भक्तैस्तन्मे कथय तत्त्वतः। अपूजनीयाः कैर्दोषैर्भवेयुर्देवमूर्त्तयः। त्याज्या वा केन दोषेण तदुपायश्च भण्यताम्॥ श्रीसदाशिव उवाच॥ एकाहमर्च्चना-बाधात् द्विगुणं देवपूजनम्। दिनद्वये भवेद्द्विगुणं तद्द्वैगुण्यं दिन-त्रये। ततः षण्मासपर्य्यन्तं यदि पूजा न सम्भवेत्। तदाष्ट-कलसैर्देवं स्नापयित्वा यजेत् सुधीः। षण्मासात् परतो देवं प्राक् संस्कारविधानतः। पुनः सुसंस्कृतं कृत्वा पूजयेत् साधका-ग्रणीः। खण्डितं स्फुटितं व्यङ्गं संस्पृष्टं कुष्ठरोगिणा। पतितं दुष्टभूम्यादौ न देवं पूजयेद्बुधः। हीनाङ्गं स्फुटितं भग्नं देवं तोये-विसर्ज्जयेत्। स्पर्शादिदोषदुष्टन्तु संस्कृत्य पुनरर्च्चयेत्। महा-पीठेऽनादिलिङ्गे सर्वदोषविवर्ज्जिते। सर्बदा पूजयेत्तत्र स्वस्वमिष्टं सुखाप्तये॥ अथ प्रायश्चित्तम्॥ श्यामारहस्यधृतलिङ्गागमे॥ शृणु देवि! प्रवक्ष्यामि प्रायश्चित्तमनुत्तमम्। तद्विशुद्धिश्च विधि-वद्भैरवेण सुभाषितम्। गुरुत्यागकरः शिष्यः प्रायश्चित्ती भवेद्ध्रुवम्। लक्षं श्रीपादुकां जप्त्वा तस्मात् पापाद्विशुध्यति। मन्त्र-त्यागकरः शिष्यस्तत्सङ्गं नैव कारयेत्। लक्षमेकं जपेन्मन्त्रं होम-तर्पणतः शुचिः॥ एतत्तु दिव्यवीरगुरुत्यागे बोद्धव्यम्। कुलशि-ष्येण पशुगुरुत्यागः कर्त्तव्य एव। इति श्यामारहस्योक्तं तन्न समीचीनम् कौलिकानां प्रायश्चित्ताभावात्॥ तदुक्तं कुलार्णवे पञ्चमखण्डे॥ प्रायश्चित्तं भृगोः पातं सन्यासं व्रतधारणम्। तीर्थ-यात्राभिगमनं कौलः पञ्च विवर्ज्जयेत्॥ तेन प्रायश्चित्तं पशु-शिष्यविषयम्। पशुगुरुत्यागस्य शास्त्रोक्तत्वान्न तत्र प्रायश्चित्तम्। तद्वचनन्तु रुद्रजामलकुलार्णवयोः। मधुलुब्धो यथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत्। ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत्। मन्त्रान्मन्त्रान्तरमिति पाठान्तरम्। तन्मते च रिपुमन्त्रः साध्य-

मन्त्रो जीवहीनः सन्दिग्धो वा यथा स्यात्तथा तं हित्वा अन्यमन्त्रग्रहणं कुर्य्यात्। तथा विद्यां विहाय महाविद्याग्रहणं कुर्य्यात् ॥ तदुक्तं तत्रैव ॥ सकलो जीवहीनश्च सन्दिग्धो निद्रितस्तथा। मनवस्ते न सिध्यन्ति गुरुः स्याद् ब्रह्मघातकः। तदा तं सहसा ज्ञात्वा मन्त्रदेवं गुरुं त्यजेत्। बहुज्ञोऽपि गुरुस्त्याज्यो ज्ञात्वा सारं वरानने!। अल्पज्ञोऽपि गुरुः पूज्यो यो जानाति कुलाकुलम्। एकत्र गुरुणा सार्द्धं स्वपित्युपविशेच्च यः। स याति नरकं घोरं यावदिन्द्राश्चतुर्द्दश। गुरुवाक्यं हतं कृत्वा आत्मावाक्यन्तु रोपयेत्। गुरुं जेतुं मनो यस्य स पतेन्नरकार्णवे। अनेकधा पशोरन्नं भुञ्जते ये च कौलिकाः। तेभ्यः प्रकुप्यते देवी तत्सङ्गं नैव कारयेत्। कौलिकः पशुसंसर्गी पशुशक्तिं रमेद्बलात्। गोष्ठीमध्ये च यत्नेन दर्शं तस्य न कारयेत्। एकपात्रे पिबेद्द्रव्यं वीरो माहेश्वरो यदि। शूनो विष्ठा भवेत् पानं प्रायश्चित्ती स कौलिकः। गायत्रीभिः सहस्रेण तत्पापं शमयेदथ। होमयेद्धविषाज्येन निष्पापः स भवेद्ध्रुवम्। लक्षत्रयं जपेन्मोपां लक्षं वाप्यजपां जपेत्। सम्यक् शोधितचित्तस्तु सुवर्णं गुरवे ददेत्। चक्रं कृत्वा तु देवेशि! पूजयेत्तर्पणं विना। चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो बलम्। अभिषेके विनाभूते आचार्य्यत्वं करोति यः। योनिकोटिशतं याति रौरवं नरकं व्रजेत्। मातृरूपां परित्यज्य स्त्रीरूपां शक्तिमाचरेत्। स याति नरकं घोरं जन्मकोटिशतानि च। मूलं लक्षत्रयं जप्त्वा अजपां लक्षमेव च। कूर्च्चबीजं पञ्चलक्षं ततः शुद्धिमवाप्नुयात्। मन्त्रमाता च पुत्री च भगिनी च कुलाङ्गना। न रमेत् कौलिको नित्यमेताः सम्यक् समर्च्चयेत्। श्रीपात्रग्रहणं कृत्वा चक्रमुत्थापयेद्यदि। पशुपानं भवेत्तस्य प्रायश्चित्तं प्रजायते ॥ अथ मन्त्रमातृगमने प्राणान्तिकप्रायश्चित्तम्। तदुक्तं तन्त्रान्तरे ॥

बलाद्वा स्वेच्छया वापि यो रमेन्मन्त्रमातरम् । दशलक्षं मनुं जप्त्वा तुषानलं समाचरेत् । पुत्त्रीकुलाङ्गनाभगिनीगमने मूलमन्त्रलक्षजपात् शुद्धिस्तदुक्तं तत्रैव ॥ मन्त्रपुत्त्री स्वपुत्त्री च भगिनी च कुलाङ्गना । रमणाल्लक्षजापेन शुद्धो भवति कौलिकः ॥ तन्त्रान्तरे ॥ पर्वण्यपूज्य देवेशीं गुरुमग्निञ्च शक्तितः । अदत्त्वा च बलिं तत्र शतमष्टोत्तरं जपेत् । पत्रं पुष्पं फलं मूलमन्नपानादिमौषधम् । अनिवेद्य न भुञ्जीत यदाहाराय कल्पते । अनिवेद्यन्तु भुञ्जानः प्रायश्चित्ती भवेन्नरः । दे व्याश्चाष्टशतं मन्त्रं जप्त्वा पूतो भवेन्नरः । अनस्थिप्राणिसङ्घातं हत्वा च दशकं जपेत् । हत्वा च पक्षिणः सर्वान् त्रिभिरेकादशं जपेत् । सर्पमार्जारनकुलं श्वानमुष्ट्रं खरं हयम् । गजाद्यांश्च मृगान् सर्वान् हत्वा चाष्टशतं जपेत् । जपेदष्टसहस्रन्तु क्षत्रवैश्यवधे बुधः । हत्वा पशुं स्त्रियं बालं मन्त्रं पञ्चशतं जपेत् । जपेदष्टसहस्रन्तु सच्छूद्रविनिपातने । त्रयोदशसहस्रन्तु दिव्यवीरवधे जपेत् । वीरस्त्रीगमनेनापि वृथापाने तथैव च । गुरुस्नुषामन्त्रपुत्त्रीगमने चापि कौलिकः ॥ इति तु अज्ञानकृते बोध्यं ज्ञानकृते तु लक्षजपात् शुद्धिः ॥ तदुक्तं ब्रह्मजामले ॥ कृत्वा वीरवधं मन्त्री वृथापानं गुरुस्नुषाम् । वीरपत्नीं मन्त्रपुत्त्रीं रमित्वा द्विगयुतं जपेत् ॥ इति । महापातकप्रायश्चित्तजपस्तु लतासम्बन्धेन कार्य्यः । तदुक्तं कालीतन्त्रे ॥ लतारतेन जप्तव्यं महापातकमुक्तये । रुद्रजामले उत्तरखण्डे द्वितीयपटले ॥ पशूनां व्रतभङ्गादौ विधिं प्रथमतः शृणु । व्रतभङ्गे नित्यभङ्गे नित्यपूजादिकर्मणि । सहस्रं प्रजपेन्मन्त्री व्रतदोषोपशान्तये ॥ गायत्रीतन्त्रे पञ्चमब्राह्मणपटले । शालग्रामशिलाद्यग्रे कृत्वा दिव्यं करोति यः । शालग्रामादिकं स्पृष्ट्वा यदि दिव्यं करोति च । तथा गङ्गाजलादींश्च ताम्रञ्च गोमयं तथा । तुलसीञ्च महादेवि ! सुवर्णं गोरजस्तथा । वेदादी-

न्यपि पुष्पाणि द्रव्याण्यन्यानि यान्यपि। तीर्थपीठादिनामानि स्पृष्ट्वा दिव्यं करोत्यपि। दिव्यकर्त्तुः कारयितुर्नरकान्न च निष्कृतिः॥ पूर्व्वोक्तं यन्महेशानि! तत्पापस्य विशुद्धये। यदि ब्रह्मवधप्रोक्तप्रायश्चित्तं करिष्यति॥ तस्मात् पापात् तदा शुद्धो नान्यथा कल्पकोटिभिः। अपरञ्च प्रवक्ष्यामि शृणुष्व कमलानने!। गङ्गास्नानं हि नन्दादौ सर्व्वपापप्रणाशनम्। गङ्गातोये कृतं दिव्यं तत्पापं नगनन्दिनि!। महापातकोपपापं गङ्गास्नानाद्विनश्यति। गङ्गायां मौषलं स्नानं महापातकनाशनम्॥ प्रायश्चित्तात्मकगङ्गास्नानसङ्कल्पः॥ अद्येत्यादिशालग्रामसन्निधिदिव्यकरणशालग्रामगङ्गाजलताम्रगोमयगोरजस्तुलसीसुवर्णरजततीर्थमहापीठवेदादिशास्त्रस्पर्शपूर्व्वकदिव्यकरणदेवादिनामोच्चारणपूर्व्वकदिव्यकरणकारणाज्ञानकृतब्रह्महत्यादिजनितपापक्षयकामो नन्दायां गङ्गास्नानमहं करिष्ये। इति तु समुच्चितपापक्षयसङ्कल्पः। अद्येत्यादिगङ्गाजलस्पर्शपूर्व्वकदिव्यकरणदिव्यकारणजनितपापक्षयकामो गङ्गायां स्नानमहं करिष्ये। इति गङ्गाजलस्पर्शपूर्व्वकदिव्यकरणपापक्षयसङ्कल्पः। अद्येत्यादिज्ञानाज्ञानकृत ब्रह्महत्यादिपापक्षयकामो गङ्गायां स्नानमहं करिष्ये॥ इति ब्रह्महत्यादिपापक्षयसङ्कल्पः॥

इति श्रीप्राणतोषिण्यां चतुर्थे काम्यकाण्डे शाखाकथनं नाम द्वितीयः परिच्छेदः।

अथ विशेषसाधनानि। कृकलासदीपिकायां प्रथमपटले॥ श्रीनीलावाण्युवाच॥ इदानीं कृकलासोऽपि पशुरूपधरोऽव्ययः। पशुवाक्यप्रबोधाय उपायं वद शङ्कर!॥ ईश्वर उवाच॥ साधु पृष्टं त्वया देवि! पशुवाक्यप्रबोधनम्। आदौ तु कथयिष्यामि पश्चात् साधनमुत्तमम्। कार्त्तिके फाल्गुने मासि तृतीयायां महानिशि। एकाकी निर्भयो गत्वा चितायां वर-

वर्णिनि!। शवासनं समासाद्य देवीं ध्यात्वा तु चर्चिकाम्। शुष्ककण्ठीमुग्ररावां शुनां घोरतरेक्षिणीम्। युवतीं द्विभुजां तालजङ्घां मुक्तकचां भजे। एवं ध्यात्वा प्रयत्नेन जपेन्मन्त्र-मनन्यधीः। तारां मायां तथा चर्चिचर्चिके कृकलासकम्। बोधयद्वितयं वह्निकान्तामन्त्रः परात्परः। एवं सहस्रं प्रजपेत् ततः सिद्धिरनुत्तमा। कृकलासरवं ज्ञात्वा साधको गतशोक-भाक्। तत्प्रसादान्महेशानि! साफल्यं तस्य जायते। स ब्रूते सकलां वार्त्तां साधकाय यदा तदा। राजानं वशयेत् क्षिप्रं कामिनीञ्च न संशयः॥ १॥ अथवा गोष्ठमासाद्य निशीथे साधकोत्तमः। उग्रचण्डां प्रयत्नेन धूपदीपैर्मनोरमैः। भक्तितः परमेशानि! पूजयेत्तारमायया। निजमन्त्रसहस्रन्तु तदैव प्रजपे-त्ततः। ततः सिध्यति देवेशि! नात्र कार्य्या विचारणा॥ २॥ अथवा कामिनीपुष्पमकरन्देन सुन्दरि!। तिलकं कारये-न्मूर्द्ध्नि जपेदेतं मनुं ततः। तत्क्षणात् सिद्धिमाप्नोति सत्यं सत्यं न संशयः॥ ३॥ इति कृकलाससिद्धिः॥

अथ वल्लीसिद्धिः॥ तत्रैव। वल्लिकायां साधयेद्विद्वान्नदी-तीरे महानिशि। उग्रकेशीं प्रयत्नेन पूजयित्वा विशेषतः। तारं हृदुग्रकेशीञ्च चतुर्थ्यन्तां द्विठावधि। जपेदेतत् सहस्रन्तु सिध्यत्येव न संशयः। अथवा मुक्तकेशस्तु चितायां परमेश्वरि!। वगलां पूजयेद् यत्नादुपचारैर्यथोचितैः। ॐ नमो वगले! माया स्वाहान्तोऽयं महामनुः। अष्टोत्तरसहस्रन्तु जपेदनन्यमानसः। ततो देवि! समानीय गोधिकां गृहसम्भवाम्। पूजयेत्तां प्रय-त्नेन पुनर्जापं समाचरेत्। ततः प्रभृति देवेशि! वल्लिका-शब्दविद्भवेत्। अतीतानागतां वार्त्तां लीलया वक्ति सर्वदा॥१॥ अथवा निशि मांसाद्यैः पूजयेत् कृष्णपिङ्गलाम्। जपेन्मायात्रयं लक्ष्मीं ङेयुतं नामसंयुतम्। जपेदयुतमानन्तु ततः सिद्धो भवे-

मनुः। तदेव फलमाप्नोति सत्यं सत्यं न संशयः। प्रातःकाल समासाद्य जपेदेनं दिनावधि। सन्ध्यायां परमेशानि! ज्यैष्ठिका-शब्दविद्भवेत्॥

अथ मूषिकसाधनं तत्रैव॥ अथ वच्ये महेशानि! मूषि-काशब्दसाधनम्। उपोष्य पूर्वेऽहनि शुद्धमानसः प्रातः शुचिः सुन्दरवेशधारी। गत्वा नदीतीरमुषीं सतारां ङेऽन्तां नमोऽन्तां प्रजपेच्च यत्नात्। सिद्धावधि श्रीगिरिराजकन्याप्रसादतो मूषिक-शब्दविद्भवेत्॥ १॥ किंवा रमायुग्ममुषीञ्च ङेऽन्तां द्विठावधि प्रोक्तमवीतिमन्यत्। जपेत् सहस्रञ्च शतं निशान्ते ततो महे-शानि! भवेत्तदेव॥ २॥ वाणीं रमाञ्च प्रददासि विद्यां लज्जाञ्च तारञ्च पुनश्च लज्जाम्। तारं पुनर्मूंषिकशब्दपूर्वं विच-र्च्चिके वह्निबधूसमेतम्। शय्यामुपेत्याशु जपेच्च विद्याम् स्वका-न्तया वा परकान्तया वा। ततो महेशानि! स राजगोष्ठी ब्रूते रहो मूषिकशब्दवृन्दम्। दुर्भिक्षं वा सुभिक्षं वा बन्धञ्चापि शुभाशुभम्। देशानाञ्च महेशानि! शीघ्रं ब्रूते शुभाशुभम्॥

अथ मार्जारसाधनं तत्रैव॥ अथ वच्ये महेशानि! मार्जार-शब्दमुत्तमम्। पौषे वा श्रावणे वापि हविष्याशी जितेन्द्रियः। धूपदीपैश्च नैवेद्यै रक्तचन्दनपुष्पकैः। पूजयित्वा प्रयत्नेन विक-टाचां महोत्कटाम्। बिभ्रतीं कङ्किटीं ध्यायेन्मार्जारोपरि-संस्थिताम्। तारं मायां कङ्कटाञ्च चतुर्थ्यन्तामुदीरयेत्। स्वाहान्ता कथिता विद्या जपेत्तामयुतत्रयम्। एवं सप्तदिनं रात्रौ श्मशाने साधकोत्तमः। कुर्य्यात् सिद्धोऽथ मार्जारशब्दं बुध्यति नान्यथा। अतीतानागतां वार्त्तां स ब्रूते परमेश्वरि!॥

शृगालसाधनमपि तत्रैव॥ अथ वच्ये महेशानि! फेरूणां शब्दमुत्तमम्। अमावास्यादिने फेरु एकघातप्रहारिणः। गतप्राणोऽथ संस्थाप्य भूतले दर्भसञ्चये। तमारुह्य महेशानि!

पूजयेत् फेरवकं सुधीः। चतुर्भुजां विशालास्यां क्लिन्नामुन्नत-स्तनीम्। तप्तकाञ्चनसङ्काशां पद्मं शङ्खं गदामसिम्। बिभ्रतीं मुक्तकेशीञ्च सर्वभीतिहरां पराम्। इति ध्यात्वा प्रयत्नेन गन्ध-पुष्पैर्मनोरमैः। सामिषैः सुरसैश्चैव नैवेद्यैश्च मनोरमैः। पूज-यित्वा वरारोहे! जपेत् प्रणवसम्पुटाम्। काली माया तथा काली वह्निकान्तावधि प्रिये!। प्रजपेदर्द्धरात्रौ च लक्षमानं शुचिः पुमान्। फेरुः स जीवति ततो दिव्यमुत्पद्यते तदा। वरं वरय भो वत्स! यत्ते मनसि वर्त्तते। ततः स साधकश्रेष्ठो देवदेवं मनोरमे!। वशीभूत्वा सहस्राब्दान् त्वं मां पालय सर्वदा। एवं प्रार्थ्य वरं देवि! पूजयेत्तां प्रयत्नतः। रक्तशाकान्न-पिष्टेन भोजनञ्च यथोचितम्। ततः स तिष्ठति सदा यावदायुर्न संशयः। तच्छयनञ्च लक्षमानञ्च हन्यात् स वीक्षणेन तु। यद्-यत् सम्प्रार्थयेन्मन्त्री सर्वमानीय यच्छति। सहस्रं वा शतं वापि धनं दद्याद्दिने दिने। इच्छाभोज्यं महेशानि! तथैव वरसुन्दरीम्। आनीय क्रोशलक्षस्थां जपे यच्छति पार्वति!। अनागतां तथा वार्त्तां ब्रूते षाण्मासिकीमपि। अतीतां शत-वर्षीयां ब्रूते नित्यं महेश्वरि!। शिवानां सर्ववार्त्ताञ्च स्वयं बोधयति ध्रुवम्। प्रत्यहं प्रजपेत्तञ्च यत्नेन सामिषान्नकैः। स श्रुत्वा फेरुकाणाञ्च शब्दं प्रणतिमाचरेत्॥

अथ स्वशब्दसाधनम् तत्रैव। निम्बमूलं समासाद्य पूज-येद्भोजनेऽसताम्। धूपदीपैश्च नैवेद्यैर्बलिभिः परमोत्तमैः। पूज-यित्वा निशाभागे जपेदष्टायुतं बुधः। स्फिं स्फिं कालि! वह्नि-कान्ता विद्येयं परमोत्तमा। ततः सिद्धो महेशानि! सर्वं कुक्कुर-भाषितम्। बुध्येद्देवि! तदा सर्वं तदर्थञ्च यथातथम्॥ इति स्व-शब्दज्ञानम्।

भेकसाधनं तत्रैव। नदीतीरं समासाद्य स्नातो निर्मलवस्त्र-

र्ध्वम्। प्रजापतिं वह्निसंस्थमनुस्वारसमन्वितम्। त्रितयं तत्त्वतो भेभें मन्त्रमेतदुदीरितम्। जपेद्देवि! सहस्रन्तु प्रत्यहं सप्तवासरान्। ततो भेकवरे देवि! सर्वतत्त्वार्थविद्भवेत्। अतीतानागतां वार्त्तां ब्रूते चापि यथोचिताम्॥

अथ गोधासाधनम्। गोधया हतया वापि अथवा विल्वमूलके। गोधिकां खड्गहस्ताञ्च दंष्ट्रां शान्तिमुखीं शिवाम्। रक्तगम्भीरनयनां रक्तवर्णशिरोरुहाम्। जपेल्लक्षप्रमाणन्तु गोधिकासिद्धिहेतवे। सिद्धायां गोधिकायाञ्च किं न सिध्यति पार्वति!। इच्छारूपं ददात्यन्नं ददाति विपुलं धनम्। अतीतानागतां वार्त्तां वर्त्तमानां तथा प्रिये!। रक्तिशक्ती यथा स्यातां यद्यत् पृच्छति सर्वदा॥

अथ गोशब्दज्ञानम्। गवां मूत्रेण देवेशि!। यावकं पाचयेद्बुधः। तस्माद्दिनत्रयं वापि शुक्लवासोधरः पुमान्। धरावीजद्वयं देवि! जपेल्लक्षप्रमाणतः। पूजयेदेनां सतीं देवीं नीलवर्णां मनोरमाम्। द्विभुजां सर्वभूषाढ्यां नानालक्षणलक्षिताम्। एवं ध्यात्वा प्रयत्नेन पश्येदेनां न संशयः। तस्य गेहे सदा देवि! गवां वृद्धिर्भवेद्ध्रुवम्। गवाञ्च सर्ववार्त्ताञ्च सम्प्रबुध्येन्न संशयः। तस्य गेहे स्थिरा लक्ष्मीर्जायते नात्र संशयः॥

अथ मृगशब्दज्ञानम् तत्रैव। विल्वमूलं समासाद्य देवि! गन्धादिभिः शुभैः। पूजयेत् कमलां देवीं नीलवस्त्राङ्गरागिणीम्। द्विभुजामम्बुजद्वन्द्वधारिणीं परमेश्वरीम्। एवं ध्यात्वा प्रयत्नेन शुद्धासनगतः पुमान्। कमलां कमलां मायां मायां वह्निवधूस्तथा। जपेदष्टायुतं देवि! कमलासिद्धिहेतवे। सिद्धायां कमलायान्तु मृगशब्दं सुबुध्यते। धनञ्च विपुलं देवि! भवेत्तस्य गृहे ध्रुवम्। रिपुर्न जायते तस्य जायन्ते सर्वसम्पदः। कामिनी वशमायाति यदि रम्भासमा भवेत्॥

अथ मेषशब्दज्ञानम् तत्रैव। महागण्डारकं देवि! तस्य चर्मणि चार्द्रके। उपविश्य जपेद्विद्यां कौङ्कालां कनकप्रभाम्। रक्तवस्त्रपरीधानां नानामण्डनमण्डिताम्॥ द्विभुजां सुन्दरीं देवीं ध्यात्वा प्रयतमानसः॥ धरावीजद्वयं देवि! कामवीजद्वयं तथा। स्वाहान्ता कथिता विद्या जपेदष्टायुतं बुधः। ततः सिध्यति देवेशि! कौङ्कणा परमेश्वरि!। शब्दं बुध्यति देवेशि! मेषाणां तत्प्रसादतः॥

अथ छागलशब्दज्ञानम्। केवलं छागदुग्धेन परमान्नन्तु पाचयेत्। तदेव भक्षयेद्देवि! जपेदेनामनन्यधीः। जपेच्च कौङ्कणां विद्यां सप्तायुतमतन्द्रितः। तत्प्रसादान्महेशानि! छागानां शब्दविद्भवेत्॥

अथ वनविड़ालशब्दज्ञानम्। हविष्याशी निशाभागे जपेदेनां हि साधकः। षट्सहस्रप्रमाणेन षड्दिनं यावदेव हि। ततश्च शशकानां वै शब्दं बुध्यति नान्यथा। अनेनैव विधानेन ऋतुमूललतां स्पृशन्। अयुतैकप्रमाणेन सन्ध्यायां प्रजपेन्मनुम्। ततस्तस्याः प्रसादेन कपीनां शब्दविद्भवेत्। अनेनैव विधानेन जपेद् यदि दिनावधि। ततो वनविड़ालानां शब्दं बुध्यति नान्यथा।

अथ ऋक्षशब्दज्ञानम्। तारं माया रमायुग्मं विशालां ङेयुतां तथा। अस्त्रान्तेयं महाविद्या स्वाहान्तामपि सुव्रते!। विशालां घोरवदनां मुक्तकेशीं दिगम्बरीम्। यौवनोद्भिन्नवक्षोजां सरोजाक्षीं हसन्मुखीम्। खड्गखट्वाङ्गपद्मासीन् बिभ्रतीं परमेश्वरीम्। एवं ध्यात्वा जपेन्मन्त्रं मुच्यते नात्र संशयः। निशाभागे हविष्याशी जपेन्मन्त्रं जितेन्द्रियः। पूजयित्वा प्रयत्नेन रक्तचन्दनपुष्पकैः। दशांशं जुहुयाद्वह्नौ निम्बकाष्ठैर्वरानने!। ततः सिध्यति देवेशि! ऋक्षाणां शब्दविद्भवेत्। विवादे सङ्कटे युद्धे जयी भवति नान्यथा। केवलं स्मृतिमात्रेण ऋक्ष आयाति

तत्पुरः। युद्धे वापि विवादे वा रिपुं हन्याच्छतायुतम्। विपुलञ्च बलं दद्यात् सत्यं सत्यं न संशयः। गजेन्द्रमदसम्भूतद्रवेण तिलकं यदि। तदाज्ञावशतो हन्यात् रिपुसैन्यं शतायुतम्। विपुलञ्च बलं दद्यात् सत्यं सत्यं न संशयः। अनेनैव विधानेन श्मशाने यदि साधकः। जपेल्लक्षप्रमाणेन व्याघ्राणां शब्दविद्भवेत्। श्वापदस्मृतिमात्रेण समयाचारतत्परः। अनेनैव विधानेन जपेदष्टायुतं बुधः। जुहुयात्तद्दशांशेन हस्तिसिद्धिर्भविष्यति। अष्टभिः सहायुतमिति सहार्थे तृतीया समासोऽपि क्वचिदगमकत्वात्तेनाष्टाधिकमयुतमित्यायातम्। करिशब्दञ्च स ब्रूते सभायां परमेश्वरि!। हस्तिनान्तु प्रसादेन स जयी सर्वविद्भवेत्। करिकृतशब्दमभिप्रेत्य सभायां स ब्रूते इत्यर्थः। हस्तिकर्णे तदा तेन कथ्यते यन्महेश्वरि!। तदेव कुरुते हस्ती द्रुमादीनान्तु भञ्जनम्। अनेनैव विधानेन यदि पुष्पवतीगृहे। निशाभागे जपेल्लक्षं पूजयेद्बलिभिः शुभैः। पुष्पवतीगृहे रजःस्खलायोनिमण्डले। जुहुयादयुतं पद्मैर्लोहितैः परमेश्वरि!। ॐ नमो देवदेवाय पञ्चास्याय महात्मने। त्वत्प्रसादान्महादेव! मम सिद्धिर्भविष्यति। इति स्तुत्वा महेशानि! मृगेन्द्रशब्दविद्भवेत्। मृगेन्द्रस्य प्रसादेन तस्यासाध्यं न विद्यते। युद्धे वापि विवादे वा स भवेद्विजयी नरः। मृगेन्द्रस्मृतिमात्रेण सिंहो गच्छति तत्पुरः। तदाज्ञावशतो नित्यं कार्य्यं साधयति ध्रुवम्। इति ते कथितं सर्वं दुर्लभं भुवनत्रये। तस्य गेहे स्थिरा लक्ष्मीः पुत्त्रपौत्रावधि स्थिता। एतन्मन्त्रं महेशानि! यदि पर्वतमस्तके। हविष्याशी जपेद्देवि! सदा सर्वत्र सिद्धिदः॥

अथ शूकरशब्दज्ञानम्॥ पङ्कभूमिं समासाद्य तारं घुरुघुरुद्वयम्। घूत् घूत् स्वाहान्तमन्त्रोऽयं जपेत् सप्तायुतं बुधः। घोणिरापूरयेद् यत्नात्ततः सिध्यति नान्यथा॥

अथ कङ्कालसिद्धिः ॥ नदीतीरं समासाद्य कृतस्नानो दिवा शुचिः । कौलिकीं पूजयेद् यत्नान्नानापुष्पैर्मनोरमैः । मद्यैर्मांसैर्लोहितैश्च नृत्यगीतादिभिः स्वयम् । पीत्वा कुलरसं यत्नात् कुलं गत्वा प्रयत्नतः । काली मायाबालिके च कङ्काली वह्निवल्लभा । एतन्मन्त्रं महेशानि ! जपेद्विंशसहस्रकम् । तदायाति महादेवि ! कङ्काली तत्र सोद्यमा । साधकाय वरं दत्त्वा वाहनञ्च वरानने ! । याति वा वाहनं तस्य वाह्यं वहति सर्वदा । हन्ति शत्रुसहस्राणि पृथ्वीं भ्रमति तत्क्षणात् । बलञ्च विपुलं दद्यात् सत्यं सत्यं न संशयः । तारं माया रमाबीजं पशुनामाग्निवल्लभा । कालिकापूजनं यस्तु पशुनाम्ना जपेन्मनुम् । सहस्रं परमेशानि ! तस्य शब्दं प्रबुध्यति ॥

अथ काकशब्दज्ञानम् ॥ द्वितीयपटले ॥ काकपुच्छं महेशानि ! मूर्ध्नि सन्धार्य्य यत्नतः । कालीबीजं तथा काका कालीमन्त्रोऽयमुत्तमः । चितायां षट् सहस्राणि होमपूजाविवर्जितम् । जपेन्निशीथे देवेशि ! ततः सिद्धो भवेन्नरः । ततः प्रभृति देवेशि ! सार्वज्ञं तस्य जायते । काकशब्दप्रबोधेन सर्वं वक्ति यथातथम् । चिरजीवी भवेन्मर्त्त्यो नात्र कार्य्या विचारणा ॥१॥

अथ खञ्जनसिद्धिः ॥ तारं तिमिरनाशये च मायाबीजं महेश्वरि ! । पूजयेत् परमेशानि ! यत्नात्तिमिरनाशिनीम् । ततः खञ्जनसिद्धिः स्यान्नात्र कार्य्या विचारणा । खञ्जनानां ततस्तस्य दर्शनञ्च भवेत् सदा । मूर्ध्नि नीते च तत्पक्षे देवैऽपि स न दृश्यते । जानीयात् खाञ्जनं शब्दं सर्वेषां प्रियतामियात् ।

अथ जलचरपक्षिसिद्धिः । एतन्मन्त्रं महेशानि ! श्मशाने यदि वा जपेत् । षट्सहस्रप्रमाणेन पूजयेदम्बुवासिनीम् । तदा वारिचराणाञ्च पक्षिणां शब्दविद्भवेत् । एतन्मन्त्रं खञ्जनसाध-

नोक्तं मन्त्रम्॥ स्मृतिमात्रेण देवेशि! पक्षिणः शतशः क्षणात्। तदाज्ञावशगाः सर्वे पक्षिणः पूर्ववर्त्तिनः॥ २॥

अथ मयूरसिद्धिः॥ वटमूलं समासाद्य निशीथे पूजयेच्छिवाम्। परां चण्डीं सहास्यां विपुलकुचयुगां मुक्तकेशीं विवस्त्रां नानालङ्कारपूरां शशधरशकलं बिभ्रतीं भीमकान्ताम्। जप्यन्तीमद्रिकार्णं वरजघनभरात् क्षौणिचक्रं समग्रं न्यक्कुर्वन्तीं समन्तादवनिरिपुगणं चर्वयन्तीं भजामि। एवं ध्यात्वा ततो देवीं गन्धपुष्पैर्मनोहरैः। मद्यैर्मांसैर्महाभोगैः पूजयित्वा यथाविधि। कालीवीजं समुच्चार्य्य पुनः काली वरानने!। ततो मयूरशब्दस्य मन्त्रोऽयं बहुसिद्धिदः। अष्टायुतं जपेत् पश्चात् हुमेत्तावत् सहस्रकम्। निम्बकाष्ठैर्हरिद्राक्तैर्विल्वपत्रैर्मनोहरैः। समायाति ततो देवी मयूरगणमण्डिता। वरं दत्त्वा साधकाय प्रयाति परमेश्वरी। मयूरशब्दविज्ञूत्वा सार्वज्ञं लभते ध्रुवम्। यथेच्छति तथा क्षते विषं जारयितुं क्षमः। रिपूणां जयमाप्नोति सत्यं देवि! वदामि ते। अनेनैव विधानेन बलिं दत्त्वा स्वदेहजाम्। दक्षिणां शब्दमात्रेण मम तुल्यो न संशयः। पूजयेत् कालिकां देवीं मद्यैर्मांसैर्मनोहरैः। ततः सिध्यति देवेशि! कुलसिद्धिः सदा भवेत्। कुलानां शब्दविज्ञूत्वा सार्वज्ञं लभते ध्रुवम्॥ ३॥

अथ विद्याधरपक्षिविशेषसिद्धिः। मायां तारं गौं गौं चैव पातयेत्तदनन्तरम्। एतन्मन्त्रं महेशानि! निशीथे तु जपेत् सुधीः। अयुतञ्च जपेद्देवि! ततः सिद्धिर्भवेद् ध्रुवम्। गन्धर्वशब्दविज्ञूत्वा बलवान् पुत्त्रवान् भवेत्॥ ४॥

अथ कङ्कशब्दज्ञानम्। कामं केलिकेलि द्वन्द्वं काममन्त्रेण उत्तमः। जप्त्वा सप्तसहस्रन्तु कङ्कशब्दप्रबोधनम्। कङ्कालशब्दविज्ञूत्वा सर्वज्ञो भवति ध्रुवम्॥ ५॥

कोलकाल वरारोहे ! वह्निकान्ता ततः परम्। विल्वमूले महेशानि ! जपेदयुतमानतः। पूजयेत् कालिकां देवीं ततः सिद्धिर्भवेद्‌ध्रुवम्। वकानां शब्दविज्ज्ञूत्वा सर्वज्ञो जायते नरः ॥६॥

अथ चटकशब्दज्ञानम्॥ चाटु चाटु महेशानि! स्फीं पूर्वं परमेश्वरि!। सप्तायुतं जपेद् यत्नात् कालिकामपि पूजयेत्। ततो बुध्यति देवेशि! चटकाशब्दमुत्तमम्॥ ७॥

अथ शुकशब्दज्ञानम्॥ मायावीजं शुकद्वन्द्वं बोधयद्वितयं तथा। वह्निकान्तावधिर्मन्त्रो जपेदयुतमानतः। ततः शुकस्य शब्दज्ञो नरो भवति नान्यथा। शुकस्यापि प्रसादेन महासम्पत्तिमान् भवेत्। एतन्मन्त्रं महेशानि! निशीथे त्यक्तभोजनः। जपेदष्टसहस्रन्तु शारिकापददानतः। शारिकाशब्दविज्ज्ञूत्वा सर्वज्ञो जायते नरः॥ ८॥

अथ सारससिद्धिः॥ धरावीजं समुद्धृत्य भैं भैं वीजं समुद्धरेत्। एतन्मन्त्रं महेशानि! सप्तायुतमतन्द्रितः। जपेत् कमलमध्ये तु हविष्याशी जितेन्द्रियः। ततः सिध्यति देवेशि! नात्र कार्य्या विचारणा। सारसाणां रवं बुद्ध्वा सर्वज्ञो जायते नरः॥ ९॥

अथ कपोतसिद्धिः॥ स्फेङ्कारं पूर्वमुद्धृत्य हुङ्कारद्वयमुद्धरेत्॥ स्वाहान्ता कथिता विद्या जपेदयुतमानतः। शाल्मलीमूलमासाद्य पूजयेत् सिद्धिकालिकाम्। ततः सिध्यति देवेशि! नात्र कार्य्या विचारणा। कपोतस्य रवं देवि! स बुध्यति न संशयः॥ १०॥

कौरवेरशब्दमुच्चार्य्य कूर्चवीजं समुद्धरेत्। सिद्धिकालीं प्रपूज्याथ जपेदयुतपञ्चकम्। ततः सिध्यति देवेशि! नात्र कार्य्या विचारणा। कपोतस्य रवं देवि! स बुध्यति न संशयः॥ ११॥

कपोतविष्ठया मूर्ध्नि तिलकेऽपि कृते बुधः। भूतं भावि वर्त्तमानं सर्वं वक्ति यथातथम् ॥१२॥

अथ कुक्कुटशब्दज्ञानम्। कं कङ्कारं समुच्चार्य्य कूर्च्चवीजमथो-द्धरेत्। जपेदष्टायुतं देवि! कालिकाञ्च प्रपूजयेत्। मद्यैर्मां-सैर्लतागेहे सिद्धो भवति नान्यथा। सिद्धे मन्त्रे तथा मन्त्री भवेद्भूमिपुरन्दरः। शब्दं बुध्यति तेषां वै सर्वज्ञो भवति ध्रुवम्। यावत्तिष्ठति तद्विष्ठा तस्य मूर्ध्नि वरानने!। कवित्वं कुरुते तावत् वादिनं जयति ध्रुवम्॥ १३॥

अथ शरालुसिद्धिः॥ हं हङ्कारं समुच्चार्य्य स्फें स्फेङ्कारं समु-च्चरेत्। हंस हंस ततो ब्रूयात् जपेल्लक्षं वरानने!। गुह्यकालीं प्रपूज्याथ मद्यैर्मांसैर्वरानने!। ततः सिध्यति देवेशि! हंसशब्दो हि सुव्रते!। तद्विष्ठातिलकं कृत्वा महासर्वज्ञतामियात्॥ १४॥

अथ क्षेमङ्करीसिद्धिः॥ मायावीजं समुद्धृत्य धरावीजं समु-द्धरेत्। क्षेमङ्करीपदं पश्चात्तदन्ते वह्निवल्लभा। वटमूलं नदी-तीरं गत्वा लक्षं जपेन्नरः। पूजयेत् कालिकां देवीं मद्यमांसै-र्मनोरमैः। रक्तपुष्पै रक्तमाल्यैर्नानालङ्कारसंयुतैः॥ ततः सिध्यति देवेशि! निशीथे स भवेत् प्रिये!। क्षेमङ्करीणां शब्दज्ञो जायते नात्र संशयः। परस्त्रीनिरतो देवि! मनोवा-ञ्छामवाप्नुयात्॥ १५॥

अथ टिट्टिभसिद्धिः। टिट्टिभायास्तु स्वं वीजं वह्निकान्ता ततः परम्। कालीं सम्पूजयेद्यत्नात् टिट्टिभ शब्दविद्भवेत्॥१६॥

अथ कोकसिद्धिः। कोकयुग्मं वह्निकान्ता जपेत् सप्तायुतं बुधः। कालिकां पूजयेद्यत्नात् कोकानां शब्दविद्भवेत्॥ १७॥

अथ चकोरशब्दज्ञानम्। कालीवीजं चकोराय जपेदष्टायुतं बुधः। वटमूलं समासाद्य कालिकां पूजयेत्ततः। चकोरशब्द-विद्भूत्वा सर्वज्ञो जायते नरः॥ १८॥

तारं काली चकोराय जपेदष्टायुत नरः। महाकाली ततो देवि! अस्त्रं वह्निवधूं ततः। एतन्मन्त्रं महेशानि! जपेन्नच्च महेश्वरि!। मद्यैर्मांसै रक्तपुष्पैर्महाकालीं प्रपूजयेत्। एवं कृत्वा विधानेन तत्पुच्छं मूर्ध्नि धारयेत्। तत्पक्षिणः शब्दवेत्ता जायते नात्र संशयः॥ १९॥

अथ कीटशब्दज्ञानम्। अथ वक्ष्ये महेशानि! कीटसाधनमुत्तमम्। वटमूल समासाद्य स्नातः शुक्लाम्बरः शुचिः। व्याघ्रचर्मः समासाद्य मद्यैर्मांसैर्मनोहरैः। धूपदीपैश्च नैवेद्यैर्बलिभिः परमोत्तमैः। लताभिर्वेष्टितो भूत्वा कीटकञ्च समर्पयेत्। तुङ्गवक्षोजयुगलां चकोरनेत्रां हसन्मुखीम्। पिबन्तीं रुधिर धारां मुक्तकेशीं दिगम्बराम्। बिभ्रतीं खड्गमुण्डञ्च ततो विकटसन्निभाम्। एवं ध्यात्वा प्रयत्नेन जपेन्मन्त्रमनन्यधीः। कालीवीजं कीटकाली निवसेत्तत्र साऽसिता। एतन्मन्त्र महेशानि! जपेदेकाग्रमानसः। सहस्रं पञ्चपत्राणां जुहुयात् संस्कृतेऽनले। कीटकाली समायाति ततो नात्रास्ति संशयः। साधकाय वरं दत्त्वा प्रभाते याति कालिका। ततः प्रभृति देवेशि! कीटशब्दस्य साधकः। लीलया साधकः सर्वं बुद्ध्वा सर्वज्ञतामियात्। पिपीलिकादिकीटानां शब्दं बोद्धुं क्षमो भवेत्। स्वर्गे मर्त्ये च पाताले धरायां या कथा भवेत्। भूतं भव्यं वर्त्तमानं साधकेन्द्राय सर्वदा। कीटाः शंसन्ति देवेशि! नात्र कार्य्या विचारणा। कीटकालीप्रसादेन गृहे लक्ष्मीः स्थिरा भवेत्। धनवान् पुत्रवान् भूत्वा स्वर्गमोक्षमवाप्नुयात्॥ २०॥

अथ प्रकृतसाधनम्। मुण्डमालातन्त्रे चतुर्थपटले॥ निशाभागे चतुर्दश्याममायां हरवल्लभे!। जपेदयुतसंख्यञ्च स सिद्धः सर्वकर्मसु। स योगीन्द्रः स भावज्ञः स धीरः सर्वकर्मसु॥ १॥ तथा। प्रभातेऽश्वत्थमूले च गत्वा परमकोविदः। पूजयेत्

परया भक्त्या सामिषैर्लोहितैरपि। विल्वैर्विल्वदलैर्वापि विल्व-पुष्पैर्वरानने!। जपेल्लक्षं चतुर्दश्यामारभ्य नगनन्दिनि!। प्रथमेन यजेद्देवीं विल्वमूले दिवानिशम्। तदा वाक्सिद्धि-माप्नोति स्फुटं वाचस्पतिर्भवेत्॥ २॥ तथा। वामभागे स्त्रियं स्थाप्य धूपामोदसुगन्धिभिः। ताम्बूलचर्वणाद्यैश्च पूजयेद्भव-गेहिनीम्। भवानीं तारिणीं विद्यां ब्रह्मविद्यां मनोहराम्। शुद्धां सिद्धिमवाप्नोति तत्क्षणादेव शङ्करि!। विश्वमातर्जगद्धा-धारे! विश्वेश्वरि! नमोऽस्तु ते। करालवदने! घोरे! चन्द्रशे-खरवल्लभे!। मां तारय महाभागे! देहि सिद्धिमनुत्तमाम्। कामकल्पलतारूपे! कामेश्वरि! कलामते!। कामरूपे! च विजये! निस्तारे! भववाहिनि!॥३॥ गृहीत्वा शवचाण्डालं धृत्वा भालं मुखं शिरः। नासां कर्णौ च हृत्पद्मं नाभिं लिङ्गं गुदं तथा। बाहुपृष्ठञ्च जठरं धृत्वा धृत्वा मुहुर्मुहुः! आदौ मायां पुनर्मायां पुनर्मायां नियोजयेत्। बधूवीजं तथा लज्जां सर्वाङ्गे निक्षिपेन्मनुम्। अष्टोत्तरशतं जप्त्वा कृत्वा च शवबन्धनम्। पुनः स्वमन्त्रवीजेन नीलद्रवेण चक्षुषा। सत्त्वेन रजसा देवि! तमसा नगनन्दिनि!। हरवीजेन सम्मार्ज्य स सिद्धेश्वरतामियात्। वायुस्तम्भं जलस्तम्भं वह्निस्तम्भं नगात्मजे!। तत्क्षणादेव देवेशि! जायते नात्र संशयः॥ ४॥ शून्यागारे महेशानि! भवे-दुत्तरदिङ्मुखः। शङ्खमाला ग्रहीतव्या स्फाटिकी वाथ राजती। चामीकरमयी माला प्रवालघटिता तथा। मूर्ध्नि देशे कुलु-कांच जप्त्वा शतमनुत्तमाम्। तदा मन्त्रं जपेन्मन्त्री महेशो नात्र संशयः। स शाक्तः शिवभक्तश्च भैरवश्च सदाशिवः॥ ५॥ तथा। अश्वत्थे विल्वमूले वा स्वजायामन्दिरेऽथ वा। देवीं वा कामिनीं वापि ध्यायेत् परमदेवताम्। आद्यां ज्योतिर्मयीं विद्यामभयां वरदां शिवाम्। प्रणमेत् स्तुतिभिश्चण्डीं सर्वदोषनिकृन्तनीम्।

श्मशानस्थः शवस्थोऽपि प्रपठेत् कवचोत्तमम्। तथा श्मशाने देवेशि! शवे वा वरवर्णिनि!। सिद्धिर्भविष्यति तदा प्रतिपन्ना न भैरवाः। उन्मत्तः क्रोधनश्चैव भैरवो वटुकात्मकः। संहारो भीषणश्चैव तथा च कालभैरवः। महाकालभैरवश्च भैरवा वसुसंख्यकाः। दृष्ट्वा श्मशानं देवेशि! शवसाधनमेव च। नृत्यन्ति भैरवाः सर्वे गर्जन्ति रक्तलोचनाः। अद्य मत्सदृशो वापि अद्यैव वातुलोऽपि वा। शवश्मशानयोर्मध्ये न जानामि कथञ्चन। माभैषीर्भैरवाः सर्वे वदिष्यन्ति च रक्षणात्। सिंहव्याघ्रवराहाद्याकारा गर्जन्ति सर्वतः। माभैषीश्चैव माभैषीर्माभैषीश्चैव साधकम्। यो वदिष्यति पुरतः स गुरुस्तत्त्वकोविदः॥ ६॥ पञ्चमपटले॥ कृष्णाष्टम्यां नवम्यां वा प्रजपेदयुतं निशि। तदा सिद्धिमवाप्नोति मन्त्रध्यानपुरःसरम्॥ ७॥ तथा। महापीठाश्रमं याति महापीठस्य दर्शनम्। महापीठे यजेद्देवीं भक्त्या परमया युतः। पूजयेद्रक्तपुष्पैश्च रक्तगन्धानुलेपनैः। महिषैश्च यजेद्देवीं मेषजैः चतजैरपि। छागलैर्लोहितैर्देवीं गात्रजैर्ब्राह्मणैरपि। तदा सिद्धेश्वरो भूत्वा गाणपत्यं लभेत्तु सः॥ तथा। स्तुतिपाठाद्दृढज्ञानात् पूजनाच्छिवसुन्दरि!। सुप्रसन्ना महाविद्या जपात् सिद्धिर्भविष्यति॥ ८॥ षष्ठपटले॥ कुलवारे महेशानि! सहस्रमयुतं जपेत्। शनैश्चरे चतुर्दश्याममायां कुजवासरे। स्थित्वा कुशासने ज्ञानी मन्त्रसिद्धिपरायणः। अयुतं भक्तिभावेन सहस्रं च वरानने!। अन्तर्यागं ततः कृत्वा सर्वसिद्धीश्वरो भवेत्॥९॥ अश्वत्थवटमूले वा विल्वमूलेऽथ वा प्रिये!। पूजयेत् परया बुद्ध्या मन्त्रसिद्धिं जनो लभेत्॥ १०॥ तथा। सुषुम्नान्तः स्थितां देवीं पद्मकिञ्जल्कवासिनीम्। ध्यायेन्नाडीविशुद्धेन मन्त्रसिद्धिरनुत्तमा॥ तथा। श्मशानेऽश्वत्थमूले वा शवे वा शून्यमन्दिरे। प्रजपेत् कालिकां तारां महाविद्या प्रसीदति। जपेन तपसा

स्तोत्रैरन्तर्यागैर्मनोहरैः। पूजनैः कथचैर्देवि! महाविद्या प्रसीदति॥ ११॥ वामे सुरायां देवेशि! नानालङ्कारभूषिताम्। कुलचक्रे च देवेशि! प्रजपेत्तु समः शिवः। निशि चक्रे करालास्ये मुक्तकेशो दिगम्बरः। सहस्रं वायुतं वापि जपेन्मदनमन्दिरे। श्वेतं वा लोहितं वापि कुसुमं पञ्चमान्वितम्। एवंविधविधानेन महाकाल्यै निवेदत्। दिवापूजा विधातव्या निशापूजा महेश्वरि!। सन्ध्यापूजा विधातव्या तदा सिद्धिमवाप्नुयात्॥ तथा। शवे विल्वं करे दत्ते मालां संगृह्य साधकः। प्रजपेत् पार्वतीमन्त्रं सर्वकार्य्यार्थसिद्धये। प्रणम्य भक्त्या देवेशि! जपेच्चिन्तामणिं मनुम्। चिन्तामणिप्रसादेन किं न सिध्यति भूतले। चिन्तामणिं कल्पलतां गृहीत्वा परमां शिवाम्। जप्त्वा महामनुं चण्डि! देवदेवेश्वरो भवेत्। योगिनीतन्त्रे पूर्व्वखण्डे पञ्चमपटले॥ देव्युवाच॥ भगवन्! सर्व्वधर्म्मज्ञ! लोकानुग्रहकारक!। साधनं सर्व्वमन्त्रस्य सर्व्वाशापरिपूरकम्। साधनं सिद्धमन्त्रस्य वद मे करुणामय!॥ ईश्वर उवाच॥ शृणु देवि! प्रवक्ष्यामि साधनं परमाद्भुतम्। सार्द्धयामगतायान्तु निशायां साधकोत्तमः। भूत्वा दिगम्बरः सम्यगाचम्य विधिवत्तथा। अभ्युक्ष्य मूलमन्त्रेण शय्यायां तत्र संविशेत्। गुरुं परमगुरुञ्च परापरगुरुं तथा। परमेष्ठिगुरुञ्चैव वामेऽभ्यर्च्य गणेश्वरम्। दक्षिणे च ध्रुवाख्यन्तु श्मशानवासिन्यै नमः। ततो माया आसनाय नम इत्युच्चरेच्छिवे!। शय्या शय्यातले देवि! प्रणवान्ते ध्रुवञ्च फट्। लिखित्वाचम्य यत्नेन स्वतन्त्रोक्तविधानतः। प्रणवं मणिधरी चैव वज्रिणी च महापदम्। प्रतिसरे रक्ष रक्ष मां हुं फट् स्वाहया युतः। अनेन मनुना देवि! शिखां बद्ध्वा विधानतः। अङ्गन्यासकरन्यासौ मातृकान्यासमेव च। भूतशुद्ध्यादिकं कृत्वा ततश्च परमां शिवाम्। ध्यात्वा भक्त्या समभ्यर्च्य मानसैः साध-

कोत्तमः । शय्यातले महेशानि ! मन्त्रोऽपि च वरानने ! । प्रण-वञ्च ततो देवि ! वटुकेभ्यो नमस्तथा । इति मन्त्रेण मनसा वटुकं पाद्यादिभिर्यजेत् । ततस्तु वह्निवीजेन समन्ताज्जलधारया । वह्निप्राचीरमाचिन्त्य सङ्कल्प्य च समादरात् । जपं कृत्वा सम-र्प्याथ विधिना परमेश्वरि ! । पुनः सङ्कल्प्य देवेशि ! कुर्य्यात् स क्रमतः शिवे ! । होमञ्च तर्पणञ्चैव अभिषेकं ततः परम् । विप्रस्य भोजनञ्चैव अभावे द्विगुणं जपेत् । काञ्चनं दक्षिणां दत्त्वाऽच्छिद्रावधारणं चरेत् । सम्बोध्य वटुकं देवि ! क्षमस्वेति विसर्ज्जयेत् । एवमुक्तं महेशानि ! शय्यासाधनमुत्तमम् । मन्त्र-सिद्धिकरं शीघ्रमस्मत्सायुज्यदायकम् ॥ विशेषशय्यासाधनन्तु निर्गुणकाण्डे वक्ष्यते ॥ तत्रैव ॥ इतः शृणु त्रिवाटस्य चतुर्वाटस्य साधनम् । गत्वा तु त्रिपथं वापि चतुष्पथं वरानने ! । प्रागव-द्देवीं समभ्यर्च्य मणिधरीति मन्त्रतः । बद्ध्वा ग्रन्थिन्तु वस्त्रान्ते निर्भयं साधकोत्तमः । श्मशानवासिनो ये ये देवा देव्यश्च भैरवाः । कृपां कुर्वन्तु वै सर्वे सिद्धिदाश्च भवन्तु मे । प्रणमेत् प्रणवाद्येन मनुनानेन भक्तितः । ततः पूर्वमुखो वापि उत्तराशामुखोऽपि वा । उपविश्य समाचम्य स्वस्ति वाच्य महेश्वरि ! । स्थानं सम्मार्ज्य तत्रैव प्रेतवीजं लिखेत् सुधीः । वीजोपरि महादेवि ! विहितासनमास्तरेत् । तत्रोपविश्य देवेशि ! हृदीष्टदेवतां स्म-रेत् । यथेष्टं मनसाराध्य अष्टाशासु बलिं हरेत् । काल्यादिभ्यो विशेषेण पूजयित्वा महेश्वरि ! । काली कपालिनी कुल्ला कुरु-कुल्ला विरोधिनी । विप्रचित्ता तथा नीला बलाका च घना-द्विषः । प्रणवाद्या ङेयुतान्ता पूज्या बल्या विना स्मृता । सङ्क-ल्प्याष्टोत्तरयुतं जप्त्वाऽच्छिद्रावधारणम् । कृत्वा स्थानं परिष्कृत्य देवीं स्मरन् गृहं व्रजेत् । अतः परमहं वक्ष्ये विल्वमूलस्य साध-नम् । विल्वमूलं महेशानि ! समन्तात् षोड़शं करम् । अतस्त-

साधनं देवि! सर्वेषां प्रियकारकम्। तत्र गत्वा विल्वमूलं प्राग्वद्गुरुचतुष्टयम्। अभ्यर्च्य यत्नतो देवि! चेत्रपालं प्रपूज्य च। चेत्रपाल! महाभाग! श्मशानाधिप! सुव्रत!। सिद्धिं देहि जगत्कर्त्ता देहि स्थानं नमोऽस्तु ते। अनेन प्रणवाद्येन मनुना प्रणमेच्च तम्। ततः स्थानन्तु सम्पूज्य लिखेत्तत्र वरानने!। वाग्भवं प्रेतवीजञ्च पुनर्वाग्भवमेव च। तदन्ते मूलमन्त्रञ्च लिखेत् साधकसत्तमः। पूजयित्वा च काल्यादिं पूर्ववत् परमेश्वरि!। सङ्कल्पाष्टोत्तरशतं जप्त्वाऽच्छिद्रावधारयेत्। परिष्कृत्य ततः स्थानं गुरुं स्मरन् गृहं व्रजेत्। इत्येवं कथितं तुभ्यं सारात्सारं परात्परम्। गोपनीयं सदा भद्रे! विशेषात् पशुसङ्कुले॥

अथ कार्त्तवीर्य्यार्जुनप्रयोगः॥ मन्त्रमहोदधौ॥ यथा फ्रौं व्रीं क्लीं भ्रूं क्रीं क्रौं स्त्रौं हुं फट् कार्त्तवीर्य्यार्जुनाय नमः॥ वह्नितारयुतो वायो लक्ष्मीरग्नीन्दुशक्तियुक्। वेधाधरेन्दुशान्त्याढ्यो निद्राधीशाग्निरिन्दुयुक्। मायाङ्कुशं वधूर्वर्मास्त्रे ततः कार्त्तवो पदम्। रेफवाय्वानलो वह्निजो दचकर्णसंस्थितो। मेघः सदीर्घः पवनो मनुवक्त्रो हृदन्तकः। ऊनविंशतिवर्णोऽयं तारादिमखवर्षकः॥ इति प्रमाणम्॥ ओँ कार्त्तवीर्य्यार्जुनाय नमः॥

अथास्य न्यासः॥ यथा। ओँ नमो भगवते भो भोः कार्त्तवीर्य्यार्जुन ओँ ओँ ओँ मम हृदये दुष्टं दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हां हां हुं द्विषः॥१॥ ओँ फ्रौं व्रीं हुं ओं क्रीं क्रौं स्त्रौं हुं फट् कार्त्तवीर्य्यार्जुनाय नमः। अयं विंशत्यर्णः॥ द्वितीयन्यासः॥ ओँ नमो भगवते भो भोः कार्त्तवीर्य्यार्जुन ओँ फ्रौं ओँ मम उदरे दुष्टं दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हां हां हूं हूं फट् फट् द्विषः॥२॥ ओँ नमो भगवते कार्त्तवीर्य्यार्जुन ओँ व्रीं ओँ मम नाभौ दुष्टं

दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु ह्रां ह्रां हुं हुं फट् फट् द्विषः॥ ३॥ ओं इत्यादि १५ ओं क्लीं मम जठरे दुष्टं दारयेत्यादि॥४॥ ओं इत्यादि १५ ओं ह्रुं मम गुह्यमण्डले दुष्टमित्यादि॥५॥ ओं इत्यादि १५ ओं आं ओं मम ऊरुयुग्जानुपादेषु दुष्टमित्यादि॥६॥ ओं इत्यादि १५ ओं क्लीं ओं मम मूर्ध्नि दुष्टमित्यादि॥ ७॥ ओं इत्यादि १५ ओं क्रीं ओं मम भ्रूयुगले दुष्टमित्यादि॥ ८॥ ओं इत्यादि १५ ओं श्रीं ओं मम कर्णाच्चिनासिकाजिह्वावक्त्रेषु दुष्टमित्यादि॥ ९॥ ओं इत्यादि १५ ओं हुं ओं मम कण्ठबाहुयुगेषु दुष्टमित्यादि॥ १०॥ ओं इत्यादि १५ ओं कां ओं मम सर्वाङ्गेषु दुष्टमित्यादि। ओं इत्यादि १५ ओं फट् ओं मम सर्वाङ्गेषु दुष्टमित्यादि॥११॥ ओं इत्यादि १५ ओं ओं ओं मम सर्वाङ्गेषु दुष्टं दारयेत्यादि॥ १२॥ ओं इत्यादि १५ ओं वीं ओं मम सर्वाङ्गेषु दुष्टमित्यादि॥ १३॥ ओं इत्यादि १५ ओं र्य्यां ओं मम सर्वाङ्गेषु दुष्टमित्यादि॥ १४॥ ओं इत्यादि १५ र्ज्जुं ओं मम सर्वाङ्गेषु दुष्टमित्यादि॥ १५॥ ओं इत्यादि १५ ओं नां ओं मम सर्वाङ्गेषु दुष्टमित्यादि॥ १६॥ ओं इत्यादि १५ ओं यं ओं मम सर्वाङ्गेषु दुष्टमित्यादि॥ १७॥ ओं इत्यादि १५ ओं नं ओं मम सर्वाङ्गेषु दुष्टमित्यादि॥ १८॥ ओं इत्यादि १५ ओं म ओं मम सर्वाङ्गेषु दुष्टमित्यादि॥ १९॥

अथ गायत्री॥ ओं कार्त्तवीर्य्याय विद्महे महावीर्य्याय धीमहि तन्नोऽर्जुनः प्रचोदयात्। गायत्रेषा समाख्याता प्रयोगादौ जपेत्तु ताम्॥ इति मन्त्रमहोदध्युक्तप्रयोगः॥

अथास्य कवचम्॥ श्रीदेव्युवाच॥ देवाधिदेव! सर्वज्ञ! सर्वलोकहिते रत!। केन रक्षा भवेन्नृणां भीतानां विविधापदि। राजचौरादिपीड़ासु शस्त्राग्निविषघातने। मारीदुःस्वप्नपीड़ासु

ग्रहरोगभयेऽपि च। ज्वरापस्मारपीड़ासु सिंहव्याघ्रनिपातने। राक्षसासुरवेतालपिशाचप्रेतपातने। महाभये महानाशे महा-कारागारगतेऽर्णवे। महामृत्युभये घोरे महाकलहपातने। केनोपायेन शान्तिः स्यात् साधकानां महेश्वर!। अनष्टद्रव्यता चैव नष्टस्य पुनरागमः। सर्वाकर्षणसंक्षोभः सर्वसंहननं तथा। भवत्यभीष्टं जन्तूनां केवलं वद मे शिव!॥ ईश्वर उवाच॥ शृणु गुह्यतमं देवि! गोपनीयं प्रयत्नतः। अवाच्यमपि वक्ष्यामि तव लोकहिताय वै। कवचं कार्त्तवीर्य्यस्य साङ्गावरणकं क्रमात्। स्वमूर्त्तिशक्तिमन्त्रौघं सजपध्यानपूर्वकम्। सहस्रादित्यसङ्काशे नानारत्नसमुज्ज्वले। भास्वद्ध्वजपताकाढ्ये तुरगायुधभूषणे। महासंवर्त्तकाम्भोजभीमरावविराविणि। समुद्धृतमहाच्छत्र-वितानितवियल्पथे। निर्माणकिङ्किणीजालचलच्चामरशोभिते। महारथवरे दीप्ते नानायुधविराजिते। सुस्थितं विपुलोदार-सहस्रभुजमण्डितम्। वामोरुकुण्डकोदण्डान् दधानमपरैः शरान्। किरीटहारमुकुटकेयूरवलयाङ्गदैः। मुद्रिकोदर-गन्धाढ्यैर्मौञ्जीनूपुरकादिभिः। भूषितं विविधाकल्पैर्भास्वरैः सुमहाधनैः। आबद्धकवचं वीरं सुप्रसन्नाननाम्बुजम्। धनुर्ज्या-सिंहनादेन कम्पयन्तं जगत्त्रयम्। सर्वशत्रुक्षयकरं सर्वव्याधि-विनाशनम्। सर्वसम्पत्प्रदातारं विजयश्रीनिषेवितम्। सर्व-सौभाग्यदं भद्रं भक्तानां भयनाशनम्। दिव्यमालानुलेपाढ्यं सर्वलक्षणसंयुतम्। रथनागाश्वपादातिवृन्दमध्यगमीश्वरम्। वरदं चक्रवर्त्तीनां महीलोकैकपालकम्। समानोदितसाहस्रं दिवाकरसमत्विषम्। महायोगबलैश्वर्य्यं कीर्त्त्याक्रान्तजगत्त्र-यम्। श्रीमच्चक्रहरेरंशादवतीर्णं महाबलम्। सम्यगात्मविभेदेन ध्यात्वा रक्षामुदीरयेत्। दत्तात्रेय ऋषिः प्रोक्तोऽनुष्टुप्छन्दः प्रकीर्त्तितम्। कार्त्तवीर्य्यार्जुनो विष्णुश्चक्रवर्त्ती च देवता।

विनियोगश्च रक्षायै सर्वतः परिकीर्त्तितः। सर्वदुष्टविनाशाय सर्वार्थस्य च सिद्धये। अस्याङ्गमूर्त्तयः पञ्च पान्तु मां स्फटिकोज्ज्वलाः। अग्नीशासुरवायव्यकोणेषु हृदयादिकाः। सर्वतस्तूज्ज्वलरूपवीरचर्मासिपाणयः। अव्याहतबलैश्वर्य्यशक्तिसामर्थ्यविग्रहः। क्षेमङ्करीशक्तियुतश्चौराणां मदभञ्जनः। प्राचीदिशं रक्षतु मे बाणवाणाश्रयायुधः। श्रीकराशक्तिसहितो मारीमदविभञ्जनः। शरचापधरः श्रीमान् दिशं मे पातु दक्षिणाम्। महावश्यकरीयुक्तः शत्रूणां मदभञ्जनः। कोदण्डेषु धरः सौर्य्यां दिशं मे परिरक्षतु। प्रजाकरीयुतश्चापबाणदुष्टप्रणाशनः। परिरक्षतु मे सम्यक् विदिशं चैत्रभानवीम्। विद्याकरीसमायुक्तः सुमहान् दुष्टनाशनः। पातु मे नैरृतीं चाप वाणवान् दिशमीश्वरः। धनकर्थ्या समायुक्तो महादुरितनाशनः। इष्वासनेषुधृक् पातु विदिशं मम वायवीम्। आयुष्कर्थ्या समायुक्तः श्रीमान् भयविनाशनः। चापेषुधारी शैवीं मे विदिशं परिरक्षतु। विजयश्रीयुतः साक्षात् सहस्रारधरो विभुः। दिशमूर्द्धामवतु मे महाभयविनाशनः। शङ्खभृत् सुमहाशक्तिसंयुतोऽप्यधरां दिशम्। परिरक्षतु मे दुःखध्वान्तसम्भेदभास्करः। महायोगसमायुक्तः सर्वदिक्चक्रमण्डलम्। महायोगीश्वरः पातु सर्वतो मम पद्मभृत्। एता दिङ्मूर्त्तयो रक्ता रक्तमाल्यांशुकैर्वृताः। प्रधानदेवतारूपाः पृथक् रथवरे स्थिताः। शक्तयः पद्महस्ताश्च नीलेन्दीवरसन्निभाः। सुशुक्लमाल्यवसनाः सुलिप्ततिलकोज्ज्वलाः। तत्पार्श्वदेवताः स्वस्ववाहनायुधभूषणाः। स्वस्वदिक्षु स्थिताः पान्तु मामिन्द्राद्या महाबलाः। एतास्तस्य समाख्याताः सर्वावरणदेवताः। सर्वतो मां सदा पान्तु सर्वशक्तिसमन्विताः। हृदये चोदरे नाभौ जठरे गुह्यमण्डले। ऊरुयुग्जानुपादेषु मूर्ध्नि भ्रूयुगलेषु च। कर्णाक्षिनासिकाजिह्वाकण्ठबाहुयुगेषु च। दश-

वीजात्मका मन्त्राः सम्यक् सम्पत्तिदायकाः। तेजोरूपाः स्थिताः पान्तु वाञ्छासुरद्रुमाः सदा। दश चान्ये महावर्णा मन्त्ररूपा महोज्ज्वलाः। व्यापकत्वेन पान्त्वस्मानापादतलमस्तकम्। कार्त्त-वीर्य्यः शिरः पातु ललाटं हैहयेश्वरः। सुमुखो मे मुखं पातु कर्णौ व्याप्तजगत्त्रयः। सुकमारो हनू पातु भ्रूयुगं मे धनुर्धरः। नयने पुण्डरीकाक्षो नासिकां मे गुणाकरः। अधरोष्ठौ सदा पातु ब्रह्मगेयो द्विजान् कविः। सर्वशास्त्रकलाधारो जिह्वां चिवुक-मव्ययः। दत्तात्रेयप्रियः कण्ठं स्कन्धौ राजकुलेश्वरः। भुजौ दशास्यदर्पघ्नो हृदयं मे महाबलः। करौ सर्वार्थदः पातु करा-ग्राणि जगत्प्रियः। कुक्षिं रक्षतु मे विद्वान् वक्षः परपुरञ्जयः। रेवाम्बुलीलासन्तृप्तो जठरं परिरक्षतु। वीरशूरस्तु मे नाभिं पार्श्वौ मे सर्वदुष्टहा। सहस्रभुजभृत् पृष्ठं सप्तद्वीपाधिपः कटिम्। ऊरूमाहिष्मतीनाथो जानुनी वल्लभो विभुः। जङ्घे वीराधिपः पातु पातु पादौ मनोजवः। पातु सर्वायुधधरः सर्वाङ्गं सर्व-मर्म्मसु। सर्वदुष्टान्तकः पातु धात्वष्टककलेवरम्। प्राणादिदश-जीवेशान् सर्वशिष्टेष्टदोऽवतु। वशीकृतेन्द्रियग्रामः पातु सर्वे-न्द्रियाणि मे। अनुक्तमपि यत् स्थानं शरीरेऽन्तर्वहिश्च यत्। तत्सर्वं पातु मे सर्वलोकनाथेश्वरेश्वरः। वज्रात् सारतरञ्चेदं शरीरं कवचावृतम्। बाधाशतविनिर्मुक्तमस्ति मे भयवर्जितम्। बद्धेदं कवचं दिव्यं न भेद्यं हैहयेशितुः। विचरामि दिवारात्रौ निर्भये-णान्तरात्मना। राजमार्गे महादुर्गे मार्गे चौरादिसङ्कुले। विषमे विपिने घोरे दावाग्नौ गिरिकन्दरे। संग्रामे शस्त्रसङ्घाते सिंहव्याघ्रनिषेविते। गह्वरे सर्पसङ्कीर्णे सन्ध्याकाले नृपालये। विवादे विपुलावर्त्ते समुद्रे च नदीतटे। परिपन्थिजनाकीर्णे देशे दस्युगणैर्वृते। सर्वस्वहरणे प्राप्ते प्राप्ते प्राणस्य सङ्कटे। नानारोगजराविघ्ने विषादप्राप्तभूतले। मारीदुःस्वप्नपीड़ासु

क्लिष्टे विश्वासघातकैः। शारीरे च महादुःखैर्मानसे च महाज्वरे। आधिव्याधिभये विघ्ने ज्वालोपद्रवकेऽपि च। न भवेत्तु भयं किञ्चित् कवचेनावृतस्य मे। आगन्तुकामानखिलान् सुरदस्युविलुम्पकान्। विनाशयेत्तद्दोर्दण्डसहस्रेण महारथः। स्वकरोद्धृतनिर्भिन्नान् सहस्रशरखण्डितान्। राजचूड़ामणिः क्षिप्रं करोत्वस्मद्विरोधकान्। खड्गसाहस्रदलितान् सहस्रमूषलार्दितान्। चौरादिदुष्टसत्त्वौघान् सहस्रारसहस्रभृत्। कृतवीर्य्यसुतो राजा सहस्रभुजमण्डितः। अवतारो हरेः साक्षात् पालयेत् सकलं मम। कार्त्तवीर्य्यार्जुनो नाम राजा बाहुसहस्रवान्। तस्य स्मरणमात्रेण हृतं नष्टञ्च लभ्यते। यो भवेल्लोकरक्षार्थमंशाच्चक्रं हरेर्भुवि। तं नमामि महावीर्य्यमर्जुनं कृतवीर्य्यकम्। सहस्रबाहुं सशरं सचापं रक्ताम्बरम् रक्तकिरीटकुण्डलम्। चौरादिदुष्टभयनाशनमिष्टदं तं वन्दे महाबलविजृम्भितकार्त्तवीर्य्यम्। कार्त्तवीर्य्य ! महावीर्य्य ! सर्वदुष्टविनाशन !। सर्वत्र सर्वदा तिष्ठ दुष्टान्नाशय पाहि माम्। दक्षे पञ्चशतं वाणा वामे पञ्चशतं धनुः। यो बिभर्त्ति स पात्वस्मान् विषव्यालशताकुलान्। उत्तिष्ठ दुष्टदमन ! सप्तद्वीपैकपालक !। त्वमेव शरणं प्राप्तं सर्वतो रक्ष रक्ष माम्। उत्तिष्ठ किं त्वं स्वपिषि किं तिष्ठसि चिराय हि। पाहि नः सर्वदा सर्वभयेभ्यः स्वसुतानिव। ये चौरा वसुहर्त्तारो विद्विषो ये च हिंसकाः। अन्तरायकरा दुष्टाः पापका ये दुराशयाः। दुर्हृदो दुष्टभूपाला दुष्टा मान्याश्च पापकाः। ये च कार्य्यविलोप्तारो ये खलाः परिपन्थिनः। सर्वस्वहारिणो ये च ये च मायाविनोऽपरे। महाक्लेशकरा म्लेच्छा दस्यवो वृषलाश्च ये। ये महाशरदातारो वञ्चकाः शस्त्रपाणयः। ये पापा दुष्टकर्माणो दुःखदा दुष्टबुद्धयः। व्याजकाः कुपथासक्ता ये च नानाभयप्रदाः। छिद्रान्वेषरता नित्यं येऽस्मान् बाधितुमुद्यताः।

ते सर्वे कार्त्तवीर्य्यस्य महाशङ्खवराहताः। सहसा विलयं यान्तु दूरादेव विमोहिताः। ये दानवा महादैत्या ये यक्षा ये च राक्षसाः। पिशाचा ये महासत्त्वा ये भूता ब्रह्मराक्षसाः। अपस्मार-ग्रहा येच ये ग्रहाः पिशिताशनाः। महालोहितभोक्तारो वेताला ये च गुह्यकाः। मनोबुद्धीन्द्रियजवाः स्फोटकाश्च महाज्वराः। महाशना बलिभुजो महाकुणपभोजनाः। गन्धर्वाप्सरसः सिद्धा ये च देवादियोनयः। डाकिन्यो घोनसाः प्रेताः क्षेत्रपाला विना-यकाः। महाव्याघ्रमहामिषमहातुरगरूपकाः। महापूजा महा-सिंहा महामहिषसन्निभाः। ऋक्षवाराहशुनकरूपा वोलुक-मूर्त्तयः। महोष्ट्रखरमा र्जारसर्पाणां विषमस्तकाः। नानारूपा महासत्त्वा नानाक्लेशसहस्रदाः। नानारोगकराः क्षुद्रा महावीर्य्या महाबलाः। वातिकाः पैत्तिका घोराः श्लैष्मिकाः सान्निपातिकाः। माहेश्वरा वैष्णवाश्च वैरिवंश्या महाग्रहाः। स्कान्दा वैनायकाः क्रूरा ये च प्रमथसम्भवाः। महाशत्रुग्रहा रौद्रा महामारीमसू-रिकाः। ऐकाहिका द्व्याहिका त्र्याहिकाश्च महाज्वराः। चातुर्थिकाः पाक्षिकाश्च मासाः षाण्मासिकाश्च ये। सांवत्सरा दुर्निवार्य्या ज्वराः परमदारुणाः। स्वाप्निकाश्च महोत्पाता ये च दुःस्वप्निका ग्रहाः। कुष्माण्डा जृम्भका भीमा घोनासा निधिव-क्षकाः। भ्रामकाः प्राणहर्त्तारो ये च बालग्रहादयः। दिवाचरा रात्रिचरा ये च सन्ध्यासु दारुणाः। प्रमत्ता अप्रमत्ता वा येऽस्मान् बाधितुमुद्यताः। ते सर्वे हैहयेशस्य धनुर्मुक्तशरार्दिताः। सह-स्रधा प्रणश्यन्तु भग्नसत्त्वबलोद्यमाः। ये सर्पा ये महानागा महागिरिगुहाशयाः। कालव्याला महादंष्ट्रा महाजगरसंज्ञकाः। अनन्तकुलिकाद्याश्च दंष्ट्राविषमहाभयाः। अनेन शतशीर्षाश्च खण्डपुच्छाश्च दारुणाः। महाविषजलौकाश्च वृश्चिका रक्तपु-च्छकाः। आशीविषाः कालकूटा महाहालाहलाह्वयाः। जल-

सर्पा जलव्याला जलग्रहाश्च कच्छपाः। मासिका विषपुच्छाश्च ये चान्ये जलवासिनः। जलजाः स्थलजाश्चैव नानाभेदशतोद्भवाः। ये च षड्विन्दवो लूता भ्रामराः शुकपुच्छिकाः। स्थावरा जङ्गमाश्चैव कृत्रिमाश्च महाविषाः। गुप्तरूपा गुप्तविषा मूषिका गृहगोधिकाः। अपस्मारविषा घोरा महोग्रविषसंज्ञकाः। येऽस्मान् बाधितुमिच्छन्ति शरीरप्राणनाशनाः। ते सर्वे कार्त्तवीर्य्यस्य खड्गसाहस्रखण्डिताः। दूरादेव विनश्यन्तु प्रनष्टेन्द्रियसाहसाः। मनुष्याः पशवो वृक्षा वानरा वनगोचराः। सिंहव्याघ्रवराहाश्च महिषा ये महामृगाः। गजास्तुरङ्गा गवया रासभाः शरभा वृकाः। शुनकाः पिशुनाः शूद्रा मार्जारा विलयोनयः। शृगालाः शशकाः श्येना गरुत्मन्तो विहङ्गमाः। भेरुण्डा वायसा गृध्रा हंसाद्याः पक्षिजातयः। उद्भिज्जाश्चाण्डजाश्चैव स्वेदजाश्च जरायुजाः। नानाभेदकुले जाता नानाभावपृथग्विधाः। येऽस्मान् बाधितुमिच्छन्ति सन्ध्यासु च दिवा निशि। ते क्षिप्रं कार्त्तवीर्य्यस्य गदासाहस्रचूर्णिताः। दूरादेव विनश्यन्तु विनष्टगतिपौरुषाः। ये चाक्षेपप्रदातारो द्वेष्टारो ये विदूषकाः। कार्त्त्यन्त्रप्रकर्त्तारः कूटामायाविनोऽपरे। मारणोच्चाटनोन्मूलद्वेषमोहनकारकाः। विश्वासघातका दुष्टा ये च स्वामिद्रुहो नराः। ये चाततायिनो दुष्टा ये पापा गोप्रहारिणः। दाहोपघातगरलशस्त्रपातातिदुःखदाः। क्षेत्रवित्तापहरणबन्धनादिभयप्रदाः। एते ये विविधाकारा ये चान्ये दुष्टजातयः। पीड़ाकराश्च सततं छिद्रमिच्छन्ति बाधितुम्। ते सर्वे कार्त्तवीर्य्यस्य चक्रसाहस्रदारिताः। दूरादेव विनाश्यन्तु क्षयं यान्तु सहस्रधा। ये मेघा ये महावर्षा ये वाता याश्च विद्युताः। ये महाशनयो दीप्ता निर्घाताद्याश्च दारुणाः। उल्कापाताश्च ये घोरा ये महेन्द्रायुधादयः। सूर्य्येन्दुकुजसौम्याश्च गुरुकाव्यशनैश्चराः। राहुश्च केतवो

घोरा नक्षत्राणि च राशयः। तिथयः संक्रमा मासा हायना युग-
नायकाः। मन्वन्तराधिपाः सिद्धा ऋषयो योगसिद्धयः। श्रुतय
ऋग्यजुःसामाथर्वणाद्याश्च वह्नयः। ऋतवो लोकपालाश्च पितरो
देवसंहतिः। विद्याश्चैव चतुःषष्टिभेदोक्ता भुवनत्रये। एते वै
कीर्त्तिताः सर्वे ये चान्ये नानुकीर्त्तिताः। ते सन्तु नः सदा सौम्या
सर्वकालं सुखावहाः। आज्ञया कार्त्तवीर्य्यस्य योगीन्द्रस्यामित-
द्युतेः। कार्त्तवीर्य्यार्जुनो धन्वी राजेन्द्रो हैहयेश्वरः। दत्तात्रेय-
प्रियतमः सहस्रभुजमण्डितः। चापी खड्गी रथी वाणी तूणी
चर्मी महाबलः। सुभगः सुमुखः शान्तश्चक्रवर्त्ती गुणाकरः।
दशास्यदर्पहारी वा लीलात्तमः सुदुर्ज्जयः। दुष्टहा चौरदमनो
राजराजेश्वरः प्रभुः। सर्वज्ञः सर्वदः श्रीमान् सर्वशिष्टेष्टदः कृती।
राजचूड़ामणिर्योगी सप्तद्वीपाधिनायकः। विजयी विश्रुतो राज्ञां
महामतिरलोलुपः। देवविप्रप्रियो विद्वान् ब्रह्मगेयः सनातनः।
माहिष्मतीपतिर्योद्धा महाकीर्त्तिर्महाभुजः। सुकुमारो महा-
वीरो मारीघ्नो मदिरेक्षणः॥ शत्रुघ्नः शाश्वतः शूरः शङ्खभृद्गोपि-
वल्लभः। महाभागवतो धीमान् महाभयविनाशनः। असाध्य-
विग्रहो दिव्यभावो व्याप्तजगत्त्रयः। सर्वशास्त्रकलाधारो विरजो
लोकवन्दितः। वीरो विमलसत्त्वाढ्यो महाबलपराक्रमः। विजय-
श्रीमयो नान्यो जितारिर्मन्त्रनायकः। चक्रभृत् कामदः कान्तः
कामघ्नः कमलेक्षणः। भद्रवादप्रियो वैद्यो विबुधो वरदो वशी।
जितेन्द्रियो जितारातिः महान् योऽनन्तविक्रमः। चक्रभृत् पर-
चक्रघ्नः संग्रामविधिपूजितः। महाधनो निधिपतिर्महायोगी
गुरुप्रियः। योगाढ्यः सर्वरोगघ्नो राजिताखिलभूतलः। दिव्यास्त्र-
भृदमेयात्मा सर्वगोप्ता महोज्ज्वलः। सर्वायुधधरोऽभीष्टप्रदः पर-
पुरञ्जयः। योगसिद्धो महाकायो महावृन्दशताधिपः। सर्व-
ज्ञाननिधिः सर्वसिद्धिदानकृतोद्यमः। इत्यष्टशतनामोक्ता मूर्त्तयो

दशदिक्पतेः। सम्यक् दश दिशो व्याप्य पालयन्तु च मां सदा। मनःसौख्यमसम्बाधमारोग्यमपराजयः। दुःखहानिररिघ्नश्च प्रजावृद्धिः सुखोदयः। वाञ्छाप्तिरिति कल्याणमवैषम्यमनामयम्। अनालस्यमभीष्टञ्च मृत्युहानिर्बलोन्नतिः। भयहानिर्यशः कान्तिर्विद्याबुद्धिमहोच्छ्रितः। अनष्टद्रव्यता चैव नष्टस्य पुनरागमः। दीर्घायुष्टं मनोलाभः सौकुमार्य्यमभीप्सितम्। अप्रहृष्टमनस्त्वं महासामर्थ्यमेव च। सन्तु मे कार्त्तवीर्य्यस्य हैहयेन्द्रस्य कीर्त्तनात्। य इदं कार्त्तवीर्य्यस्य कवचं पुण्यवर्द्धनम्। सर्वपापप्रशमनं सर्वोपद्रवनाशनम्। सर्वशान्तिकरं गुह्यं समस्तभयनाशनम्। विजयार्थप्रदं नृणां सर्वसम्पत्प्रदं शुभम्। शृणुयाद्वा पठेद्वापि पूजयेद्वापि पुस्तकम्। नित्यं शिरसि यो धत्ते सर्वान् कामानवाप्नुयात्। मुच्यते सर्वदुःखैस्तु सर्वत्र विजयी भवेत्। मारीचौरादि पीड़ाद्यैर्न कदाचित् प्रबाध्यते। पठतः प्रातरुत्थाय दुःस्वप्नादि विनश्यति। लभते वाञ्छितानर्थान् पूज्यते त्रिदशैरपि। शय्यातलगतो रात्रौ य इदं कवचं पठेत्। न तस्य तस्करारातिदुःस्वप्नादिकृतं भयम्। चौरैर्यदा हृतं पश्येत् पश्वादिधनमात्मनः। सप्तवारं तदा जप्त्वा निशि पश्चिमदिङ्मुखः। सप्तरात्रेण लभते नष्टद्रव्यं न संशयः। सप्तविंशतिधा जप्यात् प्राचीदिग्वदनो यदि। तदा देवासुरनिभं परचक्रं निवारयेत्। विवादे कलहे घोरे पञ्चधाः यः पठेदिदम्। विजयो जायते तस्य न कदाचित् पराजयः। सम्यक् द्वादशधा रात्रौ प्रजपेद्‌बन्धमुक्तये। त्रिदिनान्निगड़ग्रस्तो मुच्यते नात्र संशयः। अनेनैव विधानेन सर्वसाधनकर्म्मणि। असाध्यमपि सप्ताहात् साधयेन्मन्त्रवित्तमः। यात्राकाले पठित्वेदं मार्गे गच्छति यः पुमान्। न तस्य चौरव्याघ्राद्यैर्भयं स्यात् परिपन्थिभिः। नित्यं गृहगतो जप्त्वा कल्याणैः परिपूर्य्यते। न भयं जायते तस्य दुष्टसत्त्वादिभिः क्वचित्। सर्व-

रोगप्रपीड़ासु त्रिधा वा पञ्चधा पठेत्। स रोगमृत्युवेतालभूत-प्रेतैर्न बाध्यते। जगच्चासेचनं कुर्य्याज्जलेनाञ्जलिना तनौ। न चासौ विषकृत्यादिरोगस्फोटैः प्रबाध्यते। त्रिसन्ध्यं यः पठेदेतत् षण्मासं विजितेन्द्रियः। कालमृत्युमपि प्राप्तं जीयान्नास्त्यत्र संशयः। पठतः कवचञ्चेदं विषं नाक्रमते तनौ। न जाड्यान्ध-त्वमूकत्वं नोपसर्गभयं क्वचित्। विंशत्या चोक्तविधिना ध्यात्वा देवं तदात्मकम्। मन्त्री गुरुप्रसादाप्तं मन्त्रराजं जपेत् पुनः। कवचेनावृतो भूयो मन्त्रध्यानं समाचरेत्। आदौ सम्बोधनं कुर्य्यात्तन्नामध्यानपूर्वकम्। चतुरश्चक्रमन्त्राणामुच्चरेद्बीजपूर्वकान्। कल्पान्ते चैव मन्त्राणामुच्चरेद्बीजपूर्वकान्। शरीरे न्यासमेवं हि यः करोति समाहितः। स यथोक्तं लभेत् सद्यः फलं वज्रतनु-र्भवेत्। यथातथेदं कवचं कस्यचिन्न प्रकाशयेत्। गोपनीयं प्रयत्नेन शिवस्य वचनं यथा। सुभक्ताय सुशिष्याय दद्यात् सर्व-स्वदायिने। साधकानां हितार्थाय यदुक्तं चन्द्रमौलिना। कार्त्त-वीर्य्यस्य कवचं यदुक्तं वै मया तव। तेन सर्वोचितो देवि! कालेनापि न जीर्य्यते। तस्मात् सर्वप्रयत्नेन कवचं धारयेत् सुधीः। कार्त्तवीर्य्यः खलद्वेषी कृतवीर्य्यसुतो बली। सहस्रबाहुः शत्रुघ्नो रक्तवासा धनुर्द्धरः। रक्तगन्धो रक्तमाल्यो राजा स्मर्त्तु-रभीष्टदः। द्वादशैतानि नामानि कार्त्तवीर्य्यस्य यः पठेत्। सम्पदस्तस्य जायन्ते जनास्तस्य वशे सदा। इति श्रीउड्डामरे-श्वरतन्त्रे कार्त्तवीर्य्यार्जुनकल्पे उमामहेश्वरसंवादे कार्त्तवीर्य्या-र्जुनकवचं नामाष्टाशीतिपटलः समाप्तः।

इति श्रीप्राणतोषिण्यां चतुर्थे काम्यकाण्डे प्रशाखाकथनं
नाम तृतीयः परिच्छेदः।

अथ कुक्कुटप्रयोगः। फेत्कारिणीतन्त्रे द्वितीयपटले। अथ वक्ष्ये संग्रहतः कुक्कुटमन्त्रमहं मनुसारम्। जगतामुपकारपरैः

क्षपणकगुरुभिर्यथा पुरा प्रोक्तम्। नान्तं षष्ठस्वरपरिगतं बिन्दुमत् कुक्कुटाख्यं वीप्सै तत्त्वां पुनरपि पदं वीप्सितं पूर्वकं तत्। नान्तं भूतस्वरपरिगतं वेति मन्त्रोऽयमुक्तः स्यादायुः श्रीविभवसुखसौभाग्यसम्पत्प्रदायी। प्रोक्तः पञ्चदशार्णोऽयं मन्त्रः कुक्कुटदैवतः। स सर्वदेवतातेजःशक्तिबृंहितविग्रहः। क्षीरोदधिमध्यगते द्वीपवरे कनकरत्नमयभूमौ। अनवरतसिकतामुक्तामणिमृदुपवनसुशीतले रम्ये। तत्र समुत्थितममलं विपुलतरं कलितवररत्नफलजातम्। हैमं तालमहोजं बहुमणिविलसद्विचित्रपत्रवरम्। तं पुनरधितिष्ठन्तं ध्यायेदखिलोज्ज्वलनाङ्गम्। अतिशोभाचूड़ाशोभितवक्त्रम् कुक्कुटमतितीक्ष्णनखचरणम्। वक्त्रं यस्य षड़ाननो गिरिसुता यस्योदरं कालहा पृष्ठं यस्य च वह्निकुक्कुरमुखौ पादौ च वक्रेतरौ। पक्षौ यस्य सुरद्रुमौ मणिमयौ या शृङ्खलाबन्धनी कामाकर्षकरीकरोतु स तु नः सर्वानासौ कुक्कुटः। गौरीहस्तारविन्दे त्वनिशमधिवसन् षण्मुखारूढ़कामः सर्वालङ्कारदीप्तः प्रचलितचरणः पञ्चविक्षिप्तपदक्षः। हैमाभो रत्नचञ्चूमणिमयविलसद्वृत्तकण्ठः स्वरूपः पायान्नस्ताम्रचूड़ः सकलजनरतः सर्वसिद्धिप्रदाता॥ १॥ अथवा। सर्वप्रियः सागरमध्यरत्नद्वीपस्थतालागनिवासिकुक्कुटः। विद्याभिरामोऽखिलभूषणाढ्यो वशीकरोत्याशु सुसेवितो नरैः। अमुष्य पूर्वसेवार्थमेकलिङ्गे शिवालये। देवस्य महतीं पूजां कृत्वा आसीदुदङ्मुखः। पर्वताग्रे नदीतीरे वृषशून्यशिवालये। पश्चिमद्वारसंयुक्ते कुर्यान्मन्त्रपुरश्क्रियाम्। गुरुं प्रणम्य शिरसा आसनं परिकल्पयेत्। करशुद्धिं देहशुद्धिं तालत्रयमथाचरेत्। दिग्बन्धनं कारयेत् पश्चाद् विद्यामन्त्रेण तत्परः। प्राणायामत्रयं पश्चात् प्रणवेन तु कल्पयेत्। मातृकां विन्यसेत् पूर्वं पश्चान्न्यासं समाचरेत्। पक्षिमन्त्रस्य प्रथमं छन्दमन्त्रं तं विनिर्दिशेत। द्वितीयपदमुच्चार्य

शिरसैव तु योजयेत्। वां शिखायाञ्च विन्यस्य वर्म्मपञ्चित्कृती-यकम्। तुरीयपदमुच्चार्य्य नेत्रे च विनियोजयेत्। पुराभ्या-ञ्चास्त्रसंयुक्तमङ्गषट्कं विधीयते। नमः स्वाहा वषट् हुञ्च वौषट् फट् च क्रमान्न्यसेत्। पुमादिवान्तवर्णांश्च क्रमशो विन्यसेत् सुधीः। ललाटे विन्दुमध्ये च चक्षुःश्रवणयोरपि। नासाविवर-योश्चैव आस्ये कण्ठे तथा हृदि। जठरे नाभिदेशे च लिङ्गे गुह्ये च विन्यसेत्। नमोऽन्तेन तु मन्त्रेण मूर्द्धादिव्यापकं न्यसेत्। एवं विन्यस्तदेहस्तु ध्यायेद्दक्षिशिवात्मकम्। मनसा देवमभ्यर्च्च षोड़शैरुपचारकैः। विन्यस्याप्यावाह्य यागेन देवं सन्तोष्य यत्नतः। ध्यात्वा कुक्कुटदेवञ्च जपेल्लानुसहस्रकम्। तावच्छतं तर्पयित्वा पुरश्चर्य्याकृतो भवेत्। वश्याकर्षणविद्वेषस्तम्भनोच्चाटनादिकम्। कर्माणि कुर्य्यादिष्टानि मन्त्रेणानेन मन्त्रवित्। आलिख्य मन्त्रेण विदर्भितं तत्साध्याह्वयं तालवरस्य पत्रे। प्राणान् प्रतिष्ठाप्य शतं यथाष्टौ जप्त्वा धृतञ्चेत् शरणं प्रयाति। ताम्बूलं यद्यष्टोत्तरसहस्रं जप्त्वा दत्तं भुक्तये यस्याः। वश्या नित्यं प्रत्युपदेशाद्दास्यत्यर्थान् प्रार्थितभोगान्। मन्त्रं जपन्नथ पञ्चकमलं यः कनकाह्वयमङ्गपञ्च-युक्तम्। भक्ष्यभोज्यविधिषु प्रतियोज्य साऽस्य याति वशगा मर-णान्तम्। मूलं तस्य च मूलकेन सहितं चिताह्वयस्य त्वचं पुष्पं वीजसवीर्य्यहस्तिकुसुमं स्वर्णासिकान्तर्जलम्। पत्रं रोहिणमङ्ग-पञ्चकमलं तन्नाण्डयुक्तं मिथो दत्तं वा पुरुषस्य तद्धृतमिदं वश्यस-ङ्गना मन्मथैः। अष्टोत्तरशतं जप्त्वा हयमारप्रसूनकम्। सप्तरात्रौ क्षिपेद् यस्य मूर्ध्नि साऽस्य वशीभवेत्। हयमारं करवीरम्॥ भूर्जे साध्यविदर्भितं मनुमिमं संलिख्य कौलालमृत्स्नाकाकल्पितपुत्त-लीहृदि कृतं प्राणान् प्रतिष्ठाप्य च। जप्त्वा सप्तदिनं त्रिसन्ध्यमथ तामालोड्य भाण्डीरसैर्लिम्पेद्वश्यमवश्यमेव भविता चान्येषु जन्म-स्वपि। भाण्डी भार्गी॥ अष्टोत्तरशतं जप्त्वा समूलकाण्डां

कृताञ्जलिं शिरसा। धारयति सर्व्वलोकप्रियो भवेन्नियतमेव मन्त्रि-
वरः। कृताञ्जलिर्लज्जावती। तच्छलमखवल्लीलक्ष्मीपुष्पाणि
धारयेदेवं समुदाभद्रकविष्णुप्रियाश्च मूषली स मन्त्रजापेन।
मधुकं दूर्वां सहाञ्चैव यथाधृतम् शिरसा। सा तथैदेकं स्वर्ग-
लोककल्याणनयनसमर्थकम्। का कथा मनुष्यलोकेषु दश रवि-
वसुरुद्रमनुषु। अष्टवाच्चिविश्वद्वीगभागे अञ्जल्यादि क्रमशः।
संयोज्यादशकमखिलवश्यकरम्। प्रत्येकं शतमष्टौ जप्ता संयोज्य
दशकमपिष्ट्वा गुटिकीकृत्य सहस्राष्टकं जप्ता गुटिकया रचिता
तिलकक्रिया सुरनारीनरलोकरञ्जनादिकं कपिलाघृतदीपितया
तत्तच्चूर्णगर्भया वर्त्त्या कज्जलमुद्धृतमिव तत्कर्पूरयुतं सहस्रं परि-
जप्तम्। दिनमनुदिननयनयुतं कुर्य्यादखिललोकसवश्यवश्य-
करम्॥ एते वश्याप्रयोगाः।

आत्मानं कुक्कुटं ध्यात्वा स्वकीयगणशक्तया। साध्यां शृङ्खलया
कण्ठे बद्ध्वा किषमनुव्रजेत्। सहस्रमर्द्धराते तु रात्रित्रयमतन्द्रितः।
तुरीयकुक्कुटस्यान्ते साध्यनाम स्वकर्म च। जपेत् संयोज्यवश्यादि-
कार्य्येषु सकलेष्वपि। यामारभ्य जपेदेनं पेषितं सा मदालसा।
बिभ्रत् सदार्द्रवसना मदनाकुलचेतना। उत्फुल्लगुह्यजघना
शिथिलांशुकभूषणा। चलत्पादपरिन्यासा स्फुरद्रोमाञ्चकञ्चुका।
कामानलोष्णनिश्वासा शोभिताधरपल्लवा। विकीर्णकेशपाशासौ
वेपिता घूर्णितेक्षणा। रचिताञ्जलिरायाति स्वयमस्यालयं
निशि। साध्याह्वानविदर्भितं मनुमिमं ताम्बूलपत्रोदरे लेखन्या
प्रतिलिख्य कर्म्मसहितं प्राणान् प्रतिष्ठाप्य च। जप्ताष्टौ शतमर्क-
दुग्धजनिता दीपे चिराचान्तरे। गुप्तं दीपशिखाग्निना स्वय-
ममुं वश्योर्वशी चाश्रयेत्। भूर्ज्जे मन्त्रममुं विलिख्य सकलं
साध्याह्वयासम्पुटं प्रासप्राणमथाष्टकोत्तरशतं जप्तं त्रिरात्रं
पुनः। चौद्रचीरघृतेष्विदं पृथगपि प्रक्षिप्य मन्त्रं जपन्नाकर्षत्य-

चिरादभीष्टवनितां नागादिलोकादपि । आलिख्यैव शरावके मनुमिमं तन्नामकर्मान्वितम् । रात्रौ रोचनया प्रणीतपवनं जप्त्वा च साष्टौ शतम् । तस्या नाभिमुखाङ्गजन्मभवनं सन्तापयन् खादिरे वह्नौ चैतमनङ्गवेगविवशा या वा समयाति च । नाभिमात्रजले स्थित्वा साध्यनामविदर्भितम् । जपेत् सहस्रं त्रिदिनमिष्टामाकर्षयेद् ध्रुवम् ॥ इत्याकर्षणम् ।

कपिरोमहिङ्गुदार्वीखरचर्माणि चूर्णयेत् । तच्चूर्णं मन्त्रसञ्जप्तं नामकर्मविदर्भितम् । त्रिसहस्रं पुनस्तेन स्निग्धयोरन्तरात्मनोः । धूपैरतीव विद्विष्टौ स्निग्धावपि भविष्यति । तालपत्रे लिखेन्मन्त्रं नामकर्मविदर्भितम् । कृतप्राणप्रतिष्ठान्तं प्रजप्तं त्रिसहस्रकम् । विषालिप्तं द्विधा कृत्वा निखनेत् सिन्धुतीरयोः । स्निग्धयोराशु विद्वेषः स्यादुमेशानयोरपि । सिन्धुतीरयोः नद्युभयतीरे । उलूककाकयोः पक्षौ गृहीत्वा मन्त्रवित्तमः । मन्त्रे आलिख्य वै शरावे निशायाञ्च साध्याक्षरसम्पुटितं मन्त्रं स्थापितपवनं सहस्रजप्तं चतुष्पथे निखनेत् । स्तम्भनमेतदवश्यं भविता जगताञ्च नात्र सन्देहः । स्थापितपवनं कृतप्राणप्रतिष्ठम् ॥ कृत्वा प्रतिकृतिमथवा श्मशानाङ्गारकेशशववसनजां सपदि सम्यगधिष्ठितपवनां छन्नतनाम्नीं समन्त्रललाटां वसनाधिष्ठितपवनां सहस्रजप्तां प्रतिष्ठितप्राणाम् । बन्धनं प्रति तीक्ष्णतरं स्तम्भनमतितीक्ष्णाम्बुनिक्षिप्ताम् । लिखितमन्त्रचितामयकीलकं सहितकर्म्म सनाम समारुतम् । कृतजपं त्रिसहस्रकसंख्यायाः पथि खनेदथ याननिवारणम् । विहितनिम्बतरौ रिपुनामयुतं मनुमिमं निशया कृतनामकम् । नवसहस्रजपादिषु साधितं पथि खनेत् परसैन्यनिरोधनम् ॥ इति स्तम्भनम् ॥

अङ्गारकं पितृभुवो रिपुनैधनर्क्षे जप्त्वा विनिर्मितमिदं पितृभूगताग्नौ । दग्ध्वा च तन्नसितमिश्रितमात्रशलोरालिख्य नाम

मनुकर्मयुतं स्वमूर्द्धि। चिप्रं स चालयति चाष्टसहस्रजप्तं जप्ता शिवे कुजदिने सचतुर्दशीके। कर्माह्वयमानम्पुटं मनुम्। सहस्रजप्तं निखनेद् द्विषां गृहे द्वारे तदुच्चाटनमाशु जायते। निरस्य काकनिलयं पितृभूगताग्नौ दग्ध्वा च तद्भसितमिश्रित-मन्त्रिशत्रोः। आलिख्य नाम मनुमर्म्मयुगस्य मूर्द्धि प्रोच्चाटये-च्चाष्टसहस्रजप्तम्। जप्ता शिवे कुजदिने सचतुर्दशीके कर्मा-ह्वयाख्यमनुना त्रिसहस्रजप्तम्। दत्तं विधाय रिपुमूर्ध्नि विनि-क्षिपेच्च प्रोच्चाटयेद्रिपुमसौ द्रुतमाशु चैतत्। श्मशानजे चेले वा रिपुनामकर्म्मसंयुक्तं मन्त्रपञ्चसहस्रजप्तम्। द्वारि क्षिपेदमुका-मुकस्य शत्रोरुच्चाटयेत् सप्तदिनान्तराले। कीलं चिताकाष्ठ मयञ्च मन्त्री कर्मान्वितं चाष्टसहस्रसंख्यम्। मन्त्रेण जप्तं निख नेदरातिगेहे तमुच्चाटयति क्षणेन। उन्मत्तरसालोचिता-मसीसक्तारूपक्षणविधिना। कारस्करफलकान्तमनुं लिखेत् कर्म्मनामसम्पुटितम्। स्थाप्य प्राणानस्मिन् द्विषतोऽष्टविषानु-लिप्तसंसिद्धम्। तत्रैव सहस्रजप्तं श्मशानदेशे चतुष्पथे वापि। निखनेदरिभवने तदष्टमर्च्चं रिपोः चिप्रं देशान्तरमथवासौ। मस्येति तेनोद्विजितलोकान्तरं सदा रोगी॥ इत्युच्चाटनम्॥

मन्त्रं साध्यस्य नाम प्रतिपुटितमथालिख्य तालस्य पत्रे पुत्तल्यां तन्निधायार्पितपवनमथो जप्तमष्टौ सहस्रम्। रात्रा-वुन्मत्तदोसे पितृवनजनिते तीक्ष्णतैलेन लिप्तं छित्वा छित्वा निशार्द्धे त्रिदिनपरिमिते मोहयेन्मारयेद् वा। मध्यार्कवृक्षकृत-रूपमधिष्ठितेऽनुजप्तं सहस्रमपि कीलयति श्मशाने। मन्त्रेण दारयति साधितमन्त्रमङ्गं यद्यद्रिपोरपि विनश्यति तत्तदङ्गम्। वैरिप्रसवमृत्तिकापदरजःसंयुक्तचक्रीमृदा कृत्वा पुत्तलिकाञ्च नाम हृदये शीर्षे पदे वा लिखेत्। अङ्गारैः पितृभूगतैर्मनु-मिमं तन्नामकर्मान्वितम्। तस्य न्यस्य हृदीदमाशु पवनं संयुक्त-

चक्रीमुद्रा। कृत्वा पुत्तलिकाञ्च नाम हृदये शीर्षे पदे वा लिखेत्। अङ्गारैः पितृभूगतैर्मनुमिमं तन्नामकर्मान्वितं तस्य न्यस्य हृदीदमाशु पवनं जप्यात् सहस्रत्रयम्। सच्छिन्नैश्चमखण्डितेन शतधा शस्त्रेण तां पुत्तलीं याम्याशाभिमुखो दिनानि दशभिर्दीप्ते श्मशानानले। तैलं तीक्ष्णतरं निषिच्य जुहुयात् नैधन्यर्क्षेऽथवा मन्त्री प्रेतपतेः पुरं द्रुतमसौ यास्यत्यरातिर्ध्रुवम्। नैधन्यर्क्षे शत्रोर्वधतारायाम्। अङ्गारवारे कुलिकोदयेरिपोरालिख्य पत्रे प्रतिमां प्रतिष्ठिताम्। प्राणान् प्रतिष्ठाप्य विषानुलिप्तां श्मशानभूमौ जुहुयाद्विनश्येत्। रिपोः प्रतिकृतिं कृत्वा गोमयेन च तद्धृदि। तालपत्रे समालिख्य मनुमाख्याविदर्भितम्। विन्यस्य तत्प्रतिकृतेः स्थाप्योपरि च राजतम्। मृण्मयं वा घटं सम्यग् गोमयेन च पूरितम्। तत्रापि निक्षिपेन्मन्त्रं लिखिताख्यपुटं बुधः। वैरिप्राणान् प्रतिष्ठाप्य तस्मिन् गोमयवारिणि। त्रिसन्ध्यं प्रजपेत्तस्मिन् छायायामाङ्गविष्यति। दृष्ट्वा तां गोमयजले रिपुच्छायां समाहितः। अस्त्रेण छेदयेदङ्गं यस्य यद्यदभीप्सितम्। तत्तद्विनश्यति रिपोः सप्ताहान्नात्र संशयः। हृदयोदरकण्ठेषु छिन्नेषु भविता मृतिः। शिरोरोगी भवेत्तस्य व्रणे शस्त्रेण मस्तके। शुण्ठी हिङ्गु च चित्रकं मरीचं रोहिपिप्पली। मन्दीवधूमयूरकल्पं प्रोक्तमेतद्विषं बुधैः। कारस्करमामलकीमौडुम्बरजम्बूखदिरकृष्णा च। वंशपिप्पलनागौ रोहिणमलिनासनभुमालिकाः। अरिष्टविल्वविकङ्कतकदम्बवकुलत्वक्संज्ञाः। वञ्जुलपनसार्कशमीकदम्बनिम्बप्रकाशमूलञ्च। ततः सहस्रमनुमादरात् जपति यः स रमाभवनं भवेज्जपविधौ कपीसीकुसुमैः। सिद्धजपे तु कुक्कुटमन्वहम् अष्टोत्तरं मनुमिमं प्रजपेत् सहस्रं ध्यायेन्महेशमनुकुक्कुटरूपकण्ठम्। पश्चार्च्चितोऽस्य भवनञ्च मनोरथाद्यैरापूर्य्यते बहुविधैरपि वत्सरेण। नित्यं

प्र त्युषसि प्रतीतमनसा पादेन भूधारिणा रत्नान्येव समन्ततः स्वपुरतः पर्य्याक्षिपन्तं मुहुः। ध्यात्वा कुक्कुटमीशरूपमथवा भूत्वैव मायां स्वयम्। भक्त्या यः प्रजपेदुपेन्द्रमितरं प्राप्येन्दिरा लक्षयेत्। तत्त्वेन खण्डीकृततालवृन्तां क्ष्मां छादयित्वा फल-रत्नखण्डैः। ध्यात्वा मनुं स्वं नयने जपेद् यो विद्विष्टमाखण्डल-वत् समेति। दोधूयमानो निजपक्षपत्रवत् पराङ्गरत्नं किरण-कनकरागपुष्पम्। ध्यात्वा मुनिर्नियतमेव मनुं प्रजप्य प्रौढ़ां श्रियं भृशमवाप्स्यति रत्नपूर्णाम्। भूमौ काञ्चनमृत्तिकापद-रजोराजीं किरन्तं मुदा कूजन्तं चरणेन धान्यनिचयानाकीर्य्य चञ्चादिना। सञ्चिन्त्योज्ज्वलताम्रचूड़मरुणं किञ्चित् समा-कुञ्चितग्रीवं यः प्रजपेदमुष्य भवनं धान्यादिभिः पूर्य्यते। दर्भौ-षधदग्धभसितमनुनामुना कृतजपं निशि वसाधृतम्। दुरितरोग-विषभूतभयापहं भजतां वशीकरणमतीव रमाकरम्॥ स्थलजे-न्धनचर्मभसितं त्रिधा विधिवत् सहस्रजप्तमभिरक्षति चाखिलम्। भूर्जपत्रमभिलिखितनाममात्रकं नरमाशु रक्षति धृतं जपा-न्वितम्। मनुना तण्डुलमनुना। सहस्रजप्तं तद्वत् कुक्कुटं यो वेत्ति सोऽसौ। कुक्कुटसङ्घान् स्वकीयान् युद्धे जेष्यति क्षिप्रम्। स्मृत्वा सहस्रमपि सञ्चिन्त्य कुक्कुटं जपेत्। जेष्यति सपदि रणे स्वभटे चरणायुधैः समायातः। बहुना किमत्र मनुना लिखितं परिवाञ्छितं सपदि साध्यतरम्। अचिरेण तस्य भवने जपतो वसतिं प्रयाति कमला विमला। इति जपनिरतानां कुक्कुटं लक्षयित्वा क्षपणकमनिवार्य्यक्षिप्तभूतारिपक्षः। त्वरितनिवह-पक्षक्षेपकः सर्वभक्ष्यः प्रणतसुजनरक्षी वीक्षितानां स्वपक्षः। निखिलमभिमतानामर्थिनां कल्पवृक्षः सुरवरनरनारीरञ्जना-कृष्टिदक्षः। अनन्तं विन्दुसंयुक्तं पुङ्खोलिखितय ततः। वां शक्ति-स्वाथ पुङ्खोलियुगलं विलिखेत्ततः। वुकारं वरुणारूढ़मनन्तं

वासविन्दुकम्। क्रोधान्तमुद्धरेन्मन्त्रं कुक्कुटं सुमनोहरम्॥ इति कुक्कुटप्रयोगः॥

अथोच्छिष्टाचाण्डालीप्रयोगः॥ तत्रैव षष्ठपटले॥ श्रीपार्वत्युवाच॥ सूचिता मे पुरा शम्भो! मन्त्रा नैकविधास्त्वया। इदानीं श्रोतुमिच्छामि देवीमुच्छिष्टपूर्विकाम्॥ शम्भुरुवाच॥ शृणु देवि! वरारोहे! देवीं तां कथयाम्यहम्। यया विज्ञातमात्रेण अभूद्विद्यामयो नरः॥ श्रीदेव्युवाच॥ को विधिः किं फलं चास्या मयि विद्यास्वरूपतः। कथ्यतां देव! यत्नेन रहस्येनं निवेदितम्॥ शम्भुरुवाच॥ शृणु देवि! विधिं वक्ष्ये फलञ्चोच्चाटनादिकम्। विषञ्च स्थावरं देवि! विद्याभावान्निहन्ति च। अथान्यत् सम्प्रवक्ष्यामि देवीं गुह्यतमां प्रिये!। उच्छिष्टपूर्विकां देवीं मातङ्गीं सर्वसिद्धिदाम्। सर्वपापहरां देवीं सर्वदोषविवर्जिताम्। यया विज्ञातया एकाः क्षयं गच्छन्ति चापदः। स्थावरं जङ्गमञ्चैव कृत्रिमं जङ्गमं तथा। विषं जयति देवेशि! स्थावराङ्गसमाश्रितम्। इयं विद्या पराविद्या सर्वपापविनाशिनी। स्वर्गदा मोक्षदा चैव राज्यसौख्यफलप्रदा। इयं देवी मया पूर्वं साधिता विषवर्जिता। सकृदुच्चारिता विद्या ब्रह्महत्याविशोधनी। सर्वपापविहन्त्रीयं सर्वसौभाग्यदायिनी। यद्युच्छिष्टमुखो भूत्वा स्मरेद्देवीं कदाचन। तदाचान्तो भवेद्देवि! विनैवाचमने कृते। दुर्भगा सुभगा नूनं दुःखिता सुखिता भवेत्। बन्ध्यापि लभते पुत्रं शतहायनजीवितम्। निर्धनो धनमाप्नोति मूर्खो विद्यामवाप्नुयात्। यां यां प्रार्थयते सिद्धिं हठात्तां तामवाप्नुयात्। विधानं ह्यत्र वक्ष्यामि शृणु देवि! मनोरमे!। भोजनानन्तरं देवि! विनैवाचमने कृते। बलिं दत्त्वा प्रथमतो मूलमन्त्रेण साधकः। ततो मन्त्रं जपेद्धात्वा देवीं तामिष्टसिद्धये। मन्त्रं शृणु महादेवि! यथावत् कथ-

यामि ते। नम उच्छिष्टपूर्वन्तु तथा चाण्डालिनीति च। सुमुखी च ततो देवी कीर्त्तयेत्तदनन्तरम्। महापिशाचिनी तस्माल्लज्जावीजमतः परम्। नादविन्दुसमायुक्तं ठकारद्वितयं पुनः। सविसर्गं महादेवि! सर्व्वसिद्धिप्रदायकम्। न तिथिर्न च नक्षत्रं नोपवासो विधीयते। नाङ्गन्यासकरन्यासौ न वर्णन्यास ईरितः। न विदेशो न वा विघ्नो नाशौचं नियमो न च। यस्य तिष्ठति मन्त्रोऽयं न स विघ्नैरवाप्यते। ध्यानमस्याः प्रवक्ष्यामि यथावज्जगदीश्वरि!। शवोपरि समासीनां रक्ताम्बरपरिच्छदाम्। रक्तालङ्कारसंयुक्तां गुञ्जाहारविभूषिताम्। षोड़शाब्दाञ्च युवतीं पीनोन्नतपयोधराम्। कपालकर्त्तकाहस्तां परमज्योतिरूपिणीम्। बालदक्षिणयोगेन ध्यायेन्मन्त्रविदुत्तमः। उच्छिष्टेन बलिं दत्त्वा जपेत्तद्गतमानसः। उच्छिष्टेनैव कर्त्तव्यो जपोऽस्याः सिद्धिमिच्छता। उच्छिष्टजपमानस्य जायन्ते सर्व्वसिद्धयः। अपरञ्च प्रवक्ष्यामि शृणु देवि! फलप्रदम्। होमं सन्तर्पणञ्चास्याः सहसा कार्य्यसिद्धये। स्थण्डिले मण्डलं कृत्वा चतुरस्रं समाहितः। पूजयेन्मण्डलं देवि! मूलमन्त्रेण मन्त्रवित्। ततो देवीं समाधाय वह्निरूपां व्यवस्थिताम्। देवीं ध्यात्वा चरेद्धोमं दधिसिद्धान्नतण्डुलैः। सहस्रैकं विधानेन राजा भवति वश्यगः। मार्जारस्य तु मांसेन यो देव्यै होममाचरेत्। स प्राप्नोति परां विद्यां शस्त्रशास्त्रवहिष्कृताम्। कुर्य्यात्तु छागमांसेन होमं मधुसमन्वितम्। सहस्रैकं विधानेन भवन्ति धनसिद्धयः। विद्याकामश्चरेद्धोमं शर्करामधुपायसैः। पुनस्तस्य भवन्त्येव सिद्धविद्याश्चतुर्दश। रजस्वलाया वस्त्रेण मधुना पायसेन च। होमं कृत्वा महादेवि! त्रैलोक्यं वशमानयेत्। नागवल्लया चरेद्धोमं मधुना सह सर्पिषा। अयुतैकं विधानेन सिद्धिविद्या भवेद्ध्रुवम्। सद्यो मार्जारमांसेन घृतेन मधुना

सह। चाण्डालकेशयुक्तेन भवेदाकर्षणं ध्रुवम्। शशकस्य तु मांसेन मधुनालोड़ितेन तु। कृत्वा होममवाप्नोति विद्यां वित्तं वराः स्त्रियः। धुस्तूरार्कस्य योगेन चितावह्नौ तु मन्त्रवित्। कोकिलाकाकपक्षैश्च होमः शत्रून् विनाशयेत्। उच्चाटनाय शत्रूणां होमं कुर्य्याच्च मन्त्रवित्। पूर्वोक्तेन विधानेन चिताकाष्ठहुताशने। उलूककाकपक्षाभ्यां कृत्वा होमं निरन्तरम्। वेधयेच्छत्रुमन्योन्यं कलहाकुलमुद्धतम्। उलूकपक्षहोमेन गर्भपातो वरस्त्रियः। सहस्रैकं विधानेन कुर्य्याद्धोमं समाहितः। विल्वपत्रेण साज्येन मासमेकं निरन्तरम्। अपि बन्ध्या लभेत् पुत्रं चिरजीविनमुत्तमम्। बन्धूककुसुमं हुत्वा रक्तं मधुसितान्वितम्। दुर्भगाया हठाद्देवि! सौभाग्यसुखदायकम्। प्रातरुत्थाय यः कश्चित् कुर्य्याद्धोमं दिने दिने। जवापुष्पेण साज्येन शतमष्टोत्तरं प्रिये!। षण्मासस्य प्रयोगेण भवेदाकर्षणं ध्रुवम्। देवगन्धर्वमर्त्यानां कन्या नागाङ्गना द्विजाः। हठादागत्य कामार्त्ता बलादालिङ्गयन्ति तम्। विद्यायाः क्रियते होमस्तिलपायसमिश्रितैः। स प्राप्नोति महाविद्यां शास्त्रौघपदशालिनीम्। मधुना रुरुमांसेन होमं कुर्य्यात् प्रयत्नतः। विद्यावान् धनवान् बुद्धिं शस्त्रशास्त्रवशीकृताम्। इयं देवी महादेवि! वामाचारफलप्रदा। दक्षिणाचारयोगेण न भवेत् फलदायिनी। सभाजनान्तरञ्चास्या बलिं दत्त्वा दिने दिने। उच्छिष्टेन जपेन्मन्त्रं शतमष्टोत्तरं प्रिये!। उज्जटे वा श्मशाने वा शून्यागारे चतुष्पथे। बलिप्रदानतो देवी प्रत्यक्षा भवति ध्रुवम्। एषा देवी मया ख्याता भैरवाकारमिच्छता। इत्येषा कथिता देवी सर्वपापापहारिणी। मन्त्रस्योच्चारणाद्देवि! सर्वपापविवर्जितः। उच्छिष्टदूषणं त्यक्त्वा स पवित्रो भवेद् ध्रुवम्। इत्युच्छिष्टचाण्डालिनी देवी भुवनविश्रुता। नानाप्रवर्त्तने काश्चि-

द्दिद्यां शृणु वरानने ! ॥ श्रीशिव उवाच ॥ शृणु देवि ! महाविद्यां समयाकारधारिणीं । न तिथिर्न च नक्षत्रं न साध्यादिं विचारयेत् । महादेवीति विख्याता शिवदीक्षान्तगामिनी । यज्ञोपवीतं देवेशि ! धार्य्यते साधकेन वै । उच्छिष्टेनार्च्चयेद्देवीं महादेवेन साधिताम् । नान्यमवगतस्तिष्ठेत् सर्वग्रन्थं सुविस्तरम् । बहुनोक्तेन किं देवि ! त्रैलोक्यमपि साधयेत् । सदा कालन्तु मन्त्रोऽयं स्मर्त्तव्यस्त्रिपुरारिणा । पयोगुड़ेन भक्तेन मांसेन जुहुयान्नरः । आयुर्धनञ्च पुत्त्रांश्च विद्यामष्टादशीं लभेत् । गोप्तव्येयं प्रयत्नेन कथितव्या न कस्यचित् । गुरुभक्तिः प्रदातव्या कायेन च धनेन च । लोकापवादो न च देवि ! पापं नैवापरा तिष्ठति मर्त्त्यलोके । मर्त्त्यलोके सुखं भुक्त्वा परे देवीपुरं व्रजेत् । मोक्षैकसारां धनदैकसारां विद्यैकसारां शृणु देवि ! विद्याम् । सर्वोपकारां परमार्थसारां महानुभावां भुवि कामधेनुम् ॥ इत्युच्छिष्टचाण्डालिनीप्रयोगः ॥

मत्स्यसूक्ते अष्टपञ्चाशत्पटले । ग्राममेधं प्रवक्ष्यामि कृते रोगैर्न बाध्यते । अकृते मरणं ग्रामे तस्मात् कुर्य्यात् प्रयत्नतः । तत्र सम्पूजयेद्देवीं शिवं विष्णुं प्रजापतिम् । भद्रकालीञ्च क्षेत्रेशं घण्टाकर्णं विशेषतः ॥

अथ धूमावतीप्रयोगः ॥ फेत्कारिणीतन्त्रे ॥ धूमावतीप्रयोगोऽयमधुना कथ्यते मया । दान्तौ सार्घीशविन्दन्तौ वीजे धूमावतीद्विठः । धूमावतीमनुः प्रोक्तो वैरिनिग्रहकारकः । षड़ङ्गं जातिसंयुक्तं कल्पयेत्तेन मन्त्रवित् । पिप्पलादो मुनिश्छन्दो नीवृद्देवी च देवता । विवर्णा चञ्चला कृष्णा दीर्घा च मलिनाम्बरा । विमुक्तकुन्तला रूक्षा विधवा विरलद्विजा । काकध्वजरथारूढ़ा विलम्बितपयोधरा । सूर्पहस्तातिरूक्षाक्षा धृतहस्ता वरान्विता । प्रवृद्धघोणा तु भृशं कुटिला कुटिलेक्षणा । क्षुत्पिपासा-

दिता नित्यं भयदा कलहास्पदा। एवंविधां समाध्यायेत्ततः कर्म समारभेत्। चतुर्थेन तु वर्णेन षष्ठस्वरयुतेन च। षड्दीर्घजातियुक्तेन कुर्य्यादङ्गानि मन्त्रवित्। जपेत् कृष्णचतुर्दश्यां पुरश्चरणसिद्धये। उपवासरतो मन्त्री शून्यागारे दिवानिशम्। श्मशाने विपिने वापि जपेल्लक्षन्तु वाग्यतः। सोष्णीषः सार्द्रवासाश्च पुरश्चरणकर्मणि। साध्योपरि मन्त्रमालिख्य तस्मिन् स्थाप्य शिवं व्रजेत्। अवष्टभ्य शिवं शत्रुनाम्नाथ प्रजपेन्मनुम्। सहस्रादूर्द्धतः शत्रुर्ज्वरेण परिगृह्यते। पञ्चगव्येन शान्तिः स्याज्ज्वरस्य पयसापि वा। मन्त्राद्यक्षरमालिख्य शत्रुनाम ततः परम्। द्वितीयन्तु मनोः शत्रोर्नामैकं मनुमालिखेत्। वन्ह्ययुतं जपेत् शत्रोर्निश्चितं मरणं भवेत्। कृत्वा मन्त्रे रिपोराख्यां मारणे यामिनीदले। उन्मादो जायते शत्रोर्मनोरयुतजापतः। दग्ध्वा काकं श्मशानाग्नौ तद्भस्मादाय मन्त्रितम्। विरोधिनामाष्टाशासु सद्य उच्चाटनं रिपोः। श्मशानभस्मना कृत्वा शिवं तस्योपरि न्यसेत्। विरोधिनामसंरुद्धं कृष्णपक्षे समुच्चरेत्। महिषीक्षीरधूपञ्च दद्यात् शत्रुविपत्करम्। महिषीरूपमास्थाय शत्रुं सा विनिपातयेत्। मन्त्रेणानेन निखनेत्तद्भस्म रिपुमन्दिरे। शत्रुमुच्चाटयेत्तूर्णं नात्र कार्य्या विचारणा। न्यस्य पाणितले शत्रोराख्यानं चितिभस्मना। वज्रावधौ सुखं क्रुद्धः स्थापयन्नयुतं जपन्। धूमावतीमनुं मन्त्री शत्रुक्षयपरं नयेत्। प्राग्वत् करतले न्यस्य त्वद्वयोर्द्धं रिपोर्न्यसेत्। जलस्थः प्रजपेत् मन्त्री हुङ्काराक्राशयेदरीन्। श्मशानाङ्गारमादाय कृत्वा पुष्पादिनार्च्चयेत्। भगलिङ्गं समाभाष्य मनसा कर्म चिन्तयन्। निम्बकाकच्छदानेकीकृत्य चाष्टशतं जपेत्। दद्याद्धूपं साध्यनाम्ना सद्यो विद्वेषयेदरीन्। चिताकाष्ठानले चौरहोमाच्छान्तिः प्रजायते। रजोधूपप्रदानेन व्याघ्ररूपेण कालिका। मारयत्यरिमागत्य शान्तिनिर्माल्यधूपतः। वराहवालधूपेन हन्या-

द्वाराहरूपिणी। अश्वत्थपत्रधूपेन शान्तिर्भवति नान्यथा। शान्तिः सर्व्वाभिचारस्य पञ्चगव्येन जायते। चीरेणापि च देवेशि! मधुरत्रितयेन च। कीले चेडतरोर्विदध्यं विलिखेन्मन्त्रेण नामाचरं जप्त्वा लेख्यपदद्वये तु निखनेदुच्चाटनं विद्विषाम्। त्वत्पादद्वयधूलिकीर्णहविषा दत्त्वा द्विजेभ्यो बलिं तज्जप्त्वा चितिभस्मकोर्त्तितमरेर्गेहे च तद्दद्भवेत्। वायव्ये विलिखेच्च पर्णसहितं जप्तं सहस्राधिकम्। जप्त्वा वायुसुरा शिवाच्छदक्षशल्वे वा न तद्रोधकम्। चूर्णं तस्य च पल्लवे विनिहितं जप्तं सहस्राचरं कान्तं शत्रुगृहेषु तच्छिरसि वा तेषां कुलोच्चाटनम्। जप्त्वारामे श्मशाने च निर्माल्ये पदगोचरे। गर्दभावासभूमौ च भूतस्थाने चतुष्पथे। ऊषरे मेहनाभूमौ पुष्पितावासमेघयोः। आनीय शर्करां मन्त्री दिग्वासा दक्षिणामुखः। श्मशानलोष्ट्रे निक्षिप्य तत्राग्नौ भर्जयेत्तथा। चूर्णं तत्तु जपेन्नच्चं प्रक्षिपेच्छत्रुवेश्मनि। सेनामध्ये च सर्व्वेषां पश्चादुच्चाटनं भवेत्। गर्त्ते पिपीलिकानान्तु पादधूली षडाननान्। घृतान्नं सप्तराचन्तु जुहुयान्मन्त्रविन्निशि। भ्रमते काकवत् सर्व्वां महीमामारणाद्रिपुः। कृत्वा प्रतिकृतिं शत्रोर्जन्मऋक्षेण मन्त्रवित्। कृत्वा प्रतिष्ठां प्राणस्य विद्ध्वा मर्म्मसु कण्टकैः। आयसैर्मन्त्रमावर्त्त्य भौमवारोदयादिषु। धुस्तूररससम्पिष्टचिताङ्गारेण मन्त्रिणा। नित्यस्य पृष्ठतो बद्धकेशपाशेन तं जपेत्। श्मशाने शत्रुमाहूय तद्गृहे निखनेन्निशि। विद्वेषणं भवेत् सद्यो गौरीशङ्करयोरपि। अश्वत्थत्वचि मन्त्रार्णैर्दर्भितं साध्यमालिखेत्। अन्यद्विषतरोस्तद्वज्जप्त्वा तत्कृत्यया न्यसेत्। पूर्व्वोक्तकण्टकैर्विद्वान् जपेत् पिष्ट्वा शतं शतम्। विद्विष्टौ भवतस्तौ तु नाम्नामपि च तत्क्षणात्। वर्णांस्तान् विलिखेद्विषाख्यमभितः कोणेषु मन्त्राचरैः संरुद्धान् परितः प्रभञ्जनगृहं मध्ये च साध्यं

पृथक्। अङ्गारैः कनकोद्भवैरपि पदैर्मन्त्रं जपंस्ताड़येत्। कार्पासेन रणे कुजार्कदिवसे भूलोकविद्वेषणम्। आपाद्य पूर्वां मूर्त्तिञ्च मन्त्रो-दालिख्य शोधयेत्। आतपे निशि तां जप्त्वा वह्नेरुपरि लम्बयेत्। एवं सप्तदिनं द्रव्यैराजप्यालिख्य शोधयेत्। व्योमाग्निलशुलो-न्मत्तहिङ्गुसिद्धार्थशूरणैः। पिण्डैर्लवणसम्भूतैरुन्मत्तद्रवसङ्गतैः। पेषयित्वा तेन सम्यग् लिखेन्मन्त्री मनुं जपेत्। बलिमध्ये खनेत् कीलं युक्तरूपं तथोपरि। वह्निं प्रज्वाल्य तद्द्रव्यैर्गव्ययुक्तं हुनेज्जपेत्। निक्षिप्य प्रतिमां तत्र जपेन्नित्यं महामनुम्। सप्त-विंशं ततः कुण्डं शून्यागारे च वा हुनेत्। त्रिकोणशूलदीप्ताग्र-मेखलात्रितयान्वितम्। तत्रापि निखनेत् कीलं वह्निं प्रज्वाल्य पूर्ववत्। ततः प्रतिकृतिं मन्त्री वह्नेरुपरि लम्बयेत्। उक्त-द्रव्येण संलिप्तां ऊर्द्ध्वपादामधोमुखीम्। रक्तद्रव्यैः समाराध्य प्रज्वाल्य विषवृक्षजैः। इन्धनैः प्रतिमायाञ्च समित्प्रज्वलितां हुनेत्। आवरणादिभिरामर्त्त्यो लयं याति न संशयः॥ इति धूमावतीप्रकरणम्॥

अथ कृत्यापरिमलप्रयोगः। त्रयोदशपटले॥ अथातः सं-प्रवक्ष्यामि मन्त्रं परिमलात्मकम्। येन विज्ञानमात्रेण नासाध्यं भुवनत्रये। रुद्रजाया महायोगी नतो गौरीपदं वदेत्। भुवन-भयङ्करीति पदं वर्मान्तमुच्चरेन्मनुम्। अथवा प्रथमादन्यमथातो ब्रह्मणः पदम्। परिमल इत्यादि ब्रह्माद्यखण्डपरिमलः। षड्दीर्घयुक्तवीजेन मन्त्रार्द्धेनास्त्रयोगिणा। हृदयञ्च ततोऽर्द्धेन वर्मास्त्रेण शिरः क्रमात्। शिखाकवचनेत्रास्त्रमेवं न्यासक्रमः स्मृतः। अङ्गिरा च ऋषिर्देवी गायत्रीच्छन्द ईरितम्। सिंह-वक्त्रा च भूतानां भयङ्करिणतः परम्। महाकृत्या देवता चेत्युक्त्वा न्यासं समाचरेत्। सिंहाननां कृष्णमुखीं लम्बमानपयोधराम्। दंष्ट्राकरालवदनां त्रिनेत्रां सर्वतोज्ज्वलाम्। कृष्णकञ्चुकसं-

वीतां विधूमाग्निसमप्रभाम्। त्रिशूलचक्रमुषलखट्टाङ्गकर-पङ्कजाम्। लेलिहानां महज्जिह्वां विद्युत्प्रेच्चसभीषणाम्। ध्यात्वा कृत्यां विधानेन पूजयेन्मन्त्रवित्तमः। ध्यात्वा कृत्यामर्च्चयति रक्तैः पुष्पैश्च वश्यके। कृष्णा मारणकृत्येषु मांसरक्तासवैस्तथा। कृत्याञ्च मदनां सर्वकुल्यां स्वच्छादिनीं तथा। भीषणां भीसतीं चैव प्रतिष्ठाञ्च ततः परम्। विद्यामभ्यर्च्चयेदष्टपत्रेषु क्रमशः सुधीः। पूर्वे तु शाङ्करीनाम शुक्लवर्णां वरान्विताम्। द्विभुजां सौम्यवदनां पाशाङ्कुशधरां शिवाम्। दक्षिणे भीषकानाम लम्बजिह्वां सुधामुखीम्। कृष्णवर्णां रक्तमुखीं रक्तमाल्यानुलेपनाम्। चतुर्भुजां सिंहनादाह्लादकाञ्च कपालिनीम्। खड्गहस्तां शिरोमालां सर्वाभरणभूषिताम्। पश्चिमे वारुणीनाम स्वर्णवर्णां हसन्मुखीम्। सुरुद्रमालिकां शुभ्रदंष्ट्रामभयदां सदा। उत्तरे भीमिकानाम चतुर्वर्णभयङ्करीम्। पूजयित्वा जपेन्मन्त्रं नित्यमष्टोत्तरं शतम्। अवाप्य विनियोगस्तु कर्त्तव्यो मन्त्रिणा सदा। कालं विदित्वा प्रतिमां मधूच्छिष्टेन कारयेत्। द्वादशाङ्गुलं तत् शत्रोर्नखलोमसमन्वितम्। हृदये नामधेयञ्च फट्कारं सर्वमर्म्मके। अमुष्य प्राण इह चामुष्य जीव इह स्थितः। अमुष्य सर्वेन्द्रियाणि तथा चामुष्य वाङ्मनः। चक्षुःश्रोत्रघ्राणप्राणा-जिह्वानयत्वग्निवल्लभा। इति प्राणं प्रतिष्ठाप्य मरिचैर्लेपयेत्ततः। मृतब्राह्मणचाण्डालकेशाभ्यां पादयोः पृथक्। बद्धा कारस्करमये तोरणे चाप्यधोमुखीम्। तस्याधो मेखलायुक्तं त्रिकोणं तत्र कुण्डकम्। तत्र शावं विधायाग्निं परिस्तीर्य्य शरैस्तृणैः। विभीतकपरिध्या च कल्पयेद् यस्य मारणम्। जुहुयान्निम्बतैलाक्तैः काकोलूकस्य पिच्छकैः। दारयैनं शोषयैनं मारयेत्यभिधाय च। अष्टोत्तरशतेनैव मनुना विधिना बुधः। होमान्ते विधिवत् कृत्यामाराध्याग्नेश्च सन्निधौ। यो मे एकस्थगृहोऽतिदूरस्थो वान्तिके

ऽपि च। पिव कृत्येऽसृक् तस्य हुमित्युक्ता निवेदयेत्। संरक्ष्याग्निं विधानेन नवरात्रं समाचरेत्॥ हुमेद् यावत्तावदस्य भवेदेव रिपो-र्मृतिः। अर्कक्षीरेण मरिचं पिष्ट्वा सिद्धार्थमेव च। जले संलोड्य मन्त्रेण रिपुं ध्यात्वा निरुद्धदृक्। कृष्णाम्बरोत्तरीयाग्रं पादेनाक्रम्य तद्रिपुम्। वज्रं शूलमिति ध्यात्वा तस्योपरि विनिक्षिपेत्। नव-रात्रान्तरे शत्रुर्म्रियते नात्र संशयः। दूरसिद्धे चितावह्नौ तैला-सक्तैर्विभीतकैः। जुह्वतो म्रियते शत्रुः सत्यमीशनसोदितम्। रिपोः प्रतिकृतिं कृत्वा साध्यर्क्षफलकेऽमले। अर्कक्षीरेण मरिचं पिष्ट्वा तत्रैव लेपयेत्। फट्कारं हृदये कृत्वा शिवं निर्माय धूपकैः। क्षिपेत् कृष्णचतुर्दश्यां जप्त्वा मन्त्रं सहस्रशः। सद्यो-ऽवगाहनं कृत्वा कुर्य्याद् यस्यात्मरक्षणम्। मन्त्रं जप्त्वा विधा-नेन भेदयेत् सह मुद्रया। षण्मासात् म्रियते शत्रुः सन्ध्ययोरु-भयोरपि। वायुना चोद्धृतं पर्णं शुष्कं वैभीतकं ततः। गृहीत्वा च लिखेन्मन्त्री कृष्णसर्पस्य शोणितैः। नामधेयं रिपोरन्ते वायुवीजं प्रयोजयेत्। निखनेत्तस्य गेहे तु काकवक्त्रामये ध्रुवम्। वातोद्धूतैः शुष्कपर्णैः काष्ठैरशनिपातितैः। उष्ट्रास्थि च नवाङ्गारैः शत्रोरुच्चाटनं हुमेत्। दूर्वागुडूचीं गन्धेन सर्पिषा तिलतण्डुलैः। अन्नैः समिद्भिः पालाशैः शान्तिं कुर्य्याद्विचक्षणः। लक्ष्मीं विल्वफलैः पत्रैर्नन्द्यावर्त्तैः श्रियै तथा। वज्रपत्रैरपामार्गै-रङ्गारैश्च सुभद्रकैः। मधुरत्रयसंयुक्तै रेभिः कुर्य्यात्तु वश्यकम्। उक्तमे पनसे तन्त्रे वासवस्यापि कथ्यते। शान्तिं कृत्वा विधानेन जपेत् परिमलं त्विदम्। महाव्याधिप्रशमनं नित्यमष्टाधिकं शतम्। जपेदेकाग्रचित्तस्तु लोकवश्यकरं शुभम्। मनसा चिन्तयेदेतां गजारूढ़ां वियत्स्थिताम्॥ तस्य वश्या भवेत् क्षिप्रमश्वारूढ़ा तथा भवेत्। चौरव्याघ्रमृगादीनां सलिलादि-भयापहाम्। सकृत् श्रवणमात्रेण सर्वपापविनाशनम्। सप्ता-

भिमन्त्रितं तोयं पीत्वा नित्यं समाहितः। मेधावी च भवे-द्वाग्मी तावज्जप्ताभिषेकतः। सप्ताभिमन्त्रितं कृत्वा विषमप्य-मृतं भवेत्। मासं पक्षं द्विमासञ्च षण्मासं वत्सरन्तु वा। एवं यः कुरुते मर्त्त्यः स पुण्यां गतिमाप्नुयात्। अथ वक्ष्ये विशेषेण महाशान्तिविधिक्रमम्। सर्वसिद्धिकरं पुण्यं सर्वपापविनाशनम्। सर्वमुद्रापहरणं सर्वारिष्टविनाशनम्। महाव्याधिप्रशमनमप-स्मारविनाशनम्। योगिनीभूतवेतालाः प्रेतकुष्माण्डपन्नगाः। तत्र स्थाने न तिष्ठन्ति डाकिन्याद्या विशेषतः। कृत्यामभ्यर्च्चये-द्वत्स! यथाविधिपुरःसरम्। षोड़शारं लिखेत् पद्मं योनियुग्मं सविन्दुकम्। तन्मध्येऽष्टदलं लिख्य यकारादीन् न्यसेत् क्रमात्। तन्मध्ये रसकोणन्तु लिखेन्मूलमनुं स्मरन्। चन्द्रविम्बं लिखे-न्मध्ये तस्योर्द्ध्वे प्रतिमां लिखेत्। तस्य मध्ये न्यसेत् कुम्भं वने स्रग्दामभूषिताम्। तस्य मध्ये न्यसेत् कृत्यां सर्वलक्षण-संयुताम्। पूजयेच्च यथान्यायं पायसन्तु निवेदयेत्। परि-तोष्य घटे न्यस्य चासिताङ्गादिभैरवान्। असिताङ्गो रुरुश्चण्डः क्रोधीशोन्मत्तभैरवः। कपाली भीषणश्चैव संहारश्चाष्टमः स्मृतः। गन्धपुष्पादिनाभ्यर्च्च्य तद्वाह्ये चेत्रपालकान्। लोकपालं यजेद्देवीं तदग्रे होममाचरेत्। जुहुयादाज्यापामार्गाविचताभिरमर्षणः। दूर्वाग्रखदिराश्वत्थं प्रत्येकन्तु शताधिकम्। कुण्डे वा स्थण्डिले वापि होमकर्म्म समाचरेत्। तस्य दक्षिणपार्श्वे तु लक्ष्मीं ध्यायेद् यथाविधि। कुण्डमध्ये न्यस्येद्देवीं दक्षिणे तु श्रियं स्मरेत्। वामपार्श्वे स्मरेद्देवीं हृल्लेखां परमेश्वरीम्। तस्यैव वामपार्श्वे तु पूजयेद्दश नायकान्। अयुतं मूलमन्त्रञ्च जपेन्मृत्युविनाशनम्। अयुतं भ्रूणहत्यायां जपेत् परिमलं विदुः। महाव्याधिप्रशमनं तावज्जप्ताभिषेकतः। एवं यः कुरुते मर्त्त्यः पुण्यां गतिमवाप्नु-यात्। येन ज्ञातं परिमलं यस्य वक्त्रे स्थितं सदा। तस्यावश्यं

निवेद्येत व्याधिभ्योऽपि भयं न हि। इत्यादिविधिना चन्द्रे ज्ञेयः परिमलो विधिः। महाशान्तिकरः पुंसां दुःखादिविघ्ननाशनः॥ इति कृत्यापरिमलः॥

अथ जयदुर्गा। चतुर्दशपटले॥ दुर्गे दुर्गे पदं चोक्त्वा रक्षणीति पदं ततः। तारादिवह्निजायान्तो जयदुर्गामहामनुः॥ जातिमध्यगतं कृत्वा न्यसेन्मन्त्रपदं बुधः। रक्षाकरीयं कथिता जयदुर्गा वर्मसंयुता। श्यामां त्रिलोचनां दुर्गां ध्यात्वा त्वेनां चतुर्भुजाम्। शङ्खं चक्रं शरं शूलं वहन्तीं रौद्ररूपिणीम्। युद्धे च व्यवहारादौ जयेदेतज्जपान्नरः। जयां श्रीं पूजयेन्नित्यां शङ्खञ्च छुरिकां तथा। जयदुर्गामनुः प्रोक्तः कथ्यते चापरो मनुः। नमो भगवतीत्युक्त्वा ज्वालामालिन्यतः परम्। गृध्रगणपरिवृते द्विठस्तारादिरीरितः। श्रीं नमो हृदयं प्रोक्तं भगवति शिरस्तथा। ज्वालामालिनी शिखा गृध्रगणपरिवृते ततः। कवचं स्वाहास्त्रमित्येतत् जातियुक्तं न्यसेत्तनौ। अयुतं नियुतञ्चैतज्जयमन्त्रं यजेज्जयी। रुद्राङ्गनाग्निजायाभ्यां रुद्धा ज्वालामुखीत्यपि। मन्त्रान्तरं समाख्यातं ज्वालामुख्यामनुत्तमम्। दीपतैलाक्तपादोऽर्द्धरात्रे गुरुदिनादितः। जपेदष्टसहस्रन्तु त्रयोविंशतिवासरान्। प्रत्यहं सा रौप्यषट्कं ददातीति न संशयः। नारायणीयं कथितमगस्त्यै र्नवधा पुनः। दुर्गा नवप्रकाराख्या नवदुर्गा विशेषतः। सुसिद्धिमिच्छता गोप्यो सानवेन समीरयेत्। पुरोऽपि नृपतेऽर्व्वापि धार्मिकस्य न्यशेषतः। नवदुर्गाविधानन्तु दर्शयेत् कर्मगौरवात्॥ नृपश्च सम्यगाराध्य मन्त्रञ्च विविधैर्धनैः। भक्त्या सन्निहितं कुर्य्याद्रक्षार्थं नित्यमादरात्। आपत्स्वयं प्रयोक्तव्यो मारणादौ विशेषतः। ततो मन्त्री प्रयत्नेन प्रकुर्य्यान्मारणक्रियाम्। परैर्दुर्द्धर्षितो मन्त्री राज्ञे सर्वं निवेदयेत्। निवेद्य विधिवत् पश्चात् मन्त्रवर्षेण निर्द-

हेत्। स्मृतिमात्रेण वै मन्त्री रिपून् सर्वान् विनाशयेत्। प्रदद्या-द्दक्षिणां तस्मै सहस्रं शतमेव वा। गवां सुवर्णनिष्काणां भूमिं वा शस्यशालिनीम्। सर्वशान्तिमवाप्नोति सर्वरचाकृतिर्भवेत्॥ इति फेत्कारिणीतन्त्रे जयदुर्गागदभगणपरिवृताज्वालमुखी-प्रयोगः॥

इति श्रीप्राणतोषिण्यां चतुर्थे काम्यकाण्डे कुक्कुटोच्छिष्ट-
चाण्डालिनीधूमावतीकृत्यापरिमलजयदुर्गागदभगण-
परिवृतज्वालामुखीप्रयोगरूपपल्लवकथनं नाम
चतुर्थः परिच्छेदः॥

अथ दुर्गोत्सवः॥ मत्स्यसूक्ते महामन्त्रे उपरिभागे एक-चत्वारिंशत्पटले॥ भगवानुवाच॥ अथ चाश्वयुजे शुक्लपक्ष-मासाद्य नन्दिकाम्। समाराध्य ततो दुर्गां हविष्याशी जिते-न्द्रियः। कृत्वा स्रोतोजले स्नात्वा तस्यास्तीरे समर्चयेत्। तस्या इति स्त्रीलिङ्गनिर्देशान्नद्यास्तीरे समर्चयेदित्यर्थः॥ पूजा-प्रकारोऽपि तत्रैव॥ नन्दायां पूजयेत् कुम्भे द्वितीयायाञ्च पुस्तके। तृतीयायां तथा खड्गे चतुर्थ्यां केशशोधनम्। पञ्चम्यां सूर्य्यबिम्बे च षष्ठ्यां विल्वस्य मूलके। सप्तम्यां पत्रिकायान्तु अष्टम्यां प्रतिमासु च। ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यां विल्वाभि-मन्त्रणम्। मूलाद्यपादे सप्तम्यां पत्रिकायाः प्रवेशनम्। पूर्वा-षाढ़ायुताष्टम्यां देवी पूज्या महोत्सवैः। उत्तरेण नवम्यान्तु बलिभिः पूजयेच्छिवाम्। श्रवणान्ते दशम्यान्तु प्रणिपत्य विस-र्जयेत्। एतेन देवीपुराणोक्तस्य कन्यासंस्थे रवौ शक्रशुक्लामारभ्य नन्दिकामिति वचनस्य षष्ठीतः प्रभृति नवमीपर्य्यन्तं पूजेयमि-त्येकत्वेनोक्तमिति स्मार्त्तभट्टाचार्य्यव्याख्यानम्। नन्दिकाप्रति-पदिति दुर्गाभक्तितरङ्गिण्युक्तं युक्तमिति वाच्यम्। महानवमी-विहितषष्ठ्यतिक्रमे मानाभावादिति वचनादेवं प्रतिपदिति

दुर्गाभक्तितरङ्गिण्युक्तमेव मद्रमुत्पश्यामः। केशशोधनमिति सप्त-म्यर्थे प्रथमा। केशशोधनकङ्कतिकायां पूजयेदित्यर्थः॥ नक्ष-त्राणामभावे कृत्यलोपः स्यादित्याह तत्रैव॥ नक्षत्राणाम-भावेऽपि षष्ठ्यादिक्रमशस्तथा। सर्वमेव विधिं कुर्य्यात्ताराला॒भे फलोदयः॥ फलोदयः विशिष्टफलोदय इत्यर्थः। अन्यथा नक्षत्राभावे फलाभावप्रसङ्गः स्यात्। इति प्रतिपदादिकल्प-कथनम्।

अथ पूजादिकालस्तत्रैव॥ ज्येष्ठा वाप्यथवा षष्ठी सायं-काले न चेद्भवेत्। सायमेव तथापि स्याद्बिल्वशाखाभि-मन्त्रणम्। पूर्वां षष्ठीं सनक्षत्रां सायं प्राप्तामपि त्यजेत्। यदा तु पत्त्रिकापूजा न परेद्युर्भविष्यति। सन्निकृष्टन्तु यत् पूर्वं पतितं दिवसस्य च। तद्दिने वरणं कृत्वा परे शाखां प्रवेशयेत्। सप्त-म्यान्तु यदा षष्ठी निःसृता वा न निःसृता। वर्द्धते सप्तमी किन्तु दण्डमात्रं परे यदि। परेऽहनीति शेषः। मुहूर्त्तमधिका वापि नवम्यामष्टमी भवेत्। वर्द्धते दशमी चैव तदा कार्य्यं यथा शृणु। न केवलं नवमी दशमी चेति चार्थः। सप्तम्यां बिल्ववरणमष्ट-म्यान्तु प्रवेशनम्। पूजाष्टका नवम्यान्तु दशम्यां प्रेषयेच्छिवाम्। अत्र केचित् सामान्यविधिप्राप्ततिथिबाधभिया सप्तम्यां बहुका-लीनसप्तमीयुतषष्ठ्यामिति व्याख्यान्ति। तत्र षष्ठी न निःसृतेति वचनमनाकुलं वेति प्रतिभाति। यदा षष्ठी च सप्तम्यां अष्टम्या-ञ्चापि वर्द्धयेत्॥ स्वार्थे इण् पाणिनिविदान्तु णिच् वर्द्धेत। अर्थात् सप्तमीति शेषः। अष्टमी परगा चैव तद्दिने च दिनक्षयः। तदा षष्ठ्यां पूर्वदिने बिल्वस्य वन्दनं मतम्। षष्ठीसंयुक्तसप्तम्यां पत्रि-कायाः प्रवेशनम्। अतिकल्ये तथाष्टम्यां मृण्मयीञ्च प्रवेशयेत्। अतिकल्ये अतिप्रत्यूषे॥ सप्तम्या संयुताष्टम्यां महापूजोत्सव-क्रिया। नवम्यान्तु बलिं दद्याद्दशम्यां प्रेषयेच्छिवाम्। नवम्या-

मष्टमी यत्र नवमी परतो नचेत् । भवेद् वा दशमीविद्धा नवमी च परेऽहनि । तदाष्टमीनवम्योश्च द्वयोः पूजाद्वयं किल । एकस्मिन्नेव दिवसे कर्त्तव्यं बलिभिः सह । अष्टका नवमीपूजा त्रिसन्ध्यव्यापिनी परा । तदा तदा नवम्युक्तं बलिदानं परेऽहनि । त्रिसन्ध्यव्यापिनी चेत् स्याद् यदा पूर्वदिनेऽष्टमी । दशमीविद्धनवम्यान्तु कुर्य्यात् पूजां न संशयः । अष्टकानवमीयोगो रात्रियोगो विशिष्यते । अर्द्धरात्रौ शतगुणं सन्ध्यायां द्विगुणं स्मृतम् । सप्तम्यादिषु पूर्वाह्णे तारायोगो न चेद्भवेत् । तदाप्यारभ्य पूर्वाह्णे नक्षत्रांशे समापयेत् । दशम्यां श्रवणे व्यापौ तथोत्थाय कृतक्रियः । प्रातः सम्पूज्य विधिवत् नृत्यगीतपुरःसरैः । प्रतीक्ष्य श्रावणं कालं प्राप्ते सम्प्रेषयेच्छिवाम् । यदि नक्षत्रमाश्रित्य सप्तम्यादि त्रिकं स्थितम् । तदैव श्रवणापेक्षा दशम्यां केचिदब्रुवन् । श्रवणान्ते गते रात्रौ तदन्ते नवमी दिने । स्वस्वस्थानोचितं कर्म दक्षिणान्तं समापयेत् । दशम्यान्तु तदप्राप्तौ धनिष्ठायां यथाविधि । प्रेषयेद्भगवतीं दुर्गामशेषैः शारदोत्सवैः । नवमी दशमीयुक्ता श्रवणा तु गता निशि । तदा सम्प्रेषयेद्देवीं नवम्यां दशमीक्षणे । अष्टमीदिनपर्य्यन्ता रात्रौ चेन्नवमी भवेत् । नवम्यामपि कुर्वीत महापूजां महानिशि । चन्द्रोदिते निशायान्तु या भवेदष्टमीतिथिः । महाष्टमीति सा प्रोक्ता देव्याः प्रीतिकरी परा । ततोऽनु नवमी या स्यात् सा महानवमीतिथिः ।

पूजाधारमाह तत्रैव ॥ चित्रे च प्रतिमायाञ्च मृण्मय्यां श्रीफलेऽपि च । महायोनौ चन्द्रबिम्बे शिलायां योनिमण्डले । पुस्तके पादुके खड्गे महाबिम्बे तथैव च । पुण्यक्षेत्रे च गङ्गायां देवीमावाह्य पूजयेत् ॥ प्रतिमाकरणविधिनिषेधावपि तत्रैव ॥ न गृही मृण्मयीं कुर्य्यान्न वै तालमयीं क्वचित् ।

त्रिहस्तां तृणगर्भाञ्च विल्वयुग्मे समर्च्चयेत्॥ न गृही मृण्मयीं केवलमृत्तिकया प्रतिमां न कुर्य्यात्तथा तालमयीं सार्द्धत्रिहस्त-परिमितां गृही न कुर्य्यात्। विधिमाह त्रिहस्तामिति। त्रिहस्तां प्रतिमामित्यधिकपरिमाणव्यवच्छेदार्थमुक्तम्। तेन तन्न्यून-प्रतिमाकरणे न दोषः। मृण्मय्याः प्रतिप्रसवमाह तृणगर्भा-मिति। तेन तृणगर्भमृण्मयीपूजने दोषः। चकारो भिन्नक्रमे तृणगर्भां समर्च्चयेत् विल्वयुग्मे चेति। ब्राह्मणादिभेदेन विल्वयुग्मस्य विशेषमाह। माहेन्द्रस्थञ्च ईशस्थं ब्राह्मणस्य प्रशस्यते॥ ऊर्द्ध्वस्थमुत्तरस्थञ्च क्षत्रियस्य वरानने!। वायव्य-स्थञ्च वैश्यस्य शूद्रस्य च वरानने!। माहेन्द्रस्थं तथेशस्थं सर्वेषा-मथवा प्रिये!। पूर्व्वादिस्थविल्वयुग्मफलमाह॥ माहेन्द्रस्थे ज्ञानवृद्धिरीशस्थे सर्वकामदम्। वायुस्थे च धनावाप्तिरैश्वर्य्य-मुत्तरास्थिते। याम्यस्थे शत्रुवृद्धिः स्यात् कोणगे मरणं भवेत्। वायूीशानकोणस्थस्य विशेषफलाभिधानादत्र कोणपदमग्नि-नैऋतकोणपरं पारिशेष्यादिति। विल्वयुगस्य शुभलक्षणमग्राह्य-त्वञ्चाह तत्रैव॥ समं वृत्तं समं स्थूलं शस्तं कीटादिदूषितम्। न ग्राह्यं परमेशानि! कदाचिदूर्द्ध्वमध्यगम्। ऊर्द्ध्वगेतिक्षत्रिय-भिन्नस्याग्राह्यत्वम्। सममिति सर्वस्य। यद्वा कदाचिदुक्तस्थानस्थ-स्याप्राप्तावूर्द्ध्वमध्यगमपि ग्राह्यं निन्द्यफलाश्रुतेरिति तात्पर्य्यम्! विल्वयुग्मादेश्च्युतिदोषोऽपि तत्रैव॥ स्नानस्थाने नीयमाने च्युते युग्मे महेश्वरि!। मृण्मय्याश्च च्युतिर्यत्र जायते मरणं ध्रुवम्। तद्दोषप्रशमनार्थञ्चायुतं जुहुयाद् घृतैः। धेनुञ्च दक्षिणां दद्यात् श्वेताश्वं श्वेतच्छागलम्॥ इति विल्वयुगप्रतिमाच्युतिप्रायश्चित्तम्।

नन्दामारभ्य दशमीपर्य्यन्तमुत्सवं विदुः। महामहोत्सवं ज्ञेयं त्रिदिनं तत्र प्रकीर्त्तितम्। तदन्यदेवतायागं यः करोति महे-श्वरि!। न तस्य फलमाप्नोति सोऽन्ते नरकमाप्नुयात्। देव्या

भागगतं सर्वं तस्मान्नान्यं समर्चयेत्। पुनरष्टम्यां प्रतिमासु चेत्यन्तमभिधाय। प्रहरे प्रहरे स्नानं प्रहरे प्रहरे बलिः। प्रहरे प्रहरे होममन्नञ्चामिषसंयुतम्। प्रभूतबलिदानञ्च नवम्याञ्च प्रशस्यते। नवम्या पूजिता देवी ददात्यनन्तकं फलम्॥ देशविशेषे मूर्त्तिविशेषोऽपि तत्रैव॥ ओड्रदेशे कलिङ्गे च मध्यदेशे तथैव च। देवी चाष्टभुजा पूज्या अयोध्यायां सुराष्ट्रके। चोहारे चैव श्रीहट्टे कोशले शववल्लके। अष्टादशभुजा कार्य्या महेन्द्रे च हिमालये। कौरवे मथुरायाञ्च केदारे रामठेऽपि च। पूजयेद् द्वादशभुजां मकरन्दे विराटके। कौमारे चैव गौड़े च पारिपात्रे च दक्षिणे। देवी दशभुजा कार्य्या मरहट्टे गजाह्वये। पूर्णे चैव तु नेपाले कच्छमेशे च कङ्कणे। चतुर्भुजा भवेद्देवी द्विभुजा सागरान्तिके। दीपस्थानन्तु कूर्म्मचक्रशिरःस्थानम्। तत्तु तत्त्वसारकारेणैव धृतम्। दीपस्थानविवर्जितेनेष्टकारचितस्थानेन कदाचन देवीमर्च्चयेदित्यनेन दीपस्थाने तृणकाष्ठादिमयगृहे न दोषः। तथा दीपस्थानभिन्ने इष्टकामयगृहेऽपि दीपस्थानभिन्नस्य प्रतिप्रसवमाह॥ ऐशान्याञ्च महेन्द्रे वा उत्तरे भवनस्य च। कारयेद्भवनं दिव्यं धनैश्वर्य्यप्रसादतः। एकत्रिंशच्च दैर्घ्येण पञ्चत्रिंशदथापि वा। वर्त्तुलं नवहस्तं वा तूर्य्यहस्तमथापि वा। विभिद्य पार्श्वयोर्भागं कृत्वा मध्यं सुशोभनम्। चतुर्दिक्षु प्रमाणेन देवीं तत्रैव कारयेत्। अथ सिंहासनादिलक्षणम्। हस्तमात्रं समुत्सेधं लोम तत्र समन्वितम्। सिंहासनं महाचक्रं सर्वतोभद्रमेव च। रजसा मण्डलं कुर्य्यात् पीठं तत्र निवेशयेत्। क्षीरं श्रीपतिकोद्भूतं सहकारमथापि वा। मुष्टिबाहुप्रमाणेन प्रादेशोच्छ्रायमेव च। प्राप्तेऽष्टधा च कुटिलं चतुष्कोणं समं शुभम्। भद्रासनमिदं प्रोक्तं कूर्मासनमथापि वा। विवाहे सौरयागे च सहकारं विवर्जयेत्। वारुणं वा महेशानि! पद्मकं देवदारुकम्।

प्रशस्तं सर्वदेशेषु तथा शालमयानि च। ततोऽरुणेन गन्धेन कुङ्कुमेन गजेन वा। महायोनिं लिखित्वा तु वहिः पद्मद्वयान्वितम्। गजेन मृगमदेन॥ तत्र संस्थापयेद्देवीं सर्वकामार्थदायिनीम्।

षष्ठीकर्त्तव्यकर्माह। नित्यं निर्वर्त्य विधिवत् सायं षष्ठ्यां ततो गृही। यायादलङ्कृतो मौनी विल्वमूलं समाहितः। ब्राह्मणान् भोजयित्वा तु पञ्चाङ्गेन प्रणम्य च। उत्तराशामुखो भूत्वा पीठं निर्माय साधकः। पञ्च देवान्नमस्कृत्य ततः सङ्कल्पयेत् सुधीः। त्र्यम्बकेणैव मन्त्रेण वृक्षं तोयेन स्नापयेत्। क्षीरेण पञ्चगव्येन तथा पञ्चामृतेन च। स्नात्वा कुम्भत्रयेणापि सूत्रमाणेति वै ऋचा। निषिक्तेन तु सूत्रेण त्रिगुणेन च पञ्चधा। वेष्टयेद्दक्षिणावर्त्ते पञ्च व्रीहींश्च वापयेत्। अद्यामुके मास्यमुके पक्षे एतस्मिन् पुण्यभूप्रदेशे भवन्तमम्बिकाशिवयोः प्रियतरं शाण्डिल्यगोत्रं विल्ववृक्षम् अमुकगोत्रोऽमुकदेवशर्म्मा अमुककामनया अभिन्नवृन्तफलयुगलयुक्तां शाखां दुर्गास्वरूपतः पूजार्थं नेतुं नक्तमेभिरभ्यर्च्य वृणे। हस्तं दत्त्वा वृक्षमूले फलैर्माल्यैः समन्वितम्। संवाह्य तैः समभ्यर्च्य स्थण्डिले पूजयेत्ततः। गणेशमुत्तरद्वारि पूर्वे चण्डञ्च दक्षिणे। प्रचण्डं पश्चिमे चैव वेतालञ्च ततः परम्। मध्ये आधारशक्त्यादीन् साङ्गोपाङ्गांस्तथैव च। महारजतसङ्काशां पूर्णचन्द्रनिभाननाम्। नानारत्नसमाकीर्णां कङ्कणैः कटकैरपि। विभ्राजमानां दशभिर्बाहुभिः सुमनोहरैः। शरदम्भोजसङ्काशविकाशिमुखपङ्कजाम्। इन्दीवराभैर्विषमैर्लोचनैस्त्रिभिरुत्तमैः। विद्योतयन्तीं नयनैरुद्दामद्युतिदामभिः। त्रिशूलं करवालञ्च चक्रं वाणञ्च शक्त्यपि। चिन्तयेद् वामभागे तु खेटकं पूर्णचापकम्। पाशाङ्कुशञ्च परशुं ज्वालामालोपशोभितम्। ऊर्द्ध्वपादं वाम-

पादं महिषोपरिसंस्थितम् । माहिषं छिन्नशिरसमधस्तात् परिचिन्तयेत् । खड्गचर्म्मधरं तत्र समुद्भूतं महासुरम् । विल्व-वृक्षस्थितां ध्यायेत् सर्वकामार्थदायिनीम् । एवं ध्यात्वा महे-शानि ! आसनं प्रतिपूज्य च । मूलेनावाहनं कुर्य्यात् प्रद-द्यादासनं ततः । पाद्यादिकं ततो दत्त्वा अङ्गपूजां विधाय च । पूर्वादिपत्रमूलेषु जयन्त्यादीन् समर्चयेत् । पत्राग्रे चैव ब्रह्मादीन् भैरवान् पत्रमध्यतः । तत्रागत्य वृक्षमूले वृक्षाग्रे च समर्चयेत् । वेतालं मणिभद्रञ्च यक्षकञ्च तथैव च । त्रिपुरान्तकं समाख्यातं कर्णं हेतुकमेव च । अग्निजिह्वरसञ्चैव गन्धपुष्पैः समर्चयेत् । ततो ग्रहान् दिगीशांश्च तदस्त्राणि च तद्बहिः ॥ अत्र दिक्पालतदस्त्र-पूजायां विशेष उक्तः शारदातिलके चतुर्थपटले महाप्रामाणिकै-र्लक्षणाचार्य्यैः । यथा । अन्ते यजेल्लोकपालान्मूलपारिषदान्वितान् । हेतिजात्यधिपोपेतान् दिक्षु पूर्वादितः क्रमात् ॥ मूलपारिषदा-न्वितानिति अस्यायमर्थः । यदा शक्त्यावरणे इन्द्रादिपूजा तदा प्रत्येकं शक्तिपारिषदायेति एवं गणपतिपूजायां प्रत्येकं गणेश-पारिषदायेति एवं सूर्य्यपूजायां प्रत्येकं सूर्य्यपारिषदायेति । एवं विष्णुपूजायां विष्णुपारिषदायेति । हेतीति प्रतियोगि जात्यधि-पाना पूर्वमुच्चरणं पश्चाद्धेतीनां मूले हेतिशब्दस्य पूर्वनिपातः । शस्त्र जातयः स्वरतेजःप्रेतरक्षोजववातचैत्रभूतनागलोकान् सवाहनान् सपरिवारानित्यपि ज्ञेयम् ॥ दिक्पालानाह तत्रैव ॥ इन्द्रमग्निं यमं रक्षो वरुणं पवनं विधुम् । ईशानं पन्नगाधीशमध ऊर्द्ध्वं पिता-महम् । पीतो रक्तोऽसितो धूम्रः शुक्लो धूम्रः सितावुभौ । गौरोऽरुणः क्रमादेते वर्णतः परिकीर्त्तिताः । तेषां वाहनानि राघवभट्टधृतानि । यथा । ऐरावताजमहिषनरमकरहरिणाश्व-वृषभरथहंसाः । एतेषां वीजानि कपिलपञ्चरात्रे ॥ यान्यु-लोमक्रतीयन्तु द्वितीयं लविलोमतः । चतुर्थकं विलोमेन वानु-

लोमेन चाष्टमम्। तृतीयञ्चानुलोमेन न विलोमात् तृतीयकम्। चतुर्थं सप्तमं वर्णं वानुलोमेन संस्थितम्। चतुर्थं खविलोमेन तृतीयं गविलोमतः। सुरान्तेषु सुनादाभ्यां भेदितं सर्वमेव तत्। आनुपूर्वीकृतं वीजं ब्रह्माण्डं वासवादिकमिति। एतानि वीजानि दीर्घाणीति सम्प्रदायविदः। अनन्तब्रह्मणोर्माया पार्श्वी इति केचित्। पृथ्व्यग्निपवनाद्यन्ता वरुणानिलसेन्दुकैः। अनन्तविन्दुसंयुक्तैरर्च्याः पार्श्वेन माययेति। प्रयोगो यथा। ओं लां इन्द्राय पीतवर्णाय सुराऽधिपतये वज्रहस्ताय ऐरावतवाहनाय सपरिवाराय दुर्गापारिषदाय नमः। एवं रां अग्नये पिङ्गलवर्णाय तेजोऽधिपतये शक्तिहस्ताय अजवाहनाय सपरिवाराय दुर्गापारिषदाय नमः। इत्यादि ऊह्यम्। तदुक्तं राघवभट्टधृतेन॥ प्रयजेत् स्वदिक्ष्वमलधीः स्वजात्यधीरहेतिपरिवारसंयुतानिति ग्रन्थकृदपि॥ नित्यातन्त्रे॥ लोकपालान् यजेदन्ते वाहनायुधसंहतान्। इत्येषां पूजानन्तरमायुधान् पूजयेत्॥ शारदायाम्॥ वज्रं शक्तिं दण्डमसिं पाशमङ्कुशकं गदाम्। शूलं चक्रं पद्ममेषामायुधानि क्रमाद्विदुः॥ मेरुतन्त्रे चतुर्थप्रकाशेऽपि॥ वज्रं शक्तिं दण्डखड्गपाशाङ्कुशगदाः पुनः। पूर्वतस्तु तथैश्यान्यां शूलचक्राम्बुजान्वितमिति। आयुधानां रूपमुक्तम् शारदायाम्॥ पीतशुक्लासिताकाशविद्युद्रक्तसितासिताः। कुरुविन्दपाटलाभा वज्राद्याः परिकीर्त्तिताः। कुरुविन्दः पद्मरागः॥ तत्र प्रयोगो यथा॥ ओं वज्राय वज्रहस्ताय पीतवर्णाय वज्रलाञ्छितमौलये सवाहनाय सपरिवाराय दुर्गापारिषदाय नमः। इत्याद्यूह्यम्। तदुक्तं राघवभट्टधृतेन। अर्च्या वहिर्निजमलञ्चितमौलियुक्ता स्वस्वायुधाभयसमुद्यतपाणिपद्मा इति॥ मत्स्यसूक्ते॥ बलिं दद्याद्विधानेन होमं कुर्य्याद्विधानतः। यवं चीरञ्च शाल्यन्नं शान्त्यर्थञ्च निवेदयेत्। यचेभ्यो

यावकान्नञ्च माषभक्तमथापि वा। कृताञ्जलिस्ततो भूत्वा जानुभ्यामवनीं गतः। ततो बोधनमन्त्रांश्च पाठयेत् सुरपूजिते। ऐं रावणस्य बधार्थाय रामस्यानुग्रहाय च। अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा। अहमप्याश्विने मासि ततस्त्वां बोधयामि ते। षष्ठ्यां नक्षत्रयुक्तायां सायाह्ने बोधयामि ते। एतदर्थं आर्द्रानक्षत्रालाभेन पाठ्यं तात्पर्य्यार्थस्यासमत्वतत्त्वादिति। श्रीशैलशिखरे जातः श्रीफलः श्रीनिकेतनः। नेतव्योऽसि मया गच्छ पूज्यो दुर्गास्वरूपतः। अशेषसुखलाभाय नारीविभवहेतवे। नेतव्यः श्वोदिते गेहे सर्वकामप्रदो भव। मेरुमन्दरकैलासहिमवच्छिखरे गिरौ। जातः श्रीफलवृक्ष! त्वमम्बिकाशङ्करप्रियः। नमस्ते विल्ववृक्षाय सर्वकामप्रदाय च। दातव्यं श्वोदिते हस्तं पूजनीयं फलद्वयम्। महादेवप्रियोऽसि त्वं श्रीवृक्ष! सर्वकामदः। दुर्गायज्ञनिमित्तार्थं शाखामेकां प्रयच्छ मे। तच्च आरोहयेत् पश्चादुत्तराशामुखेन च। किञ्चिदुष्णेन तोयेन कुशपुष्पफलाक्षतम्। शङ्खे कृत्वा ददेदर्घ्यं विल्ववृक्षोद्भवेन च। दन्तकाष्ठं ततो दद्यादरिष्टञ्चानुमार्जयेत्। दूर्वाक्षतेन सिद्धार्थं वस्त्रयुग्मेन वेष्टयेत्॥ इति विल्ववृक्षनिमन्त्रणरूपषष्ठीकृत्यम्।

अथ सप्तमीकृत्यं तत्रैव॥ मूलयुक्तेन सप्तम्यां भास्करे चोदिते प्रिये!। विल्वमूलं ततो गत्वा गन्धपुष्पैः समर्चयेत्। गृहीत्वा चैव कट्टारं सुतीक्ष्णं मुष्टिसंयुतम्। द्वादशाङ्गुलकं मानं मुष्टिः षड़ङ्गुलं स्मृतम्। छिन्धि छिन्धि युगं दद्यात्तारयुग्मं तथैव च। अस्त्राय हृदयान्तोऽयं छिन्नमन्त्र उदाहृतः। युगमिति सप्तम्यर्थे प्रथमा युगे अर्थाद्विल्वयुगान्वितशाखाविशेषे। दद्यादर्पयेत् पूर्वोक्तकट्टारकमिति शेषः। रजकस्य वस्त्रं ददातीतिवदत्र दाधातोरर्पणार्थकता। अर्पणमन्त्रमाह। छिन्धि

छिन्धीति न तु छिन्धि छिन्धीत्यनेन युगशब्दात् त्रयच्छिन्धी-त्यस्य चतुष्कत्वापत्तेः। छेदनमन्त्रस्तु तारयुग्ममित्यादि। छिन्ने छेदने मन्त्रश्छिन्नमन्त्र इत्यर्थः। चालनमन्त्रस्तु। चामुण्डे! चलयुग्मन्तु चालयद्वितयं तथा। शीघ्रञ्च मन्दिरञ्चैव प्रविश पूजालयं पदम्। ताराद्यो वह्निजायान्तो मनुनानेन चालयेत्॥ छेदनकाले स्त्रीप्रभृतीनां दृष्टिर्निषिद्धा यथा तत्रैव। स्त्रीणां दृष्टिः पशोर्दृष्टिर्यथा नैव तु छेदने। तथा कुर्य्यात् प्रयत्नेन शिविकायां प्रवेशयेत्। पूजादिषु प्रणयेत् तदाह॥ उन्मत्तं पतितं क्लीवं वामनं छिद्रसंयुतम्। न योजयेद्धरिद्रञ्च मन्त्रकुण्ठं न वेशयेत्। छेदने नयने काले स्थापने च विशेषतः। भग्ने तु मरणं विद्यात् प्रायश्चित्तं तदाचरेत्। पार्श्वे दीपयुगं दद्या-दिक्षुदण्डाश्रयं द्वयम्। गृहप्रवेशकाले च घटयुग्मञ्च स्थापयेत्। घटं सम्मार्जनीयुक्तं रक्तसूत्रेण गुम्फितम्। चूतपत्रसमायुक्तां दर्भ-च्छेदनभूषिताम्। द्वारि द्वारि न्यसेत् स्रक्तां सपुष्पां शोभनां शुभाम्। समूलां छिन्नरहितां तोरणेन विभूषिताम्। जनतेति वत् स्रक्शब्दात् समूहार्थे ताप्रत्ययः। स्रक्तां मालासमूहं द्वारि न्यसेदित्यर्थः। प्राप्ते प्रतोलिकां द्वारि गृहिणी लक्षणान्विता। साध्वीभिर्नवनारीभिः कृतमङ्गलपूर्वकम्। वीजयेद्व्यजनेनापि वामदक्षिणपार्श्वयोः। कटुत्रयं सलवणं मुखे कृत्वा महेश्वरि!। देव्याः प्रचुम्बनं कुर्य्यात्ततः कुर्य्याद् गृहाङ्गने। पत्रिकां स्नान-पीठे च वस्त्रादीन् मध्यदेशके। देशविशेषे नवपत्रिकाक्रम-माह। माणादींश्चैव श्रीशैले धान्यादिं मलये गिरौ। क्रमु-कादिं सागरान्ते कच्वी चैकाम्रकादिके। रम्भादिं गौड़े वङ्गे च कौमारे कालरूपके। प्रतिपीठे यजेद्वापि लक्ष्मीकामेन सुन्दरि!। रम्भा कच्वी हरिद्रा च जयन्ती विल्वदाड़िमौ। अशोको माणक-श्चैव धान्यादिर्नवपत्रिका। समूला पत्रिका ग्राह्या हरिद्राधान्यकं

विना। समूला एव रम्भा स्याद्रामरम्भां विवर्जयेत्। श्वेतरम्भा राज्यरम्भा तथा चैव सुगन्धिनी। एषामेकतमं ग्राह्यं वीजरम्भां विवर्जयेत्। शर्क्करास्वादुयुक्तायाः फलं वृत्तञ्च सन्त्यजेत्। त्रिपुत्रञ्चैकपुत्रञ्च मृतवत्सञ्च वर्जयेत्। द्विजातिरोपितं ग्राह्यमथवा गिरिसम्भवम्। ब्राह्मणस्य गृहे जातं तीर्थेभ्योऽन्यसमुद्भवम्। अन्त्यजस्यालये जातं श्मशाननिलयञ्च वा। शाखोटमूर्द्धजं शुष्कं त्याज्यं स्याद्दूरधुत्तकम्। एवमेव च मृण्मय्यामानीय शुभजैर्जलैः। स्नापयेत् शङ्खतोयेन प्रतिमायाञ्च दर्पणे। दन्तकाष्ठं ततो दद्यान्मन्त्रेण च विशेषतः। दशाक्षरेण देवेशि! पञ्चगव्येन चान्तरम्। प्रत्येकेन ततः पश्चात् तथा पञ्चामृतेन च। त्रिशीतेन त्रिरक्तेन तथा तीर्थोदकेन च। वेद्यामीशानतो वाथ पत्रिकायाश्च स्थापनम्। मध्ये विल्वं विजानीयादथवा एकमूलकम्। रम्भावृते निबध्नीयाद्विष्णुक्रान्तालतात्रिभिः। वेष्टयित्वा तु रम्भायां हस्तोच्छ्राये तु युग्मकम्। पीतसूत्रेण वस्त्रेण वेष्टयेन्मुकुटान्वितम्। कुसुम्भरक्तं चौमं वा दुकूलं कीटकानि च। वर्जयेत् प्रथमं देवि! छलक्तान्तं विशेषतः। महोत्सवे ततः कुर्य्याद् वेदघोषपुरःसरम्। कुमारीणाञ्च साध्वीनां श्रावयेच्च तथा ध्वनिम्। बलिकर्म्मणि यात्रायां प्रवेशे नववेश्मनः। महोत्सवे च माङ्गल्ये तत्र स्त्रीणां ध्वनिः शुभः। निर्मञ्छनं तथा कुर्य्याल्लाजजम्बूफलादिभिः। स्वागतं कुशलप्रश्नमासनञ्च निवेदयेत्। जानुभ्यामवनीं प्रेत्य पठेन्मन्त्रं कृताञ्जलिः। श्रीं शारदीयामिमां पूजां गृहाण त्वमिहागता। स्वागतन्ते महादेवि! विश्वेश्वरि! नमोऽस्तु ते। धन्योऽहं कृतकृत्योऽहं सफलं जीवितञ्च नः। आगतासि यतो दुर्गे! माहेश्वरि! ममाश्रमम्। अर्घ्यमन्नं फलं पाद्यं मालां मलयवासिनि!। गृहाण वरदे! देवि! कल्याणञ्च प्रदेहि मे। चण्डिके! चण्डरूपे! त्वं सर्वकामप्रदे!

शुभे !। गृहाणार्घ्यमिदं भद्रे ! आगच्छ मम मन्दिरम्। गृहीत्वा शारदीं पूजां मर्त्यमण्डलमागता। चण्डिके ! त्वां नमाम्यद्य पुष्पमर्घ्यं प्रगृह्यताम्। चण्डि ! त्वं चण्डरूपासि सुरतेजोमहाबले !। प्रविश्य तिष्ठ मद्गेहे यावत् पूजां करोम्यहम्। सामान्यार्घ्यं विधायाथ आसनं प्रतिगृह्य च। विकिरान् विकिरेत्तत्र प्राणायामं ततश्चरेत्। गणेशग्रहदिक्पालान् कलसे पूजयेत्ततः। स्थापयेच्च स्वमन्त्रेण वरयेदर्घ्यपात्रकम्। दिनेशार्घ्यं ततो दद्याद्भूतशुद्धिमथाचरेत्। दशाक्षरेण मन्त्रेण भावयेद्रक्तबुद्बुदम्। तन्मध्ये रुक्मब्रह्माण्डं पुनरेव तु भेदयेत्। तन्मध्ये चिन्तयेद्देवीं सर्वकामप्रदायिनीम्। जटाजूटसमायुक्तामर्द्धेन्दुकृतशेखराम्। नवयौवनसंयुक्तां सर्वाभरणभूषिताम्। त्रिनेत्रां पूर्णवदनां महिषासुरमर्द्दिनीम्। त्रिशूलञ्च तथा चक्रं खड्गं वाणं तथैव च। दक्षिणे च तथा शक्तिं वामतः खेटकं धनुः। पाशाङ्कुशञ्च घण्टाञ्च नागहारगरीयसीम्। अधस्तान्महिषं तद्वच्छिरस्कं प्रदर्शयेत्। शिरश्छेदोद्भवं तद्वद्दानवं खड्गपाणिनम्। हृदि शूलेन निर्भिन्नं निर्यदन्त्रविभूषितम्। देव्यास्तु दक्षिणं पादं समं सिंहोपरिस्थितम्। किञ्चिदूर्द्ध्वं तथा वाममङ्गुष्ठं महिषोपरि। एवं सञ्चिन्त्य मनसा प्रतिमां कृत्य सन्न्यसेत्। आत्मानमन्तरात्मानं परमात्मानमर्च्चयेत्। मातृकान्यासपूर्व्वेण कलान्यासमथाचरेत्। मन्त्रन्यासं ततः कृत्वा तारेणार्घ्यं विशोधयेत्। अर्घ्यस्योत्तरतः कार्य्यं पाद्यमाचमनीयकम्। मधुपर्कं ततः पार्श्वे प्रोक्षण्याञ्च जपेन्मनुम्। अष्टकृत्वो जपेन्मन्त्री गायत्र्या रक्षयेत्ततः। ओँ दुर्गायै विद्महे नारायण्यै धीमहि। धियो यो नः प्रचोदयादितीरयेत्। तेन तोयेन देवेशि ! यागवस्तूनि सेचयेत्। गणेशमथ चैशान्यां गणपं गुरुपादुकाम्। गुरुभ्यः परमं ह्येवं परमेष्ठिगुरोः परम्। गुरुं ज्ञानञ्च वैराग्यमैश्व-

थ्येञ्च यथा क्रमात्। रक्तं श्यामञ्च हारितं नीलाभञ्चैव पूजयेत्। धूम्राभं कनकाविद्युद्रूपान् धर्म्मादिकान् प्रिये!। अधर्म्मादीनि पत्राग्रे अग्न्यादौ च यथाविधि। अधर्म्मञ्च तथाज्ञानमवैराग्यं तथैव च। अनैश्वर्य्यं कृष्णवर्णं पीतरक्तं विभावयेत्। अजमेषहंसवर्णरूपान् धर्म्मादिकानपि। द्वारपार्श्वे महाकालं कपिलं कृष्णलोचनम्। नन्दिनं रक्तपीतञ्च शूलखट्वाङ्गधारिणम्। भुजङ्गश्वेतसङ्काशं द्विभुजं पङ्कजाननम्। चण्डेशञ्च करालास्यं पिङ्गोर्द्ध्वनयनं यजेत्। अधः कूर्म्मशिवारूढ़ां शरच्चन्द्रनिभाननाम्। आधारशक्तिं प्रयजेत् पङ्कजद्वयधारिणीम्। मूर्द्ध्नि तस्याः समासीनं कूर्मासनं समर्चयेत्। ऊर्द्ध्वं ब्रह्मशिलासीनमनन्तं कुन्दसन्निभम्। अधश्चक्रधरं मूर्द्ध्नि धारयन्तं वसुन्धराम्। तमालश्यामलाङ्गीञ्च नीलेन्दीवरलोचनाम्। अभ्यर्च्चयेद्वसुमतीं स्फुरत्सागरमेखलाम्। तत्र सञ्चिन्तयेत् पद्मं विकारनवकेशरम्। मन्त्री प्रकृतिपत्राणि भावयेद्दशकर्णिकम्। भूस्तत्त्वञ्च भुवस्तत्त्वं स्वस्तत्त्वञ्च तथैव च। सत्त्वं रजस्तम इति सूर्य्यादीनां त्रिमण्डलम्। पुनरानन्तरं वज्रनखदंष्ट्रायुधाय च। महासिंहाय वर्म्मास्त्रमहासिंहमनुर्मतः। दद्यादासनमेतेन मूर्त्तिं मूलेन कल्पयेत्। गृहीत्वा रक्तकुसुमं प्रकुर्य्यात् पाणिकच्छपम्। कृत्वा सम्पूर्णपात्रञ्च गन्धपुष्पाक्षतानि च। हृदये स्थापयेद्भक्त्या ध्यात्वा पूर्वोक्तवर्त्मना। पूजयेदुपचाराद्यैर्मण्डले स्थापयेत्ततः। आसनं स्वागतं पृच्छेद् दद्यात्पाद्यादिकं त्रिकम्। मधुपर्कं ततो दद्यादङ्गपूजां विधाय च। दर्शयेदष्टमुद्राश्च तत आवाहनं पठेत्। ओं आवाहितासि दुर्गे! त्वं मृण्मय्यां श्रीफलेऽपि च। स्थिरा त्वं गृहिणी भूत्वा गृहे कामप्रदा भव। एहि दुर्गे! महाभागे! पत्रिका गृह्यतामियम्। तव स्थानमिदं भद्रे शरणं त्वां नमाम्यहम्। त्वं देवि जगतां मातः! सृष्टिसंहार-

कारिणि!। पत्रिकासु समस्तासु सान्निध्यमिह कल्पय। आयुर्देहि धनं देहि यशो राज्यञ्च देहि मे। सन्तुष्टा चात्र मन्त्रे हे मनोऽभीष्टं प्रसाधय। ततः पूर्वादिपत्रेषु रुद्रचण्डादिकान् यजेत्। रुद्रचण्डां प्रचण्डाञ्च चण्डोग्रां चण्डनायिकाम्। चण्डां चण्डवतीं चण्डरूपाञ्चैवातिचण्डिकाम्। अग्निवर्णां ततो मध्ये उग्रचण्डां समर्चयेत्। सर्वा युवत्यो दीप्ताङ्गा वराभयकराः शुभाः। रक्ताः पीताम्बरधरा नानाभरणभूषिताः। त्र्यक्षरेण च मन्त्रेण वागाद्येन महेश्वरि!। पूजयेदष्टपत्रेषु दलाग्रेषु विशेषतः। ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा। वाराही च तथेन्द्राणी चामुण्डा चण्डिका तथा। दण्डं कमण्डलुं पश्चादक्षसूत्रमथाभयम्। बिभ्रती कनकच्छायां ब्राह्मी कृष्णाजिनाम्बरा॥ १॥ शूलं परश्वधं क्षुरं दुन्दुभिं चन्द्रशोभितम्। वहन्ती हिमसङ्काशा ध्येया माहेश्वरी सदा॥ २॥ अङ्कुशं दण्डखट्वाङ्गं पाशञ्च दधती करैः। ध्येया बन्धूकसङ्काशा कौमारी कामदायिनी॥ ३॥ चक्रं घण्टां कपालञ्च शङ्खञ्च दधती करैः। तमालश्यामला ध्येया वैष्णवी विद्युतोज्ज्वला॥ ४॥ मुषलं करवालञ्च खेटकं दधती हलम्। करैश्चतुर्भिर्वाराही ध्येया कालानलच्छविः॥ ५॥ अङ्कुशं तोमरं विद्यां कुलिशं बिभ्रती करैः। इन्द्रनीलनिभेन्द्राणी ध्येया सर्वसमृद्धिदा॥ ६॥ शूलं कपालं नृशिरः कृपाणं दधती करैः। मुण्डस्रङ्मण्डिता ध्येया चामुण्डा रक्तविग्रहा॥ ७॥ अक्षस्रजं रक्तस्रवं कपालं नीलनीरजम्। वहन्ती हेमसङ्काशा व्याघ्रस्य चर्मणोज्ज्वला॥ ८॥ रक्ताक्षीं दण्डिकाञ्चैव नृसिंहीं शिवदूतिकाम्। नारायणीं कालिकाख्यां मायाञ्चैव तु भ्रामरीम्। अरविन्दां विशालाक्षीं भीमाञ्चैव सरस्वतीम्। अपराजितां सोमलतां अनन्ताञ्च कपालिनीम्। भद्रकालीञ्च पुरत एताः षोड़श नायिकाः। चतुर्भुजा

युवत्यश्च शङ्खचक्रगदाङ्कुशाः । सर्वाभरणसन्दीप्ताः सिंहस्थाः शशिशेखराः । बालाद्यास्त्वन्यचरणैव सम्पूज्या रक्तविग्रहाः । काली-विलासतन्त्रे विंशतिपटले ॥ आदौ दशभुजा पूज्या घटस्थापन-पूर्विका । पञ्च देवान् प्रपूज्यादौ पश्चान्महिषमर्दिनीम् । ततश्च कार्त्तिकादीनां पूजाञ्च यत्नतश्चरेत् । ततश्च पत्रिकापूजा देवी-पुराणसम्मता । इति वचनात् पत्रिकापूजनात् पूर्वं कार्त्तिके-यादीन् पूजयेत् ॥ देव्याः कस्मिन् देशे कः पूज्य इत्याह तत्रैव ॥ जया वामे स्थिता विद्या विजया चापि दक्षिणे । वामे च कार्त्तिकं देवं दक्षिणे गणपतिं तथा ।

अथ कार्त्तिकेयध्यानमष्टादशपटले ॥ सुतप्तकनकप्रेख्यं खड्गपट्टीधरं वरम् । सोष्णीषमस्तकं देवं मयूरवरवाहनम् । ब्रह्माण्डाभ्यन्तरे वीरं ब्रह्मविष्णुशिवात्मकम् । ध्यात्वा पाद्यादिकं दत्त्वा दशधा प्रजपेन्मनुम् । शृणु मन्त्रं प्रवक्ष्यामि कार्त्तिकेयं यथोचितम् । क्रीं गुहाय कार्त्तिकेयाय सेनान्ये स्वाहयान्विता । चतुर्दशाक्षरी विद्या कार्त्तिकेयस्य कीर्त्तिता । प्रतिमायां हृदि स्थाने दत्त्वाङ्गुष्ठं सुलोचने! । दशधा मन्त्रमुच्चार्य्य प्राणन्यासस्ततो भवेत् ।

अथ जयाध्यानम् ॥ तप्तकाञ्चनसङ्काशां द्विभुजां लोल-लोचनाम् । कटाक्षविशिखोपेतां दिगम्बरपरिच्छदाम् । दिव्या-भरणसंयुक्तां ध्यायेत् सिद्धिप्रदायिनीम् । ध्यात्वा पाद्यादिकं दत्त्वा सम्पूज्य प्रजपेन्मनुम् । मन्त्रस्तु क्रीं क्रीं जयायै क्रीं क्रीं । सप्ताक्षरी महाविद्या जयायाः परिकीर्त्तिता । मायाद्वयजया ङेऽन्ता पुनर्मायाद्वयं प्रिये! । सप्ताक्षरी महाविद्या कथिता सुरपूजिता । जयाया हृदयेऽङ्गुष्ठं दत्त्वा मन्त्रं जपेद्दश । प्राण-सिद्धिस्तदा देवि! जायते नात्र संशयः ।

अधुनाहं प्रवक्ष्यामि विजयाध्यानमुत्तमम् । दलिताञ्जन-

सङ्काशां द्विभुजां खञ्जनेक्षणाम्। कटाक्षविशिखोद्दीप्तामञ्जनाञ्चितलोचनाम्। दिव्याम्बरपरीधानां नानारत्नविभूषिताम्। ध्यायेत्तां विजयां नित्यां सर्वसिद्धिप्रदायिनीम्। ध्यात्वा पाद्यादिकं दत्त्वा दशधा प्रजपेन्मनुम्। मन्त्रस्तु। वाग्भवं शम्भुवनिता नाम सम्बोधनं ततः। माया च वाग्भवञ्चैव मनुः सप्ताक्षरः प्रिये!। विजयाहृदयेऽङ्गुष्ठं दत्त्वा मन्त्रं जपेद् यदि। प्राणसिद्धिस्तदा देवि! जायते नात्र संशयः।

अथ मयूरध्यानम्॥ नानाचित्रविचित्राङ्ग! गरुडाज्जननं तव। अनन्तशक्तिसंयुक्त! कालाहिभक्षणं तव। गरुडस्त्वं महाभाग! अतस्त्वां प्रणमाम्यहम्। ध्यात्वा पाद्यादिकं दत्त्वा एकधा मन्त्रमुच्चरेत्। माया भगो नादविन्दू ङेऽन्तनाम सुलोचना। सप्ताक्षरं महामन्त्रं हृदये प्रजपेद् यदि। प्राणसिद्धिस्तदा देवि! मयूरस्य भवेद्ध्रुवम्॥

अथ मूषिकध्यानम्॥ वृषाकार! महाभाग! वृषरूप! महाबल!। कर्मरूप! वृषस्त्वं हि गणेशस्य च वाहनम्। नमस्करोम्यहं देव! पूजासिद्धिं प्रयच्छ मे। ध्यात्वा पाद्यादिकं दत्त्वा क्षिपेत् पुष्पाञ्जलित्रयम्। मायाद्वयं समुच्चार्य्य वदेच्च मूषिकं ततः। ङेऽन्तञ्च वनितां शम्भोर्मूषिकस्य मनुः प्रिये!। प्राणप्रतिष्ठा पूर्ववत्॥

सिंहध्यानम्॥ सिंहस्त्वं हरिरूपोऽसि स्वयं विष्णुर्न संशयः। पार्वत्या वाहनस्त्वं हि अतः पूजामि त्वामहम्॥ सिंहमन्त्रः॥ मायाद्वयं समुच्चार्य्य सिंहाय महाबलाय च। पुनर्मायाद्वयं देवि! मनुरेष प्रकीर्त्तितः। द्वादशाक्षरी महाविद्या सिंहस्य परिकीर्त्तिता। ध्यात्वा पाद्यादिकं दत्त्वा एकधा मन्त्रमुच्चरेत्॥

ऊनविंशतिपटले॥ महिषध्यानम्॥ महिषस्त्वं महा-

वीर! शिवरूप! सदाशिव!। अतस्त्वां पूजयिष्यामि क्षमस्व महिषासुर!। ध्यात्वा पाद्यादिकं दत्त्वा एकधा प्रजपेन्मनुम्। मायाद्वयञ्च नकुलं नादविन्दुविभूषितम्। महिषञ्च तथा ङेऽन्तं कूर्चं मायाद्वयं तथा। एकादशाक्षरी विद्या भक्त्या वै परिकीर्त्तिता।

अथ गणेशध्यानम्॥ लम्बोदरं महाकायं गजवक्त्रं त्रिलोचनम्। सर्वदेवमयं देवं पार्वतीनन्दनं भजे। ध्यात्वा पाद्यादिकं दत्त्वा एकधा मन्त्रमुच्चरेत्। मायां कवर्गतृतीयं नादविन्दुसमन्वितम्। तथा गणपतिं ङेऽन्तं विलोमेन पुनर्लयम्॥

लक्ष्मीध्यानम्। तप्तकाञ्चनसङ्काशां द्विभुजां लोललोचनाम्। कटाक्षविशिखोद्दीप्तामञ्जनाञ्चितलोचनाम्। शुक्लाम्बरपरीधानां सिन्दूरतिलकोज्ज्वलाम्। शुक्लपद्मासनगतां ध्यायेन्नारायणप्रियाम्। ध्यात्वा पाद्यादिकं दत्त्वा दशधा प्रजपेन्मनुम्॥ मन्त्रस्तु॥ मायां कामञ्च देवेशि! कमलान्तरवासिनी। ङेऽन्तं कामं ततो मायां लक्ष्मीदेव्या दशाक्षरम्॥

अथ सरस्वतीध्यानम्। शङ्खेन्दुकुन्दसङ्काशां द्विभुजां पद्मलोचनाम्। कटाक्षविशिखोद्दीप्तां दिव्याम्बरपरिच्छदाम्। दिव्याभरणवेशाढ्यां वाग्रूपां परमां भजे॥ सरस्वतीमन्त्रो यथा॥ मायाञ्च वामकर्णञ्च विन्दुनादसमन्वितम्। सरस्वत्यै पुनर्बीजद्वयञ्चाष्टाक्षरी मता॥

ब्रह्मध्यानम्॥ तरुणादित्यसङ्काशं चतुर्वक्त्रं चतुर्भुजम्। चतुर्वेदमयं वक्त्रं धर्मकामार्थमोक्षदम्। ब्रह्ममन्त्रः॥ मायां कवर्गस्याद्यन्तु नादविन्दुसमन्वितम्। ब्रह्मणे नमस्त्ववर्गाद्यं नादविन्दुसमन्वितम्॥ मायां सप्ताक्षरं मन्त्रं ब्रह्मणः परिकीर्त्तितम्।

सावित्रीपूजनं भद्रे ! शृणुष्व कथयामि ते ॥ सावित्री-ध्यानम् ॥ तप्तकाञ्चनवर्णाभां द्विभुजां लोललोचनाम् । दिव्या-भरणवेशाढ्यां दिव्याम्बरपरिच्छदाम् । सिन्दूरतिलकोद्दीप्ता-मञ्जनाञ्चितलोचनाम् । सावित्रीमन्त्रस्तु ॥ मायां सां साविच्यै ततः पुरः सां मायां ततः परम् । सप्ताचरमिदं देवि ! साविचग्राः परिकीर्त्तितम् ॥

अथ नवपत्रिकापूजा मत्स्यसूक्ते ॥ रम्भाञ्च द्विभुजां पीतां शूलपुस्तकधारिणीम् । पूजयेत् कामवीजेन मन्त्रेणानेन शङ्करि !। दुर्गे ! देवि ! समागच्छ सान्निध्यमिह कल्पय । रम्भारूपेण मे देवि ! शान्तिं कुरु नमोऽस्तु ते ॥ १ ॥ खड्गशूलाङ्कुशधरमभयं दधती करैः । महिषासुरयुद्धे त्वं कच्वीरूपासि सुव्रते !। शक्र-स्यानुग्रहार्थाय आगच्छ मम मन्दिरम् ॥ २ ॥ मायावीजेन सा पूज्या हरिद्रामथ चिन्तयेत् । द्विभुजां पीतवसनां त्रिनेत्रां खड्गधारिणीम् । महिषस्थां विशालाक्षीं अम्बरं वामहस्तके । हरिद्रे ! वरदे ! देवि ! उमारूपासि सुव्रते !। मम विघ्न-विनाशाय पूजां गृह्ण सुरेश्वरि ! ॥ ३ ॥ जयन्तीं रक्तवसनां पीताञ्च चण्डमालिनीम् । शूलचक्रधरां चैव सर्वालङ्कार-भूषिताम् । निशुम्भमथने चैव सेन्द्रैर्देवगणैरपि । पूजितासि जयन्ति ! त्वमस्माकं वरदा भव ॥ ४ ॥ विपद्वन्तीञ्च द्विभुजां महावृषभवाहिनीम् । श्वेतामभीतिवरदां गगने तु समर्चयेत् । महादेवप्रियकरः सर्वदेवरतः सदा । उमाप्रीतिकरो यस्मात् तस्मात् त्वां प्रणमाम्यहम् ॥ ५ ॥ दाड़िमीपत्रिकां रक्तां रक्ता-भरणभूषिताम् । रक्तवस्त्रधरां सौम्यामर्द्धेन्दुकृतशेखराम् । चतु-र्भुजां त्रिनयनां महिषोपरिसंस्थिताम् । खड्गचर्म्मधरां स्कन्धे वामेनोत्पलपुस्तिकाम् । मन्दरेणैव वीजेन बालाद्येन समर्च्चयेत् । सिद्धमन्त्रं पुरा जातं रक्तवीजस्य सम्मुखे । उमाप्रीतिकरं

यस्मात्तस्मात्त्वां प्रणमाम्यहम् ॥६॥ अशोकपत्रिकां रक्तां सिन्दूरारुणविग्रहाम्। बाणचापधरां सौम्यां पद्मस्थां नागवाहनाम्। हरप्रीतिकरो वृक्षो ह्यशोकः पापनाशनः। उमाप्रीतिकरस्त्वं हि मामशोकं सदा कुरु ॥७॥ श्यामाङ्गीं माणपत्रोञ्च नीलनीरजधारिणीम्। महिषस्थां त्रिनेत्राञ्च कन्याबीजेन चार्च्चयेत्। पत्रे वससि कौमारि! माणवृक्षे शचीप्रिये!। मम चानुग्रहार्थाय पूजां गृह्ण यथासुखम् ॥८॥ धान्यवृक्षे निमग्नाञ्च द्विभुजां श्वेतविग्रहाम्। श्वेतपद्मोपविष्टाञ्च वराभयकरां शुभाम्! श्रीबीजेन सतारेण पूजयेत् कमलाननाम्। जगत्प्राणहितार्थाय ब्रह्मणा निर्मितं पुरा। उमाप्रीतिकरं धान्यं शान्तिं कुरु नमोऽस्तु ते ॥९॥ बहिः पीठे जयन्त्याख्यां दिक्पतीन् सायुधांस्तथा। उपचारैः समभ्यर्च्य हृष्टपुष्टिकरान् पुनः। कुमुदोत्पलपद्मानि कुन्दशेफालिकाजवाः। बकुलं तगरञ्चैव पुष्पाष्टकमुदाहृतम्। मन्त्रं जपेदष्टशतं होमं कुर्य्यात् यथाविधि। बलिदानान्तरे चैव पादं संश्रपयेच्चरुम्। कृताञ्जलिस्ततः कृत्वा जानुस्पृष्टमहीतलः। पठेत् स्तोत्रं यथान्यायं वाग्बीजाद्यन्तसंयुतम् ॥

अथ स्तोत्रम्। दुर्गां शिवां शान्तिकरीं ब्रह्माणीं ब्रह्मणः प्रियाम्। सर्वलोकप्रणेत्रीञ्च प्रणमामि सदाम्बिकाम्। मङ्गलां शोभनां शुद्धां निष्कलां परमां कलाम्। विश्वेश्वरीं विश्वमातां चण्डिकां प्रणमाम्यहम्। ईशानमातरं देवीं सर्वलोकभयापहाम्। ब्रह्मेशविष्णुनमितां प्रणमामि सदा उमाम्। विश्वस्थां विश्वनिलयां दिव्यस्थाननिवासिनीम्। योगिनीं योगमाताञ्च चण्डिकां प्रणमाम्यहम्। ईशानमातरं देवीमीश्वरीमीश्वरप्रियाम्। प्रणतोऽस्मि सदा दुर्गां संसारार्णवतारिणीम्। य इदं पठति स्तोत्रं शृणुयाद्वापि भक्तितः। स मुक्तः सर्वपापेभ्यो मोदते दुर्गया सह। पञ्चघोषेण भेर्य्यादिगीतवाद्यादिनिस्वनैः।

नयेच्च दिवसं पश्चात् संहिताश्रवणेन तु ॥ दिवावसाने स्नात्वा
तु सायंसन्ध्यां समाप्य च । पश्चिमाशामुखो भूत्वा गन्धमाल्यै-
रलङ्कृतम् । ध्यायेत् पूर्वं देवीरूपं हंसमन्त्रेण वाग्यतः । दद्या-
दर्घ्यं नमस्कुर्य्यात्ततो देवीगृहं व्रजेत् । पञ्चोपचारैर्विधिवत्
पूजयेत् परमेश्वरीम् । हविष्यान्नं ततो भुक्त्वा दन्तकाष्ठञ्च भक्ष-
येत् ॥ इति सप्तमीकृत्यम् ॥

अथाष्टमीकृत्यम् ॥ ततः कल्यं समुत्थाय अष्टम्यां प्रातरेव
च । नदीतीरं ततो गत्वा स्नानं कुर्य्यात् समाहितः । अभावे
स्रोतस्तोयेन यत्र सूर्य्यस्य दर्शनम् । स्वस्ति ततो वाचयित्वा
पञ्च देवान्नमस्य च । स्नानं होमं समुद्दिश्य बलिनिर्देशनं नुतिम् ।
यथा प्रहरपूजा च अर्द्धरात्रे विशेषतः । नवम्याञ्च तथा पूजां
दशम्याञ्च विसर्जनम् । तर्पणं ब्राह्मणानाञ्च गोचोद्देश्यं स्वसंज्ञकम् ।
एवं सङ्कल्प्य मतिमान् देव्याः स्नानं समाचरेत् । तारार्कवचनं
ङेऽन्तं चण्डिकाहृदयं ततः । पानीयस्य च कथितं चीरस्य
शृणु सुन्दरि ! । मायां गां गौर्य्यै हृदयं पञ्चगव्यस्य च शृणु ।
तारां वाणीञ्च नेत्राभ्यां सर्वतो हृदयान्तकम् । मायान्तनुवुदा-
श्चैव हृदयार्णञ्च शर्करम् । तारां मायाञ्च गिरिशे ! मधुमन्त्र
इतीरितः । मायां शिखायै नम इति पुनः पानीयकेन तु ।
तारं चक्रं भद्रकाली कवचायेति दधिमन्त्र उदाहृतः । वाग्भवा-
यञ्च तैलस्य मायां गौर्य्यै नमः स्थितम् । उष्णोदकस्य देवेशि !
तथा गुड़घृतस्य च । वाङ्मन्त्रेण महेशानि ! तथैवेक्षुरसेन च ।
अनुक्ते चण्डिकाशान्तं यच्चान्तेन महेश्वरि ! । दशाक्षरेण
मन्त्रेण नानागन्धोदकेन च । त्रिरत्नेन त्रिगन्धेन त्रिशीतेन
महेश्वरि ! । फलोदकैस्तीर्थतोयैः पुष्पतोयैः कुशोदकैः । घट-
स्थापनं ततः कृत्वा पीठपूजां समाप्य च । पूर्ववद्ध्याने ध्यात्वा
च मन्त्रेणारोपयेत्ततः । आगतां स्वागतां पृच्छेद्दद्यात् पाद्या-

दिकं ततः। गायत्र्या स्नापयेद्देवीमङ्गपूजां विधाय च। मधु-
पर्कं ततो दद्यात् पुनराचमनीयकम्। पूर्वादिपत्रे सम्पूज्या
जयन्त्याद्याश्च मातरः। जयन्ती मङ्गला काली भद्रकाली कपा-
लिनी। दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा ततः परम्। तत्रैव
च दलाग्रेषु रुद्रचण्डादिका अपि। रोचनाभां रुद्रचण्डां प्रच-
ण्डामरुणप्रभाम्। चण्डोग्रां कृष्णवर्णाञ्च श्यामाञ्च चण्डना-
यिकाम्। शुक्लाभां चण्डरूपाञ्च धूम्रां चण्डवतीमपि। अति-
चण्डां पाण्डुराभां पीतवर्णान्तु चण्डिकाम्। वागाद्येन तु
मन्त्रेण तारादिहृदयान्तकम्। अग्निवर्णामुग्रचण्डां मध्ये तु
परिपूजयेत्। पूर्वादिष्वष्टपीठेषु चतुःषष्टीः समर्चयेत्। ब्राह्मी
माहेश्वरी चैव कौमारी वैष्णवी तथा। पञ्चोपचारैर्विधिवज्जय-
न्त्यादि ततः परम्। जयन्ती मङ्गला काली भद्रकाली कपा-
लिनी। दुर्गा शिवा क्षमा धात्री पूजनीयाः प्रयत्नतः। दक्षिण-
प्रान्तेषु देव्याः स्वाहाञ्चैव स्वधां ततः। अम्बिकां चर्च्चिकाञ्चैव
तथा कात्यायनीमपि। रक्तदन्तिकाञ्च सर्वादिमङ्गलाञ्च ततः
परम्। शाकम्भरीं भ्रामरीञ्च शिवदूतीं ततः परम्। महा-
कालीञ्च गौरीञ्च तर्जनीं भाविनीं तथा। महामोहाञ्च प्रयजेत्
तथा चैव भयङ्करीम्। ततः पश्चिमप्रान्तेषु भीमां पद्मां शचीं
तथा। मेधाञ्चैव महामायां सावित्रीं विजयां जयाम्। देवसेनां
धृतिञ्चैव पुष्टिं धृतिञ्च भ्रामरीम्। महामायां महादेवीं महा-
मेधां तथैव च। कामेश्वरीमुत्तरस्यां कामदामपि चार्चयेत्।
भ्रामरीं कालरात्रिञ्च महारात्रिं तथैव च। चक्रेश्वरीं ततश्चैव
पूजयेन्नगमालिनीम्। धूम्रां भीमाञ्च शान्ताञ्च विदारीञ्च महा-
म्बिकाम्। लक्ष्मीञ्चैव सुपर्णाञ्च महोग्रोमां तथादरात्। कुल-
देवीं त्र्यक्षरेण मन्त्रेण च समर्चयेत्। वटुकान् पूजयेद् द्वारे
द्वौ द्वौ कृत्वा विभागतः। सिद्धाख्यञ्चैव सन्देहं कालपुत्राख्य-

मेवं च। क्रियाकुलनिभञ्चैव मन्त्राङ्गं देवि! पुस्तकम्। मन्दरे-
णैव वीजेन सतारेण प्रपूजयेत्। भैरवानसिताङ्गादीन् चैवेशांश्च
यजेत् क्रमात्। हेतुकं त्रिपुराङ्गञ्च अग्निजिह्वं तथैव च।
कालास्यञ्च करालास्यमेकपादञ्च भीमकम्। अनुग्रहञ्चोर्द्धभागे
अधश्च नासिकेश्वरम्। नारसिंहेन वीजेन सतारं हृदया-
न्तकम्। वहिः पीठे चार्चयेद्दै तेन वीजेन साधकः। जम्भकं
मणिभद्रञ्च पूर्णभद्रं तथैव च। विरूपञ्च विरूपाक्षं चित्रकुण्डल-
मित्यपि। चित्राक्षं चित्ररूपञ्च केलिमालिनमेव च। वरेन्द्रं
नन्दिनं सिंहं ग्रहान् लोकपतीन् यजेत्। आदित्यादिग्रहा ये च
ये ग्रहाः क्रूरकर्मणः। तिथयो वासराः सर्वे तेषां हि सन्निधौ
स्थिताः। ते पूजार्थमिहायान्तु पूजयिष्यामि तानहम्। क्रूर-
कर्मण इति छान्दसत्वात् ह्रस्वः।

अथास्त्रपूजा॥ दक्षिणादिक्रमेणैव देव्यस्त्राणि प्रपूजयेत्।
प्रतिमन्त्रैः स्ववीजैश्च गन्धचन्दनपुष्पकैः। इयं येन धृता
क्षौणी हतश्च महिषासुरः। त्रिधाराय च शूलाय तस्मै शुद्धा-
त्मने नमः। असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः।
श्रीगर्भो विजयश्चैव धर्म्मपाल! नमोऽस्तु ते। इत्यष्टावेव प्रय-
जेत्तीक्ष्णधाराभिरालिकम्। चक्रेश्वरीतिमन्त्रेण लौहदण्डं
तथैव च। सुदर्शन! महाचक्र! दैत्यराजभयङ्कर!। त्रिपुरा-
न्तकरः श्रीमान् चक्रवर्य्य! नमोऽस्तु ते। चार्वङ्गगणसम्पन्न!
चक्राय च नमो नमः। सतारश्चक्रमन्त्रोऽयं सर्वविघ्नविनाशनः।
नमोऽस्तु पञ्चवाणाय निर्म्मलाय महात्मने। पञ्चतत्त्वस्वरूपाय
पञ्चवाणाय वै नमः। शक्तिस्त्वं सर्वभूतानां व्यापकानाञ्च
व्यापकम्। कालाकालमवष्टभ्य शक्तिवर्य्य! नमोऽस्तु ते। रमावीजं
सतारञ्च सजयं मन्त्रमीरितम्। वामादिवामतः पूज्याः पश्चा-
न्मन्त्रैर्यथाविधि। धर्म्मप्रदस्त्वं समरे धर्माणामायुधोऽप्यसि।

रक्षणीयस्त्वया यस्मात् वरानघ ! नमोऽस्तु ते । धृतं क्षणेन रक्षार्थं संहारार्थं हरेण च । त्रयीमूर्त्तिञ्च सगरं धनुरस्त्रं नमाम्यहम् । अत्यन्तं रामकृष्णाभ्यां धनुषे वह्निवल्लभा । विजयादिशरान्तञ्च धनुर्मन्त्र उदाहृतः । नागराज ! महापाश ! अनन्तवरुणाय च । निर्मितो विष्णुना यस्मादतः पाहि नमः स्वधा । चण्डिकायाः प्रदत्तासि सर्वानुबालवर्हिणी । कुरिके ! रक्ष मां नित्यं शान्तिं कुरु नमोऽस्तु ते । छुरिकायै च ठद्वयम् ।

घण्टायाः शृणु मन्त्रञ्च कोणान्तेन च सुन्दरि ! । परितः पूजयेन्मन्त्रान् देवांश्चैव ऋषीनपि । पीठेशांश्चैव जीवेशानुपचारैरनन्तरम् । तत्रैव च शिवं विष्णुं वनितारञ्च पूजयेत् । वेदोक्तैरागमोक्तैश्च तथा पौराणिकैरपि । मन्त्रैर्यथा विभागेन स्वतन्त्रोक्तैः प्रयत्नतः । शुभ्रेण दधिसूक्तेन गायत्र्या तदनन्तरम् । मन्त्रं जप्त्वा स्तुतिं कुर्य्याद्धोमं कुर्य्याद्दशांशकम् । प्रसादनं ततः कुर्य्यादिमं मन्त्रं पठेत्ततः । यन्मयोपहृतं किञ्चित् पुष्पगन्धानुलेपनैः । तत् सर्वमुपयुञ्जीत प्रसीद वरदा भव । पुष्टिं प्रज्ञां धृतिं मेधामारोग्यं भूतिमेव च ॥

अथ षोड़शोपचारमन्त्राः ॥ प्रसीद जगतां मातः ! संसारार्णवतारिणि ! । मया निवेदितं भक्त्या आसनं सफलं कुरु ॥ १ ॥ आसनपरिमाणन्तु मातृकाभेदतन्त्रे पञ्चमपटले ॥ चतुरङ्गुलविस्तारं रौप्यनिर्माणपीठकम् । अलङ्कारं यथायोग्यं पुरुषस्तु निवेदयेत् । मूलप्रकृतिरूपेण सूयते सचराचरम् । पूजामहं विधास्यामि स्वागतन्ते महेश्वरि ! ॥ २ ॥ दुर्गन्धि परमामोदं परं वागीश्वरेश्वरी । पाद्यमेतन्मया दत्तं प्रसीद भुवनेश्वरि ! ॥३॥ दूर्वातण्डुलसम्मिश्रं कर्पूरागुरुपूरितम् । अर्घ्यं दत्तमिदं गृह्ण मत्तस्त्रिभुवनार्चिते ! ॥ ४ ॥ आपो नारायणः साक्षादसृ सर्वं चराचरम् । निवेदयामि ते देवि ! अग्निराचमनीयकम् ॥ ५ ॥

वाजिमेधफलावाप्त्यै मया दत्तं वरानने!। मधुपर्कं प्रतीच्छस्व मातर्मे भुवनेश्वरि! ॥६॥ पुनराचमनीयमप्याचमनीयमन्त्रेण वा दद्यात् ॥ ७ ॥ गङ्गास्थमुदकं पुण्यं सुगन्धि सुमनोहरम्। निवेदितं मया देवि! स्नानीयं प्रतिगृह्यताम् ॥ ८ ॥ त्वं देवि! परमेशानि! परंब्रह्मस्वरूपिणि!। गृह्ण वस्त्रमिदं देवि! यज्ञसूत्रमिदं शुभे! ॥ ९ ॥ ज्योतिषां ज्योतिरेकस्त्वमनादिनिधनं न ते। मया दत्तमलङ्कारमलङ्कुरु नमोऽस्तु ते ॥ १० ॥ सुगन्धि दुर्गमं नान्यं कुसुदोत्पलमालिनम्। सितपीतारुणादानं गृह्ण पुष्पं वरानने! ॥ ११ ॥ धूपं गुग्गुलुसंयुक्तं चन्दनागुरुचर्चितम्। दशाष्टाङ्गसमुद्भूतं गृहाण परमेश्वरि! ॥ १२ ॥ परं ज्योतिः परं ब्रह्म जगदेकं सनातनि!। भूतये मम देवेशि! दीपोऽयं प्रतिगृह्यताम् ॥ १३ ॥ यद्दत्तं परया भक्त्या फलमूलादिकं मया। गृहाण परमेशानि! नैवेद्यं सुमनोहरम् ॥ १४ ॥ मातृकाभेदतन्त्रे ॥ नैवेद्यं विविधं रम्यं नानाफलसमन्वितम्। शर्करासंयुतं कृत्वा पायसञ्च निवेदयेत्। मत्स्यसूक्ते ॥ अशेषजगदाधारभूते! त्रैलोक्यवन्दिते!। प्रदक्षिणमहं वन्दे विद्दत्सु पादपङ्कजम् ॥ १५ ॥ धान्यमुद्गकलायस्य रजोवस्य तिलस्य च। प्रकटानेकफलयुग्रचनां विनिवेदयेत् ॥ १६ ॥ प्राणान् रक्ष यशो रक्ष पुत्रदारधनानि च। सर्वरक्षाकरी यस्मात्त्वं देवि! भुवनत्रये। अत्र बलिदानोक्तस्मार्त्तभट्टाचार्य्यलिखिताभिलापवाक्यवद् द्रव्यविशेषेऽपि कामनाविशेषेणाभिलाप उक्तस्तत्रैव ॥

द्रव्यदानोचितं वाक्यं शृणु वक्ष्ये समासतः। यादृशं कल्पसम्पूर्णं तत् प्रयच्छ वरानने!। ततो यथाभिमतविजयकामो गन्धमहं ददामीति गन्धं दद्यात्। कल्पकोटिस्वर्गनिवासकामश्चन्दनागुरुकर्पूरकुङ्कुमैरनुलेपनमहं ददामीति मिश्रितानुलेपनं दद्यात्। ततः पुष्पं दशसुवर्णदानफलप्राप्तिकामो नानाविधयुक्त-

पुष्पमहं ददामीति उद्दिश्य जातीयुक्तविमुक्तचम्पकविल्वपत्रोत्पलकुमुद-मल्लिकाकाञ्चनशेफालिकाकह्लारकरवीरजयन्तीबन्धूकयथाकालप्राप्तजलजारण्यजपर्बतसम्भूतोक्तानुक्तपुष्पाणि दद्यात्। अथ राजसूययज्ञफलप्राप्तिकामो विल्वपत्रमालाद्वयं दद्यात्। ततः पुष्पदानत्रिगुणफलप्राप्तिकामः करवीरमाल्यमहं ददामीति उक्ता नानाकर्मविरचितक्लृप्तं वकुलमाल्यं दद्यात्। अथ गोसहस्रदानफलप्राप्तिकामो मालतीमालाद्वयं रक्तोत्पलञ्च दद्यात्॥ ततो वाजपेयफलप्राप्तिकामो धूपमहं ददामीति बहुविधधूपं दद्यात्। अश्वमेधफलप्राप्तिकामो घृतप्रदीपमहं ददामीत्युद्दिश्य घृतेन दीपमालायां दीपोल्काञ्च दद्यात्। ततो गोमेधशतयज्ञप्राप्तिकामो हृद्यनानाफलान्वितपत्रपुष्पोपेतबहुविधान्नपानताम्बूलादीनि मेध्यान्यमूनि दद्यात्। ततः पुष्कराधिकरणकदशसुवर्णतारदानफलप्राप्तिकामः स्तवकादिफलधान्यशस्यप्ररूढ़धान्यशालूकपद्मम्टणालानि यथासम्भवमेध्यमतिरूपाणि दद्यात्। एतद्वस्त्रतन्तुसंख्यवर्षसहस्रावच्छिन्नशिवदुर्गालयमोदनकामो नेत्रक्षौमादियथासम्भववस्त्राण्यहं ददामीति उक्ता सूक्ष्ममृदुरूपाणि वस्त्राणि दद्यात्। ततो गङ्गाधिकरणकदशगोदानफलप्राप्तिकामः सोत्तरीययज्ञसूत्रं ददामीत्युद्दिश्य दद्यात्। ततो गोसहस्रदानफलप्राप्तिकामः सुवर्णमहं ददामीत्युक्ता दद्यात्। ततः स्वर्गाधिकरणकदीप्यमानकामश्छत्रमहं ददामीति छत्रम्। अग्निष्टोमयज्ञफलप्राप्तिकामश्चामरमहं ददामीति चामरं दद्यात्। अथ दीर्घायुरारोग्यविजयावच्छिन्नविपुलभोगप्राप्तिकामः अथ चन्द्रांशुजन्ममणिसमः अतिसौभाग्यकामः रूपधान्यकन्यायुतसहस्रावच्छिन्नदुर्गालोकप्राप्तिकामः सोपधानशय्यापादुकादीनि दद्यात्। दत्त्वा बलिं ततः कुर्य्यात् क्षणाच्छागं परात्परम्॥ बलिदानस्य विशेषो-

ऽग्रे वक्ष्यते ॥ जप्त्वा प्रदक्षिणं कुर्य्यात् स्तुतिपाठं सदाचरेत् ॥

अथ स्तुतिः ॥ नारद उवाच ॥ ओँ भगवति ! भयोच्छेदे ! कात्यायनि ! च कामदे ! । कौशिकि ! त्वं महेशानि ! कालिके ! त्वां नमाम्यहम् ॥१॥ प्रचण्डे ! पुत्त्रदे ! देवि ! सुप्रीते ! सुरनायिके ! । कुलद्योतिकरे ! चोग्रे ! पार्वति ! त्वं प्रसीद मे ॥२॥ दुर्गोत्तारिणि ! दुर्गे ! त्वं सर्वाशुभनिवारिणि ! । सर्वे ! सर्वार्थदे ! देवि ! भव त्वं वरदा मम ॥३॥ चण्डोग्रे ! वरदे ! देवि ! प्रचण्डे ! विजयप्रदे ! । धर्मार्थकामदे ! देवि ! कात्यायनि ! नमोऽस्तु ते ॥४॥ जन्मान्तर-सहस्रेषु तिर्य्यग्योनिगतस्य च । अघं संहर मे देवि ! ज्ञानतो-ऽज्ञानतः कृतम् ॥ ५ ॥ शान्तिपुष्टिप्रदे ! देवि ! मातस्त्रैलोक्य-तारिणि ! । नमस्यामि जगद्धात्रि ! त्वामहं विल्वभाविनि ! ॥६॥ नमस्तेऽस्तु शिवे ! देवि ! सर्वव्यापिनि ! शाङ्करि ! । निजधर्मा-दिकं काम्यं कल्याणञ्च प्रदेहि मे ॥ ७ ॥ सर्वेषां नाथभूतासि त्वमेवैकाकिनी यतः । तस्मान्नमामि देवेशि ! प्रसन्ना वरदा भव ॥ ८ ॥ इयं सर्वेश्वरीपूजा यन्मया देवि ! ते कृता । पूर्णा भवतु सा सर्वा त्वत्प्रसादान्महेश्वरि ! ॥ ९ ॥ जातस्य यज-मानस्य गर्भस्थस्य च देहिनः । मा भूत्तत्र कुले जन्म यत्र देवी न चण्डिका ॥ १० ॥ इत्यष्टमीकृत्यम् ॥

अथ निशीथकृत्यम् ॥ अर्द्धरात्रौ ततः कुर्य्याद् दिवसे वा समाहितः । सन्ध्यायां वा महेशानि ! शरणाम्भसि पूर्वकम् । अष्टम्याञ्च नवम्याञ्च शिविकायां यथेच्छया । निशायाञ्चां प्रकु-र्वीत सन्ध्यायां रजनीमुखे । ततः सम्पूजयेद्भक्त्या बलिभिः पायसादिना । नृत्यगीतविचित्रैश्च वाद्यैरुच्चावचैरपि । रक्त-पुष्पस्य कुसुममष्टम्याञ्च निवेदयेत् । सहस्रसंख्यकैर्देवि ! वकुलै-र्वा मनोरमैः । पुण्डरीकन्तु यो दद्यादर्द्धरात्रौ विशेषतः । सर्वान् कामानवाप्नोति शतमष्टोत्तरं तथा ॥

अथ नवमीकृत्यम् तत्रैव ॥ नवम्यां पूर्ववत् पूजा कर्त्तव्या भूतिमिच्छता । देव्यै नवम्यां सन्ध्यायां पिष्टितान्नं सशर्करम् । दद्याद् यदि तदा मद्यवर्जितं तदराण्वितम् । अर्घं काञ्जिकम् ॥ शान्तिं कृत्वा ददेद्धेनुं दक्षिणां विधिवद् यथा । दक्षिणां वस्त्रयुग्मञ्च आचार्य्याय निवेदयेत् । परितोषं पुनर्दानं विधिज्ञाय च काञ्चनम् । धान्यं वासस्तथा ताम्रं ब्रह्मणे धान्यकाञ्चनम् । ऋत्विजेऽपि तथा धान्यं सतिलं काञ्चनं तथा । ब्राह्मणांश्च कुमारीश्च अन्यानपि च पूजयेत् । दीनान्धकृपणानाञ्च भक्तितः पूजनं चरेत् । दद्यादुत्तमकंभोज्यं दिनभोज्यं विशेषतः ॥ पतिरन्यं यदा दोर्भिर्बलिदानाद्यशान्तये । शिवभक्तान् पूजयेच्च शिवाभक्तान् विशेषतः । शिवभक्ताश्च ये केचिद् विष्णुभक्ताश्च पार्वति ! । गृहं प्रविश्य च पुनर्गीतवाद्यपुरःसरम् । गृहं सम्पूजयेद्भक्त्या भुञ्जीत बान्धवैः सह ॥ इति नवमीकृत्यम् ॥

तत्रैव । प्रातरेव दशम्यान्तु नित्यं निर्वर्त्य साहृतः । जानुभ्यामवनीं गत्वा इदं संश्रावयेत्ततः । ओं कालि ! कालि ! महाकालि ! कालिके ! पापनाशिनि ! । कालि ! करालनिष्क्रान्ते ! कालिके ! त्वां नमोऽस्तु ते । सिंहवाहिनि ! चामुण्डे ! पिनाकधनुवल्लभे ! । उपहारं गृहीत्वैवं प्रसीद परमेश्वरि ! । ओं उत्तिष्ठ देवि ! चामुण्डे ! शुभां पूजां प्रगृह्य च । व्रज त्वं स्रोतसि जले वृद्धौ च स्थीयतामिह । निर्माल्यधारिणी पूज्या चाण्डाली गन्धचन्दनैः । समर्पयित्वा मन्त्रेण मन्त्रमेतदुदीरयेत् । निमज्याम्भसि सम्पूज्या परिकालार्च्चिते जले । पुत्त्रायुर्धनवृद्ध्यर्थं स्थापितासि जले मया । यजमानः स्वयञ्चैव चण्डिकां प्रेषयेच्छिवाम् । न वीक्षेत महेशानीं न नग्नां प्रेषयेज्जले । दशम्यां श्रवणाप्राप्ते अप्सु निक्षिप्य दारकः । अलाभे केवलायान्तु न निशायां कथञ्चन । पूजोपहारद्रव्याणि आचार्य्याय निवेदयेत् । तदर्द्धञ्च विधिज्ञाय

तदर्धञ्चैव ब्राह्मणे। तच्छेषं ऋत्विजे दद्यात् परितोषं तथैव च। पूजालयं न वीक्षेत गृहस्थः स्वं कदाचन। अप्सु निक्षिप्य देवेशीं ब्राह्मणायोपपादयेत्। देवीस्थितगृहेणापि यो गृहं कारयेत् सुधीः। तस्य लक्ष्मीर्बलञ्चायुः सर्वं नश्यति तत्क्षणात्। इति दशमीकृत्यम्॥

इति श्रीप्राणतोषिण्यां चतुर्थे काम्यकाण्डे दुर्गोत्सवप्रकरणे प्रतिपदादिकृत्यरूपस्तवकथनं नाम पञ्चमः परिच्छेदः।

एकपञ्चाशत्पटले॥ भगवानुवाच॥ अथ दुर्गामनुं वक्ष्ये सर्वतन्त्रानुसारतः। शारदीयप्रयोगे तु तद्विशेषं यथा शृणु। वाक्शक्तिकमलास्याश्च त्र्यक्षरं परिकीर्त्तितम्। नित्ये नैमित्तिके काम्ये मोक्षेषु च नियोजयेत्। ऋषिः स्यान्नारदश्चास्य छन्दोऽनुष्टुप् प्रकीर्त्तितम्। शम्भुश्च देवता देवी चतुर्वर्गेषु योजयेत्। कामलक्षं जपेन्मन्त्रं तद्दशांशेन तर्पणम्। तत्त्वन्यासं बलिञ्चैव होमं दशदशांशके। षट्पुरञ्चाष्टपत्रञ्च कलापत्रं धरापुरम्। चतुर्द्वारं वीजयुक्तं पीठयुक्तं समर्चयेत्। ब्राह्म्यादीनथ पत्रे च जयन्त्यादींश्च षट्पुरे। शेषशेषं तथा मध्ये अमृताद्याः कलाच्छदे।

ध्यानम्॥ जटाजूटसमायुक्तामर्द्धेन्दुकृतशेखराम्। लोचनत्रयसंयुक्तां पूर्णेन्दुसदृशाननाम्। तप्तकाञ्चनवर्णाभां सुप्रतिष्ठां सुलोचनाम्। नवयौवनसम्पन्नां सर्वाभरणभूषिताम्। सुचारुदशनां तद्वत् पीनोन्नतपयोधराम्। त्रिभङ्गस्थानसंस्थानां महिषासुरमर्दिनीम्। त्रिशूलं दक्षिणे हस्ते खड्गं चक्रं तथैव च। तीक्ष्णवाणं तथा शक्तिं दक्षिणेऽपि निबोधत। खेटकं पूर्णचापञ्च पाशमङ्कुशमेव च। घण्टां वा परशुं वापि देव्या वामे विचिन्तयेत्। अधस्तान्महिषं तद्वद्विशिरस्कं प्रदर्शयेत्। शिरश्छेदोद्भवं तद्वद्दानवं

खड्गपाणिनम्। हृदि शूलेन निर्भिन्नं निर्यदन्त्रविभूषितम्। रक्त-रक्तीकृताङ्गञ्च रक्तविस्फुरितेक्षणम्। वेष्टितं नागपाशेन भ्रूकुटी-भीषणाननम्। पिबन्तञ्चैव रक्तञ्च देव्याः सिंहं प्रदर्शयेत्। देव्यास्तु दक्षिणं पादं समं सिंहोपरिस्थितम्। किञ्चिदूर्द्ध्वं तथा वाममङ्गुष्ठं महिषोपरि। ध्यात्वानेन जपेन्मन्त्रं बलिं दत्त्वा स्तुतिं पठेत्। ऋषिः स्यान्नारदश्छन्दोऽप्यनुष्टुप् शम्भुरेव च। देवता च समाख्याता चण्डिका परमेश्वरि!। ओँ परंब्रह्म-स्वरूपाञ्च वेदगर्भां जगन्मयीम्। शरण्ये! त्वामहं वन्दे दुर्गां दुर्गतिनाशिनीम्॥ १॥ कामाख्यां कामदां श्यामां कामरूपां मनोरमाम्। ईश्वरीं त्वामहं वन्दे दुर्गां दुर्गतिनाशिनीम्॥ २॥ त्रिनेत्रां हास्यसंयुक्तां सर्वालङ्कारभूषिताम्। विजयां त्वामहं वन्दे दुर्गां दुर्गतिनाशिनीम्॥ ३॥ ब्रह्मादिभिः स्तूयमानां सिद्ध-गन्धर्वसेविताम्। भवानीं त्वामहं वन्दे दुर्गां दुर्गतिनाशिनीम् ॥ ४॥ निशुम्भशुम्भमथनीं महिषासुरघातिनीम्। दिव्यरूपा-महं वन्दे दुर्गां दुर्गतिनाशिनीम्॥ ५॥ विंशत्यर्द्धभुजां देवीं शुद्धकाञ्चनसन्निभाम्। गौरीरूपामहं वन्दे दुर्गां दुर्गतिना-शिनीम्॥ ६॥ त्रिशूलं खड्गचक्रञ्च वाणशक्तिं परश्वधम्। दधानां त्वामहं वन्दे दुर्गां दुर्गतिनाशिनीम्॥ ७॥ जगन्मयीं महा-विद्यां सृष्टिसंहारकारिणीम्। सर्वदेवमहं वन्दे दुर्गां दुर्गति-नाशिनीम्॥ ८॥ इदन्तु कवचं दिव्यं महामन्त्रं महाफलम्। यः पठेन्मानवो नित्यमस्मद्भक्तिसमन्वितः। धनं धान्यं प्रयच्छामि सकृदावर्त्तनेन तु। इति मत्स्यसूक्ते दुर्गास्तोत्रं समाप्तम्। तत्रैव। दुर्गन्त्वारक्तशृङ्खलम्। निगमाद्यं वह्निजायां दशार्णं परिकीर्त्तितम्। एषा विद्या महाविद्या जयदुर्गा प्रकीर्त्तिता। ऋषिः स्यान्नारदश्छन्दो गायत्री परिकीर्त्तिता। देवता च भवेद्दुर्गा सर्वार्थे विनियोजयेत्। मन्त्रं लक्षं जपेन्मन्त्री तस्य-

न्यास उदाहृतः। तद्दशांशं जुहुयाच्च तर्पणं ऋतुसंख्यकम्। दद्यान्महिषमन्त्रेण आसनं परिकीर्त्तयेत्। मूलेन कल्पयेन्मूर्त्तिं शृणु ध्यानं वरानने!। ततो जलनिधेस्तीरे वनराजिविराजितम्। तमालतालहिन्तालपाटलामलकैर्वृतम्। कुन्दमन्दारदाड़ीमकदम्बकुसुमैर्युतम्। चम्पकाशोकरम्भाढ्यं चन्दनागुरुभूषितम्। सुगन्धिकुसुमामोदगन्धामोदितदिङ्मुखम्। पशुपक्षिगणाकीर्णं विल्वनोपसरोवरम्। कुमुदोत्पलकह्लारपुण्डरीकोपशोभितम्। तस्मिन्नमृतदं चारुपारिजातचतुष्टयम्। पादपल्लवमामोदि मञ्जरीपुञ्जधारितम्। तस्मिन्मणिमयं कुण्डं मण्डपं मणिकुट्टिमम्। तड़ित्कोटिप्रतीकाशं बालादित्यसमप्रभम्। मण्डितं पाण्डरच्छत्रैर्विमानेन विराजितम्। शोभितं शतसाहस्रैर्ध्वजैः पाण्डरचामरैः। तत्र सिंहासनं रम्यं रत्नदामविराजितम्। ततो भावयेद्भास्वरं सिंहमाजं चतुर्वेदपादं चतुर्विंशतत्त्वम्। वह्निर्लोलजिह्वं चलत्पिङ्गलाक्षं तुषारप्रभं दुर्निरीक्षं समस्तैः॥ महत्ताप्रभवारक्तपङ्कजं षट्पुरान्वितम्। विभ्राजमानं विस्तीर्णं मृगराजोपरिस्थितम्। ध्यायेत्तस्मिन् तप्तजाम्बूनदाभां दिव्यैर्भव्यैर्भासयन्तीं त्रिनेत्रैः। चन्द्रादित्यौ कुण्डले द्वे दधानामूर्द्ध्वं चन्द्रं धारयन्तीं मुदा हि। स छिन्नबलवीर्य्यौघो निर्गतो महिषासुरः। सप्रासेन त्रिशूलेन भ्रुकुटीकुटिलाननाम्। गृहीतनागतल्केशमृगेन्द्राक्रुष्टवाहकम्। लोहिताक्षैर्महाघोरैः शार्दूलैरपि भक्षितम्। नियुक्तं रक्तपं सिंहं वीक्षयन्ती मुहुर्मुहुः। सिद्धगन्धर्वरक्षोभिर्यक्षविद्याधरोरगैः। गीतवादित्रनिर्घोषैः स्तूयमाना महेश्वरी। महोत्सवे महारात्री उत्थाने शयनेऽपि च। महामखे महायोगे ध्यानं तत्र नियोजयेत्। नित्यां नीलोत्पलाभां तां त्रिनेत्रां शशिशेखराम्। चतुर्भिः स्वकरैर्धत्ते शङ्खचक्रकृपाणकम्। त्रिशि-

खञ्च जटाजूटं सिंहस्थामपि चिन्तयेत्। पीठसिंहे महेशानि! यजेत् शक्तिसमन्वितास्। प्रभा माया जया सूक्ष्मा विशुद्धा नन्दिनी तथा। सुप्रभा विजया सर्वसिद्धिदा नवशक्तयः। षट्पुरे भैरवीञ्चैव शेषमध्ये समापयेत्। पूर्वाद्यग्रे च ब्रह्मादीन् यच्छेषं पूर्ववत् प्रिये!। अष्टादशभुजायाश्च वच्ये मन्त्रं शिवप्रदम्। भावस्थाने समुन्नीय तत्त्वदृष्टे उदाहृतः। ध्यानं देव्याः प्रवक्ष्यामि सर्वपापप्रणाशनम्। सूर्य्यमण्डलमध्यस्थां दावाग्निसदृशप्रभाम्। जटाजूटसमायुक्तां त्रिनेत्रां शशिशेखराम्। अष्टादशाब्दिकां देवीं रक्ताम्बरविभूषिताम्। निघ्नन्तीं महिषञ्चैव सिंहासनोपरिस्थिताम्। शक्तिञ्च दुर्द्धरं शूलं वज्रं खड्गं तथाङ्कुशम्। शरं चक्रं शलाकञ्च वामदक्षिणतः शृणु। सिद्धाख्यवटुकञ्चैव सन्देहवटुकं पुनः। समयाद्यं तथाङ्गानि पत्राद्यञ्च क्रिया तथा। पुत्रं तेषामनन्तन्तु वटुकं शक्तिवामतः। तारेण भावयुक्तेन नमसान्तेन चार्च्चयेत्। अजितापराजिता चैव जया च विजया पुनः। काली चैव तथा श्यामा मङ्गला सिद्धिरेव च। कात्यायन्याः प्रवक्ष्यामि मन्त्रं सर्वार्थसाधनम्। वागाद्या जयदुर्गायास्तारमूले महेश्वरि!। ततश्चार्कभुजायाश्च कमलाद्यं समुद्धरेत्। मायान्यासञ्च सर्वत्र द्विभुजायाश्च वाग्भवम्। सिन्दूरार्कप्रसङ्काशां पीनोन्नतपयोधराम्। त्रिनेत्रां महिषघ्नीञ्च चन्द्रलेखांशुभिर्युताम्। करैश्चतुर्भिः खड्गञ्च शूलं चक्रं गदां तथा। वामे चर्माङ्कुशं घण्टां मुण्डपञ्चकमेव च। यवाद्याः पूजयेत् पत्रे श्रीकण्ठादींश्च तद्बहिः। अथ चाष्टभुजायाश्च ध्यानं वक्ष्ये समाहितः। सूर्य्यकोटिप्रतीकाशां त्रिनेत्रां शशिशेखराम्। मृगचर्मोत्तरासङ्गां सिंहस्कन्धनिवासिनीम्। अष्टभिर्बाहुभिः खड्गं चक्रं दक्षिणबाहुभिः। वज्राशनिं कपालञ्च वामे चर्म धनुः शरम्। घण्टाञ्च परशुञ्चैव क्रमादस्त्राणि वै प्रिये!। पुष्पादि-

मातरः पत्रे श्रीकण्ठादींश्च तद्बहिः। चतुर्भुजायाः श्रीवत्सध्यानं वैष्णवचोदितम्। सिंहारूढ़ां महाभीमां शूलं चक्रं धनुस्तथा। शङ्खं पद्मञ्च महिषं निघ्नन्तीं परिचिन्तयेत्। इति दुर्गाविशेष-पूजा।

अथ दुर्गानाममाहात्म्यं तत्र स्वरूपं दर्शयति रुद्रयामले। तवर्गतृतीयो वर्णः पञ्चमस्वरसंयुतः। कवर्गस्य तृतीयश्च रेफं तस्योपरि प्रिये!। द्वितीयस्वरसंयुक्तं नामेदं परिकीर्त्तितम्।

अथ नाममाहात्म्यम्। मुण्डमालातन्त्रे द्वितीयपटले। न हि दुर्गासमा पूजा न हि दुर्गासमो जपः। न हि दुर्गासमं ज्ञानं न हि दुर्गासमं तपः। दुर्गायाश्चरितं यत्र तत्र कैलास-मन्दिरम्। तृतीयपटले। दुर्गास्मरणजं देवि! दुर्गास्मरणजं फलम्। दुर्गायाः स्मरणेनैव किं न सिध्यति भूतले। शैवो वा वैष्णवो वापि शाक्तो वा गिरिनन्दिनि!। भजेद्दुर्गां स्म-रेद्दुर्गां यजेद्दुर्गां शिवप्रियाम्। तत्क्षणाद्देवदेवेशि! मुच्यते भवबन्धनात्। तथा। दुर्गाया मन्त्रमाकारं नानातन्त्रे श्रुतं त्वया। दुर्गे दुर्गेति दुर्गाया दुर्गे नामपरं मनुम्। यो भजेत् सततं चण्डि! जीवन्मुक्तः स मानवः। हे दुर्गे! दुर्गे घोरसङ्कटे दुर्गायाः परं मनुं दुर्गे इति नामशतं यो भजेज्जपेत् स जीव-न्नपि मुक्तो भवेदित्यन्वयः।

फलान्तरमाह तत्रैव। महोत्पाते महारोगे महाविप-दसङ्कटे। महादुःखे महाशोके महाभये समुत्थिते। यः सदा संस्मरेद्दुर्गां यो जपेत् परमं मनुम्। स जीवलोके देवेशि! नीलकण्ठत्वमाप्नुयात्। महोत्पातादिषु दुर्गां यः स्मरेत् स्मृतिविषयताशालिनीं कुर्य्यादयश्च जपन् मानसप्रत्य-क्षविषयतावतीं कुर्य्यात् स नीलकण्ठत्वमाप्नुयात् कालकूट-स्येव महोत्पातादेः पातृत्वं लभेत्। उत्तरत्र तु नीलकण्ठत्वं

शिवत्वमिति सर्वं समञ्जसमिति। तदेव स्पष्टयति चतुर्थ-पटले। श्रद्धयाऽश्रद्धया वापि यः कश्चिन्मानवः स्मरेत्। दुर्गां दुर्गशतं तीर्त्वा स याति परमां गतिम्। सप्तमपटले। नाना-तन्त्रमतं देवि! नानारत्नं प्रकाशितम्। ब्रह्मस्वरूपं विज्ञातुं कः समर्थो महीतले। नानामार्गे प्रधावन्ति पशवो हतबुद्धयः। श्रीदुर्गाचरणाम्भोजं हित्वा यान्ति रसातलम्। सत्यं वच्मि हितं वच्मि पथ्यं वच्मि पुनः पुनः। न भुक्तिश्च न मुक्तिश्च विना दुर्गानिषेवणात्। अष्टमपटले। भक्त्या भगवतीं दुर्गां दुःखदारिद्र्यनाशिनीम्। संस्मरेत् प्रजपेद्ध्यायेत् स मुक्तो नात्र संशयः। जीवन्मुक्तः स विज्ञेयस्तन्त्रभक्तिपरायणः। स सा-धको महाज्ञानी यश्च दुर्गापदानुगः। न च भुक्तिर्न वा मुक्तिर्न गतिर्नगनन्दिनि!। विना दुर्गां जगद्धात्रि! निष्फलं जीवनं भवेत्। शक्तिमार्गरतो भूत्वा योऽन्यमार्गे प्रधावति। न च शास्त्रास्तस्य वक्त्रं परिपश्यन्ति शङ्करि!। विना दुर्गां जग-द्धात्रि! वाग्जालशास्त्रमोहिताः। अन्यदेवं भजन्ते ते चान्य-शास्त्रेषु घूर्णिताः। पिच्छिलातन्त्रे पूर्वखण्डे तृतीयपटले। न दुर्गानामसदृशं नामास्ति जगतीतले। यस्य स्मरणमात्रेण पलायन्ते महापदः।

दुर्गानामस्मरणेन सर्वविद्यास्मरणमाह। तारिणी सुन्दरी काली दुर्गा च भैरवी तथा। भुवनेशी महालक्ष्मीस्तासां दुर्गेति नाम वै। तासामिति बहुवचनाद्गणो लभ्यते। प्रागु-क्तनाम्नो मन्त्रत्वमत्र स्पष्टयति। दुर्गानाममहामन्त्रः सर्व-मन्त्रोत्तमोत्तमः। लक्षसंख्याजपेनैव पुरश्चर्या विधीयते। राजादिभयमापन्ने दुर्गानाम परा गतिः। महापदि महा-त्रासे महादारिद्र्यसङ्कटे। लक्षसंख्याजपेनैव पलायन्ते महा-पदः॥ जामले। शिव उवाच। आरोग्यस्य च सम्पत्तेर्मा-

नस्य च महोदयः। नामेदं परमो हेतुर्मुक्तये भवसङ्गिनाम्। कलिकाले विशेषेण महापातकिनामपि। निस्तारवीजं विज्ञेयं नामसंस्मरणं प्रिये !। परदाररतोऽपि स्यात् परद्रव्यापहारकः। सोऽपि पापात् प्रमुच्येत यो वा स्यादतिपातकी। ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। तस्मादपि प्रमुच्येत यदि नाम स्मरेत् सुधीः। विष्णुनामसहस्रेभ्यो ह्यधिकं परमेश्वरि !। दुर्गानाम समाख्यातं चतुर्वेदविदां मतम्। दुर्गानामजपात् पापं सर्वं याति हि तत्क्षणात्। वेदेष्वागमतन्त्रेषु पुराणेषु सुनिश्चितम्। हरिनाम्नः परं नास्ति वैष्णवानामिदं स्मृतम्। तादृशाच्च मते ज्ञेयं दुर्गानाम ततोऽधिकम्। न तस्य दुर्लभं किञ्चित् परत्रेह च सुन्दरि !। यः स्मरेत् सततं दुर्गां स एव श्रीसदाशिवः। शौचाचारविहीनोऽपि संस्मरेत् परमेश्वरीम्। स एव परमं स्थानं कथितं वीरवन्दिते !। वैष्णवानाञ्च शैवानां शुद्धानां यादृशी गतिः। नामसंस्मरणाद्यस्य तथा शाक्तजनस्य च। कर्म्मणानेन देवेशि ! नाधिकारी यमो मम। दुर्गानामजपो यस्य किं तस्य कथयामि ते। अहं पञ्चाननः कान्ते ! वर्षकोटिशतैरपि। यावद्भूर्वायुराकाशं जलं वह्निः शशी ग्रहाः। तावत्तिष्ठन्ति ते स्वर्गे दुर्गानामपरायणाः। धनी पुत्री सुखी सोऽपि चिरजीवी भवेद्भुवि। प्रत्यहं यो जपेद्भक्त्या शतमष्टोत्तरं शुचिः। अष्टोत्तरसहस्रन्तु यो जपेद्भक्तिमान् नरः। प्रत्यहं परमेशानि ! तस्य पुण्यफलं शृणु। धनार्थी धनमाप्नोति ज्ञानार्थी ज्ञानमेव च। रोगार्त्तो मुच्यते रोगात् बद्धो मुच्येत बन्धनात्। भीतो भयात् प्रमुच्येत पापान्मुच्येत पातकी। पुत्रार्थी पुत्रमाप्नोति देवि ! सत्यं न संशयः। अयुतं यो जपेद्भक्त्या प्रत्यहं परमेश्वरि !। निग्रहानुग्रहे शक्तः स भवेत् कल्पपादपः। तस्य क्रोधाद्भवेन्मृत्युः प्रसादे परिपूर्णता।

एवञ्च तं विजानीयात् समर्थं सर्वकर्म्मणि। मासि मासि च यो लक्षं जपं कुर्य्याद्वरानने!। न तस्य ग्रहपीड़ा स्यान्नापि बन्धुवियोजनम्। न चैश्वर्य्यं क्षयं याति नच सर्पक्षतं क्वचित्। नाग्निचौरभयं वापि न चारण्ये जले भयम्। पर्व्वतारोहणे देवि! सिंहव्याघ्रभयादिके। भूतप्रेतपिशाचानां भयं वा कुत्र-चिद्भवेत्। न च वैरिभयं कान्ते! न च दस्युभयं पथि। ज्वरा-दीनाञ्च रोगाणां न शरीरे स्थितिः क्वचित्। परलोके भवेत् स्वर्गी कथितं वीरवन्दिते!। चन्द्रसूर्य्यसमो भूत्वा वसेत् कल्पा-युतं दिवि। वाजपेयसहस्रस्य यत् फलं स्याद्वरानने!। प्रत्यहं तत् फलं दुर्गानामजापाद्वरानने!। पूजाकाले जपेद्यस्तु गङ्गातीरे च मानवः। शताश्वमेधयज्ञानां फलमाप्नोति सा-धकः। प्राजापत्यव्रते यादृक् तथा चान्द्रायणेऽपि वा। एका-दश्युपवासेन कोटिसंख्येन यादृशम्। चन्द्रसूर्य्यग्रहे गत्वा गङ्गायाञ्च सुरेश्वरि!। कुरुक्षेत्रे च सर्व्वस्वदाने यत् फलमी-रितम्। प्रयागादिषु तीर्थेषु माघस्नाने च यत् फलम्। शिव-रात्रिचतुर्द्दश्यां शम्भोश्चैव प्रपूजनात्। रथस्थं वामनं दृष्ट्वा चैत्रे श्रीपुरुषोत्तमे। कामरूपे महामायां कामाख्यायोनिमण्डले। पूजयित्वा फलं यादृक् दुर्गानाम ततोऽधिकम्। अष्टम्याञ्च चतुर्द्दश्यां नवम्याञ्च महानिशि। श्मशाने च जपं कुर्य्याच्चा-ण्डालहृदयोपरि। दिगम्बरो निरातङ्को मुक्तकेशो भवेद्यदि। स सिद्धिं समवाप्नोति देवानामपि दुर्लभाम्। शनिभौमदिने देवि! भवेदिन्दुक्षयो यदि। तत्रायुतं जपेद्यस्तु निरातङ्को महानिशि। स वन्द्यो देवतानाञ्च मुनीन्द्राणाञ्च सुन्दरि!। भौमवारे महादेवि! यदि स्यादष्टमीतिथिः। बिल्वपत्रसह-स्रैस्तु तत्र सम्पूज्य पार्व्वतीम्। बलिं दद्याद्विधानेन जप्त्वा नाम-सहस्रकम्। यद्यदिष्टतमं लोके तत्तदाप्नोति निश्चितम्।

कृष्णाष्टमीसमायुक्तनिशायां स गणो भवेत्। तत्र गत्वा श्मशाने वै शनिवारे वरानने!। पशूनां घातनं कृत्वा योनिमुद्रां विधाय च। सर्व्वपापविनिर्म्मुक्तः साधकः साधयेच्छिवाम्। अष्टम्याञ्च चतुर्द्दश्यां नवम्याञ्चैव पार्व्वति!। शतमष्टोत्तरं यस्तु दुर्गानामजपं चरेत्। स लभेद्वाञ्छितं सर्व्वमिह लोके परत्र च। गङ्गागोदावरीरेवायमुनाजलसन्निधौ। यो जपेत् साधको भक्त्या सहस्रञ्च तिथिक्षये। परस्त्रीहरणात् पापं परद्रव्यापहारणात्। सर्व्वं तत् क्षयमाप्नोति महारौरवकारणम्। कामरूपे महातीर्थे कामाख्यायोनिसन्निधौ। लक्षमेकं जपेद्यस्तु निशायां वीरवन्दिते!। स च वागीश्वरो भूत्वा परत्र शिवतां व्रजेत्। भवानीसन्निधौ यस्तु वाराणस्यां जपं चरेत्। दरिद्रोऽपि धनी भूत्वा शिवलोके महीयते। इति दुर्गानामफलम्।

अथ दुर्गाशतनामस्तोत्रम्। मुण्डमालातन्त्रे द्वितीयपटले। दुर्गायाः शतनामानि शृणु त्वं भवगेहिनि!। दुर्गा भवानी देवेशी विश्वनाथप्रिया शिवा। घोरदंष्ट्रा करालास्या मुण्डमालाविभूषणा। रुद्राणी तारिणी तारा माहेशी भववल्लभा। नारायणी जगद्धात्री महादेवप्रिया जया। विजया च जयाराध्या शर्व्वाणी हरवल्लभा। असिता चाणिमा देवी लघिमा गरिमा तथा। महेशशक्तिर्व्विश्वेशी गौरी पर्व्वतनन्दिनी। नित्या च निष्कलङ्का च निरीहा नित्यनूतना। रक्ता रक्तमुखी वाणी वसुयुक्ता वसुप्रदा। रामप्रिया रामरता रघुनाथवरप्रदा। राज्येश्वरी राज्यरता कृष्णा कृष्णवरप्रदा। यशोदा राधिका चण्डी द्रौपदी रुक्मिणी तथा। गुहप्रिया गुहरता गुहवंशविलासिनी। गणेशजननी माता विश्वरूपा च जाह्नवी। गङ्गा काली च काशी च भैरवी भुवनेश्वरी। निर्म्मला च सुगन्धा च देवकी देवपूजिता। दक्षजा दक्षिणा दक्षा दक्षयज्ञविनाशिनी। सु-

शोला सुन्दरी सौम्या मातङ्गी कमला कला । निशुम्भनाशिनी शुम्भनाशिनी चण्डनाशिनी । धूम्रलोचनसंहर्त्री महिषासुर-मर्दिनी । उमा गौरी कराला च कामिनी विश्वमोहिनी । इत्येवं शतनामानि कथितानि वरानने ! । नामस्मरणमात्रेण जीवन्मुक्तो भवेन्नरः । यः पठेत् प्रातरुत्थाय स्मृत्वा दुर्गापद-द्वयम् । मुच्यते जन्मबन्धेभ्यो नात्र कार्य्या विचारणा । सन्ध्या-काले दिवाभागे निशायां वा निशामुखे । पठित्वा शतनामानि मन्त्रसिद्धिं लभेद्ध्रुवम् । अज्ञात्वा स्तवराजञ्च दश विद्या भजेद् यदि । तथापि नैव सिद्धिः स्यात् सत्यं सत्यं महेश्वरि ! ।

इति मुण्डमालातन्त्रे दुर्गाशतनामस्तोत्रं समाप्तम् ।

अथ दुर्गागीता । तथा सप्तमपटले । नानातन्त्रमतं देवि ! नानारत्नं प्रकाशितम् । ब्रह्मस्वरूपं विज्ञातुं कः समर्थो मही-तले । नानामार्गे प्रधावन्ति पशवो हतबुद्धयः । श्रीदुर्गाचरणा-म्भोजं हित्वा यान्ति रसातलम् । सत्यं वच्मि हितं वच्मि पथ्यं वच्मि पुनः पुनः । न भुक्तिश्च न मुक्तिश्च विना दुर्गानिषे-वणात् । पार्वत्युवाच । गोलके चैव राधाहं वैकुण्ठे कमला-त्मिका । ब्रह्मलोके च सावित्री भारती वाक्स्वरूपिणी । कैलासे पार्वती देवी मिथिलायाञ्च जानकी । द्वारकायां रु-क्मिणी च द्रौपदी नागसाह्वये । गायत्री वेदजननी सन्ध्याहञ्च द्विजन्मनाम् । योगमध्ये पूषाहञ्च पुष्पे कृष्णाऽपराजिता । पत्रे मालूरपत्रञ्च पीठे योनिस्वरूपिणी । हरिहरात्मिका विद्या ब्रह्मविष्णुशिवार्च्चिता । विशेषानुग्रहैरेव विज्ञेया शङ्कर ! प्रभो ! । यत्र कुत्र स्थले नाथ ! शक्तिस्तिष्ठति शङ्कर ! । तत्रै-वाहं महादेव ! निश्चितं मतमुत्तमम् । शक्तिमार्गं परित्यज्य योऽन्यमार्गे हि धावति । करस्थं स मणिं त्यक्त्वा भूतिभारं प्रधावति । भूतिभारं भस्मभारम् ॥ इति दुर्गागीता समाप्ता ॥

अथ बलिः॥ समयाचारतन्त्रे॥ सर्व्वासां देवतानाञ्च बलिदानं शृणुष्व मे। येन कृत्वाशु लभते यथोक्तफलमुत्तमम्। नित्यन्तु भोजने काले मूलमन्त्रेण साधकः। कारयेद्वलिदानञ्च भोजनात् प्रथमं प्रिये!। ततश्चानन्तरं कुर्य्याद्भोजनं स्थिरमानसः। भोजनानन्तरं देवि! शुचिस्थः कृतवान् भवेत्। बलिं समुद्धरेद् यत्नादेकान्ते स्थापयेत्तदा। स्थापयित्वा बलिं तत्र विहरेच्च यथासुखम्। उत्तराम्नायेषु देवेशि! मातङ्गी या प्रकीर्त्तिता। तस्या बलिं भोजनान्ते विनैवाचमने कृते। मूलमन्त्रेण सुभगे! बलिं दद्याद्दिने दिने। ततः किञ्चिज्जपं कृत्वा ततश्चाचमनादिकम्। पुनश्च रात्रौ सर्व्वेषां बलिं कृत्वा प्रयत्नतः। यथोक्तविधिना कुर्य्याद् यथोक्तफलमाप्नुयात्। बलिश्च द्विविधो देवि! सात्त्विको राजसस्तथा। सात्त्विको बलिराख्यातो मांसरक्तादिवर्जितः। राजसो मांसरक्तादियुक्तः स प्रोच्यते प्रिये!। गायत्रीतन्त्रे पञ्चमब्राह्मणपटले। त्रिविधा बलयः प्रोक्ता उत्तमाधममध्यमाः। उत्तमश्चोत्तमं दद्यान्मध्यमो मध्यमं तथा। अधमः कथ्यते देवि! अधमेऽप्यधमा गतिः। दशसंख्यबलिर्यत्र मध्यमस्तेन कथ्यते। सात्त्विको उत्तमा पूजा यदि दद्यान्महाबलिम्। अष्टमीनवमीसन्धौ दद्यादयत्नान्महाबलिम्। शतं सहस्रं लक्षं वा अयुतं कोटिकोटिशः। शस्यते नृपतिश्रेष्ठः सात्त्विकोपूजने बलिः। एकेन बलिदानेन चतुर्वर्गमवाप्नुयात्। बहुभिर्बलिदानैस्तु परंब्रह्ममयो भवेत्। बहुभिर्बलिदानैस्तु जपयज्ञैस्तु भूपते:। क्रियते सात्त्विकी पूजा सात्त्विकी तेन कथ्यते। दशभिः पञ्चभिः पूजा जपयज्ञैस्तथैव च। या कृता शारदी पूजा राजसी तेन कीर्त्तिता। बलिभिः पञ्चभिः पूजा तामसी तेन कीर्त्तिता। मत्स्यसूक्ते॥ साधकास्त्रिविधाः प्रोक्ताः सात्त्विका

राजसास्तथा। तामसाश्च तथा देवि! तेषां वक्ष्यामि लक्षणम्। सात्त्विकः सात्त्विकैर्युक्तो लक्षणैश्चैव सुन्दरि!। सात्त्विकं बलिदानादि नित्यं कुर्य्यात् प्रयत्नतः। राजसो राजसगुणैर्युक्तः सत्यं वरानने!। राजसं बलिदानादि सुरेशे! राजसैर्युतः। तामसस्तामसगुणै राजसाद्यैर्युतः प्रिये!। न श्रद्धा बलिदानेषु पूजनादिषु सुन्दरि!। न स्तोत्रपाठहोमेषु नाममात्रेण साधकः। योगिनीतन्त्रे उत्तरखण्डे सप्तमपटले॥ विप्राणां क्षीरबलयः शाल्यन्नं वाथ पायसम्। घृतप्लुतं चरुफलं पुष्पं तस्य घृतान्वितम्। प्रदद्याच्च गवां क्षीरं दुग्धाम्राम्लान् निवेदयेत्। शाल्यन्नं वाथ समधु ससरं खण्डमोदकम्। राज्ञां हि पशवः शस्ता वैश्यानां व्रीहयस्तथा। क्षौद्रं वृषलजातीनां सर्वेषां पशवोऽथवा। निवेदयेत् शोणगण्डं मानुषं वा लुलापकम्। वराहं वाथ छगलं चामरं वारुणं तथा। मेषञ्चाथ वराहञ्च गोधिकाञ्च निवेदयेत्॥ मत्स्यसूक्ते॥ लुलापञ्च तथा खड्गं चामरञ्च वराहकम्। कच्छपं शल्लकीं गोधां मानुषं तदनन्तरम्। न दद्याद्ब्राह्मणो मद्यं मानुषञ्च तथा रुरुम्। त्रैपक्षिकान् विवर्णान् मानुषान् कृशानपि। संवत्सरात् परं छागं यावत् स्यात्तु त्रिहायणम्। वराहदन्तसदृशविषाणाभ्यां सुशोभनम्। मदगन्धसमायुक्तं रोमराजिविराजितम्। कृष्णं तारणकञ्चैकं तस्मै द्वादशवार्षिकम्॥ जातिभेदे वर्णविशेषमाह तत्रैव॥ श्वेतञ्च छागलञ्चैव ब्राह्मणस्य विशिष्यते। रक्तं श्वेतं क्षत्रियस्य वैश्यस्य गौरमेव च। नानावर्णं हि शूद्रस्य सर्वेषामञ्जनप्रभम्। योगिनीतन्त्रे॥ पशूनाञ्चैव षण्मासात् परतश्च बलिर्भवेत्। छागलः कृष्णः श्वेतो वा द्विवर्षात्परतो यदि। तथा चाश्वं मृगञ्चैव छागञ्च पर्वतीयकम्। मूषिकञ्च करालञ्च क्षुद्रमार्जारमेव च॥ वर्ज्यमपि तत्रैव॥ काकोलं कलविङ्कञ्च राज-

हंसञ्च शारिकम्। शुकं गृध्रञ्च काकोलं मयूरं चित्रकं तथा। अश्वञ्च वेणुपृष्ठञ्च कृष्णपारावतञ्च यत्। वृहत्कपोतकञ्चैव खञ्जरीटं तथैव च। वकञ्चैव बलाकञ्च प्रयत्नेन विवर्जयेत्॥ बल्यन्तरमाह तत्रैव॥ रम्भा जाती वीजपूरं सुगन्धिपरिमिश्रितम्। मिश्रीकृत्य बलिं दद्यादष्टम्याञ्च विशेषतः। प्रयोगे बलिमन्त्रोऽयं प्रयोगान् धारयेद् यदि। अर्द्धरात्रे बलिं दद्यान्नित्यं देवि! चतुष्पथे। परसैन्यग्रहाविष्टरोगकृत्यानिवारणम्। प्रणवं पूर्वमुच्चार्य्य उग्रतारे ततः परम्। विकटदंष्ट्रं परपचं मोहयद्वयमुच्चरेत्। खादयद्वन्द्वमुच्चार्य्य पचद्वन्द्वं वदेत् पुनः। ये मां हिंसितुमुद्यता योगिनीचक्रे तान् दारय हुं फट् स्वाहा। सर्वविद्यामाकर्षयाकर्षय छेदय छेदय हन हन कपाले गृह्ण गृह्ण स्वाहेति॥ अनेनैव च देवेशि! बलिं दद्यान्महेश्वरि!। वृहन्नीलतन्त्रे षष्ठपटले॥ ततः शत्रुबलिं राजा दद्यात् चीरेण निर्म्मितम्। द्वयं छिन्द्यात् क्रोधदृष्ट्या प्रहारजनकेन च। कोपेन च सकृद्देवि! सत्यं सत्यं महेश्वरि!। प्राणप्रतिष्ठां कृत्वा वै शत्रुनाम्ना महेश्वरि!। शत्रुक्षयो महेशानि! भवत्येव न संशयः। शत्रुमधिकृत्य विशेषस्तु मत्स्यसूक्ते॥ मन्त्रेणानेन देवेशि! प्रकुर्य्यात् पूर्वनिर्मितम्। कात्यायन्यम्बिके! तारं हनयुग्मं दहद्वयम्। पचद्वन्द्वं मथद्वन्द्वं प्रथमद्वन्द्वमेव च। माया द्वयं वशञ्चैव चण्डि! चण्डि! च तारकम्। नारसिंहद्वयं पश्चात् मन्दरञ्च सतारकम्। चामुण्डे! प्रणवञ्चैव भक्षयेति दहद्वयम्। मथद्वयं पचद्वन्द्वं छिन्धियुग्मं ततो न्यसेत्। ॐ जयद्वितयञ्चैव स्फोटयद्वितयं तथा। कर्त्तयद्वितयस्यान्ते ततो दह समीरयेत्। मम शत्रुं समुच्चार्य्य ततो वीजं समुच्चरेत्। दाहयदाहय द्वन्द्वं ततश्छेदय मोहय। छेदयद्वितयस्यान्ते विश्लेषय ततः परम्। मम शत्रुपदस्यान्ते मन्त्रमुच्चारयेत्ततः। तारं हनयुगस्यान्ते

भक्षयद्वितयं तथा। चासयनाशयद्वन्द्वमावेशय ततः परम्। आरोहयस्फोटयान्ते उच्चाटययुगं ततः। उन्मत्तययुगस्यान्ते इमं मन्त्रमुदीरयेत्। कृष्णपुष्पं समादाय कुर्य्यान्निर्मञ्छनं स्वयम्। कलत्राणाञ्च देवेशि! मन्त्रेणानेन दापयेत्। विलयं यान्तु ते सर्वे ये मां हिंसन्ति जन्तवः। मृत्युरोगभयक्लेशाः पतन्तु शत्रुमस्तके। विमुखं क्रोधदृष्टिञ्च पातयेच्छत्रुमस्तके। कवचद्वन्द्वमुच्चार्य्य स्वाहाद्वन्द्वमुदीरयेत्।

छागादीनामुत्तरोत्तरं प्राशस्त्यमुक्तं मत्स्यसूक्ते महातन्त्रे॥ चामराणाञ्च दशकैश्छागलैकं विशिष्यते। दशभिश्छागलैर्देव! कूर्म्म एकः प्रशस्यते। कूर्म्मस्य च शतेनापि शशकैको विशिष्यते। शशकस्य शतेनापि स्वगात्ररुधिरं स्रुतम्। यावत् पद्मदलं पूर्णं तावन्मात्रं महेश्वरि!। ततः शतपुटानाञ्च शललैको विशिष्यते। शललस्य सहस्रेण वराहस्तु विशिष्यते। द्वे सहस्रे वराहस्य महिषः श्रेष्ठ उच्यते। द्वे सहस्रे लुलापस्य खड्ग एको विशिष्यते। खड्गानान्तु सहस्रेण मानुषे चातुलं फलम्। द्वे सहस्रे मनुष्यस्य शोणतुण्डः प्रशस्यते। द्वे शते शोणतुण्डस्य श्वेतग्रीवः प्रशस्यते। श्वेतग्रीवशतेनापि गोधिका तूत्तमा मता। गोधिकानां शतेनापि नरस्य च कुमारकः। दशैणस्य समा गोधा गोधाया दशपार्षतम्। पार्षतस्य दशानान्तु मेष एको विशिष्यते। मेषस्य दशमध्ये तु छागलश्च विशिष्यते। दशानां छागलानाञ्च कृष्णवर्णो विशिष्यते। तिलाक्षतेन पुष्पेण चाष्टाष्टौ च विशिष्यते। छागस्य कृष्णवर्णस्य श्वेत एको विशिष्यते। श्वेतवर्णस्य दशकं मुकुटं यदि मस्तके। प्रशस्तं तं विजानीयादक्षतञ्च विचारयेत्। शतं तस्माल्लुलापैकं तच्छतं खड्गमेव च। शतानामथ खड्गानां मानुषश्च विशिष्यते। दशकञ्च नराणाञ्च वराहैको विशिष्यते।

वराहस्य फलं देवि ! सैरिभैस्तोषयेच्छिवाम्। सैरिभस्य शता-
नाञ्च गोधाह्वयी विशिष्यते। गोधिकानां शतानाञ्च स्वगात्र-
रुधिरं तथा। तत्समं शोणतुण्डञ्च श्वेतग्रीवं तथैव च। अर्द्ध-
रात्रौ तु कुष्माण्डं पर्वतीयं विना प्रिये !। लुलापदाने यत्
प्रोक्तं छित्वा दत्त्वा च यत् फलम्। खड्गञ्च दशवर्षीयं लुलापं
वत्सरात्परम्। प्रशस्तं श्वेतवर्णन्तु खड्गं श्वेतं विवर्जयेत्। सैरि-
भञ्च श्वेतकृष्णं मनुष्यं श्यामसुन्दरम्। द्वादशाब्दात् परञ्चैव
यावद्‌यावत् स पुष्कलम्। तावदेव महेशानि ! किञ्चिन्नाद्या-
न्महामुनिः। पक्षिणः कच्छपा ग्राहाः स्थलजा जलजा अपि॥
कामना तु॥ अद्य दीर्घायुरारोग्यविजयावच्छिन्नविपुलभोग-
प्राप्तिपूर्वक-ध्वजमालाकुलविमानवरारोहणावच्छिन्नब्रह्मलोक-
प्राप्तिकामो भगवत्यै छागलदशकं दद्यात्॥ खड्गाभिमन्त्रणं
कुर्य्यात्तेन खड्गेन छेदयेत्। पूजयेद्रक्तपुष्पेण गन्धेन चन्दनेन
च। तारं मायायुगं कालियुग्मं स्याद्विकटं न्यसेत्। दंष्ट्रा-
करालि निष्पेषफेत्कारिणि च खादय। सृष्ट्जं पिब पिब तूर्णं
रुधिरं नारसिंहके। द्वितीयं किरिकिरिद्वन्द्वं कालियुग्मं
ततः परम्। व्रजेश्वरिपदं ङेऽन्तं वसखड्गधनुः स्मृतम्। रुधिरे
शर्करां दद्यात् पानीयञ्च ससैन्धवम्। गन्धं सुकुसुमं दद्या-
द्दर्भयुग्मन्तु निक्षिपेत्॥ त्रिपदं त्रिशूलम्॥ ओं कालि ! कालि !
महाकालि ! कालिके ! पापनाशिनि !। शोणितञ्च बलिं गृह्ण
वरदे ! वामलोचने !। तारं तारं ततो मायां क्रां क्रैं क्रौञ्च
ठद्वयम्। तारं स्थाणुयुगं दद्यात् शेषाङ्गञ्च समुद्धरेत्। खट्वाङ्गं
नृमुण्डञ्चेति त्रिशूलधारिणीत्यपि। विकटदंष्ट्रे करालास्ये
कपालमालिनि तत्परं ह्रां ह्रां गृह्ण गृह्ण साट्टहासिनिपदस्यान्ते
मन्त्रञ्च विकटद्वयम्। शिवं कान्तं ततो वान्तं कं कं काल्यै
नमः स्थितिः। एष मात्स्यबलिः स्वाहा अनेनामन्त्र्य दापयेत्।

तारं मायास्फुरद्वन्द्वं हनयुगञ्च ठद्वयम्। दृन्धनमगुरुद्वन्द्वं गृह्ण गृह्ण च ठद्वयम्। धराभिमन्त्रणं कृत्वा त्रिवर्गं परिकल्पयेत्। पूतनां कौशिकीञ्चैव कालिकाञ्च यथाक्रमात्॥

योगिनीतन्त्रे खड्गपूजादौ विशेषो यथा॥ मायावीजं समुच्चार्य्य कालिकालीति सुन्दरि!। वज्रेश्वरिपदं पश्चात् लौहदण्डाय ते नरः। इति सम्पूज्य देवेशि! शक्तिं सम्पूजयेत्ततः। हुं हुं वागीश्वरीब्रह्मभ्यां नमः। हुं लक्ष्मी-नारायणाभ्याञ्च पदं ब्रूयाद्देवि! चण्डे। महेश्वरि!। नम उमामहेश्वराभ्यां नम इत्यादिनार्चयेत्। प्रणवञ्च ततः पश्चात् कार्त्तिकेश्वराभ्यां नमः। इत्यनेनैव मन्त्रेण शक्तिं प्रयोजये-न्नरः। इति खड्गं प्रपूज्यैव विशेषेण प्रपूजयेत्। खड्गाय खर-नाशाय शक्तिकार्य्यार्थतत्पर!। पशुश्छेद्यस्त्वया शीघ्रं खड्ग-नाथ! नमोऽस्तु ते। अनेनैव च मन्त्रेण प्रणमेत् खड्गमुत्तमम्। गृहीत्वा ताम्रपात्रञ्च जलपूर्णमुदङ्मुखः। हर्षकामो महादेव्यै पशोश्च प्रोक्षणाञ्चरेत्। प्रोक्षणाञ्च पशोः कृत्वा चोत्सृजेद्देवता-धिया। यथोक्तेन विधानेन तुभ्यमस्तु समर्पितम्॥ मत्स्य-सूक्ते॥ चन्द्रहासेन खड्गेन छेदयेदुत्तमं बलिम्। चन्द्रहास-श्चतुस्तालः करवीरदलाकृतिः॥ मध्यमम्॥ पञ्चविंशाङ्गुलं मानं प्रस्तारे सार्द्धत्र्यङ्गुलम्। एकधारेण खड्गेन यः प्राणी बध्यते किल। न तत् फलमवाप्नोति छित्ता च नरकं व्रजेत्॥ एकधार-प्रतिप्रसवस्तु तत्रैव॥ पद्मपत्रदलाकारमेकधारं प्रशस्यते। दण्डखड्गस्त्रिवक्रस्तु प्रशस्तो बलिकर्म्मणि। सकृत् प्रहारमात्रेण बलिः स्यादुत्तरामुखः। स्वयं पूर्व्वमुखो भूत्वा छेदयेदप्रमादतः। बलिं पूर्व्वमुखं कृत्वा स्वयं स्यादुत्तरामुखः। छेदयेत् तीक्ष्ण-खड्गेन प्रहारेण सकृद्बुधः॥ योगिनीतन्त्रे॥ छिन्ने च पतिते तस्मिन् वामभागे च निन्दितम्। दैन्यं मध्ये च पतितं देवी-

च्छेदं स्मरेद्बुधः॥ तत्प्रायश्चित्तमपि तत्रैव॥ ततः कुण्डान्तिके गत्वा आहुतिर्दशपञ्चभिः। तेनैवमुत्सृजेद्दोषं बलिं लक्षेत् सलक्षणम्॥ मत्स्यसूक्ते॥ शिरश्छित्वा बलिं दद्यादजस्य रक्तमेव च। मन्त्रेणानेन देवेशि! प्रकुर्य्यात् पूर्वनिर्म्मितम्॥ अथ रुधिरपात्रम्॥ मत्स्यसूक्ते॥ राजतं मृण्मयं कांस्यं रैत्यं काष्ठमयं तथा। प्रशस्तं रुधिरालोके दारुलौहमयं त्यजेत्। शङ्खश्चाश्ममयञ्चैव अपवित्रं विवर्जयेत्। स्वस्तिकायाः सुप्रशस्तं तथा पद्मदलस्य च। अर्घ्यतोयप्रदानेन नरदानफलं लभेत्। कण्ठरक्तं न दद्यात्तु छागलस्य विशिष्यते। पद्मपुष्पदलस्यान्ते तथा मध्यगतस्य च। तावद्दलप्रमाणं स्यान्मात्रवदनुपूर्वकम्॥ अथ रुधिरग्रहणप्रकारस्तत्रैव॥ कियन्मांसं सरुधिरं तथा खड्गगतस्य च। रुधिरं मस्तकञ्चैव पशोश्चापि विशेषतः। विपरीतं पशोर्मस्ते पश्चिमस्ते च दापयेत्। कच्छपे चामरे भासे यः प्रदीपन्तु ज्वालयेत्। स दुर्गतिमवाप्नोति न चिरेण महेश्वरि!। दर्भेणापि द्विधा कृत्वा पञ्चधा रुधिरस्य। पूर्वभागादितो दद्यान्मध्ये च तदनन्तरम्। वामहस्ततले कृत्वा मन्त्रेणानेन मन्त्रयेत्। कालि! कालि! महाकालि! कालिके! पापनाशिनि!। शोणितं तमकं देवदेवि! गृह्ण नमोऽस्तु ते। कालि कालीति मन्त्रेण चण्डिकायै निवेदयेत्। चरकीञ्च विदारीञ्च पूतनां पापराक्षसीम्। कौशिकीं पुरतः कृत्वा देव्यै रक्तं प्रदापयेत्। कौशिक्याद्यामनुं वक्ष्ये धर्म्मकामार्थसिद्धिदम्। तारं वा कमला माया कमला कमलामिति। कामकला स्फें स्फें खिरश्चैव द्विठान्तं समुदाहृतम्। तेषामाद्यक्षरेणैव विन्दुयुक्तेन वा पुनः। एतत् सर्वप्रयत्नेन मन्त्रं वक्ष्यामि शङ्करि!। तारं व्योम ततो मायां यश्च पद्ममिदं पठेत्। ओं त्रिनेत्रे! विकरालास्ये! अस्त्रमालाविभूषिते!। सर्वासुर-

कृतान्ते! त्वं खड्गखट्वाङ्गशूलधृक्। वक्ष्ये महामनुं देवि! तारं क्रौं क्रौमुदीरयेत्। कौशिकाय गृह्ण गृह्ण एषान्ते च बलिद्वयम्। अपरं तारमाया च प्रस्फुरद्वितयं दह। चलद्वयं कुहुश्चैव कुहुश्चैव गुलुद्वयम्। पुनश्च मारय द्वन्द्वं बुधैर्यत् परिकीर्त्तितम्। विशाखाख्यमनुं वक्ष्य येन उत्पद्यते शुभम्। तारं ततो विकटदंष्ट्रे ङेऽन्तं हन हन द्वयम्। वै विशिखाय स्वाहेति बलिमन्त्र उदाहृतः॥ योगिनीतन्त्रे॥ ततो रुधिरमादाय वटुकादीन् समर्चयेत्। नैरृत्याञ्च महेशानि! क्रूरं वटुकभैरवम्। वायव्यां हुं यां योगिनीभ्यो नम इत्यादिनार्चयेत्। ऐशान्याञ्च महेशानि! हुं चौं चेत्रपालाय नम इत्यादिना देवि! गन्धपुष्पैः समर्चयेत्। आग्नेय्यां हुं गों गणेशाय नम इत्यादिनार्चयेत्। गन्धपुष्पैः समभ्यर्च्य बलिदानं समर्पयेत्॥ मत्स्यसूक्ते॥ भूगतं रुधिरं यत्तु भुञ्जन्ति परिचारिकाः। यावच्च तावद्देवेशि! लेपनं परिवर्जयेत्॥ इति बलिदानविधिः॥

अथ होमः॥ शारदातिलके पञ्चमपटले॥ वीक्षणं मूलमन्त्रेण शरेण प्रोक्षणं मतम्। तेनैव ताड़नं दर्भैर्वर्म्मणाभ्युक्षणं स्मृतम्। अस्त्रेण खननोद्धारौ हृन्मन्त्रेण प्रपूरणम्। समीकरणमन्त्रेण सेचनं वर्म्मणा मतम्। कुट्टनं हेतिमन्त्रेण मर्म्ममन्त्रेण मार्जनम्। विलेपनं कलारूपकल्पनं तदनन्तरम्। त्रिसूत्रीकरणं पश्चात् हृदयेनार्च्चनं मतम्। अस्त्रेण वज्रीकरणं हृन्मन्त्रेण कुशैः शुभैः। चतुष्पथं तन्मन्त्रेण तनुयादक्षपाटनम्। यागी कुण्डानि संस्कुर्य्यात् संस्कारैरेभिरीरितैः। शरेण फड़िति मन्त्रेण उत्तानेन तु हस्तेन प्रोक्षयेदिति सूत्रदर्शनाद्धस्ताग्रेण प्रोक्षणं तेनैव फड़ितिमन्त्रेणैव। वर्म्मणा हुंमितिमन्त्रेण मुष्टिबद्धेन हस्तेन सेचनाभ्युक्षणमिति। हेतिमन्त्रेणास्त्रमन्त्रेण वर्म्ममन्त्रेणेति चतुर्षु सम्बध्यते। तदुक्तं सोमशम्भुना। सम्मा-

जैनं समालेपं कलारूपप्रकल्पनम् । त्रिसूत्रीपरिधानञ्च वर्म्मणा-भ्यर्चनं हृदेति । कलारूपप्रकल्पनमिति चन्द्रसूर्य्याग्निकलाकल्पनमिति त्रिसूत्रीकरणं इति सूत्रत्रयेण वेष्टनम् । वज्रीकरण-मिति वज्रवद्दृढ़ीकरणमिति । कुशैरिति प्रागुदगग्रैः । मध्ये चतुष्पथरूपं भागं कृत्वा आवसथ्यादिकं भावयेत् । तदुक्तं राघवभट्टधृतेन । आवसथ्यं मध्यभागे प्राच्यां सत्यन्तु पश्चिमे । आहवनीयस्ततोऽन्वाहार्य्यं दक्षिणदेशतः । गार्हपत्यञ्च मन्त्रज्ञो भावयेदुत्तरक्रमादिति । मन्त्रेण कवचमन्त्रेण हुमित्यनेन अस्त्रपाटनमन्त्रेणोद्घाटनम् । एभिः संस्कारैरीरितैर्मूलमन्त्रेण वीक्षणमित्यादिकथितैः कुण्डानि संस्कुर्य्यादित्यन्वयः । अशक्तान् प्रत्याह । अथवा तानि संस्कुर्य्याच्चतुर्भिर्वीक्षणादिभिः । वीक्षणाभ्युक्षणान्तैश्च चतुर्भिरित्यर्थः । तिस्रस्तिस्रो लिखेद्रेखा हृदा प्रागुदगग्रगाः । प्रागग्राणां स्मृता देवा मुकुन्देशपुरन्दराः । रेखानामुदगग्राणां ब्रह्मवैवस्वतेन्दवः ॥ तिस्रस्तिस्र इति वीप्सया प्रागग्रास्तिस्र उदगग्रास्तिस्र इति लभ्यते । ततश्चादौ प्रागग्राणां लिखनं पश्चादुदगग्राणां लिखनं सर्वास्तु प्रादेशप्रमाणा इति साम्प्रदायिकाः । तदुक्तं राघवभट्टधृतसौत्रामणीतन्त्रे ॥ प्राचीस्थमुत्तरस्थञ्च पश्चिमारम्भमालिखेत् । तिस्रस्तिस्रो लिखित्वैवं प्रोक्षयेद्वाग्भवेन चेति । अथवा षट्कोणवृत्तं त्रिकोणं तत्र संलिखेत् । सर्वाण्यभ्युक्ष्य तारेण योगपीठमथार्चयेत् । अत्र तु आधारशक्त्यादिज्ञानात्मान्तं सम्पूज्य वागीश्वरयोर्योगपीठाय नम इति योगपीठं पूजयेत् । वागीश्वरीमृतुस्नातां नीलेन्दीवरसन्निभाम् । वागीश्वरेण संयुक्तामुपचारैः प्रपूजयेत् । शक्तिमन्त्रेण वागीशीं साध्यमन्त्रेण वागीशं पूजयेत् । तदुक्तं गणेशविमर्षिण्याम् ॥ शक्तिमन्त्रेण वागीशीं वागीशं साध्यमन्त्रत इति ॥ शारदायाम् ॥ सूर्य्यकान्तादिसम्भूतं यद्वा श्रो-

त्रियगेहजम्। आनीय चाग्निं पात्रेण क्रव्यादांशं परित्यजेत्।
सूर्य्यकान्तादीत्यादिशब्दादरणिजन्य इति लभ्यते। तदुक्तं वशिष्ठ-
संहितायाम्। जातं मार्त्तण्डकान्ताद्युतवहमरणेः श्रोत्रियागारजं
वा आहिताग्नेर्ग्रहादपीति। पात्रेण कांस्यपात्रेण पात्रान्तरे-
णापिहितेन। तदुक्तं राघवभट्टधृतेन यथा। पात्रान्तरेणापि-
हिते ताम्रपात्रादिके शुभे। अग्निप्रणयनं कुर्य्यात् शरावे ता-
दृशेऽपि च। यत्तु स्मृतिसारे॥ शरावे भिन्नपात्रे च कपाले
चोन्मुखेऽपि वा। नाग्निप्रणयनं कुर्य्यात् व्याधिं हानिं भया-
वहमिति। तस्य मुख्यमुख्यपात्रसम्भवे शरावो न ग्राह्य इति
तात्पर्य्यम्। क्रव्यादांशं परित्यजेत् अस्त्रमन्त्रेणेति ज्ञेयम्। तदुक्तं
राघवभट्टधृतेन॥ अस्त्रेणाग्निं समाधाय कवचेन पिधाय
तु। क्रव्यादांशन्तु चास्त्रेण नैरृत्यां सन्त्यजेत् प्रिये!। अन्यत्र
तु वह्निवीजेन क्रव्यादांशत्यागः। तदुक्तं वह्निवीजेन मन्त्री क्र-
व्यादांशं त्यजेत्तदनुच मनुना शोधयेदस्त्रकेण इति। मन्त्र-
मुक्तावल्यान्तु विशेषः। आनीयास्त्रेण नैरृत्ये क्रव्यादांशं
परित्यजेत्। देवांशं मूलमन्त्रेण स्थापयेत् पुरतः सुधीरिति।
संस्कुर्य्यात्तं यथा न्यायं देशिको वीक्षणादिभिः। औदर्य्य-
वैन्दवाग्निभ्यां भौमस्यैकं स्मरन् वसोः। योजयेद्वह्निवीजेन
चैतन्यं पावके तदा। औदर्य्येति विन्दुः प्रसिद्धः परमात्म-
स्वरूपस्तस्याग्नीषोमरूपत्वात्तयोर्वह्निवैन्दव इति। अन्ये तु
विन्दुर्भ्रूमध्यं तद्भवो वैन्दवः। वसोरग्ने भौमस्य पार्थिवस्य
एकमेकं स्मरन् देवांशं नियोजयेत् कुण्डादिष निदध्यादि-
त्यन्वयः। निधानप्रकारमाह॥ तारेण मन्त्रित मन्त्री धेनु-
मुद्रामृतीकृतम्। अस्त्रेण रक्षितं पश्चात्तनुत्रेणावगुण्ठनम्।
अर्चितं त्रिः परिभ्राम्य कुण्डस्योपरि देशिकः। प्रदक्षिणं
तदा तारमन्त्रोच्चारणपूर्वकः। आत्मनोऽभिमुखं वह्निः

जानुस्पृष्टमहीतलः। शिववीजधिया देव्या योनावेनं विनि-क्षिपेत्। एनमग्निम्। पश्चाद्देवस्य देव्याश्च दद्यादाचमनीय-कम्। ज्वालयेन्मनुनानेन तमग्निमथ देशिकः। चित्पिङ्गल-हनदहपचयुग्ममुदीर्य्य च। सर्वाज्ञाज्ञापय स्वाहामन्त्रोऽयं प्रागुदीरितः। ज्वालनेन विशेषो यथा राघवभट्टे। जुहुयुश्च हुताग्निश्च पाणिसूर्पस्रुवादिभिः। न कुर्य्यादग्निधमनं न कु-र्य्याद्व्यजनादिना। मुखे नैव धमेदग्निं मुखदोषो हि जायते। नाग्निं मुखेनेतिच यल्लौकिके योजयन्ति तत्॥ अग्निप्रणाम-मन्त्रस्तु। अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्। सुवर्ण-वर्णममलं समिद्धं विश्वतोमुखम्। उपतिष्ठेत विधिवन्मनु-नानेन पावकम्। विन्यसेदात्मनो देहे मन्त्रैर्जिह्वां हविर्भुजः। लिङ्गपायुशिरोवक्त्रघ्राणनेत्रेषु सर्वतः। वह्नीराघींशसंयुक्ताः सादियान्ताः सविन्दवः। वर्णमन्त्राः समुद्दिष्टा जिह्वानां सप्त देशिकैः॥ वह्नीरेफः। ईरो यकारः। अर्घीश ऊकारः। एतद्युक्ताः सादियान्ताः सकारादियकारान्ताः वैपरीत्येनेति वर्णाः सविन्दवः सप्त जिह्वानां सप्त विन्दवो मन्त्राः समुद्दिष्टाः कथिता देशिकै-रित्यर्थः। सत्त्वादिगुणभेदेन सप्तजिह्वाभेदमाह। जिह्वास्ता-स्त्रिविधाः प्रोक्ता गुणभेदेन कर्मसु। हिरण्या गगना रक्ता कृष्णान्या सुप्रभा मता। बहुरूपातिरक्ता च सात्त्विक्यो योग-कर्मसु। परागाभा सुवर्णान्या तृतीया भद्रलोहिता। लोहिता-नन्तरं श्वेता धूमिनी च करालिका। राजस्यो रजसा वह्नेः विहिताः काम्यकर्मसु। विश्वमूर्त्तिस्फुलिङ्गिन्यौ धूम्रवर्णा मनोजवा। लोहितान्या करालाख्या काली तामस्य ईरिताः। एताः सप्त नियुज्यन्ते क्रूरकर्मसु मन्त्रिभिः॥ इति जिह्वाभेद-कथनम्। जिह्वानां रूपतदधिष्ठातृदेवताश्चाह। स्वस्वनाम समाभाः स्युर्जिह्वाः कल्याणरेतसः। अमर्त्त्यपितृगन्धर्वयक्ष-

नागपिशाचकाः । राक्षसः सप्त जिह्वानामीरिताश्चाधिदेवताः । अमर्त्यो देवः । जिह्वाविशेषे द्रव्यविशेषहोमो राघवभट्टादावनुसन्धेयः । वह्नेरङ्गमनुं न्यस्येत्तन्मावुत्तेन वर्त्मना । सहस्रार्चिः स्वस्तिपूर्ण उत्तिष्ठ पुरुषः पुनः । धूमव्यापी सप्तजिह्वो धनुर्द्धर इति क्रमात् । षड़ङ्गमनवः प्रोक्ता जातिभिः सह संयुताः । सहस्रार्चिरादीनां चतुर्थ्यन्तत्वं सम्प्रदानात् । प्रयोगस्तु । ओं सहस्रार्चिषे हृदयाय नम इत्यादि ज्ञेयम् । मूर्त्तीरष्टौ तनौ न्यस्येद् शिको जातवेदसः । मूर्द्धां पार्श्वकव्यन्सुकटिपार्श्वांसके पुनः । प्रदक्षिणवशान्न्यस्येदुच्यन्ते ता यथाक्रमात् । जातवेदाः सप्तजिह्वो हव्यवाहनसंज्ञकः । अश्वोदरजसंज्ञोऽन्यः पुनर्वैश्वानरादयः । कौमारतेजाः स्याद्विश्वमुखो देवमुखः स्मृतः । ताराग्नये पदाद्याः स्युर्नत्यन्ता वह्निमूर्त्तयः । तारः प्रणवः । अग्नये इति स्वरूपं तेनाग्न्यन्तेन ओं अग्नये इति पदमादौ येषामिति विग्रहः । प्रयोगे तु मूर्द्ध्नि ओं अग्नये जातवेदसे नम इत्याद्यूह्यम् । आसनं कल्पयित्वाग्नेर्मूर्त्तिं तस्य विचिन्तयेत् । इष्टशक्तिं स्वस्तिकाभीतिमुच्चैर्दीर्घैर्दोर्भिर्धारयन्तं जवाभम् । हेमकल्पं पद्मरागं त्रिनेत्रं ध्यायेद्वह्निं बद्धमौलिं जटाभिः । परिषिञ्चेत्ततस्तोयैर्विशुद्धैर्मेखलोपरि । दर्भैरगर्भैर्मध्यस्थमेखलायां परिस्तरेत् । निक्षिपेद्दिक्षु परिधीन् प्राचीवर्जं गुरूत्तमः । प्राचीवर्जं दिक्षु गुरूत्तमः परिधीन्निक्षिपेदित्यन्वयः । परिधयस्तु कात्यायनेनोक्ता यथा । परिधीन् परिदधत्यार्द्रान् एकहत्त्वोयान् बाहुमात्रान् पलाशवैकङ्कतवैल्वानिति । प्रादक्षिण्येन सम्पूज्यास्तेषु ब्रह्मादिमूर्त्तयः । ध्यायन् वह्निं यजेन्मध्ये गन्धाद्यैर्मनुनामुना । वैश्वानरजातवेदः पदे पश्चादिहावह । लोहिताक्षपदस्यान्ते सर्वकर्माणि साधय । वह्निजायावधिः प्रोक्तो मन्त्रः पावकवल्लभः । एतत् पूजनमष्टमूर्त्तिसप्तजिह्वापूजनान्तरं

कार्य्यम्। यदाह मत्स्यसूक्ते दशमपटले। अथाग्नियजनं वच्ये सर्वयन्त्रेषु भूतिदम्। आदौ समीरणं कृत्वा पश्चात् पूजां समाचरेत्। आसनं पूजयित्वा तु गृहीत्वा रक्तपुष्पकम्। पात्रान्तरस्थं कुसुमं ध्यायेद्देवं हुताशनम्॥ ध्यानन्तु शारदोक्तसमानम्। यजेत् पूर्वादिपत्रेषु। हं जातवेदसे नमः, हं हुताशनाय नमः। हं सुवर्णवर्णाय नमः हं हिरण्याख्याय नमः। हं सुसिद्धाय नमः। हं हिरण्याय नमः। हं सर्वतोमुखाय नमः। पूर्वादिपत्रेषु। हिरण्यवर्णां प्रथमां वह्नेर्जिह्वां महाद्युतिम्। वराभयकरां वन्दे हिरण्याख्यां सुसिद्धये। ओं य्यां हिरण्यायै नमः। कनकां द्विभुजां शुक्लां हस्ताभ्यां दर्भसञ्चयान्। कमण्डलुञ्च बिभ्राणां नमः साधकसिद्धिदाम् ओं य्यां कनकायै नमः स्वाहा। उद्यदिन्दुनिभां वर्णान् चतुर्भिर्भुजपल्लवैः। शङ्खचक्राभयवरान् दधतीं प्रणमाम्यहम्। ओं रक्तायै नमः स्वाहा। सुप्रभा पाण्डरा श्वेतकराभ्याञ्च कृताञ्जलिः। पद्मासनस्था नौ शेषरसना मां प्रसीदतु। सुप्रभायै नमः स्वाहा। ओं बहुरूपायै नमः स्वाहा। नीलोत्पलनिभे! देवि! वह्निवर्णे! सुरार्चिते।! जवारूपधरे! नित्यमितिरूपे प्रसीद माम्॥ ओं य्यं य्यं अभिरूपायै नमः स्वाहा। यद्वा। विरेफावन्तिमौ वर्गौ रेफः षष्ठः स्वरस्थितौ। इन्दुविन्दुशिखायुक्तौ जिह्वावीजान्यनुक्रमात्।७। ओं चित्पिङ्गलहनहनदहदहपचपचसर्वाज्ञाज्ञापय स्वाहा। इति मन्त्रेण च पुनरग्निं सम्पूजयेत् सुधीः। शापचारि नमस्तेऽस्तु नमस्ते हव्यवाहन!। गवान्तक! सुरश्रेष्ठ! शान्तिं कुरु नमोऽस्तु ते॥ इति स्वागतम्॥ १॥ नमस्ते भगवन् देव! आपो नारायणात्मक!। सर्वलोकहितार्थाय पाद्यञ्च प्रतिगृह्यताम्॥ इति पाद्यम्॥ २॥ नारायणपरं नाम ज्योतीरूप! सनातन!। गृहाणार्घ्यं मया दत्तं विश्वरूप! नमोऽस्तु ते॥

इत्यर्घ्यम् ॥ ३ ॥ जगदादित्यरूपेण प्रकाशयति यः सदा। तस्मै प्रकाशरूपाय नमस्ते जातवेदसे ॥ इत्याचमनीयम् ॥ ४ ॥ धनञ्जय ! नमस्तेऽस्तु सर्व्वपापप्रणाशन !। मधुपर्कं प्रयच्छामि गृहाण परमेश्वर ! ॥ इति मधुपर्कः ॥ ५ ॥ त्रैगुण्यविषयाधान त्रिधारूप परात्पर !। त्रैलोक्यस्थितिसंहर्त्ते वीतिहोत्राय ते नमः ॥ इति पुनराचमनीयम् ॥ ६ ॥ जवासिन्दूरसङ्काशं सर्व्व-पापप्रणाशनम्। स्नानीयं ते मया दत्तं सर्व्वकामार्थसिद्धये ॥ इति स्नानीयम् ॥७॥ हुताशन! महाबाहो ! देवदेव सनातन !। वसनन्ते प्रयच्छामि देहि मे परमं पदम् ॥ इति वस्त्रम् ॥ ८ ॥ ज्योतिषां ज्योतीरूपस्त्वमनादिनिधनाच्युत !। मया दत्तमलङ्का-रमङ्क नमोऽस्तु ते ॥ इत्यलङ्कारः ॥ ९ ॥ देवीदेवा मुदं यान्ति यस्य सम्यक् समागमात्। सर्व्वदोषोपशान्त्यर्थं गन्धोऽयं प्रति-गृह्यताम् ॥ इति गन्धः ॥ १० ॥ त्वं विष्णुस्त्वं हि ब्रह्मा च ज्योतिषां पतिरीश्वरः। गृहाण पुष्पं देवेश ! सानुरूपं जगद्-गुरो ! ॥ इति पुष्पम् ॥११॥ देवतानां पितॄणाञ्च सुखमेकं सना-तनम्। धूपोऽयं देवदेवेश! गृह्यतां श्रीधनञ्जय ! ॥ इति धूपः ॥ १२ ॥ त्वामेकं सर्व्वभूतेषु स्थावरेषु चरेषु च। परमात्मा पराकारः प्रदीपः प्रतिगृह्यताम् ॥ १३ ॥ इति दीपः ॥ नमोऽस्तु यज्ञपतये प्रभवे जातवेदसे। सर्व्वलोकहितार्थाय नैवेद्यं प्रतिगृह्यताम् ॥ इति नैवेद्यम् ॥ १४ ॥ हुताशन ! नमस्तुभ्यं नमस्ते सुरवाहवे !। लोकनाथ ! नमस्तेऽस्तु नमस्ते जातवेदसे ॥ इति वन्दनम् ॥१५॥

जिह्वापूजास्थानमाह शारदायाम्। मध्ये ईश्वरकोणेषु जिह्वा ज्वालारुचो यजेत्। केशरोक्तेन मार्गेण पूजयेदङ्गदेवताः। पश्चादादाय पाणिभ्यां स्रुक्स्रुवौ तावधोमुखौ। त्रिः सम्प्रता-पयेदक्षो दर्भानादाय देशिकः। तदग्रमूलमध्यानि शोधये-त्तत्र यांक्रमात्। गृहीत्वा वामहस्तेन प्रोच्चयेद्दक्षिणे तनौ।

पुनः प्रताप्य तौ मन्त्री दर्भानग्नौ विनिक्षिपेत्। आत्मनो दक्षिणे भागे स्थापयेत्तौ कुशान्तरे। आज्यस्थालीमथादाय प्रोक्षयेदस्त्रवारिणा। तस्यामाज्यं विनिक्षिप्य संस्कृतं वीक्षणादिभिः। निरुह्य वायव्येऽङ्गारान् हृदा तेषु निवेशयेत्। इदं तापनमुद्दिष्टं देशिकैस्तन्त्रवेदिभिः। सन्दीप्य दर्भयुगलमाज्ये क्षिप्तानले क्षिपेत्। गुरुर्हृदयमन्त्रेण पवित्रीकरणं त्विदम्। दीप्तेन दर्भयुग्मेन नीराज्याज्यात् स वर्मणा। अग्नौ विसर्जयेद्दर्भमभिद्योतनमीरितम्। घृतेषु ज्वलितान् दर्भान् प्रदर्श्यास्त्राणुना गुरुः। जातवेदसि तान्धास्येदाज्योत्पवनमीरितम्। गृहीत्वा घृतमङ्गारान् प्रत्युह्याग्नौ जलं स्पृशेत्। अङ्गुष्ठोपकनिष्ठाभ्यां दर्भौ प्रादेशसम्मितौ। कृत्वोपनीयादस्त्रेण घृतमुत्पवनन्त्विदम्। तद्वद् हृदयमन्त्रेण कुशाभ्यामात्मसंमुखम्। घृतं संप्लवनं कुर्य्यात् संस्काराः षडुदीरिताः। प्रादेशमात्रं सग्रन्थि दर्भयुग्मं घृतान्तरे। निक्षिप्य भागौ द्वौ कृत्वा पक्षे शुक्लेतरे स्मरेत्। वामे नाडीमिड़ां भागे दक्षिणे पिङ्गलां पुनः। सुषुम्नां मध्यतो ध्यात्वा कुर्य्याद्धोमं यथाविधि।

अत्र स्थानविशेषे होमनिन्दा मत्स्यसूक्ते चतुर्दशपटले॥ यथा॥ कर्णहोमे भवेद् व्याधिर्नेत्रेऽन्धत्वमुदीरितम्। नासिकायां मनःपीड़ा मस्तके च धनक्षयः। एतेषु प्रधानाहुतिपरमन्यथा शारदोक्तौ दोषः स्यात्। तद्यथा। स्रुवेण दक्षिणाद्भागादादायाज्यं सदा गुरुः। जुहुयादग्नये स्वाहेत्यग्नेर्दक्षिणलोचने। वामतस्तद्वदादाय वामे वह्निविलोचने। जुहुयादग्नीषोमाभ्यां स्वाहेति हृदयाणुना। हृन्मन्त्रेण स्रुवेणाज्यं भागादादाय दक्षिणात्। जुहुयादग्नये स्विष्टिकृते स्वाहेति तन्मुखे। इतिं सम्पादयेद्भागे स्वाज्यस्थान्वाहुतिक्रमात्। इत्यग्निनेत्रवक्त्राणां कुर्य्यादुद्घाटनं गुरुः।

सताराभिर्व्याहृतिभिराज्येन जुहुयात् पुनः। जुहुयादग्नि-मन्त्रेण त्रिवारं देशिकोत्तमः। कुण्डस्य रूपं जानीयात् परमं प्रकृतिर्वपुः। प्राच्यां शिरः समाख्यातं बाहु दक्षिण-सौम्ययोः। जठरं कुण्डमित्युक्तं योनिः पादौ च पश्चिमे। गर्भा-धानादिका वह्नेः क्रिया निर्वर्त्तयेत् क्रमात्। अष्टाभिराज्या-हुतिभिः प्रणवेन पृथक् पृथक्। गर्भाधानं पुंसवनं सीमन्तो-न्नयनं पुनः। अनन्तरं जातकर्म्म स्यान्नामकरणं तथा। उप-निष्क्रमणं पश्चादन्नप्राशनमेव च। चौड़ोपनयने भूयो महा-नाम्न्यं महाव्रतम्। महानाम्न्यं वेदारम्भः॥ तथोपनिषदं पश्चाद्गोदानोद्वाहकौ स्मृतिः। शुभेषु स्युर्विवाहान्ताः क्रियास्ताः क्रूरकर्म्मसु। मरणान्ताः समुद्दिष्टा वह्नेरागमवेदिभिः। ततश्च पितरौ तस्य सम्पूज्यात्मनि योजयेत्। समिधः पञ्च जुहुयात् मूलाग्रघृतसंप्लुताः। मन्त्रैर्जिह्वाङ्गमूर्त्तीनां क्रमाद्वह्नेर्यथा-विधि। प्रत्येकं जुहुयादेकामाहुतिं मन्त्रवित्तमः। अवदाय स्रुवेणाज्यं चतुःस्रुचि पिधाय ताम्। स्रुवेण तिष्ठन्नेवाग्नौ दे-शिको यतमानसः। जुहुयाद्वह्निमन्त्रेण वौषड़न्तेन सम्पदे। विघ्नेश्वरस्य मन्त्रेण जुहुयादाहुतीर्दश। सामान्यं सर्वतन्त्रा-णामेतदग्निमखं मतम्। ततः पीठं समभ्यर्च्य देवतायै हुता-शने। अर्चयेद्वह्निरूपां तां देवतामीष्टदायिनीम्। तन्मुखे जुहुयान्मन्त्री पञ्चविंशतिसंख्यया। आज्येन मूलमन्त्रेण वह्नै-कीकरणन्त्विदम्। वह्निदेवतयोरैक्यमात्मना सह भावयन्। मूलमन्त्रेण जुहुयादाज्येनैकादशाहुतीः। नाड़ीसन्धानमु-द्दिष्टमेतदागमवेदिभिः। जुहुयादङ्गमुख्यानामावृतीनामनु-क्रमात्। एकैकामाहुतिं सम्यक् सर्पिषा देशिकोत्तमः। ततो-ऽन्येष्वपि कुण्डेषु संस्कृतेषु यथाविधि। आचार्य्यो विहरेदग्निं पूर्व्वादिषु समाहितम्। ऋत्विजो गन्धपुष्पाद्यैरङ्गाद्यावरणा-

न्विताम्। तन्त्रोक्तामितामिष्ट्वा च पञ्चविंशतिसंख्यया। मूलेनाज्येन जुहुयुः साज्येन चरुणा तथा।

आहुतिदानप्रकारश्च मत्स्यसूक्ते॥ उत्तानेन तु हस्तेन अङ्गुष्ठाग्रेण पोड़ितम्। संहताङ्गुलिपाणिस्तु जुहुयाद्देशिकोत्तमः। आहुतिस्तु घृतादीनां स्रुवेणाधोमुखेन तु। दद्यात्तिलाद्याहुतिं तु दैवेनोत्तानपाणिना। समिद्धोमश्च तिलवन्मोदकाद्याहुतिस्तथा। अङ्गुष्ठादित्रिचतुरैर्विल्वपत्र इति क्रमात्॥ द्रव्यविशेषहोमे जिह्वाविशेषोऽपि तत्रैव॥ घृताहुतौ हिरण्याख्या कनकाशस्यहोमतः। रक्ता ख्याता समिद्धोमे कृष्णा सा आहुतौ तथा। सुप्रभा मोदकविधौ बहुरूपातिरूपका। पुष्पा पत्रविधौ वह्नेर्जिह्वाः सप्त प्रकीर्त्तिताः। द्रव्यालाभे प्रतिनिधिरपि तत्रैव॥ उक्तं न लभ्यते तत्र प्रतिकृत्या च होमयेत्। अर्कस्योडुम्बरं प्रोक्तं खदिरस्य शमीरिता। पिप्पलस्य पलाशः स्यात् पलाशस्यापि पिप्पलः। उभयोरेवमेवं स्यादपामार्गे पलाशकम्। कुशाभावे भवेद्दूर्वा दूर्वाभावे कुशो भवेत्। इक्षोरभावे त्वमृताऽमृतायाश्च पलाशकम्। पद्माभावे हयारिः स्याज्जलजानां विशेषतः। घृतं न लभ्यते यत्र शुद्धक्षीरेण होमयेत्। क्षीरस्य तु दधिर्ज्ञेयं मधुनश्च गुड़ं भवेत्। शर्करायाश्च श्रीखण्डं गुड़खण्डमथापि वा। रसानाञ्च रसेनैव सर्वमिक्षुरसेन वा। मोदके पिष्टकं ज्ञेयं फलानाञ्च फलेन तु। काष्ठस्य चैव काष्ठेन पुष्पस्य कुसुमेन च। एवमन्योन्यतः सर्वं सर्वद्रव्येषु सर्वदा॥ अङ्गुतेषु तु सर्वेषु उत्तराभिमुखो भवेत्। समिधः प्रावरणं कुर्य्यादन्यत्र पूर्वदिग् भवेत्। यजमानः स्वयं नैव समिधं प्रवयेत् क्वचित्। पुत्रशिष्यादिभिः कुर्य्यान्न पुत्रं विनियोजयेत्॥ तथा॥ न कदाचिदसृग्दानं गृहयज्ञे विचक्षणः। भूतिकामः क्वचित् कुर्य्यादेवं तन्त्रविदां मतम्।

आज्यादिकं भवेद्यत्र समिधः श्रावणे स्थितम्। शेषं न योजयेन्मन्त्री अन्यत्रैवं विचक्षणः। एकाङ्गं लग्नमेकत्र न पात्रे स्थापयेत् क्वचित्। देशिकः प्राङ्मुखो भूत्वा ऐशान्यादिक्रमेण तु। प्रदक्षिणेन कुर्वीत मन्त्रैः परिसमूहनम्। मन्त्रपूर्वं साग्निकानां हृष्टिमेव निरग्निकम्। त्रिकुशेन महायागे विवाहादौ त्रिपत्रकम्। वैश्वदेवे त्वेकपत्रं नित्यहोमे तथैव च। दिग्विदिक्षु परिस्तीर्य्य महायागेषु सर्वदा। दिक्षुमात्रे नित्यहोमे वैश्वदेवे तथैव च। अकृत्वा कर्म्म नित्यन्तु वृथा नैमित्तिकं चरेत्। तस्मात् पुष्पफलाद्येन कृत्वा नैमित्तिकं चरेत्॥ तथा॥ प्रजापतिं तथेन्द्रञ्च अग्निं सोमं तथैव च। एतान्नित्याहुतिं कृत्वा समिद्धोममनन्तरम्। हुत्वा व्याहृतिभिः पश्चात् सर्व्वत्रैवं महेश्वरि!। भूर्भुवः स्वः स्वाहा तन्न इत्यादिमन्त्रपञ्चकम्। अन्ते स्विष्टिकृतिं दद्याद्धोमद्रव्येण शङ्करि!। दानमध्ये यज्ञभेदे ग्रहयज्ञे शतान्तरे। सप्तभेदे त्विमे पूर्णाः पुनस्ते च त्रिधा क्रमात्। ऋत्विक्स्कन्धं स्पृशन्मन्त्री दक्षिणं वा स्पृशन् भुजम्। यजमानः सपत्नीको जुहुयाद्देशिकोत्तमः। उत्थाय दद्यात् पूर्णाञ्च नोपविश्य कदाचन। कनकायान्तु जिह्वायां रक्तायां ग्रहयज्ञके। ग्रहहोमशतान्ते च पूर्णा एका विधीयते। सहस्रान्ते द्वयं कुर्य्यादयुतान्ते चतुर्थकम्। अन्नहोमे युगं दद्यात् पद्महोमे चतुर्थकम्। आज्यलाजतिलादीनां होमे च दशलक्षके। पनसाम्रफलैर्होमे द्वितीयं समुदाहृतम्। शतार्द्धं वा तदर्द्धं वा गर्भाधानान्नप्राशने। सीमन्तोन्नयने चैव प्रायश्चित्ताहुतिषु च। दधिहोमे च नित्ये च एषु पूर्णां विवर्जयेत्॥

अथ होमद्रव्यप्रमाणम् मत्स्यसूक्ते चतुर्दशपटले॥ कर्षैकं घृतहोमे तु द्वितोलञ्च पयः स्मृतम्। वाणतोलं पञ्चगव्यं तोलकैर्मधुदुग्धकम्। दधि प्रसृतिमात्रन्तु लाजाः स्युर्मुष्टिसम्मिताः।

पृथक्काष्टप्रमाणेन अथवा पूर्वपूरणम्। शक्तवो मुष्टिमात्रेण शर्करा तोलकार्द्धकम्। त्रितोलञ्च गुड़ं विद्यादिक्षुपर्व्वावधि स्मृतम्। मोदकं धात्रीमानञ्च मार्गं वदरमानतः। पिण्डकस्य यथा मानं नारिकेलादिपर्व्वकम्। तालन्तु द्व्यङ्गुलं चैव पनसं वीजसंख्यया। मारणोच्चाटने चैव पनसं दशधा कृतम्। अष्टधा नारिकेलन्तु मातुलुङ्गं त्रिधा मतम्। त्रिधा कृतं फलं वैल्वमन्यथा दशभागकम्। प्रादेशमात्रं समिधं दूर्व्वापत्रत्रयं स्मृतम्। पत्रावसानहोमे च प्रादेशं परिकल्पयेत्॥ समिद्विशेषो यथा राघवभट्टे॥ विशीर्णा विदला ह्रस्वा वक्रा स्थूला कृशा द्विधा। क्रिमिदष्टाश्च दीर्घाश्च निस्त्वचः परिवर्जिताः। विशीर्णायुःक्षयं कुर्य्याद्विदला व्याधिसम्भवा। ह्रस्वायां व्याधिमाप्नोति वक्रा विघ्नकरी सदा। स्थूलाभिहरते लक्ष्मीं कृशायां याजकक्षयः। द्विधायां नेत्ररोगाः स्युः कीटदष्टार्थनाशिनी। दोषं प्रकुर्व्वते दीर्घाः प्राणघ्नो निस्त्वचः स्मृताः। न क्षीणा नाधिका न्यूनाः समिधः सर्व्वकामदाः। आर्द्रत्वचां समच्छेदां तर्जन्यङ्गुलिवर्त्तुलाम्। ईदृशीं होमयेत् प्राज्ञः प्राप्नोति विपुलां श्रियम्। श्रौते स्मार्त्ते चतस्रोक्ताः समिधः परिकीर्त्तिताः॥ मत्स्यसूक्ते॥ चतुरङ्गुला च गुडूची व्रीहयो मुष्टिसम्मिताः। सर्षपं सूक्तिमानेन सूक्तिः स्यात् पञ्चतोलकम्। मरिचे विंशकं कृत्वा मारणे दशकं विदुः। दशधा च मृणालं स्यान्मूलकं सप्तभागकम्। एकैकशः कशेरुश्च शृङ्गवेराङ्गुलेन तु। मातुलुङ्गं समं कुर्य्यादन्नं व्यञ्जनसंयुतम्। पूर्व्ववदेव मानं स्यात्तण्डुलं चैव तत्समम्। चन्दनागुरुकर्पूरकस्तूरीकुङ्कुमादि च। नकुले तु कुलं ज्ञात्वा कुले द्रव्यान्तरेण तु। यथा योगो न गन्धेन राज्यकामे विशेषतः। तिन्तिड़ीवीजमानेन समुद्दिष्टानि तान्त्रिकैः॥ योगिनीतन्त्रेऽपि॥ कर्षमात्रं घृतं देयं सूक्ति-

मात्रं पयः स्मृतम्। दधि प्रसृतिमानन्तु तदर्द्धञ्च मधुस्मृतम्। एषां व्यापारकं वक्ष्ये यथावत् शृणु पार्वति!। सुवर्णाष्टप्रमाणेन घृतं देयं विचक्षणः। पयो भवेत्तदर्द्धेन दधि पञ्चसुवर्णकम्। दधि चैव तदर्द्धेन एवं मानविदो विदुः। एवं शतस्य मानन्तु प्राबल्यं विभवे सति। पञ्चाशत्तत्र जानीयात् सर्वत्रैव विचक्षणः।

अथ मानाध्यायः॥ योगिनीतन्त्रे द्वितीयभागे॥ गवाक्षमात्रे यद्दृश्या अर्करश्मेस्तु लेखिका। लेखिकाष्टौ भवेद्धूली धूलयोऽष्टौ च सर्षपः। सर्षपाणां चतुष्केण रक्तिकेत्यभिधीयते। रक्तिकानां विंशतिश्च पादश्च परिकीर्त्तितम्। तोलिका तु चतुष्पादैश्चतुस्तोलैः प्रसृतिका। प्रसृती द्वे कर्षकञ्च द्वे कर्षे तु पलं भवेत्। पलार्द्धेन भवेत् सूक्तिर्द्वे सूक्ती गुड़कं मतम्। वीरमित्रोदयधृतहस्तिहृदयप्रबन्धे॥ जालान्तरप्रविष्टायां सूर्य्यभासि यदीच्यते। रजस्तत्परमाण्वाख्यं प्रमाणं प्रथमं मतम्। त्रसरेणुर्मतस्तैश्च परमाणुभिरष्टभिः। तैरष्टभिर्भवेल्लिख्यो यूका लिख्यैस्तथाष्टभिः। यवो यूकाभिरष्टाभिर्यवैरष्टभिरङ्गुलम्। मुष्टिस्तानि च चत्वारि द्वे च मुष्टी धनुर्ग्रहः। त्रिमुष्टिको वितस्तिः स्यादरत्नी द्वे वितस्तिके। किष्कुर्द्वाभ्यामरत्निभ्यां धनुः किष्कुद्वयेन च। सहस्रं धनुषां क्रोशो गव्यूतिर्द्विगुणा ततः। गव्यूतयश्च चतस्रो योजनं कल्पितं कला॥ मत्स्यसूक्ते षोड़शपटले तु॥ सर्षपाणां चतुष्केण माष इत्यभिधीयते॥ अत्र माषः शस्यवाचकः॥ माषाणाञ्चैव तूर्य्येण रक्तिकेत्यभिधीयते। रक्तिकानां विंशकञ्च पादश्च परिकीर्त्तितम्। तोलिका च चतुष्पादैश्चतुस्तोलैः प्रसृतिका। प्रसृती द्वे कर्षकञ्च द्वे कर्षे तु पलं भवेत्। पलद्वये तु सूक्तिः स्याद् द्वे सूक्ती दग्धकं मतम्॥

इति श्रीप्राणतोषिण्यां चतुर्थे काम्यकाण्डे दुर्गामन्त्रस्तुतिनाममाहात्म्यशतनामबलिहोमहोमीयानुकल्पपरिमाणात्मकदुर्गोत्सवप्रकरणरूपपुष्पकथनं नाम षष्ठः परिच्छेदः।

इष्टदेवीं नमस्कृत्य भुक्तिमुक्तिप्रदायिनीम्। मासकृत्यमथो वक्ष्ये विदुषां परितुष्टये॥

अथ मासकृत्यम्। चान्द्र एवात्र मासस्तिथिकृत्यनिमित्तत्वादभिलापादिकन्तु सौरेणैव प्रागुक्तधर्म्मकाण्डधृतवचनात्। मत्स्यसूक्ते द्विपञ्चाशत्पटले॥ आश्विने शुक्लपक्षे च अष्टम्याञ्च निशागमे। सिद्धगौरीव्रतं कुर्य्याद् या साध्वी धर्म्मचारिणी॥ इति सिद्धगौरीव्रतमस्मिन् देशे अप्रचरद्रूपत्वेन न लिखितम्। यस्यात्र प्रयोजनं विद्यते तेन तत्तु अन्वेष्यम्। शुक्लपक्षे दशम्यान्तु आश्विने परमेश्वरि!। विजया नाम सा ख्याता सर्वत्र निगमालयम्। रेवन्तं पूजयेत्तत्र ईश्वरीञ्च वरानने!। इह लोके सुखं प्राप्य यास्यन्ति शिवमन्दिरम्। तेजोऽसीति च द्विभुजं तुरङ्गासनसंस्थितम्। खड्गचर्म्मधरञ्चैव मन्त्रेणानेन पूजयेत्। नमस्ते सूर्य्यपुत्राय तुरङ्गानां हिताय च। शान्तिं कुरु तुरङ्गानां रेवन्ताय नमो नमः। ओँ गन्धर्वकुलजातस्त्वं भूपालाय च केशव!। ब्रह्मणस्तत्त्ववाक्येन सोमस्य वरुणस्य च। तेजसा चैव सूर्य्यस्य स्वलीला ते पदा तथा। रुद्रस्य ब्रह्मचर्य्यस्य पवनस्य बलेन च। धान्यकं पशुकं वीजं ध्यानं सिद्धार्थकानि च। पद्मपत्रं निशान्ते च सूत्रेण द्विगुणेन च। बध्नीयादक्षमालायां गले चापि विशेषतः। अस्त्रशस्त्रादिकञ्चैव राज्याङ्गानि च भाविनि!। प्रतिवोजेन पुष्पाद्यैः पूजयेदविचारयन्॥

अथ खञ्जनदर्शनं तत्रैव॥ दशम्यामपराह्णे तु भुक्तवत्सु स्वयं प्रिये!। शोभनं खञ्जनं पश्यन् नमस्कुर्य्याद्विभूतये। वासुदेवस्वरूपेण सर्वकामफलप्रद!। पृथिव्यामवतीर्णोऽसि खञ्जरीट! नमोऽस्तु ते। खञ्जनाय नमस्तुभ्यं सर्वाभीष्टप्रदाय च। नीलकण्ठाय भद्राय भद्ररूपाय ते नमः। भद्र! त्वं देहि मे भद्रमाशां पूरय पूरक!। स्वस्तिकोऽसि कुरु स्वस्ति खञ्जरीट!

नमोऽस्तु ते। नारायणस्वरूपाय संवत्सरसुखप्रद!। नीलकण्ठ! महादेव! खञ्जरीट! नमोऽस्तु ते। देवदानवयक्षाणां नराणां पुष्टिवर्द्धनम्। दर्शनं तव भद्रस्य विष्णुरूप! नमोऽस्तु ते।

अथ दर्शनशुभाशुभफलम्॥ जलप्रासादशिखरे पर्व्वते च जलान्तिके। दृष्टे शुभं भवेत् कीर्त्तिर्गोष्ठेषु धनवर्द्धनम्। अन्नेषु नृपतिर्भूयात्तथा देवालयेषु च। तड़ागतीरे धनवान् श्मशाने मरणं भवेत्। कृष्णग्रीवो नीलकण्ठः श्वेतकण्ठो जनार्दनः। पीते तु पार्व्वती देवी,धुन्वत्पक्षे तु वीक्षणम्। व्याधिर्भवति देवेशि! स्थिरे सम्पत्तिकारकम्। भक्तं भुञ्जन् भवेद्रोगी श्रियं दृष्ट्वा च वासवः। सुमानः कीर्त्तनादेव आयुषस्तु क्षयो भवेत्। तस्मात्तु खञ्जनं नाम कीर्त्तयेदविचारयन्॥ तत्रैव॥ कौमुद्यां रात्रि-योगे तु गृहिणी या पतिव्रता। इन्द्रं लक्ष्मीं समभ्यर्च्य सुगन्धि-कुसुमादिभिः। पायसञ्च बलिं दद्यादन्नं व्यञ्जनसंयुतम्। नारिकेलफलैर्देवान् पितॄनथ समर्चयेत्। बन्धूंश्च पूजयेद्रात्रौ प्रकुर्य्यात् क्रयविक्रयम्। न करोति महालक्ष्मीः शापं दत्त्वा व्रजेत् पुरम्। निशीथे वरदा लक्ष्मीः को जागर्त्ति विभाषिणी। नारिकेलोदकं पीत्वा अक्षैर्जागरणं निशि। तद्विभूतिं प्रय-च्छामि को जागर्त्ति महीतले। सोमञ्च पूजयेत् कुम्भे पट्टे वा पीठकेषु च॥

अथ लक्ष्मीध्यानं तत्रैव॥ नवयौवनसम्पन्नां तप्तकाञ्चनसन्नि-भाम्। त्रिनेत्रां द्विभुजां रम्यां दिव्यकुण्डलधारिणीम्। श्रीफलं दक्षिणे पाणौ वामे पद्मञ्च बिभ्रतीम्। सर्व्वालङ्कारसम्पूर्णां सर्व्वा-लङ्कारगर्व्विताम्। किन्नरामरगन्धर्व्वसिद्धचारणसेविताम्। वीजेन दीर्घयुक्तेन षड़ङ्गमथ कल्पयेत्। पूजयेदुपचाराद्यैर्नानानैवेद्य-वन्दनैः॥ पूजामन्त्रस्तु तत्रैव॥ क्षीरोदार्णवसम्भूते! विष्णोरुरसि संस्थिते!। गृहाण पूजां देवेशि! कौमुद्याञ्च नमोऽस्तु ते। प्रणा-

ममन्त्रस्तु। विश्वरूपस्य भार्य्यासि पद्मे! पद्मालये! शुभे!। महालक्ष्मि! नमस्तुभ्यं कौमुदीञ्च कुरुष्व मे। नमस्ते सर्वजगतां वरदासि हरिप्रिये!। या गतिस्त्वत्प्रपन्नानां सा मे भूयात् त्वदर्च्चनात्। लक्ष्मि! देवि! नमस्तुभ्यमचला भव सर्वदा। कमले! वरदे! देवि! कुलोद्योतकरी मम। हिताय सर्वभूतानां यथा नारायणे स्थिता। तथा त्वं पाहि मां देवि! सर्वलक्षणसम्भवे!। कृता पूजा मया भक्त्या कमले! वरदे! शुभे!। पूजां गृह्ण सुरेशानि! नमस्ते कमलालये!। पूर्वादिपत्रे सम्पूज्य भूत्यादिनवशक्तिकाः। वासुदेवादिकं तत्र वामनादिकमर्च्चयेत्। तत्रैव कलसे चैव इन्द्रं ध्यात्वा समर्च्चयेत्। सर्वलक्षणसम्पूर्णमिन्द्रमैरावतस्थितम्। शचीसमेतं वरदं ध्यानेन परिचिन्तयेत्। पूजामन्त्रोऽपि॥ वज्रहस्त! महाबाहो! बहुनेत्र! पुरन्दर!। रक्षार्थं सर्वभूतानां पूजेयं प्रतिगृह्यताम्। दिक्पालांश्च ग्रहांश्चैव ब्राह्मणांश्चाग्रतोऽर्च्चयेत्। विष्णुं नारायणञ्चैव भावभूतेश्वरं यजेत्। पूजयित्वा ह्यनेनापि विल्वमुद्रां प्रदर्शयेत्। पद्ममुद्रां धेनुमुद्रां मन्त्रं जप्त्वा स्तुतिं पठेत्॥ इत्याश्विनकृत्यम्॥

त्रिपञ्चाशत्पटले॥ श्रीभगवानुवाच॥ तुलाराशिं गते भानौ शुक्लपक्षे विशेषतः। प्रतिपद्येव गोशृङ्गे पूजयेत् कमलालयाम्। उपोष्य यावकाहारं बलिं दद्याच्च पायसम्। कुन्दपुष्पैः समभ्यर्च्च सर्वपापहरो भवेत्। तत्रैव पूजयेद्देवीं महिषि मम प्रिये!। दूर्वयाङ्कपुष्पाभ्यां पूजयेज्जगतां पतिम्। शाल्योदनं ततो भुक्त्वाचम्य गत्वा जलान्तिके। द्यूतञ्च द्विविधं कुर्य्यात् पलं कृत्वा महेश्वरि!। जयं संवत्सरं तस्य भङ्गे भङ्गं समादिशेत्। विभीषणं बलिञ्चैव सोमञ्च परमेश्वरम्। पूजयेद्गन्धपुष्पाद्यैर्नानानैवेद्यवन्दनैः। कृष्णपक्षे तथा कुर्य्याद्गन्ध-

तीपूजनञ्चरेत्। मधुमांसाशनं कुर्य्यादेकभक्तेन वर्त्तयेत्। शुक्लपक्षे द्वितीयायां धर्म्मराजं समर्चयेत्। चरुं कृत्वा विधानेन सोदरानथ भोजयेत्। ऐश्वर्य्यं लभते सौख्यं बहुभोगानवाप्नुयात्। कृष्णपक्षे तथा लक्ष्मीं कुन्दपुष्पैः समर्च्चयेत्। कृष्णद्रव्यबलिं दद्यात्तस्मै वित्तं प्रयच्छति। तृतीयायां गणेशञ्च पूजयेत् पिष्टकादिना। वर्त्तयेदेकभक्तेन न शोको जायते भुवि। चतुर्थ्यां मोदकैर्देवीं पूजयेत् कुशलार्थकम्। दधिखण्डबलिं दद्याद्वाञ्छितं लभते ध्रुवम्। कृष्णपक्षे प्रतिपदि देवीं माहेश्वरीं यजेत्। सितपारावतैः पूजा भूतिदा जायते ध्रुवम्। पञ्चम्यां विल्वपत्रैश्च हरं गौरीं समर्चयेत्। बलिञ्च मोदकं दद्याद्विद्याकामः सुरेश्वरि !। क्षीरस्य प्राशनादेव पापात् पूतो न संशयः। पञ्चम्यां कृष्णपक्षस्य देवं नारायणं हरम्। महायोनौ समभ्यर्च्च कुलानां तारयेद्दश॥ महायोनौ कामाख्यायाम्॥ षष्ठ्यां वै शुक्लपक्षस्य देवं धनपतिं यजेत्। यो जनः षोड़शं दद्यान्मोदते नाकमण्डले। सप्तम्यां संयतो भूत्वा उभे पक्षे तु कार्त्तिके। देवं मत्स्यं तथा काममिन्द्रदेवं प्रपूजयेत्। ब्राह्मणान् दम्पतीं चैव भोजयेत् प्रातरेव च। फलमूलं तथा धान्यं प्रदद्यात् दक्षिणां शुभाम्। न च व्याधिः क्षुधा वापि कुले तस्य प्रजायते। अष्टम्याञ्चैव देवेशि ! शुक्लपक्षे विशेषतः। दुर्गां भक्तानिलीञ्चैव कृष्णखड्गे समर्च्चयेत्। त्रिकालं पूजयेद्भक्त्या यशस्वी तेजवान् भवेत्। कृष्णपक्षे शिवं दुर्गां कमलां कालिकां तथा। अष्टम्यां पूजयेद्देवीं मध्यरात्रे प्रयत्नतः। न च व्याधिभयं घोरं यावत्तु वत्सरावधि॥ बृहन्नीलतन्त्रे षष्ठपटले॥ कार्त्तिके शुक्लपक्षस्य नवमी या शुभा भवेत्। तस्यां पूज्या महेशानि ! सुन्दरी परदेवता। सुन्दर्य्याः पटले सम्यक् पूजा च कथिता शुभे !॥ मत्स्यसूक्ते॥ शुक्लपक्षे नवम्यान्तु तिलैर्होमं समाच-

रेत्। देवमुद्दिश्य फलदसुपर्य्युपरि पञ्चमि। कृष्णे चैव यजे-द्देवीं सप्तम्यां सूर्य्यमर्च्चयेत। धनधान्यलक्ष्मीकरं पुत्रपौत्रविव-र्द्धनम्। कार्त्तिकस्य तु शुक्लायां दशम्यां नियतः शुचिः। तैलेन शुद्धतैलेन अर्च्चयेन्मधुसूदनम्। कृष्णपक्षे तु चौरेण मधुना च विशिष्यते। रात्रौ फलाशनं कुर्य्यान्मोदते विष्णुमन्दिरे। कृष्ण-पक्षेऽर्च्चयेत् कृष्णं हृषीकेशं शतक्रतुम्। तोषयेत् परमान्नाद्यै-र्नरो न निरयंव्रजेत्। एकादश्यां कार्त्तिकस्य शुक्लपक्षे यश-स्विनि!। स्नानं शुक्लतिलैः कुर्य्यात्त्रिशुक्लैर्हरिमर्च्चयेत्। प्रातरेव तु द्वादश्यां नित्यकृत्यं समाहितः। सङ्कल्प्य च गणेशानं ब्रह्माणं दिक्पतीनपि। ग्रहांश्च प्रतिकुम्भेषु स्थण्डिले च हरिं यजेत्। पञ्चामृतेन गन्धेन तीर्थतोयेन स्नापयेत्। पूजयेच्चातपत्राद्यैः कुमुदैः पङ्कजैरपि। शारदीयेन पुष्पेण यथाविभवविस्तरैः। त्रिकालं चार्चयेद्भक्त्या अग्निकार्य्यं ततो निशि। प्रबोधनं ततः कुर्य्यान्मध्याह्ने परमेश्वरि!। दिवा स्नाने भवेद्दानिस्तथा रात्रौ प्रबोधने। आद्ये अष्टाक्षरं दद्यात् प्रतिमन्त्रे महेश्वरि!। कृताञ्जलिं ततो बद्ध्वा इमं मन्त्रमुदाहरेत्। ब्रह्मेन्द्ररुद्रैरभि-नूयमानो भवान् सुरौघैश्च विवन्दनीयः। प्राप्ता तवेयं द्वादशी कौमुद्याख्या त्वमेव जागृष्व हि लोकनाथ!। ततः स्पृष्ट्वा पठे-न्मन्त्रौ शनैर्मन्त्रं पठेत्ततः। मेघागतैर्निर्म्मलचन्द्रतोयैरारण्य-पुष्पैरथ सौरभेयैः। अहं ददामीति च धर्म्महेतोः जागृष्व जागृष्व च लोकनाथ!। जानुभ्यामवनीं गत्वा पठेन्मन्त्रं सतारकम्। प्रसीद नारायण! कृष्ण! विष्णो! मुकुन्द! लक्ष्मीश! भवन्नमस्ते। सम्पश्य लक्ष्मीं तव भावभूति-माश्रित्य चाश्रित्य च लोकनाथ!। नृत्यगीतैर्बहुविधैः पुराण-श्रवणेन च। नयेद्रात्रिं महेशानि! पञ्चघोषपुरःसरम्। प्रभाते पूजयेद्भक्त्या धेनुं दद्याच्च दक्षिणाम्। ब्राह्मणान् पूज-

तीपूजनञ्चरेत्। मधुमांसाशनं कुर्य्यादेकभक्तेन वर्त्तयेत्। शुक्लपक्षे द्वितीयायां धर्म्मराजं समर्चयेत्। चरुं कृत्वा विधानेन सोदरानथ भोजयेत्। ऐश्वर्य्यं लभते सौख्यं बहुभोगानवाप्नुयात्। कृष्णपक्षे तथा लक्ष्मीं कुन्दपुष्पैः समर्च्चयेत्। कृष्णद्रव्यबलिं दद्यात्तस्मै वित्तं प्रयच्छति। तृतीयायां गणेशञ्च पूजयेत् पिष्टकादिना। वर्त्तयेदेकभक्तेन न शोको जायते भुवि। चतुर्थ्यां मोदकैर्देवीं पूजयेत् कुशलार्थकम्। दधिखण्डबलिं दद्याद्वाञ्छितं लभते ध्रुवम्। कृष्णपक्षे प्रतिपदि देवीं माहेश्वरीं यजेत्। सितपारावतैः पूजा भूतिदा जायते ध्रुवम्। पञ्चम्यां विल्वपत्रैश्च हरं गौरीं समर्चयेत्। बलिञ्च मोदकं दद्याद्विद्याकामः सुरेश्वरि !। क्षीरस्य प्राशनादेव पापात् पूतो न संशयः। पञ्चम्यां कृष्णपक्षस्य देवं नारायणं हरम्। महायोनौ समभ्यर्च्च कुलानां तारयेद्दश॥ महायोनौ कामाख्यायाम्॥ षष्ठ्यां वै शुक्लपक्षस्य देवं धनपतिं यजेत्। यो जनः षोड़शं दद्यान्मोदते नाकमण्डले। सप्तम्यां संयतो भूत्वा उभे पक्षे तु कार्त्तिके। देवं मत्स्यं तथा काममिन्द्रदेवं प्रपूजयेत्। ब्राह्मणान् दम्पतीं चैव भोजयेत् प्रातरेव च। फलमूलं तथा धान्यं प्रदद्यात् दक्षिणां शुभाम्। न च व्याधिः क्षुधा वापि कुले तस्य प्रजायते। अष्टम्याञ्चैव देवेशि ! शुक्लपक्षे विशेषतः। दुर्गां मत्तानिलौञ्चैव कृष्णखड्गे समर्च्चयेत्। त्रिकालं पूजयेद्भक्त्या यशस्वी तेजवान् भवेत्। कृष्णपक्षे शिवं दुर्गां कमलां कालिकां तथा। सप्तम्यां पूजयेद्देवीं मध्यरात्रे प्रयत्नतः। न च व्याधिभयं घोरं यावत्तु वत्सरावधि॥ वृहन्नीलतन्त्रे षष्ठपटले॥ कार्त्तिके शुक्लपक्षस्य नवमी या शुभा भवेत्। तस्यां पूज्या महेशानि! सुन्दरी परदेवता। सुन्दर्य्याः पटले सम्यक् पूजा च कथिता शुभे !॥ मत्स्यसूक्ते॥ शुक्लपक्षे नवम्यान्तु तिलैर्होमं समाच-

रेत्। देवमुद्दिश्य फलदमुपर्य्युपरि पञ्चमि। कृष्णे चैव यजेद्देवीं सप्तम्यां सूर्य्यमर्च्चयेत। धनधान्यलक्ष्मीकरं पुत्रपौत्रविवर्द्धनम्। कार्त्तिकस्य तु शुक्लायां दशम्यां नियतः शुचिः। तल्लेन शुद्धतैलेन अर्च्चयेन्मधुसूदनम्। कृष्णपक्षे तु क्षीरेण मधुना च विशिष्यते। रात्रौ फलाशनं कुर्य्यान्मोदते विष्णुमन्दिरे। कृष्णपक्षेऽर्च्चयेत् कृष्णं हृषीकेशं शतक्रतुम्। तोषयेत् परमान्नाद्यैर्नरो न निरयंव्रजेत्। एकादश्यां कार्त्तिकस्य शुक्लपक्षे यशस्विनि!। स्नानं शुक्लतिलैः कुर्य्यान्निशुक्लैर्हरिमर्च्चयेत्। प्रातरेव तु द्वादश्यां नित्यकृत्यं समाहितः। सङ्कल्प्य च गणेशानं ब्रह्माणं दिक्पतीनपि। ग्रहांश्च प्रतिकुम्भेषु स्थण्डिले च हरिं यजेत्। पञ्चामृतेन गन्धेन तीर्थतोयेन स्नापयेत्। पूजयेच्चुतपत्राद्यैः कुमुदैः पङ्कजैरपि। शारदीयेन पुष्पेण यथाविभवविस्तरैः। त्रिकालं चार्च्चयेद्भक्त्या अग्निकार्य्यं ततो निशि। प्रबोधनं ततः कुर्य्यान्मध्याह्ने परमेश्वरि!। दिवा स्नाने भवेद्दानिस्तथा रात्रौ प्रबोधने। आद्ये अष्टाक्षरं दद्यात् प्रतिमन्त्रे महेश्वरि!। कृताञ्जलिं ततो बद्धा इमं मन्त्रमुदाहरेत्। ब्रह्मेन्द्ररुद्रैरभिनूयमानो भवान् सुरौघैश्च विवन्दनीयः। प्राप्ता तवेयं द्वादशी कौमुद्याख्या त्वमेव जागृष्व हि लोकनाथ!। ततः स्पृष्ट्वा पठेन्मन्त्री शनैर्मन्त्रं पठेत्ततः। मेघागतैर्निर्म्मलचन्द्रतोयैरारण्यपुष्पैरथ सौरभेयैः। अहं ददामीति च धर्म्महेतोः जागृष्व जागृष्व च लोकनाथ!। जानुभ्यामवनीं गत्वा पठेन्मन्त्रं सतारकम्। प्रसीद नारायण। कृष्ण! विष्णो! मुकुन्द! लक्ष्मीश! भवन्नमस्ते। सम्पश्य लक्ष्मीं तव भावभूतिमाश्रित्य चाश्रित्य च लोकनाथ!। नृत्यगीतैर्बहुविधैः पुराणश्रवणेन च। नयेद्रात्रिं महेशानि! पञ्चघोषपुरःसरम्। प्रभाते पूजयेद्भक्त्या धेनुं दद्याच्च दक्षिणाम्। ब्राह्मणान् पूज-

येद्भक्त्या दीनान्धकृपणानपि। पार्श्वपरिवर्त्तने चैव मन्त्रमष्टाक्षरान्तरे। पार्श्वो भव जगन्नाथ! नमो नारायणाच्युत!॥ प्रसीद भगवन्नाथ! भव संसारमोचन!। परिवर्त्तय पार्श्वोऽपि गोविन्दाच्युत! तद्वयम्। दिवाभागेन कर्त्तव्यं पूर्ववद्‌ विधिना प्रिये!। कृष्णपक्षस्य द्वादश्यां कुर्य्याद्ब्राह्मणतर्पणम्। शुक्लायाञ्च चतुर्दश्यां पार्वत्या सह शङ्करम्। विल्वपत्रैः समभ्यर्च्य न शोको जायते भुवि। अथ कृष्णत्रयोदश्यां कार्त्तिके मासि शङ्करि!। प्रातःस्नानं ततः कृत्वा स्रोतसि विधिवन्नरः। उमां हरं रविं विष्णुं चन्दनेन विलिख्य च। पद्मपत्रैर्महेशानि! विल्वपत्रैः समर्चयेत्। शाकेन तोषयेद्देवान् स्वयं शाकेन वर्त्तयेत्॥ तथा। मध्याह्ने स्नापयेत् कुम्भं वसनं तत्र विन्यसेत्। अभिषिञ्चेत्ततः पश्चादात्मानं बान्धवैः सह। अपामार्गस्य पुष्पेण त्रिवारं शिरसोपरि। वामावर्त्तेन देवेशि! अपामार्गस्य पत्रकम्। वक्ष्यमाणेन वा कुर्य्याद्‌ गायत्र्या वा समाहितः। यत् कृतं दुष्कृतं कर्म्म मया जन्मशतान्यपि। व्याप्याद्य त्वत्प्रसादेन अपामार्ग! हरस्व मे। संहिताख्याञ्च पुण्याख्यां प्रेताख्यानान्तरेण च। श्रुत्वा संख्यां द्विजातिभ्यो दानं दद्याद्विभूतये। चतुर्दशी तथा प्रेता पूज्या पूर्वेण संयुता। यदा परदिने रात्रौ दर्शयुक्ता न सा भवेत्। एवमेतत् परं ग्राह्यं तिथ्यन्ते दीपमुत्सृजेत्। देवैरपि निवृत्ते चेत् पूर्णिमा सचतुर्दशी। तदा पूर्वा ग्रहीतव्या सदा रात्रिगता अपि। स्नाने प्रेतकथायाश्च श्रवणे यमतर्पणे। सूर्य्योदयगता ग्राह्या नरैः प्रेतचतुर्दशी। एकादशीं समारभ्य यावत् पञ्चदशीं प्रति। निरामिषेण भोक्तव्यमेकभक्तेन वर्त्तयेत्। भीष्मव्रतमिदं प्रोक्तं सावकाशेन सेवयेत्। पौर्णमास्यां तुलादित्ये श्रीपतिं लीलया सह। चन्दनैः पूजयेद्भक्त्या कुलच्छेदो भवेन्न हि। तुलागतं

समावाप्य लक्ष्मीर्निद्रां विमुञ्चति। तत्र सम्पूजनादेव लक्ष्मीः स्यादनपायिनी। श्वेतकुम्भेऽर्चयेल्लक्ष्मीं कुवेरं रक्तकुम्भके। पीतकुम्भेऽर्चयेद्विष्णुं नानानैवेद्यवस्तुभिः॥ नारदपञ्चरात्रे द्वितीयरात्रे सप्तमाध्याये॥ कार्त्तिकीमार्गमायाञ्च राधार्चा विष्णुपूजनम्। यत्र तत्र त्वनियमः परं निर्वाणकारणम्॥ मत्स्यसूक्ते॥ कदाचित् कार्त्तिके मासि यदि दर्शद्वयं भवेत्। तत्राद्या सुखरात्रिः स्यादपरस्तु मलिम्लुचः। मलिम्लुचे वृश्चिके तु विष्णूत्थानादनन्तरम्। लक्ष्मीप्रबोधो भवति सा ज्ञेया सुखसुप्तिका। दण्डैकरजनीयोगो दर्शन स्यात् परेऽहनि। तदा विहाय पूर्वेद्युः परतः सुखरात्रिका। तत्र श्राद्धं कृतं येन अक्षयं भवति ध्रुवम्। शतग्रहणजं पुण्यं तीर्थे स्नानं महाफलम्। इष्टदेवं समुद्दिश्य पितॄनुद्दिश्य यत्नतः। जीवितञ्चेत् समुद्दिश्य दीपं दद्यात् शिवालये। आयुष्कामो हि देवेशि! दीपं दद्याच्चतुष्पथे। द्वात्रिंशत्तु समुत्सृज्य पञ्चविंशतिकं प्रिये!। आकाशदीपं दद्यात्तु नवपञ्चयुगेन वा। त्रिदीपं पञ्चदीपञ्च एकं वा दापयेद्बुधः। अर्घ्यञ्चैव वहन् जन्तून् जायते नात्र संशयः। त्रिहस्तं सार्द्धहस्तं वा हस्तमात्रमथापि वा। ऊर्द्धं तु दापयेद्दीपान् लभते वाञ्छितं फलम्। शिरे वक्षःस्थले चैव अङ्गे वा मणिबन्धके। यो दीपं दर्शयेद्देवि! स्वर्गलोके महीयते। कमलां ह्लादिनीञ्चैव धरणीं विजयां तथा। जयां लक्ष्मीं सुभद्राञ्च महामायां दलेऽर्चयेत्। ब्रह्मादीन् पूजयेदग्रे वासुदेवादिकानपि। शङ्खं पद्मनिधिं पूजेत् कुवेरं वरुणं तथा। इन्द्राणीमथ सम्पूज्य मन्त्रेणानेन संयजेत्। नमस्ते इत्यादि। विश्वरूपस्येत्यादि। त्वं गतिः सर्वभूतानां वरदासि हरिप्रिये!। सर्वानन्दकरे! देवि! सर्वशाखे! नमोऽस्तु ते। लोले! देवि! नमस्तेऽस्तु नरकार्णवतारिणि!। क्षी-

रोदमथनोद्भूते! प्रसीद परमेश्वरि!। जय पद्मालये! देवि! जय लक्ष्मि! हरिप्रिये!। सर्व्वानन्दकरि! देवि! सर्व्वशाखे! नमोऽस्तु ते। जय चीरोदर्द्दुहितर्मङ्गले सुस्थिरा भव। इयं सांवत्सरी पूजा नैवेद्यादिकसुत्तमम्। लोले! गृहीत्वा तत्सर्वं गृहाण परमेश्वरि!। दीपदानान्तरे चैव मन्त्रमेतमुदीरयेत्। दामोदराय नभसि तुलायां लोलया सह। प्रदीपं ते प्रयच्छामि नमोऽनन्ताय वेधसे। ऊर्द्ध्वतः सप्त लोका ये ये चाधोवर्त्तिनः सदा। दत्ताकाशप्रदीपेन प्रकाशं विचरन्तु ते। ये च नारकिणो लोकाः पीड़या बाधिताः सदा। भवन्त्वास्ते प्रकाशन्तु दत्ताकाशप्रदीपतः। अन्धकारे स्थिता ये च ये च लोकविवर्जिताः। तेषां प्रकाशनार्थाय प्रदीपो दीयते मया। यमद्वारे महाघोरे सन्ति ये पुरुषा मम। तेषां प्रकल्पितार्थाय प्रदीपो दीयते मया। वातवर्षपतङ्गादिस्नेहवर्त्तिक्षयादिना। निर्व्वाणस्य प्रदीपस्य न दोषो मम केशव!। नमः पितृभ्यः प्रेतेभ्यो नमो धर्म्माय विष्णवे। नमो धर्म्माय रुद्राय कान्तारपतये नमः। ईशकोणे प्रदद्यात्तु भाण्ये विजनेऽपि च। उल्का निशि तथा देया दक्षिणाभिमुखेन तु। निक्षिपेत्तत्र प्रथमं मन्त्रेणानेन शङ्करि!। उल्कामुखाश्च ये केचिच्चरन्ति इह भूतले। उज्ज्वलज्ज्योतिषा दग्धास्तेषान्तु परमा गतिः। आपदो मम नश्यन्तु सुखरात्रिप्रसादतः। उल्कासन्दीपनेनैव वर्द्धन्तु मम पूरुषाः। कार्त्तिकस्य अमायां वै समारभ्य यशस्विनि। कालरात्रिव्रतं कुर्य्याद् यथाकार्य्यं तथा शृणु। व्रतविध्यादिस्तु त्रिपञ्चाशत्पटलेऽनुसन्धेयः॥ इति कार्त्तिककृत्यम्॥

तत्रैव चतुःपञ्चाशत्पटले॥ वृश्चिके शुक्लपक्षस्य प्रतिपत्सु महेश्वरम्। दूर्व्वाङ्कुरैः समभ्यर्च्य गणनामीश्वरो भवेत्॥१॥ द्वितीयायां जगद्धात्रीं जलेसम्पूज्ययत्नतः। एकाहारं ततः कृत्वा तृतीयायां

जनार्द्दनम्। चतुर्थ्याञ्चैव श्रीकान्तमेकादश्यां जनार्द्दनम्। द्वादश्याञ्चैव ब्रह्माणं त्रयोदश्यां शतक्रतुम्। चतुर्द्दश्याञ्च गौरीशं सितपक्षैः समर्च्चयेत्। श्वेताम्बरधरो भूत्वा त्रिकालं संयतेन्द्रियः। मधुना तर्पयेद्देवान् ब्रह्मलोके महीयते। वृश्चिके पौर्णमास्यान्तु कल्यमुत्थाय वाग्यतः। पूजयेत् चैत्रविघ्नेशं पञ्चम्यां कमलां तथा। षष्ठ्यां वसुं समभ्यर्च्च सप्तम्याञ्च दिवाकरम्। अष्टम्यां त्रिपुराञ्चैव नवम्यां सुरसुन्दरीम्। दुर्गां बालां समुद्दिश्य एकभक्तेन वर्त्तयेत्। दशम्याञ्चैव तां देवीं दिक्पतींश्चापि पूजयेत्। सवितारं स्नापयित्वा देवान् रात्रौ बलिं चरेत्। वृहन्नीलतन्त्रे षष्ठपटले॥ मार्गे मासि सिते पक्षे सप्तमी रविवल्लभा। अन्नदां पूजयेद्भक्त्या पुत्रपौत्रसमन्वितः। लक्ष्मीः स्थिरायतेऽवश्यं यावच्च सचराचरम्। तावत्तस्य गृहे लक्ष्मीश्चौद्वत्यं परिवर्जयेत्। निश्चला च भवेद्देवि! सत्यं सत्यं गणेश्वरि!। पूजा चाख्या महेशानि! कथिता तव सन्निधौ। अन्नदाकल्पके सम्यग् जानीहि नगनन्दिनि!। मत्स्यसूक्ते॥ वृश्चिके पौर्णमासी तु विज्ञेया चैत्रपूर्णिमा। द्वापरे पूर्णिमा पौषे त्रेतायां माघमासके। बलिभिर्गुड़खण्डैश्च पूजयित्वा द्विजोत्तमम्। अलक्ष्मीं नाशयेद्दाता लक्ष्मीञ्च लभते पराम्। यावकैः शर्कराद्यैश्च मोदकैर्विविधैरपि। चैत्रपूर्णिमामारभ्य त्रिरात्रं परमेश्वरि!। कृत्वा नक्तं महेशानि! विष्णुलोके महीयते। सुरयन्त्रमिदं प्रोक्तं महाविभवदायकम्। धनधान्यलक्ष्मीकरं श्रीसौभाग्यप्रदायकम्। कृष्णप्रतिपदि विष्णुं पूजयेत् पार्वतीपतिम्। अग्निकार्य्यं त्रिकालञ्च लक्ष्मीवान् जायते कुले। द्वितीयायां गुड़ं प्राश्य पूजयेत् सुन्दरीमपि। तृतीयायाञ्च गोविन्दं तिलं प्राश्य ततो निशि। चतुर्थ्यां यावकाहारो मदनञ्च निशापतिम्। दधि प्राश्य ततो रात्रौ शिवलोके महीयते। प-

षष्ठ्यां दिननाथञ्च विष्णुञ्च लीलया सह। पूजयेत् पीवरे कुम्भे क्षीरं प्राश्य लभेत् श्रियम्। पूजयेच्चैव गोविन्दं गवामप्यधिपो भवेत्। सप्तम्याञ्च तथाष्टम्यां नवम्यां विजितेन्द्रियः। धनाध्यक्षं श्वेतकुम्भे त्रिकालं नियतः शुचिः। महाविभवमाप्नोति लक्ष्मीः स्यादनपायिनी। नादेयतोये देवेशि! कृष्णपक्षे जगद्गुरुम्। चित्रपट्टे समभ्यर्च्य क्षीरं प्राश्य ततो निशि। अणिमादिगुणैः सिद्धिर्जायते नात्र संशयः। दशम्याञ्च महेशानि! एकादश्यां शतक्रतुम्। द्वादश्यां केशवं मूले त्रयोदश्याञ्च पार्वति!। चतुर्दश्यामशोकेन कामं विष्णुं समर्च्चयेत्। त्रिकालं स्नानमासाद्य एकभक्तेन वर्त्तयेत्। एवं कृत्वा सकृद्देवि! ब्रह्मलोके महीयते। अमावस्यायां गोमुख्ये गले विप्रमुखे गले। गोक्षीरेण चरुं कृत्वा पितॄनुद्दिश्य शङ्करि!। मधुना गुड़खण्डेन लवणेनोदकेन च। त्रिकालं तर्पयित्वा तु काममाप्नोत्यभीप्सितम्। ऐश्वर्य्यमतुलं प्राप्य पितृलोके महीयते॥ इत्याग्रहायणकृत्यम्॥

तत्रैव॥ धनुःस्थे च ततः सूर्य्ये शुक्लपक्षे वरानने!। प्रतिपदि महेशानि! प्रातःस्नायी जितेन्द्रियः। त्रिकालं पूजयेत् सूर्य्यं रोगान्मुच्येत नान्यथा। कृष्णपक्षे जगन्नाथं पूजयेत् पार्वतीपतिम्। अग्निकार्य्यं ततः कृत्वा ततो मुच्येत बन्धनात्। द्वितीयायां समारभ्य शुक्लपक्षे विशेषतः। आदित्यमथ रुद्रांश्च पूजयेद्भक्तिभावतः। यावत् पञ्चदशीञ्चैव तावदेव महेश्वरि!। संसारान्मुच्यते देवि! नात्र कार्य्या विचारणा। चतुर्थ्यां शुक्लपक्षे तु धनूराशिं गते रवौ। एकभक्तेन देवेशि! रमेशं प्रति पूजयेत्। कृष्णं शचीपतिं विष्णुं पञ्चम्यां मधुसूदनम्। षष्ठ्यां स्कन्दं विशाखाञ्च रात्रौ तु क्षीरभोजनम्। सप्तम्याञ्च तथाष्टम्यां नवम्यां पक्षयोर्द्वयोः।

कात्यायनीं समभ्यर्च्य एकभक्तेन शङ्करि!। दशम्यां पार्व्वतीनाथमेकादश्यां श्रियः पतिम्। पिष्टकैः पूजयेद्विष्णुं स्वयं नक्तं समाचरेत्। यावच्चतुर्दशीं प्राप्य अमावास्याञ्च प्रेत्यषे। पौर्णमास्यां ततः काल्ये पितॄनुद्दिश्य तर्पयेत्। पुरोडाशेन विधिना कदाचिन्नावसीदति॥ इति पौषकृत्यम्॥

तत्रैव पञ्चाशत्पटले॥ श्रीभगवानुवाच॥ मकरस्थे सहस्रांशौ शुक्लपक्षे यशस्विनि!। प्रतिपदि सरित्तोये स्नात्वाभ्यर्च्य जनार्दनम्। वर्त्तयेदेकभक्तेन अग्निकार्य्यपुरःसरम्। क्षीरेणार्घ्यं विधातव्यं मुच्यते शोकसागरात्। द्वितीयायां तथा शङ्कं चन्दनेन विलिप्य च। पीठे वाऽगुरुपत्रे च पूजयेद्भक्तितत्परः। हविष्याशी भवेद्रात्रौ रूपवानभिजायते। तृतीयायामुमाकान्तं श्रीपतिं कमलालयाम्। समभ्यर्च्य निशानाथं कुन्दपुष्पैः पृथग्विधैः। मुद्गञ्च प्राशनं कुर्य्यान्महापातकनाशनम्। चतुर्थ्यां शुक्लपक्षस्य पूजयेद्गणनायकम्। ताम्रकुम्भे विशेषेण पञ्चरत्नेन शङ्करि!। तिलान् सम्प्राशयेद्रात्रौ तिलैर्होमं समाचरेत्। लक्ष्मीवान् सुतरां चापि धनवान् स प्रजायते। पञ्चम्याञ्च जगद्धात्रीं प्रातरेव नदीजलैः। स्नापयित्वा सुलक्ष्मीं तां कुम्भैर्मारकतैरपि। वसन्तपञ्चमी नाम सर्व्वपापप्रमोचनी। वसन्तञ्च समभ्यर्च्य कन्दर्पं सरतिं प्रिये!। वसन्तरागश्रवणात् श्रियमाप्नोत्यभीप्सिताम्। श्रीपञ्चमीं तु केचित्तां मनयः प्रवदन्ति वै। वर्त्तयेदेकभक्तेन श्रियो न विच्युतिर्भवेत्। षष्ठ्यां प्रातः कृतस्नानः पूजयेच्च दिवाकरम्। क्षीरेणार्घ्यं ततो दद्यान्मुच्यते व्याधिबन्धनात्। सूर्य्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी। अरुणोदयवेलायां तस्यां स्नानं महाफलम्। वदर्य्याश्चार्कपत्रस्य सप्त पत्राणि शालिजान्। रक्तांश्च तण्डुलान् दूर्वाः कृत्वा शिरसि मज्जयेत्। ॐ यद्यज्ज-

मज्जतं पापं मया सप्तसु जन्मसु। तन्मे रोगञ्च शोकञ्च मा-करी हन्तु सप्तमी। सप्तार्कपत्रैरक्तैश्च तण्डुलैर्गन्धचन्दनैः। फलै-र्दूर्वाजवापुष्पैरर्घ्यं दद्यात् कृतक्रियः। सप्तसप्तिप्रीतिवहे! सप्तलोकप्रदीपनि!। सप्तव्याहृतिके! देवि! नमस्ते रविमण्डले। जननी सर्वभूतानां सप्तमी सप्तसप्तिके!। सप्तव्याहृतिके! देवि! नमस्ते रविमण्डले। दानं कोटिगुणं प्रोक्तं होमं जापं सुरा-र्चनम्। ब्राह्मणान् भोजयित्वा च हविष्यान्नं स्वयं ततः। तीर्थे स्नानं दशगुणं गङ्गायां कोटिरेव च। रविवारे च स-म्प्राप्ते कोटिकोटिगुणं भवेत्। दद्यादर्घ्यं सहस्रञ्च शतं वापि तदर्द्धकम्। अयुतेन लभेद्दास्यं लक्षैः सायुज्यमेव च। अशक्तो द्वादशं दद्यात् पञ्चविंशमथापि वा। द्विगुणत्वान्महेशानि! व्रताङ्गेऽर्घ्यमुदाहृतम्। भजेद्रविदिने प्राप्ते प्रवृत्ते चोत्तरायणे। पुन्नामधेयनक्षत्रे गृह्णीयाद्दशमीव्रतम्। हस्तो मित्रस्तथा पुष्यो ज्येष्ठा भृगुपुनर्वसू। पुन्नामधेयनक्षत्राण्येतान्याहुर्मनीषिणः। सप्तम्यां शुक्लपक्षे तु कृतकृत्यः समाहितः। पार्वतीशं गणेशञ्च पूजयेद्दयितया सह। त्रिकालं पूजयित्वा तु तिलपायसमो-दकैः। ततो नक्तं चरेन्मन्त्री हविष्यान्नेन शङ्करि!। यत् कृतं द्वादशाष्टम्यामेकेनैव तु तत् फलम्। भवेत्तस्मात् प्रयत्नेन स-र्वस्वेनापि भाविनि!। पितॄनुद्दिश्य यत् श्राद्धं यः करोति स्वभक्तितः। सर्वश्राद्धे यत् फलञ्च काङ्क्षन्तिस्म न संशयः। पितृतर्पणतः शेषे सर्वे वर्णा द्विजातयः। तिलोदकन्तु भीष्माय प्रदद्यादञ्जलित्रयम्। वामोपवीतिना देवि! दक्षिणाशा-मुखेन तु। दद्यादनेन मन्त्रेण शुचिः प्रयतमानसः। एहि भीष्म! महाबाहो! शान्तनोः कुलनन्दन!। गृहाण दत्त-मस्माभिः पानीयं वरदो भव। वैयाघ्रपद्यगोत्राय साङ्कृति-प्रवराय च। अपुत्राय ददाम्येतत् सलिलं भीष्मवर्मणे।

मध्याह्नव्यापिनी ग्राह्या श्राद्धे भीष्माष्टमी सदा। स्नाने च तर्पणे दाने ग्राह्या सूर्य्योदयात् परा। यद्येकस्मिंस्तु वै मासि यदि स्याम्माकरोदयम्। भीष्माष्टमी भवेद्वापि तदा ग्राह्या परा तिथिः। नवम्यान्तु जगद्धात्रीं गौरीं कमलया सह। स्रो-त्रेणैव पूजनादेव महतीं श्रियमाप्नुयात्। दशम्यामथ नक्ताशी वैष्णवीं सप्तकुम्भके। पूजयेम्मरुपत्रैश्च नानाविभवविस्तरैः। ब्राह्मणान् भोजयेद्भक्त्या ऋषिं सम्पूज्य वैष्णवम्। तोषयेद्भाव-बुद्ध्या च तत्तुल्यो जायते प्रिये!। एकादश्यां प्रातरेव ततः सङ्कल्पयेद्व्रती। त्रिकालं पूजयेद्विष्णुमग्निकार्य्यसमन्वितम्। एकेनैवोपवासेन कृतेन परमेश्वरि!। सर्वपापैर्विशुद्धात्मा हरि-सायुज्यमाप्नुयात्। जागरं कारयेद्रात्रौ संहिताश्रवणादिभिः। न चात्र वारदोषोऽस्ति माघे चैव घटेषु च। उत्थाने शयने विष्णोर्वासरन्तु न लङ्घयेत्। दिनत्रये दशाविद्धे सदैव परि-वर्जयेत्। गृहस्थस्तु विशेषेण पुत्रवांश्चेद्विशेषतः। नक्तं पुण्य-चयश्चैव पूर्वसङ्कल्पितं विना। द्वादश्यामप्युषःकाले स्नानं कुर्य्यान्नदीजले। धात्रीस्नानं प्रकुर्य्यात्तु महापातकनाशनम्। गोविन्दं पूजयेद्भक्त्या धेनुं दद्यात्ततो व्रती। दानञ्चैवाग्नि-कार्य्यञ्च ब्राह्मणानथ भोजयेत्। शृणु देवि! महागुह्यं श्री-विष्णोर्व्रतपञ्चकम्। त्रिभूतिद्वादशी नाम पञ्चैव परिकी-र्त्तिताः। कार्त्तिकस्य च मार्गस्य माघस्य फाल्गुनस्य च। आ-षाढ़स्य वरारोहे! द्वादश्यां शुक्लपक्षके। श्रावणस्य तु सिंहस्य अशून्या नाम द्वादशी। जनार्दनं समुद्दिश्य उपवासं करोति यः। अशून्या च भवेत् शय्या जन्मजन्मनि शङ्करि!। त्रयो-दश्यान्तु शुक्लायां विभूत्याख्या त्रयोदशी। माधवं कलसे कृत्वा भूतिमाप्नोति शाश्वतीम्। माघे मासि सिते पक्षे ख्याता राम-चतुर्दशी। कामविद्धापि सा कार्य्या शिवरात्रिविधानतः।

पौर्णमास्यामुषःकाले स्नानं कुर्य्याद्विधानतः । सम्पूज्य च जगन्नाथं दानं दद्याद्विभूतये । धेनुं दद्याद्विजातिभ्यो विष्णु-लोके महीयते । इन्धनञ्चैव पक्कान्नं हविष्यान्नेन वर्त्तयेत् । कृष्णपक्षे प्रतिपदि स्कन्दमुद्दिश्य यत्नतः । दानं दद्याद्द्विजा-ग्रेभ्यः पूजयित्वा विधानतः । द्वितीयायां जगन्नाथं समुद्दिश्य प्रपूजयेत् । प्रदद्याच्चरुनैवेद्यं हविष्यान्नेन वर्त्तयेत् । तृतीयायां तथा धर्मं चित्रगुप्तं समर्चयेत् । पिष्टकाशी भवेद्रात्रौ धर्म्म-लोकान्नविच्युरतिः । चतुर्थ्यां कृष्णपक्षे तु लक्ष्मीं कुम्भे समर्च्च-येत् । पायसाशी भवेन्नित्यं रमाया न च्युतिर्भवेत् । पञ्चम्यां मदनं देवं गोपालं रुक्मिणीमपि । चित्ते वाञ्छतपुञ्जेषु नरो न निरयं व्रजेत् । षष्ठ्यां धन्वन्तरिं शम्भुं कुमारं पूजयेन्निशि । क्षीरकुम्भे महेशानि ! न शोको जायते भुवि । सप्तम्यां कम-लानाथं घृतकुम्भे समर्चयेत् । वारिधारां ततो दद्याद्भार्य्यया च व्रतस्य वै । कृष्णाष्टम्यां नवम्याञ्च विल्वपत्रेण शङ्करम् । त्रिकालं पूजयेद्भक्त्या पार्वत्या सह गोमये । पितृभ्योऽर्घ्यं हृषीकेशमेकभक्तेन वर्त्तयेत् । दशम्यां कृष्णपक्षस्य गङ्गां स-म्पूजयेद्व्रती । एकादश्यां हविष्याशी माधवञ्च समर्च्चयेत् । त्रयोदश्यां तथा कामं चतुर्दश्याञ्च प्रत्युषे । अनर्काभ्युदिते काले स्नानं कुर्य्यात् सरिज्जले । शतजन्मकृतं पापं तत्क्षणादेव न-श्यति । रटन्ती नाम विख्याता सर्वपापहरा शिवा ॥ बृह-न्नीलतन्त्रे सप्तमपटले ॥ माघे मास्यसिते पक्षे रटन्त्याख्या चतुर्दशी । तस्यां सम्पूजयेत्तारां महाविभवविस्तरैः । चक्रवर्त्ती महाराजो भवत्येव न संशयः ॥ मत्स्यसूक्ते ॥ अमावस्यां कृत-स्नानस्तिलान्नेन महेश्वरि ! । श्राद्धं कुर्य्याद्धविष्याशी पितृ-लोके महीयते ॥ इति माघकृत्यम् ॥

मत्स्यसूक्ते । श्रीभगवानुवाच ॥ कुम्भसंस्थे सहस्रांशौ

पूजामारभ्य देशिकः। तथा कृष्णे महेशानि! प्रतिपत्-प्रभृति क्रमात्। ब्रह्माणीञ्चैव गायत्रीं सतीं गौरीं जयन्तिकाम्। कमलां पार्वतीञ्चैव महामहिषमर्दिनीम्। सरस्वतीं महामायां महालक्ष्मीं रतिं तथा। कालरात्रिमुमाञ्चैव यजेत्तैरुपचारकैः। कर्णनाकर्णनौ तूर्णौ पूर्णा मदनप्रीतिदा। क्रीड़येयुश्च पूर्वाह्णे नराः सिन्दूरमण्डिताः। पूजयेच्च महेशानि! गोपालं गोपिवल्लभम्। मन्दारैः किंशुकैश्चैव तथा चूताङ्कुरैरपि। पूजयेद्विधिवद्देवं शिविकायां ततो न्यसेत्। मुहूर्त्तेऽभिजिति पञ्चवाद्यैर्यात्रां समाचरेत्॥ नारदपञ्चरात्रे द्वितीयरात्रे सप्तमाध्याये॥ परं शिवचतुर्दश्यां शिवं सम्प्राप्य पूजनम्। तद्दिनेऽनशनं विप्र! परं निर्वाणकारणम्। मत्स्यसूक्ते॥ शिवव्रतमथो वक्ष्ये सर्वपापप्रणाशनम्। चन्द्रांशे करणे देवि! रुद्रसायुज्यमाप्नुयात्। चतुर्दश्याममावास्यादिवसं यदि संस्पृशेत्। यदा त्रयोदशी चन्द्रा त्रयोदश्यां शिवव्रतम्। प्राप्नोत्यतुलभोगन्तु,यस्य रात्रौ चतुर्दशी। शिवरात्रिव्रतं तत्र कर्त्तव्यं तिथिपूजनम्। माघफाल्गुनयोर्मध्ये या च कृष्णा चतुर्दशी। शिवयोगेन संयुक्ता शिवरात्रिरुदाहृता। दिवास्पर्शे व्रतं विद्याद्रात्रौ वा पूर्णमेव तु। हीनेनैव व्रतं कुर्य्यात् शिवयोगस्य शङ्करि!। माघोतः परतो या स्यात् कृष्णा माघी चतुर्दशी। तस्यां सम्पूजनादेव सर्वपापैः प्रमुच्यते। योगतिथ्यन्तरे चैव प्रवेशञ्च समाचरेत्। न रात्रौ पारणं कुर्य्यान्न सन्ध्यायां कथञ्चन। स्नानमावाहनं कुर्य्याच्चतुर्दश्याः समागमे। आतुरे मार्जनं ज्ञेयं स्नानात् कोटिगुणं फलम्। एकादशगुणं कुर्य्यान्नैवेद्यं परमेश्वरि!। बलिञ्च त्रिविधं कुर्य्यात् शृणुष्व वरवर्णिनि!। अष्टम्यां पञ्चदश्यां वा चतुर्दश्यामथापि वा। कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्दशी। धनिष्ठा शिवयोगे च

या न: क्षणा चतुर्दशी। रात्रियोगे तु सम्प्राप्ता सा तु पुण्यतमा मता। योगस्पर्शे पुण्यमात्रं रात्रियोगेऽधिकं फलम्। सर्वरात्रौ दशगुणं दिवास्पर्शे सहस्रकम्। स्नात्वा संस्थापयेल्लिङ्गं स्थण्डिले यत्र पूजयेत्। तत्र वै दर्पणे कुर्य्यात् प्राणायामे मनो तथा। वारिणा प्रथमे स्नानं पञ्चनदीति वा पुन:। आप्यायस्वेति चोरेण दधिक्राव्णेति वै दधि। मधुवातेति मधुना गायत्र्या च गुडेन च। आपोहिष्ठेति मन्त्रेण तथा रत्नोदकैरपि। तोयेनानेन मन्त्रेण तथा पञ्चामृतेन तु। मार्जयेद्बिल्वपत्रेण घटस्थापनमारभेत्। सङ्कल्पान्ते पठेन्मन्त्रं कृताञ्जलिपुटेन तु। अद्य चैव चतुर्दश्यां जागरयाम्यहं निशाम्। पूजां दानं जपं होमं कारयाम्यत्र शक्तित:। शिव! शङ्कर! सर्वज्ञ! व्रतानां फलदायक!। शिवरात्रिव्रतं देव! करोमि त्वत्प्रसादत:। चतुर्दश्यां निराहारो भूत्वा चेवापरेऽहनि। भोक्ष्येऽहं भुक्तिमुक्त्यर्थं शरणं मे भवेश्वर!। उत्तराभिमुखो भूत्वा प्राणायामं समाचरेत्। गणेशं दिक्पतींश्चैव ग्रहांश्चैव मरुद्गणान्। ब्रह्माणं प्रतिकुम्भे च ततो देवासनं यजेत्। नन्दिनञ्च महाकालं पूर्वद्वारि यजेद्बुध:। भृङ्गेशं चण्डपाणिञ्च दक्षिणद्वारि संयजेत्। उत्तरे चैव वेतालं वृषभञ्च ततो यजेत्। मध्ये आधारशक्त्यादीन् साङ्गोपाङ्गं समर्च्चयेत्। ध्यायेद्देवं महेशानं ध्यानं शृणु वरानने!। वृषासनगतं पद्मं तत्र पद्मासने स्थितम्। शुद्धस्फटिकसङ्काशमणिमादिगुणैर्युतम्। दशभिर्बाहुभिर्धत्ते शूलशक्तिवराभयम्। खट्वाङ्गं भुजगञ्चैव घण्टाङ्कुशं तथैव च। डमरुं वीजपूरञ्च नीलोत्पलवरं तथा। द्वात्रिंशल्लक्षणोपेतं पञ्चवक्त्रं त्रिलोचनम्। इच्छादिशक्तिसहितं वीजेनारोपयेत्तत:। अङ्गपूजां विधायाथ दद्यात् पाद्यादिकं शुभम्। तत: स्वशक्तिसंयुक्तान् पूर्वादिदिग्दले यजेत्। श्रीकण्ठादींश्च तद्बाह्ये मूर्त्तीरष्टौ च

सं यजेत्। उपचारैः समभ्यर्च्च्य अङ्गपूजावसानके। अनन्तं विधिमन्त्रेण दद्यादर्घ्यं विभूतये। दधिदूर्व्वाक्षतश्चैव गन्धपुष्प-समन्वितम्। जानुभ्यामवनीं गत्वा मन्त्रेणानेन साधकः। नमः शिवाय शान्ताय सर्व्वपापहराय च। शिवरात्रौ ददाम्यर्घ्यं प्रसीद उमया सह। निमध्वहेन देवेशि! प्रथमप्रहरेण तु। मोदकं पायसान्नं वा संयुक्तं वा विशिष्यते। द्वितीयप्रहरे चैव स्वयं स्थाद्वाक्रणेन तु। स्नानं कुर्य्यात्तु मन्त्रेण शृणु मन्त्रं वरानने!। अज्ञानतिमिरान्धानां प्रणीतकल्मषात्मनाम्। स्नानं करोमि देवेश! सर्व्वपापविशुद्धये। देवञ्च पूर्व्ववत् स्नात्वा पूर्व्ववच्चार्च्चनञ्चरेत्। रुद्रसूक्तेन कामिन रुद्रसूक्तेन चार्च्चयेत्। हरं महेशं विजयं यज्ञेशं वरदं शिवम्। नारायणञ्च ब्रह्माणं पूजयेद्भक्तितत्परः। होमान्ते प्रददेदर्घ्यं मधुक्षीराज्यसंयुतम्। कुशपुष्पसमायुक्तं गुड़शर्करयान्वितम्। नमः शिवाय शान्ताय भुक्तिमुक्तिप्रदाय च। शिवरात्रौ ददाम्यर्घ्यं सर्व्वाभिमत-साधनम्। तृतीयप्रहरे चैव स्नानं कुर्य्याद्विशुद्धये। वक्ष्यमाणेन मन्त्रेण कुशेनाभ्युक्ष्य वारिणा। विरूपाक्ष! महादेव! सुचिन्त्यो मे भवाधिप!। शिवरात्रौ कृतस्नानाद्भुक्तिमुक्तिप्रदो भव। शिव! शङ्कर! देवेश! प्रभो! पशुपते! हर!। गृहाणार्घ्यमिदं देव! उमा-कान्त! प्रसीद मे। दत्त्वार्घ्यं विधिवद्देवि! पूजयेन्मन्मथं हरम्। योगेशं माधवं धर्म्मं विष्णुलोकं तथैव च। चतुर्थप्रहरे चैव स्नानं कुर्य्याद्विचक्षणः। मार्ज्जनञ्च ततः कुर्य्यान्मन्त्रेणानेन सुन्दरि!। यथाष्टकोटिलिङ्गानां यत् फलं पूजनाद्विभो!। तदेतत् प्राप्यते नाथ! शिवरात्रौ स्नानकर्म्मणा। पावकं भवनं विष्णुं नरसिंहं शतक्रतुम्। जनार्द्दनं माधवञ्च मध्यपीठे समर्च्चयेत्। गौरीञ्च वीरभद्रञ्च चन्द्रार्द्धकृतशेखरम्। सर्व्वपापविशुद्ध्यर्थमर्घ्यो मे प्रति-गृह्यताम्। संसारक्लेशदग्धस्य व्रतेनानेन शङ्कर!। गृहाणार्घ्यं

मया दत्तं शिवरात्रौ प्रसीद मे। प्रभाते च ततः कृत्वा नित्य-कृत्यं समाहितः। देवं त्र्यम्बकमन्त्रेण स्नापयेत् पूजयेत्ततः। दक्षिणां विधिवद्दद्यात् पारणञ्च समाचरेत्। नमः शिवायेति मन्त्रेण ब्राह्मणान् भोजयेत्ततः। वृहन्नीलतन्त्रे सप्तमपटले। प्राङ्गणे मध्यरात्रौ च फाल्गुने मासि सुन्दरि!। चतुर्दिक्षु महेशानि! कदलीखण्डमुत्तमम्। अपापयागे देवेशि! मण्डपं कारय प्रियम्। चूताश्वत्थवटै-र्देवि! छन्नं कुर्य्याच्च मण्डपम्। कुमारीवेष्टितं कुर्य्या-न्मण्डपं सर्व्वमोहनम्। तारामूर्त्तिस्तथा कालीमूर्त्तिर्वा देव-राजक!। सर्व्वकार्य्यप्रदां देव! तां कुरुष्व महेश्वर!। अन्नदा मूर्त्तिमितां हि कुरु वा सुरवन्दित!। पट्टवस्त्रैर्महादेव्यै बलिं यत्नेन दापयेत्। आसनं कम्बलं दद्यात् स्वागतं मधुनिर्म्मितम्। पाद्यन्तु पयसा दद्यादर्घ्यं दद्यात् कुशेन च। मधुपर्कं घृतेनैव जलेनाचमनीयकम्। क्रमेण स्नानमाचर्य्य वसनं लोहितं स्मृतम्। रजताभरणं दद्यात् सर्व्वदेवमनोरमम्। तण्डुलेन विना देव! नैवेद्यं दापयेत् प्रिय!। चर्व्यं चोष्यं तथा लेह्यं पेयं दद्यान्मनोरमम्। रक्तचन्दनवीजेन जपेदष्टसहस्रकम्। शुक्ल-प्रतिपदारभ्य नवम्याञ्च समापयेत्। बलिं दद्यान्महादेव्यै छागेन महिषेण वा। अन्नं मत्स्यं तथा मांसं घृतं परम-शोभनम्। पिष्टकं परमं दिव्यं दद्याद्देव्यै मनोरमम्। होम-येद्दु देवदेवेश! यथाशक्ति विधानतः। कुमारीं पूजयेद्यत्नैर्द्रव्यै-र्बहुविधैरपि। होमादिकन्तु सकलं कुमारीपूजनं विना। परिपूर्णफलं नैव सफलं पूजनं भवेत्। ततः सकलसिद्ध्यर्थं कुमारीं वा प्रपूजयेत्॥ तथा। तारिणीं कालिकाञ्चैवान्नपूर्णां भैरवीं पराम्। सम्पूज्य विधिवद्भक्त्या सर्व्वसिद्धिर्भविष्यति। पूजाविधानं देवेश! श्रोतुमर्हस्यसंशयः॥ मत्स्यसूक्ते सप्तपञ्चाश-

त्पटले। श्रीभगवानुवाच। अथ मासाश्रितं कर्म वक्ष्ये देवि! समासतः। यथाक्रम यथाकालं यथाशक्ति विधानतः। व्रतस्थो दापयेद्दानं यत्नं कुर्य्याद्व्रतागमे। प्रतिग्रहं विनोदञ्च स्त्रीणां सम्प्रेक्षणादिकम्। भोजनं कांस्यलौहे च ताम्बूलस्य च भक्षणम्। क्षारञ्च कटुकञ्चैव वर्जयेन्मूलकं तथा। विल्वयावकमाषांश्च तिलान्नं माक्षिकं त्यजेत्। शाकं सर्वव्रते शस्तं सक्तत्यक्तं विशिष्यते। मूलपञ्चकरीरादिफलकान्तादियोजनम्॥ इति फाल्गुनकृत्यम्॥

रामार्चनचन्द्रिकायां पञ्चमपटले। मधौ शुक्लतृतीयायां जानकीरमणं प्रभुम्। राजोपचारैः सम्पूज्य राममाम-न्त्रयेत् कलौ। दोलारूढ़ं प्रपश्यन्ति ये कृष्णं मधुमाधवे। अपराधसहस्रैस्तु मुक्तास्ते नात्र संशयः। दोलारूढ़स्य देवस्य येऽग्रे कुर्वन्ति जागरम्। सम्यक् पुण्यफलावाप्तिर्निमिषे निमिषे भवेत्। चैत्रशुक्लनवम्यान्तु कर्त्तव्यं व्रतमुत्तमम्। राम एव परं ब्रह्म तद्दिनं रामतोषकम्। व्रतस्य विस्तारस्तत्रानु-सन्धेयोऽत्र तु ग्रन्थगौरवभिया न लिखितः। तद्दिने उपवास-स्यावश्यकत्वमपि तत्रैव। यस्तु रामनवम्यान्तु भुङ्क्ते मोहा-द्विमूढ़धीः। कुम्भीपाकेषु घोरेषु पच्यते नात्र संशयः। उप-वासासमर्थस्य एकभक्तमप्युक्तं तत्रैव। नवम्यामेकभक्तेन अङ्ग-भूतेन राघवः। इक्ष्वाकुवंशतिलकः प्रीतो भवति नान्यथा। तथा। एकभक्तव्रती तत्र सद्दाचार्य्यो जितेन्द्रियः। शृण्वन् रामकथां दिव्यामहः शेषं नयेन्मुने!। अन्यत् सर्वं तिथितत्त्वा-दावनुसन्धेयम्। तथा। द्वादश्यां चैत्रमासस्य शुक्लायां दमनो-त्सव। बौधायनादिभिः प्रोक्तः कर्त्तव्यः प्रतिवत्सरम्। तत्र स्यात् स्वीयतिथिषु वक्षादौ दमनार्पणम्। वह्निर्विरिञ्चिर्गि-रिजा गणेशः फणी विशाखो दिनकृन्महेशः। दुर्गान्तको विष्ण-

हरिस्मराश्च सर्व्वेऽपि पीठेऽत्र तिथौ तु पूज्याः। दमनोत्सव-यात्रा तत्रैवानुसन्धेया अत्र तु ग्रन्थगौरवभिया न लिखिता। तत्फलन्तु तत्रैव। स्वयं धृत्वाभ्यर्च्च्य बन्धून् विप्रान् सम्भोज्य पारयेत्। स्यादश्वमेधजं पुण्यमित्याह भगवान् शिवः। पारणाहे न लभ्येत द्वादशी घटिका न चेत्। तदा त्रयोदशी ग्राह्या पवित्रा दमनार्पणे। माधवे दमनारोपः स्यान्मधौ विस्मृतौ यदि। वैशाख्यां श्रावणे भाद्रे कर्त्तव्यं वा तदर्पणम्॥ इति चैत्रकृत्यम्।

वैशाखे पौर्णमास्यान्तु जलस्थं जगदीश्वरम्। शुक्लामेकादशीं यावत् पूजयेत्तं प्रहर्षितः। निक्षिप्य जलपात्रे तु मासे माधव-संज्ञिते। माधवं येऽर्च्चयिष्यन्ति देवास्ते न नरा भुवि। स्वर्ण-पात्रे तथा रौप्ये ताम्रे वा मृण्मयेऽपि वा। तोयस्थं योऽर्च्चयेद्-देवं शालग्रामसमुद्भवम्। प्रतिमां वा महाभाग! तस्य पुण्य-मनन्तकम्। तस्मात् ज्यैष्ठे सदा भूप! तोयस्थं पूजयेद्धरिम्। वीतपापो नरस्तिष्ठेद् यावदाभूतसंप्लवम्। ज्ञेयः कालविकल्पो-ऽयं मुक्तस्य द्वयमेव वा। गन्धोदकं वा तत्पात्रे नित्यपूजां समाप्य च। अभिवाद्य दिवा रात्रौ देवं नीत्वा निजासनम्। पञ्चोपचारैः सम्पूज्य तीर्थं प्राप्य विसर्जयेत्। आत्मानं गृह-दारादीन् तेन तीर्थेन पावयेत्। द्वादश्यान्तु जले रात्रा-वर्च्चयेद्गारुडोक्तितः। द्वादश्यां पूजयेद्रात्रौ जलस्थः जलशायि-नम्॥ इति वैशाखज्यैष्ठयोः कृत्यम्॥

तत्रैव॥ आषाढशुक्लद्वादश्यां चीराब्धिशयनोत्सवः। का-र्य्योऽन्यथा त्वनावृष्टिर्भवेत् पौराणवाक्यतः। मिथुनस्थे सह-स्रांशौ स्वापयेन्मधुसूदनम्। तुलाञ्चापि गते तस्मिन् पुनरुत्था-पयेत् प्रभुम्। मिथुनस्थे सहस्रांशौ न स्वापयति यो हरिम्। वैष्णवैः सह सम्भूय ह्यनावृष्टिस्तदान्यथा। अस्मिंस्तिथौ वैष्ण-वानां मुद्राङ्कधारणमुक्तं तत्रैव। मीनकोक्तप्रकारेण तप्तमुद्रा-

ङ्कधारणम्। कर्त्तव्यं वैष्णवैः सर्वैः सम्प्रदायानुरोधतः। सामवेदेऽपि। प्रतद्विष्णो अजचक्रे सुतप्ते जन्माम्भोधा उत्तरे कर्षणीन्द्राः। मूले बाह्वोर्दधति प्रणवानि लिङ्गान्यङ्गे तप्तायुधानि पर्य्यन्त इति। तत्फलमुक्तमथर्वणा। यथा। उरुक्रमस्य चिह्नैरङ्किता लोके उरुभागा भवन्तीति। ब्राह्मणस्यापि वैष्णवस्याङ्कधारणमुक्तं रामार्चनचन्द्रिकायाम्। यथा। अग्निहोत्रं तथा नित्यं वेदस्याध्ययनं तथा। ब्राह्मणस्य तथैवेदं तप्तचक्राङ्कधारणम्। यद्यपि वैष्णवस्येति नोक्तं केवलं ब्राह्मणस्येति तथाप्यत्र प्रागुक्तवचनैकवाक्यतया वैष्णवस्येति लभ्यते। धारणक्रमस्तु तत्रैव। षोड़शोपचारैर्भगवन्तमभ्यर्च्य चाक्षरे परमे व्योम शन्नो मित्रसंवरुण इत्येताभ्यां चक्रं शङ्खं चाभ्यर्च्य द्वादशाक्षरम्। न हि तज्जरायाग्नेर्मथे प्रथमस्य प्रचेतसमित्याभ्याम् अग्नावादध्यात्। वैश्वदेवस्य स्यामित्यग्निष्वर्थयेत्। पुरुषसूक्तेन शतमाहुतीर्हुत्वा भगवन्तं पुरुषसूक्तेनोपस्तुत्य यो ब्राह्मणमिति दण्डवत् पुरतो निपतेत्। ततः। सुदर्शन! महाज्वाल! सूर्य्यकोटिसमप्रभम्। अज्ञातार्थस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय॥ इति गृहीत्वा श्रीं सुदर्शनाय विद्महे महाज्वालाय धीमहि तन्नश्चक्रं प्रचोदयादिति चक्राधानम्। ततः। पाञ्चजन्य! महाध्वान!! ध्वस्तपातकसञ्चय!। पाहि मां पापिनं घोरसंसारार्णवपातितम्॥ इत्यादाय पाञ्चजन्याय विद्महे पवमानाय धीमहि तन्नः शङ्खः प्रचोदयादिति शङ्खाधानम्॥ मुद्राधारणफलमपि तत्रैव॥ य एवं कुरुते विद्वान् ब्राह्मणः श्रोत्रियः शुचिः। सर्वपापैः प्रमुच्येत विष्णुलोकञ्च गच्छति। अथवा उत्थानद्वादश्यामपि मुद्राङ्कधारणम् कार्य्यम्। शयन्याञ्चैव बोधिन्यां चक्रतीर्थे तथैव च। शङ्खचक्रविधानेन वह्निपूतो भवेन्नरः॥ इति तदुक्तवचनादिति मुद्राधारणविधिः॥

प्राण्यङ्गचूर्णं चर्म्माम्बु जम्बीरं वीजपूरकम्। अयज्ञमिष्ट-मनाद्यं यद्विष्णोरनिवेदितम्। दग्धमन्नं मसूरञ्च माषञ्चेत्यक्ष-धामिषम्। रुच्यं तत्तद्देशलभ्यं फलमूलादि वर्जयेत्। निष्पा-वान् राजमाषांश्च मसूरसम्मितानि च। वृन्ताकुञ्च कलि-ङ्गञ्च सुप्ते देवे न भक्षयेत्। मत्स्यसूक्ते अष्टपञ्चाशत्पटले॥ धरण्यामृतुमत्यान्तु तथा सप्त दिनानि च। वटे सोमवटे चैव न दत्तेऽपि मधूजके। पूजयेत् चैत्रपालञ्च जयपालं महाबलम्। नगरग्रामपीठाद्ये ह्यगस्त्ये चोत्तरेऽपि वा। न कुर्य्याद्ग्राममध्ये तु न कोणेऽपि वरानने!। उत्तराशा गते सूर्य्ये पुण्यर्क्षे तु शुभेऽहनि। स्थापयेत् प्रथमं वृक्षं स्थिरो भव इतीरयन्। स्नापयेत् पञ्चगव्येन त्रिः सूत्रेण च वेष्टयेत्। कृताकृतज्ञविप्रेण स्थितभार्य्येण सुन्दरि!। वृषान्ते त्रिदिनञ्चैन मिथुनान्ते दिनत्रयम्। रविसंक्रमणे मध्ये भूमि-दाहः प्रकीर्त्तितः। कलौ दिनत्रयं वर्ज्यं वृषान्ते मिथुनादितः। रविसंक्रमणे चैव भूमिदाहो दिनत्रयम्। भूमिदाहे त्यजेत् सर्वं दाहे दाहफलं लभेत्। व्यवहारे कोषहानिः पुत्रस्योत्पा-दनात् क्षयम्। प्रग्रहे दर्शने स्त्रीणामसौभाग्यं विजानीहि। तस्य शान्तिं प्रवक्ष्यामि कृत्स्नां चामीकरं फलम्। दद्याद्दोषो-पशान्त्यर्थं दद्याद्वा तिलकाञ्चनम्। काम्यं नैमित्तिकञ्चैव यात्रां मन्त्रं क्रियां तथा। ऋतुमत्यां न कुर्वीत पूर्वसङ्कल्पिताः इते। न कुर्य्यात् खननं भूमेः सूच्यग्रेणापि शङ्करि!। वीजानां वपनञ्चैव चतुर्विंशतियामकम्। प्रमादाद्वपनं कृत्वा गाश्च तत्र प्रचारयेत्। कृच्छ्रं कुर्य्यान्नृपणाञ्च खननात्तिलकाञ्चनम्। दुर्गाद्या मातरः सर्वा ऋतुमत्यो भवन्ति षट्। जैमिनिश्च सुम-न्तुश्च वैशम्पायन एव च। पुलस्त्यः पुलहश्चैव पञ्चैते वज्रवा-रणाः। पठेद्वा धारयेद्गेहे न वज्राग्निभयं तथा। मेषे वृषे च

मिथुने दद्याद्वारि सुशीतलम् । प्रतिमायां महालिङ्गे शालग्रामे तथैव च । यज्ञवृक्षस्य मूले वा पञ्च त्रिधारयान्वितम् । मुहूर्त्तमपि यो दद्यान्मम विष्णोः शिरोपरि । वाजपेयफलं प्राप्य मोदते ब्रह्मणा सह । शालग्रामशिलायान्तु अश्वमेधफलं लभेत् । विप्राय मोदकं दत्त्वा सोऽश्वमेधफलं लभेत् । तृषार्त्तेभ्योऽपि जन्तुभ्यः स्वर्गलोके महीयते । कुशाग्रनिःसृतं वारि यो ददाति दिने दिने । देहेषु तरुमूलेषु विष्णुलोकं स गच्छति । गन्धोदकस्य यो धारां गुड़क्षीरमथापि वा । एकैकं वारिणा सिक्तं चन्दनोक्षितमेव वा । दिनैकं मधुधारापि परं ब्रह्माधिगच्छति । कर्पूरागुरुसम्मिश्रं यो दद्यात् शर्करान्वितम् । स स्वर्गे विपुलान् भोगान् भुङ्क्ते च पितृभिः सह ॥ इत्याषाढ़कृत्यम् ॥

रामार्च्चनचन्द्रिकायाम् ॥ श्रावणस्य सिते पक्षे द्वादश्यां शौनकादिभिः । उक्तस्तदा प्रकर्त्तव्यः पवित्रारोपणोत्सवः । स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः । हरिश्च प्रीतिमाप्नोति यः पवित्रं समाचरेत् । विधिना शास्त्रदृष्टेन यो न कुर्य्यात् पवित्रकम् । हरन्ति राक्षसास्तस्य सर्वं पूजादिकं फलम् ॥ इति श्रावणकृत्यम् ॥

तत्रैव ॥ अथ भाद्रपदे शुक्लद्वादश्यां कटदानोत्सवः । कर्त्तव्यो वैष्णवैः सार्द्धं शयनोत्सववद्वरैः । प्राप्ते भाद्रपदे मासि एकादश्यां सितेऽहनि । कटदानं भवेद्विष्णोर्महापातकनाशनम् । शयनोत्सवरीत्या तु देवं नीत्वा जलाशयम् । कटदानोत्सवं कुर्वे इति सङ्कल्प्य पूजयेत् । देवदेव ! जगन्नाथ ! योगगम्य ! जनार्दन ! । कटदानं करोम्यद्य प्राप्ते भाद्रपदे शुभे । अनेन दक्षिणावर्त्तं दक्षिणाङ्गे प्रकल्पयेत् । महापूजां ततः कृत्वा पूर्ववत् स्वगृहं व्रजेत् ॥ इति भाद्रकृत्यम् ॥

अथ वर्षकृत्यम्॥ वरदातन्त्रे द्वितीयपटले॥ आद्याया-स्त्वश्वरीमधिकृत्य॥ कर्म्म कुर्य्यात् फलावाप्तै चन्द्रादिशोभने बुधः। विना नैमित्तिकं देवि! अन्यथा विफलं भवेत्। वा-र्षिकी कालिका पूजा राज्यदाऽन्यक्रियां विना। सा चापि तत्र कर्त्तव्या शृणुष्व परमेश्वरि!। सा पूजा इति। राज्यदा धनदा पूजा जयदाऽशुभसङ्कुले। शत्रुकार्य्यक्षतिकरी निजकार्य्य-प्रसाधिनी। राजवश्यप्रदा सर्वं ग्रहदोषनिवारिका। प्रकाशे दोषदा शीघ्रफलदा कथ्यते मया। महाविषुवसंक्रान्त्यां सवस्त्रं घटमुत्सृजेत्। उपानहौ च छत्रञ्च कालीप्रीणनहेतवे। अक्षयायां तृतीयायां तथैवमुत्सृजेद्घटम्। स्वर्णं वा राजतं वापि तैजसं मार्त्तिकं तथा। वैशाखे जलदानन्तु स्वर्णदानसमं प्रिये!। ज्यैष्ठे पक्वान्नदानेन आषाढ़े पनसेन च। श्रावणे परमान्नेन पूजयेत् परमेश्वरीम्। भाद्रे तु पिष्टकैः पूजा आश्विने शारदोत्सवः। भगवत्यै रक्तवस्त्रं दत्त्वान्यद्रव्यमेव च। पश्चात् स्वयञ्च तद्ग्राह्यं कार्त्तिके शीतवाससा। नवान्नेन मार्गशीर्षे नवसुन्नेन पौषके। माघे च फाल्गुने चैव दुग्धेन च घृतेन च। चैत्रे दध्ना महा-पूजा सर्वदुःखविनाशिनी। इयं ते वार्षिकी पूजा सर्वसा-म्राज्यदायिनी। आत्मप्रियं तथा वस्तु यथावद्धि निवेदयेत्। वार्षिकीषु महेशानि! सर्वाभीष्टानि साधयेत्। एतत्तु दक्षिणा-विद्याविषये साधकोत्तमः। कुर्य्याद् यः प्रतिवर्षन्तु स भवेद्-भूमिपाग्रणीः। पञ्चवर्षे भवेद्राष्ट्रं साम्राज्यं दशवर्षके। विंश-वर्षे महेशानि! महासाम्राज्यदायिनी। लक्षाधिपत्यं राज्यं स्यात् साम्राज्यं दशलक्षके। शतलक्षे महेशानि! महासा-म्राज्यमाप्नुयात्। दासोऽपि भृत्यतां त्यक्त्वा चक्रशाज्जायते महान्। मनसा न स्मृतं यत्तु वचसा कथितं न यत्। दक्षिणा-सेवकः सत्यं तथा राज्यमवाप्नुयात्॥ पञ्चमपटले। अति-

राज्यस्य राज्याप्तिसाधनं कथयामि ते। शुभे काले समारभ्य वर्षमेकं समाचरेत्। चन्द्रतारानुकूले हि दिने ग्राह्यं महे-श्वरि!। प्रातः स्नात्वा शुक्लवासः परिधाय प्रसन्नधीः। सङ्कल्प्यं हृतराज्यस्य लाभाय समुपाचरेत्। कालिका ब्रह्मचरीविद्या-मधिगम्य गुरोर्मुखात्। साधनं विधिवत् कृत्वावश्यं राज्य-मवाप्नुयात्। आद्येऽह्नि पूजयेद्देवीं जवाकुङ्कुमवर्वरैः। पूजान्ते परमेशानि! सहस्रं प्रजपेन्मनुम्। जनशून्यगृहे स्थित्वा समाप्य जपमुत्तमम्। ततस्तु जुहुयात् साष्टशतं दूर्वाघृतेन्दुकैः। मन्त्रे-णानेन देवेशि! कालागुरुघृतेन वा। कालि! कालि! ततो राजेश्वरि! राज्यप्रदे! पदम्। राज्यं देहि पदञ्चोक्ता दयामयि! पदं ठठः। इदं हि परमं मूलमन्त्रं राज्याप्तये शिवे!। जप-होमौ तु कर्त्तव्यौ मन्त्रेणानेन देशिकः। स्वेच्छाचारोऽत्र देवेशि! स्थानादिशोधनं न च। ततः प्रतिदिनं यावद्वर्षमेकं जपेन्मनुम्। अष्टोत्तरशतं मन्त्रं कदाचिन्न परित्यजेत्। न पुर-श्चरणापेक्षा मन्त्रेऽस्मिन् परमेश्वरि!। भूमिलग्नैकपादस्तु पौर्णमास्यां जपेन्मनुम्। कालागुरुद्रवेणैव तत्सख्ये तर्पयेच्छि-वाम्। कृष्णाष्टम्यां विल्ववृक्षं चतुर्दश्यां जवातरुम्। अमा-वस्यासु सर्वासु शेफालीतरुमुत्तमम्। स्पृष्ट्वा जपेद्दश दश वा-रान् सूर्य्योदये व्रतो। कृष्णाष्टम्यां चतुर्दश्यां पूजयेदतियत्नतः। अष्टोत्तरशतं हुत्वा रात्रौ चापि जपेच्छतम्। एवं द्वादशमासेषु कृत्वा राज्यमवाप्नुयात्। कृतेनैतेन देवेशि! प्रयोगो नाति-यत्नतः। इन्द्रतुल्येन रिपुणा हृतं राज्यमवाप्नुयात्। वर्षमध्ये यदि रिपुर्बलवान् साधको भवेत्। तच्छक्तिनाशकामोऽत्र चरेद् यत् कथयामि ते। अमुकं स्तम्भय स्वाहा कालिका ब्रह्म-चरीपुटम्। ब्राह्मणे गुरुवारे तु क्षत्रिये शुक्रवासरे। वैश्ये मङ्गलवारे च शूद्रे रविसुताहनि। पूर्वाह्णे प्रजपेन्मन्त्रसहस्रं

निर्जनस्थले। एवं पञ्चदिने कृत्वा पूजयेद्घोरदक्षिणाम्। शत्रोर्नामाक्षरर्त्तुं तु उन्मत्तमूलमुत्तमम्। उत्पाद्य परमेशानि! कुङ्कुमेन विघर्षयेत्। चन्द्रचन्दनकर्पूरजातीलवङ्गसंयुतम्। कुचन्दनं जवां दूर्वामिकीकृत्य बलिं दिशेत्। मन्त्रेणानेन देवेशि! रामतत्त्वाख्यमुद्रया। प्रणवं पूर्वमुच्चार्य्य कालिके! कालरात्रिके!। मद्दत्तं पदमुच्चार्य्य गृह्ण गृह्णपदद्वयम्। अमुकस्य रिपोः कार्य्यं विनाशय पदद्वयम्। छिन्धि छिन्धि मथ मथ मम राज्यं प्रदापय। ठद्वयेनैव मनुना अष्टम्यां बलिमादिशेत्। बलिदानेन देवेशि! क्षीणशक्तिर्भवेद्रिपुः। आत्मीयराज्यरक्षार्थमक्षमस्तत्क्षणाद्भवेत्। एवं कृते वर्षमध्येऽवश्यं राज्यमवाप्नुयात्। प्राप्ते राज्ये वरारोहे! कालिकां घोरनिस्वनाम्। पूजयेद्बहुजातीयैर्द्रव्यैश्च बलिभिः शुभैः। तोषयेद्ब्राह्मणानारीर्दीनान् धनगणैरपि। तदैव स्थिरराज्यः स्यान्नान्यथा विफलं भवेत्। न नारीं निन्दयेद्वाचा कर्म्मणा मनसापि वा। ब्राह्मणानपि देवेशि! स्थिरराज्याय सर्वदा॥

अथ देवीषोड़शयात्राः॥ वामकेश्वरतन्त्रे चतुःपञ्चाशत्पटले॥ भैरव उवाच॥ शृणु देवि! प्रवक्ष्यामि यात्राविधिमनुत्तमम्। तव यात्रा महेशानि! षोड़शी परिकीर्त्तिता। द्वादशेष्वेव मासेषु अमावस्या प्रशस्यते। तस्यां पूजादिकर्माणि कुर्वाणो मोक्षमाप्नुयात्। कुलवारे कुलतिथौ पूजयेत् प्रजपेन्निशि। कुलवारौ तु विज्ञेयौ कुजमन्दौ महेश्वरि!। चतुर्दश्यष्टमी चैव अमावस्याथ पूर्णिमा। नवमी च महादेवि! तिथयः कुलसंज्ञकाः। तत्र संक्रान्तियोगेन महायोगः प्रकीर्त्तितः। अस्मिन् दिने महेशानि! देवीपूजा सुखप्रदा। वैशाखे मञ्चयात्रा च चन्दनागुरुकल्पना। ज्यैष्ठे महास्नानयात्रा अम्बुवाचीदिनत्रयम्। आषाढे रथयात्रा च दिग्दिनव्यापिनी परा। श्रावणे

जलयात्रा च वस्त्रभूषणचामरैः। भाद्रे यात्रा धूननाख्या चण्डि-
काया दिनत्रयम्। आश्विने च महापूजा यात्रा यज्ञबलिप्रिया।
कार्त्तिके दीपयात्रा च नवान्नमग्रहायणे। पौषे चाङ्गरागयात्रा
वस्त्रालङ्कारभूषणैः। माघे मासि महादेवि ! रटन्ती च चतुर्दशी।
दोलाकेलिः फाल्गुने च चैत्रे यात्रा चतुष्टयी। दूतीयात्रा रास-
यात्रा वासन्ती नीलयात्रिका। एवं यात्रा मया प्रोक्ता षोड़शी
भवमोचनी॥

देव्युवाच॥ संक्षेपात् कथिता देव ! यात्रा च षोड़शी
प्रभो !। केन वा क्रियते यात्रा विधानं ब्रूहि मे प्रभो !।
भैरव उवाच॥ शृणु देवि ! प्रवक्ष्यामि सारात्सारतरं वचः।
यत् कृत्वा साधकश्रेष्ठः क्रियातीतो भवेत् प्रिये !। गुर्वाज्ञया
क्रियातीतस्त्वाभिषिक्तो जितेन्द्रियः। कामक्रोधलोभमोहमद-
मात्सर्य्यवर्जितः। गुरूपदिष्टमार्गेण देवीमालम्ब्य यत्नतः।
पूजयेद्विधिवद्भक्त्या वाङ्मनःकायकर्मभिः। आत्मवत् पूजयेद्देवीं
दिवारात्रिक्रमेण च। प्रातःकाले दन्तकाष्ठैर्मुखप्रक्षालनं चरेत्।
धौतवस्त्रं परिधाप्य तैलाभ्यङ्गञ्च कारयेत्। सुगन्धिना जलेनैव
देव्याः स्नानं प्रकल्पयेत्। पूजयेद्विधिवद्भक्त्या यथावित्तानु-
सारतः। पूजावसाने देवेशि ! भावयेद्वाक्यसम्भवैः। वाक्यसम्भवैः
स्तवैरित्यर्थः। शाययित्वा विचित्रायां शय्यायां सुखहेतवे। तत
उत्थाप्य सन्ध्यायां दीपैर्नीराजनञ्चरेत्। रात्रौ तिथिविशेषे च
पूज्या त्वमसि साधकैः। अन्नं व्यञ्जनसंयुक्तं दधि दुग्धं सशर्करम्।
पनसाम्रफलञ्चैव दाड़िमं नागरङ्गकम्। यदुत्कृष्टतमं लोके
दद्यात् साधकसत्तमः। मधु मांसं पिष्टकञ्च पायसं घृतसंयुतम्।
मत्स्यं प्रवीणं मुद्राञ्च चन्द्रबिम्बनिभां पराम्। नारिकेलं तर-
म्बूजञ्च खर्जूरं तालपिष्टकम्। पनसाम्रफलञ्चैव दाड़िमं नागर-
ङ्गकम्। ध्यानंनिष्ठो जपाविष्टस्ततो धीरो जितेन्द्रियः। वार्षिकीं

प्रारभेद् यात्रां शृणु तत् सावधानतः॥ पञ्चपञ्चाशत्पटले॥ वैशाखे पूर्णिमायाञ्च मञ्चं हस्तचतुष्टयम्। दीर्घमायतमेवं तदुच्चमानं प्रकीर्त्तितम्। तत्र संस्थाप्य देवेशीं गीतवाद्यादिमङ्गलैः। चन्दनागुरुकर्पूरकुङ्कुमालक्तसिन्दूरैः। मृगनाभिसाचिकैश्च गात्रमार्जनमाचरेत्। स्नानञ्च कारयेद्देव्याः कर्पूरवासितैर्जलैः। मन्दिरे च ततो नीत्वा पूजयित्वा यथाविधि। होमं कृत्वा बलिं दत्त्वा सन्तोष्य भोजनादिभिः। कुमारीं पूजयित्वा च ब्राह्मणानपि भोजयेत्। एवं विधिविधानज्ञो यात्रां कृत्वा विराजते। ज्यैष्ठे मासि महास्नानं कर्पूरादिसुवासिभिः। अष्टोत्तरशतैः पूर्णैः कलसैः स्नापयेत्ततः। वस्त्रैर्गात्रं मार्जयित्वा धूपयेद् घृतगुग्गुलैः। मञ्चाच्च मन्दिरे नीत्वा बलिं पूजाञ्च होमयेत्। गन्धाष्टकैरङ्गरागं कारयित्वा यथाविधि। विधिना कारयेद्देवि! स्त्रीकुमारीद्विजार्च्चनम्। प्रसादं भक्षयेत् पश्चात् पुत्त्रदारस्वबन्धुभिः। इत्थं यात्राविधिं कृत्वा विहरेद् भैरवो यथा। आषाढ़े प्रथमे देवि! अम्बुवाचीदिनत्रयम्। सङ्गोपनगृहे देवीं स्थापयेद्वस्त्रवेष्टनैः। रात्रौ महानिशायोगे पञ्चाचारेण देशिकः। पूजयित्वा बलिं दत्त्वा होमयित्वा विहारयेत्। शुक्लपक्षे द्वितीयायां रथे संस्थाप्य चण्डिकाम्। चालयेन्नृत्यगीतैश्च स्वेच्छाचारेण साधकः। तस्मात् पूजागृहे नीत्वा बलिहोमादिनार्च्चयेत्। स्त्रीकुमारीद्विजान् सर्वान् भोजयेदन्नसम्भवैः। वित्तशाठ्यं न कुर्वीत साधकः स्थिरमानसः। श्रावणे जलयात्रा च वस्त्रचामरभूषणैः। सज्जीकृत्य शुभां नौकां साधको वाहयेत् स्वयम्। देवीं संस्थाप्य विधिना भगलिङ्गानुकीर्त्तनैः। ततः पूजागृहे नीत्वा पूजयेद्विधिपूर्वकम्। भाद्रे मासि त्रयोदश्यामारभ्य त्रिदिनं शुभम्। कुहौ वा पौर्णमास्यां वा धूनञ्च समाचरेत्। प्रत्यहं पूजयेद्रात्रौ बलिहोमादिकीर्त्तनैः। नानाविधानि

द्रव्याणि मनोऽभिलषितानि च । दत्त्वा स्त्रियः कुमारीश्च विप्रान् सर्वान् प्रतोषयेत् । आश्विने च महापूजां नवम्यामारभेत् सुधीः । प्रत्यहं पूजयेद्देवीं बलिहोमस्तवादिभिः । प्रत्यहं भोजयेद्विप्रान् कुमारीश्च सुवासिकाः । दिवार्च्चा पशुवीरेण रात्रौ कौलानुसारतः । एवञ्च साधकश्रेष्ठो निर्वाणं मोक्षमाप्नुयात् । तत्राप्यशक्तो देवेशि ! त्रिदिनं पूजयेच्छिवाम् । कार्त्तिकेऽमातिथौ देवि ! दीपयात्रां समाचरेत् । रात्रौ महानिशायोगे दीपादिभिरलङ्कृतम् । कृत्वा देवीगृहं पूजाबलिहोमादिनार्चयेत् । घृतप्रदीपाभावे तु तैलदीपं समाचरेत् । मार्गशीर्षे महादेवि ! नवान्नं विधिपूर्वकम् । मत्स्यं मांसं पायसञ्च दुग्धं दधि घृतं मधु । सूपं शाकं पिष्टकञ्च मिष्टान्नं व्रीहिसंयुतम् । तिललड्डुं नारिकेलं शर्करागुड़मिश्रितम् । सर्वं नवं नवं दद्यात् पूजयेत् साधकोत्तमः । प्रसादं भक्षयेद्देव्याः पुत्रदारान्वितः सुधीः । पौषे नवानि वस्त्राणि नानालङ्करणानि च । अङ्गरागविधिं कृत्वा दत्त्वा पूजाविधिं चरेत् । विना होमेन बलिना ब्राह्मणाराधनेन च । पूजा नैव महादेव्याः सत्यं सत्यं न संशयः । माघे मासि चतुर्दश्यां कृष्णपक्षे सुरेश्वरि ! । रटन्ती पापनाशार्थं पृथिव्यां पापिनं जनम् । तस्मिन् दिने महेशानि ! पूजयेद्विभवावधि । दानं कृत्वा ब्राह्मणेभ्यश्चण्डिकाप्रीतये ददेत् । शीतार्त्ताय क्षुधार्त्ताय दरिद्राय यतात्मने । अन्नं वस्त्रं सुवर्णञ्च देवीप्रीतिकरं परम् । फाल्गुने पूर्णिमायाञ्च मञ्चं कृत्वा त्रिखण्डकम् । तत्र देव्या आसनञ्च भूषयेद्वस्त्रवेष्टनैः । चतुर्दिक्षु पताकाञ्च रम्भाञ्च क्षुद्रघण्टिकाम् । दोलयेत् फाल्गुने देवीं दिवारात्रिप्रभेदतः । पूजयेद्भोजयेद्विप्रान् बन्धून् ज्ञातीन् सुतादिकान् । नृत्यगीतवाद्यभाण्डैस्तोषयेत् कालिकां सदा । चैत्रे कृष्णचतुर्दश्यां दूतीयागविधिं चरेत् ।

रात्रौ देवीं पूजयित्वा नव कन्याः प्रपूजयेत्। तदभावे विप्रकन्यां सुवेशां यौवनान्विताम्। नानालङ्कारवस्त्राद्यैर्गन्धमाल्यानुलेपनैः। भूषयित्वा भोजयित्वा स्वयं भोजनमाचरेत्। कौलाचारेण देवेशि! रात्रौ पूजाविधिं चरेत्। द्वितीयागोत्रमन्त्रेण सर्वं पूजादिकं नयेत्। वासन्ती त्रिदिनं यावत् बलिहोमादिना यजेत्। पौर्णमास्यां रासयात्रां देव्याः कुर्य्यान्निशार्द्धके। पूर्ववन्मन्त्रमास्थाप्य देवीं देव्यासनं यजेत्। सम्मुखे वाससंस्थानं भैरवीभैरवान्वितम्। कृत्वा तान् पूजयित्वा च भ्रामयेत् कुम्भचक्रवत्। कोलाहलं मृदङ्गादिवाद्यैर्नृत्यैः सुगीतकैः। कुर्य्यादानन्दहृदयः साधकः स्थिरमानसः। वित्तशाठ्यं न कुर्वीत देवीयात्रा सुखप्रदा। संक्रान्त्यामारभेन्मन्त्री नीलयात्रां महेशितुः। धूपेन धूपयेद्देवि! महाकालस्य तुष्टये। महाकालेन च समं रात्रौ देवीं प्रपूजयेत्। संवित्प्रधाननैवेद्यं नानावस्तुसमन्वितम्। दत्त्वा स्तुत्वा नतो भूत्वा गानं कुर्य्यात् सबान्धवः। आनन्दोद्रिक्तहृदयो मन्त्री नर्त्तनमाचरेत्। शिवाबलिः प्रकर्त्तव्यो निशार्द्धे शिवतुष्टये। वैशाखे पूर्णिमाद्वेत्याद्येतत्पर्य्यन्तं कौलतन्त्रेण समानम्। एवं सांवत्सरीं यात्रां कृत्वा साधकसत्तमः। गुरोः प्रसादाद्देवेशि! शिवतुल्यो न संशयः॥ इति देवीषोड़शयात्राः॥

पृथ्वीविख्यातकीर्त्तिर्गुणिगणहृदयाम्भोजसूर्य्यप्रकाशः स्निग्धः सम्पूर्णचन्द्रप्रतिकृतिरमराचार्य्यशुद्धोपलब्धिः। जीयात् श्रीप्राणकृष्णाह्वय इह विबुधद्रुः सदोपासकानां भूयांसो मातृकाख्ये वपुषि समगमन् ब्राह्मणा यत्प्रसादात्॥ श्रीरामतोषणकृती जगतां हिताय श्रीप्राणकृष्णपरितोषनिदेशवर्त्ती। नत्वा सुचारुचरणाम्बुजमिष्टदेव्याश्चक्रे चतुर्थमिदमुत्तमकाम्यकाण्डम्॥ ग्रन्थिः शाखा प्रशाखा स्तवककिशलये सत्-

फलञ्च प्रसूनं सर्वं तत्काम्यकाण्डे रुचिरमतिफलं धीमतां दर्शनीयम्। विद्वांसः! पश्यतेदं नयनमलहरं दिव्यदृष्टिप्रसादं नानासन्देहनाशि प्रमुदितहृदयाः सर्वलोकोपकर्त्तृ॥

इति प्राणकृष्णविश्वासानुमतायां श्रीरामतोषणविद्याल-
ङ्कारभट्टाचार्य्यविरचितायां श्रीप्राणतोषिण्यां काम्या-
भिधानं चतुर्थकाण्डं समाप्तम्॥

गणस्येष्टपदाम्भोजं चतुर्वर्गफलप्रदम्। पञ्चमं भक्तिकाण्डञ्च तनोति रामतोषणः। निर्घण्टो भक्तिकाण्डस्य पञ्चमस्याधुनोच्यते। प्रातःकृत्यं गणेशस्य स्नानादि तदनन्तरम्। तर्पणस्य विशेषस्तु फलं तस्य ततः परम्। श्रीगणेशभूतशुद्धि-मातृकान्यासनं विना। कर्त्तव्यकर्मनिन्दा च षड़ङ्गन्यास एव च। मातृकान्यासकृत्यस्य प्रकारस्तदनन्तरम्। न्यासान्तरं ततो ध्यानं यन्त्रस्य करणं ततः। पीठपूजादिकञ्चावाहनं पूजा-क्रमस्ततः। गन्धाष्टकं गणेशस्य पुष्पञ्च तदनन्तरम्। धूपदीपा-दिभेदश्चावरणार्च्चा ततः परम्। पुरश्चर्य्या गणेशस्य काम्यकर्म ततः परम्। महालक्ष्म्यादिकानाञ्च साधनं तदनन्तरम्। गणेश-मन्त्रो यन्त्रञ्च धारणार्हमतः परम्। आकर्षणादिकर्माणि ततो ध्यानान्तरं ततः। कर्मभेदे वर्णभेदो वीजत्रयं गणेशितुः। ध्यानान्तरं ततो मुद्रा पुरश्चर्य्यान्तरं ततः। तीव्रादिशक्तिध्यानन्तु पीठमन्त्रस्ततः परम्। पूजावरणपूजा चाष्टबाहुगणपार्च्चनम्। ततो मूषिकपूजा च हरिद्रागणपोद्भवः। गणेशोपनिषच्चैव स्तोत्रं गणपतेस्ततः। कवचं गणनाथस्य लिपिलम्बोदरोद्भवः। अन्यान्यपि यथास्थानं दृष्ट्वा ज्ञेयानि पण्डितैः। इत्यादिमपरि-च्छेदसमाप्तिरभिधीयते। वाणलिङ्गं तस्य भेदस्तच्चिह्नं तत्-परीक्षणम्। वाणशब्दस्य व्युत्पत्तिर्वाणलिङ्गप्रशंसनम्। तत्-पूजनफलञ्चैव तत्स्थापनफलं ततः। रसलिङ्गफलञ्चैव निन्द्य-

लिङ्गं ततः परम्। शुभलिङ्गं वाणलिङ्गमुद्भूतिकारणं ततः। वाणलिङ्गस्थलं वाणलिङ्गं नैकप्रकारकम्। ध्यानं पूजा स्तवश्चैव रौद्रलिङ्गादिलक्षणम्। शिला न मृत्स्नादिसम्भूतलिङ्गार्च्चनफलं ततः। धात्वाद्युद्भूतलिङ्गस्य संस्कारस्तदनन्तरम्। सप्तशक्तिकलिङ्गपूजाफलं तत्तत्प्रमाणकम्। विप्रादिभेदे मृत्स्नायाः फलं स्थूलं शिलादिजम्। फलदं पञ्चसूत्रादिलिङ्गव्युत्पत्तिरेव च। लिङ्गमाहात्म्यपूजादिफले च तदनन्तरम्। रसलिङ्गस्य माहात्म्यं तल्लिङ्गनिर्म्मितिस्ततः। लिङ्गोत्पत्तिर्वैष्णवादेर्लिङ्गपूजाधिकारिता। तदकरणनिन्दादौ शिवलिङ्गार्च्चनाविधिः। लिङ्गस्य स्थापनफलं काम्यपूजा ततः परम्। इति छेदो द्वितीयस्य समाप्तिरभिधीयते। तीर्थादिमृत्तिका ग्राह्या शिवनिर्म्माणकर्म्मणि। नदी क्षुद्रलक्षणञ्च लिङ्गनिर्म्मितरेव च। मृत्तिकाहरणे मन्त्रो मन्त्राज्ञाने च निन्दनम्। निर्माणमन्त्रस्तत्प्रमाणं प्रतिष्ठान्यास एव च। प्राणायामस्ततो ध्यानमावाहनमतः परम्। मन्त्रः षड़क्षरः पूजाष्टमूर्त्तिपूजनं ततः। जपः समर्पणं तस्य मुखवाद्यं ततो नतिः। विसर्जनं ततः पूजा सूतञ्च तदनन्तरम्। ततश्च पूजकस्थानं दोषा न्यूनाधिकेन च। सर्वांशतो लिङ्गपूजान्यथा दोषस्तनन्तरम्। पुष्पदानञ्चैव ततः पुष्पमाहात्म्यमेव च। विजयापत्रमाहात्म्यं काम्यलिङ्गार्चनाक्रमः। प्रत्यहं लिङ्गपूजा च लिङ्गार्पितफलं ततः। रिष्टशान्तिरेकदिनकृतलिङ्गार्चनाफलम्। सार्वकामिकपूजा चाग्राह्यं लिङ्गार्पितं ततः। तत्कारणञ्च पात्रस्थं भक्ष्यं नैवेद्यमुत्तमम्। शिवस्वग्रहणे दोषस्तत्प्रायश्चित्तमेव च। वाणलिङ्गार्पितं ग्राह्यं स्वयम्भ्वाद्यर्पितं तथा। निर्माल्यद्रव्यनिर्णीतिस्तथार्षादिष्वपि स्मृतम्। ततः पाशुपतास्त्रञ्च लिङ्गस्तोत्रं ततः परम्। शिवस्य कवचं विल्वव्रुक्षादिमहिमा ततः। रुद्राक्षमहिमा संवित्

प्रकरणं तदनन्तरम्। श्लोकच्छेदसम्पूर्त्तिरिति निर्णीयते मया। शालग्रामशिलोत्पत्तिनिदानं चक्रकारणम्। अनुद्योगविष्णुशिलालाभोत्तमफलं ततः। स्निग्धादिगुणदोषाश्च सकामे दोषनिर्णयः। शालग्रामार्च्चनफलं चक्रद्वादशकोद्भवम्। फलञ्च चक्रसंख्याभिः शालग्रामनिरूपणम्। शालग्रामस्थितिफलं तत्प्रभेदस्ततः परम्। विप्रादिभेदे चक्रस्य विशेषस्तदनन्तरम्। संस्पर्शार्च्चानिषेधस्तु राजन्यादेर्निरूपितः। भोजनस्य च निन्दापि शालग्रामार्च्चनं विना। चक्रद्वयं तथा लिङ्गद्वयं नार्च्च्यं गृहे क्वचित्। द्वादशादिचक्रपूजाफलं चक्रस्य विक्रये। दोषस्तु न स्यात् चक्रार्च्चाफलञ्च तदनन्तरम्। गण्डकीद्वारकाचक्रसङ्गमस्य फलं ततः। शालग्रामे विष्णुपूजाफलं ज्ञेयं ततः परम्। परिच्छेदचतुर्थस्य समाप्तिरीतिरीरिता। द्वारकाचक्रचिह्नानि तन्माहात्म्यं ततः परम्। तस्य वर्णविशेषेण शुभाशुभफलं ततः। निन्दा शिलाचक्रभेदे नामभेदस्ततः परम्। जीर्णोद्धारादिकर्म्माणि शालग्रामशिलार्च्चनात्। ततश्च षट्पदीस्तोत्रं प्रणामः प्रार्थना ततः। चरणामृतपानञ्च शिरसा तस्य धारणम्। अपीत्वा मूर्द्ध्नि धर्त्तुश्च निन्दा विप्राङ्घ्रिवारिणः। पादं नैवेद्यदानस्य मन्त्रश्चार्च्चनसूत्रकम्। षोड़शोपचारमन्त्राः काम्यकर्म्म ततः परम्। श्रीविष्णुनाममाहात्म्यं शतनाम ततः परम्। विष्णुपूजा काष्ठपात्रादिषु दोषावहा ततः। स्वर्णादिपात्रे पूजातिफलदा तदनन्तरम्। पुरुषसूक्तमाहात्म्यं स्नानत्रयफलं ततः। उद्वर्त्तनस्नानफलं फलं शङ्खे शुभाशुभम्। त्रिपदीलक्षणञ्चैव तुलसीमहिमादि च। मालाधारणमप्युक्तं वैष्णवस्य प्रशंसनम्। दशावतारतिथ्यादिपरिच्छेदोऽत्र पञ्चमः॥ महाविद्यानिर्णयश्च तासां माहात्म्यकीर्त्तनम्। महाविद्याप्रकृतीनां भैरवस्तदनन्तरम्। महारात्र्यादिनिर्णीतिर्विद्यो-

त्पत्तिस्ततः परम्। महाकालीस्वरूपञ्चालीढ़ादिकीर्त्तनं ततः। कालीमन्त्रप्रशंसा चाद्यानिन्दादोष एव च। कालीमन्त्रद्वयञ्चैव ताभ्यां शान्त्यादिरेव च। मन्त्रद्वयफलञ्चैव ऋष्यादिन्यास एव च। संयमादितन्त्रकर्म गुरुणा कृत्यमेव च। तत्पुत्राद्यैः स्वयं वापि नान्यद्वारा कदाचन। गुरुणा कृततन्त्रोक्तकर्मणः फल-निर्णयः। गुरुपत्न्या कृते कर्मण्यत्र होमो न विद्यते। पुरो-हितेन विहिते तस्मिन् कर्मणि निन्दनम्। जनस्य सन्निधौ पूजानिषेधः परिकीर्त्तितः। अथवा विष्णुतन्त्रोक्तपूजा तत्र विधीयते। इष्टदेवं विनान्यत्र भक्तिर्निन्दा तथैव च। पूजा च त्रिविधा वाह्यपूजाफलमतः परम्। पूजासूत्रं ततः सङ्क्षेपपूजासूत्रमेव च। नित्यपूजाविधानञ्च मन्त्रद्वयपुर-स्क्रिया। शतनामस्तुतिश्चैव महाविद्यास्तवस्ततः। महाविद्या-कवचञ्च कालीकवचमेव च। शाक्तप्रशंसा विप्राणां शाक्त-त्वकारणं ततः। शक्त्युपासकमर्त्यस्यान्योपासननिषेधनम्। अन्यान्यपि यथास्थानं ज्ञातव्यानि मनीषिभिः। इति षष्ठपरि-च्छेदसमाप्तिरभिधीयते। एकवर्षादिभेदेन कुमारीनाम-निर्णयः। विशेषस्तत्र तत्रापि नानातन्त्रानुसारतः। कुमारी-पूजनस्थानफलं तत्कालनिर्णयः। तस्याः पुष्पादिदानस्य भोज-नस्यापि यत् फलम्। पूजास्थानञ्च तत्पश्चात् कुमारीपूजने मनुः। पूजाक्रमः कुमारीणां प्रणामस्तदनन्तरम्। दक्षिणादि-प्रदानञ्च कन्योद्वाहफलं ततः। विवाहनाफलञ्चैव तन्मन्त्रस्य पुरस्क्रिया। कुमारिकापूजनस्य प्रयोगस्तदनन्तरम्। कुमारी-स्तवराजश्च कुमारीकवचं ततः। ब्राह्मणस्य प्रशंसा चाध्यापक-वृत्तिजं फलम्। ब्रह्मशापफलं तीर्थयात्रा च तदनन्तरम्। दिग्विशेषे च यात्रायां निषिद्धमासनिर्णयः। योगिनीनिर्णयश्चैव तिथियोगविशेषयोः। योगी यात्रानिषेधस्य तिथ्यर्च्चयोगतस्तथा।

निषेधो जन्ममासादेरूषादिनिर्णयस्ततः। दिग्विशेषे च यात्रा तु दिग्विशेषमुखस्य च। तत्रापि यात्रिकद्रव्यविशेषनिर्णयस्ततः। गयाया निर्णयश्चैव प्रेतशिलानिरूपणम्। गोलादिलिङ्गनिर्णीतिः स्वपिण्डदानमेव च। आगस्त्ये तत्फलञ्चैव स्वकृत्यकाल-निर्णयः। तत्र नास्ति च कालस्य नियमः श्राद्धकर्मणि। विषुव-श्राद्धकरणे निरामिषनिषेधनम्। आमश्राद्धे त्वाममांसनिषेधञ्च ततः परम्। कृते च सामिषश्राद्धे निन्दा निरामिषाशने। वर्ष-श्राद्धादिषु तथामिषदानविनिर्णयः। कृते निरामिषश्राद्धे दोष-स्त्वामिषभोजने। शूद्रनिमन्त्रणे विप्रभुक्तिनिन्दा ततः परम्। श्राद्धे देयं तथा मांसं तत्फलञ्च ततः परम्। वर्ज्यं मांसं तथा देया मत्स्या वर्ज्यास्तथैव च। धूपपक्ककदल्यादिनिषेधस्तदन-न्तरम्। श्राद्धे पात्रविशेषान्नैस्तृप्तिकालनिरूपणम्। निमन्त्र-णापक्रान्तौ च काशीमाहात्म्यमेव च। इति सप्तमविच्छेद-समाप्तिः कथिता मया॥ इदं सप्तभिर्विस्तृतं भक्तिकाण्डं परि-च्छेदरूपैः फलैः संयुतञ्च। यदर्थं सुरा मानवाः किन्नराद्यास्तप-श्चेरुरुग्रं गलत्पर्णभोगैः। आदिष्टैस्त्वरया न काण्डमतुलं मीमां-सितं यन्मया धीरा! नोपहसन्तु तेन परनिन्नस्वेष्टशौ दुर्गतिः। पश्यन्त्वेकमनीहमीशमसकृन्मायागुणैर्दुस्त्यजैर्नानारूपधरं विभुं त्वमहमित्याविष्टचित्तं सदा॥

अथ गणेशप्रकरणम्॥ कुलमूलावतारकल्पसूत्रटीकाधृत-द्वितीयकाण्डीयगणेशविमर्षिण्याम्॥ ब्राह्मे मुहूर्त्ते उत्थाय शिरसि श्वेतपङ्कजे। श्वेतवर्णं सुखासीनं वरदाभयपाणि-कम्। द्विनेत्रं शान्तवदनं स्मृत्वा निजगुरुं पुनः। प्रणिपत्य यथान्यायं वहिर्निर्गत्य साधकः। विहितावश्यकं शौचमा-चामं दन्तधावनम्। मुखप्रक्षालनादीनि कृत्वा स्नानं समा-चरेत्। हृन्मन्त्राङ्कुशमन्त्राभ्यां तीर्थं सवित्मण्डलात्। आवा-

ह्याम्भसि संयोज्य सोमसूर्य्याग्निमण्डलम्। सञ्चिन्त्य मन्त्री तन्मध्ये निमज्ज्य सुसमाहितः। मूलमन्त्रं समारभ्य मनसा च त्रिवारकम्। समुत्थाय समाचान्तः षड़ङ्गीकृतविग्रहः। आत्मानं मूलमन्त्रेण मुद्रया कलसाख्यया। सप्तकृत्वोऽभिषिच्याथ मनुनामन्त्रितं जलम्। पीत्वाचम्याथ विमले वाससी परिधाय च। पुनराचम्य विन्यस्य षड़ङ्गमपि पूर्ववत्। वामहस्ते गृहीताधोगलितोदकविन्दुभिः। सप्तधा प्रोक्षणं कुर्य्यान्मूलमन्त्रं समुच्चरन्। अवशिष्टोदकं दक्षहस्ते कृत्वा तु मन्त्रितम्। दिनेशायोत्क्षिपेत्तिष्ठन् गायत्र्यार्घ्याञ्जलित्रयम्। तथा। सर्वाभीष्टप्रदं वक्ष्ये चतुरावृत्तितर्पणम्। एकान्ते विजनेऽरण्ये सर्वोपद्रववर्जिते। कृतस्नानादिको मन्त्री पूर्ववन्न्याससंयुतः। तड़ागमध्ये सञ्चिन्त्य पुष्पितं नलिनीवनम्। तस्य मध्ये महापद्मं तरुणादित्यसन्निभम्। समुन्नतं सुगन्धाढ्यं रमणीयं मनोहरम्। सद्यो विकसितं ध्यायेदथवा निर्म्मलीववान्। यथाविक्तानुसारेण सौवर्णादिशरावकम्। पृथुलं सुविशालास्यं नूतनं मृण्मयन्तु वा। भद्रासनन्तु संस्थाप्य नदीनदतड़ागजैः। शुद्धोदकैः समापूर्य्य तत्र वा कमलं स्मरेत्। रौप्यसोपानपङ्क्त्या तु आत्मानं गणनायकम्। विनिश्चित्य समागम्य तदम्भोरुहमध्यतः। उपविष्टं गणेशानं सर्वाभरणसंयुतम्। प्रकरैर्गन्धकुसुमैः समभ्यर्च्च्य च पूर्ववत्॥ साध्यमूर्द्धनि नासाग्रे निधायामृतधारया। तच्छरीरं सुसञ्चिन्त्य ध्यात्वा गणपमस्तके। चन्द्रचन्दनकाश्मीरकस्तूरीलोलितैर्जलैः। प्रथमं मूलमन्त्रेण चतुर्वारं प्रतर्प्य च। मिथुनं षड्गणेशञ्च शङ्खपद्मनिधी अपि। स्वस्ववीजादिकैर्युग्मैः स्वाहान्तैश्च चतुश्चतुः। मूलमन्त्रं चतुर्वारपूर्वकं तर्पयेत् सुधीः। सम्भूयाष्टोत्तरशतं कनिष्ठोऽयं मतः क्रमः। यद्वाष्टवारं मूलेन तर्पयित्वा विशेषवित्। श्री-

स्वादीनि युग्मानि निध्यन्तानि पृथक् पृथक्। विभज्य चतुरावृत्त्या मूलपूर्वं प्रतर्पयेत्। एवं मध्यक्रमोऽयं स्याद् द्विशतं षोड़शोत्तरम्। अथवा मूलमन्त्रेण विंशद्वारं प्रतर्प्य च। पूर्वं मन्त्राक्षरैर्व्यस्तैः स्वाहान्तैश्च चतुश्चतुः। मूलमन्त्रचतुर्वारं पूर्ववत् सम्प्रतर्प्य च। मिथुनादीष्टतः पश्चात् पूर्ववत् सम्प्रतर्पयेत्। भवेत् सम्भूय सचतुश्चत्वारिंशच्चतुःशतम्। ज्येष्ठक्रमोऽयं सम्प्रोक्तस्तत्त्वज्ञैस्तन्त्रवेदिभिः। इत्थं सुधामयजलैरभिषिच्य कलेवरम्। देवं पुनश्च सन्तोष्य गन्धाद्यैर्देशकालवित्। सर्वाभीष्टतमं प्रार्थ्य नमस्कृत्य समुद्वसेत्। एवं योऽनुदिनं मन्त्री दिनादौ सम्प्रतर्पयेत्। मण्डलात् सकलाभीष्टं निर्विघ्नं लभते ध्रुवम्॥ शारदातिलके त्रयोदशपटलेऽपि॥ तर्पयेत् सलिलैः शुद्धैर्दिनेशं गणनायकम्। चतुश्चत्वारिंशताढ्यं चतुःशतमतन्द्रितः। प्राप्नुयान्मण्डलादर्वाक् अभीष्टमधिकं नरः। तर्पणे तु सर्वमन्त्राणामयं विशेषः। क्रीड़न् हेममयोदयाद्रिशिखरे स्थित्वावतीर्णः क्षुधां सोपानेषु समेत्य रुक्मकलितेष्वन्नादिभैक्ष्यं बहु। भुक्त्वा प्रीतमना यथापुरमसौ सम्पूजितो विघ्नपः कुर्य्यादित्युषसि स्मृतः शशिकलाक्रामांस्तथा तर्पितः। तर्पणे तु गं गणेशं तर्पयामीति प्रयोगः। क्रमाच्चतुःशतमिति प्रतितिथिद्रव्यचतुष्टयेन तावान् होमः। अनावृष्टौ भये घोरे राजचौराद्युपद्रवे। महाहवे विवादे च महादारिद्र्यसङ्कटे। विवाहादिषु सर्वेषु कार्मेषु च विशेषतः। एवं प्रतर्पणं कुर्य्यान्मानसैश्च प्रसन्नधीः। श्रीगणेशप्रभावेण सर्वं सिध्यति लीलया। अनाकुलमना मन्त्री भावयेदिक्षुसागरम्। तन्मध्ये विद्रुमद्वीपं तरुणादित्यसन्निभम्। तस्य मध्ये महादिव्यजाम्बूनदमयं स्थलम्। तस्योर्द्ध्वं कल्पकोद्याने विशालमणिभूतलम्। समयानिलसंसेव्यं ज्योत्स्नाकालातपारुणम्। तन्मध्ये मण्डपं दिव्यं

मणिस्तम्भविराजितम्। सान्द्रसिन्दूरपङ्केन समालिप्तं मनोहरम्। मुक्तामणिवितानाढ्यं पुष्पमालाविराजितम्। घण्टाध्वजपताकाभिरुज्ज्वलं सुमनोहरम्। इत्थं सञ्चिन्त्य तन्मध्ये सुरसङ्घैः सुपूजितम्। वसन्ताद्यृतुभिः षड्भिः सेवितं युगपत् सदा। मणिरत्नप्रवालाढ्यं फलप्रसवपल्लवैः। शोभितं सर्वफलदं महाकल्पतरुं स्मरेत्। तत्र कल्पतरोर्मूले नवरत्नैः समं महत्। सिंहासनञ्च तन्मध्ये लसत्षट्कोणकर्णिकम्। अम्भोरुहं लिपिरियं भावयेन्मन्त्रवित्तमः॥

भूतशुद्धिप्रकरणम्॥ अथातः सम्प्रवक्ष्यामि भूतशुद्धिं यथाविधि। ध्वजमूलगुदाधस्ताद् दक्षपादाङ्घ्रिपार्ष्णिना। ऋजुकायशिरोग्रीवः संयतेन्द्रियमानसः। अङ्कसंलग्नपाणिश्च नासाग्रन्यस्तलोचनः। पूर्णस्वदेहशुषिरमापादाङ्गुष्ठमस्तकम्। सञ्चिन्त्य व्यापिनीं शक्तिं शरीरान्तरवाह्यतः। साहङ्कारमनोजीवप्राणान् संयस्य पूर्वकान्। गुरूपदिष्टमार्गेण मूलाधारान्नयेत् सुधीः। उत्थाप्य कुण्डलीशक्तिमात्मानञ्च तया सह। एकीकृत्यास्त्रमन्त्रेण ग्रन्थिविद्रावणक्रमात्। हंसेन कुम्भकोद्घातपरानन्दोऽर्द्धमर्च्चयेत्। सौषुम्नमध्यमार्गेण जीवात्मानमनन्यधीः। उत्तमाङ्गात्तमानीय द्वादशान्तर्गते शिवे!। नियोज्य तत्त्ववर्णांश्च विलीनान् परिभाव्य च। नाभौ सविन्दुकं धूम्रं वह्निवीजं विचिन्त्य च। कलेवरञ्च हंसेन शोषयेच्चण्डवायुना। उद्घातपञ्चकेनाथ हृदयाम्बुसरोरुहे। षट्कोणे नरसिंहार्णज्वालामालासमाकुलम्। सञ्चिन्त्योपघनं मूल्यमकल्मषमनामयम्। तद्बीजज्वालया दग्ध्वा भस्मीभूतं विभाव्य च। तद्भस्मकूटमखिलं वह्निवीजोत्थवायुना। विकीर्य्य संयतः पश्चाद् द्वादशार्णे चिदम्बरे। शिवशक्तिसमुद्भूतैस्तत्त्वाद्यैः सृष्टिमार्गतः। कलेवरं

समुत्पाद्य तेजोरूपं महामयम्। चिच्चन्द्रवीजमध्यस्थं जलवीजमनुस्मरेत्। तदुद्भूतामृताम्भोधौ चिन्तयेद्बुद्बुदं महत्। ततो वुद्बुदमध्यस्थं ब्रह्माण्डं समनुस्मरेत्। तस्मिन् विश्वं ततो देवीं ध्यात्वा तद्धृदयाम्बुजे। सोऽहंधियात्मचैतन्यं समानीय चिदम्बरात्। ततः सुस्थिरमात्मानं भूवीजेन विचिन्तयेत्। स वाह्याभ्यन्तरं देहं संप्लाव्य सुधया पुनः। स्वस्थानमागतां शक्तिं भावयेन्मनसा सुधीः। एवं कृत्वा भूतशुद्धिं पुनर्न्यासं समाचरेत्॥

मातृकान्यासोऽपि तत्रैव॥ जपादौ सर्वमन्त्राणां विन्यासेन लिपेर्विना। कृतन्तु निष्फलं विद्यात् तस्मात् पूर्वां लिपिं न्यसेत्। षण्डवर्ज्यैर्विसर्गाद्यैराद्यैर्द्वादशभिः स्वरैः। पुटितैः कादिषड्वर्गैर्मन्त्री कुर्य्यात् षड़ङ्गकम्। केशान्ते मुखवृत्ते च चक्षुषोः श्रवणद्वये। नासागण्डौष्ठदन्तानां द्वन्द्वे मूर्द्धास्ययोः स्वरान्। वर्णान् पञ्च चवर्गाणां बाह्वोश्चरणसन्धिषु। पार्श्वयोः पृष्ठतो नाभौ हृदये च क्रमान्न्यसेत्। यादिवर्गान् धातुप्राणेष्वात्मकेनात्मनः क्रमात्। न्यस्यैवं मातृकां पश्चादित्येवं न्यासमाचरेत्। न्यस्यैवं मातृकां पश्चान्मूलमन्त्रेण पञ्चधा। स्थानेषु वक्ष्यमाणेषु विन्यसेत् प्रयतात्मवान्। मूर्द्धास्यहृद्गुह्यपादहृत्सु वीजानि षट् क्रमात्। विन्यस्य व्यापयेच्छिष्टान् मन्त्रार्णान् सर्वविग्रहे। शिरोललाटदृग्वक्त्रचूड़ाजिह्वासु विन्यसेत्। षड़्वीजानि मुखे शिष्टैर्मन्त्रार्णैः सर्वविग्रहे। शिरोभ्रूमध्ययोः श्रोत्रे नेत्रनासायुगेष्वपि। वक्त्रे करपदद्वन्द्वलसत्सन्धिचतुष्टये। कूर्परे हृदयाम्भोजे मन्त्रार्णैर्व्यापकं तनौ। शिरोवक्त्रहृदम्भोजगुह्यपत्स्वपि पञ्चकम्। मिथुनानां न्यसेत् स्वीयैः स्ववीजैर्नामभिः पृथक्। अखिलागमतत्त्वज्ञै रीशानशिवदेशिकैः। पञ्चमं मिथुनं प्रोक्तं षष्ठञ्च कमलात्मकम्। अथ मूल-

षड़ङ्गानि विन्यसेदुत्तमानतः। बीजषट्कैस्त्वागमाद्यैर्वङ्केर्जातिसमन्वितैः। अङ्गुष्ठादिकनिष्ठान्तमुत्पत्तिर्ब्रह्मचारिणाम्। मध्यादितर्जन्यवधि गृहस्थानां स्थितिर्भवेत्। अङ्गुष्ठान्तं कनिष्ठादि यतीनां संहृतिर्भवेत्। आश्रमानुगुणं मन्त्री करयोरुभयोरपि। अङ्गुलीषु च साग्रेषु तलयोरपि पृष्ठयोः। न्यस्य हृदादिमुद्राभिर्हृदयादिषु विन्यसेत्। तथा। मूर्द्ध्नि नेत्रे च जिह्वायां हृन्नाभिभिरजानुषु। विनायकादिविघ्नेशान् चरणाग्रे च विन्यसेत्। विनायको विरूपाक्षः क्रूरकर्मापराजितः। चण्डवेगो हयग्रीवः करालश्चण्डविक्रमः। तथा। सकण्ठांशेषु तेष्वेव विन्यसेत् साधकोत्तमः। विघ्नो विनायको वीरः शूरो वदन एव च। गजवक्त्रस्ततः पश्चादेकदन्तस्ततः परम्। लम्बोदरः चिप्रसंज्ञो महागणप एव च। ब्रह्माण्याद्यास्तथा मातॄरसिताङ्गादिभैरवान्। शक्तिबीजादिकांश्चाष्टौ निजस्थानेषु विन्यसेत्। भालदोःस्तनपार्श्वेषु जठरे दक्षपार्श्वके। दक्षकण्ठापरगले हृदयेषु यथाक्रमम्। एवं न्यासं विनिर्वर्त्त्य ध्यानं कुर्य्यात् समाहितः। सिद्धिलक्ष्मीसमाश्लिष्टपार्श्वमर्द्धेन्दुशेखरम्। आरक्तवर्णं मातुलुङ्गगदापुण्ड्रेक्षुकार्मुकम्। शूलं सुदर्शनं शङ्खं नीलोत्पलं धान्यमञ्जरीम्। निजदन्ता रत्नघण्टा परिन्द्रपाण्येकादशकम्। प्रभिन्नकटमानन्दपूर्णमशेषध्वंसकरं विघ्नेश्वरं दशभुजं ध्यायेदिति केचित्। अथ ध्यानं प्रवक्ष्यामि व्याप्तिसंसारदेहतः। क्ष्मापदं खतनुत्रये जठरं पवनाक्षरम्। रवीन्दुवह्निनयनं दशाशाश्रवणद्वयम्। प्रधानशीर्षं भूतेशं बुद्धीन्द्रियविचेष्टितम्। अनादिनिधनं दिव्यं तेजोराशिमनामयम्। ध्यायेद्देवं गणेशानं सच्चिदानन्दविग्रहम्। एवं व्याप्तिं समाख्याय साकारं ध्यानमुच्यते। अनाकुलमना मन्त्री भावयेदिक्षुसागरम्। तत्र मध्ये समासीनं गजवक्त्रं त्रिलोचनम्।

एकदन्तं दशभुजं कम्बुग्रीवं महोदरम्। पद्मस्थदत्तचरणलम्बि-मध्यपदाम्बुजम्। तरुणादित्यसङ्काशं पीताम्बरसमावृतम्। सन्ध्यारुणकपर्दान्तसौवर्णाभरणान्वितम्। शशाङ्कार्द्धकृतोत्तंसं नागयज्ञोपवीतिनम्। रत्नौघहारोल्लसितविशालवरवक्षसम्। मणिमुक्ताप्रवालाढ्यं कटिसूत्रपरिष्कृतम्। किङ्किणीमालया बद्धवामजङ्घाविराजितम्। दक्षाधो हस्तमारभ्य धारया लम्बमानया। गदाशूलवर्त्तिकद्रुविषाणान् दक्षिणैर्भुजैः। शाल्यग्रपाशचक्रेक्षुचयसंवीजपूरकान्। वीजपूरगदामिक्षुचापशूलसुदर्शनान्। अब्जपाशोपलव्रीहिविषाणानपरे विदुः। वामेऽङ्घ्रधरमञ्जीरविलसच्चरणाम्बुजम्। वामाङ्गसंस्थया शक्त्या सर्वालङ्कारयुक्तया। अम्भोजकरयाश्लिष्टं सर्वैश्वर्य्यसुखप्रदम्। लीलया रत्नकलसं पुष्कराग्रे निधाय च। परितः साधकं शश्वद्वर्षन्तं रत्नवर्षणैः। प्रोच्छलत्कर्णतालेन मदलोलुपषट्पदान्। निर्वासयन्तं सततं देवासुरनिषेवितम्। वीरनादोद्गतोद्गीतैः स्तोत्रैः सम्पूर्णमानसः। देवं महागणेशानं ध्यात्वा साधकपुङ्गव इति।

अस्य यन्त्रकरणमपि तत्रैव॥ कुसोदेनाम्बुकस्तूरीचन्द्रचन्दनकुङ्कुमैः। आलिख्य हेमसूच्या वा दूर्वाकाण्डेन वा लिखेत्। पद्मं संलिख्य मतिमान् समरेखं सुशोभनम्। स्थापयेत् कनके पीठे तदभावे विचक्षणः। श्रीपर्णीसम्भवे वाथ चतुरस्रे सुनिर्मिते। पूर्वं स्ववामेतरयोरिष्ट्वा गुरुगणेश्वरौ। तयोराज्ञां समासाद्य पीठपूजामुपक्रमेत्। आधारशक्तिं चानन्तं कूर्मवत् पृथिवीं क्रमात्। उपर्य्युपरि सम्पूज्य पश्चाद्दिक्ष्वन्तरादिभिः। सिंहासनन्तु मनुभिः पूजयेच्च यथाक्रमम्। आधारशक्तिरासीना शुक्लाभरणभूषिता। ध्यातव्या धवलप्रेक्ष्या लोकान् धत्ते शिवाज्ञया। तत्त्वैर्धरादिविद्यान्तैर्द्वात्रिंशत्संख्यकैरिह। पीठाकारे ह्यनन्तः स्यादनन्तासनमीरितम्॥ तथा। धर्मं ज्ञानञ्च

वैराग्यमैश्वर्य्यञ्च चतुष्टयम्। एतत् सिंहासनपदे चतुष्टयमिति कल्पसूत्रटीकाव्याख्यानम्। पीठाग्नेयादिपादेषु चतुर्ष्वपि यथाक्रमम्। अधर्म्मादिचतुष्कञ्च पूर्व्वाद्याशाचतुष्टये। धर्म्मं रक्तं वृषाकारं सिंहं ज्ञानञ्च मेचकम्। भूताकारन्तु वैराग्यमैश्वर्य्यं सितमैन्दवम्। ईशाः स्युः कनकमणिपीठे धर्म्मादयः क्रमात्। तथा। सत्त्वं रजस्तमश्चैव तत्पीठकमलोपरि। मायाञ्च शूलिकाकारां विद्यां प्रच्छदरूपिणीम्। उपर्य्युपरि सम्पूज्यमानन्दं लिपिपङ्कजम्। तन्मध्ये पूजयेन्मन्त्री तदूर्द्ध्वे मण्डलत्रयम्। दलेऽर्कमण्डलं पश्चात् केशरे सोममण्डलम्। कर्णिकायां ततः पश्चात् पूज्यं वह्नेश्च मण्डलम्। प्रणवावयववर्णाद्यैरर्च्चयेन्नामभिः क्रमात्। ब्रह्मविष्णवीश्वरा भाव्याः क्रमशो मण्डलत्रये। आत्मानमन्तरात्मानमुपर्य्युपरि पूजयेत्। पीठशक्तीः केशरेषु मध्ये प्रागादितः क्रमात्। पाशाङ्कुशकरा ध्येया नवकुङ्कुमसन्निभाः। तीव्राद्याः पूजनीयाः स्युः शक्तयो मणिभूषणाः। तीव्रा च ज्वालिनी नन्दा भोगदा कामवर्द्धिनी। उग्रतेजोवती सत्या नवमी विघ्ननाशिनी। सर्व्वशक्तिपदं चोक्त्वा कमलापदमुच्चरेत्। सनायेति नमोऽभ्यर्च्य गन्धपुष्पाक्षतैः शुभैः। समाप्तिपीठं तन्मध्ये मन्त्री पूर्व्ववयं क्षिपेत्। ततः पूरकयोगेण मूलं संयोज्य मानसम्। तत्रस्थजीवचैतन्यमुन्नीय हृदयाम्बुजे। पूर्व्वोक्तविधिनोपेतमिच्छया श्रीगणेश्वरम्। सर्व्वोपचारैराराध्य प्रसन्नं पुरुषं पुनः। स्वतेजोरूपतां नीत्वा तत्तेजः संयतेन्द्रियः। मन्त्रकाण्डं समुन्नीय तत्र पाण्डरपङ्कजे। तेजस्तत्त्वं सुसञ्चिन्त्य मन्त्री निश्चलमानसः। कोदण्डस्थानमानीय पुष्पपूर्णकराम्बुजौ। निःसार्य्य प्रवह्नाद्या पूजिते पीठपङ्कजे। मध्ये मूर्त्तिञ्च गायत्र्या विद्यादेहं तदन्तरे। वीजेन परचैतन्यतन्मूर्त्तिं हृदयाम्बुजे। महागणपतीत्युक्त्वा मूर्त्तये नम इत्यर्थः। गणेशमावाहयामि विद्या-

देहञ्च मूलतः। तथैव परचैतन्यं मन्त्रज्ञः साधकोत्तमः। श्रीदेशिकोक्तमार्गेण सम्यगावाहयेत् सुधीः। तत्त्ववर्णांश्च सन्मूर्त्तौ विद्यादेहे ततः परम्। न्यासं सर्वं प्रविन्यस्य प्राग्वद्ध्यात्वा समर्चयेत्। तत्र चैतन्यमापाद्य पञ्च मुद्राः प्रदर्शयेत्॥ तद्यथा॥ स्थापनं सन्निधानञ्च सन्निरोधावगुण्ठने। अमृतीकरणं प्रश्चादेता मुद्राः प्रकीर्त्तिताः। सर्वज्ञता च हृदये ततस्तृप्तिः शिवे पुनः। अनादिबोधश्च शिखा शस्त्रं चानन्तशक्तितः। एतैर्जातियुतैरङ्गैरुपदेशविधानतः। हृदयादिषु विन्यस्य मूलेन व्यापकं न्यसेत्। गणेशमुद्राः सन्दर्श्य परिपूर्णं गणेश्वरम्। ध्यात्वा पुष्पाञ्जलिं कुर्वन् विज्ञाप्य स्वागतं पुनः। पाद्यादीनुपचारांश्च मन्त्री सम्यक् समाचरेत्। आसनं स्वागतञ्चार्घ्यं प्राद्यमाचमनीयकम्। मधुपर्काचमनस्नानवसनाभरणान्यपि। सुगन्धिसुमनोधूपदीपनैवेद्यवन्दनम्। प्रयोजयेद् गणेशाय उपचारांस्तु षोड़श। पाद्यादयो नैवेद्यान्ता उपचारा दश क्रमात्। गन्धादयो नैवेद्यान्ता पूजा पञ्चोपचारिका। सपर्य्या त्रिविधा प्रोक्ता तासामेकां समाचरेत्। गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपाः। दूर्वा चेति क्रमादर्घ्यं द्रव्याष्टकमुदीरितम्। पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्ताभिरुच्यते। जातीलवङ्गकक्कोलैर्युतमाचमनीयकम्। मधुपर्कञ्च सक्षौद्रं घृतं दधि समीरितम्। शुद्धाभिरद्भिर्विहितं पुनराचमनीयकम्। चन्दनागुरुकर्पूरकाश्मीरकपिरोचना। जटामांसी च चोरञ्च एतद् गन्धाष्टकं स्मृतम्। चन्दनागुरुकर्पूरपङ्कैर्गन्ध इहोच्यते। करवीरोत्पलद्वन्द्वविजयाकुसुमानि च। पुन्नागनागचम्पानि कुन्दमन्दारकाणि च। बन्धुजीवजवानुश्रीरमानिम्बकुरण्टकैः। पाटलाशोकमदनजातिकुब्जापराजितैः। नन्द्यावर्त्तादिपूर्वाणि ह्यद्यान्यन्यानि यानि च। आगमोक्तानि पुष्पाणि गणेशस्य प्रियाणि च। मुकुलैः परितो म्लाने जीर्णैर्वा क्लि-

मिदूषितैः। आघ्रातैरङ्गसंस्पृष्टैर्न च पर्य्युषितैरपि। सद्गुग्गुल्ल-गुरूशीरसिताज्यमधुचन्दनैः। सारान्ङ्गारविनिक्षिप्तैर्मन्त्री नीचैः प्रधूपयेत्। गोसर्पिस्तिलतैलेन वर्त्त्या कर्पूरगर्भया। दीपितं सुरभिं शुद्धं दीपमुच्चैः प्रदर्शयेत्। असितेन सुगन्धेन ससर्पिषा सितौदनम्। समकदलमध्वाज्यदुग्धादीनि निवेदयेत्। ततो देवस्य विज्ञाप्य स्नानं नम इतीरयेत्। केशप्रसाधनाभ्यङ्गोद्वर्त्त-नोष्णोदकानि च। महागणपते! पाद्यं नम इत्येव पादयोः। तद्वदाचमनीयञ्च स्वधेति त्रिर्मुखे ददेत्। अर्घ्यं स्वाहेति शिरसि मधुपर्कं स्वधा तथा। पुनराचमनं पुष्पं मौलौ परिशिखाणुना। पञ्चगव्यं तथा षष्ठं गन्धोद्वर्त्तनमेव च। सुगन्धामलकीगन्ध-स्तीर्थोदकमनन्तरम्। दिव्यगन्धानुलेपञ्च मूलमन्त्राभिमन्त्रितैः। सुगन्धलोहितैस्तीर्थतोयैरप्यभिषेचनम्। आदर्शदर्शनं चान्य-मङ्गलाचरणानि च। दिव्यांशुके ततः पश्चान्मुकुटानि च कल्पयेत्। सम्बोध्य मुखमाकल्प्य कल्पयामीत्युदीरयेत्। सङ्कल्प्य पूर्व-वन्मन्त्री पाद्यादित्रिकमाचरेत्। सगन्धाक्षतपुष्पाणि धूपञ्च स्वस्वमुद्रया। हृदयादिकवचान्तैस्तु मनुभिः क्रमशोऽर्च्चयेत्। कृत्वा लयञ्च पूजाञ्च मन्त्रस्याक्षरसंख्यया। जप्त्वावरणपूजान्तं देवं विज्ञाप्य तत् पुनः। अङ्गानीष्ट्वा ततो मन्त्री वाह्यावरण-मर्च्चयेत्। लोकपालास्ततः पूज्याः समस्तचतुरस्रकैः। पुरुहूते-शयोर्मध्ये रक्षोवरुणयोस्तथा। ब्रह्मविष्णुशिवादीनि सदा शय्या विधोर्मुखे। पुरन्दरादिलोकेशाः सजात्यधिगहेतवः। सवाहपरिवारान्ताः प्रयोक्तव्या मनीषिभिः। गुर्वाद्या लोक-पालान्ता ये मन्त्रास्ते ध्रुवादिकाः। स्वस्ववीजान्विताः सर्वे सचतुर्थीनमोऽन्तिकाः। एवमावरणं पूज्य प्रसूनैः कुन्द-सम्भवैः। पुनर्देवस्य मूलेन सम्यग्गन्धादिभिर्यजेत्। जयध्वनि! ततो मन्त्रमातः! स्वाहेत्युदीर्य्य च। अभ्यर्च्य वादयन् घण्टां

महापद्ममहार्णवैः। वमस्मृतीति मन्त्रेण स्वाहान्तेन स्वमुद्रया। सुप्रकाशेति मन्त्रेण नमोऽन्तेन स्वमुद्रया। स सर्वान्नमृतीकृत्य गणेशमनुपूर्वकम्। सनैवेद्यं गृहाणान्ते स्वाहेत्युक्त्वा स्वमुद्रया। मुद्रयोदकदानेन मन्त्री सर्वं निवेदयेत्। देवं सपरिवारञ्च परितृप्तं विभाव्य च। तथा। अथ नित्यविधिं कुर्वन् पुरश्चर्यां समाचरेत्। गुरुणा दीक्षितो मन्त्री पूर्ववच्च सुसंयुतः। चतुर्लक्षञ्च सचतुश्चत्वारिंशत्सहस्रकम्। मनुमेनं जपेत् प्राज्ञः पुरश्चरणसिद्धये। मौलिमिश्रलकण्ठौष्ठजिह्वादृगच्चयन्वितः। नासातालुगलज्जिह्वास्कक्षणीनां समालिहन्। किञ्चिदुन्नतकग्रीवः किञ्चित्सङ्कोचितेक्षणः। नासाग्रदत्तदृष्टिः सन् दन्तैर्दन्तान्न संस्पृशेत्। तच्चित्तस्तद्गतप्राणस्तन्निष्ठस्तत्परायणः। वाचिकेनोपांशुना च मानसेनाथवा सुधीः। चतुःसहस्रं सचतुश्चत्वारिंशत्तमं यथा। अष्टोत्तरसहस्रं वा हविष्याशी जितेन्द्रियः। यत्संख्यया समारब्धं तन्मानं पूर्णतां नयेत्। यदि न्यूनाधिकं कुर्य्याद्व्रतभ्रष्टो भवेन्नरः। तस्मात्समं जपेत्तावद् यावत् संख्या समाप्यते। दशांशं तर्पणं कुर्य्यात् साधकेन्द्रोऽनुशासनम्। इत्थं जपे तु सम्पूर्णे होमं कुर्य्याद्दशांशतः। पूर्वोक्तैस्तर्पणाद्यैश्च सह भक्तिपरायणः। वक्ष्यमाणक्रमेणैव कर्म्मानुगुणसंख्यकान्। साङ्गाय भोजयेदङ्गान् ब्राह्मणान् हृष्टमानसान्। गुरवे दक्षिणां दद्याद् यथावित्तानुसारतः। सम्प्राप्तगुरुकारुण्यः पश्चान्मन्त्रविदां वरः। प्रजपेच्चतुरावृत्त्या यद्वा नित्यं स्वशक्तितः। कुर्य्याद्यथावत् पूजादि होमेनातिप्रयत्नतः। वित्तशाठ्यं विना नित्यं मन्त्री विघ्नेश्वरं भजन्। निर्विघ्नं वत्सरादर्वाक् महतीं श्रियमश्नुते। यद्यग्निकार्य्यसम्पत्तिर्बलेः पूर्वं विधानतः। विधिना संस्कृते वह्नौ कुर्य्यात् पूर्वक्रमेण च। पर्य्यन्तेषु हुत्वा मन्त्रासनवानय त्रिवारं सन्त-

र्य्येति। योग्यैरिति तत्तन्मन्त्रानुष्ठानपरैः। प्रयोगा अपि तत्रैव। इत्थं सिद्धमनुर्मन्त्री काम्यकर्म्माणि साधयेत्। वच्म्यामि काम्य-कर्म्माणि साधकानां हिताय वै। शास्त्रोक्तेव मार्गेण संक्षेपात् न तु विस्तरात्। स्वहृत्पद्मे गणेशानं कुन्देन्दुधवलप्रभम्। शुक्लालङ्कारसम्पन्नं भावयेद् यो निरन्तरम्। भारती तस्य वक्त्राब्जे शास्त्रौघोद्गारसुन्दरी। नित्यं प्रकाशते सत्यं दिव्य-ज्ञानप्रदायिनी। न निरस्येद्गणेशानं सिन्दूरसदृशप्रभम्। पाशाङ्कुशधरं ध्यात्वा यो जपेन्मन्त्रिसत्तमः। अनङ्गरससम्पन्ना तमभ्येति वराङ्गना। पाशाङ्कुशवराभीतं हिमकुन्देन्दुसन्नि-भम्। अनवद्यमहीनाभं स्फुरन्माणिक्यमण्डनम्। यः स्मरेत्तस्य वशगा भवन्त्यपि वराङ्गनाः। विवादेषु गणेशानं ज्वलदग्नि-समप्रभम्। प्रतिवादिमुखे ध्यायन् प्रजपेन्मनसा मनुम्। तन्मुखं स्तम्भयेदाशु वादी दीनोऽपि नान्यथा। अङ्गुष्ठमानं हृत्पद्मे शुद्धस्फटिकसन्निभम्। चिन्तयित्वा गणेशानं चिदम्बरसुधा-रसम्। अभिषिच्य सुरश्रेष्ठं सततं धरणीतले। सर्व्वरोगविनिर्मु-क्तश्चिरकालं स जीवति। शुक्लवर्णं गणेशानं दशबाहुमदोत्कटम्। शुक्लाम्बरधरं सौम्यं चिच्छ्रगाङ्गामृतप्लुतम्। भावयेद्धृदयाम्भोजे नित्यं निर्म्मलमानसः। मन्त्री गरुड़वत् सद्यस्त्रिविधं हरते विषम्। स्वर्णार्थी मधुना नित्यं वश्यार्थी पायसैर्हुनेत्। घृतेन लक्ष्मीसम्प्राप्त्यै हुनेत् शर्करया तथा। आयुषे चार्थसम्पत्त्यै दध्ना च जुहुयात् सुधीः। अन्नेन चान्नसम्पत्तेः द्रव्याप्त्यै तिलतण्डुलैः। लवणैरप्यनावृष्ट्यै वृष्टिकामस्तु वेतसैः। सौभाग्यार्थी तथा लाजैः कुसुम्भैश्चापि सूदनैः। वशिने जुहुयात्पद्मैराजानं वशमानयेत्। तत्पत्नी विपुलैर्व्यक्तैरमाद्यन् कैरवैः शुभैः। अश्वत्थोडुम्बरप्लक्षन्यग्रो-धजसमिद्धुतात्। विप्रक्षत्रियविट्शूद्राः सद्यो वश्या भवन्ति

वै। स्त्रीणां प्रतिकृतिं कृत्वा पिष्टेन प्रतिवासरम्। साज्या-हुत्या स्त्रियस्तस्य वशमायान्ति नान्यथा। जपित्वा तु मन्त्रराजं लयो विधिमनोहरम्। दशांशं जुहुयान्मन्त्री राजिकालवणेन च। तद्भस्म वामहस्तेन गृहीत्वा ताड़येत् स्त्रियम्। समागच्छति सा नारी मदनालमितेक्षणा। तद्वच्च प्रयजेदेनं पीतपुष्पैश्च मन्त्रवित्। स्तम्भयेद्रिपुसैन्यञ्च सामात्यबलवाहनम्। प्रतिवादी भवेन्मूको मन्त्रस्यास्य प्रभावतः। स्तम्भयेत् पञ्च दिव्यानि नात्र कार्य्या विचारणा। विभीतकसमिद्भिस्तु नियतं जुहुयात् सुधीः। सम्यगुच्चाटयेत् शत्रून् स्वस्थानात्तु न संशयः। मेरुमन्दरतुल्योऽसावुच्चाटयति नान्यथा। ग्रामे युद्धे पुरे वापि इमं स्तुत्वा तु होमयेत्। उच्चाटयति वेगेन मानुषेषु च का कथा। निम्बपत्रे समालिख्य रिपोर्नाम प्रयत्नतः। गोऽश्वमाहिषरक्तेन निम्बतैलेन संयुतम्। एकान्ते च कृते होमे विंशत्साहस्रसंख्यया। द्विष्टो भवति लोकेषु स साक्षान्मन्मथो यदि। मानुषास्थिमयं कीलं सम्यगष्टाङ्गुलं मितम्। मृतकेशैस्तु संवेष्ट्य सहस्राष्टाभिमन्त्रितम्। कुलिकोदयवेलायां शत्रुद्वारे खनेद्भुवि। सप्ताहान्मरणं तस्य भावयेन्नात्र संशयः।

अथ वक्ष्यामि संक्षेपात् कुमार्य्या वेशनक्रमम्। सुगुप्ते विजने देशे गोमयेनोपलेपयेत्। आचार्य्यः प्रयतो भूत्वा सुस्नातो विजितेन्द्रियः। नवकुम्भं समादाय शुद्धकुम्भेन पूरयेत्। नवं शरावमानीय कपिलाघृतपूरितम्। कुम्भोपरि समारोप्य दीपं प्रज्वालयेत्ततः। शताष्टमन्त्रजापेन कुमारा वा कुमारिकाः॥ अतीतानागतञ्चैव वर्त्तमानञ्च यद्भवेत्। शुभाशुभानि सर्वाणि पश्यन्ति नात्र संशयः। सम्यग्ध्यात्वा गणेशानं गते यामे जपेन्निशि। शुभाशुभानि कर्म्माणि कथयन्ति न संशयः। कन्यकार्थी शुचिर्भूत्वा मन्त्रराजं गणेशितुः। जप्त्वा दशसहस्राणि

जातसरक्ताश्वमारजैः । पुष्पैर्दशांशहवनात्तां कन्यां लभते ध्रु-
वम् ।

वक्ष्यामि भूमिपालानां गजसम्पादनक्रमम् । मातङ्गाब्धि-
महीपालः कारयेत्तद्वनान्तरे । अवटं विपुलं ध्यात्वा तत-
स्तन्निकटे गुरुः । पूर्वोक्तलक्षणयुते मण्डपे सुमनोहरे । वेदि-
कोत्तरतः कुण्डं वेदास्रं कारयेच्छुभम् । वेदिकोर्द्ध्वे गणेशान-
मावाह्यात्यन्तमन्त्रवित् । सुपक्वफलतोयैश्च सिद्धान्नञ्च निवेद-
येत् । तस्मा मया ततो मन्त्री वह्निमाधाय पूर्ववत् । अष्ट-
द्रव्यैस्त्रिमध्वक्तैश्चत्वारिंशत्सहस्रकैः । चतुःसहस्रैः सचतुश्चत्वा-
रिंशच्चतुःशतम् । पृथग्द्रव्यं यथासंख्यं जुहुयात् पञ्चवासरम् ।
द्विजोत्तमैरनुजपं कारयेत्तन्त्रमन्त्रवित् । गणेश्वरप्रसादेन च-
त्वारिंशद्दिनान्तरे । पतन्ति कनकाभास्ते कलभीता महावटे ।
ब्राह्मणान् भोजयेन्नित्यं स्वादूक्तभोज्यवस्तुभिः । तद्ब्राह्मण-
कृताशीर्भिर्वर्द्धतेऽसौ महीपतिः । तेषाञ्च गुरवे दद्याद्गजपञ्चा-
शद्दक्षिणाम् । तत्प्रमाणाद्दशांशं वा तद्विक्रीतधनानि वा ।
मिथुनादिदिगीशान्तैर्मन्त्रैराज्येन देशिकः । स्नात्वा देवं
समभ्यर्च्य होमं सम्यक् समापयेत् । पुनर्निवेद्य मुहूर्त्तांशेषं
पूर्ववदाचरेत् । पुनः पुष्पाञ्जलिं दत्त्वा मन्त्री स्वहृदयाम्बुजे ।
गणेश्वरं समुद्वास्य वह्निमुद्वासयेद्गुरुः । होमोपकरणं सर्वं
गुरवे शुद्धचेतसा । समर्पयित्वा भूपालो भूयोभूयः प्रणम्य च ।
अन्यैराभरणाद्यैश्च पट्टवस्त्रादिभिः शुभैः । गुरुं सन्तोषयेत् स-
म्यग् गजानामतिवृद्धये । अयं राजन्यवर्गैश्च राष्ट्रेण सह वर्द्धते ॥

अथातः सम्प्रवक्ष्यामि महालक्ष्म्यादिसाधनम् । मनोज्ञे
विजने देशे सर्वबाधाविवर्जिते । शुक्लवस्त्रपरीधानः शुक्लमा-
ल्यानुलेपनः । कृतनित्यक्रियो मन्त्री वह्निमाधाय पूर्ववत् ।
पुण्डरीकैस्त्रिमध्वक्तैरुत्पलं पद्म पद्मधा । श्रीफलैर्वद्दलश्च

मध्वाज्यक्षीरसंयुतैः। शुक्लप्रतिपदि प्रातर्हुनेदेकाग्रमानसः। अक्षयां महतीं लक्ष्मीं सम्प्राप्नोति न संशयः। उक्तप्रतिपदमारभ्य मातृन्यासमुपास्य च। चतुर्थ्यां श्रीगणेशस्य महापूजां विधाय च। पूर्वद्रव्यैस्त्रिमध्वक्तैः शुक्लपक्षस्य पक्षती। पक्षती प्रतिपदि। अष्टोत्तरञ्च लक्षञ्च यावत्कालेन पूर्य्यते। तावत्कालं हुनेदेवं साधकश्च प्रसन्नधीः। होमावसाने लक्ष्मीं स्वां निधिं पश्यति स ध्रुवम्। आदित्याभिमुखस्तिष्ठन्नूर्द्ध्वबाहुर्वहिर्मुखः। लक्षजापादसौ मन्त्री महाधनमवाप्नुयात्। क्षीराज्येन स दूर्वाभिः सहितञ्च दिने दिने। स्वजन्मदिवसे वापि प्रातःकाले हुनेन्नरः। अरोगी जितमृत्युश्च दीर्घायुर्भुवि जीवति। ग्रहणे काले विशुद्धात्मा पूर्णे चन्द्रे च पर्वणि। कापिलं गोमयं शुद्धं पद्मपत्रेण च स्थले। मन्त्रेणायुतसञ्जप्तं गृहीत्वा निखनेद्भुवि। भयं न विद्यते तत्र भूतचौरादिपन्नगैः। पूर्वं महागणेशानं प्रत्यहं जुहुयात् सुधीः। वेतालसिद्धकुलिकान् कुण्डमध्यात् समुद्धृतान्। साधकेन्द्रो महाभागान् सर्वदा लभते भुवि। एवं सिद्धाञ्जनं खड्गः पादुकादिश्च दुर्लभः। कदाचित् साधकेन्द्रस्य नास्त्यस्य भुवनत्रये॥

अथातः सम्प्रवक्ष्यामि यन्त्रराजं गणेशितुः। सुसमे भूतले शुद्धे गन्धाद्यैः सुपरिष्कृते। कामक्रोधविनिर्मुक्तः पूर्ववन्न्याससंयुतः। सम्पूज्य देवदेवेशं गणेशं शङ्करात्मजम्। भूर्ज्जेऽथवेमे तत्परैर्मन्त्रराजं समुद्धरेत्। कस्तूरी रोचना चन्द्रः काश्मीरं चन्दनं रसः। गोशक्लद्रससंयुतैर्मातङ्गमदमिश्रितैः। सर्वैश्च सुसमैरेभिः प्राणमापूर्य्य संलिखेत्। लेखन्या हेमसूच्या वा जातीकाष्ठेन दूर्वया। षट्त्रिंशत्कोणमष्टारं द्वादशारं ततः परम्। कवर्गादीनि गायत्र्या वर्णान्यपि लिखेद्बहिः। महाभूमण्डलं कुर्य्याद्गजाष्टकविभूषितम्। तद्बाह्ये

वारुणं कूर्म्ममण्डलं ननताशुभम्। कर्णिकायां लिखेन्मन्त्री हचौ प्रणववेष्टितौ। अङ्गानि च षट्कोणेषु लच्मीमनुं दले लिखेत्। द्वादशारे लिखेच्छक्तिं विना नपुंसकस्वरम्। स्वरवर्गं कलापत्रे ततश्चाष्टदलाम्बुजे। कादिमान्ताचरञ्चापि सर्वं पूर्व्वादितो लिखेत्। पुनः पार्श्वककोणेषु वा समार्णं समालिखेत्। एतद्यन्त्रं समाख्यातं न देयं यस्य कस्यचित्। शिवेन कथितं पूर्वं सर्वविघ्नोपशान्तये। त्रिलोहवेष्टितं कृत्वा प्राणस्थापनकर्म्म च। मन्त्रेणाप्यमृतं जप्तं यन्त्रं यो धारयेन्नरः। तस्य विघ्नाश्च रोगाश्च सर्वे नश्यन्त्युपद्रवाः। राजानो वशमायान्ति संक्षुभ्यन्ते परस्त्रियः। सिंहादिदुष्टसत्त्वाश्च चौराहिमदहस्तिनः। द्विजादिसर्ववर्णाश्च बलवन्तोऽपि शत्रवः। तस्य दर्शनमात्रेण वशमायान्ति ते सदा। ततः प्रवर्त्तते वाणी संस्कृतप्राकृतादिका। छत्रचामरकोटीरमालायष्ट्यादिसङ्कुला। स्वयमेव महालक्ष्मीर्बलेन सेवते चिरम्। वर्णितुं यन्त्रवर्गस्य प्रभावं नैव शक्यते। अनेन मनुनाऽसाध्यं नास्ति तद्भूतलेष्वपि॥

आकर्षणं प्रवक्ष्यामि यन्त्रेणानेन योज्यताम्। पूर्वं यन्त्रं समालिख्य रक्तद्रव्यैः सुशोभनैः। अनामारक्तसंमिश्रैः साध्यनाम च संलिखेत्। रक्तैः पुष्पैः समभ्यर्च्च्य रक्तचन्दनमिश्रितैः। मधूच्छिष्टप्रतिकृतेः कुक्षौ यन्त्रं निधाय च। समीरणं प्रतिष्ठाप्य यथावन्मन्त्रवित्तमः। कपिलाघृतदीपेन, चतुष्कोणं प्रतापयेत्। यावत् स न विलीयेत तथैव दिवसत्रयम्। सप्ताहाद्दिवसे नारी यदि साक्षात्तिलोत्तमा। जपन्नष्टशतं मन्त्रं तापयित्वा तु धारयेत्। तस्यैवा प्राणपर्य्यन्तं वशे तिष्ठति दासवत्। शिलापट्टे लिखेद् यन्त्रं पीतद्रव्यैः समाहितः। अर्कपत्रेषु संस्थाप्य पीतपुष्पैः समर्च्च्य च। संवेष्ट्य पीतवस्त्रेण स्तम्भयेदायुधान्यपि।

न दानवग्रहांश्चौरान् सेनां संस्तम्भयेदपि। आनीय जीवयो-रक्तमकारणविरोधिनोः। गणकः स्यादृषिश्छन्दो नीवृद्विघ्नोऽस्य देवता॥ गकारो वीजं विन्दुः शक्तिः॥ गणेशगायत्री। एक-दंष्ट्राय विद्महे वक्रतुण्डाय धीमहि तन्नो विघ्नः प्रचोदयात्। श्मशानाङ्गारसंयुक्तं कृत्वा तेन चितापुटे। काकपक्षेण संलिख्य साध्याख्यां कर्म्मसंयुताम्। एकलिङ्गध्वजे क्षिप्तं यन्त्रमुच्चाटयेद् ध्रुवम्। लोकाद्विद्वेषणञ्चापि कुरुते नात्र संशयः। श्मशान-कर्पटे यन्त्रं मानुषास्थिशलाकया। विषवृक्षोद्भवेनापि चिता-ङ्गारेण कर्म्मवित्। क्रोधो भूत्वा समालिख्य श्मशाने निखने-द्भुवि। सप्ताहात् म्रियते शत्रुर्नात्र कार्य्या विचारणा। एतदुद्धृत्य दुग्धेन क्षालितं सेवितं व्रती। सर्वार्थसाधनं चान्यद्ध्यानं वक्ष्ये गणेशितुः। नवजीमूतसङ्काशं भिन्नाञ्जनसमप्रभम्। अष्टादश-भुजं देवं मेरुमन्दरसन्निभम्। भीममुखं विरूपाक्षं मेघघोष-समध्वनिम्। रक्ताम्बरपरीधानं नागयज्ञोपवीतिनम्। नाना-रत्नसमुद्दीप्तं कोटीराभरणोज्ज्वलम्। शक्तिञ्च परशुं शक्त्या धृततोमरतर्जनम्। दन्तपद्मगतं पाशमङ्कुशञ्चेक्षुकार्म्मुकम्। स्वपुष्पवाणशाल्यग्रं पात्रं मोदकपूरितम्। कुण्डिकामक्ष-मालाञ्च साभयं वरदं शुभैः। स्वपुष्करेण कलसं दधानं द्विर-दाननम्। पद्मासनस्थं देवेशं सर्वदेवैर्नमस्कृतम्। इत्थं सञ्चिन्त-येन्मन्त्री सर्वोपद्रवशान्तये। वश्याकृष्टिविधौ रक्तं पीतं स्तम्भन-कर्मणि। धूम्राभं द्वेषणोच्चाटे कृष्णाभं मारणे रिपोः। स्वर्णाभं धनदं विद्याच्छुक्लं ज्ञानप्रदं भवेत्। इत्येवं चिन्तयेत् प्राज्ञ-स्तत्तत्कर्म्मसमाप्तये॥

शारदातिलके त्रयोदशपटले॥ पद्मान्तकं शशिधरं वीजं गणपतेर्विदुः। पद्मान्तको गकारः। शशी विन्दुस्तद्युक्तम्। अथवा शशी विसर्गः। शक्तिर्निशाकर इत्युक्तेः। गोपनायैवमु-

सार:। इदं द्वयमुत्तरगार्ग्योक्तं पूजाप्रयोगादिकमुभयोः समा-
नमिति राघवभट्टः। केचिदौकारयुक्तमाहुः। उक्तञ्च प्रयोग-
सारे। वीजमिन्दुमदौ युक्तं कल्पतीयं तथैव च। इति। षड्दीर्घ-
भाजा वीजेन षड़ङ्गानि प्रकल्पयेत्। सिन्दूराभं त्रिनेत्रं पृथुतर-
जठरं हस्तपद्मैर्दधानं दन्तं पाशाङ्कुशेष्टान्युरुकरविलसद्वीज-
पूराभिरामम्। अर्द्धेन्दुद्योतमौलिं करिवरवदनं वीजपूरार्द्रगण्डं
भोगीन्द्रावद्धभूषं भजत गणपतिं रक्तवस्त्राङ्गरागम्॥ राघवभट्टस्तु
ध्यानानन्तरं दर्शनीयमुद्रामाह यथा। मुखात् प्रलम्बितं हस्तं
कृत्वा सङ्कुचिताङ्गुलिम्। मध्यमातर्जनीगताङ्गुष्ठं वाऽधस्तु
मध्यमम्। कुर्य्यान्मुद्रा गणेशस्य प्रोक्तेयं सर्वसिद्धिदा। यद्वा।
तर्जनीमध्यमासन्धिनिर्गताङ्गुष्ठमुष्टिका। अधोमुखी दीर्घरूपा
मध्यमा विघ्नमुद्रिका॥ इति। यद्वा। कुञ्चिताग्रस्य हस्तस्य
मूले नासानियोगतः। गणेश्वरी भवेन्मुद्रा सर्वसिद्धिप्रदायिनी।
इति। इयं सर्वगणपतिमन्त्रसाधारणीति। शारदायाम्॥ वेद-
लक्षं जपेन्मन्त्रं दशांशं जुहुयात्ततः। मोदकैः पृथुकालाजैः
शक्तुभिश्चेक्षुपर्वभिः। नारिकेलैस्तिलैः शुद्धैः सुपक्वैः कदली-
फलैः। अष्ट द्रव्याणि विघ्नस्य कथितानि मनीषिभिः॥ अत्रार्द्ध-
मर्दनयुतमेकैकेन द्रव्येण होतव्यमिति राघवभट्टः। केचित्तु
अष्टद्रव्यमिलनेन होममाहुः। तत्तदाहुतिप्रमाणसन्देहापातात्
मूले च प्रत्येकं पृथक् क्रियाद्वयाच्च विशिष्टस्य द्रव्यान्तरत्वे-
नाष्टद्रव्यहोमकरणासम्भवाच्च। तदुक्तं भट्टाचार्य्यैः। नैव व्रीहि-
भिरिष्टं स्याद् द्रव्यैर्न च यथाश्रुतैः। मिश्रैरिज्येत चेत्तदा मि-
श्राणां विध्यदर्शनादिति। नत्वेवं त्रिमधुरहोमे त्रिमधुयुक्तमपि
न कार्य्यमिति चेन्नैवम्। सर्वं त्रिमधुरोपेतं होमद्रव्यमुदाहृत-
मिति वचनात्। मिलनस्य पशुपुरोडाशाद्यवदानानामप्रस्ताव-
प्रत्युपसारान्यमिलनवदविरोधात्। तदुक्तं गणेशविमर्षिण्याम्।

भष्टद्रव्यैस्त्रिमध्वक्तैर्जुहुयाच्च पृथक् पृथगिति मुद्रैरित्यनेनावकरं दूरीकृत्य प्रचाल्य शोधितैरित्युक्तम्। शारदायाम्। तीव्रादि-शक्तियुक्ते च पीठे विघ्नेश्वरं यजेत्। तीव्राख्या ज्वालिनी मन्दा भोगदा कामरूपिणी। उग्रा तेजोवती सत्या नवमी विघ्न-नाशिनी॥ आसां ध्यानं राघवभट्टे। पाशाङ्कुशाञ्जलिकरा नवकुङ्कुमसन्निभाः। तीव्राद्याः पूजनीयाः स्युः शक्तयो मणि-भूषणाः। शारदायाम्। सर्वादिशक्तिकमलासनाय हृदयावधि। पीठमन्त्रोऽयमेतेन प्रदद्यादासनं विभोः। मूर्त्तिं मूलेन सङ्कल्प्य तस्यां विघ्नेशमर्च्चयेत्। कर्णिकायां चतुर्दिक्षु प्रथमं पूजयेदिमान्। यथाक्रमं ततोऽभ्यर्च्चेत् केशरेष्वङ्गदेवताः। पत्र-मध्ये तु विधिवद्वक्रतुण्डादिकान् यजेत्। विधिवदिति गण-पतिवीजवदिति राघवभट्टः। वक्रतुण्डमेकदंष्ट्रं महादेवगजा-ननौ। लम्बोदराख्यं विकटं विघ्नराजमनन्तरम्। धूम्रवर्णं दलाग्रेषु ब्राह्म्याद्याः पूजयेत्ततः। लोकपालांस्तदस्त्राणि देव-मित्थं समर्च्चयेत्। सिद्धमन्त्रः प्रकुर्वीत प्रयोगान् कल्पचोदि-तान्। नारिकेलैः कृतो होमश्चतुर्थ्यां श्रीप्रदो भवेत्। शुक्लपक्ष-प्रतिपदमारभ्य विमलः सुधीः। चतुर्थ्यन्तं नारिकेलशक्तुलाज-तिलैः क्रमात्। चतुःशतं प्रजुहुयाद्दश्याः स्युः सर्वजन्तवः। वश्यकर्म्मादौ तु विशेषः। प्रयोगसारनारायणीययोः। साध्यं पाशाङ्कुशाभ्यामिह विधिवदुपानीय तस्योपरिस्थो वश्याकाङ्क्षी जपेत्तं सपदि विधिरयं हन्ति रुष्टस्य रोषमिति। सतिलैस्तण्डु-लैर्होमो लक्ष्मीवश्यप्रदो भवेत्। अत्रापि शुक्लप्रतिपदमारभ्य चतुर्थ्यन्तं चतुःशतं होमः। लाजैस्त्रिमधुरोपेतैर्होमः कन्यां प्रयच्छति। अत्र प्रतिपदमारभ्य सप्तमीपर्य्यन्तं चतुःशतं होमः। तथा च राघवभट्टधृतं मधुरत्रयसिक्ताभिर्लाजाभिः सप्त वासरा-निति। अनेन विधिना कन्यावरमाप्नोति वाञ्छितम्। आज्या-

ल्कहविषा होमः साधयेदोप्सितं नृणाम् । दध्ना विलोड़ितै-र्लोलैर्होमो मुनिचतुर्दिनम् । प्रतिपदमारभ्य चतुर्थीपर्य्यन्तम् । सम्प्रीतिं कुरुते तद्वद्दैश्यं वितनुते सदा । श्वेतार्कतरुमूलेन रक्तचन्दनदारुणा । इभभग्नेन निम्बेन दन्तिदन्तेन वा कृतम् । विघ्नेश्वरं समभ्यर्च्य शीतांशुग्रहणे जपेत् । स्पृष्ट्वा मन्त्री निराहारस्तं शिखायां समुद्वहन् । युद्धेषु व्यवहारादौ विजयं श्रियमाप्नुयात् जपस्तु ग्रासाद्विमुक्तिपर्य्यन्तम् । तथा । मन्त्रेणानेन सञ्जप्य रोचनामदसंयुता ॥ मदो गजमदः ॥ तिलकक्रियया सर्वान् वशं नयति मानवान् । अनुलोमविलोमस्थवोजे नाम समालिखेत् । नवनीते समभ्यर्च्य स्पृष्ट्वा प्राणमनुं जपेत् । अष्टोत्तरशतं भूयो मूलमन्त्रं प्रजप्य तत् । भक्षयेल्लौहमास्थाय यामिन्यां सप्त वासरान् । स वश्यो जायते शीघ्रं साधकस्य न संशयः । अनुलोमित्यनेन वीजयोः पुटितत्वमात्रमुक्तं तेन वीजयोर्मध्ये साध्यनाम नवनीते लिखेदिति तात्पर्य्यम् ॥

गायत्रीतन्त्रे प्रथमब्राह्मणपटले ॥ षोड़शैरुपचारैश्च गणेशं पूजयेद् द्विजः । अणिमादिमहामन्त्रैः पूजयेच्छिवनन्दनम् । ध्यात्वा पाद्यादिकं दत्त्वा अणिमादिं जपेन्मनुम् । सिन्दूरवर्णसङ्काशं योगपट्टसमन्वितम् । लम्बोदरं महाकायं मुखं करिकरोपमम् । अनिमादिगुणैर्युक्तं अष्टबाहुं त्रिलोचनम् । विजयाविष्टते लिङ्गं मोक्षकामाय पूजयेत् ॥ ओं अं गणपतये स्वाहा । अनेनैव हि मन्त्रेण पूजयेद् गणनायकम् । अणिमाद्यष्टमन्त्रैश्च अष्टबाहुं प्रपूजयेत् ॥ ओं अणिमायै नमः स्वाहा । प्रं प्राप्त्यै नमः स्वाहा । मं महिमायै नमः स्वाहा । ईं ईशितायै नमः स्वाहा । वं वशितायै नमः स्वाहा । कं कामावसायितायै नमः स्वाहा । एवं सम्पूज्य विधिवत् मन्त्री-

कामान् प्रयोजयेत्। भोजयित्वा विधानेन नानामिष्टफलादिभिः। परमान्नपिष्टकैरम्यैर्दधिदुग्धघृतादिभिः। दिव्यगन्धमयैः पुष्पैः दिव्यगन्धप्रलेपनैः। मूषिकं पूजयामास नानामिष्टफलादिभिः॥ ओँ मं मूषिकाय गणाधिपवाहनाय धर्म्मराजाय स्वाहा। इत्यनेनैव मन्त्रेण मूषिकं पूजयेत् सदा॥

अथ हरिद्रागणेशः॥ तदुत्पत्तिस्तु नारदपञ्चरात्रे दशमाध्याये नारद उवाच। लिपिलम्बोदरस्याथ सम्भवः कथितो मयि। अन्येषां गणनाथानां मूर्त्तीनां सम्भवं वद॥ ब्रह्मोवाच॥ एकदा पार्वती देवी पिष्ट्वा च रजनीं पराम्। पुत्तलीं कारयामास तया देवी हरिद्रया। शङ्करं प्राह सा साध्वी पुत्रं पालय शङ्कर!। इत्युक्तः प्रियया शम्भुर्वर्द्धयामास तं सुतम्। उवाच परया प्रीत्या शरीरस्य च शोधनम्। तपः कुरु महाभाग! ततः सिद्धिमवाप्स्यसि॥ ब्रह्मोवाच॥ श्रुत्वा वाक्यं पितुः शीघ्रमुपदिष्टः शिवेन हि। जगाम तस्तुं कामाख्यां कामरूपे गिरौ ततः। पञ्चाचरीः मुग्रतारामाराध्य नियतः शुचिः। प्रत्यक्षत्वमवाप्याशु तया देव्या शिवस्ततः। उवाच प्रेमभावेन तं पुत्रं गिरिजापतिः। चतुर्वर्गप्रदोऽसि त्वं साधकानां न संशयः। तथा ब्रह्मा च विष्णुश्च रुद्रश्च परमेश्वरी। यथान्यदेवताः सर्वाश्चतुर्वर्गफलप्रदाः। तथा त्वमसि देवेश! चतुर्वर्गफलप्रदः। हरिद्रागणनाथेति ख्यातिः सर्वागमादिषु। लिपिलम्बोदरो देवो हेरम्बोऽपि यथा तथा। एतासामपि मूर्त्तीनां बाल्यावस्था च या स्मृता। उच्छिष्टगणनाथेति सा मूर्त्तिः शास्त्रगोचरे॥

अथ महागणपत्युपनिषत्। ओँ लं स्वाहा नाववतु स्वाहा। नौ भुनक्तु स्वाहा वीरियं करवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै। ओँ शान्तिः शान्तिः शान्तिः। ओँ लं नमस्ते गणपतये त्वमेव प्रत्यक्षं त्वमसि। त्वमेव केवलं कर्त्तासि त्वमेव

केवलं धर्त्तासि त्वमेव केवलं हर्त्तासि। त्वमेव सर्वं खल्विदं ब्रह्मासि। त्वं साक्षादात्मासि नित्यं ऋतं वच्मि सत्यं वच्मि अव त्वं मामव वक्तारं अव श्रोतारम् अव दातारम् अवालो वाचालमिति। अव शिष्यम् अव पश्चात्तात् अव पुरस्तात् अवो- त्तरात्तात् अव दक्षिणात्तात्। अव चोर्द्धात्तात् अवाधराधरा- त्तात्। सर्वतो मां पाहि पाहि समन्तात्। त्वं वाङ्मयस्त्व- च्चिन्मयस्त्वं ब्रह्म त्वं ब्रह्ममयस्त्वमानन्दमयस्त्वं सच्चिदानन्दा- द्वितीयोऽसि। त्वं प्रत्यक्षं ब्रह्मा असि त्वं ज्ञानमयो विज्ञान- मयोऽसि। सर्वं जगदिदं त्वत्तो जायते। सर्वं जगदिदं त्वयि लयिष्यति। त्वं भूमिरनलोऽनिलो नभः। त्वं चत्वारि वाक्- पाणिपायुपादानि। त्वं गुणत्रयातीतः। त्वं देहत्रयातीतः। त्वं कालत्रयातीतः। त्वं मूलाधारस्थितो नित्यं त्वं शक्ति- त्रयात्मिकस्त्वां योगिनो ध्यायन्ति नित्यम्। त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्य्यस्त्वं चन्द्र- मास्त्वं ब्रह्म भूर्भुवः स्वरोम्॥

गणादीन् पूर्वमुच्चार्य्य वर्णादींस्तदनन्तरम्। अनुस्वा- रपरतरः अर्द्धेन्दुलसितं तावद्रूप्यम्। एतत्तव मनुस्वरूपम्। गकारः पूर्वरूपम्। अकारो मध्यमरूपम्। अनुस्वारश्चान्त्य- रूपम्। विन्दूत्तररूपम्। नादः सन्धानम्। संहिता सन्धिः। स ईशानगणेशविद्या। गणकऋषिर्निचृद्गायत्रीच्छन्दः गं गणपतये नमः। एकदन्ताय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्ती प्रचोदयेत्। एकदन्तं चतुर्हस्तं पाशमङ्कुश- धारिणम्। अभयं वरदं हस्तैर्बिभ्राणं मूषिकध्वजम्। रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम्। रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम्। भक्तानुकम्पिनं देवं जगत्कारणमच्यु- तम्। आविर्भूतञ्च सृष्ट्यादौ प्रकृतेः पुरुषात् परम्। एवं

ध्यायति यो नित्यं स योगी योगिनां वरः॥ ॐ नमो वराह-पतये नमो गणपतये नमः प्रमथपतये नमस्तेऽस्तु लम्बोदराय। एकदन्ताय विघ्ननाशिने शिवसुताय वरदमूर्त्तये नमः। एतदेवाथ सर्वेशि! यो योऽधीते स ब्रह्मभूयाय कल्पते। स पञ्चमहापापात् प्रमुच्यते। स सर्वतः सुखमेधते। सायमधीयानो दिवसकृतं पापं नाशयति। प्रातरधीयानो रात्रिकृतं पापं नाशयति। तस्मायं प्रातरधीयानः पापोऽपापो भवति। सर्वत्राधीयमानोऽपविघ्नो भवति। धर्म्मार्थकाममोक्षञ्च विन्दति इत्यथर्वशीर्षम् अशिष्याय न देयम्। यो यदि मोहाय दास्यति स पापीयान् भवति। सहस्रावर्त्तनाद् यस्तु यं यं काममधीते तं तमवाप्नोति। अनेन गणपतिमभिषिञ्चति स वाग्मयो भवति। चतुर्थ्यामनश्नन् जपति स विद्यावान् भवति। इत्याथर्वणवाक्यं ब्रह्माद्याचरन् विद्या न बिभेति कदाचनेति। यो दूर्वाङ्कुरैर्यजति स वैश्रवणोपमो भवति। यो लाजैर्यजति स यशोवान् भवति। स मेधावान् भवति। यो मोदकसहस्रेण यजति स वाञ्छितमवाप्नोति। यस्त्वाज्यसमिद्भिर्यजति स सर्वं लभते। अष्टौ ब्राह्मणान् सम्यग् ग्राहयित्वा सूर्य्यवर्चस्वी भवति। सूर्य्यग्रहे महानद्यां प्रतिमासन्निधौ वा जप्त्वा स सिद्धमन्त्रो भवति। महापापात् प्रमुच्यते स सर्वविद्भवति। य एवं वेद इत्युपनिषत्स्वाह नाववतु। ओं शान्तिः शान्तिः शान्तिः॥ इति महागणपत्युपनिषत्॥

अथ गणपतिस्तोत्रम्॥ नारदपञ्चरात्रे प्रथमरात्रे सप्तमाध्याये॥ श्रीनारद उवाच॥ हे गणेश! सुरश्रेष्ठ! लम्बोदर! परात्पर!। हेरम्ब! मङ्गलारम्भ! गजवक्त्र! त्रिलोचन!। त्रिलोचनसुत! श्रीद! श्रीधरस्मरणेप्सित!। परमानन्द! परमपार्वतीनन्दन! स्वयम्। सर्वत्र पूज्य! सर्वेण जगत्पूज्य! जग-

हरे ! । जगदीश ! जगद्बीज ! जगन्नाथ ! नमोऽस्तु ते । यत्पूजा सर्वपुरतो यः स्तुतः सर्वयोगिभिः । यः पूजितः सुरेन्द्रैश्च मुनीन्द्रैस्तं नमाम्यहम् । परमाराधनेनैव कृष्णस्य परमात्मनः । पुण्यकेन व्रतेनैव यं प्राप्य पार्वती सती । तं नमामि सुरश्रेष्ठं सर्वश्रेष्ठं गरिष्ठकम् । जनश्रेष्ठं वरिष्ठञ्च तं नमामि गणेश्वरम् । इदं लम्बोदरस्तोत्रं नारदेन पुरा कृतम् । पूजाकाले पठेन्नित्यं जयस्तस्य पदे पदे । सङ्कल्पतः पठेद् यो हि वर्षमेकं सुसंयुतः । विशिष्टपुत्रं लभते परं कृष्णपरायणम् । यशस्विनञ्च विद्वांसं धनिनं चिरजीविनम् । विघ्ननाशो भवे-त्तस्य महैश्वर्य्यं यशोऽमलम् । इहैव् च सुखं भुक्त्वा अन्ते याति हरेः पदम् ॥ इति ज्ञानामृतसारे गणेशस्तोत्रं समा-प्तम् ॥

अथ वाणलिङ्गलक्षणम् । वीरमित्रोदयधृतकालोत्तरे ॥ वाणलिङ्गं तथा ज्ञेयं भुक्तिमुक्तिप्रदायकम् । उत्पत्तिं वाणलिङ्गस्य लक्षणं शेषतः शृणु । नर्म्मदादेविकायाश्च गङ्गायमुनयोस्तथा । सन्ति पुण्यनदीनाञ्च वाणलिङ्गानि षण्मुखे । इन्द्रादिपूजिता-न्यत्र तच्चिह्नैर्विहितानि च । सदा सन्निहितस्तत्र शिवः सर्वार्थ-दायकः । इन्द्रलिङ्गानि तान्याहुः साम्राज्यार्थप्रदानि च ॥१॥ इतीन्द्रलिङ्गलक्षणम् ॥

अरुणं नित्यकीलालमुष्णञ्च शं करोत्यलम् । आग्नेयं तच्छ-क्तिनिभमथवा शक्तिलाञ्छितम् । इदं लिङ्गवरं स्थाप्य तेजसा-धिपतिर्भवेत् ॥ इत्याग्नेयलिङ्गलक्षणम् ॥ २ ॥

दण्डाकारं भवेद् याम्यमथवा रसनाकृति । यद्यदुक्तं सह तेर्न निर्णिक्तं ज्ञायते तदा । निषिक्तं निधनं तेन क्रियते स्थापितेन तु ॥ ३ ॥ इति याम्यलिङ्गलक्षणम् ।

राक्षसं खड्गसदृशं ज्ञानयोगफलप्रदम् । कर्करादिप्रलिप्तन्तु

कुण्ठं कुक्षियुतं तथा। राक्षसं निष्कृतेर्लिङ्गं गार्हस्थ्ये न सुख-
प्रदम्॥ इति नैरृतलिङ्गलक्षणम्॥ ४॥

वारुणं वर्त्तुलाकारं पाशाङ्कं चालिवर्च्चसम्। वृद्धिमुखादेः
खलन्तु सम्भोगास्तन्तु मध्यगे॥ इति वारुणलिङ्गलक्षणम्॥ ५॥

कृष्णं धूम्रं नवा रुच्यं ध्वजाभं ध्वजमूषलम्। मस्तके
स्थापितं तस्य न्यूनन्यूनमितस्ततः॥ इति वायुलिङ्गलक्षणम्॥ ६॥

तूलकार्पासगदाकारमध्यगुरुकौबेरशषसस्य मध्यगम्॥ इति
कुवेरलिङ्गलक्षणम्॥ ७॥

दिनं वाप्यथवा रात्रिं शस्यानां वृद्धिरेबलम्। अस्थिशूला-
ङ्कितं रौद्रं हिमकुण्डलवर्च्चसम्॥ इति रौद्रलिङ्गलक्षणम्॥८॥

चतुर्वर्णमयं वापि वैष्णवं ज्ञायतेऽग्रतः। वैष्णवं शङ्खचक्राङ्क-
गदाब्जादिविभूषितम्। श्रीवत्सं कौस्तुभाङ्कञ्च सर्वसिंहासना-
ङ्कितम्। वैनतेयसमाङ्कं वा तथा विष्णुपदाङ्कितम्। वैष्णवं
नाम तत् प्रोक्तं सर्वैश्वर्य्यफलप्रदम्॥ इति वैष्णवलिङ्गलक्ष-
णम्॥ ९॥

शालग्रामादिसंस्थन्तु शशाङ्कं श्रीविवर्द्धनम्। पद्माङ्कं
स्वस्तिकाङ्कं वा श्रीवत्साङ्कं विभूतये॥ इत्यपि वैष्णवलिङ्गलक्ष-
णम्॥ १०॥

हेमाद्रिधृतलक्षणकाण्डे॥ नारद उवाच॥ अथ वक्ष्यामि ते
विप्र! चिह्नमेकादशं परम्। श्रवणाद् यस्य पापानि नाशमा-
यान्ति तत्क्षणात्। मधुपिङ्गलवर्णाभं कृष्णकुण्डलिकायुतम्।
स्वयम्भूलिङ्गमाख्यातं सर्वसिद्धैर्निषेवितम्॥ १॥ नानावर्णसमा-
कीर्णं जटाशूलसमन्वितम्। मृत्युञ्जयाह्वयं लिङ्गं सुरासुरनमस्कृ-
तम्॥२॥ दीर्घाकारं शुभ्रवर्णं कृष्णविन्दुसमन्वितम्। नीलकण्ठं
समाख्यातं लिङ्गं पूज्यं सुरासुरैः॥ ३॥ शुक्लाभं शुक्लकेशञ्च
नेत्रत्रयसमन्वितम्। त्रिलोचनं महादेवं सर्वपापप्रणोदनम्॥

४॥ ज्वलल्लिङ्गं जटाजूटं कृष्णाभं स्थूलविग्रहम्। कालाग्नि-रुद्रमाख्यातं सर्वसत्त्वैर्निषेवितम्॥ ५॥ मधुपिङ्गलवर्णाभं श्वेतयज्ञोपवीतिनम्। श्वेतपद्मसमासीनं चन्द्ररेखाविभूषितम्। प्रलयास्त्रसमायुक्तं त्रिपुरारिसमाह्वयम्॥ ६॥ धूम्राभं पिङ्गल-जटं मुण्डमालाधरं परम्। त्रिशूलधरमीशानं लिङ्गं सर्वार्थ-साधनम्॥ ७॥ त्रिशूलडमरुधरं शुभ्ररक्तार्द्धभागतः। अर्द्धनारी-श्वराह्वानं सर्वदेवैरभीष्टदम्॥ ८॥ ईषद्रक्तमयं कान्तं स्थूलं दीर्घं समुज्ज्वलम्। महाकालं समाख्यातं धर्म्मकामार्थमोक्ष-दम्॥ ९॥ एतत्तु कथितं तुभ्यं लिङ्गचिह्नं महेशितुः। एकेनैव कृतार्थः स्याद् बहुभिः किमु सुव्रत!॥ इति बाणलिङ्गचिह्नानि॥

वीरमित्रोदयधृतकालोत्तरे॥ उन्नाङ्गं श्रेयसे योज्यं शीर्ष-मन्यं विवर्जयेत्। यमवर्णन्तु यल्लिङ्गं यमाङ्कं वा कमण्डलुम्। दण्डाङ्कं सूत्रचिह्नं वा ब्रह्मज्ञानान्वितं मतम्। अग्निवर्णं महाकालं नन्दीशं पद्मरागवत्। पद्मरागनिभं सर्वं महाभं सिद्धिपूजितम्। मौक्तिकाभं नीलनिभं रुद्रादित्यैः प्रपूजितम्। वसुदैः सेन्द्रयक्षेशैर्गुह्यकैर्यातुधानकैः। नानावर्णमयं नीलं शशाङ्कमण्डलप्रभम्॥ इति बाणलिङ्गलक्षणम्॥

वीरमित्रोदयधृतम्॥ इत्येतल्लक्षणं प्रोक्तं परीक्षातत्त्वको-विदैः। त्रिः सप्तपञ्चवारं वा तुलासाम्यं न जायते। तदा बाणं समाख्यातं शेषं पाषाणसम्भवम्। तुलाकारणन्तु तण्डुलेन। अपरतुलादिषु तण्डुला यद्यधिकाः स्युस्तदा तल्लिङ्गं गृहिणां पूज्यमवधार्य्यं लिङ्गञ्चेदधिकं तदोदासीनपूज्यं तदिति किं-वदन्तीति हेमाद्रिधृतलक्षणकाण्डे॥ सूतसंहितायान्तु॥ सप्त-कृत्वस्तुलारूढं वृद्धिमिति न हीयते। बाणलिङ्गमिति ख्यातं शेषं नार्म्मदमुच्यते। त्रिः पञ्चवारं यस्यैव तुलासाम्यं न जायते। तदा बाणं समाख्यातं शेषं पाषाणसम्भवम्॥ वीरमित्रोदये॥

नद्यां वा प्रक्षिपेद्भूयो यदा तदुपलभ्यते। वाणलिङ्गं तदा विद्धि नूनं सुखविवर्द्धनम्॥ इति वाणलिङ्गपरीक्षा॥

वाणशब्दव्युत्पत्तिरपि तत्रैव॥ अथ वाणं समाख्यातं यथा वच्चे तथादितः। वाणः सदाशिवो देवो वाणो वाणान्तरोऽपि च। तेन यस्मै कृतं तस्माद्वाणलिङ्गमुदाहृतम्। सदा सन्निहितस्तत्र शिवः सर्वार्थदायकः। कृतप्रतिष्ठं तल्लिङ्गं वाणाख्येन शिवेन च। पङ्कजस्य फलाकारं कुण्डलस्य समाकृति। पङ्कजफलं पद्मवीजम्। पक्वजम्बूफलाकारं कुक्कुटाण्डसमाकृति। इति हेमाद्रिधृतलक्षणकाण्डे पाठः॥ भुक्तिमुक्तिप्रदञ्चैव वाणलिङ्गमुदाहृतम्॥ याज्ञवल्क्यसंहितायाम्। देवीं प्रति शिववाक्यम्॥ प्रशस्तं नार्म्मदं लिङ्गं पक्वजम्बूफलाकृति। मधुवर्णं तथा शुक्लं नीलं मरकतप्रभम्। हंसडिम्बाकृति पुनः स्थापनायां प्रशस्यते। स्वयं संस्रवते लिङ्गं गिरितो नर्म्मदाजले। पुरा वाणासुरेणाहं प्रार्थितो नर्म्मदातटे। अधिवासं गिरौ तत्र लिङ्गरूपी महेश्वरः। वाणलिङ्गमपि ख्यातमतोऽर्थाज्जगतीतले। अन्येषां कोटिलिङ्गानां पूजने यत् फलं लभेत्। तत् फलं लभते मर्त्त्यो वाणलिङ्गैकपूजनात्॥ तथा॥ ताम्री वा स्फाटिकी स्वार्णी पाषाणी राजती तथा। वेदिका च प्रकर्त्तव्या तत्र संस्थाप्य पूजयेत्। प्रत्यहं योऽर्चयेल्लिङ्गं नार्म्मदं भक्तिभावतः। ऐहिकं किं फलं तस्य मुक्तिस्तस्य करे स्थिता॥ इति प्रत्यहवाणलिङ्गपूजाफलम्॥

सूतसंहितायाम्॥ संस्थाप्य श्रीवाणलिङ्गं रत्नकोटिगुणं भवेत्। रसलिङ्गे ततो वाणात् फलं कोटिगुणं स्मृतम्। गुणांस्तु रसलिङ्गस्य वक्तुं शक्नोति शङ्करी। सिद्धयो रसलिङ्गे स्युरणिमाद्याः सुसंस्थिताः॥ केदारखण्डे॥ रत्नधातुमयान्येव लिङ्गानि कथितान्यपि। पवित्राण्येव पूज्यानि सर्वकामप्रदानि च।

एतेषामपि सर्वेषां काश्मीरं हि विशिष्यते। काश्मीरादपि लिङ्गाच्च वाणलिङ्गं विशिष्यते। वाणलिङ्गात् परं नान्यत् पवित्रमिह दृश्यते। ऐहिकामुष्मिकं सर्वं पूजाकर्त्तुः प्रयच्छति॥ इति वाणलिङ्गप्रशंसा॥

निन्द्यलिङ्गमाह तत्रैव॥ कर्कशे वाणलिङ्गे तु पुत्रदारक्षयो भवेत्। चिपिटे पूजिते तस्मिन् गृहभङ्गो भवेद् ध्रुवम्। एकपार्श्वश्रिते धेनुपुत्रदारधनक्षयः। शिरसि स्फुटिते वाणे व्याधिर्मरणमेव च। छिद्रलिङ्गेऽर्चिते वाणे विदेशगमनं भवेत्। लिङ्गे च कर्णिकां दृष्ट्वा व्याधिमान् जायते पुमान्। अत्युन्नतिविलाग्रे तु गोधनानां क्षयो भवेत्॥ हेमाद्रिधृतम्॥ तीक्ष्णाग्रं वक्रशीर्षञ्च त्र्यस्रलिङ्गं विवर्जयेत्। अतिस्थूलं चातिकृशं स्वल्पं वा भूषणान्वितम्। गृही विवर्जयेत्तादृक् तद्धि मोक्षार्थिनो हितम्॥ इति दुष्टवाणलिङ्गलक्षणम्॥

शुभलिङ्गमाह वीरमित्रोदये॥ अथेदं कपिलं लिङ्गं घनाभं मोक्षकाङ्क्षिणाम्। लघु वा कपिलं स्थूलं गृही नैवार्चयेत् क्वचित्। पूजितव्यं गृहस्थेन वर्णेनभ्रमरोपमम्। तस्य पीठमपीठं वा मन्त्रसंस्कारवर्जितम्। सिद्धिमुक्तिप्रदं लिङ्गं सर्वप्रसादपीठगम्॥ इति शुभवाणलिङ्गलक्षणम्॥

सूतसंहितायां भैरववाक्यम्॥ वाणासुरः पुरा भद्रे! शिवस्यातीव वल्लभः। जितक्रोधोऽनुरक्तश्च शिवपूजाविधौ रतः। वह्निज्ञो निपुणश्चैव शिल्पज्ञो लक्षणान्वितः। दिने दिने स्वयं दत्त्वा लिङ्गं स्थाप्य प्रपूजयेत्। एवं वर्षशतं देवि! दिव्यमानेन पूजयेत्। तदा तद्भक्तिसुलभः प्रत्यक्षः शङ्करोऽभवत्॥ शङ्कर उवाच॥ तुष्टोऽहं तव हे वाण! वरं ब्रूहि किमिच्छसि। शङ्करस्य वचः श्रुत्वा वाणो वचनमब्रवीत्। यदि तुष्टोऽसि हे नाथ मह्यं त्वं मन्दभागिने। क्लिष्टोऽहं तव देवेश! लिङ्गं कृत्वा दिने दिने।

तत्तल्लक्षणसंसिद्धलक्षणं शास्त्रनिर्म्मितम्। शास्त्रार्थौ दुर्लभौ देव! सिद्धश्चार्थश्च दुर्लभः। तस्मात्त्वं यदि मे तुष्टो लिङ्गं देहि सुलक्षणम्। सर्वकामकृतार्थञ्च सर्वसत्त्वानुकम्पनम्। सर्वेषाञ्च हितार्थाय प्रसादं कुरु शङ्कर!। इत्येवं वचनं तस्य शिवः परमकारणम्। श्रुत्वा कैलासमूर्द्धानं शङ्करेण विनिर्म्मिताः। लिङ्गानां कोटिसंख्याश्च तथा चैव चतुर्दश। सिद्धलिङ्गं तदा तत्तत् सर्वं सदोदयं स्वयम्। अयोज्यैवं सुसम्पूर्णं वाणस्य च समर्पितम्। अक्षयफलदं वाणं स्थाप्यमानञ्च नित्यशः। सम्पूज्य वाणः सद्भावं कृत्वा प्रणयनं तदा। तद्भावं स्वपुरं नीत्वा न्यूनं चिन्तयते शुचिः। अक्षय्यं यदि संसिद्धं स्थाप्यमानं दिने दिने। सत्त्वानां सिद्धिहेत्वर्थं वाणः स्थाने सुसंश्रये। लिङ्गानां कालिकागर्त्ते सञ्चितास्तु त्रिकोटयः। श्रीशैलकोटयस्तिस्रः कोट्येका कन्यकाश्रमे। माहेश्वरे च कोटिस्तु कन्यातीर्थे तु कोटिका। महेन्द्रे चैव नेपाले एकैका कोटिरेव च। वाणार्थं कृतं लिङ्गं वाणलिङ्गमतः स्मृतम्। वाणो वा शिव इत्युक्तास्तत्कृतं वाणमुच्यते। तस्मात्तेषु प्रदेशेषु पुण्यस्थानेषु तेषु वा। स्थितं तच्छिवसद्भावं शिवस्याकृतिविग्रहे। हेम्ना तदाकृतिलक्षणं समुच्चयेऽपि। स्वयम्भूलिङ्गवद्वाणलिङ्गं भुक्त्यै स्वमुक्तये। सहस्रफलमन्यस्माद् यथास्थानप्रपूजने। श्रीशैले कालिकागर्त्ते लिङ्गाद्रौ कन्यकाश्रमे। कन्यातीर्थे वने याने महेन्द्रे वा सुरेश्वरे। स्थितानि वाणलिङ्गानि शिवेनैव कृतानि तु। सिद्धान्तशेखरे वाणलिङ्गान्यधिकृत्य॥ तदा त्वेकप्रकारं स्यादन्यवर्णमपीठकम्। लक्ष्मूर्त्तिविहीनञ्च वाणं तत्पृथुलाग्रकमिति। वाणलिङ्गेष्वावाहनादि न कर्त्तव्यम्॥ तदुक्तं भविष्ये॥ वाणलिङ्गानि राजेन्द्र! स्थितानि भुवनत्रये। न प्रतिष्ठा न संस्कारस्तेषामावाहनं न चेति॥ योगसारे पञ्चमपरिच्छेदे॥

ब्राह्मे मुहूर्त्ते चोत्थाय यः स्मरेद्वाणलिङ्गकम्। सर्वत्र जय-माप्नोति सत्यं सत्यं महेश्वर!॥

अथ वाणलिङ्गध्यानं तत्रैव॥ ओं प्रमत्तं शक्तिसंयुक्तं वाणाख्यञ्च महाप्रभम्। कामवाणान्वितं देवं संसारदहन-क्षमम्। शृङ्गारादिरसोल्लासं वाणाख्यं परमेश्वरम्। एवं ध्यात्वा वाणलिङ्गं यजेत्तं परमं शिवम्। मनसा गन्धपुष्पाद्यैः स-म्पूज्यास्य मनुं स्मरेत्॥ तथा। प्राणायामं ततः कृत्वा वाण-लिङ्गन्तु तोषयेत्। तदिष्टदेवयोरैक्यं विभाव्य वाग्भवं जपेत्। ततो जपं समाप्याथ स्तवेनानेन तोषयेत्॥

अथ स्तवः॥ ओं वाणलिङ्ग! महाभाग! संसारात् त्राहि मां प्रभो!। नमस्ते चोग्ररूपाय नमस्ते व्यक्तयोनये। संसारकारिणे तुभ्यं नमस्ते सूक्ष्मरूपधृक्!। प्रमत्ताय महे-न्द्राय कालरूपाय! वै नमः। दहनाय नमस्तुभ्यं नमस्ते योगकारिणे। भोगिनां भोगकर्त्रे च मोक्षदात्रे नमो नमः। नमः कामाङ्गनाशाय नमः कल्मषहारिणे। नमो विश्वप्रदात्रे च नमो विश्वस्वरूपिणे। वाणस्य वरदात्रे च रावणस्य क्षयाय च। रामस्यानुग्रहार्थाय राज्याय भरतस्य च। मुनीनां योगदात्रे च राक्षसानां क्षयाय च। नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः। ऐं दाहिकाशक्तियुक्ताय महामायाप्रियाय च। भगप्रियाय सर्वाय वैरिणां निग्रहाय च। परित्राणाय योगिनां कौलिकानां प्रियाय च। कुला-ङ्गनानां भक्ताय कुलाचाररताय च। कुलभक्ताय योगाय नमो नारायणाय च। मधुपानप्रमत्ताय योगीशाय नमो नमः। कुलनिन्दाप्रणाशाय कौलिकानां सुखाय च। कुलयोगाय निष्ठाय शुद्धाय परमात्मने। परमात्मस्वरूपाय लिङ्गमूलात्मकाय च। सर्वेश्वराय सर्वाय शिवाय निर्गुणाय च। इत्येतत् परमं

गुह्यं वाणलिङ्गस्य शङ्कर!। यः पठेत् साधकश्रेष्ठो गाणपत्यं लभेत सः। स्तवस्यास्य प्रसादेन योगी योगित्वमाप्नुयात्। राज्यार्थिनां भवेद्राज्यं भोगिनां भोग एव च। साधूनां साधनं देव! कौलिकानां कुलं भवेत्। यं यं कामयते मन्त्री तं तमाप्नोति लीलया। वाणलिङ्गप्रसादेन सर्वमाप्नोति सत्वरम्। किमन्यत् कथयामीह सर्वं वेत्सि कुलेश्वर!। महाभये समुत्पन्ने राजद्वारे कुलेश्वर!। देशान्तरभये प्राप्ते दस्युचौरादिसङ्कुले। पठनात् स्तवराजस्य न भयं लभते क्वचित्। वाणलिङ्गस्य माहात्म्यं संक्षेपात् कथितं मया। तस्य श्रवणमात्रेण नरो मोक्षमवाप्नुयात्। वाणलिङ्गं सदाराध्यं योगिनां योगसाधने। कौलिकानां कुलाचारे पशूनां शत्रुविग्रहे। वेदज्ञानां वेदपाठे रोगिणां रोगनाशने। यो यो नाराधयेदेनं सर्वं तन्निष्फलं भवेत्॥ इति श्रीयोगसारे सर्वागमोत्तमे पार्वतीशिवसंवादे वाणलिङ्गस्तोत्रं समाप्तम्॥

अथ रौद्रलिङ्गलक्षणम्॥ वीरमित्रोदयधृतम्॥ नदीसमुद्भवं रौद्रमन्योन्यस्य विघर्षणात्। नदीवेगात्समं स्निग्धं सञ्जातं रौद्रमुच्यते॥ समुच्चयेऽपि॥ सरित्प्रवाहसंस्थानं वाणलिङ्गसमाकृति। तदन्यदपि बोद्धव्यं रौद्रलिङ्गं सुखावहम्। नदीसारनर्म्मदाया वाणलिङ्गसमाकृति। तदन्यदपि बोद्धव्यं लिङ्गं रौद्रं भविष्यति। रौद्रलिङ्गं तथा ख्यातं वाणलिङ्गसमाकृति। श्वेतं रक्तं तथा पीतं कृष्णं विप्रादिपूजितम्। स्वभावात् कृष्णवर्णं वा सर्वजातिषु सिद्धिदम्। नर्म्मदासम्भवं रौद्रं वाणलिङ्गवदीरितमिति॥ इति रौद्रलिङ्गलक्षणम्॥ १॥

अथ शिवनाभिलक्षणम्॥ वीरमित्रोदयधृतशिवनारदसंवादे शिवलिङ्गं प्रक्रम्य॥ उत्तमं मध्यमधमं त्रिविधं लिङ्गमीरितम्। चतुरङ्गुलमुत्सेधे रम्यवेदिकमुत्तमम्। उत्तमं लिङ्ग

माख्यातं मुनिभिः शास्त्रकोविदैः । तदर्द्धं मध्यमं प्रोक्तं तदर्द्ध-मधमं स्मृतम् ॥ तस्य महिमापि तत्रैव ॥ शिवनाभिमयं लिङ्गं प्रतिपूज्य महर्षिभिः । श्रेष्ठञ्च सर्वलिङ्गेभ्यस्तस्मात् पूज्यं विधा-नतः ॥ इति शिवनाभिलिङ्गलक्षणम् ॥ ३ ॥

अथ दैवलिङ्गलक्षणम् ॥ सिद्धान्तशेखरे ॥ करसम्पुटसंस्पर्शं शूलटङ्केन्दुभूषितम् । रेखाकोटरसंयुक्तं निम्नोन्नतसमन्वितम् । दीर्घाकारञ्च यल्लिङ्गं ब्रह्मभागादिवर्जितम् । लिङ्गं गोलमिति प्रोक्तं गोलकं प्रोच्यतेऽधुना । कुष्माण्डस्य फलाकारं नागरङ्ग-फलोपमम् । काकडिम्बफलाकारं गोललिङ्गमितीरितम् ॥ इति गोललिङ्गलक्षणम् ॥ ४ ॥

अथार्षलिङ्गलक्षणम् ॥ तत्रैव ॥ नानाविल्वफलाकारं ब्रह्म-सूत्रविवर्त्तनम् । मूले स्थूलञ्च यल्लिङ्गं कपित्थफलसन्निभम् । नालस्य वा फलाकारं मध्ये स्थूलञ्च यद्भवेत् । मध्ये स्थूलं वरं लिङ्गमृषिवाणमुदाहृतम् ॥ इत्यार्षलिङ्गलक्षणम् ॥ ५ ॥

अथ लिङ्गलक्षणम् ॥ लिङ्गं हि द्विविधमकृत्रिमं कृत्रिमञ्च ॥ अकृत्रिमं स्वयम्भूतं स्वयम्भूवाणलिङ्गादि । कृत्रिमं निर्म्मितं धातुलिङ्गादि । सिद्धान्तशेखरे । नत्वा नारदमार्य्यादीन् लिङ्गं पिष्टाकारविन्दुरूपिणी । ब्राह्मी शिलोत्कलारूपा वक्ष्ये लिङ्गस्य लक्षणम् । तल्लिङ्गं द्विविधं ज्ञेयमचलञ्च चलं तथा । प्रत्येकं त्रिविधं ज्ञेयं लिङ्गं तदुभयात्मकम् । प्रासादे स्थापितं लिङ्ग-मचलं तच्छिलादिजम् । स्थापितमचलं गेहे स्थिरं लिङ्गम-योजिते । पञ्चधा तत् स्थितं लिङ्गं स्वयम्भूदेवपालकम् । आर्षञ्च मानसं लिङ्गं तेषां लक्षणमुच्यते ॥ दीपिकायाम् । आचार्य्यमुनये स्वैरं स्वयम्भूतो महेश्वरः । यत्र चैव स्वयं व्यक्तं लिङ्गमस्तु स्वयम्भु तत् । धमनीयस्य संस्पर्शाद् दहति क्षिप्रमेव तु । धमनी सुषुम्नेड़ापिङ्गलाव्यतिरिक्ता ब्रह्मरन्ध्रं विनिर्भिद्य

लिङ्गते नाड़ी सैव। सिद्धान्तशेखरे॥ नानाच्छिद्रसुसंयुक्तं नाना-वर्णसमन्वितम्। अदृष्टमूलं यल्लिङ्गं कर्कशं भुवि दृश्यते। त-ल्लिङ्गन्तु स्वयम्भूतमपरं लक्षणच्युतम्। स्वयम्भूलिङ्गमित्युक्तं तच्च नानाविधं मतम्। शङ्खाभमस्तकं लिङ्गं वैष्णवं तदुदा-हृतम्। पद्माभमस्तकं ब्राह्मं छत्राभं शाक्रमुच्यते। शिरोयुग्मं तदाग्नेयं त्रिपदं याम्यमीरितम्। खड्गाभं नैर्ऋतं लिङ्गं वारुणं कलशाकृति। वायव्यं ध्वजवल्लिङ्गं कौवेरन्तु गदान्वितम्। ईशानस्य त्रिशूलाभं लोकपालादिनिःसृतम्। स्वयम्भूलिङ्ग-माख्यातं सर्वशास्त्रविशारदैः॥ इति स्वयम्भूलिङ्गलक्षणम्॥

मत्स्यसूक्ते॥ दृष्ट्वा लिङ्गं महेशस्य स्वयम्भूतस्य पार्वति!। सर्वपापविनिर्मुक्तः परे ब्रह्मणि लीयते॥ एतेषां पूजाफलन्तु तत्रैव॥ विशेषाच्छैलजं मुक्त्यै भुक्तये चानुषङ्गतः। पार्थिवं भुक्तये शस्तं मुक्तये चानुषङ्गतः। एवं वै दारुजं ज्ञेयं चिह्न-लिङ्गं तथा पुनः। स्थिरलक्ष्मीप्रदं ज्ञेयं हैमं राज्यप्रदञ्च तत्। पुत्रवृद्धिकरं ताम्रं राङ्गमायुःप्रवर्द्धनम्॥ पद्मपुराणम्॥ पारदञ्च महाभूत्यै सौभाग्याय च मौक्तिकम्। चन्द्रकान्तं मृत्युजित् स्यात्स्फाटकं सर्वकामदम्॥ वीरमित्रोदयधृतकल्पोत्तरेऽपि॥ सर्व-फलप्रदा भूमिर्म्मणयस्तद्वदेव हि। अनन्ताद्याः स्मृता ह्यष्टौ मणयो विद्युदुज्ज्वलाः। रात्रौ प्रकाशकाः सर्वविषाद्याघात-कारिणः। नानावर्णास्तु विज्ञेया रसैर्गन्धैश्च रूपतः। वज्राद्याः स्फाटिकाद्याश्च गुड़ान्नादिविनिर्म्मितम्। सर्वकामप्रदं पुंसां लिङ्गं तात्कालिकं मतम्॥ लक्षणसमुच्चये॥ गन्धं सौभाग्यदं लिङ्गं पौष्पं मुक्तिप्रदायकम्॥ तथा। नानासूनोद्भवं लिङ्गं नाना-कामप्रदायकम्। सैकतं गुणदं लिङ्गं सौभाग्याय च लावणम्। उच्चाटने तु पाशाप्तं मौलं शत्रुचयावहम्। तात्कालिकं दरिद्रश्च कृत्वा भक्त्या समर्च्चयेत्॥ गरुड़पुराणे॥ कस्तूरिकाया द्वौ

भागौ चत्वारश्चन्दनस्य च। कुङ्कुमस्य त्रयश्चैव शशिना च चतुःसमम्। एतद्वै गन्धलिङ्गन्तु कृत्वा सम्पूज्य भक्तितः। शिवसायुज्यमाप्नोति बन्धुभिः सहितो नरः। कार्य्यं पुष्पमयं लिङ्गं हयगन्धसमन्वितम्। नवखण्डां धरां भुक्ता गणेशाधिपतिर्भवेत्। रजोभिर्निर्मितं लिङ्गं यः पूजयति भक्तितः। विद्याधरपदं प्राप्य पश्चाच्छिवसमो भवेत्। श्रीकामो गोशकृल्लिङ्गं कृत्वा भक्त्या प्रपूजयेत्। स्वच्छेन कापिलेनैव गोमयेन प्रकल्पयेत्। स्वच्छेन भूमिपतनरहितेन शून्योद्धृतेन इति यावत्। कार्य्यं यष्टिकमं लिङ्गं यवगोधूमशालिजम्। श्रीकामः पुष्टिकामश्च पुत्रकामस्तदर्च्चयेत्। सिताखण्डमयं लिङ्गं कार्य्यमारोग्यवर्द्धनम्। वश्ये लवणजं लिङ्गं तालत्रिकटुकान्वितम्। तालं हरितालम्॥ त्रिकटुकं शुण्ठीपिप्पलीमरिचमिति प्रसिद्धम्। गव्यघृतमयं लिङ्गं सम्पूज्य बुद्धिवर्द्धनम्॥ तथा। लवणेन च सौभाग्यं पार्थिवं सर्वकामदम्। कामदं तिलपिष्टोत्थं तुषोत्थं मारणे स्मृतम्। भस्मोत्थं सर्वफलदं गुडोत्थं प्रीतिवर्द्धनम्। गन्धोत्थं गुणदं भूरि शर्करोत्थं सुखप्रदम्। वंशाङ्कुरोत्थं वंशकरं गोमयं सर्वरोगदम्। केशास्थिसम्भवं लिङ्गं सर्वशत्रुविनाशनम्। क्षोभणे मारणे पिष्टसम्भवं लिङ्गमुत्तमम्। दारिद्र्यदं द्रुमोद्भूतं पिष्टं सारस्वतप्रदम्। दधिदुग्धोद्भवं लिङ्गं कीर्त्तिलक्ष्मीसुखप्रदम्। धान्यदं धान्यजं लिङ्गं फलोत्थं फलदं भवेत्। पुष्पोत्थं दिव्यभोगायुर्मुक्त्यै धात्रीफलोद्भवम्। नवनीतोद्भवं लिङ्गं कीर्त्तिसौभाग्यवर्द्धनम्। दूर्व्वाकाण्डसमुद्भूतमपमृत्युनिवारणम्। कर्पूरसम्भवं लिङ्गं चला वै भुक्तिमुक्तिदाः। अयस्कान्तं चतुर्द्धा तु ज्ञेयं सामान्यसिद्धिषु॥ सारसंग्रहे विशेषः॥ सर्वं न च भवं श्रेष्ठं तत्र वज्रमरिच्छिदि। यमलिङ्गं महाभूत्यै सौभाग्याय च मौक्तिकम्। पुष्टिमूलं महानीलं ज्योति-

क्षीरसमुद्भवम्। स्पर्शकं कुलसम्पत्त्यै तैजसं सूर्य्यकान्तजम्। चन्द्रापीड़ं मृत्युजितं स्फाटिकं सर्वकामदम्॥ चन्द्रापीड़ं चन्द्रकान्तमित्यर्थः। शूलाख्यमणिजं शत्रुक्षयार्थं मौक्तिकं तथा। यत्सन्निधानात् शूलरोगनाशः स शूलमणिः। अपुच्चं होरकं ज्ञेयं रोगहृन्मौक्तिकोद्भवम्। शुभकृत् पुष्कलं तीर्थं वैदूर्य्यं शत्रुदर्पहृत्। नीलं लक्ष्मीप्रदं ज्ञेयं स्फाटिकं सर्वकामदम्॥ कालोत्तरे॥ महाभूतिप्रदं हैमं राजतं भूतिवर्द्धनम्। आरकूटं तथा कांस्यं शृणु सामान्यमुक्तिदम्॥ आरकूटं पित्तलम्॥ त्रपुसीसायसं लिङ्गं शत्रूणां नाशने हितम्॥ तथा। कीर्त्तिदं कांस्यजं लिङ्गं राजतं पुत्रवर्द्धनम्। पैत्तलं भुक्तिमुक्त्यर्थं मिश्रजं सर्वसिद्धिदम्॥ मिश्रजमष्टधातुनिर्म्मितम्॥ शिवनारदसंवादे॥ पितॄणां मुक्तये लिङ्गं पूज्यं रजतसम्भवम्। हैमजं सत्यलोकस्य प्राप्तये पूजयेत् पुमान्। पूजयेत्ताम्रजं लिङ्गं पुष्टिकामो हि मानवः। ताम्रादिलिङ्गपूजनन्तु कलीतरपरम्। तथाच मत्स्य-सूक्ते॥ ताम्रलिङ्गं कलौ नार्च्चेत् रैत्यस्य सीसकस्य च। रक्त-चन्दनलिङ्गञ्च शङ्खकांस्यायसं तथा। तुष्टिकामस्तु सततं लिङ्गं पित्तलसम्भवम्। कीर्त्तिकामो यजेन्नित्यं लिङ्गं कांस्यसमु-द्भवम्। शत्रुमारणकामस्तु लिङ्गं लौहमयं सदा। सदा सीस-मयं लिङ्गमायुष्कामोऽर्च्चयेन्नरः॥ लक्षणसमुच्चयेऽपि। स्थिर-लक्ष्मीप्रदं हैमं राजतं चैव राज्यदम्। प्रजावृद्धिकरं राङ्गं ताम्रमायुःप्रवर्द्धनम्। विद्वेषकारकं कांस्यं रीतिजं शत्रुनाश-नम्॥ रीतिजं पित्तलमयम्॥ रोगघ्नं सैसकं लिङ्गमायसं शत्रु-नाशनम्। अष्टलौहमयं लिङ्गं कुष्ठरोगक्षयावहम्। त्रिलौह-सम्भवं लिङ्गं विज्ञानं प्रति सिद्धिदम्॥ लिङ्गपुराणे॥ श्रीप्रदं वज्रजं लिङ्गं शिलाजं सर्वसिद्धिदम्। धातुजं धनदं साक्षा-द्दारुजं भोगसिद्धिदम्॥ कालोत्तरे॥ गन्धपुष्पमयं लिङ्गं तथा-

त्नादिविनिर्म्मितम्। कस्तूरीसम्भवं लिङ्गं धनाकाङ्क्षी प्रपूजयेत्। लिङ्गं गोरोचनोत्थञ्च रूपकामस्तु पूजयेत्। कान्तिकामस्तु सततं लिङ्गं कुङ्कुमसम्भवम्। श्वेतागुरुसमुद्भूतं महाबुद्धिविवर्द्धनम्। धारणाशक्तिदं लिङ्गं कृष्णागुरुसमुद्भवम्॥ मातृकाभेदतन्त्रे द्वादशपटले च॥ पार्थिवे शिवपूजायां सर्वसिद्धियुतो भवेत्। पाषाणे शिवपूजायां द्विगुणं फलमीरितम्। स्वर्णलिङ्गे च पूजायां शत्रूणां नाशनं मतम्। सर्वसिद्धीश्वरी रौप्ये फलं तस्माच्चतुर्गुणम्। ताम्रे पुष्टिं विजानीयात् कांस्ये च धनसंक्षयः। गङ्गायाञ्च लक्षगुणं लाक्षायां रोगवान् भवेत्। स्फाटिके सर्वसिद्धिः स्यात्तथा मरकते प्रिये!। लौहलिङ्गे रिपोर्नाशः कामदं भस्मलिङ्गकम्। बालुकायां काम्यसिद्धिर्गोमये रिपुहिंसनम्। सर्वलिङ्गस्य माहात्म्यं धर्म्मकामार्थमोक्षदम्॥ षट्कर्म्मदीपिकाधृतशिवधर्मे॥ ब्रह्मा सम्पूजयेन्नित्यं लिङ्गं शैलमयं शुभम्। तस्य सम्पूजनात्तेन प्राप्तं ब्रह्मत्वमुत्तमम्। इन्द्रनीलमयं लिङ्गं विष्णुः समर्चयेत् सदा। विष्णुत्वं प्राप्तवान् तेनसोऽभूद्भूतैकपालकः। स्फाटिकं निर्म्मलं लिङ्गं वरुणोऽभ्यर्च्चयेत् सदा। तेन तद्वरुणत्वं हि प्राप्तं तेजोबलान्वितम्॥ मातृकाभेदतन्त्रे सप्तमपटलेऽपि॥ पूजयेत् पार्थिवे लिङ्गे पाषाणलिङ्गकेऽथवा। स्वर्णलिङ्गेऽथवा देवि! रौप्ये ताम्रे च कांस्यके। पारदे वाथ गङ्गायां स्फटिके मरकतेऽपि वा। कार्य्यभेदे लौहलिङ्गे भस्मनिर्म्मितलिङ्गके। बालुकानिर्म्मिते लिङ्गे गोमये वाथ पूजयेत्। संस्कारेण विना देवि! पाषाणादौ न पूजयेत्॥ इति शिवलिङ्गनिर्म्माणद्रव्याणि॥

अथ शिवलिङ्गसंस्कारः॥ तत्रैव॥ संस्कारञ्च प्रवक्ष्यामि विशेष इह यो भवेत्। रौप्यञ्च स्वर्णलिङ्गञ्च स्वर्णपात्रे निधाय च। तस्मादुत्तोल्य तल्लिङ्गं दुग्धमध्ये दिनत्रयम्। त्र्यम्बकेण

स्नापयित्वा कालरुद्रं प्रपूजयेत्। षोड़शेनोपचारेण वेद्यान्तु पार्व्वतीं यजेत्। तस्मादुत्तोल्य तल्लिङ्गं गङ्गातोये दिनत्रयम्। ततो वेदोक्तविधिना संस्कारमाचरेत् सुधीः। पूर्व्वोक्तवचनैः फलविशेषकामनया नानाविधलिङ्गपूजोक्ता। सा च पूजा। लिङ्गं सुलक्षणं कुर्य्यात्त्यजेल्लिङ्गमलक्षणम्। दैर्घ्यहीने भवेद् व्याधिरधिके शत्रुवर्द्धनम्। मानहीने विनाशः स्यादधिके च शिशुक्षयः। विस्तारे चाधिके हीने राष्ट्रनाशो भवेद् ध्रुवम्। पीठहीने तु दारिद्र्यं शिरोहीने कुलक्षयः। ब्रह्मसूत्रविहीने च राज्ञां राष्ट्रञ्च नश्यति। तस्मात् सर्व्वप्रयत्नेन लिङ्गं कुर्य्यात् सुलक्षणम्। इत्यादिना सुलक्षणलिङ्गस्यैव फलदातृत्वमुक्तम्।

लिङ्गार्च्चनतन्त्रे द्वितीयपटले॥ देव्युवाच॥ इन्द्रियैरहितो देवः शून्यरूपः सदाशिवः। आकारो नास्ति देवस्य किं तस्य पूजने फलम्॥ शिव उवाच॥ प्रेते पूजा महेशानि! कदाचि-न्नास्ति पार्व्वति!। रुद्रस्य परमेशानि! रौद्री शक्तिरितीरिता। रौद्री तु परमेशानि! आद्या कुण्डलिनी भवेत्। वर्त्तते परमे-शानि! ब्रह्मविष्णुशिवात्मिका। सार्द्धत्रिवलयाकारैः शिवं वेष्ट्य सदा स्थिता। शक्तिं विना महेशानि! प्रेतत्वं तस्य निश्चितम्। शक्तिसंयोगमात्रेण कर्म्मकर्त्ता सदाशिवः। अतएव महेशानि! पूजयेच्छिवलिङ्गकम्॥ इति सशक्तिकशिवलिङ्गपूजनफलम्॥

मातृकातन्त्रे सप्तमपटले॥ देव्युवाच॥ लिङ्गप्रमाणं देवेश! कथयस्व मयि प्रभो!। पार्थिवे च शिलादौ च विशेषो यत्र यो भवेत्॥ श्रीशिव उवाच॥ मृत्तिकातोलकं ग्राह्यमथवा तोलकद्वयम्। एतदन्यन्न कुर्व्वीत कदाचिदपि पार्व्वति!॥ षट्-कर्म्मदीपिकाधृतविश्वसारतन्त्रेऽपि॥ मृत्तिकातोलकं ग्राह्यमथ-वा तोलकद्वयम्। त्रिसूत्रस्य प्रमाणेन घटनं कारयेद्बुधः। स्वाङ्गुष्ठपर्व्वमाणन्तु कृत्वा लिङ्गं प्रपूजयेत्। मृदादिलिङ्गघटने

प्रमाणं परिकीर्त्तितम्। फलमुक्तमवाप्नोति अन्यथा चेत्तदन्यथा। त्रिसूत्रीकरणमुक्तं कालोत्तरे॥ लिङ्गे वेद्यां तथा पीठे समसूत्रनिपातनात्। समञ्चैव विजानीयात् त्रिसूत्रीकरणन्त्विदम्। तत्र मृत्तिकाभेदेन ब्राह्मणादीनां पूजाफलस्य प्रशस्तत्वमुक्तम्॥ लिङ्गार्च्चनतन्त्रे तृतीयपटले॥ चतुर्द्धा पार्थिवं लिङ्गं मृत्स्नाभेदेन पार्वति!। शुक्लं रक्तं तथा पीतं कृष्णञ्च परमेश्वरि!। शुक्लन्तु ब्राह्मणे शस्तं क्षत्रिये रक्तमिष्यते। पीतन्तु वैश्यजातौ स्यात् कृष्णं शूद्रे प्रकीर्त्तितम्॥ तथा॥ शुक्लं हि पार्थिवं लिङ्गं निर्म्माय यस्तु पूजयेत्। स एव परमेशानि! त्रिवर्गफलभाग्भवेत्। क्षत्रियस्तु वरारोहे! रक्तं निर्माय पार्थिवम्। पूजयेत् सततं यस्तु त्रिवर्गफलमाप्नुयात्। हरितं पार्थिवं देवि! निर्म्माय यस्तु पूजयेत्। स च वैश्यो महेशानि! त्रिवर्गफलभाग्भवेत्। कृष्णं हि पार्थिवं लिङ्गं निर्म्माय यस्तु पूजयेत्। स शूद्रः परमेशानि! त्रिवर्गफलभाग्भवेत्॥ मातृकाभेदतन्त्रे॥ शिलादौ च महेशानि! स्थूलञ्च फलदायकम्। अङ्गुष्ठमानं देवेशि! यद्वा हेमाद्रिमात्रकम्। क्रमेण देवदेवेशि! फलं बहुविधं लभेत्। स्थूलात् स्थूलतरं लिङ्गं रुद्राक्षं परमेश्वरि!। पूजनाद्धारणाद्देवि! फलं बहुविधं स्मृतम्। स्थूलात् स्थूलतरमिति पार्थिवलिङ्गेतरपरम्। मृत्तिकातोलकमिति प्रागुक्तविशेषवचनादिति। शिलास्फटिकमरकतादीनां पञ्चसूत्रीकरणमुक्तम् लैङ्गे यथा॥ शिवलिङ्गस्य यन्मानं तन्मानं दक्षसव्ययोः। योन्यग्रमपि यन्मानं तदधोऽपि यथा भवेत्॥ तन्त्रान्तरे॥ लिङ्गस्य यादृग् विस्तारः परिणामोऽपि तादृशः। लिङ्गस्य द्विगुणा वेदी योनिस्तदर्द्धसम्मिता। कुर्वीताङ्गुष्ठतो न्यूनं न कदाचिदपि क्वचित्। रत्नादिशिवनिर्माणे मानमिच्छावशाद्भवेत्॥ लिङ्गशब्दव्युत्पत्तिस्तु स्कन्दपुराणे। आकाशं

लिङ्गमित्याहुः पृथिवी तस्य पीठिका। आलयः सर्वदेवानां लयनाल्लिङ्गमुच्यते॥ लिङ्गमहिमा तु वीरमित्रोदयधृतस्कन्दपुराणे॥ शिव उवाच॥ न तुष्याम्यर्च्चितोऽर्च्चायां पुष्पधूपनिवेदनैः। लिङ्गेऽर्च्चिते तथात्यर्थं परं तुष्यामि पार्वति!। एवं देवि! पुरा कृत्ये जितोऽहं सर्वदैवतैः। लिङ्गत्वाल्लिङ्गमित्युक्तं सदेवासुरकिन्नरैः। प्रयच्छामि दिवं देवि! यो मल्लिङ्गार्च्चने रतः। त्यक्त्वा सर्वाणि पापानि निर्गदो दग्धकल्मषः। मन्मना मन्नमस्कारी मामेव प्रतिपद्यते। द्रव्यविशेषेण पूजादिफलमपि तत्रैव॥ वस्त्रपूतजलैर्लिङ्गं स्नपयित्वा मम मानवः। लक्षाणाश्चाश्वमेधानां फलमाप्नोति सत्तमः। सुगन्धिचन्दनरसैर्लिङ्गमालिप्य भक्तितः। आलिप्यते सुरस्त्रीभिः सुगन्धैर्यच्चकर्दमैः॥ लिङ्गपूजाकरणदोषः तत्पूजाफलञ्च तत्रैव शिवनारदसंवादे॥ विना लिङ्गार्च्चनं यस्य कालो गच्छति नित्यशः। महाहानिर्भवेत्तस्य दुर्गतस्य दुरात्मनः। एकतः सर्वदानानि व्रतानि विविधानि च। तीर्थानि नियमा यज्ञा लिङ्गाराधनमेकतः। न लिङ्गाराधनादन्यत् पुरा वेदे चतुर्ष्वपि। विद्यते सर्वशास्त्राणामेष एव सुनिश्चितः। भुक्तिमुक्तिप्रदं लिङ्गं विविधापन्निवारणम्। पूजयित्वा नरो नित्यं शिवसायुज्यमाप्नुयात्। सर्वमन्यत् परित्यज्य क्रियाजालमशेषतः। भक्त्या परमया विद्वान् लिङ्गमेकः प्रपूजयेत्॥ मत्स्यसूक्ते षोड़शपटले॥ अश्वमेधसहस्राणि वाजपेयशतानि च। महेशार्चनपुण्यस्य कलां नार्हन्ति षोड़शीम्॥ लिङ्गपुराणे॥ बहुनात्र किमुक्तेन चराचरमिदं जगत्। शिवलिङ्गं समभ्यर्च्य स्थितमत्र न संशयः॥ मातृकाभेदतन्त्रे॥ शिवस्य पूजनाद्देवि! चतुर्वर्गाधिपो भवेत्। अष्टैश्वर्य्ययुतो मर्त्यः शम्भुनाथस्य पूजनात्। स्वयं नारायणः प्रोक्तो यदि शम्भुं प्रपूजयेत्। स्वर्गे मर्त्ये च पाताले ये देवाः सं-

स्थिताः सदा। तेषां पूजा भवेद्देवि! शम्भुनाथस्य पूजनात्॥ षट्कर्म्मदीपिकाधृतकालोत्तरे नारदवाक्यम्॥ असारे खलु संसारे सारमेतच्चतुष्टयम्। काश्यां वासः सतां सङ्गो गङ्गाम्भः शम्भुपूजनम्॥ स्कन्दपुराणे॥ अग्निहोत्रास्त्रिवेदाश्च यज्ञाश्च बहुदक्षिणाः॥ शिवलिङ्गार्च्चनस्यैते कोट्यंशेनापि ते समाः। छित्त्वा भित्त्वा च भूतानि हित्वा सर्व्वमिदं जगत्। यजेद्देवं विरूपाक्षं न स पापेन लिप्यते। अनेकजन्मसाहस्रं भ्राम्यमाणश्च योनिषु। कः समाप्नोति वै मुक्तिं विना लिङ्गार्च्चनं नरः॥ वीरमित्रोदयधृतस्कन्दपुराणे॥ ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वाप्यनुलोमजः। पूजयेत् सततं लिङ्गं तत्तन्मन्त्रेण सादरम्। तत्तन्मन्त्रेणेति यथायोग्यं वैदिकतान्त्रिकनाममन्त्रेणेत्यर्थः॥ लिङ्गपुराणे॥ मूले ब्रह्मा तथा मध्ये विष्णुस्त्रिभुवनेश्वरः। रुद्रोपरि महादेवः प्रणवाख्यः सदाशिवः। लिङ्गवेदी महादेवी लिङ्गं साक्षान्महेश्वरः। तयोः सम्पूजनान्नित्यं देवी देवश्च पूजितौ॥

अथ पारदशिवलिङ्गमाहात्म्यम्॥ मातृकाभेदतन्त्रे अष्टमपटले॥ ज्योतिर्म्मयं महालिङ्गं कैलासनगरे प्रिये!। तस्यैव षोड़शांशैकः काश्यां विश्वेश्वरः स्थितः। पूर्णलिङ्गं महेशानि! शिवबीजं न चान्यथा। शिलामध्ये यथाचक्रं लक्ष्मीनारायणः परम्। पारदस्य शतांशैको लक्ष्मीनारायणो न हि। पकारं विष्णुरूपञ्च आकारं कालिका स्वयम्। रेफं शिवं दकारञ्च ब्रह्मरूपं न चान्यथा। पारदं परमेशानि! ब्रह्मविष्णुशिवात्मकम्। यो यजेत् पारदं लिङ्गं स एव शम्भुरव्ययः। आजन्ममध्ये यो देवि! एकदा यदि पूजयेत्। स एव धन्यो देवेशि! स ज्ञानी स च तत्त्ववित्। स ब्रह्मवेत्ता स धनी स राजा भुवि पूज्यते। अणिमादिविभूतीनामीश्वरः साधकोत्तमः॥

अथ पारदशिवलिङ्गनिर्माणविधिः॥ तत्रैव॥ पारदे शिव-

निर्माणे नानाविघ्नं यतः प्रिये !। अतएव महेशानि ! शान्ति-स्वस्त्ययनं चरेत्। पारदं शिववीजं हि ताड़नं न हि कारयेत्। ताड़नाद्वित्तनाशः स्यात्ताड़नाद्वित्तहीनता। ताड़नाद्रोगयुक्तत्वं ताड़नान्मरणं भवेत्। द्वादशं पार्थिवं लिङ्गमुपचारैश्च षोड़शैः॥ पट्टादिसूत्रनिर्म्माणरचितं शुक्लमेव वा। पुरुषस्य यथायोग्यं युग्मवस्त्रं निवेदयेत्। भोगयोग्यं प्रदातव्यं मधुपर्कं कुले-श्वरि!। अलङ्कारं यथाशक्ति दद्यात् कल्याणहेतवे। पूजयेद् बहुयत्नेन विल्वपत्रेण पार्वति !। तोड़लोक्तेन विधिना प्रत्येके-नायुतं जपेत्। आदौ पञ्चाक्षरं मन्त्रमष्टोत्तरशतं जपेत्। पूजान्ते प्रजपेत् पश्चात् प्रसादाख्यं महामनुम्। दक्षिणान्तं समाचर्य्य हविष्याशी जितेन्द्रियः। ताम्बूलञ्च तथा मत्स्यं वर्जयेन्न क-दाचन। अस्मिंस्तन्त्रे हविष्यान्नं ताम्बूलं मीनमुत्तमम्। होम-येत् परमेशानि ! दशांशं वा शतांशकम्। होमस्य दक्षिणा कार्य्या तदा विघ्नैर्न लिप्यते। ततः परस्मिन् दिवसे पारद-मानयेत् सुधीः। तस्योपरि जपेन्मन्त्रं सर्वबन्धं नवात्मकम्। व्योमवीजं शिवार्णञ्च वर्णाद्यं विन्दुमस्तकम्। वायुवीजं चेन्दुयुतं त्रितयं त्र्यम्बकं प्रिये !। इमं मन्त्रं महेशानि ! प्रजपेदौषधोपरि। पारदे प्रजपेन्मन्त्रमष्टोत्तरशतं यदि। तदै-वौषधयोगेन बद्धो भवति नान्यथा। ततः परस्मिन् दिवसे शृणु वः प्राणवल्लभे !। वरयेत् सर्वकर्त्तारं यथोक्तविभवावधि। सुवर्णं चम्पकाकारं कर्णयुग्मे निवेशयेत्। चतुष्कोणयुतं स्वर्णं ग्रीवायां सुमनोहरम्। हस्तद्वये महेशानि ! दद्याद्वलययुग्मकम्। वलयं शुक्लवर्णञ्च अङ्गुरीयं तथैव च। ऊर्मीं दद्यात् पीतवर्णां क्षौम-वस्त्रयुगं शिवे !॥ ऊर्मीं अङ्गुरीयकम्। एवं कृत्वा महेशानि ! शिवरूपं विचिन्तयेत्।

अथातः सम्प्रवक्ष्यामि विधानं शृणु पार्वति !। प्रस्तरे

चैव संस्थाप्य झिण्टीपत्ररसेन च। प्रणवेण समालोड्य कुर्य्यात् कर्दमवत् प्रिये!। निर्माणयोग्यं तद्द्रव्यं यदि स्यात् सुरसुन्दरि!। तदा निर्माय तल्लिङ्गं पुनर्दृढ़तरं चरेत्। खपुष्पसंयुते वस्त्रे अङ्गारे च करीषके। किञ्चिदुष्णं प्रकर्त्तव्यं यतो दृढ़तरं भवेत्। अवधूतेरुच्यते। मुण्डरिलिज्जे सूतपर ओचकोदिज्जे मण्डलभरके खलकरिज्जे। ओहो ययायकादे प्राय ओच्छे शिवनिर्माय। ओचमि दिज्जे जड़के पाणि वज्रसमानकरके जानि॥ इति पारदशिवलिङ्गनिर्माणविधिः॥

शिवलिङ्गोत्पत्तिस्तु नारदपञ्चरात्रे तृतीयरात्रे प्रथमाध्याये नारदब्रह्मसंवादे॥ यथा॥ ब्रह्मोवाच॥ पुरा त्वं चञ्चलं ज्ञात्वा त्वदग्रे न प्रकाशितम्। इदानीं योगिनां ज्ञात्वा कथयामि न संशयः। अतिगुह्यमतिगुह्यमतिगुह्यं न संशयः। गोपितव्यं गोपितव्यं गोपितव्यं त्वयापि च। शम्भुना गोपितं तन्त्रे तन्त्रान्तरे प्रकाशितम्। शृणु तत्कथयाम्यद्य सावधानावधारय। सर्गादौ विविधाः सर्गा मया सृष्टा हि नारद!। देवदानवदैत्याश्च गन्धर्वयक्षराक्षसाः। सर्वे स्त्रीवशगाः श्रेष्ठा मैथुनाज्जायते प्रजा। केवलं हि शिवः शम्भुर्दारग्रहणकर्म्मणि। कदापि न मनश्चक्रे दृष्ट्वा चिन्तापराः सुराः। मामेव शरणं जग्मुः सेन्द्रा देवासुरादयः। प्रणिपत्य स्तुतिं कृत्वा उपतस्थुः समाहिताः। प्रोचुः प्राञ्जलयः सर्वे भयाद्गद्गदमानसाः॥ देवाद्या ऊचुः॥ उद्वाहिता वयं सर्वे भवानपि जनार्दनः। केवलं हि महादेवो देवदेवो जगत्पतिः। विवाहे न मनश्चक्रे कया वा मोह्यते शिवः। उपायं चिन्तय विभो! सदारः कथमीश्वरः। येन स्याज्जगतां नाथस्तत् कुरुष्व दयानिधे!। इति श्रुत्वा वचस्तेषां ततो ब्रह्मा प्रजापतिः। सह तैर्गरुड़ारूढ़ं जगाम कमलासनः। उवाच तं जगन्नाथं विष्णुं कमललोचनम्॥ ब्रह्मोवाच॥ सृष्टा

मया सुरश्रेष्ठ! मानुषा मैथुनोद्भवाः। सर्व्वे स्त्रैणा विना शम्भु यत् कर्त्तव्यं वदस्व मे॥ श्रीभगवानुवाच॥ एभिः सह महाबाहो! गच्छामस्त्वमहं शिवम्। कर्त्तव्यं सूचितं तेन अनुज्ञाते यथाविधि। किन्तु तद्योग्यनारीन्तु विवाहार्थं प्रकल्पय॥ ब्रह्मोवाच॥ दक्षं गच्छामहे सर्व्वे अनुज्ञापय तं हरे!। आद्याशक्तिं महामायां प्रसादयतु वै लघु। कन्या भूत्वा महाशम्भुं मोहयिष्यति शङ्करम्। एवमुक्त्वा तु तैः सार्द्धं जग्मतुर्विधिकेशवौ। यत्र दक्षो महातेजाः प्रोचतुः कार्य्यमात्मनः। उवाच दक्षं तद्युक्तं तपस्तप्तुं प्रजापतिः। ब्रह्मा विष्णुश्च सर्व्वे ते तपसा तोषयेच्छिवाम्। आविर्बभूव सा देवी कालिका जगदीश्वरी। प्राह मां वः किमर्थन्तु समुत्कण्ठाः सुरासुराः॥ देव्युवाच॥ शीघ्रं रूपं यथाकामं भवतां प्रार्थने फलम्। अचिरात्तत् प्रदास्यामि सत्यं सत्यं न संशयः॥ देवाद्या ऊचुः॥ भूत्वा तु दक्षकन्या त्वं शङ्करं परिमोहय। अस्माकं वाञ्छितञ्चैतत् कुरु सिद्धिं सदाशिवे!। एतत् श्रुत्वा वचस्तेषां निरीक्ष्य कमलासनम्। उवाच वचमि याविष्टा कालिका जगदीश्वरी॥ देव्युवाच॥ शम्भुरद्यतनो बालः किं मां सन्तोषयिष्यति। मम योग्यं पुमांस्त्वन्तु अन्यं वै परिकल्पय॥ ब्रह्मोवाच॥ शम्भुः सर्व्वगुरुर्देवो ह्यस्माकं परमेश्वरः। महासत्त्वो महातेजाः स ते तोषं करिष्यति। शम्भुतुल्यः पुमान्नास्ति कदाचिदपि कुत्रचित्। इत्युक्ता ब्रह्मणा देवी वाचमित्याह चेश्वरी। दक्षाय दर्शनं दत्त्वा उवाच उच्चतावरः। दक्षोऽपि दृष्ट्वा तां देवीं खड्गकर्त्तृधरां पराम्। खर्व्वां लम्बोदरीं व्याघ्रचर्म्मावृतकटिस्थलीम्। नीलोत्पलकपालाढ्यकरयुग्मां वरप्रदाम्। कृतकृत्यमिवात्मानं मेने दक्षः प्रजापतिः॥ दक्ष उवाच॥ यदि मे वरदासि त्वं देवानामपि वाञ्छितम्। मदीयतनया भूत्वा शङ्करं किल मोहय। तथेत्युक्त्वा जगद्धात्री

अन्तर्द्धानं गता तदा। देवताश्च ततो नत्वा यत्र तेपे तपो हरः। सस्त्रीकाः परमात्मानमुपतस्थुर्जगत्पतिम्। प्रणेमुस्तुष्टुवुर्भक्त्या प्राहुर्गद्गदभाषिणः॥ देवाद्या ऊचुः॥ भगवन्! देवदेवेश! लोकनाथ! महाशय!। वयं सर्वे तु सस्त्रीकाः सृष्ट्यर्थं परमेश्वर!। अतस्त्वं कुरु चोद्वाहं सृष्टिरक्षा यथा भवेत्। दक्षगेहे महाकाली मायेति परिकीर्त्तिता। जाता ते प्रीतये शम्भो! सा ते योग्या न संशयः॥ ईश्वर उवाच॥ भवतां प्रीतये सम्यक् करिष्ये नात्र संशयः। उद्‌योगः क्रियतां क्षिप्रं विवाहाय ममैव हि। इत्युक्तास्तु सुराः सर्वे ईश्वरेण महात्मना। कृतकृत्या गताः सर्वे भवनं सर्वसुन्दरम्। दक्षाय कथयामासुः शङ्करेणोदितं वचः। ततो विवाहं निर्वर्त्य कृतकृत्या यथा गताः। गताः सर्वे महेशोऽपि सत्या सह तदा गृहम्। जगाम रेमे सत्या च चिरं निर्भरमानसः। अथ काले कदाचित्तु सत्या सह महेश्वरः। रेमे न शेके तं सोढुं सती श्रान्ताभवत्तदा। उवाच दीनया वाचा देवदेवं जगद्‌गुरुम्। भगवन्न हि शक्नोमि तव भारं सुदुःसहम्। क्षमस्व मां महादेव! कृपां कुरु जगत्पते!। निशम्य वचनं तस्या भगवान् वृषभध्वजः। निर्भरं रमणं चक्रे गाढ़ं निर्दयमानसः। कृत्वा सम्पूर्णरमणं सती च त्यक्तमैथुना। उत्थानाय मनश्चक्रे उभयोस्तेज उत्तमम्। पपात धरणीपृष्ठे तैर्व्याप्तमखिलं जगत्। पाताले भूतले स्वर्गे शिवलिङ्गास्तदाभवन्। तेन भूता भविष्याश्च शिवलिङ्गाः सयोनयः। यत्र लिङ्गं तत्र योनिर्यत्र योनिस्ततः शिवः। उभयोश्चैव तेजोभिः शिवलिङ्गं व्यजायत॥ इति शिवलिङ्गोत्पत्तिकथनम्॥

शिवलिङ्गपूजायां सर्वेषामधिकार उक्त उत्पत्तितन्त्रे चतुःषष्टिपटले॥ शाक्तो वा वैष्णवो वापि सौरो वा गाणपोऽथवा।

शिवार्च्चनविहीनस्य कुतः सिद्धिर्भवेत्प्रिये!। अनाराध्य च मां देवि! योऽर्च्चयेद्देवतान्तरम्। न गृह्णाति महादेवि! शापं दत्त्वा व्रजेत् पुरम्। पर्वताग्रसमं देवि! मिष्टान्नादिक्रमेण हि। फलानि बहुलान्येव पुष्पाण्येव यथाविधि। सुमेरुसदृशं चान्नं नानाविधं महेश्वरि!। सूपादिकं महेशानि! यदि स्यात् सागरोपमम्। यद्दत्तं पुष्पनैवेद्यं सर्वं विष्ठामयं भवेत्। शिवार्च्चनविहीनो यः पूजयेद्देवतान्तरम्। विशेषतः कलियुगे स नरः पापभाग्भवेत्। लिङ्गार्च्चनतन्त्रे प्रथमपटलेऽपि॥ सर्वपूजासु देवेशि! लिङ्गपूजा परं पदम्। लिङ्गपूजां विना देवि! अन्यपूजां करोति यः। विफला तस्य पूजा स्यादन्ते नरकमाप्नुयात् तस्माल्लिङ्गं महेशानि! प्रथमं परिपूजयेत्। यद्राज्यं लिङ्गपूजायां रहितं सततं प्रिये!। तद्राज्यं पतितं मन्ये विष्ठाभूमिसमं स्मृतम्। ब्रह्म विट् क्षत्रियो देवि! यदि लिङ्गं न पूजयेत्। तत्क्षणात् परमेशानि! त्रयश्चाण्डालतामियुः। शूद्रस्य परमेशानि! सदा शूकरवद्भवेत्। शिवार्च्चनन्तु देवेशि! यस्मिन् गेहे विवर्ज्जितम्। विष्ठागर्त्तसमं देवि! तद्गृहं विद्धि पार्वति!। अन्नं विष्ठा पयो मूत्रं तस्मिन् वेश्मनि पार्वति!। शाक्तो वा वैष्णवो वापि शैवो वा परमेश्वरि!। आदौ लिङ्गं प्रपूज्याथ विल्वपत्रैर्वरानने!। पश्चादन्यं महेशानि! लिङ्गं प्रार्थ्य प्रपूजयेत्। अन्यथा मूत्रवत् सर्वं शिवपूजां विना प्रिये!॥ वीरमित्रोदयधृतस्कन्दपुराणे शिवलिङ्गमधिकृत्य॥ दर्शनात् स्पर्शनात्तस्य लभन्ते निर्वृतिं नराः। तस्य पुण्यं मया वक्तुं सम्यग्युगशतैरपि। शक्यते नैव विधिवत्तस्मात् तं स्थापयेच्छिवम्। सर्वेषामेव वर्णानां विभोर्दिव्यं वपुः शुभम्। सुकृतं भावनायोग्यं योगिनां निष्फलं तथा। शिवलिङ्गं समुल्लङ्घ्य योऽर्च्चयेदन्यदेवताः।

स नृपः सह देशेन रौरवं नरकं व्रजेत्। ब्रह्मादयः सुराः सर्वे राजानः समहर्षिकाः। मानवा मुनयश्चैव सर्वे लिङ्गं यजन्ति च। विष्णुर्नारायणो हत्वा ससैन्यं ब्रह्मणः सुतम्। स्थापितं विधिवद्भक्त्या लिङ्गं तीरे नदीपतेः। कृत्वा पापसहस्राणि हत्वा विप्रशतं तथा। पापात् समाश्रितो लिङ्गं मुच्यते नात्र संशयः। सर्वे लिङ्गमया लोकाः सर्वे लिङ्गे प्रतिष्ठिताः। तस्मा-दभ्यर्चयेल्लिङ्गं यदीच्छेच्छाश्वतं पदम्। सर्वं लिङ्गमयं लोकं सर्वं लिङ्गे प्रतिष्ठितम्। तस्मात् सर्वप्रयत्नेन स्थापयेत् पूज-येच्च तत्। ब्रह्मा हरश्च भगवान् विश्वे देवा उमा हरिः। लक्ष्मीर्धृतिः स्मृतिः प्रज्ञा विधिर्दुर्गा शची तथा। रुद्राश्च वसवः स्कन्दो विशाखः शाख एव च। नैगमेशश्च भगवान् लोकपाला ग्रहास्तथा। सर्वे नन्दिपुरोगाश्च गणा गणपतिः प्रभुः। पितरो मुनयः सर्वे कुवेराद्याश्च सत्तमाः। आदित्या वसवः साध्या अश्विनौ च भिषग्वरौ। विश्वे देवाः सम-रुतः पशवः पक्षिणो मृगाः। ब्रह्मादि स्थावरं यच्च सर्वं लिङ्गे प्रतिष्ठितम्। तस्मात् सर्वप्रयत्नेन स्थापयेल्लिङ्गमैश्वरम्। यत्नेन स्थापितं लिङ्गं पूजयेद्यदि मानवः॥ अन्यत्रापि॥ मूले ब्रह्मा वसति भगवान् मध्यभागे च विष्णुरग्रे शम्भुः पशुपतिरजो रुद्रमूर्त्तिर्वरेण्यः। तस्माल्लिङ्गं गुरुसुरतरुं स्थापयेत् पूजयेद्वा यस्मात् पूज्यो गणपतिरसौ देवमुख्यैः समस्तैः। गन्धैः पुष्पैः सुगन्धैर्बहुतरबलिभिः स्तोत्रमन्त्रोपचारैर्नित्यश्चाभ्यर्चयन्ति त्रिदशवरनुतं लिङ्गमूर्त्तिं महेशम्। गर्भाधानादिनाशस्त्वथ भयरहिता देवगन्धर्वमुख्यैः सिद्धैर्वन्द्याश्च पूज्या गणवरनमितास्ते भजन्त्यप्रमेयाः॥ तस्माद्भक्त्योपचारेण स्थापयेत् परमेश्वरम्। पूजयेच्च विशेषेण लिङ्गं सर्वार्थसिद्धये॥ तथा। तस्मात् सदा पूजनीयो लिङ्गमूर्त्तिर्महेश्वरः। यावत् पूजा सुरेशस्य तावद्देह-

स्थितिर्दिवि। पूजनीयः शिवो नित्यमतः श्रद्धासमन्वितैः। सर्वं लिङ्गमयं लोकं सर्वं लिङ्गे प्रतिष्ठितम्। तस्मात् सम्पूजये-ल्लिङ्गं यदीच्छेत् सिद्धिमात्मनः॥ सर्वे लिङ्गार्चनादेव देवा दैत्याश्च दानवाः। यक्षा विद्याधराः सिद्धा राक्षसाः पिशिता-शिनः। अर्चयित्वा लिङ्गमूर्त्तिं संसिद्धा नात्र संशयः। तस्माल्लिङ्गं यजेन्नित्यं येन केनापि भोः! सुराः!॥ तथा। ये वाञ्छन्ति महाभोगान् राज्यं वा त्रिदशालये। तेऽर्चयन्तु सदाकालं लिङ्गरूपं महेश्वरम्। छित्त्वा भित्त्वा च भूतानि हत्वा सर्वमिदं जगत्। यजेदेकं विरूपाक्षं न स पापैः प्रलिप्यते॥ एतानि वीरमित्रोदयधृतानि॥

अथ त्रैकालिकलिङ्गपूजाफलम्॥ मत्स्यसूक्ते॥ प्रातरुत्थाय यो लिङ्गं भक्त्या सम्पूजयेत् क्वचित्। कपिलानां शतं दत्त्वा यत् फलं तदवाप्नुयात्। मध्यन्दिनकरे प्राप्ते यो लिङ्गं प्रतिपूजयेत्। सम्पूर्णां पृथिवीं दत्त्वा यत् फलं तदवाप्नुयात्॥ तथा॥ अष्टोत्तरसहस्रन्तु प्रत्यहं पूजयेच्छिवम्। एककालं त्रिकालं वा स पुनाति कुलत्रयम्। अष्टाष्टकं वा देवेशि! शतं वापि तदर्द्धकम्। तदेव सकलं विन्द्याम्नकारस्थसहस्र-कम्। द्रव्यमायुः स्त्रियं पुत्रान् यच्चान्यन्मनसेप्सितम्। स्फाटिकं लिङ्गमासाद्य यजमानः समश्नुते। वरं प्राणपरित्यागः शिरसो वापि कर्त्तनम्। न चैवापूज्य युञ्जीत शिवलिङ्गं महेश्वरम्॥ षट्कर्मदीपिकाधृतस्कन्दपुराणेऽपि॥ प्रातरुत्थाय यो लिङ्गं भक्त्या सम्पूजयेत् सकृत्। कपिलालक्षदानेन यत् फलं तदवाप्नुयात्। मध्यन्दिनकरे प्राप्ते यो लिङ्गं परिपूजयेत्। सम्पूर्णां पृथिवीं दत्त्वा यत् फलं तदवाप्नुयात्। वारुणीमा-श्रिते सूर्य्ये शिवं समर्च्चयेत्तु यः। गवां शतसहस्रस्य दत्तस्य फलमाप्नुयात्॥

अथ कामनाभेदे पार्थिवशिवलिङ्गसङ्ख्या वीरमित्रोदयधृता यथा॥ संख्या पार्थिवलिङ्गस्य यथाकामं निगद्यते। मृल्लिङ्गं पार्थिवं नाम भुक्तिमुक्तिकरं परम्। देशकालादिकं ज्ञात्वा कुर्य्याल्लिङ्गं फलप्रदम्। न करोति यदा ज्ञात्वा न कार्य्यं तस्य सिध्यति। विद्यार्थी शतसाहस्रं धनार्थी च तदर्द्धकम्। पुत्रार्थी सार्द्धसाहस्रं कन्यार्थी च शतत्रयम्। विद्वान् लिङ्गायुतं कुर्य्यात् सर्व्वपापहरं परम्। राज्यार्थी शतसाहस्रं कान्तार्थी शतपञ्चकम्। मोक्षार्थी कोटिगुणितं भूतिकामः सहस्रकम्। रूपार्थी त्रिसहस्रन्तु तीर्थार्थी द्विसहस्रकम्। सुहृत्कामः सहस्रन्तु वस्त्रार्थं शतमष्टकम्। मारणार्थं सप्तशतं मोहनार्थं शताष्टकम्। उच्चाटनवशश्चैव सहस्रन्तु यथोक्ततः। स्तम्भने च सहस्रन्तु मारणे च तदर्द्धकम्। महाराजभये पञ्चशतञ्चापदि सङ्कटे। सहस्रमयुतं सर्व्वकामदं परिकीर्त्तितम्। एकं पापहरं प्रोक्तं द्विलिङ्गं चार्थसिद्धिदम्। त्रिलिङ्गं सर्व्वकामानां कारणं परमीरितम्॥ तथा॥ लिङ्गानामयुतं कृत्वा पूजा राजभयं हरेत्। सहस्राणि च लिङ्गानां निगडान्मोचयेद्ध्रुवम्। कारागृहविमुक्त्यर्थमयुतं कारयेद्बुधः॥ डाकिन्यादिभये पञ्चसहस्रं कारयेत्तदा। सहस्राणाञ्च पञ्चाशदपुत्रो हि प्रकारयेत्। लिङ्गार्च्चनतन्त्रे नवमपटले॥ अनेन च क्रमाद्देवि! लक्षं यस्तु प्रपूजयेत्। सर्व्वाभीष्टफलं देवि! लभते नात्र संशयः॥ तथा॥ एकीकृत्य महेशानि! युगलं न तु पूजयेत्। एकीकृत्य महेशानि! दशपञ्चशतानि च। प्रत्येकेनाथ वा देवि! विल्वपत्रैः प्रपूजयेत्। एकैकं पूजयेल्लिङ्गं युगलं न तु पूजयेत्। दरिद्रो जायते देवि! युगलस्य तु पूजनात्॥१॥ इति लिङ्गयुग्मपूजानिषेधः॥

इति श्रीप्राणतोषिण्यां पञ्चमे शक्तिकाण्डे शाखाकथनं नाम द्वितीयः परिच्छेदः॥

अथ शिवपूजा॥ मत्स्यसूक्ते महातन्त्रे पञ्चदशपटले॥ तीर्थमृत्स्नां समाहृत्य निर्म्माय लिङ्गमद्भुतम्। तीर्थाभावे महेशानि! नदीमृत्स्नां शुचिस्मिते!। नद्यभावे महेशानि! क्षुद्राया मृत्तिकां प्रिये!॥ नदीक्षुद्रयोर्लक्षणमपि॥ पर्वतप्रभवा देवि! नदीनाम्नीत्युदाहृतम्। एतद्भिन्ना महेशानि! नदी क्षुद्रा इति प्रिये!। निर्झरस्य च देवेशि! मृत्स्ना सम्पत्प्रदायिनी। तथा चैव सरोत्पन्ना नानासुखप्रदायिनी। सर्वाभावे महेशानि! गोष्पदस्थाञ्च मृत्तिकाम्। अथवा परमेशानि! यत्र चित्तं प्रसीदति। सुपीनं सुन्दरं रम्यं शर्करारहितं सदा। निर्म्माय पार्थिवं लिङ्गं कुण्डलीसहितं प्रिये!। यो लिङ्गं परमेशानि! स रुद्रः परमेश्वरः। कुण्डली वेष्टनी तस्याः सा देवी परमेश्वरी। शिवस्य पूजनाद्देवि! देवीदेवौ च पूजितौ। एकस्य पूजनाद्देवि! द्वयोरेव प्रपूजनम्॥ लिङ्गार्च्चनतन्त्रे द्वितीयपटले॥ मृत्स्ना तु परमेशानि! वर्णभेदेन सुन्दरि!। वर्णभेदेन ब्राह्मणादिवर्णभेदेन। वर्णभेदस्तु पूर्वमुक्तः। सम्मन्त्र्य मातृकामन्त्रैश्चानुलोमविलोमतः। जप्त्वा तु परमेशानि! दशधा परमेश्वरि!। इति मन्त्रं जपित्वा वै मृत्स्नां प्रार्थ्य वरानने!। सर्वशक्तिमये! देवि! मृत्तिके! त्रिदशेश्वरि!। निर्म्माय पार्थिवं लिङ्गं शिवपूजां करोम्यहम्। त्वयि कामश्च धर्मश्च तत्क्रमे सत्यपीश्वरि!। चतुर्वर्गप्रदे! देवि! नानारत्नविभूषिते!। त्वां विना परमेशानि! कुतो मोक्षः कुतः सुखम्। अर्थः कामश्च देवेशि! त्वां विना न हि जायते। ओँ ह्रीँ मृत्तिके! दुष्कृतिहरे! ह्रीँ ओँ। इति मन्त्रं समुच्चार्य्य गृह्णीयात् मृत्तिकां प्रिये!। ओँ हराय नम इति गृह्णीयाद्वा शुचिस्मिते!। अज्ञानात् परमेशानि! यो गृह्णीयात्तु मृत्तिकाम्। विफला तस्य सा पूजा पार्थिवस्य च लिङ्गके। निर्म्माय मातृकाम-

ह्रौं महेश्वराय नम इति प्रिये ! । उच्चार्य्य मातृकामन्त्रं शूल-पाणे ! ततः परम् । सुप्रतिष्ठितो भव इत्युच्चार्य्य मातृकां ततः । प्राणं नियोजयेद्देवि ! पार्थिवे शिवलिङ्गके । प्राणप्रतिष्ठा-मन्त्रेण प्राणान्नियोजयेत्ततः ॥ तोड़लतन्त्रे पञ्चमपटलेऽपि ॥ शृणु देवि ! प्रवच्यामि पार्थिवं शिवपूजनम् । तत्रादौ प्रीणये-द्देवि ! गुरुदेवमनन्यधीः । ओँ हराय नमस्कारं मृत्तिकामा-हरेत् सुधीः । महेश्वराय नमस्कारं निर्म्माय बहुयत्नतः । शूलपाणे ! इहोच्चार्य्य सुप्रतिष्ठितो भवेति च । अनेन मनुना देवि ! जीवन्यासं समाचरेत् । हकारं विन्दुसंयुक्तं दीर्घयुक्तं षड़ङ्गकम् ॥ लिङ्गार्च्चनतन्त्रे ॥ भूतशुद्धिं महेशानि ! प्रथमं परि-कीर्त्तितम् । ततस्तु मातृकान्यासं कुर्य्यात् परमयत्नतः । प्राणा-यामं ततः कृत्वा शिवं ध्यायेत् शुचिस्मिते ! ॥ ध्यानन्तु तोड़लतन्त्रे ॥ तस्य ध्यानं प्रवच्यामि शृणुष्व सुसमाहिते ! । ओँ ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पो-ज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् । पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववीजं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रं ॥ रत्नाकल्पोज्ज्वलाङ्गमिति रत्नस्याकल्पो वेशस्तेनोज्ज्वलाङ्गं यस्य तम् । व्याघ्रकृत्तिश्चर्म्म वस आच्छादने तद्वसानं तदाच्छादकमित्यर्थः ॥ पुष्पं शिरसि स-न्धार्य्य मानसैः पूजनं चरेत् । पुनर्ध्यात्वा महेशानि ! शिरे पुष्पं निधाय च । पिनाकधृक् इति चोच्चार्य्य इहावह द्विधा वदेत् । इह तिष्ठ ततो द्वन्द्वं सन्निधेहि द्वयं इह । इह सन्निहितो भद्र ! खशब्दश्च ततो वदेत् । यावत्पूजां समुच्चार्य्य ततश्चैव करो-म्यहम् । स्नानीयञ्च पशुपतिं ङेयुतञ्च नमश्चरेत् ॥ पूजामन्त्रं तु वेदाद्यं योजयेद्देवि ! ब्राह्मणः साधकोत्तमः । वेदाद्यः प्रणवः । एतत्पाद्यं महेशानि ! षड़क्षरमतुं ततः । नमस्कारं समुच्चार्य्य

एव दद्यादिहचन्दन: ॥ षड़क्षरप्रमाणन्तु तत्रैव ॥ नकुलीशं समुद्धृत्य मनुस्वरविभूषितम्। विन्दुनादकलायुक्तं प्रसादाख्यं महेश्वरम्। नकुलीशो हकार:। मनुस्वर औकार:। अस्य मन्त्रस्य माहात्म्यमूर्द्धाम्नाये मयोदितम्। नमस्कारं समुद्धृत्य वान्तं नेत्रसमन्वितम्। वारुणं मुखवृत्तञ्च वायुं ललाटसंयुतम्। अमुं पञ्चाक्षरं मन्त्रं पञ्चाम्नायफलप्रदम्। प्रणवादिर्यदा देवि! तदा मन्त्र: षड़क्षर:। नमस्कारो नम इति स्वरूप:। वान्त: शकार:। नेत्रं प्रथमोपस्थितत्वाद्दक्षिणं तेन इकार:। वारुणो यकार:। मुखवृत्तमाकार:। वायुर्यकारो ललाटमकार:। प्रसादाख्यं समुद्धृत्य अर्द्धनारीश्वराय च। पुन: प्रसादमुद्धृत्य मन्त्रं परमगोपनम्। एवं बहुविधाकारं विग्रहं मे नगात्मजे!। पूजयित्वा महेशानि! चाष्टमूर्त्तीः प्रपूजयेत्। सर्वो भवस्तथा रुद्र उग्रो भीम: पशो: पति:। महादेवश्च ईशानो ङेयुतं कुरु यत्नत:। क्षितिं जलं तथा चाग्निं वायुञ्चाकाशमेव च। यजमानं तथा सोमं सूर्य्यञ्च मूर्त्तिना सह। सर्वत्र ङेयुतं कृत्वा पूजयेत् साधकोत्तम:। प्रणवादिनमोऽन्तेन वामावर्त्तेन पूजयेत्। मूर्त्तयोऽष्टौ शिवस्यैता: पूर्वादिक्रमयोगत:। आग्नेयान्ता: प्रपूज्यास्ता वेद्यां लिङ्गे शिवं यजेत्। अष्टोत्तरसहस्रं वा शतं वा प्रजपेत्तत:। ओं गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्। सिद्धिर्भवतु मे देव। त्वत्प्रसादात्त्वयि स्थिते। तत: स्तोत्रं समादाय जपञ्चैव समर्पयेत्। मुखवाद्यं तत: कृत्वा चाष्टाङ्गं प्रणमेत् सुधी:। संहारेण महादेव! क्षमस्वेति विसर्जयेत्। अथात: सम्प्रवक्ष्यामि सूत्रं परमगोपनम्। हरो महेश्वरश्चैव शूलपाणि: पिनाकधृक्। पशुपति: शिवश्चैव महादेव इति क्रमात्। अष्टमूर्त्तीस्ततो देवि! पूजयेत् साधकोत्तम:। ततो जपेन्महेशानि! मुखवाद्यं तत:

परम्। मन्त्रतन्त्रप्रकाशेऽपि ॥ मृदाहरणसङ्घट्टः प्रतिष्ठा ध्यानमेव च। स्थापनं पूजनञ्चैव विसर्जनमिति क्रमात्। हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक्। पशुपतिः शिवश्चैव महादेव इति क्रमात्। न प्राचीमग्रतः शम्भोर्नोदीचीं शक्तिसंश्रिताम्। न प्रतीचीं यतः पृष्ठमतो दक्षं समाश्रयेत्॥ तन्त्रान्तरे॥ शर्वो भवश्च रुद्रश्च तथोग्रो भीम एव च॥ पशुपतिः शिवश्चैव ईशानश्चेति कीर्त्तिताः। क्षितिर्जलं तथा वह्निर्वायुराकाशमेव च। यजमानश्च सोमश्च सूर्य्यश्चेत्यष्टमूर्त्तयः। वामावर्त्तेन वेद्याञ्च तं पूज्याष्टौ च मूर्त्तयः। यजमानः पूजक आत्मेति यावदत एव महिम्नः स्तवे-त्वमु! धरणिरात्मा त्वमिति च। इति पुष्पदन्तेनोक्तम्॥ वामावर्त्तेन वेद्याञ्च सम्पूज्याष्टौ च मूर्त्तयः॥ तथा॥ मूर्त्तयोऽष्टौ शिवस्यैताः पूर्वादिक्रमयोगतः। आग्नेयान्ताः प्रपूज्यास्ता वेद्यां लिङ्गे शिवं यजेत्॥ तोड़लमन्त्रे॥ एतदन्यन्न कर्त्तव्यं शक्तिदीक्षापरो यदि। निषिद्धाचरणाद्देवि! पापभाक् जायते नरः। न्यूनाधिकं महेशानि! यदि पूजादिकं चरेत्। स गुरुश्चापि शिष्यश्च शिवहत्यां प्रयच्छति। न्यूनाधिकं महेशानि! यदि चैकाक्षरं भवेत्। वर्णसंख्या महेशानि! ब्रह्महत्या भविष्यति। अतएव स पापिष्ठः सत्यं सत्यं सुरेश्वरि!॥ एवं पूजां विधायादौ ततश्चान्यान् प्रपूजयेत्। आदौ शिवं पूजयित्वा शक्तिपूजा ततः परं। ननु वा सूतवत् सर्वं गङ्गातोयं भवेद्यदि। अतएव महेशानि! आदौ लिङ्गं प्रपूजयेत्। लिङ्गार्चनतन्त्रे नवमपटले॥ सम्पूज्य पार्थिवं लिङ्गं गन्धपुष्पादिभिः प्रिये!। ततः पञ्चमुखे देवि! यद्दत्तं पुष्पचन्दनम्। नैवेद्य [illegible]विधं रम्यं सुगन्धं गन्धवर्जितम्। विल्वपत्रञ्च कह्लारं तग[illegible] मल्लिकां तथा। मालतीं यूथिकां देवि! करवीरं मनोह[illegible] पद्मञ्च

केतकीं कुन्दं तथा ह्यामलकीं प्रिये!। कुमुदं कोकनदञ्चैव सर्वञ्च वनसम्भवम्। दूर्वाञ्च तुलसीञ्चैव दत्त्वा सम्पूज्य पार्थिवम्। अन्यानि यानि पुष्पाणि धुस्तूरादीनि पार्वति!। धुस्तूरसदृशं पुष्पं मम ज्ञाने न विद्यते। गोकोटिदाने देवेशि! यत् फलं परमेश्वरि!। धुस्तूरस्य प्रदानेन समतां याति पार्वति!। यानि यानि च पुष्पाणि ब्रह्माण्डे भावितानि च। तानि सर्वाणि! देवेशि! सन्न्यस्य पार्थिवोपरि॥ यद्यप्यर्थकाण्डे पुष्पाण्युक्तानि तथाप्यत्र निषिद्धपुष्पाणां प्रतिप्रसवदर्शनार्थं पुनर्लिखितानीति न पौनरुक्त्यम्। यानि यानि च धूपानि दीपानि विविधानि च। अन्यानि उपचाराणि यथोक्तविधिना प्रिये!॥ दशमपटले॥ तथा तु विजयापत्रं सन्न्यस्य पार्थिवोपरि। दत्त्वा तु विजयापत्रमश्वमेधफलं लभेत्॥

लिङ्गस्य काम्यपूजा तु द्वादशपटले। पूर्वोक्तविधिना देवि! सम्पूज्य पार्थिवं हरम्। आत्मगेहे महेशानि! स्वशक्त्या च विनिर्मितम्। स्वशक्त्या स्वपत्न्या। चकारेणात्मगेहसम्बन्धिना अन्येन च विनिर्मितमित्यर्थः॥ षोड़शैरुपचारैश्च सम्पूज्य पार्थिवं शिवम्। एवं वत्सरपर्य्यन्तं सुभक्त्या पूजयेच्छिवम्। रहस्यं हि ततः पश्चात् मासि मासि शुचिस्मिते!। सम्पूज्य दिवसे लिङ्गं यावत्संख्यं वरानने!। तत्रादौ परमेशानि! तल्लिङ्गञ्च महेश्वरि!। आदाय निशि मध्ये तु गत्वा विल्वतरुं प्रिये!। अमावस्यां चतुर्दश्यां पौर्णमस्यां विशेषतः। कुजे वा शनिवारे वा सोमवारेऽपि पार्वति!। पूजितव्यं प्रयत्नेन नग्नो भूत्वा महेश्वरि!। विल्वपत्रैः प्रपूज्याथ सहस्रैः परमेश्वरि!। विल्वपत्रं महादेवि! कीटादिदोषवर्जितम्। कोमलं मधुरं पत्रं पत्रत्रययुतं प्रिये!। विल्वपत्रं विना देवि! न हि पूजां समाचरेत्। पूजयेत् पूर्ववद्देवि! यथानुष्ठानपूर्वकम्। ततः परं महेशानि!।

मन्त्रमुच्चार्य्य यत्नतः। विल्वपत्रं प्रदद्यात्तु एकैकेन पृथक् पृथक्। संशोध्य विधिवद्देवि! विल्वपत्रं वरानने!। एवं वत्सर-पर्य्यन्तं यः करोति प्रसन्नधीः। मनसा कार्य्यमुद्दिश्य एवं यस्तु प्रपूजयेत्। शीघ्रं काममवाप्नोति गणेशसदृशो भवेत्। अतः परं महेशानि! गर्त्तं कृत्वा ततः स्थले। निक्षिप्य लिङ्गं तत्रैव जप्वा तु तत्र तत्र वै। नमस्कृत्य महेशानि! क्षमस्वेति विसर्जयेत्। आत्मसमर्पणं कृत्वा रहस्यं परमेश्वरि!। यः करोति प्रसन्नात्मा स एव श्रीसदाशिवः॥ प्रत्यहं लिङ्गपूजनमपि तत्रैव॥ प्रत्यहं परमेशानि! यावज्जीवं धरातले। पूजयेत् परया भक्त्या लिङ्गं ब्रह्ममयं प्रिये!॥ मातृकाभेदतन्त्रे द्वादशपटले॥ शुद्धाशुद्धविचारो हि नास्ति तच्छिवपूजने। येन तेन प्रकारेण विल्वपत्रैः प्रपूजयेत्। सर्वसिद्धियुतो भूत्वा स नरः शिव एव हि। ब्रह्माण्डमध्ये ये देवास्तद्वाह्ये याश्च देवताः। ताः सर्वास्तृप्तिमायान्ति केवलं शिवपूजनात्॥

अथ शिवार्पितद्रव्यफलम्॥ तत्रैव॥ कुशाग्रमात्रं यत्तोयं तत्तोयेन यजेद्यदि। सत्यं सत्यं हि गिरिजे! तज्जलं सागरोपमम्। पुष्पञ्च मेरुसदृशं लिङ्गोपरिनियोजनात्। लिङ्गस्य मस्तके देवि! यदन्नं परितिष्ठति। तदन्नस्य च दानेन क्षितिदानफलं लभेत्। एकया दूर्वया वापि योऽर्चयेच्छिव-लिङ्गकम्। सर्वदेवस्य शीर्षे तु चार्घ्यदानफलं लभेत्। सामान्य-तोयमानीय यदि स्नायान्महेश्वरम्। सार्द्धत्रिकोटितीर्थस्य स्नानस्य फलभाग्भवेत्॥

अथ रिष्टशान्तिः॥ वीरमित्रोदयधृतपाराशरमाधवीययोः॥ सहस्रकलसैरद्भिरभिषेकं करोति यः। शिवाय विधिवन्मन्त्रै-श्चिरजीवी भवेन्नरः॥ एकाहशिवलिङ्गपूजाफलमपि तत्रैव॥ यः प्रदद्याद्गवां लक्षं दोग्ध्रीनां वेदपारगे। एकाहमर्च्चयेल्लिङ्गं

तस्मात् पुण्यं ततोऽधिकम्। तस्याश्वमेधादधिकं फलं भवति नान्यथा॥ लिङ्गस्य सार्वकालिकपूजाविशेषो मत्स्यसूक्ते॥ घृतेन स्नापितं लिङ्गं चन्दनेनानुलेपयेत्। कुङ्कुमैः स्नापयित्वा च पूजयेत्तदनन्तरम्। श्वेतेन वस्त्रयुग्मेन तथा मुक्ताफलैः शुभैः। यक्षकर्दमधूपेन पयसा पायसेन च। पद्मसूत्रस्य कर्त्त्या च घृतदीपेन वाप्यथ। पूजेयं सर्वशुक्ला स्यात् सर्वकामफलप्रदा॥ निरग्नेरपि लिङ्गपूजनेन साग्निकत्वम्॥ तदुक्तम् मातृकाभेदतन्त्रे॥ पुष्पं गन्धं जलं द्रव्यं लिङ्गोपरि नियोजयेत्। शिवमध्ये महावह्निः स तु रुद्रः प्रकीर्त्तितः। रुद्रोपरि क्षिपेद्यद्यत्तदेव भस्मतां गतम्। साक्षाद्धोमो महेशानि! शिवस्य पूजनाद्भवेत्। महायज्ञेश्वरो मर्त्त्यः शिवस्य पूजनाद्भवेत्॥ लिङ्गोपर्य्यर्पितद्रव्यस्याग्राह्यत्वमाह लिङ्गार्च्चनतन्त्रे द्वादशपटले॥ यद्यद्दत्तं महेशानि! शिवाय परमात्मने। तत्सर्वं परमेशानि! तत्‌क्षणात्तन्मयं भवेत्। यत्किञ्चिदुपचारं हि लिङ्गोपरि निवेदयेत्। तन्निर्माल्यं महेशानि! अग्राह्यं परमेश्वरि!॥ तस्याग्राह्यत्वनिदानञ्चानञ्च त्रयोदशपटले॥ तन्निर्माल्यं महादेव! ब्रह्मादीनां सुदुर्लभम्। अग्राह्यं तव निर्माल्यं कथं वदसि योगभृत्!॥ इति देवीप्रश्नानन्तरमीश्वरवचनम्॥

मध्यस्थानस्थितं यत्तु तन्मुखं परमेश्वरि!। श्यामलं तत्तु ईशानं सदा ऊर्द्ध्वं शुचिस्मिते!। तेजोमयं महेशानि! मुखमूर्द्ध्वं वरानने!। क्षीरोदमथने देवि। उत्थितं गरलं महत्॥ इत्यादि प्रस्तुत्य॥ ततः करतलीकृत्य तद्विषं परमेश्वरि!। ततः श्याममुखो देवि! निपीय तद्विषं प्रिये!। ततः प्रभृति देवेशि! मुखं ज्वालायते सदा। कण्ठे तु गरलं भुक्त्वा सदा तिष्ठति कामिनि!॥ चतुर्द्दशपटले॥ ईशानस्य महेशानि! स्नानं परमदुर्लभम्। यस्य श्रवणमात्रेण शिवपूजाफलं लभेत्।

ऐशानं तन्मुखं देवि! परं ब्रह्म वरानने!। पत्रं वा यदि वा पुष्पं जलं वा वरवर्णिनि!। अन्यद्धि परमेशानि! उपचारं मनोहरम्। यो दद्यात् परमेशानि! तन्मुखोपरि पार्वति!। अग्राह्यं तत्तु निर्माल्यं साक्षाद्‌ब्रह्ममयं यतः। एतत्तु परमेशानि! निर्माल्यं यस्तु धारयेत्। स भ्रष्टो जायते देवि! निष्कृतिर्नास्ति तस्य वै। अग्राह्यं मम निर्माल्यमत एव वरानने!। तथा। उपचारं स्थापयित्वा पूतं पात्रान्तरे प्रिये!। कृत्वा तु मन्त्रपूतं हि उपचारं निवेदयेत्। वामदेवादिषु सदा मुखेषु वरवर्णिनि!। भक्ष्यं मम देवेशि! ब्रह्माण्डक्षमकारकम्। एतद्धि परमेशानि! ब्रह्मादीनां सुदुर्लभम्। अशुचिर्वा शुचिर्वापि उच्छिष्टं भक्षयेद्यदि। स एव परमाराध्यं साक्षाद् ब्रह्म शुचिस्मिते!। निर्माल्यं दृढभक्तित्वात् गृह्णीयाद्यस्तु पार्वति!। प्रथमं विष्णवे दद्याद्विष्णुमन्त्रेण सुन्दरि!। निर्माल्यं मम देवेशि! विष्णोर्ग्राह्यं महेश्वरि!। देवासुरमनुष्याश्च गन्धर्वाः किन्नरादयः। ते सर्वे परमेशानि! वराकाः क्षुद्रबुद्धयः। निर्माल्ये मम देवेशि! अधिकारो भवेत् कथम्॥

मातृकाभेदतन्त्रे चतुर्थपटले॥ चण्डिकोवाच॥ कारणेन महामोक्षो निर्माल्येन शिवस्य च। श्रुतं वेदपुराणेषु तव वाक्ये महेश्वर!। अग्राह्यं शिवनिर्माल्यमग्राह्यं कारणं विभो!। वृथावाक्यं महादेव! कथं वदसि योगभृत्!॥ श्रीशङ्कर उवाच॥ चतुरशीतिलक्षेषु सहस्रेषु तथैव हि। भ्रमणं कुरुते जीवस्ततो मोक्षस्य भाजनम्। एतन्मध्ये महाज्ञानं यदि स्यात् सुरवन्दिते!। तदैव मोक्षमाप्नोति भ्रमणं कस्य वा भवेत्। यस्य जन्म अपूर्णन्तु स कथं मोक्षस्य भाजनम्। यस्य पापाधिकत्वञ्च स कथं स्वर्गभाजनम्। अतएव महादेवि! गुप्तभावं मया कृतम्। निर्माल्येन लभेत् स्वर्गं निर्वाणं सुधया भवेत्। पापयुक्तोऽपि

चण्डालो निर्माल्यं गृह्णाति यदा। तदा मोक्षं लभेत् सत्यं शिवरूपो न चान्यथा। महापातकयुक्तोऽपि कारणं पीयते यदि। स्नानान्मुक्तिर्भवेत् सत्यं जातिभेदादिकं न हि। सर्व-जातिषु निर्वाणं ज्ञानेन परमेश्वरि !। अतएव महेशानि ! गुप्त-भावं मया कृतम्॥ पद्मपुराणे॥ द्रव्यमन्नं फलं तोयं शिवस्य न स्पृशेत् क्वचित्। न नयेच्छिवनिर्माल्यं कूपे सर्वं विनिक्षि-पेत्। मक्षिकापादमात्रं यः शिवस्वमुपजीवति। लोभान्मोहात् पतत्येव कल्पान्तं नरके नरः॥ पुराणसंग्रहे॥ शिव उवाच॥ अनर्हं मम नैवेद्यं पत्रं पुष्पं फलं जलम्। शालग्रामशिला-लग्नं सर्वं याति पवित्रताम्। नैवेद्यस्य नरो भुक्त्वा शुद्ध्यै चान्द्रा-यणं चरेत्॥ इति निर्माल्यभक्षणे प्रायश्चित्तस्य॥

बाणलिङ्गनिर्माल्यप्रतिप्रसवस्तु शिवनारदसंवादे॥ बाण-लिङ्गे न चाशौचं न च निर्माल्यकल्पना। सर्वं बाणार्पितं ग्राह्यं भक्त्या भक्तैश्च नान्यथा। ग्राह्याग्राह्यविचारोऽयं बाण-लिङ्गे न विद्यते। तदर्पितं जलं पत्रं ग्राह्यं प्रसादसंज्ञया। स्वयम्भू प्रभृतिनिर्माल्यस्य ग्राह्यत्वमपि तत्रैव॥ बाणलिङ्गे स्वय-म्भूते चन्द्रकान्तेन्द्रसंस्थिते। चान्द्रायणसमं ज्ञेयं शम्भोर्नैवेद्य-भक्षणैः। निर्माल्यकल्पना चोक्ता सिद्धान्तशेखरे। धराहिरण्य-गोरत्नताम्ररौप्यांशुकादिकम्। विहाय शेषनिर्माल्यं चण्डेशाय निवेदयेत्। एतेन लिङ्गार्पितवस्त्रादिग्रहणेन दोष इत्यायातम्। चण्डेशाय निवेदयेदित्यनेन चण्डेशनिवेदितं यत्तन्न भोक्तव्यम्। शालग्रामोद्भवे लिङ्गे ज्योतिर्लिङ्गे स्वयम्भुवि। इन्द्रलिङ्गे तथा ये चामराः सिद्धप्रतिष्ठिते। इन्द्रलिङ्गे इन्द्रनीलमणिविशेषलिङ्गे॥ प्रागुक्तचन्द्रकान्तेन्द्रसंस्थिते इत्यत्रापीदृग् व्याख्येति॥

हनूमन्तं प्रति शम्भुवाक्यम्॥ बाणलिङ्गे स्वयम्भूते चन्द्रा-क्रान्तिहृदि स्थिते। चान्द्रायणसमं ज्ञेयं शम्भोर्नैवेद्यभक्षणम्।

लिङ्गे स्वयम्भुवे वाणे लिङ्गे च रसनिर्मिते। सिद्धप्रतिष्ठिते चैव न चण्डाधिकृतिर्भवेत्। यत्र चण्डाधिकारोऽस्ति भोक्तव्यं तन्न मानवैः। चण्डाधिकारो नो यत्र भोक्तव्यं तत्तु भक्तितः। इति पञ्चपुरुषार्थप्रबोधे शिववचनाच्च। किं दीक्षया किं तपसा किं ध्यानेन किमिज्यया। शृणु देवि! वरारोहे! मद्भक्तं यदि भुज्यते। मद्भक्तं मन्निवेदितमित्यर्थं इति। तदपि वाणादिलिङ्गानामपि नैवेद्यविषयमिति वाणलिङ्गादिषु शम्भोर्नैवेद्यभक्षणे न दोष इति वदता ततोऽर्थान्निर्माल्यधारणमभ्यनुज्ञातम्। श्रीविश्वनाथतीर्थादिधारणन्तु कर्त्तव्यमेव। तथा स्कन्दपुराणे काशीखण्डे। जलस्य धारणं मूर्द्धि विश्वेशस्तेऽन्यजन्मनीत्युपक्रम्य। स्नापयित्वा विधानेन यो लिङ्गस्नानजोदकम्। त्रिः पिबेत् त्रिविधं पापं तस्येहाशु विनश्यति। लिङ्गवरार्च्चनाद्भिर्यः कुर्य्यान्मूर्द्धाभिषेचनम्। गङ्गास्नानफलं तस्य जायते कुम्भसम्भव!॥ तथा वाणेश्वरोपाख्याने॥ श्रद्धावतां स्वभक्तानामुपसर्गे महत्यपि। नोपायान्तरमस्त्येव विनेशचरणोदकम्। ये व्याधयोऽतिदुःसाध्या वहिरन्तः शरीरिणाम्। शुद्धमीशोदकस्पर्शात् ते नश्यन्त्येव नान्यथा॥

शान्तिकादौ शिवलिङ्गपूजा कुक्कुटेश्वरतन्त्रे॥ पार्वत्युवाच॥ देवदेव! महादेव! परमेश! पुरातन!। दिनास्त्रं परमास्त्रञ्च कृत्यास्त्रं परमेश्वर!। त्वत्प्रसादान्महादेव! श्रुतं बहुविधं मया। इदानीं श्रोतुमिच्छामि अस्त्रं पाशुपताह्वयम्। कृपया कथय त्वं हि यदि स्नेहोऽस्ति मां प्रति॥ सदाशिव उवाच॥ साधु पृष्टं महादेवि! जन्तूनां हितकारिणि!। मम प्राणसमं योगं देवानामपि दुर्लभम्। तव स्नेहात् प्रवक्ष्यामि तदस्त्रं परमाद्भुतम्। गोपनीयं प्रयत्नेन शपथं मे पुनः पुनः। लिङ्गमानं द्रव्यमानमर्च्चनं जपपद्धतिः। तत्सर्वं सम्प्रवक्ष्यामि

शृणुष्व कमलानने!। शततोलकमृत्स्नायाः कारयेल्लिङ्गमुत्त-मम्। घृतेन मधुना वापि स्नापयेद्वश्यकर्म्मणि। दुग्धेन स्नापयेद्देवि! शान्तौ मृत्युञ्जयेऽपि च। आकर्षणे तु मधुना भस्मना क्रूरकर्मणि। शततोलकमानेन द्रव्यमेतत् प्रकीर्त्तितम्। तस्मानं संविदाचूर्णं नैवेद्यञ्च सुरेश्वरि!। विल्वपत्रं तथा पुष्पं दद्यादष्टोत्तरं शतम्। शान्तिकादौ द्रोणपुष्पं वर्वरा चाभि-चारके। स्तम्भने मोहने चैव धुस्तूरं कनकाह्वयम्। विद्वेषो-च्चाटने देवि! जवा वाप्यपराजिता। चतुर्द्दश्यां समारभ्य यावदन्या चतुर्दशी। एकैकं क्रमशो लिङ्गं पूजयेद्भक्तिभावतः। अष्टाधिकसहस्रन्तु जपं कुर्य्याद्दिने दिने। सप्ताहे सप्त लिङ्गानि पञ्चाहे वाथ पञ्चकम्। चण्डोग्रेण विधानेन जपपूजादिकं स्मृतम्। वटुकेन तु मन्त्रेण मञ्जुघोषेण वा प्रिये!। त्र्यम्बकेन तु मन्त्रेण शान्तिके जपपूजनम्। तत्तत्कल्पविधानेन पूजाजपं समाचरेत्। जातिध्वंसे कुलोच्छेदे आयुषो नाश आगते। महाभये समुत्पन्ने सर्व्वाभिचारसम्भवे। यत्नेन पूजयेद्देवि! लिङ्गमष्टोत्तरं शतम्। दुग्धनिर्झरधाराभिः श्रोत्रान्तमभिषेचयेत्। अतिरुद्रप्रयोगादौ रुद्राध्यायेन वा पुनः। नीलकण्ठेन वा देवि! स्तवेन तोषयेच्छिवम्। वस्त्रालङ्कारभूषादि दद्याञ्च विभवावधि। सर्व्वकामप्रदं देवि! सर्व्वसौभाग्यदायकम्। नातः परतरं देवि! त्रिषु लोकेषु विद्यते। इति ते कथितं देवि! अस्त्रं पाशुपताह्वयम्। यस्मै कस्मै न वक्तव्यं न प्रकाश्यं कदाचन॥ ब्राह्मणान् भोजयेच्छक्त्या भक्तिनम्रः समाहितः। नीलकण्ठेनेति कलीतरपरम्। कालीविलासतन्त्रीयवचनेन कलौ तन्निषेधात्॥

अथ शिवस्तोत्रम्। ओँ सर्व्वज्ञ! ज्ञानविज्ञानप्रदायक! महा-त्मने। नमस्ते सर्व्वदेवेश! सर्व्वभूतहिते रत!। अनन्तकान्ति-

सम्पन्न! अनन्तासनसंस्थित!। अत्यन्तकान्तिसम्भोग! परमेश! नमोऽस्तु ते। परापरतरातीत! उत्पत्तिस्थितिकारक!। सर्वार्थसाधनोपाय! विश्वेश्वर! नमोऽस्तु ते। सर्वार्थनिर्म्मलाभोग! सर्वव्याधिविनाशन!। योगियोगिमहायोगियोगीश्वर! नमोऽस्तु ते। कृत्वा लिङ्गं प्रतिष्ठाञ्च ध्यात्वा देवं सदाशिवम्। पूजयित्वा विधानेन स्तवमेतमुदीरयेत्। लिङ्गस्तवं महापुण्यं यः शृणोति सदा नरः। नोत्पद्यते च संसारे स्थानं प्राप्नोति शाश्वतम्। तस्मात् सर्वप्रयत्नेन शृणुयाच्च सुसंस्तवम्। पापकञ्चुकनिर्मुक्तः प्राप्नोति परमं पदम्॥

इति भविष्यपुराणोक्तलिङ्गस्तवः समाप्तः॥

अथ कवचम्॥ रुद्रजामले॥ भैरव उवाच॥ वक्ष्यामि देवि! कवचं मङ्गलं प्राणरक्षणम्। अहोरात्रं महादेवरक्षार्थं देवमण्डितम्। ओमस्य श्रीमहादेवकवचस्य वामदेव ऋषिः पङ्क्तिश्छन्दो हसौ निधो देवता सर्वसाधने विनियोगः। रुद्रो मामग्रतः पातु पृष्ठतः पातु शङ्करः। कपर्द्दी दक्षिणे पातु वामपार्श्वे तथा हरः। शिवः शिरसि मे पातु ललाटं नीललोहितः। नेत्रं नेत्राक्षरः पातु बाहुयुग्मं महेश्वरः। हृदये च महादेव ईश्वरश्च तथोदरे। नाभौ कुक्षौ कटिस्थाने पादौ पातु महेश्वरः। सर्वो रक्षतु भूतेशः सर्वगात्राणि मे हरः। पाशं शूलञ्च दिव्यास्त्रं खड्गञ्च वज्रमेव च। नमस्करोमि भूतेशं रक्ष मां जगदीश्वर!। पापेभ्यो नरकेभ्यश्च त्राहि मां भक्तवत्सल!। जन्ममृत्युजराव्याधिकामक्रोधादपि प्रभो!। लोभमोहान्महादेव! रक्ष मां त्रिदशेश्वर!। त्वं गतिस्त्वं मतिश्चैव त्वं भूतिस्त्वं परायणः। कायेन मनसा वाचा त्वयि भक्तिर्दृढास्तु मे। इत्येतद्रुद्रकवचं पठनात् पापनाशनम्। महादेवप्रसादेन भैरवेन च कीर्त्तितम्। न तस्य पापं देहेषु न भयं तस्य विद्यते।

प्राप्नोति सुखमारोग्यं पुत्रमायुःप्रवर्द्धनम्। पुत्रार्थी लभते पुत्रान् धनार्थी धनमाप्नुयात्। विद्यार्थी लभते विद्यां मोक्षार्थी मोक्षमेव च। व्याधितो मुच्यते रोगी बद्धो मुच्येत बन्धनात्। ब्रह्महत्यादिपापञ्च पठनादेव नश्यति॥

इति रुद्रजामले श्रीशिवकवचं समाप्तम्॥

अथ विल्ववृक्षादिमाहात्म्यम्॥ योगिनीतन्त्रे पूर्वखण्डे पञ्चमपटले॥ विल्वमूलं महेशानि! समन्तात् षोड़शं करम्। मम जटास्वरूपं हि परं जानीहि सुन्दरि!। ऋग्यजुःसाम-सदृशं दलत्रयं वरानने!। शाखाश्च सर्वशास्त्राणि जानीहि मीनलोचने!। कल्पवृक्षसमो विल्वो ब्रह्मविष्णुशिवात्मकः। महालक्ष्मीर्विल्ववृक्षो जातः श्रीशैलपर्वते॥ श्रीदेव्युवाच॥ कथं सा विष्णुवनिता विल्ववृक्षो बभूव ह। ज्योतीरूपं मदंशं प्रार्थिता ब्रह्मादिभिः सदा। तत्र मेऽनुग्रहाद्वाणी सर्वेषां प्रियतां गता। विष्णोरतिप्रिया नित्यं साभूत् सरस्वती सदा। तादृक् प्रीतिर्न लक्ष्म्याश्च जायते केशवस्य च। इति चिन्तापरा लक्ष्मी-र्ययौ श्रीशैलमन्दिरम्। प्राप्य मल्लिङ्गमेकान्तं तपस्तेपेऽतिदारु-णम्। तथापि यदि नैवाभूत् कृपा मे परमेश्वरि!। तदा सा वृक्ष-रूपेण स्थिता लिङ्गप्रिया सती। पत्रैः पुष्पैः फलैः स्वीयैः पूजया-मास सन्ततम्। कोटिवर्षं महादेवि! ततो मेऽनुग्रहोऽभवत्। तेने-वानुग्रहेणैव विष्णोर्वक्षःस्थिताऽभवत्। सदैव परमेशानि! विप्र-वश्या सदैव हि। अतस्तु कारणाद्देवि! तद्रूपेण हरिप्रिया। सदैव पूजयेन्मां सा मद्गता सातुला शिवे। अतस्तं वृक्षमाश्रित्य तिष्ठा-मि च दिवानिशम्। सर्वतीर्थमयो देवि! सर्वदेवमयः सदा। श्रीवृक्षः परमेशानि! अतएव न संशयः। तत्फलैस्तत्प्रसूनैर्वा तत्पत्रैर्यः प्रपूजयेत्। तत्काष्ठचन्दनैर्वापि स मे भक्तः स मे प्रियः। तत्काष्ठचन्दनं भाले यो धारयति सम्भ्रमात्। तत्तनुं शिव-

मुद्रया सा नमेद्देवी मुदान्विता। अतस्तच्चन्दनं देवि! न धारयति कश्चन। तत्पत्रं तत्प्रसूनं वा कदापि धारयेन्न हि। विल्वमूले महेशानि! प्राणांस्त्यजति यो नरः। रुद्रदेहो भवेत्तस्य पापकोटियुतोऽपि सन्॥ पुरश्चरणरसोल्लासे दशमपटले॥ विल्व-वृक्षस्तथा देवि! भगवान् शङ्करः स्वयम्। विल्ववृक्षतले स्थित्वा यदि प्राणांस्त्यजेत् सुधीः। तत्क्षणान्मोक्षमाप्नोति किं तस्य तीर्थकोटिभिः। यत्र ब्रह्मादयो देवास्तिष्ठन्ति शक्तिहेतवे। विल्ववृक्षतले स्थानं यदि विष्ठादिपूरितम्। तदेव शाङ्करं क्षेत्रं सर्वतीर्थमयं सदा। सर्वपीठमयं तच्च सर्वदेवमयं सदा। न त्यजेच्छाङ्करं क्षेत्रं न च गङ्गां त्यजेत् प्रिये!। समीपे स च चार्वङ्गि! विल्ववृक्षो यदि प्रिये!। काशीपुरसमं तत्तु तत्र प्राणांस्त्यजेद् यदि। किं तस्य कोटितीर्थेन काशीवासेन किं प्रिये!॥

अथ विल्वमूले वेदीकरणम्॥ तत्रैव मध्यमखण्डे द्वादश-पटले॥ वेदिकां रचयित्वा तु स्वस्तिवाचनपूर्वकम्। ईशानाद-ग्निकोणान्तं ततोऽपि राक्षसं विशेत्। राक्षसाद्वायुकोणान्तं यावद्वायोर्महेशकम्। चतुर्दिक्षु समां भूमिं गृह्णीयाद्योगहेतवे। अष्टहस्तं भवेद्दैर्घ्यं विस्तृतञ्च तथा प्रिये!। ऊर्द्ध्वं वितस्तिमानां स्याद् वेदिकां परिशोभिताम्। तदूर्द्ध्वं तु महावेदीं समन्तात् षोड़शं करम्। पूजास्थानन्तु तद्विद्धि सर्वत्रायं विधिः प्रिये!। सर्वत्रेति श्मशानादौ तत्प्रमाणमपि तत्रैव॥ विल्वमूले श्म-शाने वा प्रान्तरेऽश्वत्थमूलके। नदीतीरे देवगर्भे गङ्गागर्भे चतु-ष्पथे। उत्कटे पर्वते वापि उद्याने पुष्पसंयुते। शिवालये शून्यगेहे अथवा निजमन्दिरे। वेश्यागेहे लतास्थाने गोष्ठे वान्यतमेऽपि वा॥ इति। रुद्रजामलेऽपि वेदिकाप्रमाणमुक्तं यथा॥ अश्वत्थविल्वमूले वा वेदीं कुर्य्याद्विधानवित्। उत्तराशा-

मुखो भूत्वा वेदिकां रचयेत् सुधीः। ईशाने सूत्रपातः स्यादग्नौ च स्तम्भरोपणम्। नवधा सदनञ्चैव पूर्ववत् कारयेत्ततः। चतुःसूत्रोक्तं तत्तु न्यूनाधिकं न कारयेत्। क्षेत्रस्य यावद्विस्तारः प्रस्थश्च तावदेव हि। अष्टहस्तमितं कुर्य्यादायामं तत्तदेव हि। मूलायामं परित्यज्य अष्टहस्तमिहेष्यते। ऊर्द्ध्वं वितस्तिमानां हि वेदीं कुर्य्यात् सुलक्षणाम्। चतुर्हस्तमितां वेदीं दैर्घ्यं मध्ये तु तत्त्ववित्। तदेव पूर्ववत् सर्वं सूत्रञ्च स्तम्भरोपणम्। आयामदैर्घ्य तद्वद्वै कर्त्तुर्हस्तश्चतुश्चतुः। तद्वदेव हस्तमात्रं परित्यज्य सुसाधकः॥

अथ पञ्चवटीस्थापनविधिः प्रसङ्गाल्लिख्यते॥ तथा च स्कन्दपुराणे॥ अश्वत्थो विल्ववृक्षश्च वटो धात्री अशोककः। वटीपञ्चकमित्युक्तं स्थापयेत् पञ्चदिक्षु च। अश्वत्थं स्थापयेत् प्राचि विल्वमुत्तरभागतः। वटं पश्चिमभागे तु धात्रीं दक्षिणतस्तथा। अशोकं वह्निदिक्स्थाप्यं तपस्यार्थं सुरेश्वरि!। मध्ये वेदीं चतुर्हस्तां सुन्दरीं सुमनोहराम्। प्रतिष्ठां कारयेत्तस्याः पञ्चवर्षोत्तरं शिवे!। अनन्तफलदात्री सा तपस्या फलदायिनी। इयं पञ्चवटी प्रोक्ता वृहत्पञ्चवटीं शृणु। विल्ववृक्षं मध्यभागे चतुर्दिक्षु चतुष्टयम्। वटवृक्षं चतुष्कोणे वेदसंख्यं प्ररोपयेत्। अशोकं वर्त्तुलाकारं पञ्चविंशतिसम्मितम्। दिग्विदिक्ष्वामलकञ्चैव एकैकं परमेश्वरि!। अश्वत्थञ्च चतुर्दिक्षु वृहत्पञ्चवटी भवेत्। यः करोति महेशानि! साक्षादिन्द्रसमो भवेत्। इह लोके मन्त्रसिद्धिः परे च परमा गतिः॥ इति हेमाद्रीयव्रतखण्डधृतवचनानि च॥

अथ विल्वपत्रमाहात्म्यम्॥ मत्स्यसूक्ते षोड़शपटले॥ तत्त्वं श्रीफलपत्रस्य परमं पदमव्ययम्। पत्रं मनोहरं दिव्यं रुद्रविष्णुपितामहाः। पञ्चाशत्तत्त्वसंयुक्तं चतुर्वर्गमयं सदा।

चतुर्वर्गमयं पत्रं धर्मार्थकाममोक्षदम्। विल्वपत्रञ्च देवेशि! वर्णितुं नैव शक्यते। जटात्रयसमं पत्रं विल्वपत्रस्य पार्वति!। जटात्रयं महेशानि! सर्वतत्त्वमयं सदा। आत्मतत्त्वं महेशानि! विद्यातत्त्वं तथापरम्। परतत्त्वं महेशानि! अतिगुह्यं मनोहरम्॥ तथा॥ विल्वपत्रं महेशानि! करवीरं तथा प्रिये!। तथापराजितापुष्पं दुर्लभं शिवपूजने। तथा च शक्तिपूजायां कोटिपूजाफलं लभेत्। एतत्पुष्पप्रदानेन यत् फलं लभते नरः। माहात्म्यं तस्य देवेशि! वर्णितुं नैव शक्यते। एषां मध्ये वसेद्ब्रह्मा एषां मूले जनार्दनः। एषां मध्ये वसेद्रुद्रः सर्वे देवाः स्थितास्तले। सर्वं ज्योतिर्मयं देवि! विल्वपत्रञ्च पार्वति!॥ पञ्चमपटले॥ विल्वपत्रं महेशानि! ब्रह्मविष्णुशिवात्मकम्। गुणत्रयात्मकं देवि! त्रिपत्रं सर्वकामदम्॥ योगिनीतन्त्रे॥ विल्वपत्रस्य माहात्म्यं देवानामपि दुर्लभम्। यो दद्याद्विल्वपत्रञ्च शिवाये शङ्कराय च। सदाशिवसमो भूत्वा स गच्छेद्ब्रह्ममन्दिरम्। शिवपूजायां विल्वपत्रदाने विशेषस्तु श्रीतत्त्वचिन्तामणिधृतत्रिविक्रमसंहितायाम्॥ अच्छिन्नमूलं तत् पत्रं यो दद्याच्छङ्करार्चने। तस्य पूजा वृथा देवि! मृतो नरकमाप्नुयात्॥ इति॥ मातृकाभेदतन्त्रे द्वादशपटले॥ स्वर्णपुष्पसहस्रेण यत् फलं लभते नरः। तस्माल्लक्षगुणं पुण्यं भग्नैकविल्वपत्रके। भग्नैकविल्वपत्रस्य सहस्रैकेन भागतः। मेरुतुल्यसुवर्णेन तत् फलं न हि लभ्यते। एवञ्च लिङ्गार्चनतन्त्रे द्वादशपटलोक्तपूर्वलिखितकीटादिदोषवर्जितकोमलमधुरपत्रत्रययुतविल्वपत्रदानवचनं तत् फलातिशयार्थम्॥ इति विल्वपत्रमाहात्म्यम्॥

अथ रुद्राक्षमाहात्म्यम्॥ योगसारे द्वितीयपरिच्छेदे॥ श्रीमहादेव उवाच॥ इदानीं देवदेवेशि! मालानां धारणं

शुभम्। रुद्राक्षस्य च माहात्म्यं वद मे परमेश्वरि!। श्रीदेव्युवाच॥ शिखायां हस्तयोः कण्ठे कर्णयोश्चापि यो नरः। रुद्राक्षं धारयेद्भक्त्या शिवलोकमवाप्नुयात्। नववक्त्रन्तु रुद्राक्षं धारयेद्वामबाहुना। दक्षबाहौ तथा वत्स! धारयेद्दयतमानसः। शिखायां दशनं धार्य्यं कण्ठे च पञ्चविंशतिम्॥ कर्णयोः पञ्चमं कृत्वा हृदि चाष्टोत्तरं शतम्। नाभौ सप्त च रुद्राक्षं धारणान्मोक्षभाग्भवेत्। रुद्राक्षधारणाद्देव! नरो देवत्वमाप्नुयात्॥ शिखायां दशनं द्वात्रिंशत्परिमितम्॥ तथा॥ रुद्राक्षं धारयेन्नित्यं भद्राक्षञ्च सुरेश्वर!। रुद्राक्षस्य महाबाहो! माहात्म्यं शृणु यत्नतः। एकवक्त्रः शिवः साक्षाद्ब्रह्महत्यां व्यपोहति। अवध्यं तं प्रतिस्रोतो वह्नेः स्तम्भं करोति च। द्विवक्त्रो हरगौरी च गोबधाद्यघनाशकृत्। त्रिवक्त्रोऽग्निर्जगन्नाथः पापराशिविनाशकृत्। तूलराशिं यथा वह्निर्भस्मसात् कुरुते हर!। त्रिवक्त्रोऽपि च रुद्राक्षस्तथा दहति किल्विषम्। चतुर्वक्त्रस्तु धाता स्यात् नरहत्यां व्यपोहति। पञ्चवक्त्रस्तु कालाग्निरगम्यागमपापनुत्। षड्वक्त्रो यो गुहः साक्षाद् गुरुहत्यां व्यपोहति। सप्तवक्त्रो ह्यनन्तश्च स्वर्णस्तेयाघनुत् सदा। विनायकोऽष्टवक्त्रः स्यात् सर्वान्तविनाशकृत्। भैरवो नववक्त्रः स्यात् शिवसायुज्यदायकः। दशवक्त्रः स्वयं विष्णुर्भूतप्रेतपिशाचहा। एकादशमुखो रुद्रो नानायज्ञफलप्रदः। द्वादशास्यो भवेदर्कः सर्वतीर्थफलप्रदः। त्रयोदशमुखः कामः सर्वकामफलप्रदः। चतुर्दशास्यः श्रीकण्ठो वंशोद्धारकरः स्मृतः। यथोक्तं तेऽपि रुद्राक्षे तथेन्द्राक्षे प्रकीर्त्तितम्। भद्राक्षेऽपि सुरश्रेष्ठ! तद्गुणं परिकीर्त्तितम्। एतेषां संस्कारस्त्वस्मद्गोष्ठीगरिष्ठकृष्णानन्दागमवागीशेन स्वकृततन्त्रसारे लिखितमतोऽत्र न प्रयोजनम्। एकवक्त्रादिचतुर्दशवक्त्रपर्य्यन्तानां प्रमाणं तेनापि लिखितम्। किन्तु तत् पौराणिकं

पद्मपुराणस्कन्दपुराणमिति क्षत्वा लिखितं तेन रुद्राक्षस्य प्रमाणं तन्त्रशास्त्रे नास्तीत्येकदेशदर्शिनः सन्दिहन्ति अतः प्रमाणानि लिखितानीति ॥ इति रुद्राक्षमाहात्म्यम् ॥

अथ संविदाप्रकरणम्॥ समयाचारतन्त्रे प्रथमपटले॥ समया गोपनीयानां सदा गोप्या प्रकीर्त्तिता। विधिना समयां देवि! ये तु भुञ्जन्ति साधकाः। ते नराः स्वर्गता नित्यं भोगं क्षत्वा सदा भुवि। समयां गोपयेद्देवि! शिष्येभ्योऽपि च सुन्दरि!। विना च समयां देवि! कथं कर्म्माणि साधयेत्। विनापि समयां पूजा न कुत्रापि शुभोदया॥ आचारसारे संविल्कल्पे सप्तमपटले॥ योगिनां किं सदा सेव्यं कौलानां बलपुष्टिदम्। मनश्चाञ्चल्यहरणं किं समाधिफलप्रदम्। इत्यादिदेवीप्रश्नानन्तरं वलनामासुरादिन्द्रादीनां पराजयमुक्का शक्रादीनां कैलासगमनानन्तरं स्तुतिकरणञ्च प्रस्तुत्य शिववाक्यम्॥ शृणु शक्र! महाभाग! सर्व्वमेतद्वदामि ते। त्रैलोक्यविजया ख्याता नामानि प्रथमं शृणु॥ कथयामि तव स्नेहादतिगोप्यानि सर्व्वतः। त्रैलोक्यविजया सिद्धा सिद्धिः सा सिद्धिमूलिका। ज्ञानं संवित् संविदा च श्यामा भङ्गा रसायना। योगदा योगिनी सेव्या योगमार्गप्रकाशिनी। ब्रह्माणी ब्रह्मसम्भूता ब्रह्मानन्दप्रदायिनी। वाग्देवतावशकरी विजयाविजयप्रदा। समाधिवरदाऽज्ञाननाशिनीत्येकविंशतिः। श्वेतरक्तकृष्णपीतपुष्पभेदाश्चतुर्विधाः। श्वेतपुष्पा ब्राह्मणी सा क्षत्रिया रक्तपुष्पिका। पीतपुष्पा तु वैश्या स्याच्छूद्रा तु रक्तपुष्पिका। आहृत्य पञ्चाङ्गेतासां सवीजानि प्रयत्नतः। भर्जितानि घृतेनैव चूर्णितानि शिलातले। त्रिकटु त्रिफला शृङ्गी कुष्ठधन्याकसैन्धवम्। शठी तालीशपत्रञ्च कटुकं नागकेशरम्। यवानीद्वयमेथीञ्च जीरकद्वयमेव च। एतानि समभागानि

रौद्रमुख्यानि चूर्णयेत्। स्वर्णादिपात्रे पुरतः स्थापयित्वा ततः क्रमात्। चतुर्भिर्मनुभिस्तस्याः शोधनं समुपाचरेत्। निवेश्य तत्र पानीयं यथाविधि विशोधयेत्। ओँ संविदेत्यादि। ओँ ब्रह्माख्यै नमः स्वाहा क्षत्रियां शोधयेत्ततः। ओँ सिद्धिमूलक्रिये! देवीत्यादि। ऐं क्षत्रियायै नमः स्वाहा वैश्यां विशोधयेत्ततः। ओँ अज्ञानेन्धनेत्यादि। क्लीं वैश्यायै नमः स्वाहा शूद्रां विशोधयेत्ततः। ओँ नमस्यामीत्यादि। क्लीं शूद्रायै नमः स्वाहा शूद्राविशोधने मनुः॥ महानिर्वाणतन्त्रे पञ्चमोल्लासे॥ बद्धवीरासनो मन्त्री विजयां परिशोधयेत्॥ मुण्डमालातन्त्रे॥ अस्य श्रीवाग्वादिनीमन्त्रस्य ब्रह्मर्षिर्गायत्रीच्छन्दो वाग्वादिनी देवता ऐँ वीजं क्लीं कीलकं सौः शक्तिर्वाग्वादिनीप्रीत्यर्थं मम सिद्धये जपे विनियोगः॥ अङ्गन्यासकरन्यासौ कृत्वा चैव यथाविधि। ततो वै संविदाचूर्णं संस्तुत्य मन्त्रमुच्चरन्॥ तथा॥ गुरोर्मुखाल्लब्धमन्त्रं नित्यं जपति साधकः। तेनैव विधिना मन्त्री समयामभिमन्त्रयेत्। सप्तधामन्त्रितं कृत्वा गुरुं सर्वं विभावयेत्। गुरुं शिवं तथा देवीं निवेद्य चैव भक्षयेत्॥ महानिर्वाणतन्त्रे॥ तारं मायां समुच्चार्य्य अमृते! अमृतोद्भवे!। अमृतवर्षिणि! ततोऽमृतमाकर्षयद्वितः। सिद्धिं देहि ततो ब्रूयादमुकं मे ततः परम्। वशमानय ठद्वन्द्वं संविदाशोधने मनुः। मूलमन्त्रं सहस्रारं प्रजप्य विजयोपरि। आवाहन्यादिमुद्राश्च धेनुयोनीः प्रदर्शयेत्। गुरुं पद्मे सहस्रारे यथा सङ्केतमुद्रया। त्रिधैव तर्पयेद्देवीं हृदि मूलं समुच्चरन्। वाग्भवं वदयुग्मञ्च वाग्वादिनि! पदं ततः। मम जिह्वाग्रे स्थिरीभव सर्वसत्त्ववशङ्करि!। स्वाहान्तेनैव मनुना जुहुयात् कुण्डलीमुखे। शक्रादिजयरक्षा। ऐँ वद वद क्लीं वाग्वादिनि! मम जिह्वाग्रे स्थिरीभव सर्वसत्त्ववशङ्करि! स्वाहा। सप्तधामन्त्रितं कृत्वा गुरुञ्चैव विभाव्य च।

संविदं भक्षयेद्देवि! साधकः स्थिरमानसः। अथवानेन मन्त्रेण कल्पयेत् परमेश्वरि!। ओँ जय जय विजय विजय परं ब्रह्मस्वरूपिणि!। सर्वजनं मे वशमानय हुं फट् स्वाहा। इत्यनेन च पीत्वा तु भक्षयित्वा कुलेश्वरि!। इष्टमन्त्रञ्च सञ्जप्य सप्तधा तत्त्वमुद्रया॥ आचारसारे तु विशेषो यथा॥ ओँ अमृते! अमृतोद्भवे! अमृतवर्षिणि! पदं ततः। अमृतमाकर्षय द्वन्द्वं सिद्धिं देहि ततः परम्। अमुकं मे ततो ब्रूयाद्वशमानय तत्परम्। द्विठान्तोऽयं मनुः प्रोक्तश्चतुष्काणाञ्च मन्त्रणे॥ आनन्दभैरवानन्दभैरव्यौ तत्र मन्त्रयेत्। शिवसोममातृकान्तं कालभूवरुणालयम्। वामकर्णसमायुक्तं वायुमर्द्धेन्दुसंयुतम्। आनन्दभैरवायेति शिखामन्त्रं ततो वदेत्। आनन्दभैरवस्याय-मानन्दभैरवं शृणु। पूर्ववद्वीजमालिख्य धेनुयोनिस्ततः परम्। दिग्बन्धनं छोटिकाभिस्तालत्रयपुरःसरम्। दिव्यदृष्ट्या ततः पार्ष्णिघातैर्विघ्नान् विघातयेत्। सप्तधा तर्पयेद्ब्रह्मरन्ध्रे जपन्मनुं गुरुम्। निजं पद्मे सहस्रारे तथा सङ्केतमुद्रया। त्रिवारं तर्पयेद्भक्त्या सकृद्वापि निजेच्छया। परमाख्यं गुरुं तत्र परापरगुरुं ततः। तत्रैवानन्दभैरव्यै तर्पयेत्तु मनुं स्मरन्। हृदये तर्पयेद्देवीं मूलेन तत्त्वमुद्रया। संविदया त्रिः सकृद्वा तिलमुद्गप्रमाणया। ऐं वद वद पदं ब्रूयाद्वाग्ववादिनि! पदं ततः। मम जिह्वाग्रे स्थिरीभव वदेत् सर्वपदं ततः। सत्त्ववशङ्करि! स्वाहा त्रिः प्रोच्य जुहुयान्मुखे। मुखामृतेन दिव्येन स्वीकुर्य्यात् संविदां ततः॥ समयाचारतन्त्रे प्रथमपटले॥ अथातः सम्प्रवक्ष्यामि समयास्तोत्रमुत्तमम्। यत् श्रुत्वा सिद्धिमूली सा भक्षिता फलदा भवेत्। ओँ संविदे! ब्रह्मसम्भूते! ब्रह्मपुत्रि! सदानघे!। भैरवाणान्तु तृप्त्यर्थं पवित्रा भव सर्वदा। नृणाञ्च जननी नाम्ना वेशालङ्कृतमण्डला। भवसन्तापनिर्वापः सुधियां

त्वं महानिधिः। ओं सिद्धिमूलोक्रिये! देवि! हीनबोधप्रबोधिनि!। राजप्रजावशङ्करि! शत्रुकण्ठत्रिशूलिनि!। ओं अज्ञानेन्धनदीप्ताग्ने ज्वालाग्ने ज्ञानरूपिणि!। आनन्दस्याहुतिं मत्वा सम्यक् ज्ञानं प्रयच्छ मे॥

अथ आनन्दमयोध्यानम्॥ दण्डाधिरूढ़परिपूरितमोक्षभोगामिन्दुप्रसन्नवदनां जयदानशीलाम्। आराधयामि बहुशत्रुपराजयित्रीं विश्वेश्वरीं त्रिभुवने विजयेति देवीम्। ध्यात्वैवं विजयामेतामानन्दाख्यां स्तवं पठेत्। आनन्दनन्दनीं वन्दे सदानन्दपदद्वये!। आनन्दकदलीं वन्दे स्वच्छन्दबोधरूपिणीम्। कलयति कवितां महतीं कुरुते स्वार्थदर्शनं पुंसाम्। अपहरति दुरितनिलयं किं किं न करोति संविदुल्लासः॥ संविद्वासवयोर्मध्ये संविदेव गरीयसी। भक्षिता भवनाशाय निर्गन्धा बोधरूपिणी। सुसंवित् शूलिनी देवी विजया संविदाङ्कुरा। वैष्णवी तुलसी तुङ्गा तेजोरश्मीरसेश्वरी। विमर्षा श्वेतवह्नैया लक्ष्मीदेवी महोदरी। समया मोहिनी चैव सिद्धमूली महोदरी। मातुलानी सिद्धिरूपा सिद्धिधात्री सरस्वती। वाग्वादिनी सदा नित्या आनन्दप्रददायिनी। यानि चैतानि नामानि सेवयेत् सिद्धिमूलिकाम्। समाप्नोति परां विद्यां भुक्तिं मुक्तिञ्च विन्दति। पाण्डित्यञ्च कवित्वञ्च सर्व्वसिद्धिञ्च विन्दति॥ इति विजयास्तोत्रम्॥

अथ द्रव्यविशेषेण विजयाभक्षणफलम्॥ आचारसारे॥ दुग्धाम्बुघृतमाध्वीकसैन्धवैर्लवणेन वा। सितया तु गुड़ेनापि पक्केन कदलेन वा। यद्यद्वा मधुरं द्रव्यं पक्काम्रपनसादिकम्। तेन सर्व्वेण विजया स्त्रीकार्य्या सर्व्वसाधकैः। दुग्धयोगेन विजया केवलानन्दवर्द्धिनी। महातेजस्करी चक्षुर्दोषादिदिव्वानिवारिणी। सा पुनर्जलयोगेन सर्व्वाजीर्णविनाशिनी। घृतेन मेधामाधत्ते

वाग्देवीवशकारिणी। पतितामुत्तमां धत्ते धिषणाञ्चातिनिर्म्मलाम्। कायदोषानशेषांश्च मधुना सह नाशयेत्। सैन्धवेन महावह्निं प्रदद्याल्लवणेन च। सितयाथ गुड़ेनापि शूलाम्लपित्तनाशिनी। अतिसारोपशमनी श्वासकासप्रमर्दिनी। आमवातसमुद्भूतग्रहणीविनिवारिणी। सर्वैं र्वा मधुसंयुक्ता सर्वामयविनाशिनी। बलपुष्टिप्रदा चैव मधुरस्वरदायिनी। ज्ञानविज्ञानदा चित्तशीलमार्गप्रकाशिनी। बहुना किमिहोक्तेन केवला चित्स्वरूपिणी॥ तथा। संविदासवयोर्मध्ये संविदेव गरीयसी। संवित्प्रयोगस्तेनेह कर्त्तव्यः साधकोत्तमैः॥

अथ संविदाभक्षणकालः॥ एककालं द्विकालं वा त्रिकालं पञ्चकालकम्। तोलकं वा तदर्द्धं वा तोलकद्वयमेव वा। तन्न्यूनाधिकमात्रा वा यथा भवति नित्यशः। न्यूनाधिकायां मात्रायां फलं तत्तत् प्रजायते। तस्मात् प्रमाणविदुषा कर्त्तव्या सिद्धिमिच्छता॥ समयाचारतन्त्रे॥ ब्राह्मे मुहूर्त्ते उत्थाय भक्षितः पापनाशिनी। तथा सूर्य्योदये जाते मध्याह्ने भक्षिता तथा। तथापराह्णसमये विधिवत् सर्वसाधिनी। अर्द्धरात्रे विशेषेण वाञ्छितार्थफलप्रदा। विनापि समयां देवि! जपपूजादिकं कथम्। न च सिद्धिमवाप्नोति अभिचाराय कल्पते। अपमृत्युहरां नृणां रोगशोकविनाशिनीम्। दुष्टशत्रुप्रशमनीं सर्वलोकानुरञ्जिनीम्। सिद्धयो ह्यणिमाद्याश्च हस्ते तस्य व्यवस्थिताः। कायिकं वाचिकञ्चापि मानसं यच्च दुष्कृतम्। एतत् सर्वं क्षयं याति ब्रह्महत्यादिकं तथा। स शिवः स च संयोगी स संयुक्तो यती तथा। स एव मर्त्यः स्वर्गस्थः समया येन पालिता। समया भक्षिता येन समया येन धारिता। समया पालिता येन रहितः स च पातकैः। भक्षयित्वा च समयां यं यं मन्त्रं जपेन्नरः। स सम्यक् फलमाप्नोति सत्यं सत्यं वरानने!। विना च

क्षमयां देवि ! मन्त्रं जपति नित्यशः। अल्पायुः स भवेत् सद्यो देवतां कोपयेद् ध्रुवम्॥ कुब्जिकातन्त्रे सप्तमपटले॥ समयाश्च विना देवि ! न सिद्धः स्यात् कदाचन। तस्माच्चैव प्रयत्नेन रक्षणीयान्नात्र संशयः॥

अथ विजयाधूमपानं योगसारे प्रथमपरिच्छेदे॥ अथ वान्यप्रकारेण क्षुन्निवृत्तिर्विधीयते। प्रत्यहं विजयाधूमं ब्रह्मरन्ध्रेण मन्त्रवित्। पानं करोति योगिशः क्षुन्नाशी जायते ध्रुवम्। ब्रह्ममन्त्रमहं वच्मे येन क्षुन्नाशनं भवेत्। संवर्त्तयुक् चन्द्रवह्निभौतिकौ विन्दुसंयुतौ। एवं वीजत्रयं देव ! समुच्चार्य्य कुलेश्वर !। अन्यून मनुनानेन विजयाधूमशोधनम्। शोधयित्वा पिवेद्धूमं न दोषो विद्यते हर !। मन्त्रस्तु च्रौं च्रौं च्रौं॥ योगसारे॥ अथचान्यप्रकारेण क्षुन्निवृत्तिर्विधीयते। हविष्याशी भवेदादौ पश्चाज्जपति मातृकाम्। पश्चाद्घृतं प्रभोक्तव्यं मनुनानेन शङ्कर !। हसौर्वीजेन मनुना भक्षयेत् साधकोत्तमः॥ इति विजयाधूमपानम्॥ इति विजयाप्रकरणम्॥

इति श्रीप्राणतोषिण्यां पञ्चमे भक्तिकाण्डे शिवप्रकरणकथनरूपस्तृतीयः परिच्छेदः।

अथ शालग्रामोत्पत्तिप्रकारः॥ वीरमित्रोदयधृतकार्त्तिकमाहात्म्ये तूपाख्यानं श्रूयते यथा॥ कश्चिद्वेदशिरा नाम महामुनिर्गङ्गातीरेऽत्युग्रं तपश्चकार। ततस्तत्तपसा भीतः शक्रो मञ्जुवागित्यभिधानां काञ्चिद्देवकन्यां तत्तपोविघ्नार्थं प्रेरितवान्। ततः सा महेन्द्रप्रेषिता वेदशिरसस्तपोविघ्नं चकार। ततः क्रुद्धेन तेन मुनिना त्वं नदी भवेति सा शप्ता। ततस्तया महता प्रणिपातेन विज्ञापितो मुनिस्तामित्यवोचत्। नदी भूत्वा जनार्द्दनं स्वोदरे धारयन्ती त्वं कृतकृत्यं जनं कुरु।

शिलारूपी त्वयि जनार्दनो जनिष्यति। त्वद्यशः प्रसवस्त्वेको मुक्तिदाता नृणामिह। सैषा वै मञ्जुवाग्देवी गण्डकी सरितां वरा। तस्यां विष्णुः शिलारूपी मुनिशापाद्बभूव ह॥ स्कन्दपुराणे गण्डकीतपस्यानन्तरम्। ततः प्रसन्नो भगवान् चिन्तयामास गोपते। किं याचितं निम्नगया नित्यं मत्समक्षया। दास्यामि याचितं येन लोकानां भवमोचनम्। इत्येवं कृपया देवो निश्चित्य मनसा स्वयम्। गण्डकीमगमन्मातः! शृणु देवि वचो मम। शालग्रामशिलारूपी तव गर्भगतः सदा। स्थास्यामि तव पुत्रत्वे भक्तानुग्रहकारणात्। मत्सान्निध्यात्तदानीं त्वमतिश्रेष्ठा भविष्यसि। दर्शनात् स्पर्शनात् स्नानात् पानाच्चैवावगाहनात्। हरिष्यसि महापापं वाङ्मनकायः-सम्भवम्। एवं दत्त्वा वरान् देव्यै तत्रैवान्तरधीयत। प्रतितिष्ठामि चेत्रेऽस्मिन् शालग्रामः सलाञ्छनः। अहञ्च भगवान् विष्णुर्भक्तेच्छामात्रविग्रहः॥ वराहपुराणे च॥ वराह उवाच। शृणु तत्त्वेन मे देवि! यन्मां त्वं परिपृच्छसि। कथयिष्यामि तं गुह्यं शालग्राममिति स्मृतमिति धरणीं प्रत्युपक्रम्य शालग्रामतीर्थस्य तत्र विषयाणां गण्डक्यादिनदीनां सोमेशादिलिङ्गानाञ्च प्रशंसामुक्त्वा। सालङ्कायनकोऽप्यात्र चेत्रे तस्मिन् परे मम। शालग्रामे महातीर्थे आस्थितः परमं तपः॥ इति।

विष्णुधर्मोत्तरादौ तु॥ सालङ्कायनको नाम देवेश! भगवान् मुनिः। किं चकार तपः कुर्वन् तव चेत्रे विमुक्तिदे। इति पुनर्धरण्या पृष्टो वराह उवाच॥ अथ दीर्घेण कालेन स ऋषिः संशितव्रतः। तप्यमानो यथान्यायं ददर्श शालमुत्तमम्। अभिन्नमतुलच्छायं विशालं पुष्पितं तथा। ऋषिः चीणः परिश्रान्तः सालङ्कायनकोऽद्भुतम्। पश्यते च पुनः शालं शुभानां शुभदर्शनम्। ततो दृष्ट्वा महाशालं परिश्रान्तो यदा मुनिः।

विश्रामं कुरुते तत्र द्रष्टुकामोऽथ मां तदा। शालस्य तस्य पूर्वेण स्थित: पश्चान्मुखो मुनि:। नानापापविमूढ़ात्मा शक्तो द्रष्टुं न मामभूत्। तत: पूर्वेण पार्श्वेन तस्य शालस्य सुन्दरि!। वैशाखमासद्वादश्यां मद्दर्शनमुपागत:। दृष्ट्वा मां तत्र स मुनिस्तपस्वी संशितव्रत:। तुष्टाव वैदिकै: सूक्तै: प्रणम्य च पुन: पुन:। ततोऽहं स्तूयमानो वै सूक्तमुख्येन सुन्दरि!। प्राप्तश्च शैलरूपेण गण्डकीमतिपुण्यदाम्। इत्यादिप्रमाणात् शालग्रामशब्दो दन्त्यादिस्तालव्यादिश्चेति ज्ञेयम्॥

अथ शालग्रामशिला॥ ब्रह्मवैवर्त्ते प्रकृतिखण्डे ऊनविंशत्यध्याये॥ अहञ्च शैलरूपेण गण्डकीतीरसन्निधौ। अधिष्ठानं करिष्यामि भारते तव सुव्रत!। वज्रकीटाश्च कृमयो वज्रदंष्ट्राश्च तत्र वै। तच्छिलाकुहरे चक्रं करिष्यन्ति मदीयकम्॥

इति शिलाचक्रोत्पत्तिप्रकार:॥

गौतमीये॥ बहुभिर्जन्मभि: पुण्यैर्यदि कृष्णशिलां लभेत्। गोष्पदेन च चिह्नेन जनुस्तेन समाप्यते॥ कृष्णशिलेति शालग्रामशिलोपलक्षणम्॥ महान्तस्तु कृष्णमूर्त्तिशालग्राममात्रस्यानुयोगलब्धे: फलमेतदित्याहुस्तन्न मनोरमम्। शालग्रामान्तरस्यानुद्योगलाभे फलान्तरादर्शनात् सर्वत्रैवैतत् फलम्। लभेदित्यनेनानुद्योग इति लब्धम्। इत्यनुद्योगेन चक्रलाभफलम्॥ स्कन्दपुराणे॥ स्निग्धा कृष्णा पाण्डुरा च पीता नीला तथैव च। रक्ता रूक्षा च वक्रा च महास्थूला त्वलाञ्छिता। कपिला कर्बुरा भग्ना बहुचक्रैकचक्रिका। बृहन्मुखी बृहच्चक्रा लग्नचक्राधरा पुन:। बहुचक्राथवा काचिद्भग्नचक्रा त्वधोमुखी। आसां वर्णादिभेदेन गुणदोषावपि तत्र वै॥ स्निग्धा सिद्धिकरी देवी कृष्णा कीर्त्तिं ददाति च। पाण्डुरा पापदहनी पीता पुत्रफलप्रदा। नीला सन्दिशते लक्ष्मीं रक्ता रोगप्रदायिनी। रूक्षा

घोडे गदा नित्यं वक्रा दारिद्र्यदायिका। स्थूला निहन्ति चैवायुर्निष्फला स्यादलाञ्छिता। कपिला कर्वुरा भग्ना भग्नचक्रैकचक्रिका। वृहन्मुखी वृहच्चक्रा लग्नचक्राथ वा पुनः। बद्धचक्राथ वा या स्यात्भग्नचक्रा त्वधोमुखी। पूजयेद् यः प्रमादेन दुःखमेव लभेत्तु सः॥ प्रकृतिखण्डे॥ छत्राकारे भवेद्राज्यं वर्त्तुले च महाश्रियः। दुःखञ्च शकटाकारे शूलाग्रे मरणं ध्रुवम्। विकृतास्ये च दारिद्र्यं पिङ्गले हानिरेव च। लग्नचक्रे भवेद्व्याधिर्विदीर्णे मरणं ध्रुवम्॥ मत्स्यसूक्ते॥ त्रिकोणा विषमा चैव छिद्रा भग्ना तथैव च। अर्द्धचन्द्राकृतिर्या तु पूजार्हा न भवेत् प्रिये!। फलं नोत्पद्यते तत्र पूजितायां कदाचन। चक्रमन्त्रेण सा पूज्या कृष्णमन्त्रेण वा पुनः॥ अग्निपुराणेऽपि॥ तथा व्यालमुखी भग्ना विषमा बद्धचक्रिका। विकारावर्त्तनाभिर्या नारसिंही च वा शिला। कपिला विभ्रमावर्त्ता रेखावर्त्ता तथैव च। दुःखदा सा तु विज्ञेया सुखदा न कदाचन। स्निग्धा श्यामा तथा युक्ता अमया समचक्रिका। योनिमूर्त्तिरनन्ताख्या गम्भीरा सम्पुटा तथा। सूक्ष्ममूर्त्तिरमूर्त्तिश्च सम्मुखा सिद्धिदायिका। धात्रीफलप्रमाणा या करेणोभयसम्पुटा। पूजनीया प्रयत्नेन शिला चैतादृशी शुभा। पूजया फलमाप्नोति इह लोके परत्र च॥ इति। चक्रशुभाशुभफलम्॥ यत्तु ब्रह्मपुराणम्॥ खण्डितं स्फुटितं भग्नं पार्श्वभिन्नं विभेदितम्। शालग्रामशिलाभूतं किञ्चिद्दोषावहं न हि॥ इति वचनं तत् स्वीयेष्टचक्रस्तुतिपरम्। अतएव स्कन्दपुराणे॥ खण्डितं स्फुटितं लग्नं शालग्रामे न दोषदम्। इष्टा तु यस्य या मूर्त्तिः स तां यत्नेन पूजयेत्॥ इतिरुद्रवाक्यम्॥ दोषाश्चेति सकामार्च्चनविषया इति तु भगवद्भक्तिविलासकृत् वीरमित्रोदयश्च। इष्टमूर्त्तिपूजायां दोषाभावः। पुनः स्कान्देऽप्युक्तं यथा। चक्रं वा

केवलं तच्च पद्मेन सह संयुतम्। केवला वनमाला वा हरि-र्लक्ष्म्या सह स्थितः। मुख्याः स्निग्धादयस्तत्रामुख्या वक्रादय-स्तथा। मुख्याभावे त्वमुख्यापि पूजनीया सदा बुधैः॥ इति शुभलक्षणशिलाभावे निन्द्यलक्षणशिलाग्रहणम्। पद्मपुराणे माघमाहात्म्ये। यः पूजयेद्धरिं चक्रे शालग्रामशिलोद्भवे। राजसूयसहस्रेण तेनेष्टं प्रतिवासरम्। यदा नमन्ति वेदान्ता ब्रह्म निर्गुणमच्युतम्। तत्प्रसादो भवेन्नृणां शालग्रामशिलार्च्च-नात्। अपि पापसमाचाराः कर्म्मस्वनधिकारिणः। शालग्रा-मार्च्चका वैश्या नैव यान्ति यमालयम्। अग्निहोत्रं हुतं तेन दत्ता पृथ्वीससागरा। येनार्च्चितो हरिश्चक्रे शालग्रामशिलो-द्भवे। विना तीर्थैर्विना दानैर्विना यज्ञैर्विना नतिम्। मुक्तिं याति नरो वैश्यः शालग्रामशिलार्च्चनात्॥ इति शालग्रामपूजा-फलम्॥

मत्स्यसूक्ते महातन्त्रे उपरिभागे प्रथमचरणे द्वादशपटले॥ गण्डकी द्वादशं यत्र क्रोशमात्रं तपोवनम्। हरिक्षेत्रसमं क्षेत्र-मेकैकं पुण्यमुच्यते। जीवन्मुक्तो भवेत्तस्माच्छक्राङ्कितशिलार्च्च-नात्॥ इति शालग्रामदेशफलम्॥

आदौ सुदर्शनो मूर्त्तिर्लक्ष्मीनारायणः परः। द्विचक्रोऽसाव-च्युतः स्याच्चतुश्चक्रश्चतुर्भुजः। पञ्चचक्रो वासुदेवश्चतुश्चक्रो जना-र्द्दनः। सुखदा सप्तचक्रा तु द्वादशी चोत्तमा शुभा। एकादशे-ऽनिरुद्धः स्याद्द्वादशे चार्क उच्यते। अत ऊर्द्ध्वमनन्तस्तु द्विचक्रे पार्वती स्मृता। त्रिचक्रोऽग्निः समाख्यातः चतुश्चक्रश्चतुर्मुखः। पञ्चचक्रो महादेवः षट्चक्रे च षड़ाननः॥ तथा॥ गण्डक्यां या समुद्भूता देवी षोड़शसम्भवा। पश्चिमादिक्रमेणैव यावद्भुवन-पर्वतम्। प्रद्युम्नं वामनञ्चैव वराहं पुरुषोत्तमम्। नारायणञ्च नृहरिमनन्तञ्च जनार्द्दनम्। वासुदेवं तथा मत्स्यं कूर्मं दैत्यघ्न

कल्किनम्। विश्वकेशं हयग्रीवं श्रीकरं हरिहरं तथा॥ लक्ष्मीनारायणञ्चैव सर्वक्षेत्रसमुद्भवम्। सर्वं सर्वेषु क्षेत्रेषु युगस्यान्ते महेश्वरि!॥ इति शालग्रामोत्पत्तिस्थाननिर्णयः॥

स्कन्दपुराणे॥ म्लेच्छदेशे शुचौ वापि चक्राङ्को यत्र तिष्ठति। योजनानि तथा त्रीणि मम क्षेत्रं वसुन्धरे!। तन्मध्ये म्रियते यस्तु पूजकः सुसमाहितः। शतबाधाविनिर्मुक्तः पुनः सोऽपि न जायते। चक्राङ्क इत्युपादानात् द्वारकाशिलाया अप्येतत् फलमविशेषादिति चक्रसन्निधिमरणफलम्। तथा च चक्राङ्कितस्य सान्निध्ये यत्कर्म्म क्रियते नरैः। स्नानं दानं तपो होमः सर्वं भवति चाक्षयम्॥ इति चक्रनिकटे कर्म्ममात्रफलम्॥

तथा। संवत्सरन्तु यत्पापं मनसा कर्म्मणा कृतम्। तत्सर्वं नश्यति पुंसां सकृच्चक्राङ्कदानतः॥ इति सकृच्चक्राङ्कदानफलम्॥

ब्रह्मपुराणे॥ दीर्घा काञ्चनवर्णा या विन्दुत्रयविभूषिता। मत्स्याख्या सा शिला प्रोक्ता भुक्तिमुक्तिफलप्रदा॥ १॥ तथा॥ मत्स्यरूपन्तु देवेशं दीर्घाकारन्तु यद्भवेत्। विन्दुत्रयसमायुक्तं कांस्यवर्णं सुशोभनम्॥ २॥ वीरमित्रोदये हेमाद्रिधृतपद्मपुराणे॥ त्रयो मत्स्यादयः श्यामा द्विचक्राः स्वाङ्कसंयुताः। तेषां सन्दर्शनादेव सर्वकाममवाप्नुयात्। मत्स्यरूपन्तु देवस्य दीर्घाकारं सुपूजितम्। विन्दुत्रयसमायुक्तं काचवर्णं सुशोभनम्॥ ३॥ ब्रह्माण्डपुराणे॥ दीर्घा द्वारयुतं त्रेधा द्वारमध्ये च चक्रयुक्। चक्रमेकं पुच्छभागे दक्षिणे शकटाकृति। वामे प्रदृश्यते रेखा मत्स्यमूर्त्तिः शुभप्रदा॥ ४॥ पुराणसंग्रहे॥ विन्दुत्रयसमायुक्तं चक्राब्जशङ्खलाञ्छितम्। दीर्घं दक्षिणमास्यञ्च मत्स्यचक्रं समीपगम्॥ ५॥ मत्स्यसूक्ते॥ मत्स्याकृतिर्भवेन्मत्स्यमूर्द्ध्नि चित्रं सदीर्घकम्॥ इति मत्स्यचक्रम्॥ ६॥

कूर्मं कूर्माकृतिशिलापूर्वभागोन्नतं यदि॥१॥ ब्रह्मपुराणे॥

कूर्मस्तथोन्नतः पृष्ठे वर्त्तुलावर्त्तपूरितः। हरितं वर्णमाधत्ते कौस्तुभेन च चिह्नितः ॥२॥ पद्मपुराणे ॥ कूर्माकारा च चक्राङ्का शिला कूर्मः प्रकीर्त्तितः ॥३॥ ब्रह्मपुराणे ॥ तत्तल्लक्षणसंयुक्तं भानोर्वलयपञ्चकम्। कूर्म्मचक्रमिदं प्रोक्तं दुर्लभं सर्वकामदम् ॥ ४ ॥ ब्रह्माण्डपुराणे तु विशेषः। चतुर्द्धा कूर्म्ममूर्त्तिः स्यात् पार्श्वभागे खुरान्विता। विख्याता दुर्लभा सर्वमनोरथफलप्रदा। विन्दुत्रयान्विता शङ्खचक्रध्वजयुतापि वा। विन्दुत्रयान्विता सौवर्णविन्दुत्रययुक्ता यत्र कुत्रापि विन्दवः सौवर्णा ज्ञेया इति वीरमित्रोदयः ॥ दीर्घा दक्षिणवामास्था भानोर्वलयपञ्चकैः। भूषिता कूर्म्ममूर्त्तिः स्याद्दुर्लभा सर्वकामदा। वृत्तोपेता कूर्म्ममूर्त्तिः कनकच्छविसंयुता। स्नुहीपुष्पाकृतिर्वापि चक्रस्योभयपार्श्वतः। कूर्म्ममूर्त्तिः खगेशानि! सर्वकामफलप्रदा ॥ २ ॥ वर्त्तुला सुवलाकारा दीर्घद्वारा तु वैष्णव!। नाभिचक्रयुता ताभ्यां कूर्माकारा तु पार्श्वतः। तथा चास्यासनावास्या उन्नता नीललोहिता। कूर्म्ममूर्त्तिरिति ख्याता पुत्रपौत्रादिवृद्धिदा। नाभिचक्रयुतेत्यत्र चक्रद्वयमेवानुसन्धेयम्। द्विचक्रः स्वाङ्कसंयुता इति पूर्वोदाहृतपद्मपुराणवचनात् ॥ १२ ॥ इति कूर्म्मचक्रम् ॥

ब्रह्मपुराणे ॥ वराहः शक्तिलिङ्गस्तु चक्रे च विषमे स्थिते। इन्द्रनीलनिभः स्थूलस्त्रिरेखालाञ्छितः शुभः। तस्य सम्पूजनान्नंही प्राप्नोति मनसेप्सितम् ॥ १ ॥ वराहाकृतिराभग्नस्वक्ररेखास्वलङ्कृतः। वराह इति स प्रोक्तो भुक्तिमुक्तिफलप्रदः। पद्मपुराणे तु वराहः सोऽपि विज्ञेय इति प्रथमचरणे पाठः ॥ २ ॥ वराहमूर्त्तिर्द्विविधा भिन्नलक्षणयोगतः। दक्षपार्श्वगते चक्रे समचक्रप्रदेशतः। वनमालान्वितो लक्ष्मीवराहः परिकीर्त्तितः ॥ ३ ॥ इति वराहलक्षणम् ॥

अतीवविकृतास्यञ्च द्विचक्रं विकटं तथा। नरसिंहाभिधं ज्ञेयं सद्यो वैराग्यदायकम्॥ १॥ मात्स्ये॥ यस्य दीर्घमुखं पूर्वं कथितैर्लक्षणैर्युतम्। रेखाश्च पुष्कराकारा नरसिंहो मतो हि सः॥ २॥ ब्रह्मपुराणे॥ नरसिंहस्त्रिविन्दुः स्यात् कपिलः पञ्चविन्दुकः। ब्रह्मचर्य्येण पूज्यः स्यादन्यथा सर्वविघ्नदः॥ ३॥ कपिलो नरसिंहस्तु पृथुचक्रः सुशोभनः। ब्रह्मचर्य्येण पूज्योऽसावन्यथा विघ्नदो भवेत्॥ ४॥ स्थूलचक्रद्वयं मध्ये गुड़लाक्षासुवर्णकः। द्वारोपरि तथा रेखा पुष्टाकारा सुशोभना। स्फुटितं विषमं चक्रं नारसिंहन्तु कापिलम्। सम्पूज्य मुक्तिमाप्नोति संग्रामे विजयी भवेत्॥ पद्मपुराणे॥ नृसिंहः कपिलो ज्ञेयः स्थूलचक्रश्च दंष्ट्रया। त्रिविन्दुः पञ्चविन्दुर्वा ब्रह्मचर्य्येण पूजितः। ददाति वाञ्छितफलमघौघञ्चाशु नश्यति। अन्यथा जायते क्लेशो नात्र कार्य्या विचारणा॥ अग्निपुराणे॥ नृसिंहः स्थूलचक्रः स्यात् कपिलः पञ्चविन्दुकः॥ वीरमित्रोदयधृतवैश्वानरसंहितायाम्। कपिलो नरसिंहस्तु पृथुचक्रः सुशोभनः। ब्रह्मचर्य्याधिकारोऽत्र नान्यथा पूजनं भवेत्॥ ब्रह्माण्डपुराणे॥ विवृतास्यं रामचक्रं वर्त्तुलं कपिलप्रभम्। नरसिंहं गृहस्थानामिष्टदं विन्दुभिर्युतम्॥ इति कपिलनृसिंहलक्षणम्॥

प्रकृतिखण्डे॥ द्विचक्रं विकृतास्यञ्च वनमालाविभूषितम्। लक्ष्मीनृसिंहं विज्ञेयं गृहिणां सुखदं सदा॥ १॥ वीरमित्रोदयधृतपुराणसंग्रहे॥ वामपार्श्वस्थिते चक्रे कृष्णवर्णः सविन्दुकः। लक्ष्मीनृसिंहो विख्यातो भुक्तिमुक्तिफलप्रदः। समे चक्रे इति ब्रह्मपुराणे पाठः॥ २॥ ब्रह्मपुराणे॥ नरसिंहस्त्रिविन्दुः स्यात् कपिलः पञ्चविन्दुकः। वामाश्रिते पुष्कले तु लक्ष्मीनरहरिः स्मृतः॥ ३॥ इति लक्ष्मीनृसिंहलक्षणम्॥

ब्रह्माण्डपुराणे॥ विदारणाभिधानः स्यात् नृसिंहो दीर्घ-

केशरैः। अन्तश्चक्रं वृहद्द्वारं दक्षिणीव्रतमस्तकम्। विदारण-मिति ख्यातं दंष्ट्राभ्यामुपशोभितम्। ब्रह्मचर्य्याविरोधेन नर-सिंहोऽर्च्चितो यदि। व्याधिशेत्तु भयं तस्य वह्निना दह्यते गृहम्। अत्रापि चक्रद्वयमेव यत्र कुत्राप्यनुक्तस्थले चक्रद्वयमेव ज्ञेय-मिति सामान्येनालोकनादिति वीरमित्रोदयः। इति योग-नृसिंहलक्षणमिति तेनोक्तम्। वस्तुतो विदारनृसिंहलक्षणमिदं विदारणाभिधानः स्यादित्युक्तत्वादिति ॥

सप्तचक्रं बहुमुखं समन्तात् स्वर्णभूषितम्। सर्वतो मुखना-मानं स्वर्णाभं वर्णतो यदि ॥१॥ मम चक्रः समाख्यातो नृसिंहः सर्वतो हरिरित्यत्रापि ॥ इति सर्वतोमुखनृसिंहलक्षणम् ॥

ब्रह्माण्डपुराणे ॥ बहुचक्रं बहुद्वारं बहुवर्णं महोदरम्। पातालनरसिंहाख्यं भिक्षूणाममृतप्रदम् ॥ तथा ॥ तृतीय-चक्रादारभ्य पार्श्वतो दशचक्रकः। स पूर्वोक्तविहीनश्च बहु-रूपधरो भवेत् ॥ पातालनरसिंहो वा बहुरूपधरोऽपि वा ॥ इति पातालनृसिंहलक्षणम् ॥

तत्रैव ॥ अत्युच्चचक्रं मध्यस्थं मम भाव महोदरम्। आकाशनरसिंहाख्यं वनवासिभिरर्चितम् ॥ इत्याकाशनृसिंह-लक्षणम्।

बहुच्छिद्रं भीमवक्त्रं सुवर्णकनकान्वितम्। चक्रन्तु राक्षसं ज्ञेयं नृसिंहं गृहदायकम् ॥ इति राक्षसनृसिंहलक्षणम् ॥

द्विचक्रं द्विमुखं स्थूलं द्वारश्चोर्द्धकृतं शिरः। दारिद्र्यफ-लदं ज्ञेयं तद्धि जिह्वानृसिंहकम् ॥ इति जिह्वानृसिंहलक्षणम् ॥

पुरः पार्श्वे च पृष्ठे च त्रिचक्रेणोपशोभितम्। अधोमुख-मिति ख्यातमर्चकानां विमुक्तिदम्। अत्र चक्रत्रयमेकं पुरः एकं पार्श्वे एकं पृष्ठे ॥ इति अधोमुखनृसिंहलक्षणम् ॥

वीरमित्रोदये ॥ अधोमुखनृसिंहश्च शिशुमारस्तथैव च।

त्रिविक्रमो मत्स्यमूर्त्तिस्त्रिचक्रा परिकीर्त्तिता इति॥ ब्रह्माण्डपुराणे॥ सूक्ष्मरन्ध्रं द्विचक्रञ्च वनमालाविभूषितम्। तज्ज्वालानरसिंहाख्यं नृणां संसारमोचनम्॥ इति ज्वालानृसिंहलक्षणमिति नृसिंहभेदाः॥ ८॥

ब्रह्मपुराणे॥ कदम्बकुसुमाकारो रेखापञ्चकभूषितः। वर्त्तुलश्चातिह्रस्वश्च वामनः परिकीर्त्तितः॥ १॥ अन्यत्रापि॥ वामनाख्यो भवेद्देवो ह्रस्वो यः स्यान्महाद्युतिः। अर्द्धचक्रस्त्वधश्चक्रः सोऽभीष्टार्थप्रदोऽर्चितः॥ २॥ वर्त्तुलाङ्गस्त्रिवृत्तस्तु मधूकपुष्पाकृतिर्भवेत्। केशराभस्तु वै तार्क्ष्य! दृश्यते चक्रपार्श्वतः। वामनो गृहिणां श्रेष्ठः सुखसौभाग्यदायकः। गृहपुत्रार्थवृद्धिञ्च दत्त्वा सन्दिशति ध्रुवम्। मध्यचक्रं नाभिह्रस्वमतिस्निग्धञ्च कामदम्। स्पष्टचक्रं वामनञ्च नृणामीप्सितदायकम्॥ अतसीकुसुमप्रख्यं किञ्चिदुन्नतमस्तकम्। तद्वामनं कामदं स्यात् किञ्चिदस्पष्टचक्रकम्॥ वर्त्तुलं नीलमेघाभं वनमालासमन्वितम्। सूक्ष्मरन्ध्रं वृहन्मूर्त्तिं वामनं भुवि दुर्लभम्॥२॥ प्रकृतिखण्डे॥ अतिक्षुद्रं द्विचक्रञ्च नवीननीरदोपमम्। दधिवामनाभिधं ज्ञेयं गृहिणाञ्च सुखप्रदम्॥३॥ ब्रह्माण्डपुराणे॥ अतसीपुष्पसङ्काशो विन्दुना परिशोभितः। यो वामनाभिधो देवः स्वेदविन्दुयुतो मुखे। दधिवामनसंज्ञः स्याद्धनधान्यसुखप्रदः॥ मत्स्यसूक्ते॥ श्रीकरं श्रीफलाकारं वामनं वदरस्य च। वीजेन सदृशं यद्वा फलेन दधिवामनम्॥ इति वामनलक्षणमिति वामनभेदाः॥ ८॥ ५॥

पीतः परशुकोदण्डलाङ्गलेन सुलक्षितः। रामो रामश्च रामश्च ज्ञेयो मृत्युहरः क्रमात्। १॥ ब्रह्माण्डपुराणे॥ जामदग्न्यस्तु भगवान् द्विविधः परिकीर्त्तितः। तत्त्रिमूर्त्तिश्चलोपेतं दीर्घाकारं हृद्धि यत्। इति भागवतं चक्रं पर-

श्चाकृतिकेन वा। वामे वा दक्षिणे वापि चक्रभागे भवेद्विदु पृष्ठे वा पार्श्वभागे वा रेखा दंष्ट्राकृतिर्भवेत्। जामदग्न्यस्तु भगवान् शान्ताख्यः शान्तिदोऽर्चितः ॥ २ ॥ ६ ॥ इति परशु-रामलक्षणम् ॥ ६ ॥

ब्रह्माण्डपुराणे ॥ रामचन्द्रस्तथा स्निग्धो दूर्वाभश्चक्रशोभनः। पृष्ठे दण्डस्तथा पार्श्वे रेखाद्वयेन संयुतः ॥ मत्स्यसूक्ते ॥ श्यामं दूर्वादलाकारं रामं तदपि कीर्त्तितम् ॥ १ ॥ प्रकृति-खण्डे ॥ मध्यमं वर्त्तुलाकारं द्विचक्रवाणविश्रुतम्। रणरामा-भिधं ज्ञेयं शरतूणसमन्वितम् ॥ इति रणरामलक्षणम् ॥ २ ॥

मध्यमं वर्त्तुलाकारं द्विचक्रं वाणविक्षतम्। सप्तचक्रश्च छत्रञ्च शरतूणसमन्वितम्। राजराजेश्वरं ज्ञेयं राज्यसम्पत्प्रदायकम् ॥ इति राजराजेश्वरचक्रलक्षणम् ॥ ३ ॥

ब्रह्माण्डपुराणे ॥ एकस्मिन्नेव वदने चतुश्चक्रोऽतिविश्रुतः। वामोन्नतो लसच्छत्रध्वजचामरसंयुतः। वनमालाधरो देवः सीतारामः प्रकीर्त्तितः। सर्वत्र विजयप्रद इति पाठान्तरम् ॥१॥ द्वारयोर्वा तु चक्रो वा वामतश्चैकचक्रवान्। वाणरूपी वरो रामः सीतारामः प्रकीर्त्तितः। सर्वसौभाग्यदश्चक्रः सर्वत्र विजय-प्रदः ॥ २ ॥ इति सीतारामलक्षणम् ॥ ४ ॥

कोदण्ड कुक्कुटाण्डाभं श्यामलं पृष्ठमुन्नतम्। रेखाद्वय-समोपेतं द्वारयोश्च खगेश्वर!। धनुराकृतिका रेखा दृश्यते पार्श्वतोऽपि वा। भवेद्रामो दशकण्ठकुलान्तक इतीरितः ॥ इति दशकण्ठकुलान्तकरामलक्षणम् ॥ ५ ॥

वाणरूपी च चापाढ्यः कुण्डली सक्समाहितः। सूक्ष्म-केशरचक्राढ्यो वीररामः श्रिया हरः ॥ इति वीरराम-लक्षणम् ॥ ६ ॥

दिव्यवाणेन संयुक्तश्चापरूपास्त्रसंयुतः। करालवदनोरस्को

विन्दुयुक् चक्रशोभितः ॥ स स्याद्विजयरामाख्यः केशरीपेत-चक्रकः ॥ इति विजयरामलक्षणम् ॥ ७ ॥

एकचक्रस्तु वदने कृष्णवर्णः सुशोभनः । सा राममूर्त्तिर्विज्ञेया पूजकस्य कवित्वदा ॥ इति कवित्वदाख्यरामलक्षणम् ॥ ८॥

मूर्द्ध्नि जानुधनुर्वाणः पार्श्वे खुरयुतस्तथा । दुष्टराम इति ख्यातो नीलाम्बुदसमप्रभः ॥ इति दुष्टरामलक्षणम् ॥ ९ ॥

एतानि ब्रह्माण्डपुराणीयानीति वीरमित्रोदयः ॥ प्रकृति-खण्डे । द्वे चक्रे एकलग्ने च पृष्ठदेशेऽतिपुष्कलम् । सङ्कर्षणन्तु विज्ञेयं सुखदं गृहिणां सदा ॥ १ ॥ पद्मपुराणे ॥ बलभद्रशिला ज्ञेया सप्तचक्राङ्किता खग ! । पूजितस्तुष्यते देवः पुत्रपौत्रप्रदो भवेत् ॥ २ ॥ ब्रह्माण्डपुराणे । पृष्ठभागे पञ्चरेखा चापवाणौ च पार्श्वयोः । बलरामः स विज्ञेयो पुत्रदायी न संशयः ॥३॥ द्वे चक्रे अग्रलग्ने तु पूर्वभागस्य पुष्कलः । स सङ्कर्षणाख्यो विज्ञेयो रक्ताभश्चातिशोभनः ॥ इति सङ्कर्षणलक्षणम् ॥ १० ॥

तत्रैव । अतिगह्वरसंयुक्तं चक्रहीनं यथा भवेत् । प्रवीणो बुद्धसंज्ञः स्यात् ददाति परमं पदम् ॥ इति ब्रह्ममूर्त्तिलक्षणम् ॥ ११ ॥

अलिवर्णं सूक्ष्मबीजं षट्‌चक्रं सुस्थिरासनम् । कृपाणाकृतिका रेखा द्वारस्योपरि पृष्ठके । म्लेच्छनाशी भवेत् कल्किः कलि-कल्मषनाशकः ॥ १ ॥ मत्स्यसूक्ते ॥ कल्किनन्तु हयाकारं त्रि-चक्रेणैव लाञ्छितम् ॥ २ ॥ इति कल्किमूर्त्तिलक्षणम् ॥१२॥

ब्रह्मपुराणे ॥ प्रदक्षिणावर्त्तकृता वनमालाविभूषिता । या शिला कृष्णसंज्ञा सा धनधान्यसुखप्रदा ॥ १ ॥ ब्रह्माण्डपुराणे । समचक्रे द्वारदेशे कृष्णवर्णः सुशोभनः । सा कृष्णमूर्त्तिर्विज्ञेया पूजिता सौख्यदायिनी ॥२॥ कृष्णपीतः कृशतनुं बिभ्रत् पार्श्वे सविन्दुयुक् । द्वारतुल्यो भवेन्नाभिः कूर्म्माकारस्तु पृष्ठतः । कृष्णो

स्ताच्यं ! सर्वेषां पापनाशनः । पीतः पीतचिह्नयुक्तः। चिह्नञ्चात्र पीताम्बरविन्दुरेखादि ज्ञेयमिति वीरमित्रोदये ॥३॥ काम-मूर्त्तिस्तु कृष्णाभा निम्नाऽधस्तात् सविन्दुकः। स बालकृष्णो विज्ञेयो दीर्घास्यः पुत्रभाग्यदः ।। ४ ।। कृष्णोऽतिकृष्णो न स्थूल-श्चक्राभ्यामुपशोभितः। वनमालायुतः पृष्ठे श्रीवत्सशुभलाञ्छनः। दण्डशृङ्गयुतः पार्श्वे वरात्मा सर्वतोमुखः। स गोपाल इति प्रोक्तो भूधान्यादिधनप्रदः ॥ इति गोपालमूर्त्तिलक्षणम् ॥५॥

यो गोपालः पार्श्वभागे दरपद्मविकाशिभाक् । स स्यान्म-दनगोपालो मालाकुण्डलभूषितः। पुत्रपौत्रधनैश्वर्य्यसर्वलो-कैकवश्यदः । इति मदनगोपालमूर्त्तिलक्षणम् ॥६॥

अत्र यत्र मूर्त्तिभेदे चक्रादि नोक्तं तत्र तत्प्रकृतिभूतल-क्षणोक्तं सामान्यं ग्राह्यमिति वीरमित्रोदये ॥ दीर्घाकारः कृष्णवर्णः सार्द्धचन्द्रनिभाननः। स स्यात् सन्तानगोपालः पुत्रपौत्रादिवृद्धिदः ॥ इति सन्तानगोपाललक्षणम् ॥ ७ ॥

वर्त्तुलो मस्तके निम्नः पार्श्वे विततविन्दवः। गोवर्द्धनाख्यो गोपालो दीर्घा रेखा तु दक्षिणे। सर्वकल्मषनाशी स्याद्गोधान्या-दिधनप्रदः ॥ इति गोवर्द्धनगोपाललक्षणम् ॥ ८ ॥

धर्म्मसंहितायाम् ॥ कुक्कुटाण्डसमोपेतः श्रीधरो वन-मालया। लाङ्गलं वेणुचिह्नञ्च कुलञ्च परिवेष्टितम्। लक्ष्मी-गोपालकः ख्यातो दुर्लभो भुवनत्रये। पुत्रदारादिसम्पत्ति-भुक्तिमुक्तिफलप्रदः ॥ इति लक्ष्मीगोपाललक्षणम् ॥ ९ ॥

ब्रह्माण्डपुराणे ॥ रेखा सुवर्णवर्णा हि विन्दुत्रयविभूषितः। कालीयमर्दनः साक्षात् सर्वशत्रुनिकृन्तनः। सव्यापसव्य-रेखाभ्यां भूषितः सूक्ष्मवक्त्रकः। पार्श्वस्थूलयुतो देवो धनपद्म-युतः शुभः ॥ इति कालीयमर्द्दनलक्षणम् ॥१०॥

असिवर्णस्थलः स्थूलश्चक्रभागोऽतिशोभनः। वनमालापरिवृत.

पृष्ठे श्रीवत्सलाञ्छनः ॥ स्यमन्तहारी विज्ञेयः पुत्रकीर्त्ति विवर्द्धनः ॥ इति स्यमन्तहारिलक्षणम् ॥ ११ ॥

चाणूरमर्द्दनलक्षणम् ॥ रक्तविन्दुद्वययुतः श्यामो दन्तिभृतोपमः । रेखा दक्षिणतो वामे मुष्टिबद्धष्ठविन्दुयुक् । चाणूरमर्दनाख्यः स्यात् सर्व्वशत्रुनिकृन्तनः । इति चाणूरमर्दन लक्षणम् ॥१२॥

अथ कंसमर्द्दनलक्षणम् ॥ पूर्व्वभागैकवर्णेन पार्श्ववर्णेन वा भवेत् । कंसमर्द्दी भवेत् कृष्णो नीलाम्बुदनिभः शुभः ॥ इति कृष्णमूर्त्तिभेदाः ॥१३॥

पद्मब्रह्माण्डपुराणयोः ॥ सौभाग्यं केशवो दद्यात् चतुष्कोणे भवेत् समः ॥ वैश्वानरसंहितायां ॥ नाभ्यधस्तु भवेत् शङ्खश्चक्रन्तु तदनन्तरम् । केशवः स तु विज्ञेयः सर्व्वकामफलप्रदः । इति केशवलक्षणम् ॥१४॥

पद्मपुराणे ॥ हयग्रीवोऽङ्कुशाकारो रेखा चक्रसमीपगा । बहुविन्दुसमायुक्तं पृष्ठे नीरदनीलकम् । हयग्रीवो हयाकार इति ब्रह्माण्डपुराणे पाठः । पृष्ठे स्यान्नीलरूपकमिति वीरमित्रोदये पाठान्तरम् ॥ अन्यत्र च ॥ हयग्रीवेऽङ्कुशाकारे रेखाः पञ्च भवन्ति हि । बहुविन्दुसमाकीर्णे दृश्यन्ते नीलरूपकाः ॥ अग्निपुराणे ॥ हयग्रीवश्च स ज्ञेयो योऽङ्कुशप्रतिरूपकः । चक्रध्वजसमायुक्तः पूजितः सौख्यदायकः ॥ हयग्रीवा यथा लम्बा रेखाङ्का या शिला भवेत् । तथा सौम्यो हयग्रीवः पूजितो ज्ञानदो भवेत् ॥ पुराणसंग्रहे ॥ हयग्रीवोऽपि भगवान् रक्तपीतादिभिः श्रितः । अङ्कुशाकृतिकस्तार्क्ष्य ! चक्रद्वयसमन्वितः । पद्माकृतिस्तथा पार्श्वे कुण्डलं मणिरेव वा । सुखदो मोक्षदो नृणां भोगदो विनतासुत ! ॥ इति हयग्रीवलक्षणम् ॥

पद्मपुराणे ॥ हयग्रीवा यथा लम्बा रेखाङ्का या शिलाऽ-

भवेत्। तथासौ स्याद्धयग्रीवः पूजितो ग्रामदो भवेत्॥ अन्यत्रापि। अश्वाकृति मुखं यस्य साक्षमालं शिरस्तथा। पद्माकृतिर्भवेद्वापि हयग्रीर्षा त्वसौ मतः॥ मत्स्यसूक्ते द्वादशपटले॥ हयग्रीवं चक्रचिह्नं वामोन्नतकपिञ्जलम्। श्यामं दूर्वादलाकारं रामं तदपि कीर्त्तितम्॥ इति हयग्रीव-लक्षणम्॥१५॥

अग्निपुराणे॥ परमेष्ठी मात्रचक्रं पृष्ठे छिद्रञ्च विन्दुवान्॥ ब्रह्मपुराणे॥ परमेष्ठी तु शुक्लाभः पद्मचक्रसमन्वितः। चित्रा-कृतिस्तथा पृष्ठे शुषिरञ्चातिपुष्कलम्॥ तथा। परमेष्ठी लोहिताभश्चक्रमेकं तथा युतम्। विम्बाकृतिस्तथा रेखा शुषि-रञ्चातिपुष्कलम्॥ पुराणसंग्रहे॥ परमेष्ठी च शुक्लाभः पद्म-चक्रसमन्वितः। चीराकृतिः क्रमिमिता पृष्ठे शुषिरचिह्नितः॥ परमेष्ठी च शुक्लाभश्चक्रपद्मसमन्वितः। स वर्त्तुलस्तथा पीतः पृष्ठे च शुषिरं ध्रुवम्॥ इति पाठान्तरम्॥ वैश्वानरसंहि-तायाम्॥ परमेष्ठी तु रक्ताभश्चक्रपद्मसमन्वितः। द्विधाकृति-स्तथा पृष्ठे शुषिरञ्चापि वर्त्तुलम्। पीतवर्णयुतो वापि भुक्ति-मुक्तिवरप्रदः॥ इति परमेष्ठिलक्षणम्॥ १६॥

ब्रह्मपुराणे॥ हिरण्यगर्भदेवञ्च मध्यपिङ्गलविग्रहम्। ईष-द्दीर्घं मनोज्ञञ्च स्निग्धं सकलकामदम्॥ तथा। चन्द्रा-कृति हिरण्याख्यं रश्मिजालं विनिर्दिशेत्। सुवर्णरेखाबहुलं स्फाटिकद्युतिशोभितम्॥ ब्रह्माण्डपुराणे॥ हिरण्यगर्भो भगवान् परितो भुवि दुर्लभः। अन्तर्ध्वनिसमायुक्तं कृष्णवर्णं सुवर्त्तुलम्॥ वर्त्तुलन्तु सुवदनं चक्रमध्ये च कोमलम्। श्रीवत्सं कोमला-कारं लाञ्छनं पृष्ठपार्श्वके॥ हिरण्यगर्भो विख्यातः पृथुनाभि-समन्वितः। हिरण्येन विमिश्रस्तु श्रीप्रदः कुलवर्द्धनः॥ इति हिरण्यगर्भलक्षणम्॥१७॥

ब्रह्मपुराणे॥ चतुर्भुजं चतुश्चक्रं नवमेघसमद्युति। मण्ड-लाकारचक्रं स्यात् सर्वेषामभयप्रदम्॥ इति चतुर्भुजलक्षणम्॥ १८॥

तथा। गदाधरस्त्रिरेखाभिर्लाञ्छितो मध्यदेशतः। ध्वज-वज्राङ्कुशैः पीतो वामचक्रः सुवर्त्तुलः॥ ब्रह्मवैवर्त्ते॥ सुदर्शन-श्चैकचक्रं सप्तचक्रं गदाधरम्। द्विचक्रं हयवक्त्राभं हयग्रीव प्रकीर्त्तितम्॥ इति गदाधरलक्षणम्॥ १९॥

ब्रह्मपुराणे॥ श्यामं नारायणं विद्यान्नाभिचक्रं तथोन्नतम्। दीर्घरेखासमोपेतं दक्षिणे शुषिरं पृथु॥ ब्रह्माण्डपुराणे॥ विरजे सुमुखे चक्रे मध्यवक्त्रस्तु शोभनः। ताड़ङ्कनानाभरण-हारकेयूरलाञ्छनः। नारायणः समाख्यातः सर्वसिद्धिप्रदायकः॥ मन्त्रसूक्ते द्वादशपटले॥ नारायणं पार्श्वचक्रे चक्रमेव तु पुष्कलम्। ऋचाऽत्र वर्जयेन्मन्त्री गृहस्थो हि न चार्च्चयेत्॥ इति नारायणलक्षणम्॥२०॥

नारायणभेदास्तु ब्रह्मपुराणे॥ द्वारमेकं चतुश्चक्रं ब्रह्मादीनान्तु दुर्लभम्। शोभितो वनमालयेति क्वचित् पाठः। लक्ष्मीनारायणो नाम भुक्तिमुक्तिफलप्रदः॥ पुराणसंग्रहे॥ ध्वज-वज्राङ्कुशं पीनं वामे वक्त्रे तु वर्त्तुलम्। लक्ष्मीनारायणं देवममोघफलदं विदुः॥ वामे अधः खण्डे चक्रद्वयोपरि चक्र-द्वयमिति वीरमित्रोदये। ब्रह्माण्डपुराणे॥ ध्वजवज्राङ्कुशैः पीतो वामे चक्रे सुवर्त्तुलः। लक्ष्मीनारायणो देवश्चतुश्चक्रसमन्वितः॥ पूजनीयः सदा सद्भिर्वैष्णवैर्मोक्षमिच्छुभिः॥ पुनस्तत्रैव॥ एक-चक्रश्चतुश्चक्रो वर्त्तुलः श्यामवर्णकः। ध्वजवज्राङ्कुशोपेतो माला-युक्तः सविन्दुकः। नातिह्रस्वो न च स्थूलो लक्ष्मीनारायणः स्मृतः। तस्य दर्शनमात्रेण स्वाभीष्टफलमाप्नुयात्॥ चतुश्चक्रः सूक्ष्मद्वारो वनमालासमन्वितः। लक्ष्मीनारायणः श्रीमान् भुक्ति-

मुक्तिफलप्रदः। वैश्वानरसंहितायान्तु विशेषः। लक्ष्मीनारायणो देवस्त्रिभिश्चक्रैर्व्यवस्थितः। पूजनीयः प्रयत्नेन भुक्तिमुक्तिफलप्रदः॥ ब्रह्मवैवर्त्ते प्रकृतिखण्डे ऊनविंशत्यध्याये॥ एकद्वारे चतुश्चक्रं वनमालाविभूषितम्। नवीननीरदश्यामं लक्ष्मीनारायणाभिधम्॥ मत्स्यसूक्ते द्वादशपटले॥ विवरैके चतुश्चक्रं समचक्रेण चिह्नितम्। लक्ष्मीनारायणो देवश्चतुर्वर्गप्रदायकः॥ इति अपरं लक्ष्मीनारायणलक्षणम्॥ २१॥

ब्रह्माण्डपुराणे॥ नरनारायणो देवः शोणचक्रः सुशोभनः। तमालदलसङ्काशः स्वर्णपङ्कविलेपनः॥ इति नरनारायणलक्षणम्॥ २२॥

तत्रैव॥ मुषलायुधमालाभिः शङ्खचक्रगदान्वितः। रूपिनारायणो देवो मुखोरोऽभिमुखं धनुः॥ इति रूपिनारायणलक्षणम्॥२३॥

वैश्वानरसंहितायाम्॥ माधवो मधुवर्णाभो गदाकम्बु विलक्षितः॥ ब्रह्माण्डपुराणे॥ मधुवर्णो मध्यचक्रः स्निग्धसूक्ष्मतनुस्तथा। माधवः स तु विज्ञेयो भक्तानां मोक्षदायकः॥ इति माधवलक्षणम्॥२४॥

पुराणसंग्रहे॥ गोविन्दः पुण्डरीकाक्षः कृष्णवर्णो महाद्युतिः। दक्षिणे तु गदाचक्रे वामे पर्वतलाञ्छनम्॥ ब्रह्माण्डपुराणे॥ नातिस्थूलः कृष्णवर्णो गोविन्दः पञ्चचक्रकः। वामचक्रो द्दढ़द्वार उन्नतो मध्यनिम्नगः॥ इति गोविन्दलक्षणम्॥२५॥

पद्मपुराणे॥ स्थूलचक्रो भवेद्विष्णुर्मोक्षैकफलदोऽर्च्चितः॥ तथा। कृष्णवर्णो भवेद्विष्णुः स्थूलचक्रे सुशोभने। द्वारोपरि तथा रेखा दृश्यते मध्यदेशतः॥ अग्निपुराणे॥ स्थूलचक्रोऽसितो विष्णुर्मध्ये रेखा गदाकृतिः॥ पुराणसंग्रहे॥ कृष्णवर्णस्तथा विष्णुः स्थूलचक्रे सुशोभने। गदाकृतिस्तथा रेखा दृश्यते पृष्ठ-

मध्यतः॥ पुराणसंग्रहे॥ स कापिलः स्निग्धवर्णो विष्णुश्च विषमो गदः॥ ब्रह्मपुराणे॥ कृष्णवर्णस्तथा विष्णुः स्थूले चक्रे सुशोभने। द्वारोपरि तथा रेखा दृश्यते मध्यदेशतः॥ इति विष्णुलक्षणम्॥२६॥

वैश्वानरसंहितायाम्॥ नाभिदेशे शङ्खपद्मे यस्यां मुद्रा प्रदृश्यते। मधुसूदन आख्यातः शक्रुहा परिकीर्त्तितः॥ पुराणसंग्रहवैश्वानरसंहितयोः॥ त्रिविक्रमस्तथा देवः श्यामवर्णो महाद्युतिः। वामपार्श्वे स्थिते चक्रे रेखा चैव तु दक्षिणे॥ अग्निपुराणे॥ श्यामस्त्रिविक्रमो दक्षे रेखा वामे सविन्दुकः॥ ब्रह्माण्डपुराणे तु विशेषः। त्रिविक्रमस्त्रिकोणाढ्यश्चक्रद्वयसमन्वितः। प्रयत्नेन द्विजातीनां सदा पूज्यश्च तेन वै॥ इति त्रिविक्रमलक्षणम्॥ २७॥

ब्रह्मपुराण-वैश्वानर-संहिता-विष्णुप्रोक्ताग्निपुराण—ब्रह्माण्डपुराणेषु॥ श्रीधरस्तु तथा देवः श्रीयुतो वनमालया। कदम्बकुसुमाकारो रेखापञ्चकसंयुतः। कदम्बकुसुमाकारो वर्त्तुलाकार इत्यर्थः॥ पुराणसंग्रहे॥ श्रीधरस्तु तथा देवश्चिह्नितो वनमालया। कदम्बकुसुमाकार ऊर्द्ध्वरेखाश्च पार्श्वयोः॥ श्रीधरभेदा ब्रह्माण्डपुराणे॥ चक्रे च मध्यदेशे तु पङ्कजेन समन्वितः। सूक्ष्मनालः श्यामलाभासंयुतः श्रीधरः स्मृतः। निम्नाकृतिः शिरःपार्श्वे निम्नदन्तस्तु वर्त्तुलः। निम्नचक्रमतिह्रस्वं श्रीधरं परिकीर्त्तितम्॥ ब्रह्मवैवर्त्ते॥ अतिक्षुद्रं द्विचक्रञ्च वनमालाविभूषितम्। विज्ञेयं श्रीधरं देवि! श्रीप्रदं गृहिणां सदा॥ ब्रह्मपुराणे॥ वैकुण्ठं मणिवर्णाभं चक्रमेकं तथा ध्वजम्। तथाम्बुजमिति वीरमित्रोदयधृतपाठः॥ द्वारोपरि तथा रेखाङ्कुशाकारेति पाठान्तरम्॥ चक्रचिह्नेन संयुता इति वैश्वानरसंहितायां पाठः। द्वारोपरि तथा रेखा पुष्टाकारा

सुशोभना। श्रीधरस्तु तथा देवश्चिह्नितो वनमालया॥ इति श्रीधरलक्षणम्॥ २८॥

ब्रह्माण्डपुराणे॥ अर्द्धचन्द्राकृतिर्देवो हृषीकेश उदाहृतः॥ वैश्वानरसंहितायाम्॥ शूकरस्य निभाकारा यस्य केशाः सुवर्च्चसः। कर्म्मैकं दृश्यते यस्य हृषीकेशः स उच्यते॥ ब्रह्मपुराणे॥ आरक्तं पद्मनाभाख्यं सत्कृतं पद्मसंयुतम्। तुलस्या पूजयेन्नित्यं दरिद्रस्त्वीश्वरो भवेत्॥ ब्रह्माण्डपुराणे॥ निष्केशवद्धि चक्रस्तु अर्द्धचक्रः स केशवः। पद्मनाभ इति प्रोक्तो विपरीतो हलायुधः॥ एतस्यैव बहुचक्रवर्णसम्भवे एतत्पूजने दुष्टफलमुक्तं पद्मपुराणे॥ बहुभिस्तु गदाचक्रे शुक्लवर्णादिशोभितम्। दैत्यारिः कमलाशुश्च गदापाणिरधोक्षजः। पद्मनाभश्च देवः स्यात् प्रत्यहं दुःखदायकः॥ इति पद्मनाभलक्षणम्॥ २९॥

पद्मपुराणे॥ स्थूलो दामोदरो ज्ञेयः सूक्ष्मचक्रो भवेत्तु सः। चक्रे तु मध्यदेशेऽस्य पूजितः सुखदः सदा॥ ब्रह्माण्डपुराणे॥ दामोदरस्तथा स्थूलो मध्यचक्रः प्रतिष्ठितः। प्रकीर्त्तित इति क्वचित् पाठः। दूर्वाभं द्वारसङ्कीर्णं पीतरेखायुतं शुभम्। पीतरेखा तथैव चेति ब्रह्मपुराणे पाठः॥ १॥ ब्रह्मपुराणे॥ उपर्य्यधश्च चक्रे द्वे नातिदीर्घं सुखे विलम्। मध्ये च रेखा लम्बैका स च दामोदरः स्मृतः। अन्यत्र। स्थूलो दामोदरो ज्ञेयः सूक्ष्मरन्ध्रो भवेत्तु यः। चक्रे तन्मध्यदेशस्थे पूजितः शुभदः सदा॥ प्रकृतिखण्डे। द्विचक्रं स्फुटमत्यन्तं ज्ञेयं दामोदराभिधम्॥ मत्स्यसूक्ते। विश्वक्सेनमतिस्थूलं स तु दामोदरः स्मृतः॥ इति दामोदरलक्षणम्॥ ३०॥

ब्रह्मपुराणे। सुदर्शनस्तथा देवः श्यामवर्णो महाद्युतिः। वामपार्श्वे गदाचक्रे रेखा चैव तु दक्षिणे॥ पद्माकारेण

पङ्क्तिः सा यत्र रेखामयी भवेत्। स सुदर्शन इत्येव ख्यातः पूजाफलप्रदः॥ ब्रह्माण्डपुराणे॥ सुदर्शनं द्विधा ज्ञेयं लक्षणं तारयोगतः। एकचक्रं शिरोदेशे कृष्णवर्णमुखस्तथा। सुदर्शनः स विज्ञेयः सर्वपापप्रणाशनः॥ पद्माकारं बृहद्द्वारं निम्ननाभि सुदर्शनम्॥ इति सुदर्शनलक्षणम्॥ ३१॥

वैश्वानरसंहितापुराणसंग्रहनृसिंहपुराणब्रह्माण्डपुराणेषु॥ द्वारदेशे समे चक्रे दृश्यते नान्तरीयके। वासुदेवः स विज्ञेयः शुक्लाभश्च स्वतेजसा। शुक्लाभश्चातिशोभन इति क्वचित् पाठः। नान्तरीयके संलग्ने॥ अग्निपुराणे। वासुदेवः सितो द्वारि संलग्नश्च द्विचक्रकः॥ प्रकृतिखण्डे॥ द्वारदेशे द्विचक्रञ्च सश्रीकञ्च समं स्फुटम्। वासुदेवञ्च विज्ञेयं सर्वकामफलप्रदम्॥ ब्रह्मपुराणे॥ शुक्लादिवर्णसंयुक्तो द्विचक्रः पद्मसम्भवः। वासुदेवो जगज्ज्योतिः कृष्णः पीताम्बरोऽव्ययः॥ ब्रह्माण्डपुराणे। प्रद्युम्नः सूक्ष्मचक्रस्तु पीतवर्णस्तथैव च। मकराभाश्च वै रेखाः पार्श्वतः पृष्ठतोऽपि च। अग्निपुराणे तु विशेषः॥ सूक्ष्मचक्रो बहुच्छिद्रः प्रद्युम्नो नीलदीर्घकः॥ पद्मपुराणे॥ प्रद्युम्नः सूक्ष्मचक्रः स्यान्नीलाम्बुजनिभस्तथा। स ददाति श्रियं नृणां भक्त्या चैव प्रपूजितः॥ ब्रह्मपुराणे॥ प्रद्युम्नं सूक्ष्मचक्रञ्च नवीननीरदप्रभम्। शुषिरं छिद्रबहुलं गृहिणाञ्च सुखप्रदम्॥ ब्रह्मवैवर्त्ते॥ प्रद्युम्नः सूक्ष्मचक्रस्तु पीतदीप्तिस्तथैव च। शुषिरं छिद्रबहुलं दीर्घाकारन्तु तद्भवेत्॥ इति प्रद्युम्नलक्षणम्॥ ३२॥

ब्रह्मपुराणब्रह्माण्डपुराणयोः। अनिरुद्धस्तु नीलाभो वर्त्तुलश्चातिशोभनः। रेखात्रयपरिह्नतो देवः पद्मेन लाञ्छितः॥ ब्रह्माण्डपुराणे॥ कृष्णवर्णः समद्वारः चक्रं नाभिसमीपगम्। सूक्ष्मचक्रं भवेदूर्द्ध्वं पार्श्वचक्रेण पुण्यकृत्। अनिरुद्ध इति प्रोक्तः सर्वलोकैककारणम्॥ ब्रह्मवैवर्त्ते। अनिरुद्धन्तु पीताभं वर्त्तु-

लश्चातिशोभनम्। सुखप्रदं गृहस्थानां प्रवदन्ति मनीषिणः॥ ब्रह्मपुराणे॥ अनिरुद्धस्तु नीलाभो वर्त्तुलश्चातिशोभनः। रेखात्रयन्तु तद्द्वारि पृष्ठे पद्मन्तु लाञ्छितम्॥ इत्यनिरुद्ध-लक्षणम् ॥३३॥

ब्रह्माण्डपुराणे। मध्यचक्रः सुवर्णश्च मस्तके पृथुचक्रकः। पुरुषोत्तमो भवेद्देवः पूजकस्य शुभप्रदः॥ पुराणसंग्रहे॥ अत-सीपुष्पसङ्काशो विन्दुना परिभूषितः। पुरुषोत्तम उक्तोऽसौ सर्वसौभाग्यवर्द्धनः॥ ब्रह्मपुराणे॥ विदिक्षु दिक्षु सर्वासु यस्योर्द्धं दृश्यते मुखम्। पुरुषोत्तमः स विज्ञेयो भुक्तिमुक्तिफल-प्रदः॥ इति पुरुषोत्तमलक्षणम् ॥३४॥

ब्रह्मपुराणे॥ अतिकृष्णो रक्तरेखावृतदेहः सचक्रकः। किञ्चित्कपिलसंयुक्तः सूक्ष्मो वा स्थूल एव च। अधोक्षज इति ख्यातः पूजकस्य शुभप्रदः॥ इति अधोक्षजलक्षणम् ॥३५॥

ब्रह्माण्डपुराणे॥ चतुर्भिश्चैव चक्रैस्तु वामे दक्षिणपार्श्वके॥ अधिष्ठितो मुखे रक्तः कुण्डलद्वयशोभितः। शङ्खचक्रगदाशार्ङ्ग-बाणकौमोदकीधरः। मुषलध्वजकम्बेतच्छत्ररक्ताङ्कुशैर्युतः। सोऽच्युतः कथितो नाम्ना दुर्लभस्तु सदा नृणाम्॥ इत्य-च्युतलक्षणम् ॥३६॥

ब्रह्माण्डपुराणे॥ उपेन्द्रो मणिवर्णश्च मोहचक्रोऽतिशोभनः। श्यामलः कोमलाभश्चपार्श्वचक्रः सुपूजितः॥ इत्युपेन्द्रलक्षणम् ॥३७

ब्रह्मपुराणे॥ द्वारद्वये चतुश्चक्रं जनार्द्दन इहोच्यते। चक्रद्वयं मध्यगतं चक्रद्वयञ्च पृष्ठतः॥ ब्रह्माण्डपुराणे॥ पूर्वभा-गेकवदनः पश्चादेकास्यसंयुतः। जनार्द्दनश्चतुश्चक्रः श्रीप्रदो रिपुनाशनः॥ ब्रह्मवैवर्त्ते प्रकृतिखण्डे॥ एकद्वारे चतुश्चक्रं नवीननीरदोपमम्। लक्ष्मीजनार्द्दनं ज्ञेयं रहितं वनमालया॥ इति जनार्द्दनलक्षणम् ॥३८॥

ब्रह्मपुराणे॥ ऊर्द्ध्वमुखं विजानीयात् श्यामाभं वर्त्तुलं शुभम्। अधोविन्दुसमायुक्तं सर्वकामार्थसाधकम्॥ ब्रह्माण्ड-पुराणे॥ अन्ये द्वारसमोपेता हरिमूर्त्तिरुदाहृता॥ इति हरिलक्षणम्॥३९॥

अग्निपुराणे॥ अनन्तो नागभोगाङ्को नैकचक्राङ्कमूर्त्ति-मान्॥ पद्मपुराणे॥ अनेकचक्रो बहुभिश्छिद्रैरप्युपलक्षितः। अनन्तः स तु विज्ञेयः सर्वपूजाफलप्रदः॥ पुराणसंग्रहे॥ नानावर्णो ह्यनन्तः स्यान्नागभोगेन चिह्नितः। अनेकसुख-संयुक्तः सर्वकामफलप्रदः॥ ब्रह्माण्डपुराणे॥ चतुर्दशद्वारप्रभृ-तिविंशत्या चक्रलोहितः। नानावर्णो ह्यनन्ताख्यो नागभोगेन चिह्नितः॥ ब्रह्मपुराणे॥ अनन्तचक्रो बहुभिश्चिह्नैरप्युपल-क्षितः। अनन्तः स तु विज्ञेयः सर्वपूजाफलप्रदः॥ प्रकृति-खण्डे॥ द्विसप्तचक्रं स्थूलञ्च नवीननीरदप्रभम्। अनन्ता-ख्यञ्च विज्ञेयं चतुर्वर्गफलप्रदम्॥ इत्यनन्तलक्षणम्॥४०॥

दृश्यते शिखरे लिङ्गं शालग्रामसमुद्भवम्। अस्य योगेश्वरो नाम ब्रह्महत्यां व्यपोहति॥ इति योगेश्वरलक्षणम्॥४१॥

ब्रह्माण्डपुराणे॥ पार्श्वे वामे च पृष्ठे वा चामरद्वयसंयुता। पुण्डरीकाक्षमूर्त्तिः स्यात् सर्वलोकवशङ्करी। कमलद्वयसंयुतेति पाठान्तरम्॥ इति पुण्डरीकाक्षलक्षणम्॥४२॥

पद्मपुराणसंग्रहब्रह्मपुराणेषु। चतस्रो यत्र दृश्यन्ते रेखाः पार्श्वसमीपतः। द्वे चक्रे मध्यदेशे च सा शिला स्याच्चतुर्मुखः॥ इति चतुर्मुखलक्षणम्॥४३॥

ब्रह्माण्डपुराणे॥ यज्ञमूर्त्तिस्तूभयथा पीतरक्तविमिश्रितः। द्वारं सूक्ष्मसधश्चक्रं तूर्णं वा दक्षिणेऽपि च॥ इति यज्ञ-मूर्त्तिलक्षणम्॥४४॥

ब्रह्माण्डपुराणे॥ सितारुणासिताभश्च पृष्ठदेशे यदा भवेत्।

अक्षमालाकृतिः पृष्ठे दत्तात्रेयः शुभप्रदः। कृष्णायतश्च पीतश्च दत्तात्रेयाभिधो भवेदिति पाठान्तरम्॥ इति दत्तात्रेय-लक्षणम् ॥४५॥

ब्रह्माण्डपुराणे॥ शिशुमारो दीर्घकायो विलेशयोनि-गह्वरः। पुरतः पृष्ठभागे तु चक्रेणैकेन संयुतः। पुरतश्चक्र-द्वयं पृष्ठभागे एकं चक्रमिति चक्रत्रयमित्यर्थः। सर्वाधारः स विज्ञेयः सर्वसिद्धिप्रदो नृणाम्॥ इति शिशुमारलक्षणम् ॥४६॥

ब्रह्मपुराणे॥ हंसस्तु धनुराकारो नीलश्वेतविमिश्रितः। चक्रपद्मसमोपेतः केवलो मोक्षदो भवत्॥ इति हंसमूर्त्तिलक्षणम् ॥४७॥

ब्रह्माण्डपुराणे॥ परहंसः खगेशान! मयूरगलसन्निभः। स्निग्धश्च पूतदन्तश्च वर्त्तुलद्वारसंयुतः। विलमध्ये तथा चक्रे दृश्यते त्वतिशोभने। चक्रस्य दक्षिणे पार्श्वे द्युमाने भास्करो भवेत्। वराहरेखे दृश्येते तत्र वै विनतासुत!। मूर्त्तिः स्यात् परहंसाख्या चतुर्वर्गफलप्रदा॥ इति परहंसलक्षणम् ॥४८॥

ब्रह्माण्डपुराणे॥ मुखे वा पार्श्वतो वापि मयूरगल-सन्निभः। कृष्णवर्णः सूक्ष्मचक्रः पृथुलास्योऽसमप्रभः। लक्ष्मी-पतिरिति ख्यातो लक्ष्मीसम्पत्तिदायकः॥ इति लक्ष्मीपति-मूर्त्तिलक्षणम् ॥४९॥

ब्रह्माण्डपुराणे॥ स्वर्णशृङ्गधरः सौम्यो वर्त्तुलः स्निग्धके-शरः। चक्रे मध्ये मतः स्निग्धकृष्णरेखासमन्वितः। लक्ष्मीपति-र्वैनतेय! गरुड़ध्वजसंज्ञितः॥ इति गरुड़ध्वजलक्ष्मी-पतिलक्षणम्॥ ५०॥

ब्रह्माण्डपुराणे॥ वटपत्रशायी भगवान् वर्त्तुलोपेतशोभनः। नलिनाक्षसमोपेतनीलश्वेतविमिश्रितः। चक्रस्य वामतः शङ्खो दक्षिणे पद्ममेव च। वदनेके मध्यदेशे चतुश्चक्रस्त्रिवि-न्दुकः॥ इति वटपत्रशायिलक्षणम् ॥५१॥

ब्रह्माण्डपुराणे॥ चक्राणां विंशकतया युक्तो विश्वम्भरः शुभः॥ इति विश्वम्भरलक्षणम्॥ ५२॥

ब्रह्माण्डपुराणे॥ विश्वरूपोऽपि भगवान् द्विविधः परिकीर्त्तितः। विश्वरूपो हरिः साक्षाद्द्वारारतपरोत्तमः। बहुचक्राङ्कितोऽनेकमूर्त्तिरूपससन्वितः। पञ्चचक्रः स्थूलतरः पुरुषो बहुचक्रकः। विश्वरूपो ह्यनन्तो वा पुत्त्रपौत्त्रादिकप्रदः॥ इति विश्वरूपलक्षणम्॥५३॥

ब्रह्माण्डपुराणे। स्त्रिया गोस्तु स्तनाकारः सचक्रो वर्त्तुलस्तथा। पीताम्बरधरो देवः सौख्यदः फलदः सदा॥ इति पीताम्बरलक्षणम्॥ ५४॥

ब्रह्माण्डपुराणे॥ सुवर्त्तुलो ह्रस्वचक्रः सर्वाङ्गे हेमविन्दवः। सप्तवीरश्रवाः प्रोक्तः सर्वसौभाग्यवर्द्धनः॥ इति सप्तवीरश्रवोलक्षणम्॥५५॥

ब्रह्माण्डपुराणे॥ अमृताहरणो देवो लोलास्तनसमप्रभः। वर्त्तुलो बहुचिह्नश्च ह्रस्वचक्रोऽतिकोमलः॥ इति चक्रपाणिलक्षणम्॥ ५६॥

ब्रह्माण्डपुराणे॥ अभ्यन्तरे शङ्खचक्रे बहुलास्यसमन्वितः। बहुरूपी समाख्यातः पूजितो मोक्षदायकः॥ इति बहुरूपिलक्षणम्॥ ५७॥

तत्रैव। द्वारचक्रो रक्तवर्णो जगद्योनिः शुभप्रदः॥ इति जगद्योनिलक्षणम्॥५८॥

ब्रह्माण्डपुराणे॥ चतुस्त्रयः समन्ताद्वा चक्रद्वययुतोऽपि वा। शिवनाभियुतो मूर्द्ध्नि पृष्ठे वापि तथैव च। एतद्धरिहरं विद्यात् सुखसौभाग्यदायकम्॥ इति हरिहरमूर्त्तिलक्षणम्॥ ५९॥

ब्रह्माण्डपुराणे॥ चतुश्चक्रो हरिहरो द्विमुखो द्विमुखोऽ-

प्यधः। विनश्यति गृहस्थानां धनं चैव कुलं क्रमात् ॥
इति शिवनारायणलक्षणम् ॥ ६० ॥

ब्रह्माण्डपुराणे ॥ मूर्त्तिर्वर्त्तुलरेखाभिरावृतो नीलवर्णवान्। दीर्घास्यः पृथुवक्त्रस्तु स्वयम्भूरिति विश्रुतः। केवलं मोक्षफलदो भक्तानान्तु न संशयः ॥ इति स्वयम्भूलक्षणम् ॥ ६१ ॥

ब्रह्माण्डपुराणे ॥ शिवनाभियुतः पार्श्वे वामे वा दक्षिणेऽपि वा ॥ स च शङ्करपूर्वाख्यो नारायण इतीरितः ॥
इति शङ्करनारायणलक्षणम् ॥६२ ॥

ब्रह्माण्डपुराणे ॥ पितामहश्चतुर्वक्त्रश्चतुश्चक्रसमन्वितः ॥
इति पितामहलक्षणम् ॥६३॥

ब्रह्माण्डपुराणे ॥ नरमूर्त्तिस्तु भगवानतसीकुसुमप्रभः। एकनाभिसमोपेतो ब्रह्मसूत्रैकपार्श्वकः ॥ इति नरमूर्त्तिलक्षणम् ॥ ६४ ॥

पद्मपुराणे ॥ नागवत् कुण्डलीभूत्वा रेखापङ्क्तिः स शेषकः ॥ ब्रह्माण्डपुराणे ॥ अथवा कुण्डलीभूत उत्तमाङ्गसमन्वितः। शेषमूर्त्तिस्तु भगवान् रक्तवर्णसमन्वितः। प्रलम्बघ्न इति ख्यातः पूजितो मृत्युदायकः। रक्तवर्णसमन्वितः प्रलम्बघ्न इति सम्बन्धः। एतस्यैव पूजने दुष्टफलं न शेषमूर्त्तेरिति ॥
इति शेषमूर्त्तिलक्षणम् ॥६५॥

ब्रह्माण्डपुराणे ॥ वाह्ये वाभ्यन्तरे वापि चक्रद्वादशसंयुता। सूर्य्यमूर्त्तिरिति ख्याता सर्वव्याधिविनाशिनी ॥ इति सूर्य्यमूर्त्तिलक्षणम् ॥६६॥

ब्रह्माण्डपुराणे ॥ अङ्गभोगावेकवक्त्रे द्वे समे दक्षिणा वहिः। पद्मपत्राकृतिर्वापि हेमवर्णसमा कला। हैहयस्तु स विज्ञेयः सर्वसिद्धिप्रदायकः ॥ इति हैहयमूर्त्तिलक्षणम् ॥ ६७ ॥

वज्रकीटोद्भवा रेखाः पङ्क्तीभूताश्च यत्र वै। शालग्राम-

शिलायां सा विष्णुपञ्जरसंज्ञिता॥ इति विष्णुपञ्जर-लक्षणम्॥ ६८॥

पद्माकारे तु पङ्क्ती द्वे मध्यलम्बा च रेखिका। गरुड़ः स तु विज्ञेयश्चतुश्चक्रो जनार्दनः॥ ब्रह्माण्डपुराणे॥ द्विपक्षाभ्यामशेषेण यद्भावं भुवि दुर्लभम्। विषमं चक्रदुर्लभ्यं चक्रमेतत् कलौ न हि। कल्मषौघविनाशि स्यादलम्बाकाररेखया। सुवर्णनिचया द्वित्रिचतुष्टयसमा च या। संयुक्ता शुभदा तु स्यात् श्यामा नीला सितापि वा॥ इति गरुड़मूर्त्ति-लक्षणम्॥ ६९॥

पद्मपुराणे॥ विष्णुरुवाच॥ निवसामि सदा ब्रह्मन्! शालग्रामस्य वेश्मनि। तत्रैव वर्णचक्रादिभेदै नामानि मे शृणु। शुक्लो रक्तस्तथा कृष्णो द्विवर्णो बहुवर्णवान्। एकचक्रस्य च तथा संज्ञाः पञ्च यथाक्रमम्। पुण्डरीकः प्रलम्बघ्नो रामो वैकुण्ठ एव च। विश्वक्सेन इति ब्रह्मन्! फलमाद्येन मे शृणु। परमेष्ठीति तत्रोक्तस्तथात्र वारुणात्मकः। अनन्तश्चेति विज्ञेयो नानामूर्त्तिश्च यो भवेत्। राज्यं मृत्युं धनञ्चैव हानिञ्चैवाश्रिताथंकम्। ददाति पूजितो लोके तस्माज् ज्ञात्वार्चयेन्नरः।

एताश्चोक्तलक्षणलक्षिताः सर्वा अपि शालग्रामशिलामूर्त्तयो द्विविधा ज्ञेयाः। तदुक्तं ब्रह्माण्डपुराणे॥ मूर्त्तयो द्विविधा ज्ञेया जलजाः स्थलजास्तथा। जलजाः कोमलाः स्निग्धाः स्थलजाः परुषाः स्मृताः। पूर्वोक्तलक्षणलक्षितासु शालग्रामशिलामूर्त्तिषु सूक्ष्मा एव मूर्त्तयः फलाधिक्यार्थं पूजनीयाः। शालग्रामशिलालक्षणमुक्ता पद्मपुराणे तथोक्तत्वाद्यथा। एतल्लक्षणसंयुक्ताः शालग्रामशिलाः पुनः॥ याश्च तास्वपि सूक्ष्माः स्युस्ताः प्रशस्ततराः स्मृताः। यथा यथा शिला सूक्ष्मा महत्पुण्यं तथा तथा। तस्मात्तां पूजयेन्नित्यं धर्मकामार्थसिद्धये। तत्राप्यामलकीतुल्या सूक्ष्मा

चातीव या भवेत्। तस्यामेव सदा ब्रह्मन्! श्रिया सह वसाम्यहम्॥ इति स्कन्दपुराणम्॥ एवमेवात्र वर्णभेदेन पूजने मूर्त्तिविशेष उच्यते। हेमाद्रौ विष्णुप्रोक्ते। ब्राह्मणैर्वासुदेवस्तु नृपैः सङ्कर्षणस्तथा। प्रद्युम्नः पूजितो वैश्यैरनिरुद्धस्तु शूद्रजैः। चत्वारो ब्राह्मणैः पूज्यास्त्रयो राजन्यजातिभिः। वैश्यैर्द्वावेव सम्पूज्यौ तथैकः शूद्रजातिभिः॥ वृद्धगौतमेन तु विशेषोऽभिहितो यथा। लक्ष्मीनारायणानन्तनृसिंहरामकेशवाः। हिरण्यगर्भः प्रद्युम्नो गोपालो गरुड़ध्वजः। रामोऽनिरुद्धचक्रास्यदामोदरगदाधराः। चतुर्भुजो महानीलो मुकुन्दः पुरुषोत्तमः। पीताम्बरहरी ब्रह्मा कृष्णः श्रीधरमाधवौ। वासुदेवेति च ख्याताश्चतुर्विंशतयः शिलाः। चक्रास्येति चक्रं सकलमास्यं यस्येति स हयग्रीव इत्यर्थः। ब्रह्मेति हरिविशेषणम्। ब्रह्मक्षत्रियविट्शूद्रपतिताभीष्टदोऽर्च्चितः। न च वर्णोऽधमानाञ्च न जातिर्न च योषिताम्।

ब्राह्मणानां पूजामूर्त्तिमाह। मुख्यैकद्वित्रिषड़ष्टादशपञ्चदशान्विता। ब्राह्मणानां विशेषेण पूजा होमश्च सर्वदा। गण्डकीसरिदुद्भवा लक्ष्मीनारायणानन्तहिरण्यगर्भपुरुषोत्तमचतुःसंज्ञाः शालग्रामशिलामूर्त्तयः। आद्यानां ब्राह्मणानां पूजने प्रशस्ताः। क्षत्रियाणां पूजने मूर्त्तिमाह। राज्ञां मुख्यैकद्विविंशत्येकादशनवाष्टमी। दशद्वाविंशतिमता सर्वदाभीष्टदायिका। लक्ष्मीनारायणानन्तकृष्णानिरुद्धगरुड़ध्वजगोपालरामश्रीधरसंज्ञामूर्त्तयः क्षत्रियाणां पूजने प्रशस्ताः। वैश्यानां पूज्यमूर्त्तिमाह। चतुर्विंशतिसप्तैव त्रयोदशचतुर्दश। एकोनविंशका पूजा योग्या नित्या शिला विशः। वासुदेवप्रद्युम्नदामोदरगदाधरपीताम्बरहरिलक्ष्मीनारायणसंज्ञा मूर्त्तयो वैश्यानां पूजने प्रशस्ताः।

सच्छूद्राणां पूज्यमूर्त्तिमाह॥ त्रयोविंशैकविंशैकमुख्यैका दशमी च या। पञ्चमैकोनविंशार्हा सच्छूद्राणामभीष्टदा। माधवहरिलक्ष्मीनारायणाच्युतानिरुद्धकेशवपीताम्बरसंज्ञा मूर्त्तयः सच्छूद्राणां पूजने प्रशस्ताः। चतुर्विंशतिषु मूर्त्तिषु अवशिष्टा मूर्त्तयः नृसिंहचक्रास्यमहाजिनमुकुन्दसंज्ञा यतीनां पूजने प्रशस्ता इत्यर्थः। स्कन्दपुराणे॥ ब्राह्मणक्षत्रियवैश्यसच्छूद्राणां यथाविधि। शालग्रामाधिकारोऽस्ति न चान्येषां कदाचन। स्त्रियो वा यदि वा शूद्रो ब्राह्मणक्षत्रियादयः। पूजयित्वा शिलाचक्रं लभन्ते शाश्वतं पदम्। ननु ब्राह्मणः पूजयेन्नित्यं क्षत्रियादि न पूजयेत्॥ इति विष्णुधर्मोत्तरवचनात्॥ प्रणवोच्चारणाद्धोमात् शालग्रामशिलार्च्चनात्। ब्राह्मणीगमनाच्चापि शूद्रश्चाण्डालतां व्रजेत्। इति वचनाच्च क्षत्रियादीनां शालग्रामशिलामूर्त्तिपूजननिषेधात्। क्षत्रियादिभिः शालग्रामशिलामूर्त्तिपूजनं कर्त्तव्यं कथमिति चेन्न। ब्राह्मणक्षत्रियविशां त्रयाणां मुनिसत्तम!। अधिकारः स्मृतः सम्यक् शालग्रामशिलार्च्चने। स्त्रीशूद्रपतितानाञ्च षण्डानाञ्च विकर्म्मिणाम्। नैवाधिकारी विज्ञेयः शालग्रामशिलार्च्चने। विष्णुभक्तैर्वैष्णवैश्च गोब्राह्मणहिते रतैः। शालग्रामशिलाचक्रं पूजनीयं सदा मुने!॥ इत्यादिपद्मपुराणादिवचनैः पूर्व्वोदाहृतवचनैश्च क्षत्रियादीनां शालग्रामपूजाश्रवणात्। ब्राह्मणस्यैव पूज्योऽहं शुचेरप्यशुचेरपि। स्त्रीशूद्रकरसंस्पर्शो वज्रपाताधिको मम॥ इति लिङ्गपुराणवचने ब्राह्मणस्यैवेत्यत्रान्ययोगव्यवच्छेदपरैवकारेण ब्राह्मणमात्रस्यैव स्पर्शवत् पूजायामधिकारोऽवगम्यते। क्षत्रियादीनां स्पर्शमात्रं निषिद्धमिति। एवञ्च सति क्षत्रियादिपूजानिषेधकवचनानां स्पर्शमात्रनिषेधपरत्वात्। क्षत्रियादीनां शालग्रामपूजाविधायकानि वचनानि स्पर्शहीनपूजाविषयत्वेन

धीन्यानि। अतएव वृहन्नारदीये॥ स्त्रीणामनुपनीतानां शूद्राणाञ्च महीश्वर!। स्पर्शने नाधिकारोऽस्ति विष्णोर्वा शङ्करस्य च। शूद्रो वानुपनीतो वा स्त्री वापि पतितोऽपि वा। केशवं वा शिवं वापि स्पृष्ट्वा नरकमाप्नुयात्। शूद्रैस्तु ब्राह्मणद्वारा शालग्रामपूजनं कार्य्यम्। तदुक्तं पद्मपुराणे पुराणसंग्रहे च॥ दीक्षायुक्तैस्तथा शूद्रैर्मद्यपानविवर्जितैः। कर्त्तव्यं ब्राह्मणद्वारा शालग्रामशिलार्च्चनम्॥ इति पद्मपुराणे॥ शालग्रामशिलापूजां विना योऽश्नाति मानवः। स चण्डालादिविष्ठायामाकल्पं जायते क्रिमिः॥

अथ गृहे शालग्रामादिद्वयनिषेधः। वराहपुराणे॥ गृहे लिङ्गद्वयं नार्च्चं शालग्रामद्वयं तथा। द्वे चक्रे द्वारकायान्तु नार्च्चं सूर्य्यद्वयं तथा। शक्तित्रयं तथा नार्च्चं गणेशत्रयमेव च। द्वौ शङ्खौ नार्च्चयेत् क्वापि भग्ना च प्रतिमा तथा॥ तथा। नार्च्चयेच्च तथा शङ्खं मत्स्यादिदशनाङ्कितम्। गृहेऽग्निदग्धा भग्नाश्च नार्च्चाः पूज्या वसुन्धरे!। अर्च्चा प्रतिमा। एतासां पूजनाद्देवि! न सुखं प्राप्नुयाद् गृही॥ इति। शालग्रामाः समाः पूज्या विषमा न कदाचन। समासु द्वितयं नार्च्चं विषमास्वेकमेव हि॥

अथ द्वादशशालग्रामपूजाफलम्॥ पद्मपुराणे॥ शिला द्वादशतो वैश्य! शालग्रामसमुद्भवाः। विधिवत् पूजिता येन तस्य पुण्यं वदामि ते। कोटिद्वादशलिङ्गैस्तु पूजितैः स्वर्णपङ्कजैः। काशीवासो दिनान्यष्टौ दिवसैकेन तद्भवेत्। यः पुनः पूजयेद्भक्त्या शालग्रामशिलाशतम्। उषित्वा स महल्लोके चक्रवर्त्तीह जायते॥

अथ शालग्रामविक्रयनिन्दा॥ पद्मपुराणे॥ शालग्रामशिलायां यो मूल्यं गृह्णाति मानवः। विक्रेता चानुमन्ता च परीक्षयानुमोदयेत्। सर्वेऽतिपापिनो ज्ञेया शश्वद्दुःखस्य भागिनः।

मुने ! किं बहुनोक्तेन नरकं याति दारुणम् । अन्यच्चक्राणि मेरुतन्त्राद्यनुसन्धेयानि ॥

अथ तुलसीदलैः शालग्रामपूजाफलम् ॥ काशीखण्डे ध्रुव-वाक्यम् । शालग्रामशिला येन पूजिता तुलसीदलैः । स पारि-जातमालाभिः पूज्यते रमणीगणैः ॥

अथ शालग्रामद्वारकाचक्रयोरेकत्रावस्थानफलम् ॥ स्कन्द-पुराणे ॥ शालग्रामोद्भवो देवो द्वारावतीसमुद्भवः । तयोश्च सङ्गमो यत्र मुक्तिस्तत्र न संशयः ॥

अथ शालग्रामाधिकरणकविष्णुपूजाफलम् ॥ शालग्राम-शिलासंज्ञे यः करोति समार्च्चनम् । तेनार्च्चितं कार्त्तिकेषु युगा-नामेकसप्ततिम् ॥

इति प्राणतोषिण्यां पञ्चमे भक्तिकाण्डे शालग्राम-
प्रकरणकथनरूपश्चतुर्थपरिच्छेदः ।

अथ द्वारकाशिलालक्षणम् ॥ स्कन्दपुराणे ॥ चक्रे तु दृश्यते लिङ्गं शिलायां नारद ! क्वचित् । श्रीधरः स तु विज्ञेयः सर्व-कामफलप्रदः ॥ इति श्रीधरलक्षणम् ॥ १ ॥

पुराणसारे ॥ द्वारकाकार्त्तिकमाहात्म्ये ॥ चक्रमेकं मध्य-भागे श्वेता भागे खुरान्विता । शिवनाभिरिति ख्याता भुक्ति-मुक्तिफलप्रदा । खुरान्विता वीथियुता । ब्रह्माण्डपुराणे ॥ कूर्म्माकृतिरधोभागे लिङ्गभागे खुरान्वितः । शिवनाभिरिति ख्यातो भुक्तिमुक्तिफलप्रदः ॥ नृसिंहपुराणे ॥ कूर्म्मचक्रमधो-भागे श्वेता भागे खुरान्विता । शिवनाभिरिति ख्याता भुक्ति-मुक्तिफलप्रदा । यवमात्रन्तु गर्त्तं स्याद् यवार्द्धं लिङ्गमुच्यते । शिवनाभिरिति ख्यातस्त्रिषु लोकेषु दुर्लभः ॥ इति शिव-नाभिलक्षणम् ॥२ ॥

ब्रह्माण्डपुराणे ॥ जटापाशी अघोरा सा रुद्रचिह्नैर्यदि

पूजिता। हेमवर्णजटायुक्ता हेमविन्दुसमन्विता। मस्तके गोखुरा तावदञ्जनाचलसन्निभा। सद्योजाताभिधा श्रेष्ठा पुत्रपौत्रधनप्रदा॥ इति सद्योजातलक्षणम्॥ ३॥

तत्रैव॥ शिरोमध्ये रक्तवर्णा श्वेतचन्द्रजटायुता। वामदेवाभिधा श्रेष्ठा गृहिभिः पूजिता सदा॥ इति वामदेवलक्षणम्॥ ४॥

तत्रैव॥ किञ्चित्कपिलसंयुक्ता कृष्णनीलजटायुता। पार्श्वरेखासमोपेता ईशानी मुक्तिदा भवेत्॥ इति ईशानलक्षणम्॥ ५॥

सूर्य्याविद्युत्समनिभा पार्श्वदेशे जटा शशी। तत्पुरुषाभिधाना स्याद् दुर्लभा सर्वकामदा॥ इति तत्पुरुषलक्षणम्॥ ६॥

द्विलिङ्गो वा त्रिलिङ्गो वा चतुःपञ्चादिलिङ्गवान्। तापिञ्छकोरकाकारो देवदेवः सदाशिवः॥ इति सदाशिवलक्षणम्॥७॥ इत्यघोरादिपञ्चकलक्षणम्॥

प्रयोगपारिजाते॥ द्विनाभिश्चक्ररूपा या भवेद्धरिहरात्मिका। नाभौ लिङ्गेन युक्ता वा श्वेताभा वै खुरान्विता। शिवनाभिरिति ख्याता भुक्तिमुक्तिफलप्रदा। वासुदेवमयं चैतं लिङ्गं शिवमयं स्मृतम्। तस्माद्धरिहरश्चैत्रे पूजयेच्छङ्कराच्युतम्। भवेच्छिलाशतैः शस्ता चतुर्वर्गफलप्रदा॥

अथ द्वारकाशिलामाहात्म्यम्॥ स्कन्दपुराणे॥ द्वाराचक्रशिला देवि! भद्रा पाशसमुद्रिता। तत्पात्रसहितं तत् स्यात्तीर्थं द्वादशयोजनम्। म्लेच्छदेशे शुचौ वापि चक्राङ्को यत्र तिष्ठति। योजनानि तथा त्रीणि मम चैत्रं वसुन्धरे!। तन्मध्ये म्रियते यस्तु पूजकः सुसमाहितः। शतबाधाविनिर्मुक्तो न पुनः सोऽपि जायते। चक्राङ्कितस्य सान्निध्ये यत्कर्म्म क्रियते नरैः। स्नानं दानं जपो होमः सर्वं भवति चाक्षयम्। संवत्सरन्तु यत्

पापं मनसा कर्म्मणा कृतम्। तत्सर्वं नश्यते पुंसां सक्तचक्राङ्क-दानतः। ज्वरदाहो विषश्चैव अग्निश्चौरभयं तथा। सर्वे ते प्रशमं यान्ति सक्तचक्राङ्कमार्जनात्। भूतप्रेतपिशाचाश्च डाकिन्यश्च वसुन्धरे!। सर्वे ते प्रलयं यान्ति पञ्चचक्रान्वितं न्यसेत्। भक्त्या वा यदि वाभक्त्या चक्राङ्कं पूजयेन्नरः। अपि चेत् स दुराचारो मुच्यते नात्र संशयः। संवत्सरन्तु यः कुर्य्यात् पूजा-स्पर्शनदर्शनम्। विनाशाख्येन योगेन मुच्यते नात्र संशयः।

अथ द्वारकाशिलावर्णविशेषलक्षणम्॥ पद्मपुराणे॥ कृष्णा मृत्युप्रदा नित्यं कपिला तु भयावहा। औन्मत्त्यं कर्वुरा दद्यात् पीता धनविनाशिनी। धूम्राभा पुत्रनाशाय भग्ना भार्य्याधनापहा। श्वेतास्तिलाः सुसम्पूर्णाः सर्वकामार्थ-दायिकाः। अच्छिद्रचक्रा सा पूज्या दुःखदारिद्र्यनाशिनी। वर्त्तुला चतुरस्रा च पूजिता सिद्धिदायिका। सुखदा समचक्रा च विषमा दुःखदा भवेत्॥

निषिद्धशिलापि तत्रैव॥ छिद्रा भग्ना विकोणा च तथा विषमचक्रिका। अर्द्धचन्द्राकृतिर्या च पूज्यास्ता न भवन्ति हि। योगपारिजाते तु विशेषः॥ भिन्नश्चैवार्थनाशाय स्थूलो बुद्धि-विनाशकः। दीर्घश्चायुर्हरो ज्ञेयो रूक्ष ऋद्धिविनाशकृत्। शुक्लवर्णा शुभा ज्ञेया दन्तचक्रा तथैव च॥

चक्रभेदे मूर्त्तिभेदोऽग्निपुराणे उक्तो यथा॥ सुदर्शनस्त्वेक-चक्रे लक्ष्मीनारायणो द्वये। अच्युतः स्यात्त्रिके च युतो देव-स्त्रिविक्रमः। चकारो वार्थे त्रिचक्रोऽच्युतस्त्रिविक्रमो वेत्यर्थः। जनार्दनश्चतुश्चक्रो वासुदेवश्च पञ्चभिः। षट्चक्रश्चैव प्रद्युम्नः सङ्कर्षणश्च सप्तभिः। पुरुषोत्तमश्चाष्टचक्रो नवव्यूहो नवात्मकः। दशावतारो दशभिर्दशैकेनानिरुद्धकः। द्वादशात्मा द्वादशभि-रत ऊर्द्ध्वमनन्तकः॥ गरुड़पुराणे तु चतुश्चक्रश्चतुर्भुज इति

विशेषः। चक्रभेदेन विशेषोऽपि तत्रैव॥ एकचक्रशिला पूज्या भुक्तिमुक्तिफलप्रदा। द्विचक्रश्चाच्युतो देवो देवेन्द्रत्वफलप्रदः। श्रीप्रदो रिपुहन्ता च चतुश्चक्रो जनार्दनः। पूजयेद्भक्तिसंयुक्तः सुगन्धैः कुसुमादिभिः। पञ्चभिर्वासुदेवः स्यात् प्रभुश्चक्रैः सदार्चितः। जन्ममृत्युभयात्त्राता भवेन्नैवात्र संशयः। षड्भिश्चक्रैश्च प्रद्युम्नो लक्ष्मीकीर्त्तिप्रदो भवेत्। पूजितो भक्तिभावेन चक्रतीर्थशिलोद्भवः। बलभद्रशिला ज्ञेया सप्तचक्राङ्किता खग!। पूजितस्तुष्यते देवः पुत्रपौत्रप्रदो भवेत्। वाञ्छितं वसुभिश्चक्रैर्ददाति पुरुषोत्तमः। नवव्यूहो नवचक्रो दुर्लभं यत् सुरैरपि। पूजितः केशवस्तस्य ददाति स्थानमुत्तमम्। राज्यदो दशभिश्चक्रैर्दशावतारसंज्ञकः। दशावतारपूजा स्याच्चक्राङ्कस्यास्य पूजनात्। एकादशभिरैश्वर्य्यमधिकञ्च प्रयच्छति। पूजितो भक्तिभावेन चक्रतीर्थशिलोद्भवः। तत्रैव प्राप्यते देवश्चक्रैर्द्वादशभिश्चितः। पूजितः सर्वकामानामनन्तफलदायकः। द्वादशात्मा स विज्ञेयो भुक्तिमुक्तिप्रदोऽर्च्चितः। अत ऊर्द्ध्वं परात्मासौ सदा प्रीतिविवर्द्धनः। पूजितः सर्वलोकात्मा विष्णुलोकप्रदायकः। इति चक्राङ्कितशिलाः कथिताः कुलनामतः॥ एकचक्रविषये विशेषस्तु॥ प्रयोगपारिजाते॥ एकचक्रविशेषोऽस्ति न विशेषस्तथोच्यते। शुक्लरक्तं रथा रक्तं द्विवर्णं बहुवर्णकम्। यद्येकचक्रिणः स्युश्च तेषां संज्ञा भवेत् क्रमात्। पुण्डरीकः प्रलम्बघ्नो रामो वैकुण्ठ एव च। विश्वेश्वर इति ब्रह्मन्! तेषां पूजाफलं शृणु। मोक्षं मृत्युं विवादञ्च दारिद्र्यं परतन्त्रताम्। ददाति पूजकस्यासौ तस्मात्तां परिवर्जयेत्॥ इति द्वारकाशिलालक्षणम्॥

ब्रह्माण्डपुराणे॥ सर्वत्र लोहिताकारा मूर्द्ध्नि रक्तप्रभा मता। अपीठे पीठमाविश्य कृत्वा सम्प्रोक्षणं विधिम्। त्यजेत्तत्र शिवं

तेषां प्रतिष्ठा न च सीयते। दग्धं स्फुटं क्षताङ्गञ्च क्षिपेल्लिङ्गं जलाशये। सन्धानयोग्यं सन्धाय प्रतिष्ठादिकमाचरेत्। वराद्याविकलं लिङ्गं देवं पूजापुरःसरम्। आदाय हृदि सन्धानं प्राणञ्चाप्युक्तमाचरेत्। पृष्ठ लिङ्गे चावरे वा शूद्राद्यैरप्रतिष्ठिते। रुद्राभासे व्रती धीमान् विशोध्यात्र समर्च्चयेत्॥ सिद्धान्तशेखरे॥ लिङ्गादीनाञ्च बीजानां प्रोच्यते विधिरुद्धतः। सर्वारिष्टविनाशार्थं सर्वप्राणिहितार्थकम्। लिङ्गस्य पिण्डिकायाश्च प्रतिमा मुखलिङ्गयोः। सर्वेषां परिवाराणां हर्म्यप्रासादयोस्तथा। उद्धारश्चोद्धृतिः प्रोक्ता चोद्धारे हेतुरुच्यते। स्फुटिते खण्डिते भिन्ने दग्धे वा सति चाग्निना। उन्मत्तैः शत्रुभिश्चौरैः करिणाम्भोजमाहृते। लिङ्गे पीठादिके वापि विशीर्णे कालपर्य्ययात्। देहे जीर्णे यथा देही त्यक्तान्यमुपगच्छति। लिङ्गादीनि तु जीर्णानि तथा मुञ्चन्ति देवताः। ततः प्रेताश्च वेताला जीर्णं दृष्ट्वाश्रयन्ति च। लिङ्गादिं सत्त्वशून्यत्वात्तथा च ब्रह्मराक्षसाः। कर्त्तुर्नृपाणां राष्ट्रस्य तद्ग्रामस्य विशेषतः। पीड़ां कुर्वन्ति तेऽप्युग्रां दुर्भिक्षमरणादिकम्। तस्मात् सर्वप्रयत्नेन कुर्य्यादुद्धारणक्रियाम्॥ इति लिङ्गाद्युद्धारविधिः॥

तन्त्रान्तरप्रसवस्तु तत्रैव॥ स्वयम्भुवे च पीठे च वाणलिङ्गे तथैव च। ऋषिभिश्चासुरैर्देवैस्तत्त्वविद्भिः प्रतिष्ठिते। लिङ्गे जीर्णादिदुष्टेऽपि नोद्धारं तत्र कारयेत्। स्वयम्भुवादिलिङ्गानां लिङ्गपीठे परित्यजेत्। उक्तैर्दोषादिभिर्दुष्टं मानुषेषु परित्यजेत्। चौराद्यैश्चालितं लिङ्गं स्थापयेन्निर्व्रणं पुनः। यदि पुनस्तल्लिङ्गं निर्व्रणं भवेत् तदा तदेव पुनः स्थापयेत्॥ तथा। बाहुपादशिरोहीनां कर्णनासास्यहीनकाम्। तादृशीं परिवाराणां प्रतिमां परिवर्जयेत्। यद्द्रव्यं परिमाणञ्च लिङ्गं वा प्रतिमापि वा। त्यक्तं तत्तेन मानेन तद्द्रव्येण प्रकल्पयेत्। कार-

थैरन्यमानेन नान्यद्रव्येण तद्बुधः। नान्याकारञ्च नामन्वं स्थापयेत् पुनरुत्तमाम्। स्रोतसापहृते लिङ्गे प्रासादे वा तदन्यतः। तत्समीपगते देशे स्थापयेद्बाधवर्जिते। प्राकारे पतिते हर्म्ये गोपुरे मण्डपादिके। तदाकारञ्च तद्द्रव्यं तन्मानं नव कारयेत्। कथं योग्यशिला ग्राह्या अदुष्टाश्च तथाविधाः। हीनद्रव्यकृतं हर्म्यं श्रेष्ठैर्द्रव्यैः समाचरेत्। हीनं व्याप्यधिकं मानमाकारं वा न कारयेत्। एवमुक्तेन मार्गेण दोषैरुक्तैर्विचारयेत्। लिङ्गपीठादिकं जीर्णं तदुद्धारं तदाचरेत्। तिथिनक्षत्रवारादींस्तदर्थं न विचारयेत। जीर्णं चोद्धारयेज्जीर्णमजीर्णं रक्षयेद्बुधः॥ अग्निपुराणे॥ सुस्थितं दुःस्थितं वापि शिवलिङ्गं न चालयेत्। शतेन स्थापनं कुर्यात् सहस्रेण तु चालनम्। सुस्थितदुःस्थितलक्षणमपि तत्रैव। पूजितादिभिश्च संयुक्तं जीर्णाद्यमपि सुस्थितम्। पूजया रहितं यत्तददुष्टमपि दुःस्थितम्॥

अथ शालग्रामपूजा॥ ओँ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं सर्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम्॥ इत्यादिना पुरुषसूक्तमन्त्रैरेकेन द्वाभ्यां त्रिभिर्वा शङ्खजलेन जलान्तरेण वा शालग्रामं स्नापयित्वा नववस्त्रेण कराभ्यां वा जलमपनीय सचन्दनतुलसीपत्रोपरि निधाय तस्योपरि सचन्दनतुलसीपत्रं दत्त्वा ताम्रादिपात्रे संस्थाप्य सामान्यार्घ्यं संस्थाप्य गणेशादित्यादिनवग्रहेन्द्रादिदशदिक्पालान् सम्पूज्य पुनरर्घ्यस्थापनं कृत्वा। नां हृदयाय नमः इत्यादिना अङ्गन्यासं करन्यासञ्च विधाय शालग्रामस्य पूर्वाद्यैशान्यन्तं कर्त्रे हर्त्रे धात्रे विधात्रे सामवेदाय यजुर्वेदाय ऋग्वेदाय अथर्ववेदाय प्रणवादिनमोऽन्तेन पूजयेत्। ततः पुष्पं गृहीत्वा ध्यायेद्यथा। ओँ ध्येयः सदा सवितृमण्डलमध्यवर्त्ती नारायणः सरसिजासनसन्निविष्टः। केयूरवान् कनककुण्डलवान किरीटी हारी हिरण्मयवपुर्धृतश-

कुचक्र:॥ इत्यनेन ध्यात्वा स्वशिरसि पुष्पं दत्त्वा मानसोपचारेण सम्पूज्य पुनर्ध्यात्वा एतत्पाद्यं ओँ नमो नारायणाय नमः। एषोऽर्घं इति यजुर्वेदी। ऋग्वेदी तु एषोऽर्घ्यः। सामगस्वेदिदमर्घ्यं इति वदेत्। अर्घः पुमान् यजुःष्वेव निर्थकारो विधीयते। छन्दोगानां क्लीवलिङ्गं पिण्डे लिङ्गविपर्य्ययः॥ इति वचनात्। तत एतदाचमनीयम्। एष गन्धः। एतत् पुष्पम्। एतत् तुलसीपत्रम्। एष धूपः। एष दीपः। एतन्नैवेद्यम्। एतत्पानार्थं जलम्। एतत् पुनराचमनीयम्। एतत्ताम्बूलम्। इत्यादि यथाशक्ति सम्पूज्याक्षरपूजां कुर्य्याद् यथा॥ ओँ ओँ नमः। ओँ न नमः। ओँ मो नमः। ओँ ना नमः। ओँ रा नमः। ओँ य नमः। ओँ णा नमः। ओँ य नमः। ततश्चक्रं पूजयेत्। चक्रपूजाप्रमाणमग्रे वक्ष्यते। पूजाक्रमो यथा। ओँ आचक्राय नमः। एवं विचक्राय। सुचक्राय। त्रैलोक्यरक्षणचक्राय। सुदर्शनचक्राय। दैत्यान्तकचक्राय। असुरान्तकचक्राय। जगच्चक्राय। परमचक्राय। शालग्रामशिलाधिष्ठातृवासुदेवाय। प्रणवादिनमोऽन्तेन पूजयित्वा यथाशक्ति जप्त्वा गुह्यादिना जपं समर्प्य। ओँ अविनयमपनय विष्णो! दमय मनः शमय विषयरसतृष्णाम्। भूतदयां विस्तारय तारय संसारसागरतः॥१॥ दिव्यधुनीमकरन्दपरिमलपरिभोगसच्चिदानन्दे। श्रीपतिपदारविन्दे भवखेदच्छिदेऽरविन्दे॥२॥ सत्यपि भेदापगमे नाथ! तवाहं न मामकीनस्त्वम्। सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः॥३॥ उद्धृतनगनगभिदनुजकुलामित्रशशिदृष्टे। दृष्टे प्रभवति न भवति भवतिरस्कारः॥४॥ मत्स्यादिभिरवतारैरवतारय तां सुधाम्। परमेश्वर! परिपाल्यो भवतापभीतोऽहम्॥५॥ दामोदर! गुणमन्दिर! सुन्दरवदनारविन्द! गोविन्द। भवजलधिमथनमन्दर! परमं दरमपनय त्वं मे। नारायण! करुणामय!

शरणं करवाणि तावकौ चरणौ। इति षट्पदी मदीये वदन-सरोजे सदा वसतु॥ ६॥ इति यमिनोक्ता षट्पदी समाप्ता॥ इत्यनेनार्घ्यपात्रं गृहीत्वा प्रदक्षिणत्रयं कुर्य्यात्। ततः शङ्खं शिरसि भ्रामयित्वा त्रिभिरष्टाङ्गं पञ्चाङ्गं वा प्रणमेत्॥ यथा। ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम्। भृत्यार्त्तिहं प्रणतपालभवाब्धिपोतं वन्दे महापुरुष! ते चरणारविन्दम्॥ १॥ त्यक्त्वा सुदुस्त्यजसुरेप्सितराजलक्ष्मीं धर्मिष्ठ आर्य्यवचसा यदगादरण्यम्। मायामृगं दयितयेप्सित-मन्वधावद्वन्दे महापुरुष! ते चरणारविन्दम्॥ २॥ ओँ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च। जगद्धिताय कृष्णाय गोवि-न्दाय नमो नमः॥ इति प्रणम्य प्रार्थयेद्यथा। नाथ! योनि-सहस्रेषु येषु येषु व्रजाम्यहम्। तेषु तेष्वच्युता भक्तिरच्युतास्तु सदा त्वयि॥ या प्रीतिरविवेकानां विषयेष्वनपायिनी। त्वाम-नुस्मरतः सा मे हृदयान्नापसर्पतु॥ युवतीनां यथा यूनि यूनाञ्च युवती यथा। मनोऽभिरमते तद्वन्मनो मे रमतां त्वयि॥ ततः कृतार्थोऽस्मीत्युक्त्वा तथा विभाव्य च नृत्यगीतादिकं कृत्वा। ओँ कृष्ण! कृष्ण! महाबाहो! भक्तानामार्त्तिनाशन!। सर्वपापप्रशमनं पादोदकं प्रयच्छ मे। इत्यनेन चरणामृतं पीत्वा तच्छेषम्। ओँ अकालमृत्युहरणं सर्वव्याधिविनाशनम्। विष्णुपादोदकं पुण्यं शिरसा धारयाम्यहम्। इत्यनेन शिरसि धारयेत्। शि-रसि धारणफलन्तु॥ अकालमृत्युहरणं सर्वव्याधिविनाशनम्। शालग्रामशिलातोयं योऽभिषेकं समाचरेत्। स स्नातः सर्व-तीर्थेषु सर्वयज्ञेषु दीक्षितः। पीत्वा शीर्षे धारयेद्यो विष्णुलोकं स गच्छति॥ वीरमित्रोदयधृतवृहन्नारदीये॥ हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः। पादोदकञ्च निर्माल्यं मस्तके यस्य सोऽच्युतः। मृत्युकाले तु यस्यास्ये दीयते पादयोर्जलम्। अपि

पापसमाचारः स गच्छेद्विष्णुमव्ययम् इति मृत्युकाले विष्णु-पादोदकभक्षणफलम् ॥ तोयञ्च तुलसीञ्चैव चन्दनं द्विजमज्जकम्। घण्टा ऋचा शिला ताम्रं नवभिश्चरणादकम्। ऋचा पुरुषसूक्त-मन्त्र इति चरणोदकलक्षणम्। वशिष्ठसंहितायाम्। शाल-ग्रामशिलातोयमपीत्वा यस्तु मस्तके। प्रक्षेपणं प्रकुर्वीत ब्रह्महा स निगद्यते। विष्णोः पादोदकं पीतं कोटिजन्माघनाशनम्। तदेवाष्टगुणं पापं भूमौ विन्दुनिपातनात्। विष्णुपादोद-कात्पूर्वं विप्रपादोदकं पिबेत्। विरुद्धमाचरन्मोहादात्महा स निगद्यते। पृथिव्यां यानि तीर्थानि तानि तीर्थानि सागरे। सागरे यानि तीर्थानि पदे विप्रस्य दक्षिणे। इति विष्णुपादोदक-माहात्म्यगर्भपानमन्त्रः। वत्स! तुभ्यं मया दत्तं पिब शेषं जरा-मृतम्। सर्वदा सुखदं देव! जयं देहि रिपुं दह ॥ इति पादो-दकदानमन्त्र इति प्रसङ्गाल्लिखितम् ॥ नैवेद्यभक्षणमन्त्रः। ओँ उच्छिष्टभोजनं तस्य वयमुच्छिष्टकाङ्क्षिणः। येन नीलवरा-हेण हिरण्याक्षो निपातितः। दधिवासनादिमन्त्रविशेषादयस्तु मन्त्रसारेऽनुसन्धेयाः ॥ इति प्राचीनपद्धतिधृतशालग्रामपूजा ॥

अथ विष्णुपूजा ॥ सनत्कुमारतन्त्रे द्वितीयपटले ॥ ब्राह्मे मु-हूर्त्ते उत्थाय शुचिर्भूत्वा समाहितः। आसने उपविश्याथ गुरुं नत्वा पुटाञ्जलिः। आत्मानं ब्रह्मणो रूपं चिन्तयेच्च मुहुर्मुहुः। जप्त्वा मन्त्रञ्च सर्वेषां वादिनां विजयी भवेत्। ततः स्नात्वा शुचिर्भूत्वा सन्ध्यादीन् वैदिकांस्तथा। कुर्य्याद् गुरूपदेशेन लौकिकानपि दैशिकः। श्रीकृष्णं तर्पयामीति मूलमुच्चार्य्य तर्पयेत्। पूजाद्वारे चोपविश्य पादप्रक्षालनं सुधीः। शिखाया बन्धनञ्चैव चास्त्रमन्त्रेण मन्त्रवित्। आचम्य द्वारदेवांस्तु पूजयेत् साधकोत्तमः। द्वारदेवतापूजा तु पूर्वमुक्ता। विघ्नानुच्चाटयित्वा तु हस्तभूम्योर्विशोधनम्। गुरुं नत्वा गणेशञ्च वास्तुपूजां समा

चरेत्। ब्रह्माणं पूजयित्वा तु आत्मासनमतः परत्। भूत-शुद्धिं विधायाथ देवोऽहं चिन्तयेद्बुधः। ऋष्यादीन् न्यस्य सर्वत्र मातृकार्णान् ततः परम्। प्राणायामत्रयं कुर्य्यादङ्गन्यासञ्च मन्त्रवित्। आचक्रञ्च विचक्रञ्च सुचक्रञ्च द्विजोत्तमः। त्रैलोक्यरक्षणं चक्रमसुरान्तकमेव च सुदर्शनं जगच्चक्रं दैत्यान्तं परमं महत्। एकैकं पूर्व्वतः कृत्वा चक्रशब्दं नियोजयेत्। चतुर्थ्यन्तञ्च संसाध्य स्वाहाशब्दमनन्तरम्। तथा चाङ्गं समुच्चार्य्य प्रत्येकैकं नियोजयेत्। नमः स्वाहा वषट् कवचाय हुं मन्त्रकम्। हृदि मूर्ध्नि शिखादेशे तनौ दिक्षु यथाक्रमम्। सशक्तिभिः कुशवाद्यैर्न्यासं कुर्य्याद् विचक्षणः। विभूतिपञ्जरं न्यस्य न्यसेत्तु मूर्त्तिपञ्जरम्। तत्त्वन्यासं प्रकुर्व्वीत करन्यासं तथा बुधः। मन्त्रन्यासं प्रकुर्व्वीत व्यापकञ्च त्रिधा न्यसेत्। विभूतिपञ्जरन्यासं यत्र यत्र दशाक्षरम्। एवं कल्पोक्तकान् न्यासान् क्रमेण परिकल्पयेत्॥ न्यासस्तु तन्त्रसारकारेणैव धृत इति॥ तथा। शङ्खस्थापनकञ्चापि कुर्य्याद् गुरूपदेशतः। अर्घ्यञ्चापि तथा कृत्वा द्रव्यमभ्युक्ष्य यत्नतः। पीठं प्रकल्प्य देहेषु धर्म्मादीन् पूजयेत्ततः। हृदि चैव अनन्तादीन् पूजयच्च यथाविधि। वाह्यं मुखं गृहस्थस्य वर्णिनोऽन्ते प्रपूजनम्। भास्करञ्च गणेशञ्च शिवं दुर्गां प्रपूजयेत्। यन्त्रं निर्माय ताम्रे तु अनन्तादीन् प्रपूजयेत्। अस्य कोणेषु धर्म्मादीन् तत्पार्श्वेऽधर्म्मपूर्व्वकान्। मध्येऽपि पूजयेन्नित्यमनन्तादीन् चतुर्दश। केशरेषु च पूज्या वै विमलाद्याश्च देवताः। आत्मानं दैवतं भाव्य स्वनासापुटकेन तु। निःसार्य्य पूजयेद्देवं सदावाह्य प्रयत्नतः। अनन्ताद्यैश्च वीजैश्च प्राणस्थापनमाचरेत्। पद्मादींश्चैव यत्नेन पूजयेदावृतीगणान्। धूपदीपौ समासाद्य नैवेद्यञ्च निवेदयेत्। जप्त्वा मन्त्रञ्च तन्त्रोक्तं पूजयेद्देववत् स्वयम्।

श्रीकृष्णं तर्पयामीति मूलमुच्चार्य्य यत्नत: । चारत्नयार्घ्यतोयेन तर्पयेन्मन्त्रमस्तके । प्राणायामत्रयं कृत्वा व्यापकञ्च त्रयं न्यसेत् । स्वतन्त्रोक्तेन विधिना प्रयोगं कुरुते सुधी: ॥ इति विष्णुपूजा-सूत्रम् ॥

अथ विष्णोरुपचारमन्त्र: ॥ योगिनीपटले ॥ मीनरूपो वराहश्च नरसिंहोऽथ वामन: । आयातु देवो वरदो मम नारायणोऽग्रत: ॥ इत्यावाहनम् । सुरेशस्य पादपीठे पद्मकल्पितमासनम् । सर्वतत्त्वहितार्थाय तिष्ठस्व मधुसूदन !। इत्यासनम् । पाद्यञ्च पादयोर्देव ! पद्मनाभ ! सनातन !। विष्णो ! कमलपत्राक्ष ! गृहाण मधुसूदन ! ॥ इति पाद्यम् । त्रैलोक्यपतीनां पतये देवदेवाय एव च । आर्घ्याय हृषीकेशाय तस्मै श्रीविष्णवे नम:। इत्यर्घ्यम् । मन्दाकिन्यास्तु ते वारि जय पापं हराशुभम् । गृहाणाचमनीयं त्वं मया भक्त्या निवेदितम् । इत्याचमनीयम्॥ त्वमाप: पृथिवी चैव ज्योतिस्त्वं वह्निरेव च । लोकसंवित्तिमात्रेण वारिणा स्नापयाम्यहम् ॥ इति स्नानम् । देव ! वस्त्रं समायुक्तं यज्ञवर्णविभूषितम् । स्वर्णवर्णप्रभेदेन वाससी तव केशव ! ॥ इति वस्त्रम् । शरीरं ते लेपयामि चेष्टा सैव च केशव !। मया निवेदितो गन्ध: प्रतिगृह्य विलिप्यताम् ॥ इति गन्ध: । ऋग्वेदादिषु मन्त्रेण शोधितं पद्मयोनिना । सावित्रीग्रन्थिसंयुक्तमुपवीतमथाच्युतम् ॥ इत्युपवीतम् । दिव्यवर्णसमायुक्ता वह्निभानुसमन्विता: गात्राणि शोभयन्त्येते अलङ्कारास्तु मानवा: ॥ इत्यलङ्कार: । वनस्पतिरसो दिव्यो गन्धाढ्य: सुरभिश्च भो: !। मया निवेदितो भक्त्या धूपोऽयं प्रतिगृह्यताम् ॥ इति धूप: । सूर्य्यश्चन्द्रश्च विद्युच्च त्वमेवाग्निस्तथैव च । त्वमेव ज्योतिषां देव ! दीपोऽयं प्रतिगृह्यताम् ॥ इति दीप: । अन्नं पञ्चविधं देव ! रसै: षड्भि: समन्वितम् । मया निवेदितं भक्त्या नैवेद्यं

तव केशव!॥ मत्स्यसूक्ते उपरिभागे अष्टचत्वारिंश-त्पटले विशेषः। सुमेरोः पादपीठान्ते पद्मकल्पितमासनम्। सर्वसत्त्वहितार्थाय गृहाण मधुसूदन!॥ इत्यासनम्। सुपाद्यं पादयोर्देव! पद्मनाभ! सनातन!। विष्णो! कमलपत्राक्ष! गृहाण मधुसूदन!॥ इति पाद्यम्॥२॥ त्रैलोक्यपतीनां पते! देवदेव! जनार्दन!। गृहाणार्घ्यं जगन्नाथ! नानामलयजं प्रभो!॥ इत्यर्घ्यम्। ३। मन्दाकिन्यास्तु यद्वारि सर्वपापहरं शुभम्। गृहाणाचमनीयं त्वं मया भक्त्या निवेदितम्॥ इत्याचमनीयम्॥ ४॥ मधुपर्कं महादेव! ब्रह्माद्यैः परिकल्पि-तम्। मया निवेदितं भक्त्या गृहाण मधुसूदन!॥ इति मधुपर्कम्॥५॥ दिव्यवस्त्रसमायुक्ते बहुतन्तुविनिर्मिते। सुवर्णप्रभवे देव! वाससी तव केशव!॥ इति वस्त्रम्। ६। ऋग्यजुःसाममन्त्रेण निर्मितं पद्मयोनिना। सावित्रीग्रन्थिसंयुक्तमुपवीतं तवा-च्युत!॥ इत्युपवीतम्। ७। वनस्पतिरसोत्पन्नो गन्धाढ्यः सुरसम्मतः। आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्॥ इति धूपः। ८। सूर्य्याचन्द्रमसोर्ज्योतिर्विद्युदग्न्योस्तथैव च। त्वमेव ज्योतिषां ज्योतिर्दीपोऽयं प्रतिगृह्यताम्॥ इति दीपः।९। अन्नं चतुर्विधञ्चैव रसैः षड्भिः समन्वितम्। मया निवेदितं भक्त्या नैवेद्यं तव केशव!। इति नैवेद्यम्। १०। दिव्यतन्तुसमायुक्ता वह्निभानुसमन्विताः। गात्राणि तव शोभन्तामलङ्काराः शुभा इमे। इत्यलङ्काराः। ११। नारदपञ्चरात्रे तृतीयरात्रे पञ्च-दशाध्याये॥ व्यास उवाच॥ वक्ष्येऽक्षयधनावाप्त्यै प्रतिपत्तिं श्रियः पतेः। सुगुप्तां धननाथाद्यैर्यद्देवैः श्रीयते सदा। द्वारा-वत्यां सहस्रार्कभास्वरैर्भवनोत्तमैः। अनल्पैः कल्पवृक्षैश्च वीते तु मण्डपे तथा। गवद्रत्नमयस्तम्भद्वारतोरणकुड्यके। फुल्लस्रगुल्लसच्चित्रवितानालम्बिमौक्तिके। पद्मरागस्थलीराजद्र-

नद्योश्च मध्यतः । अनावृतगलद्रत्नमणिकल्पतरोरधः । रत्नप्रदी-
पावलिभिः प्रदीपितदिगन्तरे । उद्यदादित्यसङ्काशमानसिंहा-
सनाम्बुजे । समासीनोऽच्युतो ध्येयो द्रुतहाटकसन्निभः । समा-
नोदितचन्द्रार्कतड़िल्कोटिसमद्युतिः । सर्वाङ्गसुन्दरः सौम्यः
सर्वाभरणभूषितः । पीतवासाश्चक्रशङ्खगदापद्मोज्ज्वलद्भुजः ।
अनावृतोज्ज्वलद्रत्नधारो मुकुलसंस्पृशन् । वामपादाम्बुजाग्रेण
अच्युतां पल्लवच्छविम् । रुक्मिणी सत्यभामास्य मूर्द्ध्नि रत्नौघ-
धारया । सिञ्चन्त्यौ दक्षवामस्थे स्वदोःस्थकलसोत्थया । लग्ने
ज्योतिःसुनन्दा वा शान्त्योदकलसी तयोः । ताभ्याञ्च दक्षवामस्थे
मित्रवृन्दासुलक्षणे । रत्ननद्याः समुद्धृत्य रसपूर्णौ घटौ तयोः ।
जाम्बवती सुशीला च दिशन्त्यौ दश वामने । हरेः षोड़श-
साहस्रसंख्याताः परितः प्रियाः । ध्येयाः कनकरत्नौघधारायुक्-
कलसोज्ज्वलाः । तद्बहिश्चाष्टनिधयः पूरयन्तो धनैर्धराम् । तद्बहि-
र्वृष्णयः सर्वं पुरोवच्च सुरादयः । ध्यात्वैवं परमात्मानं विंशत्यन्तं
मनुं जपेत् । चतुर्लक्षं हुमेदाज्यैर्द्वाविंशतिसहस्रकम् । शक्तिः
श्रीपूर्वकोरुठादशार्णो विंशतिरक्षकः । मन्त्रेण न सदृक्कोऽन्यो
मनुर्न हि जगत्त्रये । ऋषिर्ब्रह्मास्य गायत्री छन्दः कृष्णस्तु
देवता । पूर्वप्रोक्तवदेवास्य वीजशक्त्यादिकल्पना । कल्पः सन-
त्कुमारोक्तो मन्त्रस्यास्योच्यतेऽधुना । पीठन्यासान्तिकं कृत्वा
पूर्वोक्तक्रमतः सुधीः । करद्वन्द्वाङ्गुलितलेष्वङ्गषट्कं प्रविन्यसेत् ।
मन्त्रेण व्यापकं कृत्वा मातृकां मनुसम्पुटाम् । संहारसृष्टि-
मार्गेण दश तत्त्वानि विन्यसेत् । पुनश्च व्यापकं कृत्वा मन्त्रवर्णां-
स्ततो न्यसेत् । मूर्द्ध्नि भाले भ्रुवोर्मध्ये नेत्रयोः कर्णयोर्नसोः ।
अनेन चिवुके कण्ठे दोर्मूले हृदि तुन्दके । नाभौ लि[illegible] तथा-
धारे कट्यां जान्वोश्च जङ्घयोः । गुल्फयोः पादयोर्न्यसेत् सृष्टिरेषा
समीरिता । स्थिति हृदादिनासान्ता संहृतिश्चरणादिका विभा-

यैवं पञ्चरत्नः स्थित्यन्तं मूर्त्तिपञ्जरम्। सृष्टिस्थिती च विन्यस्य षडङ्गन्यासमाचरेत्। गुणाब्धिवेदकरणादशार्णैर्मध्यमाः स्मृताः। मुद्रां बद्ध्वा किरीटाख्यां दिग्बन्धं पूर्ववच्चरेत्। एवं ध्यात्वा चयेद् गेहं मूर्त्तिपञ्जरपूर्वकम्। अथवाभ्यर्चयेद्विष्णुं तदर्थं मन्त्र-मुच्यते। गोमयेनोपलिप्यार्च्चां तत्र पीठं निधापयेत्। विलिप्य गन्धपङ्केन लिखेदष्टदलाम्बुजम्। कर्णिकायान्तु षट्कोणं स साध्यस्तत्र तन्मुखम् शिष्टैस्तं सप्तदशाभिरक्षरैर्वेष्टयेत् स्वयम्। प्रागक्षरादिकोणेषु श्रियं शिष्टे सुसंविदम्। षडक्षरं सन्धिषु च केशरेषु त्रिशस्त्रिशः। विलिखेत् स्मरगायत्रीं मालामन्त्रं दला-ष्टके। षट्शः संलिख्य तद्बाह्ये वेष्टयेन्मातृकाक्षरैः। भूबिम्बञ्च लिखेद्बाह्ये दिग्विदिक्षु समाहितः। एतन्मन्त्रं हाटकादिपात्रे-ष्वालिख्य पूर्ववत्। साधितं धारयेद्यो वै सोऽर्च्यते त्रिदशैरपि। स्याद्गायत्री कामदेवपुष्पबाणौ च ङेऽन्तकौ। विद्महे धीमहि-युतैस्तन्नोऽनङ्गः प्रचोदयात्। जप्तास्य पादौ गोपालं मनूनां जनरञ्जनम्। कृत्यं ते कामदेवाय ङेऽन्तं सर्वजनप्रियम्। उक्त्वा सर्वजनान्ते तु सम्मोहनपदं तथा। ज्वलज्ज्वलप्रज्वलेति प्रोच्य सर्वजनस्य च। हृदयञ्च मम ब्रूयाद्वशं कुरु युगं शिव!। प्रोक्तो मदनमन्त्रोऽयं चत्वारिंशद्भिरक्षरैः। जपादौ मारबीजा-द्यो जगत्त्रयवशाकरः। भूगेहं चतुरस्रं स्यादष्टवज्रविभूषितम्। पीठं पूर्ववदभ्यर्च्य मूर्त्तिं सङ्कल्प्य पौरुषीम्। तत्रावाह्याच्युतं भक्त्या सकलीकृत्य पूजयेत्। आसनादिविभूषान्तं न च न्यासं क्रमात्स्मरेत्। सृष्टिस्थितिं षडङ्गञ्च किरीटं कुण्डलद्वयम्। शङ्खं चक्रं गदां पद्मं मालां श्रीवत्सकौस्तुभम्। गन्धाक्षतप्रसूनैश्च मूलेनाभ्यर्च्य पूर्ववत्। आदौ वह्निपुरद्वन्द्वकोणेष्वङ्गानि पूज-येत्। मत्रोऽक्षराःशिखावर्मनेत्रमस्त्राणि क्रमात्। वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः। अग्न्यादिदलमूलेषु शान्ति-

लक्ष्मीः सरस्वती। रतिश्चादिश्च ते षष्ठास्ततोऽष्टौ महिषी र्यजेत्। तद्बहिश्चन्द्रवज्राद्या आवृतीः सम्प्रपूजयेत्। इति सप्तावृतिवृतमभ्यर्च्याच्युतमादरात्। प्रीणयेद्दधिखण्डाज्यमिश्रेण तु पयोऽम्भसा। राजोपचारं दत्त्वाथ स्तुत्वा नत्वा च केशवम्। उद्वास्यास्य स्वहृदये परिवारगणैः सह। नत्वात्मानं समभ्यर्च्य तन्मयः प्रजपेन्मनुम्। रत्नाभिषेकध्याने ह्याविंशत्यन्ता प्रिये ततः। जपहोमार्च्चनैर्ध्यानैर्योऽमुं प्रजपते मनुम्। तद्वेश्म पूर्य्यते रत्नस्वर्णधान्यैरनावृतम्। लक्ष्मी करतले तस्य सर्वशस्यकुलाकुला। पुत्रैर्मित्रैः सुसम्पन्नः प्रयात्यन्ते परां गतिम्। वक्त्रावभ्यर्च्य गोविन्दं सपुष्पैः सिततण्डुलैः। आज्यान्तैरयुतं हुत्वा भस्म तन्मूर्द्ध्नि धापयेत्। तस्यान्नानां समृद्धिः स्यात्तद्वशे सर्वयोषितः। आज्यैर्लक्षं हुमेद्रक्तपद्मैर्वा मधुराप्लुतैः। श्रिया तस्यैन्द्रमैश्वर्य्यं क्वपा नाशिश्चित्ते ध्रुवम्। शुक्लादिवस्त्रलाभाय सुम्भकुसुमैर्हुनेत्। तवाकृतिं ब्रुवन्तो वा चक्राद्यङ्गाङ्गनां विना। विंशत्यन्तोक्तयज्जलधिया ध्यायेदथाच्युतम्। वरदाभयहस्ताभ्यां श्लिष्यन्तं स्वाङ्गके प्रिये!। पद्मोत्पलकरे ताभ्यां श्लिष्टं चक्रधरोज्ज्वलम्। दशलक्षं जपेदाज्यैस्तावत्साहस्रहोमतः। सिद्धाविमौ मनू सम्पत्स्वसौभाग्यदौ नृणाम्। मारशक्तिवशापूर्व्वशक्तिः श्रीमान् मनुत्रयम्। एतेषां मनुवर्णानां नाम कुर्य्याद्दशान्तवत्। शङ्खचक्रधनुर्वाणपाशाङ्कुशधरोरगाः। वेणुधमनं ध्मन्तं दोर्भ्यां ध्येयः कृष्णोदिवाकरे। आद्यगणे ध्यानमेवं द्वितीये विशतस्तु तत्। दशान्तवत्तृतीये स्यात् दिक्पादेश्च समर्च्चना। पञ्चलक्षं जपेत्तावदयुतं पायसैर्हुनेत्। ततः सिद्धास्तु मनवो नृणां सम्पत्सिकान्तिदाः॥

अथ विष्णुनाममाहात्म्यम्॥ मत्स्यसूक्ते महातन्त्रे षोड़शपटले॥ विष्णुनामानि पुण्यानि कीर्त्तयन् प्रहरे प्रिये!। कोटि-

कल्पसहस्राणि वै कुण्ठे वसते नरः। नामैकं वै द्वितीयञ्च तृतीयं हि चयो चयो। कीर्त्तयन् भक्तिभावेन विष्णुलोकं व्रजेत् प्रिये!। कीर्त्तयन् हरिनामानि भक्त्या पुण्यानि वै शुभे!। महाभयेषु सर्व्वेषु न भयं विद्यते क्वचित्। कुर्व्वन् वा कारयेद्वापि महो-त्सवञ्च वै प्रिये!। नीत्वा कुलसहस्राणि मामाप्नोत्येव तत्त्वतः। नामाक्षरं गुणयुतं भावमन्त्रेण सम्मितम्। त्रिसन्ध्यं कीर्त्तयेद्-यस्तु स गच्छेद्वैष्णवं पुरम्। वैष्णवानां नराणाञ्च अर्च्चयन्ति सदा प्रिये!। सर्व्वपापविनिर्म्मुक्ताः शिवलोकं प्रयान्ति ते। ओं नमो नारायणायेति ये वदन्ति मनीषिणः। किं कार्य्यं बहुभि-र्मन्त्रैर्मनोविभ्रमकारकैः॥

अथ श्रीकृष्णशतनामस्तोत्रम्॥ नारदपञ्चरात्रे चतुर्थरात्रे प्रथमाध्याये उमामाहेश्वरसंवादे॥ श्रीकृष्ण उवाच॥ वसुन्धरे! वरारोहे! नाम्नामष्टोत्तरं शतम्। सर्व्वमङ्गलमङ्गल्यमर्णाणमाद्य-ष्टसिद्धिदम्। महापातककोटिघ्नं सर्व्वतीर्थफलप्रदम्। समस्त-जपयज्ञानां फलदं पापनाशनम्। शृणु देवि! प्रवक्ष्यामि नाम्नामष्टोत्तरं शतम्। सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या तु यत् फलम्। एकावृत्त्या तु कृष्णस्य नाम्नैकं तत् प्रय-च्छति। तस्मात् पुण्यतमञ्चैतत् स्तोत्रं पापप्रणाशनम्। श्रीकृष्णस्याष्टोत्तरशतनाम्नां श्रीशेष ऋषिरनुष्टुप् छन्दः श्रीकृष्णो देवता श्रीकृष्णाष्टोत्तरशतनाम्नः पाठे विनियोगः। ॐ श्रीकृष्णः कमलानाथो वासुदेवः सनातनः। वसुदेवात्मजः पुण्यो लीलामानुषविग्रहः। श्रीवत्सकौस्तुभधरो यशोदावत्सलो हरिः। चतुर्भुजस्तु चक्रासिगदाशङ्खाम्बुजायुधः। देवकी-नन्दनः श्रीशो नन्दगोपप्रियात्मजः। यमुनाकेलिसंहारी मुचुकुन्दप्रसादकः। षोड़शस्त्रीसहस्रेशस्त्रिभङ्गीमधुराकृतिः। शुकवागमृताब्धीन्दुर्गोविन्दो गोविदां पतिः। वत्सपालन-

सञ्चारी धेनुकासुरभञ्जनः। उत्तानतालभेत्ता च तमालश्यामलाकृतिः। गोपगोपीश्वरो योगी सूर्य्यकोटिसमप्रभः। इलापतिः परं ज्योतिर्यादवेन्द्रो यदूद्वहः। वनमाली पीतवासाः पारिजातापहारकः। गोवर्द्धनाचलोद्धर्त्ता गोपालः सर्वपालकः। अजो निरञ्जनः कामजनकः कञ्जलोचनः। मधुहा मथुरानाथो द्वारकानायको बली। वृन्दावनान्तसञ्चारी तुलसीदामभूषणः। स्यमन्तकमणेर्हर्त्ता नरनारायणात्मकः। कुब्जाकृष्णाम्बरधरो मायी परमपूरुषः। मुष्टिकासुरचाणूरमल्लयज्ञविशारदः। संसारवैरी कंसारिर्मुरारिर्नरकान्तकः। अनादिर्ब्रह्मचारी च कृष्णाव्यसनकर्षकः। शिशुपालशिरश्छेत्ता दुर्योधनकुलान्तकृत्। विदुराक्रूरवरदो विश्वरूपप्रदर्शकः। वृषभासुरविध्वंसी वाणासुरबलान्तकृत्। युधिष्ठिरप्रतिष्ठाता वर्हिबर्हावतंसकः। जगद्गुरुर्जगन्नाथो वेणुवाद्यविशारदः। पार्थसारथिरव्यक्तो गीतामृतमहोदधिः। कालीयफणिमाणिक्यरञ्जितश्रीपदाम्बुजः दामोदरो यज्ञभोक्ता दानवेन्द्रविनाशनः। नारायणः परं ब्रह्म पन्नगाशनवाहनः। जलक्रीड़ासमासक्तगोपीवस्त्रापहारकः। पुण्यश्लोकस्तीर्थवेद्यो वेदवेद्यो दयानिधिः। सर्वतीर्थात्मकः सर्वग्रहरूपी परात्परः॥१०८॥ इत्येवं कृष्णदेवस्य नाम्नामष्टोत्तरं शतम्। कृष्णेन कृष्णभक्तेन श्रुत्वा गीतामृतं पुरा। स्तोत्रं कृष्णप्रियकरं कृतं तस्मान्मया श्रुतम्। कृष्णनामामृतं नाम परमानन्ददायकम्। अनुपद्रवदुःखघ्नं परमायुष्यवर्द्धनम्। दानं श्रुतं तपस्तीर्थं यत्कृतं त्विह जन्मनि। पठतां शृण्वतां चैव कोटिकोटिगुणं भवेत्। पुत्रप्रदमपुत्राणामगतीनां गतिप्रदम्। धनावहं दरिद्राणां जयेच्छूणां जयावहम् शिशूनां गोकुलानाञ्च पुष्टिदं पुण्यवर्द्धनम्। वातग्रहज्वरादीनां शमनं शान्तिमुक्तिदम्। समस्तकामदं सद्यः

कोटिजन्माघनाशनम्। अन्ते तु कृष्णस्मरणं भवतापभयापहम्। कृष्णाय यादवेन्द्राय ज्ञानमुद्राय योगिने। नाथाय रुक्मिणीशाय नमो वेदान्तवेदिने। इमं मन्त्रं महादेवि! जपेन्नरो दिवानिशम्। सर्वग्रहानुग्रहभाक् सर्वप्रियतमो भवेत्। पुत्रपौत्रैः परिवृतः सर्वासिद्धिसमृद्धिमान्। निर्विश्य भोगानन्तेऽपि कृष्णसायुज्यमाप्नुयात्॥ इति नारदपञ्चरात्रे ज्ञानामृतसारे चतुर्थरात्रे उमामाहेश्वरसंवादे श्रीकृष्णाष्टोत्तरशतनामस्तोत्रं समाप्तम्॥

अथ काष्ठपात्रादौ विष्णुपूजानिषेधः॥ मत्स्यसूक्ते षोड़शपटले॥ स्वयं देवस्य वहनं काष्ठपात्रे च पूजनम्। स्नापनं मृत्तिकापात्रे त्रयं दारिद्र्यकारणम्। हस्ते च वदले कांस्ये शङ्खे च रीतिसम्भवे। तृणे च नेत्रपात्रे च त्वचि रौप्ये न चार्चयेत्॥ इति काष्ठादिपात्रे विष्णुपूजादिनिषेधः॥

स्वर्णपात्रे तथा ताम्रे शिलायां नारिकेलके। फले च वा पद्मपत्रे किंशुकस्य छदेऽथवा। चलदलस्य छदे पूजा यज्ञायुतफलप्रदा॥ किंशुकस्य पलाशस्य। चलदलोऽश्वत्थः॥ इति स्वर्णादिपात्रे विष्णुपूजाफलम्

पञ्चदशपटले॥ दद्यात् पुरुषसूक्तेन यः पुष्पाण्येकमेव वा। अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम्। एकया वा ऋचा देवि! स्नात्वा दत्त्वा जलाञ्जलिम्। पौरुषेण च सूक्तेन मुच्यते सर्वकिल्विषात्। अन्तर्जलगतो जप्त्वा तथा सूक्तञ्च पौरुषम्। सर्वकर्मविनिर्मुक्तः सर्वपापैः प्रमुच्यते। स्नातस्तु पौरुषं सूक्तं जपेन्नित्यमतन्द्रितः। संवत्सरेण देवेशं वासुदेवं प्रपश्यति॥ इति पुरुषसूक्तमाहात्म्यम्॥

षोड़शपटले॥ सुशीतलेन तोयेन स्नापयेज्जलशायिनम्। ब्रह्मलोकमवाप्नोति यावदिन्द्राश्चतुर्दश। कुशपुष्पोदकस्नानाद

ब्रह्मलोकमवाप्नुयात्। रत्नोदकेन सावित्रं कौवेरं हेमवारिणा। सर्वौषधिप्रदानेन वाजिमेधफलं लभेत्॥ इति द्रव्यविशेषेण विष्णुस्नापनफलम्॥

तथा॥ कलायस्य तु चूर्णेन यवचूर्णेन वा पुनः। हरिद्रा-माषचूर्णेन तथा तण्डुलजेन वा। एकेनोद्वर्त्तनं कुर्य्याद्विष्णु-लोकमवाप्नुयात्॥ इत्युद्वर्त्तनफलम्॥

तथा॥ यवगोधूमलेपेन तथा चोष्णेन वारिणा। प्रक्षाल्य देवदेवेशं वारुणं लोकमाप्नुयात्॥ इति द्रव्यविशेषेण देवगात्र-प्रक्षालनफलम्॥

तथा॥ पादपीठन्तु यो दद्यान्मुखप्रक्षालनं तथा। घर्षयेद्-विल्वपत्रेण सर्वपापैः प्रमुच्यते॥

अथ विष्णोर्महास्नानं तत्रैव॥ तुलामकरमेषेषु महास्नानं करोति यः। षष्टियुगसहस्राणि ब्रह्मलोके वसेच्चिरम्। पञ्चा-मृतस्य प्रत्येकं पलानाञ्च शतं शतम्। तदर्द्धञ्च तदर्द्धं वा ततो हीनं न कारयेत्। तथा तैलस्य देवेशि! सहस्रेण घटेन च। शतेन च तदर्द्धेन तथा च शतधारया। सहस्रधारया स्नानं महापातकनाशनम्। तदर्द्धेन महेशानि! तदर्द्धेन कलौ युगे। पञ्चविंशपलान्येव कषायस्य च संख्यया। उष्णोदकस्य च तथा घटसंख्या महेश्वरि!। एवं यः कुरुते स्नानं कारयेद्वा महेश्वरि!। सप्तजन्मार्ज्जितं पापं तत्क्षणादेव नश्यति। चतुस्तोलकमानेन द्रव्याणाञ्च पृथक् पृथक्। चतुस्तोलकया वाथ हीने स्नानं न योजयेत्। तथा। शङ्खस्थितेन तोयेन यः स्नापयति केशवम्। विष्णुमन्त्रेण देवेशि! कुलानां तारयेच्छतम्। कपिलाक्षीरमा-दाय शङ्खे कृत्वा यशस्विनि!। कन्यादानसहस्रस्य स्नापयित्वा फलं लभेत्। तदर्द्धञ्चान्यगोक्षीरं द्विगुणं कुशवारिणा। महा-पूजा त्रिलक्षेण पुष्पपत्रेण चार्च्चयेत्। कलौ लक्षेण देवेशि!

यथाप्त न विशेषत:। तदर्द्धं मध्यमं ज्ञेयं तदर्द्धेन कनिष्ठकम् ॥
इति महास्नानादिमहापूजाकथनम् ॥

अथ शङ्खमाहात्म्यम् ॥ पद्मपुराणे ॥ त्रैलोक्ये यानि तीर्थानि वासुदेवस्य सेवया। पापं सङ्घाति विप्रेन्द्र! तस्मा-च्छङ्खं प्रपूजयेत्। शङ्खश्च सागरोत्पन्नो विष्णुना विधृत: करे। निर्मित: सर्वदेवैषु पाञ्चजन्य! नमोऽस्तु ते। दर्शनादेव शङ्खस्य किं पुन: स्पर्शने कृते। विलयं यान्ति पापानि हिमवद्भास्करो-दये। पुरतो वासुदेवस्य पुष्पसज्जनलक्षणम्। शङ्खमभ्यर्चितं तिष्ठेत्तस्य लक्ष्मीर्न दुर्लभा। शङ्खे कृत्वा तु पानीयं सपुष्पं सजलाक्षतम्। अर्घ्यं ददाति देवस्यससागरमहीफलम्। प्राप्नुयादिति शेष:। अर्घ्यं दत्त्वा तु शङ्खेन य: करोति प्रद-क्षिणम्। प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा। तीर्थोदकं हरेर्मूर्द्ध्नि भ्रामयेत् शङ्खसंस्थितम्। भुक्तिं ददाति वै तस्य क्षीर-सागरजा प्रिये!। शङ्खलग्नं तथा तोयं भ्रामितं केशवोपरि। वहते शिरसा गङ्गा गङ्गास्रोतेन तस्य किम् ॥

अथ शङ्खलक्षणं क्रियासारे ॥ प्रस्थानन्तु प्रतिस्थित: शङ्ख: श्रेष्ठतमो मत:। स्तनांशपूर्णको मध्य: कनिष्ठ: क्रमशो भवेत्। सुश्रोण: पांशुशिखर: स्निग्धो दीर्घ: सुपद्धति:। शङ्ख: स्यादर्चना-योग्यो योऽसावलिकचक्षुष:। अलिकचक्षुषस्त्रिपञ्चक: ॥ मलिनो निम्नशिखर: सरक्त: क्रिमिदष्टक:। ह्रस्व: प्राणालिक: शङ्खो न स्यादयोग्य: सुरार्चने। गोक्षीरधवल: स्निग्धो दीर्घनालो वृहत्तर:। वृतो यो दक्षिणावर्त्त: स द्विज: शङ्खसंज्ञक:। पूर्वोक्तलक्षणोपेतो वामावर्त्तोऽथवान्वित:। शङ्खोऽयं नातिसुलभ: सोऽपि मुख्य: सुरार्चने। दक्षिणावर्त्तं विशेषयति कल्पतरौ। दक्षिणावर्त्त-शङ्खेन पात्रे औडुम्बरे स्थितम्। उदकं य: प्रतीच्छेत्तु शिरसा हृष्टमानस:। सप्तजन्मार्जितं पापं तत्क्षणादेव नश्यति ॥

स्कान्दे ॥ दक्षिणावर्त्तशङ्खस्य तोयेन योऽर्च्चयेद्धरिम्। सप्तजन्म-कृतं पापं तत्क्षणादेव नश्यति ॥ क्रियासारे ॥ ताम्रस्फटिक-शङ्खेषु सुवर्णकलधौतयोः। न विद्यते भिन्नदोषो द्रव्येष्वन्येषु विद्यते। शङ्खः शुद्धो भवेत्तत्र तुषाभिघर्षणेन च ॥ तुषो धान्य-त्वक् ॥ मत्स्यसूक्ते षोड़शपटले ॥ नदीतड़ागसम्भूतं वापीकूप-ह्रदोद्भवम्। गङ्गोदकं भवेत् सर्वं शङ्खेनैव समुद्धृतम्। त्रैलोक्ये यानि तीर्थानि वासुदेवस्य पूजने। शङ्खे तीर्थानि देवेशि! तस्मात् शङ्खं समर्च्चयेत्। दर्शनादेव शङ्खस्य किं पुनः स्पर्शने कृते। विलयं यान्ति पापानि भास्करेण हिमं यथा। पुरतो वासुदेवस्य सपुष्पं सजलाक्षतम्। शङ्खमभ्यर्च्चितं येन तस्य लक्ष्मी न दुर्लभा। अर्घ्यं दत्त्वा तु शङ्खेन यः करोति प्रदक्षिणम्। प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा। क्षिप्त्वा शङ्खोदकं शङ्खे यः स्नापयति केशवम्। अष्टाक्षरेण मन्त्रेण मुच्यते सोऽपि सङ्कटात्। न भूमौ स्थापयेत् शङ्खं स्थापिते क्षालयेत् पुनः। चन्दनोदकेन दुग्धेन शुद्धकेनापि शोधयेत्। ओँ त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे। निर्म्मितः सर्वदेवैश्च पाञ्चजन्य! नमोऽस्तु ते ॥

अथ त्रिपदीलक्षणम् ॥ वीरमित्रोदयधृतसिद्धान्तशेखरे ॥ चतुःषष्टिभिर्मात्रैरुत्तमा विहिता त्रिधा। उत्तमादिकभेदेन यन्त्रिका त्रिपदी मता। त्रिचक्रपादसंयुक्तं पादार्द्धे सिंहचक्र-कम्। पादमध्येऽसंवृतं स्यात् सिंहास्यञ्च पदोऽप्यधः। शेषं कुर्य्याद् यथाशोभं त्रिपदी परिकीर्त्तिता। अर्घ्यसंस्थादिनैवेद्य-पात्राधारा त्रिपादिका ॥ इति ॥

अथ तुलसीमाहात्म्यम् ॥ मत्स्यसूक्ते षोड़शपटले ॥ सर्वेभ्यः पत्रपुष्पेभ्यो वरिष्ठा तुलसी प्रिये!। सर्वकामप्रदा शुद्धा वैष्णवी विष्णुवल्लभा। भुक्तिमुक्तिप्रदा देवि! सर्वलोकहिता परा। शुद्धा मातृत्वगता स्वर्गमक्षयं परमेश्वरि!। हितार्थं सर्वलोकानां

पृथिव्यां रोपिता पुरा। यथा विष्णुप्रिया लक्ष्मी यथा त्वं हर-
वल्लभा। तथेयं तुलसी देवी चतुर्थी नोपपद्यते। यथा गङ्गा
पवित्रा हि सर्वलोकविमोक्षदा। तथेयं सर्वपापानां तुलसी
पापहारिणी। समञ्जरीदलैर्येन तुलस्या विष्णुरर्चितः। तस्य
पुण्यफलं देवि! कथितुं नैव शक्यते। तुलस्याः कुसुमेनैव नार्च-
येद्गरुड़ध्वजम्। करपत्रसमं यस्माद्वीर्य्ययुक्तं वरानने!॥ तथा।
त्रिषु लोकेषु विख्याता सर्वपापप्रणाशिनी। सर्वकामप्रदा देवी
सर्वमङ्गलकारिणी। संसारसागरे घोरे तुलसी नौस्वरूपिणी।
देवानां शिवदुर्गायाः परं तुष्टिप्रदायिणी। कल्मषौघातुराणाञ्च
सेयमेका महौषधिः। तत्रैवोदाहरन्तीममितिहासं पुरातनम्।
मरीचिरामसंवादं तच्छृणुष्व वरानने!। पुरा रघुकुलाधीशो
वेदवेदाङ्गपारगम्। पूजयित्वा यथान्यायं मनश्चक्रे महामतिः।
एवं प्रतिदिनं तत्र यथाकालं समाचरेत्। अचिरेणैव कालेन
तुष्टोऽभून्मुनिसत्तमः। स ददौ च स्रजं दिव्यां श्रीरामाय परा-
त्पराम्। तुलसीवनजाताञ्च मञ्जरीपुष्पधारिणीम्। चतुर्वेद-
मयीं दिव्यां ददौ रामस्य मूर्द्धनि। तामादाय ततस्तूर्णं मञ्जरी-
पत्रशालिनीम्। दृष्ट्वा चुक्रोध भगवानुवाच मुनिपुङ्गवम्। अहो!
किमवलेपोऽयं ब्राह्मणस्य महात्मनः। वनस्पतेः पत्रजातं कथं
दत्तं ममोपरि। आशीर्वादो द्विजातीनां ग्राह्यो मतिमता-
मिति। अतोऽहं मुनिशार्दूल! अवलेपं वहामि ते। एतच्छ्रुत्वा
तु वचनं रामस्याशु रुषान्वितम्। शशाप तुलसी देवी राजानं
रघुनन्दनम्। यस्मान्मदापलेपेन शिरसो मां विमुक्तवान्।
तस्माद्राजेन्द्र! वैदेह्या वियोगस्ते भविष्यति। शपन्तीं तां ततो
दृष्ट्वा सीता हृदयवल्लभम्। सक्रोधनयनं देवमिदमाह महा-
मतिः। मरीचिरुवाच॥ सुप्रसीद महाराज! व्रजामि
शरणं तव। कथयामि पुरावृत्तं विचित्रं मुनिभाषितम्।

एषा हि तुलसीमाला मया दत्ता सुरेश्वर!। अस्या विचित्र-माहात्म्यं मत्तः सर्वं निशामय। इयं हि वृक्षरूपेण महालक्ष्मीः प्रतिष्ठिता। ब्राह्मीयं परमा शक्तिर्ब्रह्मणो रोमसम्भवा। ऋग्-यजुःसामवेदाद्याः शाखाचरणसम्मिताः। यथा गङ्गा यथा गीता गायत्री च यथा मता। पद्मयोनेः समुद्भूता तथेयं लोकपावनी। यत्रैषा तिष्ठते सम्यक् तत्र लक्ष्मीः प्रतिष्ठिता। इमां विना तथा लक्ष्मीर्विनाशायोपजायते। एवं सृष्टा जगन्माता तुलसी ब्रह्मणा स्वयम्। लोकानां पालनार्थाय पृथिव्यामवतारिता। एनामाराध्य देवेशो महादेवो जगत्पतिः। असुरं घोरनामान-मजयद्रणसङ्कुले। घोरासुरसंग्रामोपाख्यानं ग्रन्थगौरवभिया न लिखितम्। तथा॥ एवमेषा महादेवी तुलसी विश्वरूपिणी। त्वमप्याराधयस्वैनां विजयं प्राप्स्यसि ध्रुवम्। एतच्छ्रुत्वा तु वचनं महर्षेर्मधुसूदनः। जयाय शिरसा मालां प्रणिपत्य च सादरम्। जग्राह विटपं तस्याः सर्वकामफलप्रदम्। ततस्तं धर्ममास्थाय जगाम स्वगृहं प्रति। रोपयित्वा यथान्यायं पूजयामास राघवः। ततस्तस्याः प्रभावेण भगवान् रघुनन्दनः। यातुधानं महावीर्य्यं जितवान् रावणं रणे। ये चार्च्चयन्ति मनुजा रोपयन्ति यथाविधि। कीर्त्तयन्ति च ये लोकास्तेषां सिद्धिर्भविष्यति। सजलं तुलसीपत्रं शिरसा धारयन्ति ये। अर्घ्यं दत्त्वा नमस्कृत्य मुक्तिस्तेषां करे स्थिता। नदीतीरे श्मशाने च ऊषरे म्लेच्छसन्निधौ। एषु वै रोपणं कृत्वा याति कर्त्ता यमालयम्॥

अथ तुलसीरोपणविधिः। तत्रैव॥ गृहस्थैशान्यपुरतः खनित्वा तालमात्रकम्। पञ्चगव्यमयूराण्डं क्षिप्त्वा तत्र दिना-गमे। रोपयित्वा निशाभागे सूत्रेणावेष्ट्य सप्तधा। तन्मूले पिण्डिकां कृत्वा हस्तमात्रं सुवर्त्तुलाम्। ततश्चतुष्कोणवेद्यपि

कार्य्या। वारिधाराञ्च निक्षिप्य पूजयेन्मतिमान्नरः। गन्धपुष्पैस्तथा धूपैः प्रदीपैश्च घृतप्लुतैः। पायसैर्दधिभक्तैश्च पूजयित्वा यथाविधि। तुलस्यै नम इत्युक्त्वा दद्यादर्घ्यं विभूतये। शङ्खस्थितं तोयपूर्णं दूर्वाक्षतसचन्दनम्। कुशाग्रञ्च सपुष्पञ्च एतदर्घ्यमुदीरितम्॥

अथ तुलसीध्यानं तत्रैव॥ ध्यायेद्देवीं नवशशिमुखीं पक्वबिम्बाधरोष्ठीं विद्योतन्तीं कुचयुगभरानम्रकल्याङ्गयष्टिम्। ईषद्धास्योल्लसितवदनां चन्द्रसूर्य्याग्निनेत्रां श्वेताङ्गीं तामभयवरदां श्वेतपद्मासनस्थाम्॥

अथस्तुतिस्तत्रैव। ईश्वर उवाच॥ इन्द्राद्यैः सकलैर्देवै रर्चितां सुरसुन्दरीम्। भक्तानां वरदां वन्दे तुलसीं सौम्यरूपिणीम्॥१॥ नादविन्दुकलातीतां मुण्डमालां तपस्विनीं। वासुदेवरतां वन्दे तुलसीं सौम्यरूपिणीम्॥२॥ सर्वदेवमयीं देवीं वेदगर्भां मनोरमाम्। योगगम्यामहं वन्दे तुलसीं सौम्यरूपिणीम्॥३॥ सुरासुरशिरोरत्नां सर्वालङ्कारभूषिताम्। त्रिजगज्जननीं वन्दे तुलसीं सौम्यरूपिणीम्॥४॥ पद्महस्तां पद्ममुखीं पद्मस्थां पद्मलोचनाम्। लक्ष्मीरूपामहं वन्दे तुलसीं सौम्यरूपिणीम्॥५॥ संक्रान्त्याञ्चैव पर्व्वान्ते ग्रहणे चन्द्रसूर्य्ययोः। यः पठेत् संयतो भूत्वा सर्वसिद्धिमवाप्नुयात्। विना मन्त्रं विना जप्यं विना यज्ञं विना क्रियाम्। विना ध्यानं विना तीर्थं सर्वसिद्धिकरं भवेत्। इदं गुरुक्रतं स्तोत्रं यः पठेत् शृणुयादपि। मुक्तिः करतले तस्य मुक्तश्चैव न संशयः॥ इति मत्स्यसूक्ते षोडशपटले तुलसीस्तोत्रं समाप्तम्॥

प्रणाममन्त्रस्तु॥ श्रियं देहि यशो देहि कीर्त्तिमायुस्तथा सुखम्। बलं पुष्टिं तथा धर्मं तुलसि! त्वं प्रयच्छ मे॥ इत्यनेन तु मन्त्रेण नतिं कुर्य्यात् समाहितः॥

अथ मालादिधारणम्॥ भगवद्भक्तिविलासधृतम्॥ ततः कृष्णार्पिता माला धारयेत्तुलसीदलैः। पद्माक्षैस्तुलसीकाष्ठैः फलैर्धात्र्याश्च निर्मिताः। धारयेत्तुलसीकाष्ठभूषणानि च वैष्णवः। मस्तके कर्णयोर्बाह्वोः करयोश्च यथारुचि॥

अथ मालाधारणविधिः॥ स्कान्दे॥ सन्निवेद्यैव हरये तुलसीकाष्ठसम्भवाम्। मालां पश्चात् स्वयं धत्ते स वै भागवतोत्तमः॥ कृष्णानर्पितमालाधारणनिन्दापि तत्रैव॥ हरये नार्पयेद् यस्तु तुलसीकाष्ठसम्भवाम्। मालां धत्ते स्वयं मूढ़ः स याति नरकं ध्रुवम्। क्षालितां पञ्चगव्येन मूलमन्त्रेण मन्त्रिताम्। गायत्र्या चाष्टकृत्वो वै मन्त्रितां धूपयेच्च ताम्। विधिवत् परया भक्त्या सद्योजातेन पूजयेत्। तुलसीकाष्ठसम्भूते! माले! कृष्णजनप्रिये!। बिभर्मि त्वामहं कण्ठे कुरु मां कृष्णवल्लभम्। यस्मात्त्वं वल्लभा विष्णोर्नित्यं विष्णुजनप्रिया। तथा मां कुरु देवेशि! नित्यं विष्णुजनप्रियम्। माले! नाधातुरुद्दिष्टो नासि मां हरिवल्लभे!। भक्तेभ्यश्च समस्तेभ्यस्तेन माला निगद्यते। एवं स प्रार्थ्य विधिवन्मालां कृष्णगलेऽर्पिताम्। धारयेद्वैष्णवो यो वै स गच्छेद्वैष्णवं पदम्॥ मालाधारणस्य नित्यता॥ तत्रैव कार्त्तिकप्रसङ्गे॥ धात्रीफलकृतां मालां कण्ठस्थां यो वहेन्न हि। वैष्णवो न स मनुजो विष्णुपूजाकृतो यदि॥ गारुड़े॥ धारयन्ति न ये मालां हैतुकाः पापबुद्धयः। नरकान्न निवर्त्तन्ते दग्धाः कोपाग्निना हरेः॥ अतएव स्कन्दपुराणे॥ तत्रैव॥ न जह्यास्तुलसीमालां युक्तो यश्चार्चयेद्धरिम्। यद्यत् करोति तत्सर्वमनन्तफलदं भवेत्॥ नारदीये॥ ये कण्ठसक्ततुलसीनलिनाक्षमाला ये बाहुमूलपरिचिह्नितशङ्खचक्राः। ये वा ललाटफलके लसदूर्द्ध्वपुण्ड्रास्ते वैष्णवा भुवनमाशु पवित्रयन्ति॥ किञ्च॥ भुजयुगमपि चिह्नैरङ्कितो यस्य

विष्णोः परमपुरुषनाम्नां कीर्त्तनं यस्य वाचि। ऋजुतममपि पुण्ड्रं मस्तके यस्य कण्ठे सरसिजमणिमाला यस्य तस्यास्मि दासः॥ विष्णुधर्मोत्तरे श्रीभगवदुक्तौ॥ तुलसीकाष्ठमालाञ्च कण्ठस्थां वहते तु यः। अप्यसौ चाप्यनाचारो मानवो वै न संशयः॥ स्कन्दपुराणे॥ धात्रीफलकृता माला तुलसीकाष्ठसम्भवा। दृश्यते यस्य देहे तु स वै भागवतोत्तमः। तुलसीदलजां मालां कण्ठस्थां वहते तु यः। विष्णुवर्णाविशेषेण स नमस्यो दिवौकसाम्। तुलसीदलजा माला धात्रीफलकृतापि वा। ददाति पापिनां मुक्तिं किं पुनर्विष्णुसेविनाम्॥ तत्रैव॥ कार्त्तिकप्रसङ्गे॥ यः पुनस्तुलसीमालां कृत्वा कण्ठे जनार्द्दनम्। पूजयेत् पुण्यमाप्नोति प्रतिपुष्पं गवायुतम्। यावल्लुठति कण्ठस्था धात्रीमाला नरस्य हि। तावत्तस्य शरीरे तु प्रीत्या लुठति केशवः। स्पृशेच्च यानि लोमानि धात्रीमाला करे नृणाम्। तावद्वर्षसहस्राणि वसते केशवालये। यावद्दिनानि वहते धात्रीमालां कलौ नरः। तावद्युगसहस्राणि वैकुण्ठे वसतिर्भवेत्। मालायुग्मञ्च यो नित्यं तुलसीधात्रीसम्भवम्। वहते कण्ठदेशे च कल्पकोटिं दिवं वसेत्॥ गारुडे च। मार्कण्डेयोक्तौ॥ तुलसीदलजां मालां कृष्णोत्तीर्णां वहेत्तु यः। पदे पदेऽश्वमेधानां दशानां लभते फलम्। तुलसीकाष्ठसम्भूतां यो मालां वहते नरः। फलं यच्छति दैत्यारिः प्रत्यहं द्वारकोद्भवम्। वहते यो नरो भक्त्या तस्य वै नास्ति पातकम्। सदा प्रीतमनास्तस्य कृष्णो देवकिनन्दनः। तुलसीकाष्ठसम्भूतां यो मालां वहते नरः। प्रायश्चित्तं न तस्यास्ति नाशौचं तस्य विग्रहे। तुलसीकाष्ठसम्भूतां यो मालां वहते नरः। तुलसीकाष्ठसम्भूतां शिरसो बहुभूषणम्। बाह्वोः करे च मर्त्त्यस्य देहे तस्य सदा हरिः। तुलसीकाष्ठमालाभि-

भूषितः पुण्यमाचरेत् ॥ पितॄणां देवतानाञ्च कृतं कोटिगुणं कलौ । तुलसीकाष्ठमालान्तु प्रेतराजस्य दूतकाः । दृष्ट्वा नश्यन्ति दूरेण वातोद्धूतं यथा दलम् । तुलसीकाष्ठमालाभिर्भूषितो भ्रमते यदि । दुःस्वप्नं दुर्निमित्तञ्च न भयं शस्त्रजं क्वचित् ॥

अथ वैष्णवप्रशंसा ॥ नारदपञ्चरात्रस्य प्रथमरात्रे नवमाध्याये ॥ अहो ! अनन्तदासानां माहात्म्यं परमाद्भुतम् । कुर्वन्त्यहैतुकीं भक्तिं ये च शश्वद्धरेः पदे । पद्मनाभपादपद्मे पद्मे पद्मेश्वरार्च्चिते । दिवानिशं ये ध्यायन्ति शेषादिसुरवन्दिते । आलापं यत्र संस्पर्शं पादा वसुमतीप्सितम् । वाञ्छन्त्येव हि तीर्थानि वसुवाचात्मशुद्धये । कृष्णमन्त्रोपासकानां शुद्धं पादोदकं स्मृतम् । पुनाति सर्वतीर्थानि वसुधामपि पार्वति ! । कृष्णमन्त्रो द्विजमुखाद् यस्य कर्णं प्रयाति च । तं वैष्णवं जगत्पूतं प्रवदन्ति पुराविदः । मन्त्रग्रहणमात्रेण नरो नारायणात्मकः । पुनाति लीलामात्रेण पुरुषाणां शतं शतम् । तज्जन्ममात्रात् पूतञ्च तत्पितॄणां शतं शतम् । प्रयाति सद्यो गोलोकं कर्म्मयोगात् प्रमुच्यते । मातामहादिकान् सप्त जन्ममात्रं समुद्धरेत् । यत्कन्यां प्रतिगृह्णाति तस्य सप्त च लीलया । मातरं तत्प्रसूं भार्य्यां पुत्राँश्च सप्तपूरुषम् । भ्रातरं भगिनीं कन्यां कृष्णभक्तः समुद्धरेत् । स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः । फलं स लेभे पूजानां व्रती सर्वव्रतेषु च । विष्णुमन्त्रं यो लभेच्च वैष्णवाच्च द्विजोत्तमात् । कोटिजन्मार्जितात् पापान्मुच्यते नात्र संशयः । कृष्णमन्त्रोपासकानां सद्यो दर्शनमात्रतः । शतजन्मार्जितात् पापान्मुच्यते नात्र संशयः । वैष्णवानां दर्शनेन स्पर्शनेन च पार्वति ! । सद्यः पूतो जलं वह्निर्जगत्पूतः समीरणः । दर्शनं वैष्णवानाञ्च देवा वाञ्छन्ति नित्यशः । न वैष्णवात् परः पूतो

विष्णुषु निखिलेषु च ॥ दशमाध्याये ब्रह्मवचनम् ॥ अहो! वैष्णव-सङ्गश्च क्षणमेव सुदुर्लभः। भवाब्धिघोरतरणं भुक्तिमुक्तिफल-प्रदम् ॥ इति वैष्णवप्रशंसा ॥

अथ दशावताराणामाविर्भावकालमाह स्वतन्त्रतन्त्रे ॥ चैत्रशुक्लप्रतिपदि रेवत्यां सोमवासरे। द्वादशनाड़िकामध्ये हरिर्मत्स्योऽभवद्दिवा। ज्यैष्ठशुक्लद्वितीयायां रोहिण्यां बुधवासरे। दिवाघटीचतुष्केऽभूद्धरिः कूर्मस्वरूपवान्। शुक्लायां सप्तमी माघे तत्राश्विन्याञ्च भास्करे। दिवाष्टघटिकामध्ये वराहोऽभूद्धरिः प्रभुः। राधे सितचतुर्दश्यां स्वात्याञ्च शनिवासरे। मध्याह्ने च ततो जज्ञे नृहरिः कमलापतिः। भाद्रे च द्वादशी शुक्ला श्रवणासंयुता भृगौ। दशपञ्चघटीमध्ये दिवाभूद्वामनो हरिः। तृतीया माधवे शुक्ला रोहिण्यां शनिवासरे। एकादशघटी-मध्ये नक्तं रामोऽभवद्धरिः। चैत्रशुक्लनवम्यान्तु सोमवारे पुनर्वसौ। पूर्वाह्णे चाभवद्रामः स्वयं देवो जनार्दनः। कृष्णाष्टम्यान्तु भाद्रस्य रोहिण्यां बुधवासरे। मध्यरात्रेऽभवद्विष्णुः कृष्णस्तु भगवान् स्वयम्। आषाढ़े शुक्लनवमी विशाखायाञ्च भास्करे। दिवानाड़ीषट्कमध्ये बौद्धोऽभूदंशजो हरिः। मार्गशुक्लतृतीयायां पूर्वाषाढ़र्क्षके शनौ। नक्तं त्रिघटिकामध्ये कल्किरूपोऽभूद्धरिः ॥ विष्णुपूजायां विशेषस्तन्त्रसारे सर्वो द्रष्टव्यो ग्रन्थ-गौरवभिया न लिखितः ॥

इति श्रीप्राणतोषिण्यां पञ्चमे भक्तिकाण्डे विष्णुपूजादि-कथनरूपः पञ्चमपरिच्छेदः ॥

अथ महाविद्यानिरूपणम् ॥ चामुण्डातन्त्रे ॥ काली तारा महाविद्या षोड़शी भुवनेश्वरी। भैरवी छिन्नमस्ता च विद्या धूमावती तथा। वगला सिद्धविद्या च मातङ्गी कमलात्मिका। एता दश महाविद्याः सिद्धविद्याः प्रकीर्त्तिताः। एता दश महा-

विद्या इत्यनेन सर्व्वासां महाविद्यात्वसिद्धौ काली तारा महा-विद्येति यन्महाविद्योपादानं तत् कालीतारयोर्महाविद्यात्वा-र्थम्। अतएव महाविद्या महापूर्व्वेति विश्वसारोक्तम्। अथ सिद्धविद्याः प्रकीर्त्तिता इत्यनेन सर्व्वासां सिद्धविद्यात्वे वगला सिद्धविद्या चेति कथमुक्तमिति चेत्तत्रापि झटिति सिद्धिप्रदा-नार्थमिति॥

अथ महाविद्यानां माहात्म्यम्॥ कुब्जिकातन्त्रे प्रथमपटले॥ कलौ कृष्णत्वमासाद्य शुक्लापि नीलरूपिणी। लीलया वाक्प्रदा चेति तेन नीलसरस्वती। तारकत्वात् सदा तारा तारिणी च प्रकीर्त्तिता। भुवनानां पालकत्वाद्भुवनेशी प्रकीर्त्तिता। सृष्टि-स्थितिकरी देवी भुवनेशी प्रकीर्त्तिता। श्रीदात्री च सदा विद्या श्रीविद्या च प्रकीर्त्तिता। निर्गुणा च महादेवी षोड़शी परिकीर्त्तिता। भैरवी दुःखसंहन्त्री यमदुःखविनाशिनी। काल-भैरवभार्य्या च भैरवी परिकीर्त्तिता। त्रिशक्तिकालदा देवि! छिन्ना चैव सुरेश्वरि!। त्रिगुणा च महादेवि! मोहिनी मो-चदा ध्रुवम्। धूमावती महामाया धूम्रासुरनिसूदनी। धूम-रूपा महादेवी चतुर्व्वर्गप्रदायिणी। जगन्माता जगद्धात्री जगता-मुपकारिणी। वकारे वारुणी देवी गकारे सिद्धिदा स्मृता। लकारे पृथिवी चैव चैतन्या या प्रकीर्त्तिता। मातङ्गी मदशी-लत्वान्मातङ्गासुरनाशिनी। सर्व्वापत्तारिणी देवी मातङ्गी परि-कीर्त्तिता। वैकुण्ठवासिनी देवी कमला च प्रकीर्त्तिता। पाता-लवासिनी देवी लक्ष्मीरूपा च सुन्दरी। एता दश महाविद्याः सिद्धविद्याः प्रकीर्त्तिताः। धर्म्मार्थमोक्षदा नित्यं चतुर्व्वर्गफल-प्रदाः। येन तेन प्रकारेण कलौ पूर्णफलप्रदाः। निर्द्धने कृपणे चैव विशेषात् परयोनिषु। पाषण्डे च शठे चैव निन्दके चैव निर्गुणे। अभक्तेषु च पुत्रेषु श्रद्धाहीने च सुन्दरि!। न प्रका-

ख्यमिदं भद्रे! शपथं मे ध्रुवं सदा। सर्वलक्षणयुक्ताय दद्याच्चैव महेश्वरि!। आसाञ्चैव समाना हि नास्ति त्रिभुवने ध्रुवम्। एकोच्चारणमात्रेण सर्वपापात् प्रमुच्यते। स्मरणेनैव देवेशि! मुच्यते भवबन्धनात्॥

अथ महाविद्यादीनां भैरवनिरूपणम्॥ तोड़लतन्त्रे प्रथम-पटले॥ शिव उवाच॥ शृणु चार्वङ्गि! सुभगे! कालिकायाश्च भैरवम्। महाकालं दक्षिणाया दक्षभागे प्रपूजयेत्। महाकालेन वै सार्द्धं दक्षिणा रमते सदा। तारायाः दक्षिणे भागे अक्षोभ्यं परिपूजयेत्। समुद्रमथने देवि! कालकूटं समुत्थितम्। सर्वे देवाः सदाराश्च महाक्षोभमवाप्नुयुः। क्षोभादिरहितं यस्मात् पीतं हलाहलं विषम्। अतएव महेशानि! अक्षोभ्यः परि-कीर्त्तितः। तेन सार्द्धं महामाया तारिणी रमते सदा। महात्रि-पुरसुन्दर्य्या दक्षिणे पूजयेत् शिवम्। पञ्चवक्त्रं त्रिनेत्रञ्च प्रतिवक्त्रे सुरेश्वरि!। तेन सार्द्धं महादेवी सदा कामकुतूहला। अतएव महेशानि! पञ्चमीति प्रकीर्त्तिता। श्रीमद्भुवनसुन्दर्य्या दक्षिणे त्र्यम्बकं यजेत्। स्वर्गे मर्त्त्ये च पाताले या चाद्या भुवनेश्वरी। एतया रमते तेन त्र्यम्बकस्तेन कथ्यते। सशक्तिश्च समाख्यातः सर्वतन्त्रप्रपूजितः। भैरव्या दक्षिणे भागे दक्षिणामूर्त्तिसंज्ञकम्। पूजयेत् परयत्नेन पञ्चवक्त्रं तमेव हि। छिन्नमस्तादक्षिणांशे कबन्धं पूजयेच्छिवम्। कबन्धपूजनाद्देवि! सर्व्वसिद्धीश्वरो भवेत्। धूमावती महाविद्या विधवारूपधारिणी। वगलाया दक्षभागे एकवक्त्रं प्रपूजयेत्। महारुद्रेति विख्यातं जगत्संहारकारकम्। मातङ्गीदक्षिणांशे च मतङ्गं पूजयेच्छिवम्। तमेव दक्षिणा-मूर्त्तिं जगदानन्दकारकम्। कमलाया दक्षिणांशे विष्णुरूपं सदाशिवम्। पूजयेत् परमेशानि! स सिद्धो नात्र संशयः। पूज-येदन्नपूर्णाया दक्षिणांशे च रूपकम्। महामोक्षप्रदं देवं दश-

वक्ता महेश्वरम्। दुर्गाया दक्षिणे देशे नारदं परिपूजयेत्। नकारः सृष्टिकर्त्ता च दकारः पालकः सदा। रेफः संहाररूपत्वान्नारदः परिकीर्त्तितः। अन्यासु सर्वविद्यासु ऋषिर्यः परिकीर्त्तितः। स एव तस्य भर्त्ता च दक्षभागे प्रपूजयेत्॥

महाविद्यादीनामाविर्भावकालनिरूपणाय महारात्र्यादिरुक्तः॥ स्वतन्त्रतन्त्रे यथा॥ फाल्गुने च महारात्रिः कृष्णैकादशिका तिथिः। ज्यैष्ठे या दशमी शुक्ला देवि! वारयुता भृगोः। रात्रावेकादशी चेत् स्यात् दिव्यरात्रिः प्रकीर्त्तिता। अमा भौमे संक्रमश्च कुलर्क्षग्रहणं यदि। भावरात्रिस्तु सम्प्रोक्ता भाग्यादेव तु लभ्यते। सिद्धरात्रिरष्टमी स्याच्चैत्रसंक्रमणान्विता। तृतीया माधवे शुक्ला कुलर्क्षे दारुणा तिथिः। दीपोत्सवचतुर्दश्याममया योग एव च। कालरात्रिर्महेशानि! तारा काली प्रियङ्करी। कृष्णजन्माष्टमी देवि! मोहरात्रिः प्रकीर्त्तिता। चैत्रशुक्लनवम्यान्तु क्रोधरात्रिः प्रकीर्त्तिता। घोररात्रिर्मार्गशीर्षे कृष्णाष्टम्यां महेश्वरि!। चतुर्दशी भौमयुता मकारेण समन्विता। कुलऋक्षसमायुक्ता वीररात्रिः प्रकीर्त्तिता। विद्योत्पत्तिस्तु नारदपञ्चरात्रे तृतीयरात्रे तृतीयाध्याये॥ ब्रह्मोवाच॥ दक्षगेहे समुद्भूता या सती लोकविश्रुता। कुपित्वा दक्षराजर्षिं सती त्यक्त्वा कलेवरम्। अनुगृह्य च मेनायां जाता तस्यान्तु सा तदा। कालीनाम्नेति विख्याता सर्वशास्त्रे प्रतिष्ठिता॥ स्वतन्त्रतन्त्रे॥ महारात्रिदिनेऽवन्त्यां नगर्य्यां जातमेव तत्। कालीरूपं महेशानि! साक्षात् कैवल्यदायकम्॥ एतस्या माहात्म्यमुक्तं नारदपञ्चरात्रे॥ विश्वामित्रो मुनिश्रेष्ठ आराध्य कमलासनम्। नावाप ब्राह्मणत्वं हि ततो विष्णुं जगाम सः। तस्मादपि न चावाप ब्रह्मत्वं क्षत्रियोत्तमः। एवं सर्वान् सुरान् गत्वा आराध्य च मुहु-

मुहुः। वृहस्पतेरुपादेशादाराध्य वृषभध्वजम्। महेश्वदर्शनं लब्ध्वा कृतकृत्योऽभवत्तदा। देवदेव! महादेव! भगवंस्त्वं कृपामय!। ब्राह्मणत्वं देहि मह्यं यदि तुष्टोऽसि मे वरम्॥ ईश्वर उवाच॥ एकाक्षरी महाविद्या कालिकायाः सुदुर्लभा। जपं कुरु महाबाहो! ततः प्राप्स्यसि विप्रताम्। एवमुक्त्वा महादेवोऽप्यन्तर्द्धानं जगाम सः। विश्वामित्रोऽपि विधिना आराध्य तां जगन्मयीम्। मन्त्रसिद्धिं न चावाप क्रोधेन च शशाप ताम्। अनाराध्या भवेति त्वं आगम्य तु ततः शिवम्। निर्भर्त्स्य बहुधा तन्तु इदमाह महेश्वरः॥ ईश्वर उवाच॥ किमर्थं शप्तवान् विद्यां शृणु यत्नेन पार्थिव!। रेफारूढककारेण सिद्धिमाप्स्यसि नान्यथा॥ ब्रह्मोवाच॥ अन्तर्द्धानं गतः शम्भुर्विश्वामित्रोऽपि नारद!। तथा विधानं जप्त्वा तु यदुक्तं शम्भुना पुरा। साक्षाद्बभूव सा काली सह रुद्रेण तत्क्षणात्॥ देव्युवाच॥ वरं वरय राजेन्द्र! ददामि ते वरं शिवम्। यदिच्छसि प्रदास्यामि सत्यं सत्यं न संशयः॥ विश्वामित्र उवाच॥ आराधिता मया सर्वे ब्रह्माद्या देवतागणाः। विप्रत्वं केन मे देवि! न दत्तं त्वं प्रदेहि मे। श्रुत्वा वाक्यं नृपस्याशु सा देवी स्वामिनो मुखम्। निरीक्ष्येङ्गितभावेन सङ्केतेन उवाच तम्। महादेवोऽपि तज्ज्ञात्वा प्रीतिभावेन शङ्करः। हस्ताभ्यामपि चालिङ्ग्य विप्रत्वं प्रददौ ततः। तत्क्षणादपि राजासौ विप्रत्वं गतवान् ध्रुवम्। सर्वशास्त्रैकनिपुणः सर्वशास्त्रैकपारगः॥ इति कालीमाहात्म्यम्॥

नारदपञ्चरात्रस्य तृतीयरात्रं द्विविधं दृश्यते। तयोरेकस्मिन् विद्योत्पत्तिशिवलिङ्गाभिर्भावप्रभृति द्वाविंशत्यध्यायात्मके वर्त्तते तस्मात् विद्योत्पत्त्याद्याहृत्य लिखितम्। अपरस्मिंस्तु पञ्चादशाध्यायात्मके प्रातःकृत्यादिपूजाविध्यन्तकर्माणि सन्ति

किन्तु क्रमदीपिकावचनान्येव प्रायेणेति तत्र तत्र सन्देहः॥ नारदपञ्चरात्रे तृतीयरात्रे द्वितीयाध्याये॥ यथा॥ दक्षगेहे च योत्पन्ना सतीनाम्नेति कीर्त्तिता। कैवल्यदायिनी यस्मात्तस्मादेकजटा स्मृता। तारकत्वात् सदा तारा लीलया वाक्प्रदा यतः। नीलसरस्वती प्रोक्ता उग्रत्वादुग्रतारिणी। उग्रापत्तारिणी यस्मादुग्रतारा प्रकीर्त्तिता॥ स्वतन्त्रतन्त्रे॥ कालरात्रिदिने प्राप्ते निशायां मध्यभागके। उग्रापत्तारणार्थन्तु उग्रतारा स्वयं कला। मेरोः पश्चिमकूले तु चोलनाख्यो ह्रदो महान्। तत्र जज्ञे स्वयं देवि! माता नीलसरस्वती। तत्र जप्यन्तु प्रजपंस्त्रियुगं समवर्त्तत। ममोर्द्ध्ववक्त्रान्निःसृत्य तेजोराशिर्विनिर्गतः। ह्रदे चोले निपत्यैव नीलवर्णाभवत्तदा। ह्रदस्य चोत्तरे भागे ऋषिरेको महोत्तमः। मदंशोऽक्षोभ्यनामासौ तदाराधनतत्परः। कूर्चवीजस्वरूपा सा प्रत्यालीढ़पदाभवत्॥ नारदपञ्चरात्रे॥ सप्तकोटिर्महाविद्या उपविद्याश्च तादृशः। तासां मूर्त्तिर्मुनिश्रेष्ठ! संख्यातुं नैव शक्यते। एकदा हरिरैशान्यां नैर्ऋत्यामागतः किल। नीलाचलशरीरे स आगतो गरुड़ध्वजः। तत्रस्थाश्च महात्मानः सिद्धाः परमतेजसः। ऊचुर्देवं जगन्नाथं तं वारयितुमीश्वरम्। सर्व्वेषामादिभूतेयं विश्वरूपा सनातनी। तस्या उपरिदेशेन गन्तुमर्हसि केशव!। त्वञ्च सर्व्वगुरुः साक्षी सर्व्वेषाञ्च सभापतिः। न हि गन्तासि भगवन्! पथान्येन गतिं कुरु। न गृह्णन् तद्वचस्तेषां जगाम मधुसूदनः। जगाम गरुड़स्तेन पथा तेनैव केशवः। स्तम्भीभूतस्तदा विष्णुर्गन्तुं तस्मान्न शक्नुवन्। ततो भूमिमुपागम्य त्वभूदष्टभुजो हरिः। अवष्टभ्य गिरिं नीलं सर्व्वप्राणेन विश्वभृत्। तमुत्थातुमशक्तो वै भ्रान्तोऽभूज्जगदीश्वरः! भ्राम्यमाणे हृषीकेशे सहस्रद्वयवत्सरम्। ततः क्रुद्धा भगवती वामहस्तेन चे-

श्वरी। सिद्धसूत्रेण संवेष्ट्य चिक्षेप लवणाम्भसि। अपश्यत् केशवं तोयपतितं प्राह विस्मितः। किमिदं कथ्यतां शीघ्रं विस्मयं मम नाशय। उवाच विष्णुरादौ मामुद्धारं कुरु सत्वरम्। अवष्टभ्य तदा विष्णुमुद्धर्त्तुमुद्यतो विधिः। सोऽपि बद्धो महातेजा ब्रह्मा कमलसम्भवः। एवमिन्द्रादयः सर्वे बद्धत्वं समुपागताः। अथ काले व्यतीते तु जीवो देवगुरुर्वरः। बभ्राम लोकांस्त्रीन् सर्वान्नापश्यद्देवताः क्वचित्। शून्यां सर्वां पुरीं दृष्ट्वा जगाम शङ्करालयम्। सम्पूर्णां वसतिं तत्र दृष्ट्वा हृष्टोऽभवद्गुरुः। स्तुतिभिर्नुतिभिर्देवं सम्प्रसाद्य महेश्वरम्। पपात दण्डवद्भूमौ दृष्ट्वा देवं सनातनम्। उवाच देवदेवेशं प्रणिपत्य कृताञ्जलिः॥ बृहस्पतिरुवाच॥ क्व गतो भगवन्! ब्रह्मा विष्ण्वेन्द्रादयः सुराः। असुराणां भयेनैव सन्त्रस्तं मम मानसम्॥ ईश्वर उवाच॥ अवमन्ये च कामाख्यां विष्णुब्रह्मादयः सुराः। दुःखमापुः सदोद्विग्ना लवणाम्भसि पीड़िताः॥ बृहस्पतिरुवाच॥ तेषामेव प्रतीकारं चिन्तय त्वं जगत्पते!। क्षिप्रप्रहारिणो दैत्याः शून्या देवपुरी शिव!॥ ईश्वर उवाच॥ एष गच्छामि वै क्षिप्रं समुद्धर्त्तुं सुरान् किल। एष गच्छ मया सार्द्धं लवणाम्भसि मानद!। इत्युक्त्वा जग्मतुस्तौ तु लवणाम्भोनिधेस्तटम्। समर्थोऽपि शिवस्तेषामुद्धर्त्तुं जगदीश्वरः। मर्य्यादार्थं हरेस्तेषां कामाख्याकवचं शिवः। सुरसंख्यं वपुः कृत्वा धारयामास कण्ठतः। प्रसार्य्य वामहस्तञ्च सुरान् संवेष्ट्य शङ्करः। उत्थापयामास तदा देवान् देवो जगत्पतिः। ततो देवगणाः सर्वे वेपमाना इव द्रुमाः। पेतुर्भूमौ महादेवं प्रणेमुस्ते मुहुर्मुहुः। तत आश्वास्य भगवानुवाच तान् यथायथम्। प्रसादयत कामाख्यां जगन्मातरमम्बिकाम्। गत्वा विष्णुमुखस्तत्र कामाख्यां परमेश्वरीम्। ननाम तुष्टाव तदा नतिभिः स्तुतिभिः पराम्। साश्रुकण्ठो हृषीकेशो

वेपमानश्च भक्तिमान् । सा क्रुद्धा दूरतः प्राह जगद्योनिः सनातनी । दुर्बुद्धे ! मामवज्ञाय किं कृतं गौरवं त्वया । किमिच्छसि वरं मत्तो व्रियतां यत्तवेप्सितम् ॥ विष्णुरुवाच ॥ तव चैत्रे महापुण्ये अष्टदिक्षु सशक्तिकः । तिष्ठाम्यहर्निशं मातस्तवाज्ञावशगः सदा । इति श्रुत्वा वचो विष्णोर्जगन्माता जगन्मयी । तथेत्युक्त्वा च वरदा चकारानुग्रहं हरौ । इति ते कथितं पुत्र ! किञ्चिन्माहात्म्यमुत्तमम् । रहस्यं तारिणीदेव्या न समर्थोऽस्मि विस्तरात् ॥ इति तारामाहात्म्यम् ॥

तत्रैव पञ्चमाध्याये ॥ ब्रह्मोवाच ॥ भूयः शृणु मुनिश्रेष्ठ ! रहस्यं परमाद्भुतम् । येन काली महामाया सुन्दरीत्वमुपागता । कैलासशिखरे रम्ये वसमाने च शङ्करे । इन्द्रश्च प्रेषयामास सर्वाश्चाप्सरसो मुदा । आगतास्ता महादेवं तुष्टुवुस्तं महेश्वरम् ॥ ब्रह्मोवाच ॥ इत्येवं वचनं श्रुत्वा तासां स वृषभध्वजः । आभाष्य श्लक्ष्णया वाचा करुणामृतया ततः ॥ ईश्वर उवाच ॥ पुरुषस्यातिथिर्ज्ञेयः पुरुषो नात्र संशयः । स्त्रीणां स्त्री चातिथिर्ज्ञेया तस्माद्गच्छत कालिकाम् । इत्युक्त्वा तत्पुरं रम्यं विवेश परमेश्वरः । उवाच कालीं भगवानीश्वरीं परमेश्वरीम् । ता अप्यवापुः परमां प्रीतिं परमदुर्लभाम् ॥ षष्ठाध्याये ॥ ततो देवी महाकाली चिन्तयित्वा मुहुर्मुहुः । एतद्रूपमपाहाय शुद्धगौरी भवाम्यहम् । यस्मात् कालीति कालीति महादेवः समाह्वयेत् । इति सञ्चिन्त्य मनसा अन्तर्धानं गता परा । महादेवोऽपि कालेन गतो ह्यस्तः पुरं शिवः । नापश्यच्च तदा कालीं तस्थौ तस्मिन् पुरे हरः । अथ काले कदाचित्तु आगतस्तत्र नारदः । प्रणम्य शिरसा देवं महादेवं महेश्वरम् । कृताञ्जलिपुटस्तस्थौ ततो देवाग्रतो मुनिः । महादेवोऽपि वामेन पाणिना मुनिसत्तमम् । उपस्पृश्य समाश्वास्य चक्रे पुण्यवतीं कथाम् । कालेन कियता

तत्र कथान्ते मुनिसत्तमः। उवाच सादरं वाक्यं प्रणम्य जगदीश्वरम्॥ नारद उवाच॥ क्व गता त्वां परित्यज्य काली कालविनाशिनी। प्रत्युवाच महादेवस्तं मुनिं नारदं ततः। अन्तर्द्धानं गता देवी मां हित्वा मुनिसत्तम!॥ ब्रह्मोवाच॥ इति श्रुत्वा वचस्तस्य नारदो हर्षमागतः। विवादसमयश्चायं महाकाल्याश्च शूलिनः। इति सञ्चिन्त्य मनसा ध्यानमाश्रित्य नारदः। ददर्श तां महाकालीं ध्यानचक्षुःसमाश्रितः। सुमेरोरुत्तरे पार्श्वे स्थिता सा परमेश्वरी। प्रणम्य परया भक्त्या उपतस्थे जगन्मयीम्। नारदस्तुत्यनन्तरम्॥ देव्युवाच॥ विदूरेण मदोयेन किं करोति महेश्वरः। तस्यैव कुशलं सर्वं कथयस्व मुनीश्वर!॥ नारद उवाच॥ उद्योगं परमं चक्रे विवाहार्थं महेश्वरः। देवदेवो गिरिसुते! तं निवारय सुव्रते!॥ ब्रह्मोवाच॥ इति श्रुत्वा वचस्तस्य सक्रोधा परमेश्वरी। जाज्वल्यमाना रक्ताक्षी रूपमन्यद्दधौ परा। यन्नास्ति त्रिषु लोकेषु सौन्दर्य्यमपि कुत्रचित्। दधौ तद्रूपमतुलं सर्वेषामधिकं परम्। यत्रास्ते भगवान् देवो देवदेवो महेश्वरः। समागता क्षणेनैव ततः सा परमेश्वरी। ददर्श हृदये शम्भोः स्वच्छायां परमेश्वरी। उवाच सा महादेवं क्रोधेन महता वृता। कृतघ्नस्त्वं महादेव! मया यः समयः कृतः। तत् त्वं लङ्घितवान् देव! किमर्थं परमेश्वर!॥ कृत्वा विवाहं हृदये स्थानं दत्तं मया शिव!। एतच्छ्रुत्वा वचस्तस्याः प्रहस्य परमेश्वरः। उवाच स प्रियां साध्वीं प्रेमगद्गदया गिरा॥ ईश्वर उवाच॥ नाहं कृतघ्नः कल्याणि! नाहं समयलङ्घकः। हृदये मे त्वया दृष्टा स्वच्छाया नात्र संशयः। ध्यानं कुरु महाभागे! पश्य त्वं ज्ञानचक्षुषा। स्वच्छाया सैव देवेशि; ततः सुस्थाभवत् परा। उवाच परमेशानं देवदेवं महेश्वरम्। परेण प्रेमभावेण जगदीशं जगन्मयम्।

का छाया हृदि दृष्टा सा तन्मे ब्रूहि जगत्पते!॥ ब्रह्मोवाच॥ इति श्रुत्वा महादेवः कालिकावचनं परम्। उवाच प्रेमभावेण देवदेवः सनातनः॥ ईश्वर उवाच॥ यस्मात्त्रिभुवने रूपं श्रेष्ठं कृतवती शिवे!। तस्मात् स्वर्गे च मर्त्त्ये च पातालेऽन्यत्र पार्वति!। सुन्दरी पञ्चमी श्रीश्च ख्याता त्रिपुरसुन्दरी। सदा षोड़शवर्षीया विख्याता षोड़शी ततः। यां छायां हृदये मेऽद्य दृष्ट्वा भीता सुरेश्वरि! यस्मात् सा त्रिषु लोकेषु ख्याता त्रिपुर-भैरवी। गावस्था भगवत्याश्च सुस्थचित्ता कृपामयी। ततस्तां भुवनेशानीं राजराजेश्वरीं विदुः। या चोग्रतारिणी प्रोक्ता या च दिक्करवासिनी। यैषा ललितकान्ताख्या ख्याता मङ्गल-चण्डिका। कौषिकी देवदूती च याश्चान्या मूर्त्तयः स्मृताः। या ख्याता भुवनेशानी तस्या भेदा ह्यनेकधा। त्रिपुटा जयदुर्गा च वनदुर्गा चिकण्टकी। कात्यायनी महिषघ्नी दुर्गा च वन-देवता। श्रीरामदेवता वज्रप्रस्तारिणी च शूलिनी। गृहदेवी गृहारूढ़ा मेधा राधा च कालिका। कथितास्त्र समासेन तासां भेदाश्च नारद!। विस्तारेण तु केनैव शक्यते गदितुं मुने!॥ इति षोड़शीमाहात्म्यं तद्भेदाश्च॥

तथा॥ सा काली जगतां माता पतिं प्राह सनातनी। आज्ञापय महादेव! रूपमन्यद्वराम्यहम्॥ ईश्वर उवाच॥ अधुनैव जगद्धात्रि! यद्रूपं कर्त्तुमिच्छसि। करिष्यामि च तत् सर्वं यत्र प्रीतिस्तवाचला॥ देव्युवाच॥ सर्वकर्त्तासि देवेश! तव शक्त्या जगत्पते!। किन्तु वाक्यं तव विभो! श्रूयतां पर-मेश्वर!। मर्य्यादां स्थापयिष्यामि तपः कृत्वा सुदुष्करम्। त्वत्प्रीतये महाभाग! प्रीतस्तु कुरु तन्मयि। गौरं वा रक्त-गौरं वा श्यामं शुक्लमथापि वा। यदन्यद्वा स्वरूपं मे तत् कुरुष्व जगत्पते!॥ ईश्वर उवाच॥ तवेच्छा या महाभागे! तां कुरुष्व

जगद्धिते। किन्तु ते विरहेणैव मम दुःखं सुदुष्करम् ॥ ब्रह्मोवाच ॥ सान्त्वयित्वा निजं कान्तं नदीं मन्दाकिनीं ययौ। दिव्यं वर्षशतं तत्र तपस्तेपे सुदुष्करम्। प्रत्यक्षं भगवान् तस्या देवेशो वृषभध्वजः। वामेन पाणिना साध्वीमुत्थाप्य परमेश्वरः। मार्जयित्वा प्रियादेहं निर्म्मलं कृतवान् हरः। मन्दाकिन्या जले रम्ये स्नापयामास पार्वतीम्। विद्युद्रूपाभवद्गौरी विद्युद्गौरीति विश्रुता। स्वाहागौरीति श्यामा च शुक्ला च रक्तगौरिका। अनन्तरूपिणी मूर्त्तिः कोटिकोटिस्वरूपिणी। शाकम्भर्य्यमला सूक्ष्मा षट्पदी भ्रामरी तथा। अनेकवर्णा गन्तव्यानन्तरूपा सनातनी ॥ इति विद्युद्गौर्य्याद्युत्पत्तिः ॥

दशमाध्याये ॥ स्वच्छायां हृदये शम्भो र्दृष्ट्वा देवी सनातनी। उवाच प्रेमभावेण देवदेवं निजं पतिम्। तवैव हृदये देव दृष्ट्वा छायां सुनिर्मलाम्। मदीयां देवदेवेश! विकलास्मि जगत्पते!। तद्देहे देहि मे स्थानं यदि स्नेहोऽस्ति मां प्रति। ईश्वर उवाच ॥ अधुनैव तदर्द्धाङ्गं हरिष्यामि वरानने!। ममापि प्रीतिरतुला अङ्गाहरणादानयोः। इत्युक्त्वात्मनश्चैव द्विधा कृत्वा तनुं हरः। आत्मनश्चैव पार्वत्याः कृतवानेकतो वपुः। ताभ्यां वै हरगौरीभ्यामर्द्धनारीश्वरो हरः। अवशिष्टौ तु यौ भागौ एकीकृत्य महेश्वरः। हस्ताभ्यां पिण्डवत् कृत्वा वैकुण्ठे क्षिप्तवान् पुरे। अद्यापि तेजोरूपश्च मूर्त्तिमान् वा महेश्वरः। वैकुण्ठवासिनः सर्वे दृष्टवस्ते तपोगुणैः॥ इति अर्द्धनारीश्वराद्युत्पत्तिः ॥

तत्रैव ॥ एकदा पार्वती देवी स्नानार्थं गतवत्यपि। सार्द्धं सहचरीभ्याञ्च मन्दाकिन्या जले मुदा। तत्र स्नात्वा कामवाणपीड़िता च जगन्मयी। बभूव कृष्णा सा देवी जगदानन्दकारिणी। अथ काले कदाचित्तु ताभ्यां पृष्टा महेश्वरी। देहि

भक्ष्यं क्षुधार्त्ताभ्यामावाभ्यां परमेश्वरि!। अत्र ते च प्रदास्यामि कुरुतां मे प्रतीक्षणम्। क्षणादूर्द्धं पुनः पृष्टा देहि भक्ष्यमथावयोः। प्रतीक्षणं प्रकुरुतां किञ्चित्कालं स्मरामि च। क्षणात् परमूचतुस्ते देहि भक्ष्यमथावयोः। माता त्वं सर्व्वजगतां मातरं प्रार्थयेच्छिशुम्। माता ददाति सर्व्वेषां भोजनाच्छादनादिकम्। अतस्त्वां प्रार्थये भक्ष्यं भक्षार्थं करुणामयि!। इति श्रुत्वा महेशानो मधुरं वचनं तयोः। गृहे गत्वा प्रदास्यामि इत्यूचे वचनं तयोः। ऊचतुस्ते पुनस्तां वै डाकिनी वर्णिनी परे। जया च विजया द्वे तु आवां क्षुत्परिपीड़िते। देहि भक्ष्यं जगन्मात! यथा तृप्ये कृपामयि!। तथा कुरु जगन्मातर्वरदे! देवि! वाञ्छितम्। इति श्रुत्वा वचः श्लक्ष्णं कृपामयी शुचिस्मिता। नखाग्रेण च चिच्छेद वामेन स्वशिरस्तदा। छिन्नमात्रन्तु तच्छीर्षं वामहस्ते पपात च। कण्ठाद्विनिःसृतं रक्तं त्रिधारेण तपोधन!। वामदक्षिणभेदेन ते धारे च विनिर्गते। सख्योमुखे तु संयोज्य मध्यधारा स्वकानने। एवं कृत्वा तु तास्तत्र गताः सर्व्वा यथागतम्। छिन्नं तस्या यतो मुण्डं छिन्नमस्ता ततः स्मृता॥

स्वतन्त्रतन्त्रे॥ छिन्नोत्पत्तिं प्रवक्ष्यामि तारा सैव च कालिका। पुरा कृतयुगे चैव कैलासे पर्व्वतोत्तमे। महामाया मया सार्द्धं महारतपरायणा। शुक्रोत्सारणकाले तु चण्डमूर्त्तिरभूत्तदा। तदा स्वदेहसम्भूते द्वे शक्ती सम्बभूवतुः। डाकिनी वर्णिनी नाम्ना सख्यौ ताभ्यां सहाम्बिका। पुष्पभद्रानदीकूलं जगाम चण्डनायिका। मध्याह्ने च क्षुधार्त्ते च चण्डिकां पृच्छतस्ततः। भक्षणं देहि तच्छ्रुत्वा विहस्य चण्डिका शुभा। चिच्छेद निजमूर्द्धानं निरीक्ष्य सकला दिशः। वामनासागलद्रक्तैर्डाकिनी पर्य्यतोषयत्। दक्षिणा वर्णिनीं देवा-

मपाययत शोणितम्। ग्रीवामूलान्नलद्रक्तैर्मस्तकं पर्य्यतोषयत्। एवं क्रीड़ां तदा कृत्वा सन्ध्यायां गृहमागता। आधाय निज-मूर्द्धानं कबन्धोपरि पार्व्वती। निजमूर्त्तिं समासाद्य या पुरा परिकीर्त्तिता। विवर्णां तान्तु दृष्ट्वाहं सहसा क्रोधमागतः। अन्यैः कृतमिदं मत्वा ततः शुश्राव तद्यथा। तदाभूत् क्रोधजो। देवि! मदंशः क्रोधभैरवः। वीररात्रिदिने जाता दिनान्ते परमा कला। सखीभ्यां सह देवेशि! नद्यां तस्यां प्रचण्डिका॥ इति छिन्नमस्ताद्युत्पत्तिः॥

नारदपञ्चरात्रे द्वादशाध्यायै॥ ब्रह्मोवाच॥ कैलासशिखरे रम्ये नानारत्नविभूषिते। उपविष्टा महादेवी शम्भोरङ्के प्रिया सती। उवाच प्रेमभावेण स्वपतिं परमेश्वरी॥ देव्युवाच॥ त्वत्प्रसा दाज्जगन्नाथ! न किञ्चिद्दुर्लभं मम। यतस्त्वं सर्व्वदोऽसीति सर्व्वेष प्रियकारकः। किन्त्वहं गन्तुमिच्छामि मातापित्रोः शुभालये॥ ईश्वर उवाच॥ प्रियं ममैतद्देवेशि! ममापि गमनं शिवे! नं सन्देहः किन्तु मे देवि! गन्तासि ह्यनिमन्त्रिता। इति श्रुत्वा वचः पत्युर्वाचमित्याह हृष्टवत्। गतायां मयि तत्रैव ततो गन्तासि शङ्कर!॥ ईश्वर उवाच॥ एतत्ते समयं भद्रे! कृतवा-नस्म्यहं शिवे!। गतायां त्वयि गच्छामि तवानयनहेतुना॥ ब्रह्मोवाच॥ एतस्मिन्नन्तरे मेना चकारोत्सवमुत्तमम्। क्रौञ्चमा-प्रेषयामास यत्र देवः सदाशिवः। वायुवेगरथेनैव शीघ्रमाया-द्गिरेः सुतः। यत्रास्ते भगवानीशः साक्षाद्ब्रह्मस्वरूपधृक्। दूरा-देव स मैनाको रथोपस्थादवातरत्। आगत्य भूमौ स क्रौञ्चो दण्डवन्निपपात ह। प्रेमवाष्पप्रपूर्णाक्षः पुलकोद्गमविग्रहः। वेप-मानो महाबाहुर्भक्तिनम्रात्मकन्धरः। ततो दृष्ट्वा महादेवः क्रौञ्चं तं धरणीगतम्। वामेन पाणिनोत्थाप्य समालिङ्ग्य गिरेः सुतम्। चुचुम्ब तस्य मूर्द्धानं नेत्राम्भः शिरसि क्षिपन्। स्वाङ्के निवेश-

थामास दृष्ट्वा कुशलमव्ययम्। उवाच श्लक्ष्णया वाचा किमर्थमिह चागतः॥ क्रौञ्च उवाच॥ यदि तेऽस्ति कृपा नाथ! मयि दासे जगत्पते!। हिमालयसुतां गौरीं तत्र नेतुं समुत्सहे। उषित्वा कतिचिन्मासानागमिष्यति निश्चितम्। तदाज्ञया जगन्नाथ! समाधानं कुरु प्रभो!॥ ईश्वर उवाच॥ पार्वतीं याहि शीघ्रं त्वं तस्यै सर्वं निवेदय॥ ब्रह्मोवाच॥ श्रुत्वेदं वचनं क्रौञ्चस्तस्य देवस्य शूलिनः। अनुज्ञाप्य जगन्नाथं जगाम यत्र पार्वती। दूरं दृष्ट्वा धरण्यां स पपात गिरिनन्दनः। प्रणम्य शिरसा भूमौ स्तुत्वा च परमेश्वरीम्। स्पृष्ट्वा पादौ महाबाहुस्तस्थौ प्रविनयान्वितः। गिरिजापि तमादाय वामेन पाणिना ततः। तञ्चोपवेशयामास साङ्के पर्वतनन्दिनी। आशीर्भिस्तं समभ्यर्च्य पप्रच्छ कुशलं गिरेः॥ देव्युवाच॥ किमर्थमागतो वत्स! कथयस्व ममाग्रतः। चिराद्दृष्टोऽसि भद्रन्ते करिष्यामि यथोदितम्॥ क्रौञ्च उवाच॥ त्वां द्रष्टुमपि वाञ्छन्ति प्रजाः सर्वा जगद्धिते। हिमवान् गिरिराजश्च मेना च परमेश्वरि!। अनुज्ञाता महेशेन शीघ्रमायाहि पार्वति!। मया सार्द्धं पितुर्गेहे गत्वा तान् परिहर्षय। त्वद्दर्शनोत्सुकाः सर्वे कृपां कुरु जगद्धिते॥ देव्युवाच॥ क्षणं प्रतीक्ष भद्रन्ते पत्यौ यावन्निवेदये। इत्युक्त्वा सा जगामाशु यत्रास्ते वृषभध्वजः। प्रणम्य शिरसा भक्त्या उपतस्थे पतिव्रता। अनुज्ञां देहि मे नाथ! कृपां कुरु सदाशिव!। त्वत्प्रसादात् प्रपश्यामि पितृमातृमुखान् जनान्। त्वयानीता जगन्नाथ! आगमिष्यामि शङ्कर!॥ शङ्कर उवाच॥ शीघ्रं गच्छ वरारोहे! क्रौञ्चेन सह पार्वति!। न चेदागच्छसि शप्तव्या देवि! ताभ्यां न संशयः। पुनः प्रणम्य सा देवी देवदेवं महेश्वरम्। कृच्छ्रेण रथमारुह्य मैनाकेन समं ययौ। क्षणात्

पितृगृहं प्राप्य उत्तीर्य्य च रथात्ततः। जगाम वायुवेगेन क्रौञ्चेन सह सत्वरा। यत्रास्ते हिमवान् राजा मेना च वरवर्णिनी। पस्पर्श च तयोः पादौ तस्थौ मधुरभाषिणी। हिमवानपि शैलेन्द्रः समभ्यर्च्य च तां पराम्। कुशलानामयं पृष्ट्वा समालिङ्ग्य महामतिः। चिरं तस्थौ महातेजा धनं प्राप्येव दुर्गतः॥ गिरिराज उवाच॥ याहि शीघ्रं महाभागे! मेनकां परितोषय। इत्युक्ता सा गता पित्रा जगाम मातुरन्तिकम्। अभिवाद्य जगद्धात्री तस्थौ सा मातुरग्रतः। मेनका कुशलं पृष्ट्वा हर्षगद्गदभाषिणी। चिरेण दृष्टा सुभगा मात्रानन्दविवर्द्धिनी। एवं सुखोषिता तत्र पार्वती पितृमन्दिरे। उवास कतिचिन्मासान् तेषां हर्षं प्रवर्द्धय च। एतस्मिन्नन्तरे शम्भुः शङ्खमादाय देवराट्। सुलक्षणं सुलावण्यं चारुशुभ्रं मनोहरम्। शङ्खकारस्य वेशेन जगाम हिमवद्गृहम्। विक्रेतुकामः शङ्खानां छलेन त्रिपुरान्तकः। नारीभ्यः प्रददौ शङ्खं पार्वत्यै न ददाति च। पार्वती प्रणयाविष्टा कृत्वा तस्य च सम्मतिम्। दास्यामि ते महाभागे! चारुशङ्खं महेश्वरि!। मया यद्याचितं भद्रे! दातव्यं मूल्यमेव तत्॥ बाढ़मुक्ता जगद्धात्री परिधाय सुनिर्मलम्। दिव्यं मनोहरं शङ्खं चारुरूपं सुशोभनम्। शङ्खकारस्तदा प्राह मूल्यं देहि पतिव्रते!॥ देव्युवाच॥ पिता मे हिमवानद्रिर्भर्त्ता शम्भुः कृपामयः। पुत्रा मे गणनाथाद्या भ्राता मैनाक एव च। भ्रातृपुत्रः स्वयं क्रौञ्चो माता च मम मेनका। यत्प्रार्थयसि भद्रन्ते तद्दास्यामि न संशयः॥ शङ्खकार उवाच॥ पीड़ितः कामवाणेन त्वया सार्द्धं वरानने!। शीघ्रं व्रय मां भद्रे! नान्यत् पुण्यं ममेप्सितम्। इति श्रुत्वा वचस्तस्य शङ्खकारस्य पार्वती। श्रामेवं वचनं रूक्षं कः शक्नोति जगत्त्रये। गदितुं दुष्टभावोऽ-

सो शम्भुं चक्रे मनस्ततः। ततो ध्यानं समास्थाय धैर्य्यमालम्ब्य पार्वती। ददर्श चेष्टितं शम्भोः प्रहस्य परमेश्वरी। उवाच शङ्करं तं स्मितपूर्व्वानना ततः। अधुना गच्छ भद्रन्ते पूरयामि मनोरथम्। दिनान्तरे महाबाहो! विसृज्य सा जगद्धिता!। किरातवेशमास्थाय सखीभिः परिवारिता। जगाम यत्र देवेशः सन्ध्यां चक्रे महेश्वरः। नृत्यगीतैः कामवेशः पानभोजनविस्तरैः। उवास तत्र रमणवेशेन परमेश्वरी। एतस्मिनन्तरे शम्भुः सन्ध्यां कर्त्तुं जगाम सः। मानसाख्यसरस्तीरे गत्वा सन्ध्यां महेश्वरः। ददर्श तां सखीभिश्च कामवेशोज्ज्वलां पराम्। रक्तवर्णां रक्तवस्त्रपरीधानां सुनिर्म्मलाम्। तन्वीं विशालनयनां पीनोन्नतघटस्तनीम्। आगत्य सन्निधौ तस्याः प्राह देवः कृपामयः॥ ईश्वर उवाच॥ का त्वं शुभ्र! वरारोहे! किमर्थमिह वागता। मनोरथं ते दास्यामि सत्यं सत्यं कृपां कुरु॥ चाण्डाल्युवाच॥ चाण्डाल्यस्मि सुरश्रेष्ठ! तपोऽर्थमिह चागता। देवत्वमभिलाषं मे मा विघ्नं कुरु पण्डित!॥ ईश्वर उवाच॥ शिवोऽहं देवदेवेशि! तपस्विफलदायकः। अधुना पार्वतीतुल्यां करिष्ये नात्र संशयः। तदेव कामभावेन तत्कल्याणि! भजस्व मां। कथं विलम्बसे देवि! देवत्वं यदि वाञ्छसि॥ चाण्डाल्युवाच॥ तपोऽर्थमागता अत्र देवदेव! जगत्पते!। देवतात्वमवाप्तं वै मा विघ्नं कुरु धर्म्मराट्!॥ ईश्वर उवाच॥ भविष्यति न ते विघ्नं कायक्लेशेन किं तव। अधुना भव देवी त्वं मद्वाक्यं विफलं न हि। इत्युक्त्वा हस्तमादाय हस्तेन परमेश्वरः। उपविष्टो महादेवस्तस्या आसनमुत्तमम्। तया सार्द्धं महादेवः समाश्लिष्य च तां शिवः। चुचुम्बे वदनं तस्या मैथुनायोपचक्रमे। रममाणस्तया सार्द्धं कालेन कियता हरः। चण्डालवेशमगमत्ततः प्राह प्रिया सती। नाहं छलयितुं शक्या केनो-

पायेन कुत्रचित्। त्वं हि देवगुरुर्देव! देवदेव! जगत्पते!। एवं नानाप्रकारेण तयोस्तु रममाणयोः। अभवच्च तयोः प्रीतिरतुला मुनिसत्तम!। रत्यन्ते चोपविष्टौ तु ततः प्राह परं सती। जपं कुरु जगन्नाथ! देहि मे वाञ्छितं वरम्॥ ईश्वर उवाच॥ यस्मात्त्वचाण्डालवेशेन मामिवं समुपागता। तस्मान्मूर्त्तिरियं भद्रे! भविष्यति न संशयः। उच्छिष्टचाण्डाली ख्याता सर्वशास्त्रेषु गोपिता। ज्ञातायां तव पूजायां पूजान्ते परमेश्वरि!। साङ्गा भविष्यति शिवे! अन्यथा नैव पार्वति!। मातङ्गी नाम मूर्त्तिस्ते भविष्यति न संशयः। सिद्धविद्या महाविद्या तथा त्रिपुरसुन्दरी। त्रिपुरभैरवी देवी यथा च भुवनेश्वरी। काली तारा महाविद्या यथा ते उत्तमा तनुः। भैरवी छिन्नमस्ता च तथा धूमावती तनुः। वगला सिद्धविद्या च मातङ्गी ते तनूरियम्॥ ब्रह्मोवाच॥ इति दत्त्वा वरं तस्यै पुनः प्राह प्रियां सतीम्। गच्छ त्वं हिमवद्गेहे कैलासमहमेश्वरः। तत्र गत्वा महामायां समानय मदालयम्। इति श्रुत्वा वचः पत्युः प्रणिपत्य निजं पतिम्। अभिवाद्य ह्यनुज्ञाता गता सापि यथागतम्। मायया मोहितास्ते तु बुबुधुर्नहि किञ्चन॥ इति उच्छिष्टचाण्डाल्या उत्पत्तिः।

प्रकारान्तरन्तु स्वतन्त्रतन्त्रे॥ अथोच्छिष्टचाण्डालिनीं वक्ष्ये शृणुष्व सावधानतः। नारदः पृष्टवान् विष्णुं गीतज्ञानं वद प्रभो!। तमुवाच हरिः पूर्वं गतोऽहं शङ्करं प्रति। तत्र दृष्टं शिवं शान्तं मारीचगणसङ्कुलम्। अनेकरससंयुक्तं विविधास्वादनैर्युतम्। सामरस्यं तदा जातमुच्छिष्टं गलितं मुदा। अनेकगुणसम्पन्ना प्रत्युत्पन्ना कुमारिका। उच्छिष्टं देहि देहीति पार्वती शङ्करेण च। उभाभ्यां दत्तमुच्छिष्टं प्रसादं प्रीतिपूर्वकम्। शिवशक्ती ऊचतुस्तां कन्ये! त्वां प्रभजन्ति ये। जपहोमादिभिस्तेषां सिध्यन्ति च मखी

रथा:। तदा प्रभृति चोच्छिष्टमातङ्गीति निगद्यते॥ इत्युच्छिष्टचाण्डालिन्युत्पत्ति:॥

नारदपञ्चरात्रे त्रयोदशाध्याये॥ ब्रह्मोवाच॥ एकदा वसमानस्तु कैलासशिखरे हर:। अङ्कस्था गिरिजा तत्र पप्रच्छ वृषभध्वजम्। क्षुधया पीड्यमानास्मि देहि भोक्तुं यथोचितम्॥ ईश्वर उवाच॥ क्षणं प्रतीक्ष भद्रं ते दास्यामि भोजनं तत:। इत्युक्त्वा विररामाशु देवदेवो वृषध्वज:॥ देव्युवाच॥ देहि भक्ष्यं महादेव! क्षुधितास्मि जगत्पते!। विलम्बितुं न शक्नोमि पीड़ितास्मि महेश्वर!। इति श्रुत्वा प्रियावाक्यं पुन: प्राह कृपानिधि:। क्षणं प्रतीक्ष दास्यामि भक्षणं चाभिवाञ्छितम्। पुन: प्रतीक्ष्य सा देवी पुन: प्राह त्विदं वच:। देहि भक्ष्यं जगन्नाथ! न शक्नोमि विलम्बितुम्। इत्युक्त्वा पतिमादाय मुखे चिक्षेप सा तदा। क्षणेन तस्या देहात्तु धूमसङ्घो व्यजायत। ततो देहे समुत्पन्ने शम्भुस्तु निजमायया। उवाच परमेशान: स्वां प्रियां शृणु शोभने!। पश्य भद्रे! महाभागे! पुरुषो नास्ति मां विना। त्वदन्या वनिता नास्ति पश्य त्वं ज्ञानचक्षुषा। विधवासि कुरु त्यागं शङ्खं सिन्दूरमेव च। साधव्यं लक्षणं देवि! कुरु त्यागं पतिव्रते!। एषा मूर्त्तिस्तव परा विख्याता वगलामुखी। धूमव्याप्तशरीरात्तु ततो धूमावती स्मृता। एते मूर्त्ती तव परे सिद्धिविद्ये प्रकीर्त्तिते। यथोग्रतारिणी मूर्त्तिर्यथा काली पुरा सती। यथा च भुवनेशानी यथा त्रिपुरभैरवी। छिन्नमस्ता यथा मूर्त्तिस्तथा त्वं परमेश्वरि!॥ इति धूमावत्युत्पत्ति:॥

प्रकारान्तरेणोत्पत्तिस्तस्या: स्वतन्त्रतन्त्रे॥ दक्षप्रजापतेर्यज्ञे सर्वसंहारचञ्चला क्रुद्धा देहं विनिर्भिद्य ततो धूमोऽभवन्महान्। तस्माद्धूमावती जाता सर्वशत्रुविनाशिनी। काली काला

कालरात्रौ भौमवारे निशामुखे। प्राप्तेऽक्षयतृतीयायां जाता धूमावती शिवा ॥ इति प्रकारान्तरधूमावत्युत्पत्तिः ॥

स्वतन्त्रतन्त्रे ॥ अथ वक्ष्यामि देवेशि! वगलोत्पत्तिकारणम्। पुरा कृतयुगे देवि! वातक्षोभ उपस्थिते। चराचरविनाशाय विष्णुश्चिन्तापरायणः। तपस्यया च सन्तुष्टा महाश्रीत्रिपुराम्बिका। हरिद्राख्यं सरो दृष्ट्वा जलक्रीड़ापरायणा। महापीतह्रदस्यान्ते सौराष्ट्रे वगलाम्बिका। श्रीविद्यासम्भवं तेजो विजृम्भति इतस्ततः। चतुर्दशी भौमयुता मकारेण समन्विता। कुलऋक्षसमायुक्ता वीररात्रिः प्रकीर्त्तिता। तस्यामेवार्द्धरात्रौ तु पीतह्रदनिवासिनी। ब्रह्मास्त्रविद्या सञ्जाता त्रैलोक्यस्तम्भिनी परा। तत्तेजो विष्णुजं तेजो विद्यानुविद्ययोर्गतम् ॥ इति वगलामुख्युत्पत्तिः ॥

तत्रैव ॥ अथ मातङ्गिनीं वक्ष्ये क्रूरभूतभयङ्करीम्। पुरा कदम्बविपिने नानावृक्षसमाकुले। वश्यार्थं सर्वभूतानां मतङ्गो नामतो मुनिः। शतवर्षसहस्राणि तपोऽतप्यत सन्ततम्। तत्र तेजः समुत्पन्नं सुन्दरीनेत्रतः शुभे!। तेजोराशिरभूत्तत्र स्वयं श्रीकालिकाम्बिका। श्यामलं रूपमास्थाय राजमातङ्गिनी भवेत् ॥ इति मातङ्गिन्युत्पत्तिः ॥

स्वतन्त्रतन्त्रे ॥ अथ श्रीभुवनां वक्ष्ये त्रैलोक्योत्पत्तिमात्रिकाम्। पुरा ब्रह्मा जगत् स्रष्टुं तपोऽतप्यत दारुणम्। तपसा तस्य सन्तुष्टा शक्तिः सा परमेश्वरी। चैत्रशुक्लनवम्यान्तु उत्पन्ना तारिणी स्वयम्। क्रोधरात्रिः समाख्याता सर्वशक्तिमयी शिवा। क्षीरोदार्णवसम्भूता मथनादुदधेः पुरा। विष्णोर्वक्षःस्थलस्था च पद्मासनगता रमा। कृष्णाष्टम्यां भाद्रपदे कोलासुरनिकृन्तनी। तस्यां तिथौ समुत्पन्ना महामातङ्गिनी कला। फाल्गुनैकादशीयुक्ता भृगौ भौमे च या तिथिः। जाता तस्यां

महालक्ष्मीः सर्वसौभाग्यदायिनी॥ इति महालक्ष्म्युत्पत्तिः॥

तत्रैव॥ कृष्णाष्टम्यां मार्गशीर्षे घोररात्रिः प्रकीर्त्तिता। महाकालः समुत्पन्नस्तस्याञ्च भगवान् स्वयम्॥ इति महाकालोत्पत्तिः॥

ज्येष्ठशुक्लदशम्यान्तु वटुकोत्पत्तिरीरिता। मार्गशुक्लचतुर्दश्यां दन्तोत्पत्तिः प्रकीर्त्तिता। महामहिषमर्दिन्या महादुर्गाष्टमी स्मृता॥

अथ कालीप्रकरणम्॥ महानिर्वाणतन्त्रे चतुर्थोल्लासे सदाशिववाक्यम्॥ तव रूपं महाकालो जगत्संहारकारकः। महासंहारसमये कालः सर्वं ग्रसिष्यति। कलनात् सर्वभूतानां महाकालः प्रकीर्त्तितः। महाकालस्य कलनात् त्वमाद्या कालिका परा। कालसङ्कलनात् काली सर्वेषामादिरूपिणी। कालत्वादादिभूतत्वादाद्या कालीति गीयते। पुनः स्वरूपमासाद्य तमोरूपं निराकृति। वाचातीतं मनोऽगम्यं त्वमेकैवावशिष्यसे। साकारापि निराकारा मायया बहुरूपिणी। त्वं सर्वादिरनादिस्त्वं कर्त्री हर्त्री च पालिका। अतस्ते कथितं भद्रे! ब्रह्ममन्त्रेण दीक्षितः। यत् फलं समवाप्नोति तथैव फलसाधनात्॥ गुप्तसाधनतन्त्रे षष्ठपटले॥ आलीढ़ं कीदृशं नाथ! प्रत्यालीढ़न्तु कीदृशम्। कथं सा दक्षिणाकाली श्मशानालयवासिनी॥ इति देवीप्रश्नोत्तरम्॥ आलीढ़ं वामपादन्तु प्रत्यालीढ़न्तु दक्षिणम्। संहाररूपिणी काली जगन्मोहनकारिणी। वह्निरूपा महामाया सत्यं सत्यं न संशयः। अत एव महेशानि! श्मशानालयवासिनी। आलीढ़पादा सा देवी प्रत्यालीढ़ा क्षणे क्षणे। अनन्तरूपिणी श्यामा को वक्तुं शक्यते प्रिये!। अनन्तरूपिणी श्यामा चतुर्वर्गप्रदायिणी॥

पिच्छिलातन्त्रे द्वितीयपटले॥ ब्रह्मविष्णुशिवादीनां शिरोरत्नपदाम्बुजा। कलौ काली कलौ काली नान्यदेवः कलौ युगे। शान्त्यादावपि सा काली पूजनीया विशेषतः। कालिकापूजने श्रद्धा यदा सञ्जायते हृदि। न तदा ग्रहरोगाणां भयमस्ति कदाचन। सर्वेषां देवि! मन्त्राणां श्रेष्ठोऽत्र कालिकामनुः। यस्य ग्रहणमात्रेण जीवन्मुक्तोऽधमोऽपि च। कुब्जिकातन्त्रे प्रथमपटले॥ के मे गोत्रे समुत्पन्नाः कालीं साधितुमुद्यताः। तच्छ्रुत्वा पितरः सर्वे नृत्यन्ति हृष्टमानसाः। तथा॥ अदेया परमा विद्या कलौ पूर्णफलप्रदा। कालिका मोक्षदा देवि! कलौ शीघ्रफलप्रदा। गुरोर्मुखान्महाविद्यां गृह्णीयात् पापनाशिनीम्॥ तथा॥ धर्माधर्मादिकं यत्तु कुरुते साधकोत्तमः। तत् सर्वमनुगृह्णाति कालिकापूजने ध्रुवम्। सम्प्रदायविधानेन कर्त्तव्यञ्च महेश्वरि!। सम्प्रदायविहीनानां फलं न स्यात् सुरेश्वरि!॥ इत्याद्याप्रशंसा।

पिच्छिलातन्त्रे॥ कालीनिन्दाकरा लोके भविष्यन्ति गतायुषः। तेषां पुत्त्रकलत्राणां नाशोऽन्ते नरकं व्रजेत्॥ इत्याद्यानिन्दादोषः॥

तथा। एकादशपटले॥ अथ कालीमनुं वच्ये येन सर्वार्थसाधकः। सर्वसिद्धीश्वरो वीरः सर्वलोकप्रपूजितः। यस्य विज्ञानमात्रेण चतुर्वर्गफलं लभेत्। सर्वासु देवदेवीषु दक्षिणा प्रकृतिः प्रिये!। तस्या मन्त्रं प्रवच्यामि दुर्लभं भुवनत्रये। यक्षस्कन्दं समुद्धृत्य वह्निवामाक्षिसंयुतम्। इन्दुविन्दुसमायुक्तं कालीवीजमिदं स्मृतम्। प्राप्यैतं परमं गुह्यं सारात्सारं परात्परम्। चतुर्वर्गं लभेन्मन्त्री हेलया हरभाविनि!। त्रिगुणं चेन्महेशानि! वीजं सारतरं भवेत्। नैवास्याः सदृशी विद्या काचिदस्ति महेश्वरि!। शान्तिपुष्ट्यादिकमपि साधयेदनया-

चिरात्। महापदि महात्रासे महादारिद्र्यसङ्कटे। वैरिहस्ते व्याधिहस्ते महाघोरे भयङ्करे। राजादिभयमापन्ने राजचक्रे विशेषतः। उक्तं मन्त्रमिमं देवि! लक्षमात्रं समभ्यसेत्। देवक्रोधे भये भीमे ग्रहदोषे भयानके। प्रान्तरे भूमिसंस्थेषु दस्युभिर्वाथ संवृते। शान्तिकार्य्येषु सर्वत्र धननाशे उपस्थिते। स्वजनानान्तु विद्वेषे अयुतं प्रजपेन्मनुम्। जापिनं पाति सा काली भयेभ्यः स्कन्दवत् सदा। तस्मात् परमयत्नेन कालिकां भज सुन्दरि!। विना जपान्महाविद्या सिद्धिविद्यापि हानिदा। विना होमैर्न चैश्वर्य्यं न सिद्धिर्जपनं विना। पूजां विना न पूजास्ति सर्वत्र परमेश्वरि!॥ तथा। एतन्मन्त्रद्वयं देवि! न देयं प्राणसङ्कटे। स्नेहेन यदि तद्दद्यादयुतं जपमाचरेत्। ज्ञात्वा मन्त्रं महेशानि! सर्वशास्त्रार्थविद्भवेत्। कविर्वाग्मी भवेच्छूरः सर्वेषां प्रियदर्शनः। विख्यातिश्चापि लोकेषु प्राप्यान्ते मोक्षमाप्नुयात्॥ गुप्तसाधनतन्त्रे षष्ठपटले॥ शृणु देवि! प्रवक्ष्यामि दक्षिणाकल्पमुत्तमम्। यस्याः प्रसादमात्रेण भवाब्धौ न निमज्जति। स्वरान्तं वह्निसंयुक्तं वामनेत्रविभूषितम्। विन्दुनादकलायुक्तं मन्त्रं त्रैलोक्यमोहनम्॥ स्वरान्तं वकारः॥ भैरवोऽस्य ऋषिः प्रोक्त उष्णिक्छन्द उदाहृतम्। दक्षिणाकालिका प्रोक्ता देवता सर्वसिद्धिदा। मायावीजं वीजमस्याः कूर्चवीजन्तु शक्तिकम्। निजवीजं महेशानि! कीलकं सर्वमोहनम्। धर्म्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः॥ तथा। पूजायाः पूर्वदिवसे आदौ क्षौरादिकं चरेत्। हविष्यान्नं महेशानि! भोजनं वा निरामिषम्। ततः परस्मिन् दिवसे प्रातः स्नात्वा तु साधकः। नित्यपूजां समाप्यादौ देववत् शुद्धमानसः। गुरुर्वा गुरुपुत्रो वा गुरुपत्नी च सुव्रते!। आगमोक्तपूजने तु अधिकारी गुरुः स्वयम्। गुरोरभावे देवेशि! स्वयं

पूजादिकं चरेत्॥ वरदातन्त्रे दशमपटले तु यथा॥ तन्त्रोक्तानि स्वकल्पोक्तकर्म्माणि स्वयमाचरेत्। गुरुणा कारयेद्वापि पुत्रवत्या स्त्रिया तथा। अन्यथानुष्ठितं सर्वं भवत्येव निरर्थकम्॥ इत्यनेन विकल्पितं तदनेनैकवाक्यतया गुरोरभावे स्वयं करणमिति व्यवस्थितं मुख्यापेक्षया प्रतिनिधेः प्राधान्यं वचनबलात्॥ स्वयमसामर्थ्ये तु पुत्रवत्या स्त्रिया कारयितव्यमित्यपि सुतरामायातम्॥

अन्यद्वारा तान्त्रिकपूजादिकरणे दोषमाह॥ गुप्तसाधनतन्त्रे॥ एभिर्विना महेशानि! तान्त्रिकैर्दैशिकैर्यदि। तस्य पूजाफलं सर्वं ग्रस्यते यक्षराक्षसैः। अतएव महेशानि! गुरुः कर्त्ता विधीयते। ब्रह्मरूपो गुरुः साक्षाद् यदि पूजादिकं चरेत्। तत्तत् सर्वं महेशानि! शतकोटिगुणं भवेत्। अथ वा परमेशानि! स्वयं पूजादिकं चरेत्। स्वयं पूजादिकं कृत्वा पूजाद्रव्यादिकञ्च यत्। तत् सर्वं परमेशानि! गुरोरग्रे निवेदयेत्। गुरौ दत्तं महेशानि! सर्वं कोटिगुणं भवेत्॥ गुरुपत्न्या पूजादिकरणे होमादि नास्ति तदुक्तं तत्रैव॥ गुरुपत्नी महेशानि! यदि पूजादिकं चरेत्। बलिदानादिकं कार्य्यं तत्र होमं विवर्ज्जयेत्। होमीयद्रव्यमानीय देव्यग्रे स्थापयेद्-बुधः। मूलमन्त्रं समुच्चार्य्य महादेव्यै निवेदयेत्। तेन होमफलं जातं न वह्नौ होमयेद्बुधः॥ तथा। गुरुणा यत् कृतं देवि! तत् सर्वमक्षयं भवेत्। ऋत्विक्पुत्रादयो देवि! स्मृत्युक्ता बहवः प्रिये!। तन्त्रोक्ते परमेशानि! पूजादौ नैव कारयेत्। पुरोहितं समानीय यदि पूजादि कारयेत्। तस्य सर्वार्थहानिः स्यात् क्रुद्धा भवति कालिका। पूजाकाले महेशानि! नान्यपक्षं विलोकयेत्। दृष्टपूजादिकं सर्वं यः कुर्य्याज्जनसन्निधौ। तस्य सर्वार्थहानिः स्यात् क्रुद्धा भवति कालिका। वरं पूजा

न कर्त्तव्या न कुर्य्यादन्यसन्निधौ। अन्यसन्निहिते देवि! यदि पूजापरो भवेत्। विष्णुतन्त्रोक्तपूजादि तत्तन्मुद्रां प्रदर्शयेत्। तेन पूजादिकं जातं न च व्यक्तं कदाचन॥ वरदातन्त्रे॥ विशेषकर्म गोप्तव्यं मन्त्रवत् परमेश्वरि!॥ दीपान्विताद्पूजासु परमोत्सवमाचरेत्। भवानीप्रीतये सर्वं कर्म कुर्य्यात् प्रसन्नधीः॥ तत्र भक्तिः सदा कार्य्या यस्य या इष्टदेवता। तत्राभक्तिर्महा-दुःखदायिनी कुष्ठकारिणी। निजदेवीं परित्यज्य तथैव च निजं गुरुम्। योऽन्यत्र भक्तिमान् देवि! तस्य सर्वं विनश्यति। नान्यनिन्दा प्रकर्त्तव्या कदाचिदपि साधकैः। एकं ब्रह्मैवा-द्वितीयं सर्वत्र कथितं मया। उपाधिभावभेदेन नानात्वं भजते सति!। एकं पूजयते यस्तु सर्वानर्चयतिस्म सः॥

अथ पूजा सा तु त्रिविधा मानसान्तर्य्यागात्मिका वाह्या च। यथा मुण्डमालातन्त्रे पञ्चमपटले॥ महासिद्धिकरी पूजा मानसी मुक्तिदायिनी। अन्तर्य्यागात्मिका सर्वजीवत्वपरि-णाशिनी। वाह्यपूजा राजसी च सर्वसौभाग्यदायिनी। भुक्ति-मुक्तिप्रदा चैव सर्वापत्परिणाशिनी। सर्वदोषक्षयकरी सर्व-शत्रुनिपातिनी। सर्वरोगक्षयकरी सर्वबन्धनमोचनी। न वीराणां पशूनाञ्च वाह्यपूजाधमा प्रिये!। केवलानाञ्च दिव्यानां वाह्यपूजाधमा स्मृता॥ तोड़लतन्त्रे तृतीयपटले॥ सूत्रा-कारेण देवेशि! पूजाविधिरिहोच्यते। स्वस्ति वाच्य च सङ्कल्प्य घटं संस्थाप्य यत्नतः। मन्त्रेणाचमनं कार्य्यं सामान्यार्घ्यं ततो न्यसेत्। तज्जलैर्द्वारमभ्युक्ष्य द्वारपूजां समाचरेत्। त्रिविधं विघ्नमुत्सार्य्य भूतापसरणं ततः। आसनञ्च समभ्यर्च्च्य गुरुदेवं नमेत् सुधीः। करशुद्धिञ्च तालञ्च त्रयं दिग्बन्धनं ततः। वह्निना वेष्टनं कार्य्यं भूतशुद्धिमथाचरेत्। मातृकायाः षड़ङ्गञ्च कुर्य्यादन्तरमातृकाम्। मातृकाध्यानमाचर्य्य वाह्ये तु मातृकां

न्यसेत्। पीठन्यासं ततः कृत्वा प्राणायामं समाचरेत्। ऋष्यादिकं कराङ्गञ्च वर्णन्यासं समाचरेत्। षोढ़ा न्यासं ततो देवि! व्यापकं तदनन्तरम्। एवं समाहितमनास्तत्त्वन्यासं समाचरेत्। बीजन्यासं ततो देवि! व्यापकं विन्यसेत् सुधीः। मूलेन सप्तधा न्यासं मानसैः पूजनं चरेत्। विशेषार्घ्यं पीठपूजां पुनर्ध्यानं सनेत्रकम्। मुद्रादिदर्शनं कार्य्यमावाहनषड़ङ्गकम्। धेन्वादिकां ततः प्राणप्रतिष्ठां मूलपूजनम्। आज्ञाप्रार्थनमङ्गानि काल्यादींश्च प्रपूजयेत्। ब्राह्म्यादीरसिताङ्गादीन् महाकालं प्रपूजयेत्। खड्गादीन् गुरुपङ्क्तिञ्च पुनर्देवीं प्रपूजयेत्। बलिदानं ततो होमं प्राणायामं ततो जपम्। जपं समर्पयेद्धोमान् प्राणायामं ततश्चरेत्। स्तुतिञ्च कवचं स्मृत्वा चाष्टाङ्गं प्रणमेत् सुधीः। शिवोऽहमिति सञ्चिन्त्य संहारेण विसर्जयेत्। ऐशान्यां मण्डलं कृत्वा चाण्डाल्युच्छिष्टपूर्विका। अर्घ्यं सन्धार्य्य शिरसि चन्दनन्तु ललाटके। नैवेद्यं किञ्चित् स्वीकृत्य विहरेच्च निजेच्छया॥

महाकालध्यानं निरुत्तरतन्त्रे तृतीयपटले॥ यथा। धूम्रवर्णं महाकालं जटाभारान्वितं यजेत्। त्रिनेत्रं शिवरूपञ्च शक्तियुक्तं निरामयम्। दिगम्बरं घोररूपं नीलाञ्जनचयप्रभम्। निर्गुणञ्च गुणाधारं कालीस्थानं पुनः पुनः॥ खड्गादिपूजाक्रमस्तु निरुत्तरे। तथा॥ खड्गं मुण्डं यजेद्वामे हस्ते च कुलसुन्दरि!। पूजयेद्दक्षिणे हस्ते अभयञ्च वरं तथा॥ एवमसिताङ्गादिपूजाक्रमोऽपि तत्रैव॥ चतुर्द्वारे यजेद्देवि! असिताङ्गादिभैरवान्। पूर्वादिक्रमतो देवि! द्वारि द्वारि द्वयं द्वयमिति॥

संक्षेपपूजासूत्रन्तु तोड़लतन्त्रे तृतीयपटले॥ संक्षेपपूजामथवा कुर्य्यान्मन्त्री समाहितः। आदावृष्यादि विन्यस्य करशुद्धिस्ततः परम्। अङ्गुलीव्यापकन्यासौ हृदादिन्यास एव च। तालत्रयञ्च दिग्बन्धः प्राणायामस्ततः परम्। ध्यानं मानस-

यागश्च अर्घ्यस्थापनमेव च। पीठपूजां पुनर्ध्यानं ततश्चावाहनं चरेत्। जीवन्यासं ततः कृत्वा पूजयेत् परदेवताम्। अङ्गपूजाञ्च काल्यादिं ब्राह्म्यादिञ्चाष्टभैरवान्। महाकालं पूजयित्वा गुरुपङ्क्तिं यजेत्ततः। खड्गादीन् पूजयित्वा तु पुनर्देवीं प्रपूजयेत्। प्राणायामं ततः कृत्वा प्रजपेत् साधकाग्रणीः। देव्या हस्ते जपफलसमर्पणमथाचरेत्। प्राणायामं ततः कृत्वा चाष्टाङ्गं प्रणमेत् सुधीः। स्तुतिञ्च कवचं स्मृत्वा विशेषार्घ्य प्रदापयेत्। आत्मसमर्पणं कृत्वा संहारेण विसर्जयेत्। ऐशान्यां मण्डलं कृत्वा चाण्डाल्युच्छिष्टपूर्विका। नैवेद्यं किञ्चित् स्वीकृत्य विहरेच्च निजेच्छया॥

पिच्छिलातन्त्रे द्वादशपटले॥ नित्यपूजाविधिं वक्ष्ये शृणुष्व प्राणवल्लभे!। यतः पूजादिकं देवि! न ददाति फलं क्वचित्। पूजया लभते पूजां तस्मात् पूजापरो भवेत्। नित्यपूजाविहीनस्य न काम्यं सिध्यते क्वचित्॥ तथा। आचस्य द्वारदेशे तु सामान्यार्घ्यं समाचरेत्। लिपिन्यासादिविन्यासो मूलेन करशोधनम्। कव्यापकविन्यासं कृत्वाङ्गानि न्यसेत् सुधीः। तालत्रयं दिशां बन्धः प्राणायामत्रयं तथा। ध्यानमिष्टस्यैव पूजा जपश्च कालिकार्च्चनम्। अयमेव विधिः प्रोक्तः सर्वेषां यजनक्रमः। उपचारैः षोड़शैस्तु तद्भवेत् पूजनं महत्। नित्ये दशोपचारास्तु पञ्च वा विचरेत् शिवे!। अभावे गन्धपुष्पाभ्यां पुष्पेण तदभावतः। तदभावे यजेत् पत्रैस्तण्डुलेन जलेन वा। मानसीं तदभावेऽपि पूजां न लङ्घयेत् क्वचित्। लङ्घने सर्वनाशः स्यादापदश्च पदे पदे। एतयोः पुरश्चरणं लक्षजपः॥ कालीतन्त्रे द्वितीयपटले॥ आदौ पुरस्क्रियां कुर्य्यान्नियमेन यथास्थितः। लक्षमेकं जपेद्विद्यां हविष्याशी दिवा शुचिः। रात्रौ ताम्बूलपूरास्यः शय्यायां लक्षमानतः। ततः सिद्धमनुर्मन्त्री प्रयोगार्हो न

चान्यथा। एतद्वचनं तन्त्रसारेऽपि धृतमस्ति किन्तु अर्वाचीना एतद्वचने लक्षद्वयदर्शनात् तन्त्रसारकारलिखितानिरुद्धसरस्वती-प्रकरणीयलक्षद्वयजपदर्शनाच्चैतयोरपि लक्षद्वयजपेन दिवा-रात्रिभेदकृतेन पुरश्चरणं वदन्ति। तन्न। तन्त्रसारकारेणापि एतयोर्लक्षजपेन पुरश्चरणं स्पष्टमुक्तम्। तत्प्रमाणं तद्धृतसिद्ध स्व-रीयवचनं द्रष्टव्यम्। वस्तुतस्तु एतयोरनिरुद्धसरस्वत्याश्च लक्षद्व-येन यत् परश्चरणमुक्तं तत् पश्वाकल्पवीरकल्पभेदेन। तदुक्तं श्यामारहस्यधृतस्वतन्त्रतन्त्रे॥ यथा॥ दिवा लक्षं शुचिर्भूत्वा हविष्याशी जपेन्नरः। ततस्तु तद्दशांशेन होमयेद्धविषा प्रिये!। तर्पयेत्तीर्थतोयेन पयसा हविषा तथा। मधुना वा सितामिश्र-तोयेन परमेश्वरि!। देवीञ्चाभिषिञ्चेत्तोयैस्तर्पणस्य दशांशतः। तद्दशांशं हविष्यान्नैर्भोजयेद्भक्तितः प्रिये!। कालीतन्त्रविदो विप्रान् गुरवे दक्षिणां ददेत्। पाशवं कथितं कल्पं शृणु वैरं ततः प्रिये!॥ इति॥

निरुत्तरतन्त्रे चतुर्थपटलेऽपि॥ दिवा लक्षं जपेद्विद्यां हविष्याशी सदा शुचिः। दशांशं जुहुयाद्वह्नौ तद्दशांशञ्च तर्प-णम्। तद्दशांशाभिषेकञ्च तीर्थतोयेन पार्वति!। तद्दशांशं हविष्यान्नैर्भक्तितो भोजयेद्द्विजान्। पाशवं कथितं कल्पं शृणु वैरमतः परम्। नक्तं यामगते देवि! स्वकुलं परिचिन्तयेत्॥ इत्युपक्रम्य। तत्त्वचिन्तापरो मन्त्री जपेल्लक्षं कुलाकुलम्। तद्दशांशं जुहुयादग्नावासवैः पललान्वितैः। तद्दशांशं तर्पणञ्च सुधापललसंयुतम्। अभिषेकं तद्दशांशं तीर्थतोयेन पार्वति!। कुलद्रव्यैस्तद्दशांशं भक्तितो भोजयेद् द्विजान्। आदावन्ते च मध्ये च शक्तीनां भोजयेत् कुलम्। तदभावे महेशानि! शक्ति-मात्रं प्रपूजयेत्। पुरश्चरणकाले हि यदि शक्तिं न पूजयेत्। तस्य पूजा जपो होमो ह्यभिचाराय कल्पते॥ प्रथमपटलेऽपि॥

दिवा न पाशवं कर्म रात्रिकर्म च कौलिकम्। पुरश्चर्य्यादिकं कर्म द्विविधं भावभेदतः॥ इति। तस्मात् पशुकल्पे पुरश्चरणं दिवा लक्षजपः। वीरकल्पे तु रात्रौ लक्षजप इति सिद्धम्। यदि वा कालीतन्त्रलिखनानुसारेण पशुकल्पेऽपि दिवारात्रिभेदेन लक्ष-द्वयजपेन पुरश्चरणमङ्गीक्रियते तदा तत्तन्त्रोक्तम्। नानाचारं न कर्त्तव्यं न चारणमितस्ततः। भूतहिंसा न कर्त्तव्या पशुहिंसा विशेषतः। बलिदानं विना देवि! हिंसा सर्वत्र गर्हितम्॥ इति वचनेन नानाचारनिषेधस्य वैयर्थ्यापत्तिरतएव कर्पूरादि-स्तवे। वशी लक्षं मन्त्रं प्रजपति हविष्याशनरतो दिवा मातर्युष्म-च्चरणयुगलध्यानर्निपुणः। परं नक्तं नग्नो निधुवनविनोदेन च मनुं जपेल्लक्षं सम्यक् स्मरहरसमानः क्षितितले॥ इत्यत्र परमित्यनेन निधुवनविनोदेनेत्यनेन च वीरकल्प एव रात्रि-पुरश्चरणमुक्तम्। निधुवनविनोदेन रतिक्रीड़ानन्देन तेषां मन्त्राणां यजनविधिस्तन्त्रसारकारेणैव बहुधा लिखितस्तत्र सर्वं द्रष्टव्यम्॥

अथ कालीशतनामस्तोत्रम्॥ शिव उवाच॥ करालवदना काली कामिनी कमला कला। क्रियावती कोटराक्षी कामाख्या कामसुन्दरी। कपोला च कराला च काशी कात्यायनी कुहूः। कङ्काली कालदमनी करुणा कमलार्च्चिता। कादम्बरी काल-हरा कौतुका कारणप्रिया। कृष्णा कृष्णप्रिया कृष्णपूजिता कृष्णवल्लभा। कृष्णापराजिता कृष्णप्रिया च कृष्णरूपिणी। कालिका कालरात्रिश्च कुलजा कुलपण्डिता। कुलधर्मप्रिया कामा काम्यकर्मविभूषिता। कुलप्रिया कुलरता कुलीन-परिपूजिता। कुलज्ञा कमला पूज्या कैलासनगभूषिता। कूटजा केशिनी कामा कामदा कामपण्डिता। करालास्या च कन्दर्पकामिनी रूपशोभिता। कोलम्बका कोलरता केशिनी

केलभूषिता। केशवस्य प्रिया केशा काश्मीरा केशवार्चिता। कामेश्वरी कामरूपा कामदानविभूषिता। कालहन्त्री कूर्ममांसप्रिया कूर्मादिपूजिता। केलिनी करकाकारा कटकूर्मनिषेविणी। कटकेशरमध्यस्था कटकी कटकार्च्चिता। कटप्रिया कटरता कटकूर्मनिषेविणी। कुमारीपूजनरता कुमारीगणसेविता कुलाचारप्रिया कौलप्रिया कुलनिषेविणी। कुलीना कुलधर्मज्ञा कुलभीतिविमर्दिनी। कामधर्मप्रिया काम्या नित्या कामस्वरूपिणी। कामरूपा कामहरा काममन्दिरपूजिता। कामागारस्वरूपा च कामाख्या कामभूषिता। क्रियाभक्तिरता काम्या काञ्चनी चैव कामदा। कोलपुष्पाम्बरा कोला निष्कोला कलहान्तका। कौषिकी केतकी कुन्ती कुन्तलादिविभूषिता॥ इत्येवं शृणु चार्वङ्गि! रहस्यं सर्वमङ्गलम्। यः पठेत् परया भक्त्या स शिवो नात्र संशयः। शतनामप्रसादेन किं न सिध्यति भूतले। ब्रह्मा विष्णुश्च रुद्रश्च वासवाद्या दिवौकसः। रहस्यपठनाद्देवि! सर्वे च विगतज्वराः। त्रिषु लोकेषु विश्वेशि! सत्यं सत्यमतः परम्। नास्ति नास्ति महामाये! तन्त्रमध्ये कथञ्चन। क्रियया च विना देवि! विना भक्त्या महेश्वरि!। प्रसन्ना स्यात् करालाख्या स्तवपाठाद्दिगम्बरा। सत्यं वच्मि महेशानि! अतः परतरं न हि। न गोलके न वैकुण्ठे न च कैलासमन्दिरे। अतः परतरा विद्या स्तोत्रं कवचमेव च। त्रिलोकेषु जगद्धात्रि! नास्ति नास्ति कदाचन। रात्रावपि दिवाभागे सन्ध्यायां वा सुरेश्वरि!। प्रजपेद्भक्तिभावेन रहस्यं स्तवमुत्तमम्। शतनामप्रसादेन मन्त्रसिद्धिः प्रजायते। कुजवारे चतुर्दश्यां निशाभागे पठेत्तु यः। स कृती सर्वशास्त्रज्ञः स कुलीनः सदा शुचिः। स कुलज्ञः स कालज्ञः स धर्मज्ञो महीतले। रहस्यपठनात् कोटि-

पुरश्चरणजं फलम्। प्राप्नोति देवदेवेशि! सत्यं परमसुन्दरि!। स्तवपाठाद्वरारोहे! किं न सिध्यति भूतले। अणिमाद्यष्टसिद्धीशो भवत्येव न संशयः। रात्रौ विल्वतलेऽश्वत्थमूलेऽपराजितातले। प्रपठेत् कालिकास्तोत्रं यथाशक्त्या महेश्वरि!। शतवारप्रपठनान्मन्त्रसिद्धिर्भवेद्ध्रुवम्॥

इति मुण्डमालातन्त्रे अष्टमपटले कालीशतनामस्तोत्रं समाप्तम्॥

अथ महाविद्यास्तोत्रम्॥ शिव उवाच॥ दुर्लभं तारिणीमार्गं दुर्लभं तारिणीपदम्। मन्त्रार्थं मन्त्रचैतन्यं दुर्लभं शवसाधनम्। श्मशानसाधनं योनिसाधनं ब्रह्मसाधनम्। क्रियासाधनकं भक्तिसाधनं मुक्तिसाधनम्। स्तवप्रसादाद्देवेशि! सर्वाः सिध्यन्ति सिद्धयः। नमस्ते चण्डिके! चण्डि! चण्डमुण्डविनाशिनि!। नमस्ते कालिके! कालमहाभयविनाशिनि!। शिवे! रक्ष जगद्धात्रि! प्रसीद हरवल्लभे!। प्रणमामि जगद्धात्रीं जगत्पालनकारिणीम्। जगत्क्षोभकरीं विद्यां जगत्सृष्टिविधायिनीम्। करालां विकटां घोरां मुण्डमालाविभूषिताम्। हरार्चितां हराराध्यां नमामि हरवल्लभाम्। गौरीं गुरुप्रियां गौरवर्णालङ्कारभूषिताम्। हरिप्रियां महामायां नमामि ब्रह्मपूजिताम्। सिद्धां सिद्धेश्वरीं सिद्धविद्याधरगणैर्युताम्। मन्त्रसिद्धिप्रदां योनिसिद्धिदां लिङ्गशोभिताम्। प्रणमामि महामायां दुर्गां दुर्गतिनाशिनीम्। उग्रामुग्रमयीमुग्रतारामुग्रगणैर्युताम्। नीलां नीलघनश्यामां नमामि नीलसुन्दरीम्। श्यामाङ्गीं श्यामघटितां श्यामवर्णविभूषिताम्। प्रणमामि जगद्धात्रीं गौरीं सर्वार्थसाधिनीम्। विश्वेश्वरीं महाघोरां विकटां घोरनादिनीम्। आद्यामाद्यगुरोराद्यामाद्यनाथप्रपूजिताम्। श्रीदुर्गां धनदामन्नपूर्णां पद्मां सुरेश्वरीम्। प्रण-

मामि जगद्धात्रीं चन्द्रशेखरवल्लभाम्। त्रिपुरां सुन्दरीं बालामबलागणभूषिताम्। शिवदूतीं शिवाराध्यां शिवध्येयां सनातनीम्। सुन्दरीं तारिणीं सर्वशिवागणविभूषिताम्। नारायणीं विष्णुपूज्यां ब्रह्मविष्णुहरप्रियाम्। सर्वसिद्धिप्रदां नित्यामनित्यां गुणवर्जिताम्। सगुणां निर्गुणां ध्येयामर्चितां सर्वसिद्धिदाम्। विद्यां सिद्धिप्रदां विद्यां महाविद्यां महेश्वरीम्। महेशभक्तां माहेशीं महाकालप्रपूजिताम्। प्रणमामि जगद्धात्रीं शुम्भासुरविमर्दिनीम्। रक्तप्रियां रक्तवर्णां रक्तवीजविमर्दिनीम्। भैरवीं भुवनां देवीं लोलजिह्वां सुरेश्वरीम्। चतुर्भुजां दशभुजामष्टादशभुजां शुभाम्। त्रिपुरेशीं विश्वनाथप्रियां विश्वेश्वरीं शिवाम्। अट्टहासामट्टहासप्रियां धूम्रविनाशिनीम्। कमलां छिन्नभालाञ्च मातङ्गीं सुरसुन्दरीम्। षोड़शीं विजयां भीमां धूमाञ्च वगलामुखीम्। सर्वसिद्धिप्रदां सर्वविद्यामन्त्रविशोधिनीम्। प्रणमामि जगत्तारां साराञ्च मन्त्रसिद्धये। इत्येवञ्च वरारोहे! स्तोत्रं सिद्धिकरं परम्। पठित्वा मोक्षमाप्नोति सत्यं वै गिरिनन्दिनि!। कुजवारे चतुर्दश्याममायां जीववासरे। शुक्रे निशि गते स्तोत्रं पठित्वा मोक्षमाप्नुयात्। त्रिपक्षे मन्त्रसिद्धिः स्यात् स्तोत्रपाठाद्धि शङ्करि!। चतुर्दश्यां निशाभागे शनिभौमदिने तथा। निशामुखे पठेत् स्तोत्रं मन्त्रसिद्धिमवाप्नुयात्। केवलं स्तोत्रपाठाद्धि मन्त्रसिद्धिरनुत्तमा। जागर्त्ति सततं चण्डि! स्तोत्रपाठाद्भुजङ्गिनी॥

इति मुण्डमालातन्त्रे एकादशपटले महाविद्यास्तोत्रं समाप्तम्॥

अथ कवचम्॥ सदाशिव ऋषिर्देवि! उष्णिक् छन्द उदीरितम्। विनियोगश्च देवेशि! सततं मन्त्रसिद्धये। मस्तकं पार्वती पातु पातु पञ्चाननप्रिया। केशं मुखं पातु चण्डी भा-

रतो रुधिरप्रिया। कण्ठं पातु स्तनं पातु कपालं पातु चैव हि। काली करालवदना विचित्रा चित्रघण्टिनी। वक्षोमूलं नाभिमूलं दुर्गा त्रिपुरसुन्दरी। समस्तं पातु मे तारा सर्वाङ्गी सर्वमेव च। विश्वेश्वरी पृष्ठदेशं नेत्रं पातु महेश्वरी। हृत्पद्मं कालिका पातु कण्ठं पातु नभोगतम्। नारायणी गुह्यदेशं मेढ्रं मेढ्रेश्वरी तथा। पादयुग्मं जया पातु नित्यं मां चण्डिकावतु। जीवं मां पार्वती पातु मातङ्गी पातु सर्वदा। छिन्ना धूमा च भीमा च भये पातु जले वने। कौमारी चैव वाराही नारसिंही यशो मम। पातु नित्यं भद्रकाली श्मशानालयवासिनी। उदरे सर्वदा पातु सर्वाणी सर्वमङ्गला। जगन्माता जयं पातु नित्यं कैलासवासिनी। शिवप्रिया सुतं पातु सुतं पर्वतनन्दिनी। त्रैलोक्यं पातु वगला भुवनं भुवनेश्वरी। सर्वाङ्गं सर्वनिलया पातु नित्यञ्च पार्वती। चामुण्डा पातु मे रोमकूपं सर्वार्थ-साधिनी। ब्रह्माण्डं मे महाविद्या पातु नित्यं मनोहरा। लिङ्गं लिङ्गेश्वरी पातु महापीठे महेश्वरी। सदाशिवप्रिया पातु नित्यं पातु सुरेश्वरी। गौरी मे सन्धिदेशञ्च पातु वै त्रिपुरेश्वरी। सुरेश्वरी सदा पातु श्मशाने च शिवेऽवतु। कुम्भके रेचके चैव पूरके काममन्दिरे। कामाख्या कामनिलयं पातु दुर्गा महेश्वरी। डाकिनी काकिनी पातु नित्यं मे शाकिनी तथा। हाकिनी लाकिनी पातु राकिणी पातु सर्वदा। ज्वाला-मुखी सदा पातु मुखमध्ये शिवावतु। तारिणी विभवे पातु भवानी च भवेऽवतु। त्रैलोक्यमोहिनी पातु सर्वाङ्गं विजने-ऽवतु। राजकुले महाघाते संग्रामे शत्रुसङ्कटे। प्रचण्डा साधकं माञ्च पातु भैरवमोहिनी। श्रीराजमोहिना पातु राजद्वारे विपत्तिषु। सम्पत्प्रदा भैरवी च पातु वाला वलं मम। नित्यं मां शम्भुवनिता पातु मां त्रिपुरात्मिका। इत्येवं कथितं

देवि! रहस्यं सर्वकालिकम्। भुक्तिदं मुक्तिदं सौख्यसर्वसम्पत्प्र-दायकम्। यः पठेत् प्रातरुत्थाय साधकेन्द्रो भवेद्भुवि। कुज-वारे चतुर्दश्याममायां मन्दवासरे। गुरौ गुरुं समभ्यर्च्य यः पठेत् साधकोत्तमः। स याति भवनं देव्याः सत्यं सत्यं न संशयः। एवं यदि वरारोहे! पठेद्भक्तिपरायणः। मन्त्रसिद्धि-र्भवेत्तस्य चाचिरान्नात्र संशयः। सत्यं लक्षपुरश्चर्य्याफलं प्राप्य शिवां व्रजेत्। शिवमार्गं राजमार्गं प्राप्य जीवः शिवो भवेत्। पठित्वा कवचं स्तोत्रं मुक्तिमाप्नोति निश्चितम्। पठित्वा क-वचं स्तोत्रं दशविद्या यजेद् यदि। विद्यासिद्धिर्मन्त्रसिद्धिर्भव-त्येव न संशयः। खरसिद्धिश्चितासिद्धिर्दुर्लभा धरणीतले। अ-यत्नसुलभा सिद्धिस्ताम्बूलाच्चात्र संशयः। निशामुखे निशायाञ्च महाकाले निशान्तके। पठेद्भक्त्या महेशानि! गाणपत्यं लभेत्तु सः॥ इति मुण्डमालातन्त्रे एकादशपटले महाविद्याकवचं समाप्तम्॥

श्मशानकालिकादीनां पूजादिकन्तु तन्त्रसारेऽनुसन्धेयम्॥

अथ श्मशानकालिकाकवचम्॥ कैलासशिखरारूढं शङ्करं वरदं शिवम्। देवी पप्रच्छ सर्वज्ञं सर्वदेवमहेश्वरम्। भगवन्! सर्वदेवेश! देवानां भोगद! प्रभो!। प्रब्रूहि मे महादेव! गोप्यं यद्यपि च प्रभो!। शत्रूणां येन नाशः स्यादात्मनो रक्षणं भवेत्। परमैश्वर्य्यमतुलं लभेद् येन हि तद्वद॥ श्रीभैरव उवाच॥ वक्ष्यामि ते महादेवि! सर्वधर्मविदां वरे। अद्भुतं कवचं देव्याः सर्वकामप्रसाधकम्। विशेषतः शत्रुनाशकरं रक्षाकरं नृणाम्। सर्वानिष्टप्रशमनमभिचारविनाशकम्। सुखदं भोगदञ्चैव वशीकरणमुत्तमम्। शत्रुसङ्घाः क्षयं यान्ति भवन्ति व्याधिपीड़िताः। दुःखिनो ज्वरिणश्चैव स्वाभीष्टप्रच्यु-तास्तथा॥ अस्य श्रीकालिकाकवचस्य भैरव ऋषिर्गायत्री

छन्दः श्रीकालिका देवता शत्रुसङ्घनाशे विनियोगः। ओँ ध्यायेत् कालीं महामायां त्रिनेत्रां बहुरूपिणीम्। चतुर्भुजां लोल-जिह्वां पूर्णचन्द्रनिभाननाम्। नीलोत्पलदलप्रख्यां शत्रुसङ्घ-विदारिणीम्। नरमुण्डं तथा खड्गं कमलञ्च वरं तथा। बिभ्राणां रक्तवदनां दंष्ट्रालीघोररूपिणीम्। अट्टाट्टहासनिरतां सर्वदा च दिगम्बरीम्। शवासनस्थितां देवीं मुण्डमालाविभूषिताम्। इति ध्यात्वा महादेवीं ततस्तु कवचं पठेत्। ओँ कालिका घोररूपाढ्या सर्वकामप्रदा शुभा। सर्वतः संस्तुता देवी शत्रु-नाशं करोतु मे। क्रीं क्रींस्वरूपिणी चैव क्रां क्रां हुं रूपिणी तथा। ह्रीं ह्रां चौं चौंस्वरूपा सा सदा शत्रून् प्रणाशतु मे। श्रीं क्रीं ऐंरूपिणी देवी भवबन्धविमोचनी। हसकलह्रीं-स्वरूपासौ रिपून् सा हन्तु सर्वदा। यया शुम्भो हतो दैत्यो निशुम्भश्च महासुरः। वैरिनाशाय वन्दे तां कालिकां शङ्कर-प्रियाम्। ब्राह्मी शैवी वैष्णवी च वाराही नारसिंहिका। कौमार्य्यैन्द्री च चामुण्डा खादयन्तु मम द्विषः। सुरेश्वरी घोररूपा चण्डमुण्डविनाशिनी। मुण्डमालावृताङ्गी च सर्वतः पातु मां सदा। क्रीं क्रीं कालिके! घोरदंष्ट्रे! रुधिरप्रिये! रुधिर-रुचिरपूर्णवक्त्रे! रुधिरावृतस्तनि!। ममामुकशत्रून् खादय खादय च्छेदय च्छेदय हिंसय हिंसय मारय मारय भिन्धि भिन्धि छिन्धि छिन्धि उच्चाटय उच्चाटय द्रावय द्रावय स्वाहा। वां वीं कालिकायै मदीयशत्रुं समर्पयामि स्वाहा। ओँ जय जय किरि किरि किटि किटि कट्ट कट्ट मर्दय मर्दय मोहय मोहय हर हर ममामुकरिपून् ध्वंसय ध्वंसय भक्ष भक्ष त्रोटय त्रोटय यातुधानि! चामुण्डे! सर्वजनान् राज्ञो राजपुरुषान् स्त्रियो मम वश्याः कुरु कुरु तनु तनु धान्यं धनमश्वान् गजान् रत्नानि दिव्यकामिनीः पुत्रान् राजश्रियं

देहि देहि यच्छ यच्छ चां चीं चूं चैं चौं चः स्वाहा। इत्येतत् कवचं दिव्यं कथितं शम्भुना पुरा। ये पठन्ति सदा तेषां ध्रुवं नश्यन्ति शत्रवः। वैरिणः प्रलयं यान्ति व्याधिताश्च भवन्ति हि। धनहीनाः पुत्रहीनाः शत्रवस्तस्य सर्वदा। सहस्रपठनात् सिद्धिः कवचस्य भवेत्तदा। ततः कार्य्याणि सिद्ध्यन्ति तच्च शङ्करभाषितम्। श्मशानाङ्गारमादाय चूर्णं कृत्वा प्रयत्नतः। पादोदकेन पिष्ट्वा च लिखेल्लौहशलाकया। भूमौ शत्रून् हीन-रूपानुत्तराशिरसस्तथा। हस्तं दत्त्वा तद्धृदये कवचन्तु स्वयं पठेत्। शत्रोः प्राणप्रतिष्ठान्तु कुर्य्यान्मन्त्रेण मन्त्रवित्। हन्या-दस्त्रप्रहारेण शत्रुर्गच्छेद् यमक्षयम्। ज्वलिताङ्गारतापेण ज्वरी भवति तादृशः। प्रोञ्छनैर्वामपादेन दरिद्रो भवति ध्रुवम्। वैरिनाशकरं प्रोक्तं कवचं वश्यकारकम्। परमैश्वर्य्यदञ्चैव पुत्रपौत्रादिवृद्धिदम्। प्रभातसमये चैव पूजाकाले विशेषतः। सायंकाले तथा पाठात् सर्वसिद्धिर्भवेद् ध्रुवम्॥ शत्रुरुच्चाटनं याति देशाच्च विच्युतो भवेत्। पश्चात् किङ्करतामेति सत्यं सत्यं न संशयः॥ शत्रुनाशकरि! देवि! सर्वसम्पत्करि! शुभे!। सर्वदेवस्तुते! देवि! कालिके! त्वां नमाम्यहम्॥

इति रुद्रयामले वैरिहरणं नाम श्मशानकालिका-
कवचं समाप्तम्॥

दक्षिणाचारस्यापि शाक्तविषयकत्वात् शाक्तप्रशंसा उच्यते॥

अथ शाक्तप्रशंसा॥ मुण्डमालातन्त्रे द्वितीयपटले॥ स्वर्गे मर्त्त्ये च पाताले नास्ति शाक्तात् परः प्रियः। सौराणां गाण-पत्यानां वैष्णवानां तथैव च। तदन्ते चैव शाक्ताः स्युः क्रमशः क्रमशः प्रिये!। शृणु देवि! वरारोहे! नास्ति शाक्तात् परो जनः। शाक्तोऽपि शङ्करः साक्षात् परब्रह्मस्वरूपभाक्। आराधिता येन काली तारा त्रिभुवनेश्वरी। षोड़शी चैव मातङ्गी छिन्ना

ञ्च बगलामुखी। आराधिता महेशानि! स शिवो नात्र संशयः। अतिगोप्यं महेशानि! शाक्तानां परमं पदम्। यो जानाति महीमध्ये स शिवो नात्र संशयः। ब्रह्माद्यर्च्चितपादाब्जं यो भजेत् सततं मुदा। स यात्यचिरकालेन मुक्तिमन्दिरमेव हि॥ तृतीयपटले॥ पार्व्वतीचरणद्वन्द्वभजनात् किङ्करो भवेत्। स्वर्गभोगश्च मोक्षश्च शाक्तानां न भवेत् किमु। शाक्तानाञ्चैव निन्दां ये कुर्व्वन्ति हि नराधमाः। तेषां लोहितपानं वै कुर्व्वन्ति भैरवीगणाः। भैरवाश्चैव भैरव्यः सदा हिंसन्ति पामरान्। शाक्तान् हिंसन्ति गर्ज्जन्ति निन्दन्ति बहुजल्पकाः। छिनत्ति तेषां देवेशि! शिरांसि हरवल्लभा। शाक्तानामुत्तमो नास्ति स्वर्गे मर्त्त्ये रसातले। शाक्तस्तु शङ्करो ज्ञेयस्त्रिनेत्रश्चन्द्रशेखरः। स्वयं गङ्गाधरो भूत्वा विहरेत् क्षितिमण्डले॥ चतुर्थपटले॥ देवीं प्रति शिववाक्यम्॥ मदंशाश्चैव ये भूतास्ते शैवा नात्र संशयः। त्वदंशाश्चैव शाक्ताश्च सत्यं वै गिरिनन्दिनि!। बहुवर्षसहस्रान्ते शैवाः शक्तिपरायणाः। शाक्ताश्च शङ्करा देवि! यस्य कस्य कुलोद्भवाः। चाण्डाला ब्राह्मणाः शूद्राः क्षत्रिया वैश्यसम्भवाः। एते शाक्ता जगद्धात्रि! न मनुष्याः कदाचन। पश्यन्ति मानुषान् लोके केवलं चर्म्मचक्षुषा॥ तथा सप्तमपटलेऽपि॥ शिव उवाच॥ ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरेव च जातिभिः। वाममार्गप्रभावेण कर्त्तव्यं जपपूजनम्। ये शाक्ता ब्राह्मणा देवि! क्षत्रिया ब्राह्मणाः स्मृताः। वैश्याश्च ब्राह्मणा देवि! सर्व्वे शूद्राश्च ब्राह्मणाः। ब्राह्मणाः शङ्कराश्चण्डि! त्रिनेत्राश्चन्द्रशेखराः॥ निर्व्वाणतन्त्रे तृतीयपटले॥ शाक्ता एव द्विजाः सर्व्वे न शैवा न च वैष्णवाः। उपासते यतो देवीं गायत्रीं परमाक्षरीम्॥ गन्धर्व्वतन्त्रे द्वितीयपटले॥ शक्त्युपासनानन्तरमन्योपासननिषेधो यथा॥ त्रिपुरामधिकृत्य। अस्यास्तारा धनं ज्ञात्वा

नान्यस्याराधनं चरेत्। अन्यस्य स्मरणाद्देवि! योगिनीशाप-
मालभेत्॥ इति शाक्तप्रशंसा॥

इति श्रीप्राणतोषिण्यां पञ्चमे भक्तिकाण्डे महाविद्यादि-
कथनरूपः षष्ठः परिच्छेदः।

कुमारीपूजनरतेत्यादिना पूर्व्वलिखितं कुमारीपूजाविधिना
चाकाङ्क्षितं प्राप्तावसरेणेदानीं तदुच्यते मया। अथ कुमारी-
पूजा॥ तत्र कुमारीनिरूपणं रुद्रजामलोत्तरखण्डीयषष्ठ-
पटले॥ एकवर्षा भवेत् सन्ध्या द्विवर्षा च सरस्वती। त्रिवर्षा
च त्रिधा मूर्त्तिश्चतुर्व्वर्षा च कालिका। सुभगा पञ्चवर्षा तु
षष्ठवर्षा भवेदुमा। सप्तभिर्मालिनी साक्षादष्टवर्षा तु कुब्जिका।
नवभिः कालसन्दर्भा दशभिश्चापराजिता। एकादशे तु रुद्राणी
द्वादशाब्दे तु भैरवी। त्रयोदशे महालक्ष्मीर्द्विसप्ता पीठना-
यिका। क्षेत्रज्ञा पञ्चदशभिः षोड़शे चाम्बिका मता। एवं
क्रमेण संग्राह्य यावत् पुष्पं न जायते। प्रतिपदादिपूर्णान्तं
वृद्धिभेदेन पूजयेत्॥ एकवर्षेत्यादिसर्व्वं बृहन्नीलतन्त्रेऽपि केवलं
षड्वर्षा च उमा भवेत्। द्विसप्ता नायिका स्मृता। षोड़शे च चं-
का मतेति पाठभेदो नामभेदश्चेति। कुब्जिकातन्त्रे सप्तमपटले
तु विशेष उक्तो यथा॥ पञ्चवर्षां समारभ्य यावद् द्वादश-
वार्षिकी। कुमारी सा भवेद्देवि! निजरूपप्रकाशिनी। षड्-
वर्षाञ्च समारभ्य यावत् सा नववार्षिकी। तावच्चैव महेशानि!
साधकाभीष्टसिद्धये। अष्टवर्षां समारभ्य यावत्त्रयोदशाब्दिकी।
कुलजां तां विजानीयात्तत्र पूजां समाचरेत्। दशवर्षां समा-
रभ्य यावत् षोड़शवार्षिकी। युवतीं तां विजानीयाद्देवतां तां
विचिन्तयेत्। अन्नं वस्त्रं तथा नीरं कुमार्य्यै यो ददाति हि।
अन्नं मेरुसमं देवि! जलञ्च सागरोपमम्। वस्त्रैः कोटिसह-
स्राब्दं शिवलोके महीयते। पूजोपकरणानीह कुमार्य्यै यो

ददाति हि । सन्तुष्टा देवता तस्य पुत्रत्वेनानुकल्पते ॥ विश्वसारे तु ॥ अष्टवर्षा तु सा कन्या भवेद्गौरी वरानने ! । नववर्षा रोहिणी सा दशवर्षा तु कन्यका । अत ऊर्द्धं महामाया भवेत् सैव रजस्वला । आरभ्य द्वादशाब्दाच्च यावद्विंशतिसंख्यकम् । सुकुमारा च सा प्रोक्ता सर्वतन्त्रसमन्विता । यानपाषाणधातूनां तेजोरूपेण संस्थिता । जीवजन्तुषु देवेशि ! किं वक्तव्यमतः-परम् । यत्र नास्ति महामाया तत्र किञ्चिन्न विद्यते ॥ इत्युक्तम् ॥ तत् पूजाफलं योगिनीतन्त्रे पूर्वखण्डे सप्तदशपटले ॥ कुमारी-पूजनफलं वक्तुं नार्हामि सुन्दरि ! । जिह्वाकोटिसहस्रैस्तु वक्त्र-कोटिशतैरपि । तस्मात्तां पूजयेद्बालां सर्वजातिसमुद्भवाम् । जातिभेदो न कर्त्तव्यः कुमारीपूजने शिवे ! । जातिभेदान्महे-शानि ! नरकान्न निवर्त्तते । विचिकित्सापरो मन्त्री ध्रुवं स पातकी भवेत् । देवीबुद्ध्या महाभक्तस्तस्मात्तां परिपूजयेत् । सर्वविद्यास्वरूपा हि कुमारी नात्र संशयः । यदि भाग्य-वशाद्देवि ! वेश्याकुलसमुद्भवाम् । कुमारीं लभते कान्ते । सर्वस्वेनापि साधकः । यत्नतः पूजयेत्तान्तु स्वर्णरौप्यादिभि-र्मुदा । तदा तस्य महासिद्धिर्जायते नात्र संशयः ॥ कुमारी-पूजास्थानं फलमपि तत्रैव ॥ कुमारी पूज्यते यत्र स देशः क्षिति-पावनः । महापुण्यतमो भूयात् समन्तात् क्रोशपञ्चकम् । आमले तत्रैव ॥ महापर्वसु सर्वेषु विशेषाच्च पवित्रके । महा-नवम्यां देवेशि ! कुमारीञ्च प्रपूजयेत् । तस्मात् षोड़शपर्य्यन्तं युवतीति प्रचक्षते । तत्र भावप्रकाशः स्यात् स भावः परमो मतः । रक्षितव्याः प्रयत्नेन अक्षतास्ताः प्रचिन्तयेत् । महा-पूजादिकं कृत्वा वस्त्रालङ्कारभोजनैः । पूजयेन्मन्दभाग्योऽपि लभते जयमङ्गलम् । अन्येषां कथनेनाथ प्रयोजनमहाफलम् । विधिना पूजयेद्यस्तु दिव्यवीरपशुस्थितः । भावत्रये महा-

सौख्यं दिव्यकर्मणि सत्फलम्॥ तथा॥ अशेषकुलसम्पन्नां नानाजातिसमुद्भवाम्। नानादेशोद्भवां वापि सगुणागुण-संयुताम्। द्वितीयवत्सरादूर्द्ध्वं यावत् स्यादष्टमाब्दकम्। ताव-ज्जन्मा पूजयित्वा कन्यां सुन्दरमोहिनीम्। दिव्यभावस्थितः साक्षात्तन्त्रमन्त्रफलं लभेत्। कुमारी पूजनादेव कुमारीभोज-नादिभिः। एकद्वित्र्यादिवीजानां फलदा नात्र संशयः। ताभ्यः पुष्पं फलं दत्त्वा अनुलेपादिकं तथा। बालप्रियञ्च नैवेद्यं दत्त्वा तद्भावभावितः। मुदा तदङ्गमात्मानं बाल-भावविचेष्टितः। अतिप्रियकथालापक्रीड़ाकौतूहलान्वितः। यथार्थं तत् प्रियं तत्र कृत्वा सिद्धीश्वरो भवेत्। कन्या सर्व-समृद्धिः स्यात् कन्या सर्वं परं तपः। होमं मन्त्रार्चनं नित्य-क्रियां कौलिकसत्क्रियाम्। नानाफलमहाधर्मं कुमारी-पूजनं विना। तत्तत्कर्म्मफलं नाथ प्राप्नोति साधकोत्तमः। फलं कोटिगुणं वीरः कुमारी पूजया लभेत्। कुसुमाञ्जलिपू-र्णञ्च कन्यायै कुलपण्डितः। ददाति यदि तत् पुष्पं कोटि-मेरुहिरण्यवत्। तद्दानजं महापुण्यं क्षणादेव समालभेत्। कुमारी भोजिता येन त्रैलोक्यं तेन भोजितम्॥ कालीतन्त्रे एकादशपटले॥ कुमारीपूजनं कुर्य्यात् सर्वकर्मफलाप्तये॥ रुद्रयामले उत्तरखण्डे सप्तमपटले॥ अथ पूजां प्रवक्ष्यामि कुमार्य्या अतिदुर्लभम्॥ इत्यभिधाय॥ पूजास्थानं महापीठं देवालयमथापि वा। नटीकन्यां क्षीनकन्यां तथा कापालि-कन्यकाम्। रजकस्यापि कन्याञ्च तथा नापितकन्यकाम्। गोपालकन्यकाञ्चैव ब्राह्मणस्यापि कन्यकाम्। शूद्रकन्यां वैद्य-कन्यां तथा वणिककन्यकाम्। चण्डालकन्यकां वापि यत्र कुत्राश्रमे स्थिताम्। सुहृद्वर्गस्य कन्याञ्च समानीय प्रयत्नतः। पूजयेत् परमानन्दैरात्मध्यानपरायणः। मम पूजां यः करोति

प्रत्यहं शुद्धभक्तितः। तस्या वश्यं कुमारीणां पूजनं भोजनं रविः। तेजोरूपं त्रिधोश्चाग्नेः सर्वभावे प्रकाशते। तत्पूजनात्तदालापात् भोजनादपि तच्छुभात्। मम प्रीतिर्भवेत् साचाद्देवता गुप्तसंस्थिता। बालभैरवदेवस्य कामिनो वटुकस्य च। मत्पुत्रस्य सर्वलोकपूजितस्य महौजसः। पूजाभिर्विविधैर्द्रव्यैः कुमारी देवपूजिता। कुमारी देवता प्रोक्ता सर्वतो जगदीश्वरी। पूजार्थं सर्वलोकस्य समानीय सुरेश्वराः। पूजयन्ति महादेवीं गुप्तभावनिवासिनीम्। सदा भोजनवाञ्छाढ्या मान्या सन्तुष्टहासिनी। वृथा न रौति सा देवी कुमारी देवनायिका। सरस्वतीस्वरूपा सा पूज्यते सर्वनायकैः। शिवभक्तैर्विष्णुभक्तैस्तथान्यदेवपूजकैः। सर्वलोकैः पूजिता सा चावश्यं पूज्यते बुधैः। पूजया लभते पूजां पूजया लभते श्रियम्। पूजया धनमाप्नोति पूजया लभते महीम्। पूजया लभते लक्ष्मीं सरस्वतीं महौजसम्। महाविद्याः प्रसीदन्ति सर्वे देवा न संशयः। कालभैरवब्रह्मेन्द्रा ब्राह्मणा ब्रह्मवेदिनः। रुद्राश्च देववर्गाश्च वैष्णवा ब्रह्मरूपिणः। अवताराश्च द्विभुजा वैष्णवाश्च चतुर्भुजाः। अन्ये दिक्पालदेवाश्च चराचरगुरुस्तथा। नानाविद्यारताः सर्वे दानवाः कूटशालिनः। उपसर्गास्थिता ये ये ते ते तुष्टा न संशयः। यद्यहं शुद्धिरूपा हि अन्यलोके च का कथा। कुमारीपूजनं कृत्वा त्रैलोक्यं वशमानयेत्। महाशान्तिर्भवेत् चिप्रं सर्वपुण्यफलप्रदम्॥ बृहन्नीलतन्त्रे॥ महाभयानि दुर्भिक्षाद्युत्पातानि कुलेश्वरि!। दुःस्वप्नमपमृत्युञ्च यच्चान्यत् दुःखदं नृणाम्। कुमारीपूजनादेव न तानि प्रभवन्ति हि। नित्यं क्रमेण देवेशि! पूजयेद्विधिपूर्वकम्। घ्नन्ति विघ्नान् पूजिताश्च भयं शत्रून् महोत्कटान्। ग्रहा रोगाः चयं यान्ति भूतवेतालपन्नगाः॥ रुद्रजामले तथा॥

तत्तन्मन्त्रसमुल्लेखात् क्षणात् पुण्यायुतं लभेत्। मन्त्रेण पुटितं कृत्वा जप्त्वा सिद्धीश्वरो भवेत्। यद्यत् प्रकारमुद्दिश्य वदामि सुरसुन्दर!। तत्तत् कार्य्यञ्च कर्त्तव्यं भिन्नबुद्धिं न कारयेत्। तथा। शृणु नाथ! कुलार्थं मे कुमारीपूजने मनुम्। महा-विद्यामहामन्त्रं सिद्धिमन्त्रं न संशयः। एतन्मन्त्रप्रभावेण जीवन्मुक्तो भवेत् सुधीः। अन्ते देवीपदं याति सत्यमान-न्दभैरव!। ऐहिके सुखसम्पत्तिं मधुमत्याः प्रसादकम्। अवश्यं प्राप्नुयान्मर्त्त्यो विश्रामं कुरु शङ्कर!। वाग्भवेन वपुः-क्षोभं मायावीजे गुणाष्टकम्। श्रियो वीजे श्रियो लाभो माया-वीजे रिपोः क्षयः। भैरवेण तु वीजेन खेचरत्वं सुरादिभिः। कुमारिका ह्यहं नाथ! सदा त्वं हि कुमारकः। शतमष्टोत्तरां वापि एकां वा परिपूजयेत्। पूजिताः प्रतिपूज्यन्ते निर्दहन्त्य-वमानिताः। कुमारी योगिनी साक्षात् कुमारी परदेवता। असुरा दुष्टनागाश्च ये ये दुष्टग्रहा अपि। भूतवेतालगन्धर्वा डाकिनी यक्षराक्षसाः। याश्चान्या देवताः सर्वा भूर्भुवः स्वश्च भैरवाः। पृथिव्यादीनि सर्वाणि ब्रह्माण्डं सचराचरम्। ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः। ते तुष्टाः सर्वतुष्टाश्च यस्तु कन्यां प्रपूजयेत्। विधियुक्तां कुमारीं तु भोजयेच्चैव भैरव!। पाद्यार्घ्यञ्च तथा धूपं कुङ्कुमं चन्दनं शुभम्। भक्ति-भावेन सम्पूज्य कुमारीभ्यो निवेदयेत्॥ कुमारीपूजाक्रमस्तु॥ तथा॥ आनीय सुन्दरीं नारीं कुमारीं वरनायिकाम्। रत्ना-लङ्कारसंयुक्तां शुक्लवस्त्रादिशोभिताम्। वाग्भवेन जलं नाथ तन्नाम्ना परिदापयेत्। देवीबुद्ध्या सदा ध्यात्वा पूजयेत् साध-कोत्तमः। मायावीजेन तन्नाम्ना पाद्यं दद्यात्तथा प्रभो!। लक्ष्मीवीजेन चार्घ्यन्तु कूर्च्चवीजेन चन्दनम्। मायावीजेन पुष्पाणि कुमार्य्यै दापयेत् सुधीः। सदाशिवेन मन्त्रेण धूप-

दीपौ महत्तमौ। दत्त्वा षड़ङ्गमन्त्रेण पूजयेद्देवनायकम्। तत्प्रकारं महादेव! शृणुष्वानन्दरूपधृक्। महातेजोमयं शुभ्रं हृदयं हस्तदक्षिणे:। विभाव्य प्रपठेद् नत्वा तन्मन्त्रं शृणु शङ्कर!। आदौ वाग्भवमुच्चार्य्य मायां लक्ष्मीञ्च कूर्च्चकम्। प्रेतबीजं ततो ब्रूयात् सविसर्गेन्दुकीलकम्। कुलशब्दं समुच्चार्य्य कुमारिके ततो वदेत्। हृदयाय नमः प्रोच्य ततः शिरसि भावयेत्। शुक्लवर्णं सर्व्वमयं बीजमुच्चार्य्य संन्यसेत्। इकारं वाग्भवाद्यञ्च वकारं वाग्भवात्मकम्। मायां लक्ष्मीं वाग्भवञ्च द्विठान्तं शिरसे पदम्। वह्निजायावधिर्मन्त्रो न्यसेत् शिरसि साधकः। शिखामध्ये कृष्णवर्णं नीलाञ्जनचयप्रभम्। विभाव्य सन्न्यसेन्मन्त्री कुमारीकुलसिद्धये। आदौ प्रणवमुद्धृत्य तदन्ते त्रिपुरसुन्दरी। शिखायै पदमुद्धृत्य वषट्कारं ततो वदेत्। ततः कवचमध्ये च बलवन्तं सुतेजसम्। प्रथमारुणसङ्काशं ध्यात्वा चारु कलेवरम्। वाग्भवञ्च समुच्चार्य्य कुलशब्दं ततो वदेत्। वागीश्वरिपदं पश्चात् कवचाय ततो वदेत्। तारकब्रह्मशब्दञ्च कवचन्यासजालकम्। ततो नेत्रत्रये ध्यात्वा महाबीजं महाप्रभम्। रक्तवर्णं कोटिकोटि जवामण्डलमण्डितम्। विराजितं कोटिपुण्यार्जिततेजसि भास्करे। वाग्भवं हि समुच्चार्य्य कुलेश्वरिपदं ततः। नेत्रत्रयाय शब्दान्ते वौषड् लोचनमन्त्रकम्। ततः साधकमन्त्री च वामहस्ततले तथा। मध्यमातर्ज्जनीभ्याञ्च तालद्वयमुपाचरेत्। तन्मन्त्रं कोटिसूर्य्योग्रज्योत्स्नाजालसमप्रभम्। महाकाशोद्भवं शब्दमहोग्रपरिपीड़नम। मायाबीजं तथास्त्राय पदमुद्धृत्य यत्नतः। फड़न्ते चान्तमुद्धृत्य महामन्त्रं प्रकीर्त्तितम्। ततस्तस्याः कुण्डविले ध्यात्वा च परिवारकान्! पूजयेद् यत्नतो मन्त्री तेजसाऽमृतधारया। तर्पयेत् पूजयेत्तत्र भैरवं बालभैरवम्। देवताभिः

पूजयित्वा परिवारान् क्रमेण तु। ततो वाग्भवमुच्चार्य्य सिद्ध-
जयाय शब्दतः। पूर्व्वं पदं समुच्चार्य्य वक्राय नम ईरितम्।
ततो वाग्भवमुच्चार्य्य जयाय शब्दमुद्धरेत्। उत्तरे वक्रमुद्धृत्य
चतुर्थ्यन्तं नमः पदम्। ततो वाग्भवमायाश्रीवीजमुच्चार्य्य
यत्नतः। कुब्जिके पश्चिमान्ते च वक्राय नम ईरितम्। ततो
वाग्भवमुच्चार्य्य कालिकेपदमुद्धरेत्। दक्षवक्राय शब्दान्ते
नमो मन्त्रः प्रकीर्त्तितः। एतन्मन्त्राक्षराणाथ! समुच्चार्य्य कुले-
श्वर!। पूजयित्वा क्रमेणैव भास्करं परिपूजयेत्। चण्डं दिक्-
पालदेवञ्च सन्ध्यादीन् परिपूजयेत्। वीरभद्रां महाकन्यां
कौलिनीं कुलगामिनीम्। अष्टादशभुजां कालीं चण्डदुर्गां
प्रपूजयेत्। नैवेद्यादीन् समानीय नानाभक्त्यानुराजितम्।
दुग्धं घनावृतं क्षीरं पक्वान्नं पक्वसत्फलम्। यद्यत्कालोप-
योग्यञ्च सर्व्वदा मधुमिश्रितम्। पञ्चतत्त्वं कुलद्रव्यं निजकल्या-
णवर्द्धनम्। नानाद्रव्यञ्च नैवेद्यं स्वस्वकल्पोक्तसाधितम्। कुमा-
रीभ्यो निवेद्यैव नानासौरभशोभितम्। शीतलं जलमानीय
दद्यात्ताभ्यो महासुधीः। ततो हितं महामन्त्रं कुमार्य्योश्चाति-
दुर्लभम्। अथ वाग्मी समूलञ्च जप्त्वा सिद्धीश्वरो भवेत्। समर्प्य
प्राणवायूनां धारणं कारयेत् स्वयम्। अष्टाङ्गादिप्रणामञ्च
कुर्व्वन् स्तोत्रं पठन्नमेत्॥ प्रणाममन्त्रोऽपि तत्रैव॥ नमामि
कुलकामिनीं परमभाग्यसन्दायिनीम्। कुमाररतिचातुरीं
सकलसिद्धिमानन्दिनीम्। प्रवालगुटिकास्रजं रजतरागवस्त्रा-
न्विताम्। हिरण्यकुलभूषणां भुवनवाक् कुमारीं भजे। इति
मन्त्रेण सन्नम्य तारिणीं परिपूजयेत्। शिवं गणेशं सम्पूज्य
प्रणमेत् साधकोत्तमः। दक्षिणां विधिवद्दत्त्वा कुमारीभ्यः
क्रमेण तु। विवाहयेत् स्वयं कन्यां ब्रह्महत्यां विनश्यति।
यो यत्र पुण्यकाले तु कन्यादानं समापयेत्। भुक्तिमुक्तिफलं

तस्य सौभाग्यं सर्वसम्पदः। रुद्रलोके वसेन्नित्यं त्रिनेत्रो भगवान् हरः। तीर्थकोटिसहस्राणि अश्वमेधशतानि च। तत्फलं लभते मर्त्यो यस्तु कन्यां विवाहयेत्। बालुका सागरे यावत् तावदब्दसहस्रकम्। एकैकं कुलमुद्धृत्य रुद्रलोके महीयते। तत्तदिष्टदेवतायाः प्रीतये तुष्टये सुधीः। कन्यादानं समाहृत्य मुक्तिमाप्नोति भैरव!। तत्तद्वितीयकन्यायास्तत्तदबुद्ध्या च साधकः। विभाव्य शिवरूपत्वं सम्प्रदानीयकन्यके। पूर्णरूपं शिवं ध्यात्वा वरं सर्वाङ्गसुन्दरम्। तेजोमयं यशःकान्तं बालभैरवरूपिणम्। वटुकेशं महादेवं वरयेत् साधकाग्रणीः। बालरूपाञ्च त्रैलोक्यसुन्दरीं वरवर्णिनीम्। नानालङ्कारनम्राङ्गीं भद्रविद्याप्रकाशिनीम्। चारुहास्यां महानन्दहृदयां शुभदां शुभाम्। ध्यात्वा द्वादशपत्राब्जे पूर्णचन्द्रनिभाननाम्। सम्प्रदानं समानीय तत्तन्मन्त्रेण दापयेत्॥ इति कुमारीदानक्रमफलम्॥

अथ कुमारीमन्त्रपुरश्चरणम्॥ अष्टमपटले॥ अथ वक्ष्ये महादेव्याः कुमार्य्या जपहोमकम्। लक्षसंख्यं जपं कृत्वा मायां वा वाग्भवं मनुम्। कालीबीजं वापि नाथ! अथवा कामबीजकम्। सदाशिवेन पुटितं विन्दुचन्द्रविभूषितम्। अथवा प्रणवेनापि पुटितं त्रिदशेश्वर!। लक्षसंख्यं क्रमेणैव जप्त्वा सिद्धीश्वरो भवेत्। जपेत्तन्मन्त्रं देवेश! लक्षसंख्याविधानतः। तद्दशांशेन जुहुयाद् घृताक्तविल्वपत्रकैः। अथवा श्वेतपुष्पैश्च कुन्दपुष्पैर्महाफलम्। एवं क्रमेण जुहुयात् करवीरप्रसूनकैः। घृताक्तैः केवलैर्वापि चन्दनागुरुमिश्रितैः। हविष्याशी दिवाभागे रात्रौ पूजापरो भवेत्। निजपूजामशेषैस्तु कुलद्रव्यैः प्रपूजयेत्। रविसंख्यं जपेत्तत्र परमानन्दरूपधृक्। जपान्ते जुहुयान्मन्त्री मदुक्तद्रव्यसंयुतैः। ततः प्राणात्मकं वायुं शोधयित्वा पुनः

पुनः। प्राणायामत्रयं कृत्वा चाष्टाङ्गैः प्रणमेन्मुदा। प्रणामसमये नाथ! इदं स्तोत्रं पठेद् यदि। कवचञ्च तथा पाठ्यं कुमारीणामथापि वा। निजदेव्या महास्तोत्रं पीठाङ्गं कवचं ततः। कुमारीणामहं देव! सहस्रं नाम साष्टकम्। पठित्वा सिद्धिमाप्नोति नात्र कार्य्या विचारणा। तदशक्तौ निजदेव्याः सहस्रनाममङ्गलम्। अष्टोत्तरं पठेन्नाथ! सिद्धिकाङ्क्षी न संशयः। तासां स्तोत्रं दिव्यनाथ! शृणु सर्वत्र मङ्गलम्। अकस्मात् सिद्धिमाप्नोति पठित्वा साधकोत्तमः। अग्रे संस्थाप्य ताः सर्वा रत्नकोटिसुशीतलाः। ततस्तोत्रं पठेद्धीमान् समाहितमना वशी। महादिव्याचाररतो वीरभावोत्थणोऽपि वा। एवं क्रमेण प्रपठेद्भक्तिभावपरायणः। महाविद्या महासेवा भक्तिश्रद्धार्पितार्पितः। महाज्ञानी भवेत् क्षिप्रं वाञ्छासिद्धिमवाप्नुयात्॥

अथ कुमारीपूजाप्रयोगः॥ तत्र एकवर्षावधि षोड़शवर्षपर्य्यन्तमजातपुष्पा कुमारीसंज्ञा तत्र वर्द्धक्रमेण नामानि यथा॥ सन्ध्या॥ १॥ सरस्वती॥ २॥ त्रिधा मूर्त्तिः॥३॥ कालिका॥४॥ सुभगा॥ ५॥ उमा॥ ६॥ मालिनी॥ ७॥ कुब्जिका॥ ८॥ कालसन्दर्भा॥ ९॥ अपराजिता॥ १०॥ रुद्राणी॥ ११॥ भैरवी॥ १२॥ महालक्ष्मीः॥ १३॥ पीठनायिका॥ १४॥ क्षेत्रज्ञा॥ १५॥ अम्बिका॥ १६॥ प्रतिपदादिपञ्चदश्यन्तं वृद्धिक्रमेण पूजनीयाः। कुमारी तु सर्वजातीयैव प्रशस्ता। नटीकन्या कापालिककन्या रजककन्या नापितकन्या गोपालकन्या ब्राह्मणकन्या शूद्रकन्या वैश्यकन्या वणिक्कन्या चण्डालकन्या सुदुर्गकन्या। कुमारीमासने समुपवेश्य ध्यायेद् यथा॥ बालरूपाञ्च त्रैलोक्यसुन्दरीं वरवर्णिनीम्। नानालङ्कारनम्राङ्गीं भद्रविद्याप्रकाशिनीम्। चारुहास्यां महानन्दहृदयां शुभदां शुभाम्। एवं ध्यात्वात्मशिरसि पुष्पं दत्त्वा मानसोपचारेण

सम्पूज्य पुनर्ध्यात्वा कुमार्य्यङ्गे दत्त्वा इदमासनम् ऐं क्लीं श्रीं हुं ह्सौः सन्ध्यायै कुमार्य्यै नमः। एवं पूर्ववीजान्युच्चार्य्य सरस्वत्यै कुमार्य्यै नम इत्यादिवत्सरानुक्रमेण चतुर्थ्यन्तेन नाम्ना आसनादिभिः षोड़शैरुपचारैः सम्पूजयेत्। एतज्जलं ऐं सन्ध्यायै नमः। एतत्पाद्यं क्लीं सन्ध्यायै नमः। एवमाभरणम्। एष गन्धः हुं सन्ध्यायै नमः। एतानि पुष्पाणि क्लीं सन्ध्यायै वौषट्। एष धूपः ह्सौः सन्ध्यायै नमः। एवं दीपः। एतन्नैवेद्यं ऐं क्लीं श्रीं हुं ह्सौः सन्ध्यायै निवेदयामि। अक्षमाल्यकज्ज्वल कुङ्कुमादिकमनेन नमोऽन्तेन मन्त्रेण देयम्। सर्वत्र चतुर्थ्यन्तनामान्ते कुमार्य्यै इति विशेषणं दातव्यम्। ततः षड़ङ्गपूजा तत्क्रमस्तु कुमार्य्या हृदयं दक्षिणहस्तेन धृत्वा महातेजोमयं शुक्लवर्णं विभाव्य ऐं क्लीं श्रीं हुं ह्सौः कुलकुमारिके हृदयाय नमः। शिरः शुक्लवर्णं सर्वमयं विभाव्य ह्रैं वैं क्लीं श्रीं ऐं शिरसे स्वाहा। शिखां नीलाञ्जनचयप्रभां विभाव्य ॐ श्रीं शिखायै वषट्। कवचं प्रथमारुणसङ्काशं सुतेजस्कं विभाव्य ऐं कुलवागीश्वरि कवचाय हुं। ततो नेत्रत्रयं सर्ववीजमयं महाप्रभं रक्तवर्णं कोटि कोटि जवापुष्पोज्ज्वलं विभाव्य ऐं कुलेश्वरि नेत्रत्रयाय वौषट्। क्लीं अस्त्राय फड़िति वामहस्ततले तर्जनीमध्यमाभ्यां तालद्वयं दद्यात्। ततस्तस्याः कुण्डविले सपरिवारं बालभैरवं ध्यात्वा एते गन्धपुष्पे ॐ सपरिवारबालभैरवाय नमः इति पूजयेत्। एते गन्धपुष्पे ऐं सिद्धजयाय पूर्ववक्त्राय नमः। एवं जयायोत्तरवक्त्राय। ऐं क्लीं श्रीं कुब्जिके पश्चिमवक्त्राय। ऐं कालिके दक्षिणवक्त्राय। श्रीं भास्कराय प्रत्येकं दिक्पालेभ्यः वीरभद्रायै महाकन्यायै कौलिन्यै कलमामिन्यै अष्टादशभुजायै काल्यै चण्डदुर्गायै औंकारादिनमोऽन्तेन पूजयेत्। ततः कुमारीमूलमन्त्रं स्वीयमन्त्रं वा

यथाशक्ति जप्त्वा प्राणायाम कृत्वा जपं समर्प्य स्तवकवचादिकं पठित्वा अष्टाङ्गं पञ्चाङ्गं वा प्रणम्य दक्षिणां दद्यात् ॥

अथ कुमारीस्तोत्रम् ॥ भैरव्युवाच ॥ देवेन्द्रादय इन्दुकोटिकिरणां वाराणसीवासिनीं विद्यां वाग्भवकामिनीं त्रिनयनां सूक्ष्मक्रियागामिनीम् । चण्डोद्वेगनिकृन्तनीं त्रिजगतां धात्रीं कुमारीं वरां मूलाम्भोरुहवासिनीं शशिमुखीं सम्पूजयन्ति श्रियै ॥ १ ॥ भाव्यां देवगणैः शिवेन्द्रयतिभिर्मोक्षार्थिभिर्वालिकां सन्ध्यां नित्यगुणोदयां द्विजगणश्रेष्ठोदयांशारुहाम् । शुक्लाभां परमेश्वरीं शुभकरीं भद्रां विशालाननां गायत्रीं गणमातरं दिनगतिं कृष्णाक्ष हृद्यां भजे ॥ २ ॥ वालां वालकपूजितां गुणयुतां विद्यावतां मोक्षदां धात्रीं शुक्लसरस्वतीं सुरवरां वाग्वादिनीं चण्डिकाम् । स्वाधिष्ठानहरप्रियां प्रियकरीं वेदान्तविद्याप्रदां नित्यं मोक्षहिताय योगवपुषा चैतन्यरूपां भजे ॥ ३ ॥ नानारत्नसमूहनिर्मितगृहे पूज्यां सुरैर्वालिकां वन्दे नन्दनकानने मनसि संसिद्धान्तवीजात्मके । अर्थं देहि निरर्थकाय वपुषे हित्वा कुमारीकलां मह्यं मातृकुमारिके च त्रिविधा मूर्त्या च तेजोमयी ॥ ४ ॥ हालाहालकरालिकां कुलपथोल्लासैकवीजोद्भवां मांसामोदकरालिनीं हि भजतां कामातिरिक्तप्रदाम् । वालोऽहं वटुकेश्वरस्य चरणाम्भोजाश्रितोऽहं सदा हित्वा वालकुमारिके ! शिरसि शुक्लाम्भोरुहे सम्भजे ॥ ५ ॥ सूर्य्याह्लादवलाकिनीं कलिमहापापादितापापहां तेजोगां भुवि सूर्य्यगां भयहरां तेजोमयीं कालिकाम् । वन्दे हृत्कमले सदा रविदले वालेन्द्रविद्यां सतीं साक्षात् सिद्धिकरीं कुमारि विमले त्वामाद्यरूपेश्वरीम् ॥ ६ ॥ नित्यं श्रीकुलकामिनीं कुलवतीं कौलासुमामम्बिकां नानायोगविलासिनीं सुरमणीं नित्यां तपस्यान्वितताम् । वेदान्तार्थविशेषदेशवसनाभाषाकि-

शेषस्थितां वन्दे पर्वतराजराजतनयां कालीप्रये त्वामहम् ॥७॥ कौमारीं कुलमालिनीं रिपुगणक्षोभाग्निसन्दायिनीं रक्ताभा-नयनां शुभां परमसार्गाम्मुक्तिसंज्ञाप्रदाम्। भार्य्यां भोगवतीं पतिं त्रिभुवनेष्वामोदपञ्चाननं पञ्चास्यप्रियकामिनीं भयहरां सर्पादिहारां भजे ॥ ८ ॥ चन्द्रास्यां चरणद्वयाम्बुजमहाशो-भाविनोदीं नदीं मोहादिक्षयकारिणीं वरकरां श्रीकुब्जिकां सुन्दरीम्। ये नित्यं परिपूजयन्ति सहसा राजेन्द्रचूड़ामणिं तेषां हि धनमायुषं त्रिजगतां व्याप्तेश्वरत्वं जगुः ॥ ९ ॥ योगीशं भुवनेश्वरं प्रियकरं श्रीकालसन्दर्भदं शोभासागरगामिनं सुर-तरोर्वाञ्छाफलोद्दीपनम्। लोकानामघनाशनाय शिवया श्री-संज्ञया विद्यया धर्मप्राणसुदैवतं प्रणमतां कल्पद्रुमं भावये ॥१०॥ विद्यान्तामपराजितां मदनमोदमत्ताननां हृत्पद्मस्थितपादुकां कुलकलां कात्यायनीं भैरवीम्। ये ये पुण्यधियो भजन्ति परमानन्दाब्धिमध्ये मुदा सर्वाच्छादिततेजसा भयकरीं मोक्षा-य सत्कीर्त्तये ॥ ११ ॥ रुद्राणीं प्रणमामि पञ्चवदनां कोट्यर्क-तेजोमयीं नानालङ्कृतभूषणां कुलभुजामानन्दसन्दायिनीम्। श्री-मायां कमलान्वितां हृदिगतां सन्तानवीजक्रियां वन्दे वाग्भव-रूपिणीं कुलवधूं हुँकारवीजोद्भवाम् ॥ १२ ॥ नमामि वरभैरवीं चितितलाघकालानलां मृणालकुसुमारुणां भुवनदोषसंशोध-नीम्। जगद्भयहरां परां तरति या च योगीश्वरी ममापदसह-सकं सकलभोगदां तामहम् ॥ १३ ॥ साम्राज्यं प्रददाति या भगवती विद्या महालक्षणा साक्षादष्टसमृद्धिदा भुवि महा-लक्ष्मीः कुलक्षोभहा। स्वाधिष्ठानसुपङ्कजे विवसिता विष्णो-रनन्तश्रिये वन्दे राजपदप्रदां शुभकरीं कौलेश्वरीं सर्वदा ॥१४॥ पीठानामधिपाधिपामसुरहां विद्यां शुभां नायिकां सर्वालङ्करणा-न्वितां त्रिजगतां क्षोभापहां वारुणीम्। वन्दे पीठगनायिकां

त्रिभुवनच्छायाभिराच्छादितां सर्वेषां हितकारिणीं जयस्तामानन्दरूपेश्वरीम् ॥१५॥ चेतन्नां मदविह्वलां कुलवतीं सिद्धिप्रियां प्रेयसीं शम्भोः श्रीवटुकेश्वरस्य महतामानन्दसञ्चारिणीम्। साक्षादात्मपरोक्षमां निजमनःक्षोभापहां शाकिनीम्। वाक्यार्थप्रकटामहं रजतभां वन्दे महाभैरवीम् ॥ १६ ॥ सम्पूर्णविधुवन्मुखीं कमलमध्यसम्भाविनीं शिरोदशशते दलेऽमृतमहाब्धिधाराधराम्। प्रणामफलदायिनीं सकलराज्यवश्यां गुणां नमामि परमाम्बिकां विषयपाशसंहारिणीम् ॥ १७ ॥ साक्षादहं त्रिभुवनेऽमृतपूर्णदेहां सन्ध्यादिदैविकमलां कुलपण्डितेन्द्राम्। तन्नो भजे दशशते दलमध्यमध्ये कौलेश्वरीं सकलदिव्यजनाश्रयां त्वाम् ॥ १८ ॥ विश्वेश्वरीं सुरकुले वरबालिके त्वां सिद्धानले प्रतिदिनं प्रणमामि भक्त्या। भक्तिं धनं जयपदं यदि देहि दास्यं तस्मिन् महामधुमती लघुगेहभार्य्याम् ॥ १९ ॥ एतत् स्तोत्रप्रसादेन कवितावाक्पतिर्भवेत्। महासिद्धीश्वरो दिव्यो वीरभावपरायणः। सर्वत्र जयमाप्नोति स हि स्यावरवल्लभः। वाचामीशो भवेत् क्षिप्रं कामरूपी भवेन्नरः। पशुरेव महावीरो दिव्यो भवति निश्चितम्। क्रमशो ह्यष्टसिद्धिः स्याद्वाग्मी भवति नश्चितिम्। सर्वा विद्याः प्रसीदन्ति तुष्टाः सर्वदिगीश्वराः। वह्निः शीतलतां याति जलस्तम्भं स कारयेत्। धनवान् पुत्रवान् राजा इहलोके भवेन्नरः। स गच्छति च वैकुण्ठे कैलासे शिवसन्निधौ। मुक्तिरेव महादेव! यो नित्यं सर्वदा पठेत्। महाविद्यापदाम्भोजं स हि पश्यति निश्चितम्। शृणु नाथ! प्रवक्ष्यामि कुमारीतर्पणादिकम्। यासां तर्पणमात्रेण कुलसिद्धिर्भवेत् ध्रुवम्। कुलवालां मूलपद्मस्थितां कामविहारिणीम्। शतधा मूलमन्त्रेण तर्पयामि तव प्रिये ॥ ११ ॥ मूलाधारमहातेजश्छटामण्डलमण्डिताम्। सन्ध्यादेवीं तर्पयामि काम-

वीजेन मे शुभे ॥२॥ मूलपङ्कजयोगाङ्गीं कुमारीं श्रीसरस्वतीम् । तर्पयामि कुलद्रव्यैस्तव सन्तोषहेतुना ॥३॥ चारुमूलाधार-पद्मे त्रिमूर्त्तिं वालनायकाम् । सर्वकल्याणदां देवीं तर्पयामि परामृतैः ॥ ४ ॥ स्वाधिष्ठानमहापद्मषड़्दलान्तःप्रकाशिनीम् । श्रीवीजेन तर्पयामि भोगमोक्षाय केवलम् ॥५॥ स्वाधिष्ठान-कुलोल्लासविष्णुसङ्केतगामिनीम् । कालिकां निजवीजेन तर्पयामि कुलामृतैः ॥६॥ स्वाधिष्ठानाख्यपद्मस्थां महातेजोमयीं शिवाम् । सूर्य्याणां शीर्षमधुना तर्पयामि कुलेश्वरीम् ॥७॥ मणिपुराब्जमध्येषु मनोहरकलेवराम् । उमादेवीं तर्पयामि मायावीजेन पार्वतीम् ॥८॥ मणिपूराम्भोजमध्ये त्रैलोक्यपरि-पूजिताम् । मालिनीं मलचित्तस्य सद्बुद्धेस्तर्पयाम्यहम् ॥९॥ मणिपूरस्थितां रौद्रीं परमानन्दवर्द्धिनीम् । आकाशगामिनीं देवीं कुब्जिकां तर्पयाम्यहम् ॥१०॥ तर्पयामि महादेवीं मन्त्र-साधनतत्पराम् । योगिनीं कालसन्दर्भां तर्पयामि कुलाननाम् ॥११॥ शक्तिमन्त्रप्रदां रौद्रीं लोलजिह्वासमाकुलाम् । अपरा-जितां महादेवीं तर्पयामि कुलेश्वरीम् ॥१२॥ महाकौलप्रियां सिद्धां रुद्रलोकसुखप्रदाम् । रुद्राणीं रुद्रकिरणां तर्पयामि मधुप्रियाम् ॥१३॥ षोड़शस्वरसंसिद्धिं महारौरवनाशिनीम् । महामद्यपानचित्तां भैरवीं तर्पयाम्यहम् ॥१४॥ त्रैलोक्यवरदां देवीं श्रीवीजमालयावृताम् । महालक्ष्मीं भद्रेश्वर्य्यां तर्पयाम्यह-मम्बिके ॥१५॥ लोकानां हितकर्त्रीञ्च हिताहितजनप्रियाम् । तर्पयामि रमावीजं पीठाद्यां पीठनायिकाम् ॥१६॥ जयन्तीं वेदवेदाङ्गमातरं सूर्य्यमातरम् । तर्पयामि सुधाभिश्च चेतन्यां माययावृताम् ॥१७॥ तर्पयामि कुलानन्दपारगां परमाननाम् । तर्पयाम्यम्बिकां देवीं महालक्ष्मीं हृदि स्थिताम् ॥१८॥ सर्वेषां चरणद्वयाम्बुजतलं चैतन्यविद्यावतां सौख्यार्थं शुभषोडशस्वर-

युतं श्रीषोड़शीमङ्गलम्। आनन्दार्णवपद्मरागखचिते सिंहासने शोभिते त्वां नित्यं परितर्पयामि सकलश्वेताम्रमध्यासने ॥१९॥ ये नित्यं सुप्रतिष्ठितचारुसकलस्तोत्राङ्गसन्तर्पणं विद्यादाननिदानमोक्षपरमं मायामयं या न्तिवे। नो सन्ति क्षितिमण्डलेश्वरिगणाः सर्वे विपत्कारकाः। राजानं वशयन्ति योगसकलैर्नित्या भवन्ति क्षणात् ॥२०॥ तर्पणात्मकमोक्षाख्यं पठन्ति यदि मानुषाः। अष्टैश्वर्य्ययुतो भूत्वा वत्सरात् च प्रपश्यति। महायोगी भवेन्नाथ! मासादभ्यासतः प्रभो! ॥ त्रैलोक्यं क्षोभयेत् क्षिप्रं वाञ्छाफलमवाप्नुयात्। यः पठेदेकभावेन स तर्पणफलं लभेत्। पूजाफलमवाप्नोति कुमारीस्तोत्रपाठतः। यो न कुर्य्यात् कुमार्य्यर्चां स्तोत्रञ्च नित्यमङ्गलम्। स भवेत्पशुकल्पो हि सत्य,स्तस्य पदे पदे॥ इति रुद्रयामले उत्तरखण्डे महाकुलोद्दीपने कुमार्य्युपचर्य्याविन्यासे सिद्धमन्त्रप्रकरणे दिव्यभावनिर्णये भैरवभैरवीसंवादे कुमारीस्तोत्रं समाप्तम् ॥

अथातः सम्प्रवक्ष्यामि कुमारीकवचं शुभम्। त्रैलोक्यमङ्गलं नाम महापातकनाशनम्। पठनाद्धारणाल्लोका महासिद्धाः प्रभाकराः। शक्रो देवाधिपः श्रीमान् देवगुरुर्वृहस्पतिः। सम्यक्तेजोमयो वह्निधर्मराजो भयानकः। वरुणो देवपूज्यो हि जलानामधिपः स्वयम्। सर्वहर्त्ता महावायुः कुमारः कुञ्जरेश्वरः। धनाधिपः प्रियः शम्भोः सर्वे देवा दिगीश्वराः। त्वमेकः प्रभुरेकात्मा सर्वशो निर्मलोदयः। एतत् कवचपाठेन सर्वे भूपा धनाधिपाः। प्रणवो मे शिरः पातु मायासम्पात्मिका सती। ललाटोर्द्धं महामाया पातु मे श्रीसरस्वती। कामाख्या वटुकेशानो त्रिमूर्त्तिर्भालमेव तु। चामुण्डाबीजरूपा च वदनं कालिका मम। पातु मां सूर्य्यगा नित्यं तथा नेत्रद्वयं

मम। कर्णयुग्मं कामवीजस्वरूपा मां तपस्विनी। रसनाग्रं तथा पातु वाग्देवी मालिनी मम। ताल्वग्रं कामरूपा च दन्ताग्रं कुब्जिकाऽवतु। देवी प्रणवरूपा सा पातु नित्यं शिरो मम। ओष्ठाधरं शक्तिवीजात्मिका स्वाहा स्वरूपिणी गलदेशं महारौद्री पातु मे चापराजिता। च्चौंवीजं मे सदा कण्ठं रुद्राणी स्वाहयान्विता। हृदयं षोड़शी विद्या पातु षोड़शसुस्वरा। द्वौ वाहू पातु सर्वत्र महालक्ष्मीः प्रधानिका। सर्वमन्त्रस्वरूपा मे चोदरं पीठनायिका। पार्श्वयुग्मं तथा पातु रुद्रदेवी वाग्भवात्मिका। कैशोरी कटिदेशं मे मायावीजस्वरूपिणी। जङ्घायुग्मं जयन्ती मे योगिनी कुल,कावृता। सर्वाङ्गमम्बिका देवी पातु मन्त्रार्थगामिनी। केशाग्रं कमला देव! नासाग्रं नरमोहिनी। चिवुकं चण्डिकादेवी कुमारी पातु मे सदा। हृदयं ललितादेवी पृष्ठं पर्वतवासिनी। त्रिशक्तिः षोड़शी देवी लिङ्गं गुह्यं सदावतु। श्मशाने चाम्बिका देवी गङ्गागर्भे च भैरवी। शून्यागारे पञ्चमुद्रा मन्त्रयन्त्रप्रकाशिनी। चतुष्पथे सदा पातु मामेव वज्रधारिणी। शवासनगता चण्डा मुण्डमालाविभूषिता। पातु मामेव लिङ्गे च ईश्वरी शक्तिरूपिणी। वने पातु महावाला महारण्ये रणप्रिया। महाजले तड़ागे च शत्रुमध्ये सरस्वती। महाकाशपथे पृथ्वी पातु मां शीतला सदा। रणमध्ये राजलक्ष्मीः कुमारी कुलकामिनी। अर्द्धनारीश्वरा पातु मम पादतलं मही। नवलक्षमहाविद्या कुमारीरूपधारिणी। कोटिसूर्य्यप्रतीकाशा चन्द्रकोटिसुशीतला। पातु मां वरदा वाणी वटुकेश्वरकामिनी। इति ते कथितं नाथ! कवचं परमाद्भुतम्। कुमार्य्याः कुलदायिन्याः पञ्चतत्त्वार्थपारगम्। यो यजेत् पञ्चतत्त्वेन स्तोत्रेण कवचेन च। आकाशगामिनी सिद्धि-

र्भवेत्तस्य न संशयः। वज्रदेही भवेत् क्षिप्रं कवचस्य प्रसादतः।
सर्वसिद्धीश्वरो योगी ज्ञानी भवति यः पठेत्। विवादे व्यवहारे
च संग्रामे कुलमण्डले। महापथे श्मशाने च योगसिद्धाङ्गवेषु
च। पठित्वा फलमाप्नोति सत्यं सत्यं कुलेश्वर!। वशीकरणकवचं
सर्वत्र जयदं शुभम्। पुण्यव्रती पठेन्नित्यं यतिः श्रीमान् भवेद्
ध्रुवम्। सिद्धविद्या कुमारी च ददाति सिद्धिमुत्तमाम्। पठेद्
यः शृणुयाद्वापि स भवेत् कल्पपादपः। भुक्तिमुक्तितुष्टिपुष्टिं
राजलक्ष्मीं सुसम्पदम्। प्राप्नोति साधकश्रेष्ठो धारयित्वा भवे-
ज्जयी। असाध्यं साधयेद्विद्वान् पठित्वा कवचं शुभम्। कुली-
नानां महासौख्यं धर्म्मार्थकाममोक्षदम्। योगिनीं दिवसे
नित्यं कुमारीं पूजयेन्निशि। उपचारविशेषेण त्रैलोक्यं वश-
मानयेत्। पललस्याशनेनापि मत्स्येन मुद्रया सह। नाना-
भक्ष्येण भोज्येन गन्धद्रव्येण साधकः। माल्येन स्वर्णरजताल-
ङ्कारेण सुचेलकैः। पूजयित्वा जपित्वा च तर्पयित्वा वराननाम्।
यज्ञदानतपस्याभिः प्रयोगेन महेश्वर!। स्तुत्वा कुमारीकवचं
यः पठेदेकभावतः। तस्य सिद्धिर्भवेत् क्षिप्रं राजराजेश्वरो
भवेत्। वाञ्छाफलमवाप्नोति यद्यन्मनसि वर्त्तते। भूर्ज्जपत्रे
लिखित्वा च कवचं धारयेद् यदि। शनिमङ्गलवारे च नव-
म्याष्टमीदिने। चतुर्दश्यां पौर्णमास्यां कृष्णपक्षे विशेषतः।
लिखित्वा धारयेद्विद्वान् उत्तराभिमुखो भवन्। महापातक-
युक्तोऽपि मुक्तः स्यात् सर्वपातकैः। योषिद्वामभुजे धृत्वा सर्व-
कल्याणमालभेत्। बहुपुत्रान्विता कान्ता सर्वसम्पत्तिसंयुता।
तथा श्रीपुरुषश्रेष्ठो दक्षिणे धारयेद्भुजे। ऐहिके दिव्यदेहः
स्यात् पञ्चाननसमप्रभः। शिवलोके परे याति वायुवेगी निरा-
मयः। सूर्य्यमण्डलमाभिद्य परं मोक्षमवाप्नुयात्। लोकाना-
मतिसौख्यदं भयहरं श्रीपादभक्तिप्रदं मोक्षार्थं कवचं शुभं

प्रपठनामानन्दसिन्धूद्भवम् । लोकानां कलिकालघोरकलुषध्वंसैकहेतुं जयं ये लोकाः प्रपठन्ति धर्म्ममतुलं मोक्षं व्रजन्ति क्षणात् ॥

इति रुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने कुमार्य्युपचर्य्याविन्यासे कुमारीकवचोल्लासे सिद्धमन्त्रप्रकरणे भावनिर्णयकुमारीकवचं समाप्तम् ॥

शक्तश्चेत् तदा दशमपटलोक्तं कुमारीसहस्रनाम पठेत् तदत्र ग्रन्थगौरवभिया न लिखितम् ॥

अथ ब्राह्मणप्रशंसा ॥ मत्स्यसूक्ते तृतीयचरणे प्रथमपटले ॥ ब्राह्मणा जङ्गमं तीर्थं निर्जलं सार्वकालिकम् । येषां वाक्योदकेनैव शुध्यन्ति मलिना जनाः ॥ योगिनीतन्त्रे पूर्वखण्डे त्रयोदशपटले ॥ सर्वदेवमयो विप्रो ब्रह्मविष्णुशिवात्मकः । ब्रह्मतेजःसमुद्भूतः सदाप्राकृतिको द्विजः । ब्राह्मणैर्भुज्यते यत्र तत्र भुङ्क्ते हरिः स्वयम् । तत्र ब्रह्मा च रुद्रश्च खचरा ऋषयो मुनिः। पितरो देवताः सर्वे भुञ्जते नात्र संशयः । सर्वदेवमयो विप्रस्तस्मात्तं नावमानयेत् ॥ सप्तमपटले ॥ अतोऽविद्यं सविद्यं वा ब्राह्मणं सर्वदा भजेत् । सन्तुष्टे ब्राह्मणे देवि ! सन्तुष्टाः सर्वदा सुराः । वितुष्टे ब्राह्मणे देवि ! वितुष्टा वयमेव हि । यद्यकार्य्यशतं देवि ! ब्राह्मणः समुपाचरेत् । आत्मनो हितकामिन तथापि तं न चोद्विजेत् । नावमानञ्च कर्त्तव्यं सर्वदा सुरसुन्दरि ! ब्राह्मणः सर्वदेवात्मा साक्षात्तेजोमयो हि सः ॥ त्रयोदशपटले ॥ ब्राह्मणञ्च कुमारीञ्च शक्तिमग्निं श्रुतिञ्च गाम् । नित्यमिच्छन्ति ते देवाः यजितुं कर्म्मभूमिषु ॥ बृहन्नीलतन्त्रे सप्तमपटले ॥ अध्यापकाय यो वृत्तिं दत्त्वाध्यापयति द्विजान् । किं न त्यक्तं भवेत्तेन धर्म्मार्थकाममिच्छता । पुण्यात् पुण्यतरं पुण्यं जानीहि सर्वसम्मतम् ॥ योगिनीतन्त्रे तथा ॥ ब्रह्म-

शाथो दुराधर्षः कोऽप्यतस्तं न कोपयेत्। वाग्वज्रं ब्राह्मणानां हि सदा जानीहि कामिनि!॥ त्रयोदशपटले॥ भवेद्यस्य ब्रह्मशापो निष्कृतिस्तस्य दूरतः। सच्चक्रेणापि दष्टस्य प्रतिकारो हि तत्क्षणात्। ब्रह्मशापप्रशस्तस्य कल्पान्ते स्यात् प्रतिक्रिया॥ कल्पसंख्या तु तत्रैवोक्ता॥ कल्पमेकं महेशानि! कलौ वर्षशतत्रयम्। नरकान्निष्कृतिर्नास्ति तस्य भावान्न संशयः। एवं तद्वंशजाः सर्वे पीड्यन्तेऽहर्निशं प्रिये!। नानाविधमहोत्पातैर्यावत् स्यात् सप्तपौरुषम्। तस्मात्तु ब्राह्मणं देवि! नावमन्येत कुत्रचित्॥ इति ब्राह्मणप्रशंसा॥

अथ तीर्थयात्रा॥ योगिनीतन्त्रे मध्यभागे द्वितीयपटले॥ श्रीभगवानुवाच॥ नित्यं निर्वर्त्य स्वगृहे पितॄन्नान्दीमुखानपि। अभ्यर्च्य विधिवद्भक्त्या पश्चाद्यात्रां समाचरेत्। उत्तरे च गते शुक्रे सानुकूले शुभग्रहे। गुरुपित्रोरनुज्ञातो ब्राह्मणानां विशेषतः॥ भोजयित्वा द्विजान् सप्त ततो यात्रां समाचरेत्। सिंहे धनुषि मेषे च न गच्छेत् पूर्वपीठकम्। घटे च मन्मथे कुम्भे न गच्छेत् पश्चिमं बुधः। वृषेऽङ्गनायां मकरे न गच्छेद्दक्षिणालयम्॥ कर्कटे कीटमीने च न गच्छेदुत्तरं सुधीः। चाप-गोकन्यकायाञ्च न गच्छेदग्निकोणकम्॥ मकरे कर्कटे मीने नैर्ऋत्यां परिवर्ज्जयेत्। वायव्यां कुम्भमेषे च चापे चैव विवर्ज्जयेत्। सिंहे मीने कर्कटे च ऐशान्याञ्च विवर्ज्जयेत्॥ एतत् शूलं विजानीयाद् योगिनीं शृणु शङ्करि!। न गच्छेन्मन्दवारे च पूर्वदेशं मम प्रिये!। पश्चिमं सवितुर्वारे दक्षिणं बुधवासरे॥ कुजाहे चोत्तरं देशं चन्द्रे चाग्निदिशं प्रिये!। जीववारे च नैर्ऋत्यां वायव्यां भृगुवासरे। शनिवारे तथैशान्यां सोमे चैव विशेषतः। पूर्वदेशं महेशानि! प्रतिपन्नवमीषु च॥ न गच्छेद् यात्रिको यात्रां योगिनीसम्मुखी यतः। चतुर्द्दशीं तथा षष्ठीं पश्चिमे

त् विवर्जयेत्॥ त्रयोदशीं पञ्चमीञ्च न गच्छेद्दक्षिणां दिशम्। द्वितीयां दशमीञ्चैव यत्नदेशं विवर्जयेत्। पूर्णिमां सप्तमीञ्चैव वायव्यां सर्वथा त्यजेत्। न गच्छेच्च तथैशान्याममावास्यां तथाष्टमीम्॥ विष्कम्भः प्रीतिरायुष्मान् प्रतिपत्सु विवर्जयेत्। सौभाग्यं शोभनञ्चैव द्वितीयामतिगण्डकम्। सुकर्मा च धृतिश्चैव तृतीयां परिवर्जयेत्। गण्डो वृद्धिर्ध्रुवश्चैव व्याघातश्च तथैव च॥ चतुर्थ्यां वर्जयेद्देवि पञ्चम्यां दूषणं तथा। वज्रसिद्धिव्यतीपाते षष्ठ्यां जानीहि शङ्करि!॥ वरीयान् परिघश्चैव सप्तम्यां परिवर्जयेत्। अष्टम्यां शिवसिद्धिञ्च साध्यञ्च परिवर्जयेत्॥ नवम्यां शुभशक्रञ्च दशम्यां ब्रह्ममेव वा। एकादश्यां तथैन्द्रन्तु द्वादश्यां वैधृतिं त्यजेत्। प्रतिपदि कृत्तिकाञ्च द्वितीयां ज्येष्ठसंज्ञिताम्॥ अयात्रिके तु नक्षत्रे प्रस्थानं न कदाचन। यात्रायान्तु न दुष्येत करणस्य च चिन्तनम्॥ जन्ममासे जन्मदिने जन्मनक्षत्रके तथा। अष्टम्याञ्च नवम्याञ्च सदा यात्रां विवर्जयेत्॥ आपत्काले च यात्रायां उषासम्पद्धि पश्चिमे॥ गोधुलीसमये चैव पूर्वदेशे महेश्वरि!। मध्याह्ने दक्षिणे चैव चापराह्ने तथोत्तरे। ऐशान्याञ्च तथा रात्रौ नैरृत्यां सन्ध्ययोर्द्वयोः। मध्यन्दिने तथाग्नेये वायव्यां प्रातरेव हि। वारुणादिषु योगे वा यथाकाले समाचरेत्। विना जातदिनं तत्र अष्टमीं नवमीं विना। प्राचीदिशं समागच्छन् यात्रां कुर्य्यादुदङ्मुखः। पश्चिमे प्राङ्मुखः कुर्य्यात् दक्षिणे पश्चिमामुखः। उत्तरे दक्षिणमुखो यात्रां कुर्य्यात् सुसिद्धये। कुसुमं यावकः शङ्खौ भेरी भूदेवभूमिपाः। गावश्छत्रं रथो यामं दक्षिणे सुभगाः स्मृताः। सिद्धान्नं मांसपिण्डञ्च भक्तभाजनजन्तवः। मृत्पिण्डं कुणपाहाराः सर्वाश्च दक्षिणे शुभाः। कन्या वै मिथुने वेश्या पूर्ण-

कुभास्त्रियस्तथा। पक्षिणः पशवश्चैव चरन्तो वामतः शुभाः। अग्रे दधिफले यात्रा शुभदा परिकीर्त्तिता। तथा क्रौञ्च-मयूराश्च युग्मं गच्छन्ति गच्छतः। तदा सिद्धिं विजानीया-दन्यथा विघ्नमादिशेत्। गृध्राः श्येनाश्च चिल्लाश्च पार्श्वे गच्छन्ति वै यदा। न कुर्य्याद् यात्रिको यात्रां बाधके वचसि स्थिते॥ पञ्चमपटले॥ कामरूपमध्ये॥ जनार्दनचिह्नशैलं निरूप्य॥ उत्तरे तस्य शैलस्य ऐशान्यां विरजस्य च। दक्षिणे चैव शैलस्य पश्चिमे शौभ्रलिङ्गकम्। एतन्मध्यतमं क्षेत्रं आगस्त्यं नाम वै परम्। त्रयं शतमितं क्षेत्रमशाम्भवमिदं स्मृतम्। एतद्दयां विजानीयादन्यल्लोहित्यमुच्यते। तत्र पिण्डप्रदानेन पितॄणां परमा गतिः। जनार्दनस्य हस्ते च स्वादु पिण्डं समर्पयेत्। एष पिण्डो मया दत्तस्तव हस्ते जनार्दन!। परलोके प्रभो! मह्यं त्वं हि दाता भविष्यसि। कलिशेषस्य पूर्वे तु धनुरष्ट-प्रमाणतः। सा शिला प्रेतभावेन पितॄणां तारणाय च। तत्र पिण्डप्रदानेन न प्रेतो जायते क्वचित्। चक्रतीर्थस्य चाग्नेये धनुर्द्वन्द्वप्रमाणतः। लिङ्गं लोलं परं तीर्थं तिलदुग्धैः प्रतर्पयेत्। जनार्दनं ततो वीक्ष्य मुच्यते वै ऋणत्रयात्। कलिद्वापरयोः सन्धौ धनुरर्द्धप्रमाणतः। शुक्रेण स्थापितं लिङ्गं शुक्रेशं नामतः श्रुतम्। देवं शुक्रेश्वरं दृष्ट्वा को न मुच्येत बन्धनात्। गोले-श्वरं तथा दृष्ट्वा मुच्यते ब्रह्महत्यया। अङ्गारेशञ्च सिद्धेशं गजादित्यं गजं तथा। मार्कण्डेयेश्वरं दृष्ट्वा पितॄणामनृणो भवेत्। गयागोलेश्वरं दृष्ट्वा स्नात्वा देवं जनार्दनम्। एतेन किं न विहितं नृणां सुकृतिकारणम्। ब्रह्मलोकं नयन्तीह पुरुषानेकविंशतिम्। पृथिव्यां यानि तीर्थानि चासमुद्रसरांसि च। चक्रतीर्थे च गच्छन्ति वारमेकं दिने दिने। पृथिव्याञ्च गया पुण्यं गयायां कूपकं तथा। कूपादष्टगुणा देवि। श्रेष्ठा

মাতৃগয়া শুভে!। পুত্রো মাতৃগয়াং গত্বা হ্যনৃণো ভবতি তৎক্ষণাৎ। গয়ায়াং পিণ্ডদানেন পিতৃণামনৃণো ভবেৎ। গয়ান্তং পিণ্ডদানঞ্চ গয়ান্তং তীর্থমেব চ॥ তথা॥ অত্রাগস্ত্যে মহাক্ষেত্রে স্বকং পিণ্ডং দদেত্তু যঃ। মাসদ্বয়াধিকং বর্ষমায়ুষো বর্দ্ধতে ক্রমাৎ। পিত্রোশ্চ জীবতোঃ পুত্রো ন কুর্য্যাদৌর্দ্ধদেহিকম্। বহুপুত্রে ত্বেকপুত্রে পুত্রে বা যোগসেবিতি। জন্মকুষ্ঠযুতে পুত্রে অপুত্রে বা মহেশ্বরি!। চত্বারিংশৎপরে দেবি! স্বয়মাত্মক্রিয়াং চরেৎ। স্বহস্তে তু বৃষোৎসর্গং যঃ করোত্যৌর্দ্ধদেহিকম্। পরলোকগতে দেবি! অক্ষয়ং তদপি স্মৃতম্। দম্পত্যোর্জীবতোঃ কুর্য্যাৎ বৃষোৎসর্গদ্বয়ং সদা। পিত্রোশ্চ জীবতোঃ পুত্রো ন কুর্য্যাদৌর্দ্ধদেহিকাম্। উদ্যতস্তু গয়াং গন্তুং শ্রাদ্ধং কৃত্বা বিধানতঃ। বিধায় কর্পটীবেশং গ্রামস্য চ প্রদক্ষিণম্। ততো গ্রামান্তরং গত্বা শ্রাদ্ধশেষস্য ভোজনম্। কৃত্বা প্রদক্ষিণং গচ্ছেৎ প্রতিগ্রহবিবর্জিতঃ। গৃহাচ্চারভিমাত্রঞ্চ অগস্ত্যগমনং প্রতি। স্বর্গারোহণসোপানং পিতৃণান্তু পদে পদে। দিবা রাত্রৌ সর্বদা চ আগস্ত্যে শ্রাদ্ধকৃদ্ভবেৎ। নিরামিষং কৃতং শ্রাদ্ধং তথা চ বিষ্ণুবর্জিতম্। শপন্তি পিতরস্তস্য নিরাশাঃ পিতরো গতাঃ। আমশ্রাদ্ধে চামমাংসং প্রদদ্যাদবিচারয়ন্। পিতরোঽধোমুখাস্তস্য তিষ্ঠন্তি নিয়তং প্রিয়ে!। সামিষঞ্চ কৃতং শ্রাদ্ধং ভুঙ্ক্তে যস্তু নিরামিষম্। তামিস্রনরকং গচ্ছেৎ পিতৃভিঃ সহ নান্যথা। নিরামিষং কৃতং যেন কুর্য্যাৎ শ্রাদ্ধং নিরামিষম্। কুর্য্যাদামিষভুক্ শ্রাদ্ধং সামিষন্তু বরাননে!॥ মৎস্যসূক্তে ষড়্বিংশতিপটলেঽপি॥ ন কুর্য্যাদামিষৈর্হীনং বর্ষশ্রাদ্ধং মহেশ্বরি!। পর্বশ্রাদ্ধং গয়াশ্রাদ্ধমামিষেণ প্রশস্যতে। তীর্থশ্রাদ্ধং নান্দীমুখং কুর্য্যাদামিষবর্জিতম্। নিরামিষকৃতং শ্রাদ্ধং যস্ত্বশ্নীয়াচ্চ সামিষম্। নিরাশাঃ পিতরো যান্তি শাপং দত্বা সুদারুণম্। শূদ্রৈর্নিমন্ত্রিতে বিপ্রে শ্রাদ্ধ-

धन्नोत्सवेषु च। ब्राह्मणं भोजयेद्यस्तु भुङ्क्ते विष्टां स शङ्करि!। माहिषं वृहदाजञ्च ऐणञ्च चमरं तथा। गोधां कूर्मञ्च शल्लञ्च शाशकं शौकरं तथा। वाराहञ्च तथा मेषं श्राद्धे देयानि सर्वशः। अकलौ तु गवां मांसं सारमेयञ्च तद्द्वयम्। हीनेन्द्रियञ्च छगलमक्लृप्तं तञ्च वर्जयेत्। कृष्णच्छागस्य मांसेन मार्गेणैकेन षट्समाः। चामरेण शतं वर्षं सहस्रं गोधिका प्रिये!। षण्मासञ्च वरारोहे! कूर्मेण मासमात्रकम्। शौकरेण तु षण्मासं शाशकेन नवैव तु। द्वाविंशच्छाल्लकेनैव क्षुद्रवाराहकैस्तथा। शताब्दं चामरेणैव स्थूलमांसन्तु वर्जयेत्। यत्र वर्ज्यं भवेत् पुंभिश्चतुर्भिः षड्भिरेव च। अतिस्थूलमिति प्रोक्तं तस्मात्तत् पूर्वसूरिभिः। महिषस्य च गव्यस्य वराहस्य मम प्रिये!। मार्गस्य वृहदाजस्य स्थूलञ्चापि प्रशस्यते। खड्गं पाञ्चनखं भक्ष्यं कापोतं खड्गसंयुतम्। चतुर्मुखं चाविशालं वर्जयेच्च मम प्रिये!। गोधिकां स्वर्णखड्गञ्च चामरं कृष्णमेव च। वर्जयेत् कूर्मकं विद्वान् यदि चक्रेण चिह्नितम्। सिंहतुण्डं रोहितञ्च राजीवं चित्रकं तथा। महाशल्कं प्रौष्ठिकञ्च मत्स्यञ्च पार्वतीयकम्। वृहद्रोहितमत्स्यञ्च वृहत्प्रौष्ठीकमेव च। वृहच्छल्लञ्च चित्रञ्च श्राद्धे यत्नेन योजयेत्। मत्स्यांश्च शल्कहीनांश्च सर्पाकारांश्च वर्जयेत्। शल्कहीनस्य मध्ये तु प्रदेयं कवचद्वयम्। पोतोधानादिकं यच्च विकृताकारकञ्च यत्। सर्पास्यान् पीवरांश्चैव वड़ालीञ्च विवर्जयेत्। तथा। धूमपक्कञ्च कदलं शर्करां कीटसंयुताम्। महिषस्य घृतं क्षीरमाजं श्राद्धे विवर्जयेत्। नारिकेलञ्च तालञ्च खर्जरं पीनकं तथा। तक्रं घृतं विना क्षीरं प्रयत्नेन विवर्जयेत्। दीपं त्यजेत् वस्त्रवर्त्त्या प्रत्यक्षं तैलमेव च। कुसुम्भं नालिकाशाकं मालतीकुसुमं तथा। वृद्धिश्राद्धे पङ्कजञ्च करवीराणि वर्जयेत्। एकजातीयपात्रे तु दद्यादन्नं समाहितः। दैवे

तु प्रथमं दद्यात् पितृपात्रे तदन्तरम्। पितृशेषन्तु दैवेऽन्नं नत्र दद्यात् कदाचन। अन्नं न चालयेत् क्वापि आमश्राद्धे निरग्निके। वृद्धौ तु चालयेदन्नं संक्रमे ग्रहणेषु च। एतद्वचनं स्मार्त्तेनापि धृतम्। अष्टमुष्टिप्रमाणेन ब्राह्मणेनैव संक्रमात्। ततोऽधिकञ्च न्यूनञ्च न दद्यात् श्राद्धकर्म्मणि। यः श्राद्धं पद्मपात्रे च करोति सुमनोहरे। वर्षाणान्तु शतं साग्रं तृप्तिर्भवति निश्चितम्। अश्वत्थस्य च्छदे देवि! ब्रह्मपत्रे च शङ्करि!। षण्मासं जायते तृप्तिरनन्तां शतपत्रके। मासैकं ताम्रपात्रे च रुक्मपात्रे तु वत्सरम्। रौप्ये दशगुणं प्रोक्तं खड्गपात्रे शतोत्तरम्। एकजातीयपात्रे तु मृताहे श्राद्धकर्मणि। पार्व्वणे च तथा वृद्धौ पृथग्जातिञ्च योजयेत्। संवत्सरं भवेत्तावद् व्रीहींश्चैव नियोजयेत्। वर्षाद्भवति यो व्रीहिस्त्वं तं श्राद्धे विवर्जयेत्। धान्यं वर्षासमुद्भूतं तिलं श्रावणिकञ्च यत्। यज्ञादौ च तथाश्राद्धे द्विखिन्नं परिवर्जयेत्। षष्टिधान्यं राजधान्यं वृहद्धान्यञ्च वल्लभम्। सोमधान्यं शीघ्रधान्यं वङ्गानिरक्तपाणिकम्। केतकीं कलविङ्कञ्च धान्यं नारायणं तथा। माधवञ्च प्रदीपञ्च विष्णुधान्यञ्च वल्लभम्। भोगधान्यमशोकञ्च नागाख्यं पञ्चकं तथा। धान्यानि श्राद्धयोग्यानि देवेषु च नियोजयेत्। गोधूमैश्च यवैश्चैव चापूपैश्च महेश्वरि! नीवारांश्च तथा श्राद्धे देवधान्यं तथा परम्। वसन्ते रोपितं धान्यं यत्नेन च विवर्जयेत्। तदन्नभक्षणादेव पापं संक्रमते नृणाम्। भक्षणे श्रावणान्नस्य दारिद्र्याभिजायते। भक्षणे सोमधान्यस्य व्रतं चान्द्रायणं चरेत्। भक्षणे वृद्धधान्यस्य विभवो जायते किल। राजधान्यस्य लक्ष्मधान्य भक्षणाद्विष्णुलोकभाक्। रक्तधान्यौदनं भुक्त्वा विजयश्रीमवाप्नुयात्। नारायणं माधवस्य भोगस्य मम सुन्दरि!। धान्यत्रयोदशं भुक्त्वा नरः स्यात्ति-

मवाप्नुयात्। निमन्त्रितो ब्राह्मणश्च यदि श्राद्धे नहि व्रजेत्। दारुणं नरकं याति पितृभिः सह शाश्वतम्॥ इति तीर्थयात्रादिश्राद्धकथनम्॥

अथ काशीमाहात्म्यम्॥ योगिनीतन्त्रे पूर्व्वखण्डे षोड़शपटले॥ त्रिपुरासुरजन्यतत्पराजितनिर्जरस्तवानन्तरम्। पृथिवीञ्च रथं कृत्वा चक्रे चन्द्रदिवाकरौ। ब्रह्माणं सारथिं कृत्वा वेदान्रज्जूं स्तथैव च। देवान् कृत्वा रथाङ्गानि अमांश्चैव तथा पुनः। धनुः कृत्वा सुमेरुञ्च ज्याञ्च कृत्वा तु वासुकिम्। विश्वञ्च सकलं कृत्वा रथस्थं स चराचरम्। वाणं विष्णुं विधायैव त्रिपुरं भस्मसात् कृतम्। चराचरेण सहितं देवदैत्यादिभिः सह। मया तत्र महेशानि! पुनःसृष्टिः कृता ततः। यत्र भस्मकृतं देवि! जगदेतच्चराचरम्। महाश्मशानं तद्विद्धि सर्व्वेषां लयकारणम्। मृतानां सर्व्वदेवानां तेजस्तत्र व्यवस्थितम्। पञ्चक्रोशात्मकं भूत्वा तेजस्तु जगतां तथा। निर्म्माय मायया देहं त्रैपुरं भस्म वक्षसि। तत्र मृत्युच्छलेनाहं तुष्टाव परमेश्वरीम्। तत्तेजसि महाकाल्यां परां चैतन्यरूपिणीम्। ततस्तेजसि काली सा प्रादुर्भूता परा कला। महसा दीप्यमानन्तु तेजः कालीति कीर्त्तितम्। मुखमात्रं समादृष्टं महाकाल्यास्तु तेजसि। अतो गौरीमुखं नाम मुनिभिः परिगीयते। तद्दृष्ट्वा परमेशानि! आनन्दो मम जायते! आनन्दकाननं तस्माद्गीयते देवतादिभिः। कालीमयं हि तत्तेजः सकलं सं वभूव ह। यथा सागरजातोऽम्भःशीकरः सागरो भवेत्। तथामरादितेजो हि कालीतेजो वभुव ह। यथा नानाजलं देवि! गङ्गायां पतितं यदि। गङ्गैव जायते सर्व्वं तथा तेजः सुरेश्वरि!। सर्व्वं काल्यभवत् पूर्णं नास्ति भेदो महेश्वरि!। अतः काशी भवेत् काली निश्चितं नात्र संशयः। पञ्चक्रोशात्मिका काशी-

ब्रह्मतेजोमयी स्थिता। अहं चन्द्रात्मिका देवि! दृश्यते सर्वजातिभिः। इयं त्वमाकला काशी चयोदयविवर्जिता। तत्र विन्दु महादेवि! मणिकर्णि विराजते। तच्चन्द्रामृतमेवात्र गङ्गां जानीहि कामिनि!। यानि कानि च तीर्थानि तत्र काल्यां महेश्वरि!। सर्वं तदमृतं देवि! जानीहि सुरसुन्दरि!। तामसोमनिगं देवि! शिरसा धारयाम्यहम्। अतो हि शङ्करत्वं मे निश्चितं सत्यमेव हि। तां कालीं शिरसाधाय पञ्चक्रोशमयीं सदा। अहर्निशं पूजयामि परमानन्दवृंहितः। अतोविश्वेश्वरत्वं मे सदैव नात्र संशयः। ब्रह्मविष्ण्वादिकानाञ्च य ईश्वरः सुरेश्वरि!। विश्वेश्वरः स एव स्यान्नापरः परमेश्वरि!। केवलानन्दवान् भूत्वा पूजयामि परां सदा। तत्र तस्याः कृपा जाता वाच्यमाना शरीरिणाम्। देव्युवाच। भो देव! परमानन्द! ममानन्दः कृतस्त्वया। अतः काश्यां मृतानां त्वमानन्दं देहि सर्वदा। ईश्वर उवाच॥ इति श्रुत्वा वचस्तस्या मग्नोऽहममृतार्णवे। ददामि परमं ब्रह्म मुमूर्षोः कर्णगोचरे। वाराणस्यां सदा देवि! स्थित्वा ध्यायन् परां शिवे!। जले स्थले चान्तरीक्षे वाराणस्यां मृतास्तु ये। ददामि परमं ब्रह्म तेषां हि कर्णगोचरे। हित्वा हि सकलं कर्म सुकृतं दुष्कृतं हि ते॥ प्रयान्ति ब्रह्म निर्वाणं ममोपदेशतः क्षणात्। तत्सर्वं सुकृतं कर्म दुष्कृतं वा महेश्वरि!। भवेद्भस्म महाकाल्याः प्रसादाज्ज्ञानयोगतः। काशीलग्नं हि यत्किञ्चित् काशी भवति तत्क्षणात्। काशीस्पर्शनमात्रेण काश्यान्तु मृत्युमेति सः। तज्जन्मनि महादेवि! अथवा परजन्मनि। सत्यं सत्यं पुनः सत्यं सत्यमेव सुरेश्वरि!। वह्नितेजो दहेत् तूलं स्पर्शमात्रात् क्षणं यथा। शूली कर्म दहेत्काशीतेजःस्पर्शात् क्षणात्तथा। तूलराशिं दहेद्वह्निः किञ्चित्कालाद्

यथा शिवे!। तथा दहेत्कर्मराशिं काशीजन्मैकतो नृणाम्। काशीस्थानं पुण्यचयं किं वाहं कथयामि ते। अपि चेत् त्वत्समा नारी मत्समः पुरुषोऽस्ति चेत्। अण्डजाः स्वेदजाश्चैव उद्भिज्जाश्च जरायुजाः। ते सर्वे मुक्तिमायान्ति काश्याञ्चेन्नाग्यतोऽमृताः। इयं वाराणसी देवि! महातेजोमयी शुभा। युगभेदाज्जनैरेव दृश्यते हि चतुर्विधा। कृते रत्नमयी काशी त्रेतायां स्वर्णजा स्मृता। द्वापरे सा शिलारूपा कलौ भूमिमयी शुभा। नातः परतरं क्षेत्रं त्रिषु लोकेषु विद्यते। सत्यं सत्यं महादेवि! शपथेन वदामि ते। संसारबहुलो देवि! मुक्तिमिच्छति यः पुनः। मामेव शरणं गत्वा तिष्ठेत् काश्यां स यन्त्रितः। स एव पतितो ज्ञानी स एव कुलपावनः। प्राणान्तेऽपि महादेवि! काश्या न निःसरेद् द्विजः। स एव परमो मूर्खः स एव कुलनाशनः। वृथैव मूर्खलोकेन काशीं प्राप्य त्यजेद् यदि। बहुभिर्जन्मभिः पुण्यैर्यदि काशीं लभेत् पुनः। तदा नैव त्यजेत् काशीं प्राणान्तेऽपि कदाचन। अनायासेन संसारसागरं यस्तितीर्षति। स गच्छेत् खलु केनापि मम वाराणसीं पुरीम्। अन्नं दद्यादन्नपूर्णा ज्ञानं दद्यात् सरस्वती। प्राणान्ते मुक्तिदाताहं काश्यान्यं भावना किमु॥ वृन्दावनकाश्यादिमाहात्म्यस्त्वत्र ग्रन्थगौरवभिया न लिखितम्। अन्वेषकैर्योगिनीतन्त्रे पूर्वखण्डे पञ्चदशपटलादिषु तदन्वेष्यमिति॥

श्रीप्राणतोषण्यां भक्तिकाण्डाभिधानं सप्तपरिच्छेदान्वितं पञ्चमकाण्डं समाप्तम्॥

षष्ठस्य ज्ञानकाण्डस्य निर्घण्टोऽत्र विधीयते। आदौ पञ्चमहायोगो यमादिस्तदनन्तरम्। षडङ्गयोगकथनं

यमानां मुख्यकीर्त्तनम्। नियमानां तथा मुख्यमासनं तदनन्तरम्। योगविद्या योगविघ्ना मठक्रिया ततः परम्। प्राणायामस्य भेदश्च कुम्भकस्य ततः परम्। प्राणायामक्रियाकालाश्चत्वारः परिकीर्त्तिताः। श्रेष्ठमध्याधमत्वेन प्राणसिद्धेश्च लक्षणम्। श्रमोदकेन तेनैव तनुमार्जनजं फलम्। नाड़ीशुद्धेश्च चिह्नानि कुम्भसिद्धिफलं ततः। वर्जनीयानि योगे च ततः सिद्धिकराणि च। अपथ्यपथ्ये योगस्य ततोऽवस्था मनोन्मनी। कुम्भकाः सप्तधा भिन्ना नेत्यादि तदनन्तरम्। कर्माणि फलयुक्तानि धौत्यादीनि ततः परम्। साधकाभ्यासजफलं तद्विघ्नकीर्त्तनं ततः। घटावस्था तत्फलञ्च तद्विघ्नञ्च ततः परम्। ततश्च मुद्रादशकं सफलञ्च निरूपितम्। एतदाद्यपरिच्छेदसमापनमतः परम्। पृथ्व्यादिधारणं तस्य फलं ध्यानं ततः परम्। समाधिस्तस्यापि फलं प्राणायामफलान्तरम्। तिथिभेदे वामदक्षनासावायुगतिक्रमः। विपरीतगतेर्दोषो निर्गमे चोपवेशने। वायोः कर्मविशेषे तु फलञ्च वामदक्षयोः। वायोः कर्मविशेषेऽपि फलं प्रश्ने च दिक्स्थितेः। फलं पूर्णशून्यभेदाद्गतिर्नाड्यास्तथैव च। अङ्गभेदे कार्य्यभेदे पञ्चभूतादयस्ततः। तेषां शुभाशुभे चैव तत्कालस्य निरूपणम्। भूतज्ञानं तदवस्थाः पञ्च बाल्यादिभेदतः। तत्फलञ्च वारभेदे वामदक्षफलं ततः। दिग्गतिर्धमनी वायौ स्वस्वनाड़ीफलं ततः। विपरीते वैपरीत्यं फलस्य तदनन्तरम्। वहन्नाड़ीपदे यात्रा शुभदा वातवेदतः। यात्रापदानि च वहन्नाड़ीहस्तस्य मार्जनम्। तत्फलं पूर्णरिक्ताङ्गभेदे कर्मनिरूपणम्। वामनासाश्रितं कर्म दक्षनासाश्रितं तथा॥ सुषुम्नाश्रितकार्य्याणि भूतरूपादिवेदनम्। भूतगतिः पञ्चभूतभेदे कार्य्यस्य निर्णयः। प्रश्नस्य निर्णयो भूतैः शुभाशुभनिरूपणम्। मूलादि चिन्ताविज्ञानं

भूतेस्तात्कालिकी तथा। अवस्थेन्दोः सिद्धिकालः पृथगवस्थानि-
रूपणम्। तत्त्वैर्नक्षत्रविज्ञानं निसर्गगतिनिर्णयः। गमनाद्यैर्ग-
तेर्भेदो वायोस्तत् न्यूनकारणम्। फलञ्च तद्वदूर्द्ध्वादौ श्वासभेदे
जयाजयौ। तत्त्वेनास्त्रस्य घटनं तत्त्वैर्युद्धे जयादिकम्। प्रवेश-
काले लाभादिर्हानिर्निःसरणे तथा। शून्येन घातनिर्णीतिर्भूतेन
स्थाननिर्णयः। जयादिनिर्णयश्चैव वशीकरणमेव च। गर्भज्ञानं
वत्सरस्य शुभाशुभफलं ततः। निदानादिपरिज्ञानं रोगस्य निर्णय-
स्ततः। मृत्युजीवनविज्ञानं कालज्ञानं ततः परम्। वर्षत्रया-
दिविज्ञानं जीवनस्य स्वकस्य च। अरुन्धत्यादिविज्ञानमायु-
र्वृद्धिक्रिया ततः। स्वरज्ञानप्रशंसेति परिच्छेदद्वितीयकम्॥
राजयोगप्रशंसा च तद्भेदस्तिथिसंख्यकः। भेदानां लक्षण-
ञ्चैव लक्षयोगस्ततः परम्। तस्य पञ्चविधो भेदो राजयोगस्य
लक्षणम्। हठयोगश्च द्विविधो ज्ञानयोगस्तदन्तरम्। वाह्य-
लक्ष्यं तत्फलञ्चाकाशपञ्चकलक्षणम्। षोड़शाधारनिर्णीति-
रष्टाङ्गविवृतिस्ततः। पिण्डब्रह्माण्डयोरैक्यं पिण्डमध्ये जगत्-
स्थितिः। राजयोगसिद्धिफलं पद्मसङ्केतमद्भुतम्। अव्यक्तादे-
र्गुणाश्चैव योगादेशस्ततः परम्। योगाधिकारी योगस्य सिद्धि-
कारणमेव च। योगभेदान्मन्त्रयोगो लययोगस्य विस्तृतिः।
कालपुरुषविज्ञानं तत्फलं तदनन्तरम्। रसनासाधनं तस्य
फलं नानाविधं ततः। परिच्छेदतृतीयस्य समाप्तिकीर्त्तनं ततः।
स्थूलसूक्ष्मक्रमेणैव ब्रह्माण्डस्य निरूपणम्। सर्वदेवाश्रयो मेरुः
सत्यलोकस्तदूर्द्धतः। अधो रसातलं तस्य भुवनान्येवमेव च।
आधारपद्मविस्तारः स्वाधिष्ठानस्य वर्णनम्। तत्र वैकुण्ठ-
गोलोकवर्णनं तदनन्तरम्। मणिपूरवर्णनञ्चानाहतस्य च
वर्णनम्। विशुद्धवर्णनं तस्मादाज्ञाख्यवर्णनं ततः। सहस्रार-
वर्णनञ्चाधो वक्त्रे गुरुदेवयोः। क्षितिवीजञ्च षट्चक्रप्रकारा-

न्त रवर्णनम्। परिच्छेदचतुर्थस्य समापनमिति स्मृतम्। ज्ञानप्रकारं ज्ञानस्य द्वैविध्यं द्वैतवर्जितम्। ज्ञानं तत्फल-निर्देशोऽद्वैतज्ञानाकृतिस्ततः। तत्त्वज्ञानं तत्प्रशंसात्मनः साक्षित्वनिर्णयः। रथित्वञ्च रथादित्वं शरीरादेस्ततः परम्। भोक्तृमुक्तत्वनिर्णीतिरुत्तमादिनिरूपणम्। ब्रह्मणस्य ध्यान-पूजाद्यभावस्तदनन्तरम्। आत्मनिरूपणं ज्ञानं त्रिविधं ज्ञान-कारणम्। निर्वाणसाधकं कर्म शिववीजनिरूपणम्। पाश-निरूपणं जीवात्माभेददर्शनं ततः। आत्मनो जन्ममरणाद्यभा-वदर्शनं पुनः। पिण्डपदादिनिर्णीतिस्तन्त्रश्रवणजं फलम्। विद्यातत्त्वं ब्रह्मविद्या प्रशंसार्जितपुण्यतः। ब्रह्मज्ञानं परमात्म-निर्णयस्तदनन्तरम्। भिक्षुनिष्ठैव सा विद्या ब्रह्मणो जगदु-द्भवः। ब्रह्मज्ञानप्राप्तिफलं ब्रह्ममन्त्रप्रशंसनम्। ब्रह्ममन्त्रोद्धृति-र्मन्त्रार्थचैतन्ये तदर्चना। ब्रह्मस्तोत्रं तत्कवचं तन्नैवेद्यफलं ततः। तदर्चकप्रशंसा च तन्मन्त्रस्य पुरस्क्रिया। अन्यान्यपि च वेद्यानि यथास्थानं मनीषिभिः। परिच्छेदपञ्चमस्य समा-पनमिति स्मृतम्। मात्रादिचक्रविंशञ्च बालादिचक्रमध्यगम्। तस्य व्याख्यानमितद्धि षष्ठच्छेदसमापनम्। सर्वतोभद्रचक्रञ्च तद्व्याख्या प्रक्रियायुता। चक्रं शतपदं तस्मात् तद्व्याख्या तदनन्तरम्। प्रश्नप्रवचने वाणी प्रणामो मन्त्र एव च। प्रश्नस्य कथने तस्य सङ्केतस्तदनन्तरम्। प्रस्तारचक्रं तस्यापि व्याख्यानं तदनन्तरम्। परिच्छेदसप्तमस्य समापनमिदं कृतम्। यथा-स्थानमन्यदपि ज्ञेयं धीमद्भिरच तु॥ इदं विस्तृतसप्तभिन्नाल-काण्डं परिच्छेदरूपैः प्रसूनैः सुरम्यम्। बुधालोकतां गन्धमुग्धो-ऽनुवारं फलं किन्तु गुर्वास्यलभ्यं नु विविद्धि। क्षमध्वं पण्डिता! दोषं परपिण्डोपजीविनः। भ्रमाशुद्धादिकं सर्वं शोध्यं युष्मा-भिरुत्तमः॥ आदेष्टृसत्वरतया पुनरीक्षितुं नैतच्छक्यमुत्तम-

वचो रचितं ममेदम्। विज्ञापयानि सततं परिवीक्ष्य सर्वं धीरा ! भवद्भिरतिसूक्ष्मधिया विशोध्यम् ॥

रुद्रजामले उत्तरखण्डे षट्त्रिंशत्पटले। यथा ॥ श्री आनन्दभैरव्युवाच ॥ त्रिगुणज्ञानविकलो न पश्यति दिवानिशम्। दिवा रात्रौ ज्ञानहेतौ न पश्यति कलेवरम्। इति कृत्वा हि मरणं नृणां जन्मनि जन्मनि। तज्जन्मक्षयहेतोश्च मम योगं समभ्यसेत्। पञ्चामरामहायोगं कृत्वा स्यादमरो नरः। तत्प्रकारं शृणु प्राणवल्लभ ! प्रियदर्शन !। तव भावेन कथये न कुत्र वद शङ्कर !। यदि नो कस्य निकटे कथ्यते योगसाधनम्। विघ्ना घोरा वसन्त्येव गात्रे योगादिकं कथम्। योगयोगाङ्गविश्लेषस्तत्प्रकाशाद्धि नाशनम्। अतो न दर्शयेद् योगं यदीच्छेदात्मनो हितम्। कृत्वा पञ्चामरायोगं प्रत्यहं भक्तिसंयुतः। पठेत् श्रीकुण्डलीदेवीसहस्रनाम चाष्टकम्। महायोगी भवेन्नाथ ! श्वासेन नात्र संशयः। पञ्चामरायोगविद्या सर्वविद्याप्रकाशिनी। कृत्वा पञ्चामरासिद्धिं ततोऽष्टाङ्गादिधारणा। आदौ पञ्चामरासिद्धिस्ततोऽन्ययोगसाधनम्। तत्प्रकारं प्रवक्ष्यामि सावधानावधारय। अहं जानामि संसारे केवलं योगपण्डिता। तस्मात्त्विणी ह्यहं नाथ ! भक्तानामुदयाय च। इदानीं कथये तेऽहममरायोगसाधनम्। एवं कृत्वा नित्यरूपी योगानामङ्कुरायते। योगकालेन पुरुषः सिद्धिमाप्नोति निश्चितम्। पञ्चामराविधानानि क्रमेण शृणु शङ्कर !। नेतीयोगं हि सिद्धानां महाकफविनाशनम्। दन्तीयोगं प्रवक्ष्यामि हृदयग्रन्थिभेदनम्। धौतीयोगं ततः पश्चात् सर्वं मलविनाशनम्। नेतीयोगं हि परमं सर्वाङ्गोदरचालनम्। चालनं परमं योगं नाड़ीनां चालनं स्मृतम्। एवं पञ्चामरायोगं यस्मिनामतिगोचरम्। यमनियमकाले तु पञ्चामराक्रियां

यजेत्। अमरासाधनादेव अमरत्वं भवेद्ध्रुवम्। एतत्करण-
काले च तथा पञ्चामराशनम्। पञ्चामराभक्षणेन अमरी
योगसिद्धिभाक्। तानि द्रव्याणि वक्ष्यामि तवाग्रे परमेश्वर!।
येन हीना न सिध्यन्ति कल्पकोटिशतेन च। एका तु अमरा दूर्वा
तस्या ग्रन्थिं समानयेत्। अन्या तु विजयादेवी सिद्धिरूपा
सरस्वती। अन्या तु विल्वपत्रस्था शिवसन्तोषकारिणी। अन्य
तु योगसिद्धार्थं निर्गुण्डी चामरा मता। अन्या तु कालतुलसी
श्रीविष्णोः प्रियतोषणी। एताः पञ्चामरा ज्ञेया योगसाधन-
कर्मणि। एतासां द्विगुणं ग्राह्यं विजयापत्रमुत्तमम्। ब्राह्मणी
क्षत्रिया वैश्या शूद्रा सर्वत्र पूजिता। एतद्द्रव्याणि संगृह्य भक्ष-
येच्चूर्णमुत्तमम्। तच्चूर्णभक्षसमये एतन्मन्त्रादिपञ्चकम्।
पठित्वा भक्षणं कृत्वा नरो मुच्येत सङ्कटात्। ॐ हरे अमर-
पुष्टे! त्वममृतोद्भवसम्भवे!। अमरं मां सदा भद्रे! कुरुष्व
त्वं हरप्रिये!। ॐ दूर्वायै स्वाहा। इति दूर्वायाः॥ पुनर्विजया-
मन्त्रेण शोधयेत् सर्वकन्यकाः॥ ओं संविदे ब्रह्म इत्यादि॥
ओं ब्राह्मण्यै नमः स्वाहा॥ ओं सिद्धिमूलकरे! देवीत्यादि।
अर्द्धं राजपुत्रवशङ्करि! राजकन्ये! त्रिशूलिनि!। ऐँ क्षत्रियायै
नमः स्वाहा। ओं अज्ञानेन्धनेत्यादि। क्लीं वैश्यायै नमः
स्वाहा। ओं नमस्यामीत्यादि। श्रीं शूद्रायै नमः स्वाहा।
ओं कायसिद्धिकरे! देवि! विल्वपत्रनिवासिनि!। अमरत्वं
सदा देहि शिवतुल्यं कुरुष्व माम्। ओं शिवदायै नमः स्वाहा।
ओं निर्गुण्डि! परमेशानि! योगानामधिदेवते!। सा मां रक्षतु
अमरे! भावसिद्धिप्रदे! नमः। ओं शोकापहायै नमः स्वाहा।
ओं विष्णोः प्रिये! महामाये! कालज्वालनिवासिनि!। तुल-
सि! मां सदा रक्ष मामिकममरं कुरु। ओं क्लीं श्रीं ऐँ क्लीं
अमरायै नमः स्वाहा। पुनरेकत्र आहृत्य सर्वासां शोधनं

चरेत्। ओँ अमृते! अमृतोद्भवे! इत्यादि। धेनुमुद्रां योनिमुद्रां मत्स्यमुद्रां प्रदर्शयेत्। तत्त्वमुद्राक्रमेणैव तर्पणं कारयेद्बुधः। अमन्त्रकं सप्तवारं गुरुनाम्ना शिरेऽर्पयेत्। सप्तवारमिष्टदेव्या नाम्ना मूर्ध्नि प्रदापयेत्। ततस्तर्पणमाकुर्य्यात् तर्पयामि नमो नमः। एतद्वाक्यस्य पूर्वं तु इष्टमन्त्रं समुच्चरेत्। परदेवतां समुद्धृत्य सर्वाद्यप्रणवं स्मृतम्। ततो मुखे प्रजुहुयात् कुण्डानां नामपूर्वकम्। ओँ वद वदेत्यादि सर्वसत्त्ववशङ्करि! मत्तकण्ठ-त्रिशूलिनि! स्वाहा। एतदुक्त्वा आश्रमो च वशी साधकसत्तमः। पञ्चामरारसानन्दः कुलाचारविधिप्रियः। स्थिरचेता भवेद् योगी यदि पञ्चामरागतः॥

दत्तात्रेयसंहितायां प्रथमाध्याये॥ यमश्च नियमश्चैव आसनञ्च ततः परम्। प्राणायामश्चतुर्थः स्यात् प्रत्याहारश्च पञ्चमः। षष्ठो तु धारणा प्रोक्ता ध्यानं सप्तममुच्यते। समाधिरष्टमः प्रोक्तः सर्वपुण्यफलप्रदः। एवमष्टाङ्गयोगञ्च याज्ञवल्क्यादयो विदुः। कलसाद्यास्तथा सिद्धा हटं कुर्य्यु-स्तथा यथा॥ निरुत्तरतन्त्रे चतुर्थपटले॥ आसनं प्राण-संरोधः प्रत्याहारश्च धारणा। ध्यानं समाधिरेतानि योगा-ङ्गानि वदन्ति षट्। प्राणायामद्विषट्केन प्रत्याहारः प्रकी-र्त्तितः। प्रत्याहारद्विषट्केन जायते धारणा शुभा। धारणा-द्वादशप्रोक्तं ध्यानं ध्यानविशारदैः। ध्यानद्वादशकैरेव समा-धिरभिधीयते। यत् समाधौ परं ज्योतिरुत्तरं विश्वतोमुखम्। तस्मिन् दृष्टे क्रिया काचिद् यातायातं न विद्यते॥ दत्तात्रेय-संहितायाम्। यमा ये दश सम्प्रोक्ता ऋषिभिस्तत्त्वदर्शिभिः। लघ्वाहारस्तु तेष्वेको मुख्यो भवति नापरे। अहिंसा नियमेष्वेको मुख्यो भवति नापरे। चतुरशीतिलक्षेषु त्वासनेषूत्तमं शृणु। आदिनाथेन सम्प्रोक्तं पद्मासनमिहोच्यते। उत्तानौ चरणौ

कृत्वा ऊरुसंस्थौ प्रयत्नतः। ऊरुमध्ये तथोत्तानौ पाणी कृत्वा ततो दृशौ। नासाग्रे विन्यसेद्वक्त्रं दन्तमूलञ्च जिह्वया। उत्तोल्य चिवुकं वक्षः संस्थाप्य पवनं शनैः। यथाशक्त्या समाकृष्य पूरयेदुदरं शनैः। यथाशक्त्या समाकृष्य धारयेदुदरं शनैः। यथाशक्त्या ततः पश्चाद्रेचयेदुदरं शनैः। इदं पद्मासनं प्रोक्तं सर्वव्याधिविनाशनम्॥ रुद्रयामले त्रयोदशपटले॥ ऊर्वोरुपरि मेट्रान्ते उभे पादतले तथा। पद्मासनं भवेदेतत् सर्वपापप्रणाशनम्। तथा। युवावस्थोऽपि वृद्धोऽपि व्याधितो वा शनैः शनैः। अभ्यासात् सिद्धिमाप्नोति योगी सर्वस्य तन्त्रता। ब्राह्मणः श्रमणा वापि बुद्धो वाप्यर्हितोऽपि वा। कापालिको वा चार्वाकः श्रद्धया सहितः सुधीः। योगाभ्यासरतो नित्यं सर्वसिद्धिमवाप्नुयात्। क्रियायुक्तः स सिद्धः स्यादक्रियस्य कथं भवेत्। शास्त्रस्य पाठमात्रेण कथं सिद्धिः प्रजायते। मुण्डो वा दण्डधारी वा काषायवसनोऽपि वा। नारायणवदो अपि जटिलो भस्मलेपनः। नमः शिवायवादो वा बह्वर्चापूजकोऽपि वा। स्थानद्वादशपूज्यो वा बहुवत्सलभाषितः। क्रियाहीनोऽथवा क्रूरः कथं सिद्धिमवाप्नुयात्। न वेशधारणं सिद्धेः कारणं न च तत्तया। क्रियैव कारणं सिद्धेः सत्यमेतत्तु साङ्कृते!। शिश्नोदरार्थं योगस्य कथं वा वेशधारिणः। अन्नपानविहीनास्तु वञ्चयन्ति जनान् किल। उच्चावचैर्विप्रलम्भैर्यजन्ते कृशमानवाः। योगिनो वयमित्येवं सुखभोगपरायणाः। शनैस्तथाविधानज्ञान् योगाभ्यासविवर्जितान्। कृतार्थान् वचनैरेव वर्जयेद्वेशधारिणः। एते चाविष्टभूताः स्युर्योगाभ्यासस्य सर्वदा। वर्जयेत्तान् प्रयत्नेन ईदृशो सिद्धिदा क्रिया। प्रथमाभ्यासकालेषु प्रवेशस्य सदा मुने!। आलस्यं प्रथमो विघ्नो द्वितीयस्तु प्रकथ्यते। पूर्वोक्तधूर्त्तगोष्ठी च तृतीयो मन्त्रसाधनम्।

चतुर्थो धातुवादश्च पञ्चमः पापवादकः। एवं बहुविधा विघ्ना मृगतृष्णासमा सुखे। स्थिरा मनसि जायन्ते तांस्तु ज्ञात्वा त्यजेत् सुधीः। तथा। सुशोभनं मठं कुर्य्यात् सूक्ष्मद्वारन्तु निर्व्रणम्। सुष्ठु लिप्तं गोमयेन सुधया वा प्रयत्नतः। दिने दिने सुसंमृष्टं सम्मार्जन्याप्यतन्द्रितैः। वासितञ्च सुगन्धेन धूपितं गुग्गुलादिभिः॥ ग्रहजामले द्वादशपटले॥ ईश्वर उवाच॥ हटविद्या परा गोप्या योगिनां सिद्धिमिच्छताम्। देवी वोर्य्यवती गुप्ता निर्वीर्य्या च प्रकाशिता। सुवाह्ये धार्मिके देशे सुभिक्षे निरुपद्रवे। एकान्तं मठमध्ये च स्थातव्यं हट-योगिनाम्। स्वल्पद्वारमरन्ध्रगर्त्तपिटकं नात्युच्चनीचायतं सम्यग्गोमयसान्द्रलिप्तममलं निःशेषवाह्योज्झितम्। वाह्ये मण्डपकूपवेदिरचितं प्राकारसंवेष्टितं प्रोक्तं योगमठस्य लक्षण-मिदं संसारनिस्तारिणि!॥ एवंविधमठे स्थित्वा सर्वचिन्ता-विवर्जितः। गुरूपदिष्टमार्गेण हटयोगं समभ्यसेत्॥ दत्ता-त्रेयसंहितायाम्॥ मलमूत्रादिभिर्दोषैरष्टादशभिरेव च। वर्जि-तो दारसम्बन्धं वस्त्रं वाऽजिनमेव च। नान्यत्रास्तरणासीनः परशङ्काविवर्जितः। तस्मिन् शस्तं समास्तीर्य्य आसनं विष्ट-रादिकम्। तत्रोपविश्य मेधावी पद्मासनसमन्वितः। सम-कायः प्राञ्जलिश्च प्रणम्य चेष्टदेवताम्। ततो दक्षिणहस्तस्या-ष्यङ्गुष्ठेन तु पिङ्गलाम्। निरुध्य पूरयेद्वायुमिड़या तु शनैः शनैः। यथाशक्त्या निरोधेन ततः कुर्य्याच्च कुम्भकम्। तत-स्त्यजेत् पिङ्गलया शनैरेव न वेगतः। पुनः पिङ्गलयाकृष्य पूरयेदुदरं शनैः। धारयित्वा यथाशक्ति रेचयेन्मारुतं शनैः। यया त्यजेत्तयापूर्य्य धारयेदविरोधतः। एवं प्रातः समासीनः कुर्य्याद्विंशतिकुम्भकान्। कुम्भकः सहितो नाम सर्वग्रहविव-र्जितः। मध्याह्नेऽपि तथा कुर्य्यात् पुनर्विंशतिकुम्भकान्।

एवं सायं प्रकुर्वीत पुनर्विंशतिकुम्भकान्। कुर्वीत रेककुम्भाभ्यां सहितान् प्रतिवासरम्। कुर्य्यादेवं चतुर्वारमनालस्यो दिने दिने। एवं मासत्रयं कुर्य्यान्नाडीशुद्धिस्ततो भवेत्॥ ग्रहजामले त्रयोदशपटले॥ प्राणायामस्त्रिधा प्रोक्तो रेचकुम्भकपूरकैः। सहितः केवलश्चेति कुम्भको द्विविधो मतः। रेचश्चापूर्य्य यः कार्य्यः स वै सहितकुम्भकः। यावत्केवलसिद्धिः स्यात् सहितं तावदभ्यसेत्। रेचकं पूरकं त्यक्त्वा सुखं यद्वायुधारणम्। प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः। गुरूपदिष्टमार्गेण प्राणायामं समाचरेत्। यावद्वायुः स्थितो देहे तावज्जीवितमुच्यते। मरणं तस्य निष्क्रान्तिस्ततो वायुं निबन्धयेत्। मलाकुलासु नाड़ीषु मारुतो नैव मध्यगः। कथं स्यात्तन्मलीभावः कायशुद्धिः कथं भवेत्। शुद्धिमेति यदा सर्वं नाड़ीचक्रं मलाकुलम्। तदैव जायते योगी प्राणसंग्रहणे क्षमः। प्राणायामं ततः कुर्य्यान्नित्यं सात्त्विकया धिया। तथा सुषुम्नापार्श्वस्था मलाः शोषं प्रयान्ति हि। बद्धपद्मासनो योगी प्राणं चन्द्रेण पूरयेत्। धारयित्वा यथाशक्ति पुनः सूर्य्येण रेचयेत्। प्राणं सूर्य्येण चाकृष्य पूरयेदुदरं शनैः। विधिवत् कुम्भकं कृत्वा पुनश्चन्द्रेण रेचयेत्। येन त्यजेच्च तेनैव पूरयेदनिरोधतः। रेचयेच्च ततोऽन्येन रेचयेच्च न वेगतः। चन्द्रेण वामनासया सूर्य्येण दक्षिणनासया इत्यर्थः। प्राणं चेदिड़या पिबेन्नियमितं भूयोऽन्यथा रेचयेत् पीत्वा पिङ्गलया समीरणमथो बद्ध्वा त्यजेद्वामया। सूर्य्याचन्द्रमसोरनेन विधिना विम्बद्वयं ध्यायतः शुद्धा नाड़िगणा भवन्ति यमिनो मासत्रयादूर्द्ध्वतः॥ प्रातर्मध्यन्दिनं सायं मध्यरात्रे च कुम्भकान्। चतुरशीतिपर्य्यन्तं चतुर्वारं समभ्यसेत्। प्राणायामे महाधर्मो योगिनो मोक्षदायकः। प्राणायामो दिवारात्रौ देवि! जलं परित्यजेत्। अधमे द्वादशो मात्रा मध्यमे

द्विगुणा स्मृता। उत्तमे त्रिगुणा ज्ञेया प्राणायामस्य निर्णये। कनीयसि भवेत् स्वेदः कम्पो भवति मध्यमे। उत्तिष्ठत्युत्तमे प्राणी बद्धपद्मासनो मुहुः। जलेन श्रमजातेन गात्रमार्जनमाचरेत्। दृढ़तालयुता दीप्तिस्तेन गात्रस्य जायते। यदा तु नाड़ीशुद्धिः स्यात्तदा चिह्नानि वाह्यतः। जायन्ते योगिनो देहे तानि वक्ष्याम्यशेषतः। शरीरलघुता दीप्तिर्जठराग्निविवर्द्धनम्। कृशत्वञ्च शरीरस्य तस्य जायेत निश्चितम्। पूर्वोक्तकाले कुर्वन्ति परमाभ्यासमेव च। ततः परं यथेष्टन्तु शक्तिः स्याद्वायुधारणे। यथेष्टधारणाद्वायोः सिद्धिः कुम्भस्य केवला। केवले कुम्भके सिद्धे रेचपूरकवर्जिते। न तस्य दुर्लभं किञ्चित् त्रिषु लोकेषु दिद्यते॥

अथ कुम्भकसिद्धिफलम्॥ प्रस्वेदो जायते पूर्वं मर्दनं तेन कारयेत्। ततस्तु धारणाद्वायोः क्रमेणैव शनैः शनैः। कम्पो भवति देहस्य आसनस्थस्य योगिनः। ततोऽधिकतराभ्यासाद्दार्दुरी जायते ध्रुवम्। यथैव दर्दुरो गच्छेदुत्पत्योत्प्लुत्य भूतले। पद्मासनस्थितो योगी तथा गच्छति भूतले। ततोऽधिकतराभ्यासाद्भूमित्यागश्च जायते। पद्मासनस्थितो वासौ भूमिमुत्सृज्य वर्त्तते। निराधारो विचित्रं हि तदा सामर्थ्यमुद्वहेत्। अल्पं वा बहु वा भुक्ता योगी न व्यथते क्वचित्। अल्पमूत्रपुरीषे तु अल्पनिद्रा च जायते। क्रिमयो दूषिका नानास्वेदो दुर्गन्धता तनोः। एतानि सर्वथ्यातस्य न जायते कदाचन। अभ्यासकाले प्रथमे शस्तं क्षीराज्यभोजनम्। ततोऽभ्यासे स्थिरीभूते न तादृङ्नियमग्रहः। यथा सिंहो गजो व्याघ्रो भवेद्वश्यः शनैः शनैः। तथैव सेवितो वायुरन्यथा हन्ति साधकम्। प्राणायामेण युक्तेन सर्वरोगक्षयो भवेत्। अयुक्ताभ्यासयोगेन सर्वरोगसमुद्भवः। हिक्का श्वासश्च

भक्तिपरायणाः। तपसापि न लभ्येत तपोलोकगतिः शिवे!। तपोलोकसमो नास्ति लोकमध्ये सुलोचने!। सालोक्यं हि महर्लोके सारूप्यं जनलोकके। सायुज्यं च तपोलोके निर्वाणं हि तदूर्द्धके। ततो ब्रह्मादयो देवास्तपोलोकार्थिनः सदा। इति ते कथितं कान्ते! क्रमषट्कस्य लक्षणम्। यज्ज्ञानादमरत्वञ्च जीवन्मुक्तश्च साधकः। यज्ज्ञात्वा जननीगर्भं न विशेत्तु कदाचन॥ इति ज्ञानस्थानकथनम्॥

दशमपटले॥ शङ्कर उवाच। ज्ञानपद्मस्योर्द्ध्वदेशे सहस्रदलपङ्कजम्। अधोवक्त्रं महापद्मं सुमेरोर्मध्यसंस्थितम्। शुक्लं रक्तं तथा पीतं कृष्णं हरितमेव च। विचित्रचित्ररूपेण नानावर्णेन शोभितम्। शुक्लं क्षणात् क्षणाद्रक्तं क्षणात् पीतं सुशोभितम्। यस्मिन् क्षणे शुक्लवर्णं हरितं वर्णमुत्तमम्। चित्ररूपञ्च चार्वङ्गि! धत्ते कस्मिन् क्षणे क्षणे। एवं नानाविधं देवि! तत् पद्मं शोभितं सदा। यथैव धाम गोलोकं प्रतिपत्रे तथैव हि। गोलोकाधिपतिस्तत्र भक्तिभावपरायणः। कैलासाधिपतिर्देवि! ध्यानयोगं सदाभ्यसेत्। एवं ब्रह्मादयो देवा इन्द्राद्यास्त्रिदिवेश्वराः। स्तुतिभक्तिपराः सर्वे दीनभावे सदा स्थिताः। लक्षं लक्षं महेशानि! तत्रैव मुरलीधरः। शतलक्षं तत्र रुद्रो ब्रह्मा लक्षशतं प्रिये!। प्रत्यहं परमेशानि! ब्रह्माण्डा बहवोऽभवन्। तन्मध्ये स्थापयेद् ब्रह्मा तत्रैव कमलापतिम्। शिवं बहुविधाकारं तत्रैव स्थापयेत्ततः। एवं हि परमेशानि! नानाशक्तिं प्रविन्यसेत्। प्रतिब्रह्माण्डमध्ये तु ब्रह्मादिदेवतात्रयम्। नानाशक्तियुतं कृत्वा ब्रह्माण्डस्थापनञ्चरेत्। ब्रह्मपद्मे पृथिव्यान्तु वर्त्तन्ते मानुषादयः। ते सर्वे देवि! ब्रह्माण्डस्तम्भमध्ये भुव-

नानि च। पातालसप्तकं तत्र तत्रैव स्वर्गसप्तकम्। एवं चक्रे सर्वदेहे भुवनानि चतुर्द्दश। प्रतिदेहं परेशानि ! ब्रह्माण्डं नात्र संशयः॥ तथा। स्थानं बहुविधाकारं सर्वदेहस्य चाश्रयम्। तन्मध्ये सत्यलोकञ्च महारुद्रस्य कारणम्। दशकान्तेन स्वर्णेन निर्म्मितं चक्रपाणिना। दिक्षु तोयमण्डलञ्च तथा पूर्णेन्दुमण्डलम्। परितः पारिजातानि मध्ये कल्पद्रुमः पुनः। कल्पद्रुमस्य निकटे ज्योतिर्मन्दिरमेव च। ओं उद्यदादित्य-सङ्काशं चतुर्द्वारविभूषितम्। मन्दवाद्यसमायुक्तं गन्धपुष्पै-रलङ्कृतम्। तन्मध्ये वेदिका देवि ! रत्नसिंहासनं प्रिये !। महा-कालो परमात्मा चणकाकाररूपतः। माययाच्छादितात्मासौ तन्मध्ये समभागतः। महारुद्रः स एवात्मा महाविष्णुः स एव हि। महाब्रह्मा स एवात्मा नाममात्रविभेदकः। एकमूर्त्ति-स्त्रिनामानि ब्रह्मविष्णुमहेश्वराः। नानाभावे मनो यस्य तस्य मोक्षो न विद्यते। ब्रह्माण्डास्तत्र जायन्ते लक्षं लक्षं सुलोचने !। तत्र ब्रह्मा तत्र विष्णुस्तत्र रुद्रः प्रतिन्यसेत्। एवं ब्रह्माण्डनिर्माणं कृत्वा विष्णुः सनातनः। स जीवमूर्त्तिं निर्म्माय तथा जन्तोश्च विग्रहम्। एवं ब्रह्माण्डं विविधं नित्यं सृजति निर्गुणम्। निर्गुणो विष्णुरूपश्च सिद्धिकारण-मेव हि। केचिद्वदन्ति स ब्रह्मा केचिद्विष्णुः प्रकथ्यते। केचि-द्रुद्रो महापूर्व एकदेवो निरञ्जनः। आद्याशक्तियुतो देवश्च-णकाकाररूपकः। इन्द्रजालस्य दीपाभं चन्द्रसूर्य्याग्निरूपकम्। महाज्योतिर्निराकारं गोलोकं सुमुखं त्वथ। सत्यलोके वीजकोषे चिन्तामणिगृहे शुभे। ध्यायेन्निरञ्जनं देवि ! रत्नसिंहासनोपरि। तस्यान्तिके निजगुरुं पूजाध्यानपरा-यणः। सकान्तं पूजयेद्देवि ! रजताचलसोदरम् सुरक्तां चारुवदनां स्वप्रकाशस्वरूपिणीम्। एवं कान्तायुतं देवं

स्वमूर्द्धि स्थं विचिन्तयेत्। यथा दर्पणमध्ये तु परिपश्यन्ति पर्वतम्। सहस्रारे महापद्मे तथा देवं विचिन्तयेत्। एवं ब्रह्ममयं ह्येतत् परं मोक्षमयं प्रिये!। निर्गुणस्यालयं साक्षा-न्महाकालालयं शिवे!। यत्रैव वर्त्तते नित्यं निराकारश्च निश्चलः। यस्य रूपं परानन्दं परापरजगत्पतिः। नित्या-नन्दपरा देवी काली कालप्रकाशिनी। आद्याशक्तिर्महाकाली देवनिर्वाणकारिणी। जायते च क्षितौ वृक्षो यथा पृथ्व्यां विलीयते। तोयात्तु वुद्बुदं जातं यथा तोये विलीयते। जलदे तड़िदुत्पन्ना लीयते च यथा घने। तथा ब्रह्मादयो देवाः कालिकाया भवन्ति। तथा प्रलयकाले तु पुन-स्तस्यां प्रलीयते। शक्तिज्ञानं विना देवि! मुक्तिर्हास्याय कल्पते। एकांशेन भवेद्ब्रह्मा एकांशेन जनार्द्दनः। एकांशे-न भवेच्छम्भुः कालिकायाः सुलोचने!। अपरा सा महाकाली नद्यादीनां समुद्रवत्। गोष्पदे च तथा तोयं ब्रह्माद्या देवता-स्तथा। गोष्पदं किं विजानीयात् समुद्रस्य जलं शिवे!। तेन ब्रह्मा न जानाति विष्णुः किं वेत्ति शङ्करम्। सृष्टिकर्त्ता यथा काल्या जन्यन्ते च सुरादयः। तथा प्रलयकाले तु पुन-स्तस्यां प्रलीयते। अतो निर्वाणदा काली पुमान् स्वर्ग-प्रदायकः। दक्षिणस्यां दिशि स्थाने संस्थितश्च रवेः सुतः। कालीनाम्ना पलायेत भीतियुक्तः समन्ततः। अतः सा दक्षिणा-नाम्नी त्रीषु लोकेषु गीयते। निर्गुणः पुरुषः काल्या सृज्यते लुप्यते यतः। अतः सा दक्षिणानाम्नी त्रिषु लोकेषु गीयते। वश्यविद्या महाविद्या कालिका जगदम्बिका। साकाररूपा सा काली चणकाकाररूपिणी। हस्तपादादिरहिता सोम-सूर्य्याग्निरूपिणी। तस्याः स्थानं हि कथितं सत्यलोकं वरा-नने!। यत् स्थानं सर्वदेवस्य प्रार्थनीयं सदानघे!। तस्य

स्थानस्य माहात्म्यं किं मया कथ्यतेऽधुना। सहस्रदलपद्मस्य चैकपत्रे सुलोचने!। सहस्रं गोलकं धाम ततो वक्तुं न शक्यते। जन्मान्तरसहस्रेण जिह्वाकोटिशतेन च। तद्वक्तुं न हि शक्नोमि एकपत्रस्य शोभनम्। अतस्त्वं हि वरारोहे! विरता भाव पार्वति!। किञ्जल्कमध्ये या शोभा किं वक्तुं शक्यते मया। तन्मध्ये कर्णिका देवि! तन्मध्ये वीजकोषकम्। वीजकोषस्य मध्ये तु सुधासागर उत्तमः। लक्षयोजनविस्तारः सुशोभं तोयमुत्तमम्। तन्मध्ये तु मणिद्वीपं सहस्रयोजनं प्रिये!। परितः पारिजाताश्च कदम्बवनमुत्तमम्। मध्ये कल्पद्रुमस्तत्र ज्योतिर्मन्दिरमुत्तमम्। चतुर्द्वारसमायुक्तं हेमप्राकारभूषितम्। मन्दवाद्यसमायुक्तं गन्धधूपसमन्वितम्। देवकन्यासहस्राणि परिचर्य्यापराणि च। तन्मध्ये वेदिका देवि! पञ्चाशदक्षरात्मिका। तस्योपरि महेशानि! रत्नसिंहासनं शिवे!। महाकाली महारुद्रश्चएककाकाररूपकः। इन्द्रजालस्य दीपाभं महाज्योतिः सनातनम्। शाक्तानन्दतरङ्गिण्यां चतुर्थोल्लासधृतसमयाचारतन्त्रे॥ देव्युवाच॥ देवदेव! महाबाहो! सृष्टिस्थितिलयात्मक!। मूर्ध्नि पद्मं सहस्रारं रक्तवर्णमधोमुखम्। तस्य मध्यस्थितं ध्यायेद्गुरुं शान्तं सशक्तिकम्। मूलाधारे महाशक्तिं कुण्डलीरूपधारिणीम्। अधोवक्त्रे क्रमेणैव सर्वपद्मेषु भावना। तदा कथं भवेत्तत्र चिन्तनं गुरुदेवयोः। आधारे च स्थितस्तत्र अधोभागी कथं भवेत्॥ महादेव उवाच। यथा युक्तं त्वया देवि! कथितं वीरवन्दिते!। एवमेवात्र सन्देहो जायते नात्र संशयः। कथ्यते परमेशानि! सन्देहच्छेदकारणम्। तानि पद्मानि देवेशि! सुषुम्नान्तःस्थितानि च। परब्रह्मस्वरूपाणि शब्दब्रह्ममयानि च। तत् सर्वं पङ्कजं देवि! सर्वतोमुख-

मेव च। प्रवृत्तिश्च निवृत्तिश्च द्वौ भावौ जीवसंस्थितौ। प्रवृत्ति-
मार्गः संसारो निवृत्तिः परमात्मनि। प्रवृत्तिभावचिन्ताया
मध्ये चक्राणि चिन्तयेत्। निवृत्तियोगमार्गेण सदैवोर्द्ध-
मुखानि च। एवमेव भावभेदाद् तत्सन्देहो न जायते॥

श्रीतत्त्वचिन्तामणौ तु विशेष उक्तो यथा॥ मेरोर्वाह्य-
प्रदेशे शशिमिहिरशिरे सव्यदक्षे निषण्णे मध्ये नाड़ी सुषुम्ना
त्रितयगुणमयी चन्द्रसूर्य्याग्निरूपा। धुस्तूरस्मेरपुष्पग्रथित-
तमवपुः कन्दमध्याच्छिरस्था वज्राख्या मेढ्रदेशाच्छिरसि परि-
गता मध्यमे स्याज्ज्वलन्ती॥ तन्मध्ये चित्रिणी सा प्रणव-
विलसिता योगिनां योगगम्या लूतातन्तूपमेया सकलसरसि-
जान्मेरुमध्यान्तराले। भित्त्वा देदीप्यते तद्ग्रथनरचनया
शुद्धबोधप्रबोधा तन्मध्ये ब्रह्मनाड़ी हरमुखकुहरादा-
दिदेवान्तरास्था॥ विद्युन्मालाविलासा मुनिमनसि
लसत्तन्तुरूपा सुसूक्ष्मा शुद्धज्ञानप्रबोधा सकलसुखलसच्छु-
द्धभावाद्यभावा। ब्रह्मद्वारं तदास्ये प्रविलसितसुधाधार-
रम्यप्रदेशम् ग्रन्थिस्थानं तदेतद्वदनमिति सुषुम्नाख्य-
नाड्या लपन्ति॥ अथाधारपद्मं सुषुम्नास्यलग्नं ध्वजा-
धोगुदोर्द्ध चतुःशोणपत्रम्। अधोवक्त्रमुद्यत्सुवर्णाभरम्यै-
र्वकारादिशान्तैर्युतं वेदवर्णैः॥ अमुष्मिन् धरायाश्चतुष्कोण-
चक्रं समुद्भासिशूलाष्टकैरावृतं तत्। लसत्पीतवर्णं तड़ित्-
कोमलाङ्गं तदन्तःसमास्ते धरायाः स्वबीजम्॥ चतुर्बाहुभूषं
गजेन्द्राधिरूढ़ं तदङ्के नवीनार्कतुल्यप्रकाशम्। शिशुः सृष्टि-
कारी लसद्वेदबाहु र्मुखाम्भोजलक्ष्मीश्चतुर्भागवेदः॥ वसेदत्र देवी
च डाकिन्यभिख्या लसद्वेदबाहूज्ज्वला रक्तनेत्रा। समानोदिता-
नेकसूर्य्यप्रकाशा प्रकाशं वहन्ती सदा शुद्धबुद्धेः॥ वज्राख्या व-क्त्र
देशाद्विलसति सततं कर्णिकामध्यसंस्थं कोणं तत् त्रैपुराख्यं

तड़िदिव विलसत् कोमलं कामरूपम्। कन्दर्पो नाम वायुर्विलसति सततं तस्य मध्ये समन्तात् जीवेशो बन्धुजीवप्रकरमपि हसन् कोटिसूर्य्यप्रकाशः॥ तन्मध्ये लिङ्गरूपो द्रुतकमलकथा-कोमलः पश्चिमास्यो ज्ञानध्यानप्रकाशः प्रथमकिशलयाकाररूपः स्वयम्भूः। उद्यत्पूर्णेन्दुबिम्बप्रकरकरचयस्निग्धसन्तानहासी काशीवासी विलासी विलसति, सरिदावर्त्तरूपप्रकाशी॥ तस्योर्द्ध्वे विषतन्तुशोकविलसत्सूक्ष्मा जगन्मोहिनी ब्रह्मद्वार-मुखं मुखेन मधुरं सञ्छादयन्ती स्वयम्। शङ्खावर्त्तनिभा नवीन-चपलामालाविलासास्पदा सुप्ता सर्पसमा शिवोपरि लसत्सार्द्ध-त्रिवृत्ताकृतिः॥ कूजन्ती कुलकुण्डली च मधुरं मत्तालिमाला-स्फुटं वाचं कोमलवाक्यबन्धरचनाभेदातिभेदक्रमैः। श्वासो-च्छ्वासविभञ्जनेन जगतां जीवो यया धार्य्यते सा मूलाम्बुज-गह्वरे विलसति प्रोद्दामदीप्तावलिः॥ तन्मध्ये परमा कलाति-कुशला सूक्ष्मातिसूक्ष्मा परा नित्यानन्दपरम्परातिचपला माला-लसद्दीधितिः। ब्रह्माण्डादिकटाहमेव सकलं यद्भासया भासते सेयं श्रीपरमेश्वरी विजयते नित्यप्रबोधोदया॥ ध्यात्वैतन्मूल-चक्रान्तरप्रथविलसत्कोटिसूर्य्यप्रकाशम् वाचामीशो नरेन्द्रः स भवति सहसा सर्व्वविद्याविनोदी। आरोग्यं तस्य नित्यं निरवधि स महानन्दचित्तान्तरात्मा वाक्यैः काव्यप्रबन्धैः सक-लसुरगुरून् सेवते शुद्धशीलः॥ सिन्दूरपूररुचिरारुणपद्ममन्यत् सौषुम्नमध्यघटितं ध्वजमूलदेशे। अङ्गच्छदैः परिवृतं तड़िदाभ-वर्णैर्वाद्यैः सबिन्दुलसितैश्च पुरन्दरान्तैः॥ तस्यान्तरे प्रविलस-द्विशदप्रकाशमम्भोजमण्डलमथो वरुणस्य तस्य। अर्द्धेन्दुरूपल-सितं शरदिन्दुशुभ्रं वङ्कारबीजममलं मकराधिरूढ़ः॥ तस्याङ्क-देशकलितो हरिरेव पायान्नीलप्रकाशरुचिरश्रियमादधानः। पीताम्बरः प्रथमयौवनगर्व्वधारी श्रीवत्सकौस्तुभधरो धृतवेद-

बाहुः॥ अत्रैव भाति सततं खलु राकिणी सा नीलाम्बुजोद-रसहोदरकान्तिशोभा। नानायुधोद्यतलसत्ततताङ्गलक्ष्मीर्दिव्याम्बराभरणभूषितमत्तचित्ता॥

अथ ज्ञानप्रशंसा॥ निगमकल्पद्रुमे तृतीयपटले॥ ज्ञानेन लभते मोक्षं ज्ञानेन पापनाशनम्। ज्ञानेन वीरकर्मा च ज्ञानेन पशुभावनम्। ज्ञानेन दिव्यभावी च तस्माज्ज्ञानं विशिष्यते। ज्ञानात् पवित्रं सर्वञ्च ज्ञानेनैव पवित्रकम्। यथाग्निना दहेत् सर्वं काष्ठगुल्मलतादिकम्। तथा ज्ञानेन दह्यन्ते सर्वकर्मफलानि च। ज्ञानञ्च द्विविधञ्चैव भेदाभेदविभेदतः। भेदज्ञानेन यत्कार्य्यं पुण्यपापं युगे युगे। अभेदज्ञानमानेन पूर्वकर्मादि दह्यते। अपरञ्च न भूयेत अभेदी मुक्तितां व्रजेत्। अन्यथा लक्षयुगैर्वा न मुक्तिं स्वर्गतादिकम्। लभते सर्वदा शम्भोर्भेदज्ञानी न संशयः। अभेदस्य क्रमः कुत्र निश्चितः केन कर्मणा। भेदः पशूनां भेदो हि दिव्यभाव उदाहृतः। भेदाभेदविदो वीरः क्रमे चैवाक्रमं न्यसेत्। क्रमेण यदि कुर्वीत कामनारहितश्चरन्। तदा कैवल्यफलदं कार्य्यं ज्ञेयं तथाक्रमम्। कामना यदि बध्नीयात् परा वाप्यपरापि वा। क्रमेणाप्यपकृष्टा सा पशुपाशनियान्विता। एकं द्वयं व्युत्क्रमं वा शोधितञ्च प्रयत्नतः। भेदश्चर्य्या नरो मोक्षी भेदबुद्ध्या स्वकर्मभाक्॥

अथाद्वैतज्ञानम्॥ मुण्डमालातन्त्रे षष्ठपटले॥ यावन्नात्मभावश्च तावदेवं पृथग्विधम्। तावत् क्रिया पृथग्भावा तावन्नानाविधा मता। तावद्भिन्नाश्च देवाश्च ब्रह्माविष्णुमहेश्वराः। गणेशश्च दिनेशश्च वह्निर्वरुण एव च। कुवेरश्चापि दिग्पाला एतत्सर्वं पृथक् पृथक्। तावन्नानाविधा चेष्टा स्त्रीपुंनपुंसकात्मिका। तावद्विल्वदलं भिन्नं देवेशि! तुलसीदलात्। तावज्जवाद्रोणकृष्णा करवीराणि भूतले। विभिन्नानि च देवेशि!

सत्यं वै तुलसीदलात्। तावद्विन्यस्य वीरस्य तावत् परमभाव-कः। तावत्तन्त्रे भेदबुद्धिस्तावद्दैवे पृथक् क्रिया। हरौ हरे भवेद्बुद्धिर्जायते जगदम्बिके !। करालवदना काली धौमदेक-जटा शिवा। षोड़शी भैरवी छिन्ना भिन्ना च भुवनेश्वरी। छिन्ना भिन्ना त्वन्नपूर्णा भिन्ना च वगलामुखी। मातङ्गी कमला भिन्ना भिन्ना वाणी च राधिका। भिन्ना चेष्टा क्रिया भिन्ना भिन्न आचारसंग्रहः। यावन्नैक्यं पादपद्मे भवान्या नैव जायते। अद्वैते तारिणीपादपद्मे परमपावने। ज्ञानसारे समुत्पन्ने हृत्पद्मनिलये तथा। ऐक्यं भवति चार्वङ्गि ! सर्वजीवेषु शङ्करि !। ननु जीवेष्वैक्यमिति कथमुक्तं यावतैक्यज्ञानसमुत्पत्तौ सत्यां शिवशक्तिसर्वजीवानामैक्यं तारिणीपादपद्मे इत्यपि न वक्तु-मुचितं तदानीं सेव्यसेवकत्वभावादिति चेत् सत्यम्। मुमुक्षून् प्रति ज्ञानमिश्रभक्त्युपदेशार्थमिदमुक्तम्। अत एव भक्तिरव्यभि-चारिणीत्यग्रे वक्ष्यति। निश्चितैकज्ञानं मुक्तं प्रति नोपदेशापेक्षा तस्य सर्वथा निश्चिन्तत्वादिति॥ न च पापं न वा पुण्यं न स्वर्गो नरकं न च। न सुखं नापि दुःखञ्च न रोगेभ्यो भयं तथा। न भयं नापि शोकस्य सर्वं ब्रह्ममयं जगत्। ब्राह्मणी क्षत्रिया वैश्या वैश्यजा शूद्रजान्त्यजा। तथैव तारिणी विद्या यथा विद्या तथा तथा। एवं ज्ञानं महेशानि ! यदा वै जायते प्रिये !। तदैव विद्या देवेशि ! विद्याविद्याविरोधिनी। जायते नात्र सन्देहो ब्रह्मानन्दमयो भवेत्। अद्वैतञ्च गुणातीतं निर्गुणं प्रकृतेः परः। परमानन्दसंयुक्तो मुक्तिं यास्यति निश्चितम्। इति सत्यं पुनः सत्यं सत्यं वच्मि वरानने !। तत्त्वज्ञानात् परं नास्ति नास्ति देवः सदाशिवात्। तदैवाचिरकालेन सोऽहं-ज्ञानं प्रजायते। नानात्वबुद्धिं कृत्वा वै सात्त्विकीं परमात्मि-काम्। गृहीत्वा च वरारोहे ! जायते परमार्थवित्। ज्ञानात्

परतरं नास्ति नास्ति नास्ति वरानने!। लब्ध्वा हि तत्त्वं परमं मुच्यते देहबन्धनात्॥ तथा॥ नानातन्त्रे पृथक् चेष्टा मयोक्ता गिरिनन्दिनि!। ऐक्यज्ञानं यदा देवि! तदा सिद्धि-मवाप्नुयात्। स्थावरे जङ्गमे चैव यदा तुल्यं मनो भवेत्। किं न सिध्यति विश्वेशि! परत्रेह च पार्वति!। एवं भुक्तिश्च मुक्तिश्च जायते जगदम्बिके!। तत्त्वज्ञानं तथैवान्ते अतो निर्वाणमाप्नु-यात्। एकादशपटले॥ यावन्नानात्वमेव स्यात् तावच्छिन्नं महीतले। तावज्जातिश्च गोत्रञ्च तावन्नाम पृथग्विधम्। ताव-ल्लिङ्गं पृथक् सर्वं वर्णानां पृथगेव हि। तावन्मित्रविपक्षौ च तावत् कलत्रबान्धवौ। तावत् पृथग्विधा पूजा मन्त्र-यन्त्रार्थनादिभिः। तावत् पुण्यं तावदेव पापं पुण्यविव-र्द्धकम्। तावत् त्वज्ञाप्यहमयमियञ्च जायते प्रिये!। यावन्न जायते चण्डि! विद्याविद्याविरोधिनी। अविद्यानाशिनी विद्या विद्याविद्याविवर्द्धिनी। या तारिणी महाविद्या विद्या-विद्याविरोधिनी। अतएव वरारोहे! विद्यामुत्पाद्य भूतले। निर्वाणं मोक्षमाप्नोति सत्यं त्रिपुरसुन्दरि!। श्रीदुर्गाचरणा-म्भोजे भक्तिरव्यभिचारिणी।तदेव जायते ब्रह्मज्ञानं ब्रह्मसुदुर्ल-भम्। ब्रह्मा विष्णुश्च रुद्रश्च वासवाद्या दिवौकसः। भैरवाश्चैव गन्धर्वा विद्याभ्याससमुत्सुकाः। ब्रह्मविद्यासमा विद्या ब्रह्मवि-द्यासमा क्रिया। ब्रह्मविद्यासमं ज्ञानं नास्ति नास्ति कदाचन॥

जगति मार्गद्वयं प्रवृत्तिनिवृत्तिभेदेन कर्मकाण्डं तत्-सन्यासश्च। तथा च॥ वाजसनेयसंहितोपनिषदः। पूज्य-पादशङ्कराचार्य्यकृतभाष्यधृततैत्तरीयके। इमौ द्वावेव पन्था-नावनुनिष्क्रान्ततरौ भवतः। क्रियापथश्चैव पुरस्तात् तयोः सन्यास एवेत्यवोचदिति। द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः। प्रवृत्तिलक्षणो धर्मो निवृत्तौ च विभाषितः॥ इति।

अत: काम्यकाण्डे भक्तिकाण्डे च प्रवृत्तिमार्गिणः पुरुषार्थ-सिद्धये सगुणस्थूलमूर्त्तीश्वरोपासना बहुविधा निरूपिता। इदानीन्तु निवृत्तिमार्गिणां सूक्ष्मतमनिर्गुणेश्वरोपासनार्थ-मात्मतत्त्वमुच्यते। यथा महानिर्वाणतन्त्रे चतुर्द्दशोल्लासे॥ ब्रह्मादितृणपर्य्यन्तं मायया कल्पितं जगत्। सत्यमेकं परं ब्रह्म विदित्वैवं सुखी भवेत्। विहाय नामरूपाणि नित्ये ब्रह्मणि निष्कले। परिनिश्चिततत्त्वो यः स मुक्तः कर्मबन्ध-नात्। न मुक्तिर्ज्जपनाद्धोमादुपवासशतैरपि। ब्रह्मैवाहमिति ज्ञात्वा मुक्तो भवति देहभृत्॥ कुलार्णवे पञ्चमखण्डेऽपि॥ चणं ब्रह्माहमस्मीति यः कुर्य्यादात्मचिन्तनम्। कोटिजन्मा-र्ज्जितं पापं तत्‌चणात्तस्य नश्यति॥ महानिर्वाणतन्त्रे॥ आत्मा साची विभुः पूर्णः सत्योऽद्वैतः परात्परः। देहस्थो-ऽपि न देहस्थो ज्ञात्वैवं मुक्तिभाग् भवेत्॥

नन्वात्मा यदि साचित्वेनाभिमतस्तदा य उपाधिकृतः संसारी विद्याविद्ययोरधिकृतः संसारगमनाय मोचगमनाय च तस्य साधरणो रथः कथं कल्पितः। यथा कठोपनिषदि तृतीयव-ल्ल्याम्॥ आत्मानं रथिनं विद्धि शरीरं रथमेव तु। बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च। इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्। आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहु र्मनीषिणः॥ इति। एतां व्याचचन्ते भगवन्तः शङ्कराचार्य्याः। रथिनं रथस्वामिनं विद्धि जानीहि। रथवद्धयस्थानीयैरिन्द्रियैराकृष्यमाण-त्वात् शरीरस्य रथत्वम्। बुद्धिन्तु अध्यवसायलचणां सारथिं विद्धि बुद्धिनेतृप्रधानत्वात् शरीरस्य सारथिनेतृप्रधान इव रथः। मनः सङ्कल्पविकल्पादिलचणं प्रग्रहं रशनां विद्धि मनसा हि गृहीतानि श्रोत्रादीनि करणानि प्रवर्त्तन्ते रशनाय वा। इन्द्रियाणि चचुरादीनि हयानाहुः। रथकल्पनाकुशलाः शरी-

रथाकर्षणसामान्यात् तेषु इन्द्रियेषु परिकल्पितेषु गोचरान् मार्गान् रूपादीन् विषयान् विद्धि। आत्मेन्द्रियमनोयुक्तं शरीरेन्द्रियमनोभिः सहितं संयुक्तमात्मानं भोक्तेति संसारी-त्याहु-र्मनीषिणो विवेकिनः। नहि केवलस्यात्मनो भोक्तृत्व-मस्ति बुद्ध्याद्युपाधिकृतमेव तस्य भोक्तृत्वम्। सत्यं देहस्थो-ऽपि न देहस्थ इत्यनेनात्मनो निर्लिप्तत्वं दर्शितमतो निर्लिप्तस्य साक्षित्वं विना भोक्तृत्वं घटते इत्यभिप्रायेणात्मा साक्षीत्यु-क्तम्। तर्हि सर्वत्र शरीरेषु एकस्यैवात्मनोऽवस्थाननिर्दिष्टत्वं शिष्टत्वं वा कस्य केन वा भवतीत्यपेक्षायामुत्तरमाह सैवोप-निषत्। यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा। तस्येन्द्रि-याण्यवश्यानि दुष्टाश्वा इव सारथेः। यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा। तस्येन्द्रियाणि वश्यानि सदश्वा इव सार-थेः। अतस्तर्हि चैतन्यरूपस्यात्मनः साक्षित्वमात्रमभिमतञ्चेत्तदा मोक्षः संसारो वा कस्येति सन्देहं निराकरोति सैव। यस्तु विज्ञा-नवान् भवति समनस्कः सदा शुचिः। स तु तत्पदमाप्नोति यस्माद्भूयो न जायते। यस्त्वविज्ञानवान् भवत्यमनस्कः सदा-ऽशुचिः। न स तत्पदमाप्नोति संसारञ्चाधिगच्छति। बाल-क्रीड़ितवत् सर्वं रूपनामादिकल्पनम्। विहाय ब्रह्मनिष्ठो यः स मुक्तो नात्र संशयः। मनसा कल्पिता मूर्त्ति र्नृणां चेन्मो-क्षसाधिनी। स्वप्नलब्धेन राज्येन राजानो मानवास्तथा। मृच्छिलाधातुदार्वादिमूर्त्तावीश्वरबुद्धयः। क्लिश्यन्तस्तपसा ज्ञानं विना मोक्षं न यान्ति वै। आहारसंयमक्लिष्टा यथेष्टा-हारतुन्दिलाः। ब्रह्मज्ञानविहीनाश्चेन्निष्कृतिं ते व्रजन्ति किम्। वायुपर्णकणातोयव्रतिनो मोक्षभागिनः। सन्ति चेत् पन्नगा मुक्ताः पशुपक्षिजलेचराः। उत्तमो ब्रह्मसद्भावो ध्यानभावस्तु मध्यमः। स्तुतिर्जपोऽधमो भावो बहिः पूजाऽधमाधमा। योगो

जीवात्मनोरैक्यं पूजनं सेवकेशयोः। सर्वं ब्रह्मेति विदुषो न योगो न च पूजनम्॥ ननु योगा बहुविधास्तूक्ता एव कथं जीवात्मनोरैक्यमात्रं योग इत्युच्यते इति चेत् सत्यम्। ते योगाः प्राणायामादिकर्मरूपतया गौणा एव मुख्ययोगस्तु जीवात्मनोरैक्यमेव। तथा च कुलार्णवे॥ न पद्मासनतो योगो न नासाग्रनिरीक्षणात्। ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः॥ इति॥ महानिर्वाणे॥ ब्रह्मज्ञानं परं ज्ञानं यस्य चित्ते विराजते। किं तस्य जपयज्ञाद्यैस्तपोभिर्नियमव्रतैः। सत्यं विज्ञानमानन्दमेकं ब्रह्मेति पश्यतः। स्वभावाद् ब्रह्मभूतस्य किं पूजाध्यानधारणाः। न पापं नैव सुकृतं न स्वर्गो न पुनर्भवः। नापि ध्येयो न वा ध्याता सर्वं ब्रह्मेति जानतः। अयमात्मा सदा मुक्तो निर्लिप्तः सर्ववस्तुषु। किं तस्य बन्धनं कस्मान्मुक्तिमिच्छन्ति दुर्धियः। स्वयं विरचितं विश्वमवितर्क्यं सुरैरपि। राजते तत्र तत्रैव ह्यप्रविष्टः प्रविष्टवत्। वहिरन्तर्यथाकाशं वस्तूनामिव सर्वशः। तथैव भाति तद्रूपो ह्यात्मा साक्षी स्वरूपतः। न बाल्यमस्ति च जरा नात्मनो यौवनं जनुः। सदैकरूपश्चिन्मात्रो विकारपरिवर्जितः। जन्मयौवनवार्द्धक्यं देहस्यैव न चात्मनः। पश्यन्तोऽपि न पश्यन्ति मायाप्रावृतबुद्धयः। यथा शरावतोयस्थं रविं पश्यत्यनेकधा। तथैव मायया देहे बहुधात्मानमीक्षते॥ गन्धर्वतन्त्रे पञ्चमपटले॥ नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः। एकः सम्भिद्यते भ्रान्त्या मायया न स्वरूपतः। तस्मादद्वैतमेवास्ति न प्रपञ्चो न संसृतिः। यथाकाशो घटाकाशो महाकाश इतीरितः। तथा भ्रान्तिर्द्विधा प्रोक्ता ह्यात्मा जीवेश्वरात्मना। नाहं देहो न च प्राणो नेन्द्रियाणि तथैव च। न मनो नैव बुद्धिश्च नैव चित्तमहङ्कृतिः। नाहं

पृथ्वी न सलिलं न च वह्निस्तथानिलः। न चाकाशो न शब्दश्च न च स्पर्शस्तथा रसः। न हि गन्धो न रूपञ्च न मायाहं न संसृतिः। सदा साक्षिस्वरूपात्मा ब्रह्म चैवास्मि केवलम्। सोऽहं ब्रह्म न संसारी न मत्तोऽन्यत् कदाचन। इति विद्यात् स्वमात्मानं समाधिः परिकीर्त्तितः। समाधौ शुद्धरूपोऽसौ तुरीयस्तत एव हि। तुरीयांशः परा शक्तिर्विन्द्वात्मा ब्रह्म केवलम्। जीवमीश्वरभावेन विद्यात् सोऽहमति ध्रुवम्। यथा फेनतरङ्गादि समुद्रादुत्थितं पुनः। समुद्रे लीयते तद्वज्जगदात्मनि लीयते। यस्यैवं परमात्मा न पृथग्भूतः प्रकाशितः। स याति परमं भावं स्वयं साक्षात् परामृतम्। यदा मनसि चैतन्यं भाति सर्वत्रगं सदा। योगिभ्यो व्यवधानेन तदा सम्पद्यते स्वयम्। यदा सर्वाणि भूतानि स्वात्मन्येवाभिपश्यति। सर्वभूतेषु चात्मानं ब्रह्म सम्पद्यते तदा। यदा सर्वाणि भूतानि समाधिस्थो न पश्यति। एकीभूतः परेणासौ तदा भवति केवलम्। तदा जन्मजरादुःखव्याधीनामिव भेषजम्। केवलं ब्रह्मविज्ञानं जायतेऽसौ तदा शिवः। तस्माद्विज्ञानतो मुक्तिर्नान्यथा भावकोटिभिः। मन्त्रौषधिजलैर्यद्वज्जीर्य्यते भक्षितं विषम्। तद्वत् सर्वाणि कर्माणि जीर्य्यन्ति ज्ञानिनः क्षणात्। देहाभिमाने गलिते विदिते परमात्मनि। यत्र यत्र मनो याति तत्र तत्र समाधयः। अहं ब्रह्म न चान्योऽस्मि मुक्तोऽहमिति भावयेत्। सच्चिदानन्दरूपोऽहं नित्यमुक्तस्वभाववान्। एवं समाधियुक्तो यः स समाधाय कल्पते। सदाशिवोऽहमित्युक्त्वा स्वेच्छया विहरेद् यतिः। लिप्यते न स पापेन बध्यते न च कर्म्मणा। यथाग्निर्विद्रुतस्वर्णमालिन्यं दहति क्षणात्। तथा ब्रह्मार्पितात्मासौ सर्वकर्माणि नाशयेत्। आत्मस्थां देवतां त्यक्त्वा वहिर्देवो विचिन्त्यते। करस्थं कौस्तुभं त्यक्त्वा भ्रमते काचतृष्णया॥

मुण्डमालातन्त्रे एकादशपटले॥ ज्ञानञ्च द्विविधं ज्ञेयं दुर्ज्ञेयं मनसापि च। ज्ञानं परमतत्त्वाख्यं ज्ञानं ज्ञेयार्थसाधनम्। अन्यद्विभ्रान्तिविषयं ज्ञानं साधारणं मतम्। एवञ्च त्रिविधं शेषमधमं तत्त्ववर्जितम्। तत्त्वज्ञानं वरारोहे! योगीन्द्राणाञ्च दुर्लभम्। विना तत्त्वपरिज्ञानात् विफलं पूजनं जपः। एको देवश्च एकोऽहं नात्मा भिन्नः शरीरतः। घटात्पटात् महेशानि! कालचक्रान्महोरुहात्। एवं ज्ञानं तत्त्वमयं तदा मुक्तोऽचिरेण तु। नानाकारणमेवास्य पूजनं ध्यानमेव च। सेवनञ्चैव तीर्थानां शरणं तारिणीपदम्। स्मरणं मनुराजस्य भ्रमणं वै कुलाचले। सत्सङ्गः सेवनं विष्णोः शङ्करस्यापि पूजनम्। कालिकापादयुगलभजनं ज्ञानकारणम्॥ क्रियाया अपि मुक्तिसाधनत्वं दर्शयति द्वितीयपटले। भक्त्या च क्रियया चण्डि! पूजयेद्यस्तु कालिकाम्। जीवः शिवत्वं लभते सत्यं सत्यं न संशयः॥ तथा॥ सदा क्रिया प्रकर्त्तव्या क्रियया सिद्धिमुत्तमाम्। प्राप्नोति साधकश्रेष्ठस्तस्मात एव न च त्यजेत्। एतत्तु वचनं गृहस्थपरमग्रे स्पष्टीभविष्यति प्रथमपटले॥ क्व यमः क्व तपो विष्णुः क्व कलिः कर्म्महिंसकः। रुवञ्च मानसं क्लेशं सदा सत्यं विभावयेत्। एवं विधानमासाद्य प्रजपेद्भावयेत् सुधीः। सोऽचिरेणैव कालेन शिवत्वं लभते जनः॥ शिवजीवयोरुपाधिमात्रभेद इति यत् प्रागुक्तं तदेव स्पष्टीकरिष्यति यथा तत्रैव॥ जीवः शिवः शिवो देवः स जीवः केवलः शिवः। पाशबद्धो भवेज्जीवः पाशमुक्तः सदाशिवः। पाशस्तु कुलार्णवे पञ्चमखण्डे॥ घृणा लज्जा भयं शोको जुगुप्सा चेति पञ्चमी। कुलं शीलं तथा जातिरष्टौ पाशाः प्रकीर्त्तिताः। पाशबद्धो भवेज्जीवः पाशमुक्तः सदाशिवः॥ मुण्डमालातन्त्रे तृतीयपटले॥ तुषेण बद्धो व्रीहिः स्यात्तुषाभावे तु तण्डुलः।

कर्मबद्धो भवेज्जीवः कर्ममुक्तः सदाशिवः॥ तथा। तोये क्षिप्तं हविर्यद्वत्तत्र क्षिप्तं न पूर्ववत्। पृथक्तया गुणेभ्यः स्यात्तद्वदात्मा प्रकीर्त्यते। क्षीरेण सहितं तोयं क्षीरमेव यथा भवेत्। अविशेषो भवेत्तद्वज्जीवात्मपरमात्मनोः। यथा चन्द्रार्कयोर्विम्बौ जलपूर्णघटेषु च। घटे भग्ने जलेष्वेव प्रलीनौ चन्द्रसूर्य्यकौ। न जायते न म्रियते आत्मा तु परमः शिवः। आत्मज्ञानं समासाद्य संसारार्णवदुस्तरम्। तरत्येव सदा चण्डि! जीवः शिवत्वमालभेत्। कठोपनिषदि द्वितीयवल्ल्यामपि॥ न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित्। अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥ भगवद्गीतायामप्येतत्। केवलं विपश्चिदित्यत्र कदाचिदिति नायं भूत्वा भविता वा न भूय इति च द्वितीयचरणे विशेषः॥ तथा षष्ठपटले॥ जीवः शिवस्तु विज्ञेयो विश्वेशः सर्वदारतिः। ब्रह्मतत्त्वं वरारोहे! देवानामपि दुर्लभम्॥ तथा॥ जीवः शिवत्वं लभते ज्ञानात्तु वरवर्णिनि!। विचित्रं गुरुपादाब्जं पार्वत्याः शङ्करस्य च। भजेदेकविधानेन जीवन्मुक्तः स एव हि। पिण्डे युक्ताः पदे युक्ता रूपे युक्ता वरानने!। गुणातीतेषु ये युक्तास्ते मुक्ता नात्र संशयः। न पिण्डं न पदं रूपं न जानामि सुरोत्तम!। कथ्यतामित्यादिदेवीप्रश्नानन्तरम्॥

शिव उवाच॥ पिण्डं कुण्डलिनीशक्तिः पदोऽहं सम्प्रकीर्त्तितः। रूपञ्चापि वरारोहे! ध्यानमेव न संशयः। महाकुण्डलिनीं शक्तिं ये भजन्ति भुजङ्गिनीम्। स कृतार्थः स धन्यश्च स दिव्यो वीरसत्तमः। तथा॥ ये दिव्याः साधकेन्द्राश्च ये वीराः साधकोत्तमाः। पशवः पशवो ज्ञेयाः सर्वशास्त्रार्थकोविदाः। साधको मुक्तिमाप्नोति सत्यं सत्यं

वरानने !। शृणु देवि ! जगद्धात्रि ! सर्वमङ्गलमङ्गलम्। तच्च शृणुयाद्वे वेश्मि ! ब्रह्मनिर्वाणमाप्नुयात्। तच्छ्रवणे कथं ब्रह्माप्तिरिति नाशङ्कनीयम्॥ परमार्थस्वरूपाम्नायाद्वयतन्त्र-शास्त्रस्य तत्त्वज्ञानदर्शकत्वेन ब्रह्मविद्यात्वाद्वेदादीनां न तथात्वम्। तथा च मुण्डकोपनिषत्। द्वे विद्ये वेदितव्ये इति इस्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च। तत्र परा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथापरा यया तदक्षरमधि-गम्यते। ननु ऋग्वेदादिवाह्याद्वेदादिवाह्या चेत् परा विद्या तर्हि कथमुपनिषत् परा विद्या स्यान्मोक्षसाधनञ्च। या वेद-वाह्याः स्मृतय इति स्मरन्ति कुदृष्टित्वान्निष्फलत्वादनादेय-त्वात्। उपनिषदश्च ऋग्वेदादिवाह्यत्वं स्यात्। ऋग्वेदा-दित्वे च पृथक्करणमनर्थकमप्यपरेऽपि न वेद्यविषयविज्ञानस्य विवक्षितत्वादुपनिषद्वेद्याक्षरविषयं हि वेद्याक्षरविषयं हि विज्ञानमिह पराविद्येति प्राधान्येन विवक्षितम्। नोपनि-षच्छब्दराशिः। वेदशब्देन तु सर्वत्र राशिर्विवक्षितः। शब्द-राश्यधिगमेऽपि यत्तु आन्तरमन्तरेण गुर्वभिगमनादिलक्षणं वैराग्यञ्च नाक्षराधिगमः सम्भवतीति पृथक्करणं ब्रह्मविद्यायाः परा विद्येति॥

ब्रह्मज्ञानप्रशंसामाह॥ गायत्रीतन्त्रे प्रथमपटले॥ तावद्विद्या भवेत् सर्वा यावज्ज्ञानं न जायते। ब्रह्म-ज्ञानपदं ज्ञात्वा सर्वाश्चैव तिरोहिताः। वेदशास्त्रपुरा-णानि सामान्यगणिका इव। या पुनः शाम्भवी विद्या गुप्ता कुलबधूरिव। देहस्थाः सर्वविद्याश्च देहस्थाः सर्वदेवताः। देहस्थसर्वतीर्थानि लभन्ते गुरुवाक्यतः। अध्यात्मविद्या हि नृणां सौख्यमोक्षकरी भवेत्। कर्माकर्म तथा जाप्यमेतत्

सर्वं निवर्त्तते॥ अतएव कुलार्णवे॥ अभ्यस्य सर्वशास्त्राणि तत्त्वं ज्ञात्वा प्रयत्नतः। पलालमिव धान्यार्थी सर्वशास्त्राणि सन्त्यजेत्॥ गीतायामपि॥ त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्ज्जुन इत्यादि। गायत्रीतन्त्रे॥ काष्ठमध्ये यथा वह्निः पुष्पे गन्धः पयो घृतम्। देहमध्ये तथा देवः पुण्यपापविवर्जितः। आत्मतत्त्वज्ञानस्य बहुजन्मार्ज्जित-पुण्यफलत्वं दर्शयति कठोपनिषदि द्वितीयवल्ली। श्रवणायापि बहुभि र्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विदुः। आश्चर्य्योऽस्य वक्ता कुशलोऽस्य लब्धा आश्चर्य्यो ज्ञाता कुशलानुशिष्टः। न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः। अनन्यप्रोक्ते न गीरत्र नास्त्यणीयान् ह्यतर्क्यमनुप्रमाणात्॥ नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठः। यां त्वमापः सत्यधृतिर्बतासि त्वादृङ्नो भूयान्नाचिकेतः! प्रष्टा॥ जानाम्यहं शेवधिरित्यनित्यम् नह्यध्रुवैः प्राप्यते ध्रुवं तत्। ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम्॥ कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरनन्त्यमभयस्य पारम्। स्तोममहदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नाचिकेतोऽत्यस्राक्षीः॥ तं दुर्दर्शं गूढ़मनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति॥ एतच्छ्रुत्वा सम्परिगृह्य मर्त्त्यः प्रवृह्य धर्म्यमनुमेतमाप्य। स मोदते मोदनीयं हि लब्ध्वा विवृतं सद्म नचिकेतसं मन्ये॥ अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद्वद॥ सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योम्॥ इत्येतत्॥ नित्यातन्त्रे अष्टमपटले॥ देव्युवाच॥

देवदेव! महादेव! जगन्निस्तारतारक!। परमात्मेति किं नाम कथयस्व महेश्वर!। ईश्वर उवाच॥ साधु पृष्टं त्वया भद्रे! कथयामि शृणुष्व तत्। यस्य विज्ञानमात्रेण जीवन्मुक्तो भवेन्नरः। विरजाख्ये महेशानि! महापद्मवराटके। वैखरीपरमायोगात् पुष्करे तीर्थराजके। निराकारं परं ज्योतिः परंब्रह्मस्वरूपकम्। सर्वज्ञो निर्गुणो नित्योऽद्वयः सर्वप्रतिष्ठितः। महाकुण्डलिनीयोगात् यदा तेजोमयो भवेत्। तदैव चिन्तनीयोऽसौ परमात्मा सुरेश्वरि!। जीवाद्याः परमेशानि! तदंशाः परिकीर्त्तिताः॥

महानिर्वाणतन्त्रे द्वितीयोल्लासे॥ देव्युवाच॥ कथितं यत् परं ब्रह्म परमेशं परात् परम्। यस्योपासनतो मर्त्यो भुक्तिं मुक्तिञ्च विन्दति। केनोपायेन भगवन्! परमात्मा प्रसीदति। किं तस्य साधनं देव! मन्त्रः को वा प्रकीर्त्तितः। किं ध्यानं किं विधानञ्च परेशस्य परात्मनः। तत्त्वेन श्रोतुमिच्छामि कृपया कथय प्रभो!॥ सदाशिव उवाच। तव स्नेहेन वक्ष्यामि मम प्राणाधिकं परम्। ज्ञेयं भवति तद्ब्रह्म सच्चिद्विश्वमयं परम्। यथातथस्वरूपेण लक्षणैर्वा महेश्वरि!। सत्तामात्रं निर्विशेषमवाङ्मनसगोचरम्। असत्त्रिलोकीसद्भावं स्वरूपं ब्रह्मणः स्मृतम्। समाधियोगैस्तद्वेद्यं सर्वत्र समदृष्टिभिः। द्वन्द्वातीतैर्निर्विकल्पैर्देहात्माध्यासवर्जितैः। यतो विश्वं समुद्भूतं येन जातञ्च तिष्ठति। यस्मिन् सर्वाणि लीयन्ते ज्ञेयं तद्ब्रह्म लक्षणैः॥ ब्रह्मज्ञानन्तु सन्न्यासिनामेव न गृहस्थानाम्। तथा च मुण्डकभाष्ये प्रथमे श्रीशङ्कराचार्य्यपादाः॥ ज्ञानमात्रे यद्यपि सर्वाश्रमिणामधिकारस्तथापि सन्न्यासनिष्ठा एव ब्रह्मविद्यामोक्षसाधनं न कर्मसहितेति भैक्षचर्य्यां चरन्तः सन्न्यासयोगादिति च ब्रुवन् दर्शयति।

विद्याकर्म्मविरोधाच्च नहि ब्रह्मात्मैकत्वदर्शनेन सह कर्म स्वप्नेऽपि सम्पादयितुं शक्यम्। विद्यायाः कालविशेषाभावान्नियतनिमित्तत्वात् कालकर्मसङ्कोचानुपपत्तिः। यत्तु गृहस्थेषु ब्रह्मविद्याप्रदानकर्तृत्वादिलिङ्गं न तत् स्थितं न्यायं बाधितुमुत्सहते। नहि विधिशतेनापि तमःप्रकाशयोरेकत्र सम्भवः शक्यते कर्त्तुमित्यन्तेनाह। तर्हि वक्ष्यमाणमस्मिन् धर्मे स्यादित्युपक्रमस्य मातापित्रोः सेवनतत्पर इति। कथमुक्तं गृहस्थस्यैव मातृपितृसेवनसम्भवादिति चेन्न। अस्मिन् धर्मे आरभ्यमाणे इति वक्तव्यमन्यथा परोपकारनिरत इति न सङ्गच्छते। ब्रह्मैकनिष्ठस्यात्मपरज्ञानाभावादिति॥ ब्रह्मणो जगत्सृष्टिमाह मुण्डकोपनिषत्॥ यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति। यथेशतः पुरुषात् केशलोमानि तथा चरात् सम्भवतीह विश्वम्॥ आत्मज्ञानप्रकारस्तु तृतीयमुण्डकोपनिषत्॥ स वेदैतत् परं ब्रह्मधाम यत्र विश्वं निहितं भाति शुभ्रम्। उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्त्तन्ति धीराः॥ कामान् यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र। पर्य्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः॥ नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम्॥ नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गात्। एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम॥

ब्रह्मज्ञानप्राप्तिफलमाह च॥ सम्प्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः। ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति॥

वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः।
ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे॥
सन्न्यासिनां ब्रह्मविद्येति यत् प्रागुक्तं तदत्र सुस्पष्टीकृत-
मुपनिषदेति॥ तथा॥ गताः कलाः पञ्चदशप्रतिष्ठा देवाश्च
सर्वे प्रतिदेवतासु। कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये
सर्वं एकीभवन्ति॥ यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति
नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं
पुरुषमुपैति दिव्यम्॥ स यो ह्वैतत् परमं ब्रह्म वेद ब्रह्मैव
भवति। ना स्यादब्रह्मवित्कुले भवति तरति शोकं तरति
पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति॥ महानिर्वाण-
तन्त्रेऽपि॥ बहुजन्मार्जितैः पुण्यैः सद्गुरु यदि लभ्यते। तदा
तद्वक्तो लब्ध्वा जन्मसाफल्यमाप्नुयात्। चतुर्वर्गं करे कृत्वा
परत्रेह च मोदते। स धन्यः स कृतार्थश्च स कृती स च
धार्मिकः। स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः। सर्व-
शास्त्रेषु निष्णातः सर्वलोकप्रतिष्ठितः। यस्य कर्णपथोपान्ते
प्राप्तो मन्त्रो महामणिः। धन्या माता पिता तस्य पवित्रं
तत् कुलं शिवे!। पितरस्तस्य सन्तुष्टा मोदन्ते त्रिदशैः
सह। गायन्ति गाथां पुलकाङ्कितविग्रहाः।
अस्मत्कुले कुलश्रेष्ठो जातो ब्रह्मोपदेशिकः। किमस्माकं
गयापिण्डैः किं तीर्थश्राद्धतर्पणैः। किं दानैः किं जपै-
र्होमैः किमन्यैर्बहुसाधनैः। वयमक्षयतृप्ताः स्मः सत्पुत्रस्यास्य
साधनात्। शृणु देवि! जगद्वन्द्ये! सत्यं सत्यं मयोच्यते।
परब्रह्मोपासकानां किमन्यैः साधनान्तरैः। मन्त्रग्रहणमात्रेण
देही ब्रह्ममयो भवेत्। ब्रह्मभूतस्य देवेशि! किमसाध्यं
जगत्त्रये। किं कुर्वन्ति ग्रहा दुष्टा वेतालाश्चेटकादयः। तस्य
दर्शनमात्रेण पलायन्ते पराङ्मुखाः। रक्षितो ब्रह्ममन्त्रेण

प्राप्नतो ब्रह्मतेजसा। किं बिभेति ग्रहादिभ्यो मार्त्तण्ड इव चापरः। तं दृष्ट्वा भयमापन्नाः सिंहं दृष्ट्वा यथा गजाः। विद्रवन्ति च नश्यन्ति पतङ्गा इव पावके। न तस्य दुरितं किञ्चिद् ब्रह्मनिष्ठस्य देहिनः। तस्य पूतस्य शुद्धस्य सर्वप्राणिहितस्य च। को वोपद्रवमन्विच्छेदात्मापघातकं विना। ये द्रुह्यन्ति खलाः पापाः परब्रह्मोपदेशिनः। स्वद्रोहं ते प्रकुर्वन्ति नातिरिक्तो यतः स्मृतः। स तु सर्वहितः साधुः सर्वेषां प्रियकारकः। तस्यानिष्टे क्षते देवि! को वा स्यान्निरुपद्रवः। स्वरूपबुद्ध्या यद्वेद्यं तदेव लक्षणैः शिवे!। लक्षणैरामुमिच्छूनां विहितं तत्र साधनम्। तत् साधनं प्रवक्ष्यामि शृणुष्वावहिता प्रिये!। तत्रादौ कथयाम्याद्ये! मन्त्रोद्धारं महेशितुः। प्रणवं पूर्वमुद्धृत्य सच्चित्पदमुदाहरेत्। एकं पदान्ते ब्रह्मेति मन्त्रोद्धारः प्रकीर्त्तितः। सन्धिक्रमेण मिलितः सप्तार्णोऽयं मनुर्मतः। तारहीनेन देवेशि! षड्वर्णोऽयं मनुर्मतः॥ एतन्मन्त्रप्रशंसापि तत्रैव॥ सर्वमन्त्रोत्तमः साक्षाद्धर्मार्थकाममोक्षदः। मात्रसिद्धाद्यपेक्षास्ति नारिमित्रादिदूषणम्। न तिथिर्न च नक्षत्रं न च राशिगणस्तथा। कुलाकुलानां नियमो न संस्कारोऽत्र विद्यते। सर्वथा सिद्धिमन्त्रोऽयं नात्र कार्य्या विचारणा॥ मन्त्रार्थं मन्त्रचैतन्यं यो न जानाति साधकः। शतलक्षप्रजप्तेऽपि तस्य मन्त्रो न सिध्यति। अतोऽस्यार्थञ्च चैतन्यं कथयामि शृणु प्रिये!। अकारेण जगत्पाता संहर्त्ता स्यादुकारकः। मकारेण जगत्स्रष्टा प्रणवार्थ उदाहृतः। स्वच्छन्देन सदास्थायि चिच्चैतन्यं प्रकीर्त्तितम्। एकमद्वैतमोशानि! बृहत्वाद्ब्रह्म गीयते। मन्त्रार्थः कथितो देवि! साधकाभीष्टसिद्धिदः। मन्त्रचैतन्यमेतद्धि तदधिष्ठात्रदेवता। तज्ज्ञानं परमेशानि! भक्तानां सिद्धिदायकम्। तस्या-

धिष्ठाद्य देवेशि! सर्वव्यापि सनातनम्। अवितर्क्यं निराकारं
याचातीतं निरञ्जनम्। वाङ्मायया कमलाद्येन तारहीनेन
पार्वति!। दीयते विविधा विद्या मायाश्रीसर्वतोमुखी।
तारेण तारहीनेन प्रत्येकं सकलं पदम्। युग्मयुग्मक्रमेणापि
मन्त्रोऽयं विविधो भवेत्॥

अथ ब्रह्ममन्त्रोपासनाप्रकारस्तु तत्रैव॥ ब्राह्मे मुहूर्त्ते
उत्थाय प्रणम्य ब्रह्मदं गुरुम्। ध्यात्वा च परमं ब्रह्म
यथाशक्ति मनुं स्मरेत्। पूर्ववत् प्रणमेद्ब्रह्म प्रातःकृत्यमिदं
स्मृतम्॥ तथा। अथ सन्ध्याविधिं वक्ष्ये ब्रह्ममन्त्रस्य
शाम्भवि!। यां कृत्वा ब्रह्मसम्पत्तिं लभते भुवि मानवः।
प्रातर्मध्याह्नसायाह्ने यथादेशे यथासने। पूर्ववत् परमब्रह्म
ध्यात्वा साधकसत्तमः। अष्टोत्तरशतं देवि! गायत्रीजपमा-
चरेत्। जपं समर्प्य विधिवत् पूर्ववत् प्रणमेत् सुधीः। एषा
सन्ध्या मया प्रोक्ता सर्वथा ब्रह्मसाधनम्। गायत्रीं शृणु
चार्वङ्गि! सर्वपापप्रणाशिनीम्। परमेश्वरं ङेऽन्तमुक्त्वा विद्महे
तदनन्तरम्। परतत्त्वाय परतो धीमहीति वदेत् प्रिये!।
तदनन्तरमीशानि! तन्नो ब्रह्म प्रचोदयात्। इयं श्रीब्रह्मगायत्री
चतुर्वर्गप्रदायिनी। यजनं पूजनञ्चैव स्नानं पानञ्च भोजनम्।
यद्यत् कर्म्म प्रकुर्वीत ब्रह्ममन्त्रेण साधयेत्। तत् सदिति
वदेद्देवि! प्रारम्भे सर्वकर्मणाम्। ब्रह्मार्पणमस्तु वाक्यं पान-
भोजनकर्म्मणोः। ऋषिः सदाशिवो ह्यस्य छन्दोऽनुष्टुवुदा-
हृतम्। देवता परमं ब्रह्म सर्वान्तर्यामि निर्गुणम्। चतुर्वर्ग-
फलावाप्त्यै विनियोगः प्रकीर्त्तितः। अङ्गन्यासकरन्यासौ
कथयामि शृणु प्रिये!। तारं सच्चिदेकमिति ब्रह्मेति सकलं
सह। अङ्गुष्ठतर्जनीमध्यानामिकासु महेश्वरि!। कनिष्ठयोः
करतलपृष्ठयोः सुरवन्दिते!। नमःस्वाहावषड्वौषट्फडन्तैश्च

यथाक्रमम्। न्यसेन्न्यासोक्तविधिना साधकः सुसमाहितः। हृदादिपादपर्य्यन्तमेवमेवं विधीयते। प्राणायामं ततः कुर्य्यान्मूलेन प्रणवेन वा। मध्यमानामिकाभ्याञ्च दक्षहस्तस्य पार्वति!। वामनासापुटं धृत्वा दक्षनासापुटेन च। पूरयेत् पवनं मन्त्री मूलमन्त्रमिदं जपन्। अङ्गुष्ठेन दक्षनासां धृत्वा कुम्भकयोगतः। जपेद्द्वात्रिंशतावृत्त्या ततो दक्षिणनासया। शनैः शनैस्त्यजेद्वायुं जपन् षोड़शधा मनुम्। वामनासापुटेऽप्येवं पूरकुम्भकरेचकम्। पुनर्दक्षिणतः कुर्य्यात् पूर्ववत् सुरवन्दिते!। प्राणायामविधिः प्रोक्तो ब्रह्ममन्त्रस्य साधने। ततो ध्यानं प्रकुर्वीत साधकाभीष्टसाधनम्॥ हृदयकमलमध्ये निर्विशेषं निरीहं हरिहरविधिवेद्यं योगिभिर्ध्यानगम्यम्। जननमरणभीतिध्वंसि सच्चित्स्वरूपं सकलभुवनवीजं ब्रह्मचैतन्यमीड़े॥ ध्यात्वैवं परमं ब्रह्म मानसैरुपचारकैः। पूजयेत् परया भक्त्या ब्रह्मसायुज्यहेतवे। गन्धं दद्यान्महीतत्त्वं पुष्पमाकाशमेव च। धूपं दद्याद्वायुतत्त्वं दीपं तैजसमर्पयेत्। नैवेद्यं तोयतत्त्वेन प्रदद्यात् परमात्मने। ततो जप्त्वा महामन्त्रं मनसा साधकोत्तमः। समर्प्य ब्रह्मणे पश्चाद्बहिः पूजां समारभेत्। उपस्थितानि द्रव्याणि गन्धपुष्पादिकानि च। वस्त्रालङ्करणादीनि भक्ष्यपेयानि यानि च। मन्त्रेणानेन संशोध्य ध्यात्वा ब्रह्म सनातनम्। निमील्य नेत्रे मतिमानर्पयेत् परमात्मने। ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्। ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म्मसमाधिना। ततो नेत्रे समुन्मील्य जप्त्वा मूलं स्वशक्तितः। तज्जपं ब्रह्मसात् कृत्वा स्तोत्रञ्च कवचं पठेत्। स्तोत्रं शृणु महेशानि! ब्रह्मणः परमात्मनः। यत् श्रुत्वा साधको देवि! ब्रह्मसायुज्यमश्नुते। नमस्ते सते सर्वलोकाश्रयाय नमस्ते चिते विश्वरूपात्मकाय। नमोऽद्वैततत्त्वाय

मुक्तिप्रदाय नमो ब्रह्मणे व्यापिने निर्गुणाय॥ त्वमेकं शरण्यं त्वमेकं वरेण्यं त्वमेकं जगत्कारणं विश्वरूपम्। त्वमेकं जगत्कर्त्तृपातृप्रहर्त्तृ त्वमेकं परं निश्चलं निर्विकल्पम्॥ भयानां भयं भीषणं भीषणानां गतिः प्राणिनां पावनं पावनानाम्। महोच्चैःपदानां नियन्तृ त्वमेकं परेषां परं रक्षणं रक्षणानाम्॥ परेश! प्रभो! सर्वरूपाविनाशिन्ननिर्देश्य! सर्वेन्द्रियागम्य! सत्य!। अचिन्त्याक्षर! व्यापक! व्यक्ततत्त्वाजपाभाषकाधीश! पायादपायात्॥ तदेकं स्मरामस्तदेकं भजामस्तदेकं जगत्साक्षिरूपं नमामः। सदेकं विधानं निरालम्बमीशं भवाम्भोधिपोतं शरण्यं व्रजामः॥ पञ्चरत्नमिदं स्तोत्रं ब्रह्मणः सच्चिदात्मनः। यः पठेत् प्रयतो भूत्वा ब्रह्मसायुज्यमाप्नुयात्। प्रदोषे यः पठेन्नित्यं सोमवारे विशेषतः। श्रावयेद्बोधयेत्प्राज्ञो ब्रह्मनिष्ठान् सबान्धवान्॥ इति पञ्चरत्नस्तोत्रं समाप्तम्॥

कवचं शृणु चार्वङ्गि! जगन्मङ्गलनामकम्। पठनाद्धारणाद्यस्य ब्रह्मज्ञो जायते ध्रुवम्। परमात्मा शिवः पातु हृदयं परमेश्वरः। कण्ठं पातु जगत्पाता वदनं सर्वदृग्विभुः। करौ मे पातु विश्वात्मा पादौ रक्षतु चिन्मयः। सर्वाङ्गं सर्वदा पातु परं ब्रह्म सनातनम्। श्रीजगन्मङ्गलस्यास्य कवचस्य सदाशिवः। ऋषिश्छन्दोऽनुष्टुबिति परमब्रह्म देवता। चतुर्वर्गफलावाप्त्यै विनियोगः प्रकीर्त्तितः। यः पठेद्ब्रह्मकवचं ऋषिन्यासपुरःसरम्। स ब्रह्मज्ञानमासाद्य साक्षाद्ब्रह्ममयो भवेत्। भूर्जे विलिख्य गुटिकां स्वर्णस्थां धारयेद्यदि। कण्ठे वा दक्षिणे बाहौ सर्वसिद्धीश्वरो भवेत्। इत्येतत् परमब्रह्मकवचं ते प्रकाशितम्। दद्यात् प्रियाय शिष्याय गुरुभक्ताय धीमते॥ इति ब्रह्मकवचं समाप्तम्॥

एवं सम्पूज्य मतिमान् स्वजनैर्बान्धवैः सह। महाप्रसादं

स्वीकुर्य्याद् ब्रह्मण: परमात्मन:। पूजने परमेशस्य नावाहन-विसर्ज्जने। सर्व्वत्र सर्व्वकालेषु साधयेद्ब्रह्मसाधनम्। अस्नातो वा कृतस्नानो भुक्त्वा वापि बुभुक्षित:। पूजयेत् परमात्मानं सदा निर्म्मलमानस:। अनेन ब्रह्ममन्त्रेण भक्ष्यपेयादिकं चरेत्। दीयते परमेशाय तदेव पावनं महत्। गङ्गातोये शिवादौ च स्पर्शदोषोऽपि वर्त्तते। परब्रह्मार्पिते द्रव्ये स्पृष्टास्पृष्टि र्न दुष्यति॥ तथा। नात्र वर्णविचारोऽस्ति नोच्छिष्टादिविचारणम्। न कालनियमोऽप्यत्र शौचाशौचं तथैव च॥ तथा। महापातकयुक्तो वा युक्तो वा चान्यपातकै:। सकृत् प्रसादग्रहणान्मुच्यते नात्र संशय:। सार्द्धत्रिकोटितीर्थेषु स्नानदानेन यत् फलम्। तत् फलं लभते मर्त्त्यो ब्रह्मार्पितनिषेवणात्॥ तथा। पुण्यायन्ते क्रिया: सर्व्वा दुष्कृतं सुकृतायते। स्वेच्छाचारोऽत्र विहितो महामन्त्रस्य साधने। किं तस्य वैदिकाचारैस्तान्त्रिकैर्व्वापि तस्य किम्। ब्रह्मनिष्ठस्य विदुष: स्वेच्छाचारो विधि: स्मृत:। कृतेनास्य फलं नास्ति नाकृतेनापि किल्विषम्। न विघ्न: प्रत्यवायोऽस्य महामन्त्रस्य साधने। अस्मिन् धर्म्मे महेशि! स्यात् सत्यवादी जितेन्द्रिय:। परोपकारनिरतो निर्व्विकार: सदाशय:। मात्सर्य्यहीनोऽदम्भी च दयावान् शुद्धमानस:। मातापित्रो: प्रीतिकरस्तयो: सेवनतत्पर:॥ तथा। द्वात्रिंशता सहस्रेण जपेनास्य पुरस्क्रिया। तद्दशांशेन हवनं तर्पणं तद्दशांशत:। सेचनं तद्दशांशेन तद्दशांशेन सुन्दरि!। ब्राह्मणान् भोजयेन्मन्त्री पुरश्चरणकर्म्मणि। भक्ष्याभक्ष्यविचारोऽत्र त्याज्यो ग्राह्यो न विद्यते। न कालशुद्धिनियमो नवा स्थाननिरूपणम्। अभक्तो वापि भक्तो वा स्नातो वाऽस्नात एव वा। साधयेत् परमं मन्त्रं स्वेच्छाचारेण साधक:। ज्ञानिनो यत्र कुत्रापि मरणे मोक्ष एव च॥ तदुक्तं मुण्डमालातन्त्रे प्रथमपटले॥

गङ्गाद्वारे प्रयागे वा विमुक्तोऽपावनीमुखे। यत्र कुत्र मृतो ज्ञानी तत्रैव मोक्षमाप्नुयात् ॥

निश्वासतः पञ्चभूतावस्थाः पूर्वं निरूपिताः। इदानीं वर्णभेदेनावस्थापञ्चकं निरूपयन् वर्णतः प्रयोजनान्तरमपि दर्शितवान्। नरपतिजयचर्य्यास्वरोदयधृतब्रह्मजामले ॥ मातृकायां स्वराः प्रोक्ताः स्वराः षोड़शसंख्यया। तेषां द्वावन्तिमौ त्याज्यौ चत्वारश्च नपुंसकाः। शेषा दशस्वरान्तेषु स्यादेकैको द्विके द्विके। ज्ञेया अतः स्वराद्याश्च ह्रस्वाः पञ्चस्वरोदये। स्वरा हि मातृकोच्चारा मात्राव्याप्तं जगत्त्रयम्। तस्मात् स्वरोद्भवं सर्वं त्रैलोक्यं सचराचरम्। अकारादिस्वराः पञ्च ब्रह्माद्याः पञ्च देवताः। निवृत्त्याद्याः कलाः पञ्च इच्छाद्यं शक्तिपञ्चकम्। मायाद्याश्चक्रभेदाश्च धराद्यं भूतपञ्चकम्। गन्धाद्या विषयास्ते च कामबाणा इतीरिताः। पिण्डं पदं तथा रूपं रूपातीतं निरञ्जनम्। स्वरभेदे स्थितं ज्ञानं ज्ञायते गुरुतः सदा। अकारादिस्वराः पञ्च तेषामष्टौ भिदास्त्वमी। मात्रा वर्णो ग्रहो जीवो राशि र्भं पिण्डयोगकौ। प्रसुप्तो भाषते येन येन गच्छति शब्दितः। तत्र नाम्नाद्यवर्णे या मात्रा मात्रास्वरः स हि ॥ इति मात्रास्वरचक्रम् ॥ कादिहान्तान् लिखेद्वर्णान् स्वराधो ङञणोज्झितान्। तिर्य्यक्पंक्तिक्रमेणैव पञ्चत्रिंशत्प्रकोष्ठके। नरनामादिमो वर्णो यस्मात् स्वरादधः स्थितः। स स्वरस्तस्य वर्णस्य वर्णस्वर इहोच्यते। न प्रोक्ता ङञणा वर्णा नामादौ सन्ति ते नहि। चेद्भवन्ति तदा ज्ञेया जगडास्ते यथाक्रमम्। यदि नाम्नि भवेद्वर्णः संयुक्ताक्षरलक्षणः। ग्राह्यस्तस्यादिमो वर्ण इत्युक्तं ब्रह्मजामले ॥ इति वर्णस्वरचक्रम् ॥ अस्वरे मेषसिंहालिरिः कन्यायुग्मकर्कटाः। उस्वरे च धनुर्मीनौ एस्वरे च तुलावृषौ। ओस्वरे मृगकुम्भौ च राशिशश्च-

ग्रहस्वरा:। स्वराधः स्थापयेत् खेटं राशिर्यो यस्य नायकः॥ इति ग्रहस्वरचक्रम्॥ षोड़शाक्षरो ह्यवर्गः स्यात् कादिवर्गास्तु पञ्चकाः। चतुर्वर्णौ यशौ वर्गौ सङ्ख्या वर्गेषु कीर्त्तिताः। नाम्नो वर्णाः स्वरा ग्राह्या वर्गाणां वर्णसङ्ख्यया। पिण्डिताः पञ्चभिर्भक्ताः शेषं जीवस्वरं विदुः॥ इति जीवस्वरचक्रम्॥ मेषवृषावकारे च मिथुनाद्याः षड़ंशकाः। मिथुनांशास्त्रयश्चैव इकारे सिंहकर्कटाः। कन्या तुला उकारे च वृश्चिकस्य त्रयोंऽशकाः। एकारे वृश्चिकस्यान्त्याः कार्मुकं षड्मृगादिमाः। अंशास्त्रयो मृगस्यान्त्याः कुम्भमीनौ तथौस्वरे। एवं राशिस्वरः प्रोक्तो नवांशप्रक्रमोदयः॥ इति राशिस्वरचक्रम्॥ अकारे सप्त ऋक्षाणि रेवत्यादिक्रमेण च। पञ्च पञ्च इकारादावेवमृक्षस्वरोदयः॥ इति नक्षत्रस्वरचक्रम्॥ मात्रावर्णस्वरात् सङ्ख्या सङ्ख्या वीजस्वरात्तथा। पिण्डीकृते शरैः शेषः पिण्डस्वर इहोच्यते॥ इति पिण्डस्वरचक्रम्॥ मात्रादिवर्णभेदेन स्वरानुत्पाद्य नामतः। योगे शरहृते तत्र शेषो योगस्वरो मतः॥ इति योगस्वरचक्रम्॥ प्रोक्ता नैसर्गिकाश्चाष्टौ मात्राद्या नामजाः स्वराः। एतेषामुदयान् वक्ष्ये द्वादशाब्दादिकालजान्। प्रभवादिक्रमेणैषां स्वराणामस्वरादितः। उदयो द्वादशाब्दानां प्रत्येकं द्वादशाब्दिकः। अस्यान्तरोदयो वर्षमेकं मासं दिनद्वयम्। लोकाब्दिघटिका प्रोक्ता चाष्टत्रिंशत् पलानि च।१।१।२।४३।३८।१॥ प्रभवाद्यब्दमेकैकमुदयस्त्वस्वरादितः। द्वादशाब्दस्य वर्षोना तद्भुक्ति र्वार्षिकस्वरे।०।०।१।२।४३।३८।२॥ अस्वरो दक्षिणे स्वामी इस्वरश्चोत्तरायणे। वर्षभुक्त्यार्द्धमानेन भोगः षाण्मासिकस्वरे।०।०।१६।२१।५८॥३॥ अकारादिस्वराः पञ्च वसन्तादिक्रमोदयाः। एकैकस्मिन् स्वराः पञ्च

द्विसप्ततिर्दिनोदयाः ॥ ७२ ॥ षड्दिनानि वदान्याब्धो वह्निवेदपलानि च। अन्तरोदय एतस्य ऋतुनाड़ीस्वरोदये ॥ ०॥०॥ ६। ३२। ४३ ॥ ४ ॥ नभस्यमार्गवैशाखे अस्वरस्योदयो भवेत्। आश्विनश्रावणाषाढ़े इकारो नायकः स्मृतः। उकारश्चैत्रपौषे स्यादेकारो ज्येष्ठकार्त्तिके। ओकारश्चोदयं याति माघफाल्गुनमासयोः। द्वे दिने त्रय्ब्धयो नाड्यश्चाष्टत्रिंशत्पलानि च। अन्तरोदय उक्तोऽसावत्र वै मासिकस्वरे ।०। ०। १। २। ४३। ३८ ॥ ५ ॥ अस्वरः कृष्णपक्षेशः शुक्लपक्षेश इस्वरः। पक्षान्तरात्मिका भुक्ति र्मासभुक्त्यर्द्धमानतः ।०।०। १। २१। ४९ ॥ ६ ॥ अकारादिक्रमाच्चास्य नन्दादितिथिपञ्चकम्। दिनस्वरोदयो दित्यं स्वस्वतिथ्यादि जायते। तिथ्यादौ घटिकाः पञ्च पलानां सप्तविंशतिः। अन्तरोदय उक्तोऽसौ दिनस्वरस्य सूरिभिः ।०।०।०।५॥२७॥७॥ तिथ्यन्तरोदयमानेन उदयो घटिकास्वरे। ज्ञेयमेवं विधानेन समुक्तश्चादिजामले। घटीस्वरो घटीपञ्चपलानि सप्तविंशतिः। अस्यान्तरोदयः प्रोक्तो घटिकार्द्धप्रमाणतः।०। ०।०।०॥ ३०॥ ८॥ द्वादशाब्दादिनाद्यन्ताः स्वस्थानाच्च स्वकालतः। उदयान्ते पुनस्तत्र अन्तरैकादशोदयैः। वर्षो मासो दिनं नाड़ी पलानि च क्रमादिदम्। कालमानं मया प्रोक्तं पञ्चधात्र स्वरोदये। द्वादशाब्दस्वरादीनां भुक्तं पलमयन्तु यत्। तद्भुक्तं स्वरभेदेन लब्धः शेषो द्विकन्तु यत्। लब्धो भुक्तः स्वरा ज्ञेयाः शेषश्चैवोदितः स्वरः। अस्मिन् षष्ठ्यादिभुक्तेन भुक्तः स्यादुदितः स्वरः। उदितस्य स्वरस्य स्यु र्नामस्वरवशेन ताः। पञ्च बालादिकावस्थाः स्वस्वकालप्रमाणतः। आद्यो बालः कुमारश्च युवा वृद्धो मृतस्तथा। निजावस्थास्वरूपेण फलदा नात्र संशयः। किञ्चिल्लाभकरो

बालः कुमारस्त्वार्द्धलाभदः। सर्वसिद्धिं युवादत्ते वृद्धे हानि-र्मृते क्षयः। यात्रायुद्धे विवादे च नष्टे दुष्टे रुजान्विते। बाल-स्वरो भवेद्दुष्टो विवाहादिशुभे शुभः। सर्वेषु शुभकार्य्येषु यात्राकाले तथैव च। कुमारः कुरुते सिद्धिं सङ्ग्रामे सच्चतो जयी। शुभाशुभेषु सर्वेषु मन्त्रयन्त्रादिसाधने। सर्वसिद्धिं युवादत्ते यात्रायुद्धे विशेषतः। दाने देवार्च्चने दीक्षागूढ़मन्त्रप्रजल्पने। वृद्धस्वरो भवेद्भव्यो रणे भङ्गो भयङ्गमे। विवाहादिशुभं सर्वं सङ्ग्रामाद्यशुभं तथा। न कर्त्तव्यं नृभिः किञ्चिद्याते मृत्यु-स्वरोदये। मृतो वृद्धस्तथा बालः कुमारस्तरुणः स्वरः। यथोत्तरबलाः सर्वे ज्ञातव्याः स्वरवेदिभिः। यो यस्य पञ्चम-स्थाने स स्वरो मृत्युदायकः। तृतीये तु भवेद्वृद्धिः शेषा मध्यफलप्रदाः। मृत्युर्हीनबले नाम्नि जयो नाम्नि स्वराधिके। समनाम्नि भवेत् साम्यं सन्धिर्जयपराजयौ। एकस्वरे भवेत् साम्यं द्वितीयेऽर्द्धफलं भवेत्। तृतीये च फलं पूर्णं तुर्य्ये बन्धः परे क्षयः। शत्रोर्मृत्युस्वरे प्राप्ते यूनि प्राप्ते स्वकीयके। तत्काले प्रारभेद् युद्धं विजयो भवति ध्रुवम्। तत्काले मात्रको ग्राह्यो दिने वर्णस्वरस्तथा। पक्षे ग्रहस्वरो ज्ञेयो मासे जीवस्वरोदयः। ऋतौ राश्यंशको ग्राह्यः षण्मासे धिष्ण्यसम्भवः। अब्दे पिण्डस्वरो ज्ञेयो योगे द्वादशवार्षिकः। सर्वकाले बली वर्णः सर्वव्यापी न संशयः। तस्मात् सर्वत्र यत्नेन वर्णं वीक्ष्य शुभाशुभम्॥ यथा पदा हस्तिपदे प्रविष्टा यथा हि नद्यः खलु सागरेषु। यथा हरेर्द्देहगताश्च देवास्तथा स्वरा वर्ण-फलोदयस्थाः॥ साधनं मन्त्रयन्त्रस्य यन्त्रयोगश्च सर्वदा। अधोमुखानि कर्म्माणि मात्रास्वरबले कुरु। वर्णस्वरबले सर्वं कर्त्तव्यं च शुभाशुभम्। सिद्धिदं सर्वकार्य्येषु युद्धकाले विशेषतः। मारणं मोहनं स्तम्भं विद्वेषोच्चाटने वशम्।

विवादं विग्रहं घातं कुर्य्याद्गुरुस्वरोदये। यानपानादिकं सर्वं वस्त्रालङ्कारभूषणम्। विद्यारम्भं विवाहञ्च कुर्य्याज्जीवस्वरोदये। प्रासादारामहर्म्म्याणि देवतास्थापनानि च। राजाभिषेचनं दीक्षा कर्त्तव्यं राशिकि स्वरे। शान्तिकं पौष्टिकञ्चैव प्रवेशो बीजवापनम्। स्त्रीविवाहस्तथा यात्रा कर्त्तव्या भस्वरोदये। शत्रूणां देशभङ्गश्च कोटयुद्धञ्च वेष्टनम्। सेनाध्यक्षस्तथा मन्त्री कर्त्तव्यः पिण्डकोदये। योगिन साधयेद्योगं देहस्थं ज्ञानसम्भवम्। आणवं शाम्भवञ्चैव शाक्तेयञ्च तृतीयकम्। तिथिवारौ च नक्षत्रं पृथक् पृथक् प्रभाषितम्। यत्तदेकत्र सम्मील्य कुर्य्याद्वर्णस्वरोदये। यस्य नामादिको वर्णस्तिथिवारर्क्षजं मृतम्। तद्दिनं वर्जयेत्तस्य हानिमृत्युकरं यतः। अनेन स्वरयोगेण शत्रूणां मारणादिकम्। मन्त्रयन्त्रक्रियां मोहं साधयेत्तद्दिने बुधः॥ १७॥ बालस्वरादिकावस्था भानु १२ सङ्ख्या भवन्ति ताः। उदयास्तक्रमेणैव स्वरभुक्तिप्रमाणतः। घटिकाख्ये दिने पक्षे मासे चर्त्वयने तथा। वर्षे द्वादशवर्षे च अवस्था जायते स्वरे। भपलानि २७ घटीपञ्च ५ भमासार्द्धदिनद्वयम्। १। २ ३०। द्विषट्कं ६ पञ्चमासाश्च अवस्थाप्रमितिः क्रमात्। भुक्तस्वरप्रमाणन्तु स्वस्वभोगेन भाजयेत्। गतावस्था गताङ्केन शेषस्तत्कालजो भतः। पूर्वस्मिन्नस्वरः स्वामी इस्वरो दक्षिणे तथा। उस्वरः पश्चिमे भागे एसौम्ये मध्य ओस्वरः। यस्यां दिश्युदयं याति स्वरस्तत्पञ्चमीं दिशम्। वर्जयेत् सर्वकार्य्येषु यात्राकाले विशेषतः। पृच्छते पृच्छकः स्वाम्नुः स्वरस्यास्तमितां दिशम्। हानिर्मृत्यु भयं भङ्गो जायते नात्र संशयः॥ १८॥ तिथ्यादावुदयं याति तिथिस्वराद्घटीस्वरः। बालस्वरादिकं प्रश्ने फलं तस्य वदाम्यहम्। तिथिभुक्तघटीसङ्ख्यां कृत्वा फलमयीं ततः।

ऋतुचक्रे ३२७ इते ग्रेषे स्वरस्तत्कालसम्भवः। समुद्दिश्य कृतः प्रश्नः फलं तस्य प्रजायते। यत्र नोदिश्यते किञ्चित् तत्र प्रष्टुः शुभाशुभम्। बालोदये यदि पृच्छा लाभार्थे स्वल्पलाभदा। रोगार्थे चिररोगस्य गमे हानिः क्षयो रणे ॥ १ ॥ कुमारोदयवेलायां लाभो भवति पुष्कलः। रुजां नाशो जयो युद्धे यात्रा सर्वत्र सिद्धिदा ॥ २ ॥ युवोदये लभेद्राज्यं क्लेशच्छेदश्च तत्क्षणात्। सङ्ग्रामे शत्रुहन्ता च यात्रा च फलदा भवेत् ॥४॥ वृद्धोदये न लाभः स्यात् क्लेशिनां क्लेशवर्द्धनम्। सङ्ग्रामे भङ्गमायाति यात्रायां न निवर्त्तते ॥ ४ ॥ मृतोदये यदा भूतः पृच्छति स्वं प्रयोजनम्। तत् सर्वं मृत्युदं ज्ञेयं युद्धे मृत्युः सभङ्गकः ॥ ५ ॥ १८ ॥ ओजःस्वराः पुमांसः स्युः स्त्रियो युग्माः स्वरा मताः। स्वस्वस्वरोदये जाते पुंसां स्त्रीणां बलं भवेत्। गर्भार्थे पुंस्वरे पुत्त्रः कन्या कन्यास्वरोदये। युग्मे युग्मं क्षयो नष्टे मातुर्मृत्युश्च संक्रमे। द्युनाड़ीस्वरयोः पुंसोः पुंयुग्मं स्त्रीयुगं स्त्रियोः। तयोस्तु पुंस्त्रियोः पुंस्त्री युग्मं गर्भे विनिर्दिशेत्। जन्मर्चे जन्मपादो यस्तद्वर्णे योऽक्षरस्वरः। तेन नाड़ीस्वरो ज्ञेयः स्वभावः प्राणिनामिह। चपलः कातरो मूर्खः कृपणश्चाजितेन्द्रियः। असत्यबहुभाषी च जातो बालस्वरोदये ॥ १ ॥ व्यवसायी कलाभिज्ञः स्त्रीरतः सुभगः सुखी। दीर्घायुररिभिः शूरः कुमारोदयसम्भवः ॥ २ ॥ सर्वलक्षणसम्पूर्णो राजा भवति विश्रुतः। सर्वकालजयो युद्धे जातो युवोदये शिशुः ॥ ३ ॥ स्त्रीजितो धार्मिकः कामी विवेकी स्थिरसाहसः। सत्यवादी सदाचारः पुमान् वृद्धोदयोद्भवः ॥ ४ ॥ कृशो समस्वरः क्रूरो विभ्रमो विकलेन्द्रियः। सर्वकार्य्यालसो दुष्टो जन्म यस्य मृतोदये ॥ ५ ॥ आद्यतिथेस्त्रयो वर्णा द्वौ वर्णौ शेषयोर्मतौ। एवं तिथिवये ज्ञेया

वर्णसङ्ख्या तिथिस्वरे। वर्णास्तिथ्यादि तिथ्याख्या जन्म-हानिर्मृतिस्तथा। ऋच्छे त्रिजन्मनि हानौ मृतौ मृत्युर्न संशयः। २०॥ स्वरोदये॥ यदुक्तं नामले तन्मे ज्ञातं गुरुप्रसादतः। स्वराद्दिनफलं वक्ष्ये पुंसां कर्म्मप्रकाशकम्। योगपिण्डर्क्षराश्याख्यजीवखेटाक्षरस्वरान्। उत्पाद्य नाम-तश्चाष्टौ मात्रान्तान् स्थपयेत् क्रमात्। तस्याधस्तान्निखे-चाष्टौ द्वादशाब्दाधिकान् स्वरान्। स्वभोगेन समायुक्तान् भोगश्चैकादशांशकः। यथोत्तरबला एते योगाद्या नामजाः स्वराः। कालोदयाः स्वराश्चापि ज्ञातव्याः स्वरवेदिभिः। अकारादिस्वराधस्तात् सङ्ख्यां वेदप्रमाणिकाम्। विन्यस्य क्रमयोगेन ते च विंशोपकाः स्मृताः। योगे द्वादशवर्षाः स्युरवस्थाः पिण्डतोऽब्दके। अक्षरादयने ज्ञेयो राशिस्वरा-दुत्तरस्वरे। जीवात्मास्वरावस्था ग्रहात् पञ्चस्वरे तथा। वर्णाद्दिनस्वरे ज्ञेये मात्रास्वराष्टौस्वरे। द्वादशाब्दाधिकः कालो यस्याकारादिके स्वरे। स्थितस्तत्र शुभो न स्यात् पश्चावस्थाशुभोऽपि च। स्वरौ द्वावन्तिमौ दुष्टौ बाल-पूर्वदलं तथा। शेषं सार्द्धद्वयं मध्यमिति ज्ञेयं शुभाशुभम्। द्वादशवार्षिकाद्या ये स्वान्तरोदयसंस्थिताः। ते शुभा एकतः स्थाप्या अशुभाश्चान्यतः पृथक्। शुभाशुभस्वरूपस्य राशि-युग्मस्य मध्यतः। एकस्मात् पातिते शेषे ज्ञेयं तद्दिनजं फलम्। विंशत्या ताड़िते शेषे चतुःषष्टिविभाजिते। लब्धं विंशोपकास्तत्र शुभाशुभप्रकाशकाः। योगे स्वकर्म्मतः पिण्डे शरीरान्ते सुखञ्जनात्। राशौ स्वकुलतो जीवे स्वरित्ता-द्‌ग्रहतो रिपोः। वर्णे स्वस्वामितो ज्ञेयं मात्रायां स्त्रीजनात् फलम्। एवं ज्ञात्वा वदेद्विद्वान् दिने फलं शुभाशुभम्॥

एतेषां व्याख्यानं प्रक्रिया सङ्केतश्चोच्यते॥ यथा। मातृका-

यामित्यादि सुगमम्। प्रसुप्त इत्यादि येन नाम्ना प्रसुप्तः पुरुषो भाषते येन च नाम्ना प्रब्द्रित आहूतः सन्नागच्छति। तत्र नाम्नि आद्यवर्णप्रथमाक्षरे या मात्रा यः स्वरः स मात्रास्वर इत्यर्थः। यथा रामतोषणनाम्नि रेफे आकारमिलनादकारो मात्रास्वर इति॥१॥ कादीत्यादि॥ पूर्वपश्चिमक्रमेण षट् रेखा देयाः। एवं दक्षिणोत्तरक्रमेणाष्टौ रेखा दातव्यास्तदा कोष्ठानां पञ्चत्रिंशद्भवति। तत्र प्रथमकोष्ठके अ इ उ ए ओ एते वर्णा आदौ लिखिताः। अधुना ङ ञ णकारै र्हीनान् कादिहान्तान् वर्णानुत्तरदक्षिणक्रमेपंक्तौ द्वितीयकोष्ठपञ्चके क ख ग घ च एते वर्णाः तृतीयकोष्ठपञ्चके छ ज झ ट ठ एते वर्णाः चतुर्थे ड ढ त थ द एते पञ्चमे ध न प फ ब एते षष्ठे भ म य र ल एते सप्तमे व श ष स ह एते क्रमशो लेखनीयाः। नरनामाद्यवर्णो यस्मात् स्वरादधो विलेखनेन पतितः स तस्य वर्णस्वर इति। यथा उक्तनाम्न आद्यवर्णो रेफ एकारादधः पतितः। अतस्तस्य वर्णस्वर एकार इति॥ यदि नाम्नीत्यादि। यदि नामादौ संयुक्तवर्णो भवेत् तदा संयुक्तस्याद्यो वर्णो ग्राह्यः। यथा प्राणकृष्णनाम्नि संयुक्ताद्यः पकारो वर्णस्वरो ग्राह्यः। तेन तन्नाम्नो वर्णस्वर उकार इति॥ अस्वरे इत्यादि। अकाराधस्तात् मेषसिंहवृश्चिका लेख्याः। एवमिकाराधस्तात् कन्यामिथुनकर्कटाः। अन्यत् स्पष्टम्। मृगो मकरः॥ स्वराध इत्यादि। यस्य राशेः स्वामी यो ग्रहस्तं तदधस्ताल्लिखेत्। अधिपतिश्च ज्योतिषे यथा॥ मेषस्य वृश्चिकस्यारः शुक्रो वृषतुलाधिपः। बुधः कन्यामिथुनयोर्धनुर्मीनाधिपो गुरुः। शनिः कुम्भमकरयोः कर्कटाधिपतिर्विधुः। सिंहराश्यधिपो भानुरेते चैत्राधिपा मताः॥ एवं यो राशिर्यस्मात् स्वरादधः पतितः स स्वरस्तस्य ग्रहस्वर इति। यथा रामतोषणनाम्नि रेफेण तुलाराशिस्वरे स्वराधस्तात् स्थितः

तेन तस्य स्वरो ग्रहस्वर इति॥ षोडशेत्यादि॥ विसर्गपर्य्यन्त-मवर्गः षोडशाक्षरः। कवर्ग चवर्ग टवर्ग तवर्ग पवर्गाः प्रत्येकं पञ्चाक्षराः। यवर्गशवर्गौ प्रत्येकं चतुरक्षरौ वर्गेष्वियं संख्या प्रकीर्त्तिता। नाम्नोऽक्षराणां वर्गवर्णानुसारेणाङ्कान् सङ्कलय्य पञ्चभिर्हरेत्। भुक्तावशेषाङ्को यत्संख्यकः स्यादस्वरादिपञ्चके तत्सङ्ख्यया जीवस्वर इति। यथा रामतोषणनाम्नि रेफस्य द्वौ आकारस्य च द्वौ मकारस्य पञ्चवर्णमिलिताकारो न गृह्यते इति सङ्केतः। अतो मकारादकारो न ग्राह्य इति। तकार-स्यैकतृकारस्य त्रयोदशथकारस्य द्वौ णकारस्य पञ्च तेन सङ्केतेन सङ्कलने कृते त्रिंशदङ्कः पञ्चभिर्भुक्तास्तेत्तदा शेषो न तिष्ठति शेषाभावे हारकाङ्को ग्राह्य इति सङ्केतात् तस्य नाम्नो जीवस्वर ओकार इति॥ मेषेत्यादि॥ नवांशक्रमेण मेषवृषौ मिथुनस्य षडंशा अस्वरे लेखनीयाः। एवमिस्वरे मिथुनस्य त्रयोऽंशाः सिंहकर्कटौ च। एवमुकारे कन्यातुले वृश्चिकस्याद्यास्त्रयो-ऽंशाः। एस्वरेऽवशिष्टा वृश्चिकस्य षडंशा धनुर्म्मकरस्याद्याः षडंशाः। ओस्वरे मकारावशिष्टांशाः। कुम्भमीनौ च। एतेन रामतोषणनाम्नि रेफस्य तुलाप्रथमांशनिपातनात् उस्वरो राशिस्वर इति॥ अकार इत्यादि॥ अस्वराधस्तात् रेव-त्यादिक्रमेण सप्त नक्षत्राणि आर्द्रापर्य्यन्तानि लेखनीयानि। एवमिकारादौ पञ्चपञ्चकत्वाद् यथा इस्वराधस्तात्।७।८।९। १०।११॥ उकारे।१२।१३।१४।१५।१६॥ एकारे। १७।१८।१९।२०।२१॥ ओकारे।२२।२३।२४।२५। २६॥ मात्रेत्यादि। मात्रारादवस्वर्णस्वराश्च या सङ्ख्या हृत्ता सा तथा जीवस्वरस्य या सङ्ख्या सा च पिण्डीकर्त्तव्या। अङ्कत्रयस्य सङ्कलनं कार्य्यम्। तत्तु पञ्चभिर्हर्त्तव्यं यद्धरणावशिष्टं स्वरपञ्चक-मध्येऽवशिष्टाङ्कसङ्ख्यया पिण्डस्वरो ज्ञातव्य इति॥ ६॥ यथा

रामतोषणनाम्नो मात्रास्वरोऽकारस्तस्यैका सङ्ख्या वर्णस्वर एकारस्तस्य चतस्रः सङ्ख्याः जीवस्वर ओकारस्तस्य पञ्चसङ्ख्यास्त्री पिण्डीकृते दशसङ्ख्या भवन्ति। पञ्चहृतासु दशसङ्ख्यासु किञ्चित्तदवशिष्टमत ओस्वरस्तस्य पिण्डस्वर इति ॥७॥ मात्रादीत्यादि। मात्रादिपिण्डस्वरान्तस्य रसप्रकस्य या या सङ्ख्या तां सर्वामेकीकृत्य पञ्चभिर्हरेत्। शेषो यस्तदङ्कसङ्ख्यया योगस्वर इति ॥ ८ ॥ यथा रामतोषणनाम्नि मात्रास्वरस्य एकारसङ्ख्या वर्णस्वरस्य चतस्रः सङ्ख्याः ग्रहस्वरस्य तिस्रः सङ्ख्या जीवस्वरस्य पञ्च सङ्ख्या राशिस्वरस्य तिस्रः सङ्ख्याः नक्षत्रस्वरस्य तिस्रः सङ्ख्याः पिण्डस्वरस्य पञ्च सङ्ख्याः। सर्वस्मिन्नङ्के एकीकृते चतुर्विंशतिभूता पञ्चभिर्हृतायां तस्यां चत्वारोऽङ्काः स्थिताः। तेन तस्य स्वरो योगस्वर इति ॥ ८ ॥ प्रोक्ता इत्यादि। नामत उत्पन्नाः स्वाभाविका एते मात्राद्या अष्टौ स्वराः। एतेषां स्वराणां उदयान् बालादिव्यवहारान् द्वादशाब्दवत्सरायनर्त्तुमासपक्षतिथिदण्डजान् वक्ष्ये इत्यर्थः। प्रभवादित्यादिस्वरादितोऽस्वरमारभ्यैषां स्वराणां षष्टिसंवत्सरे प्रभवादिक्रमेण प्रत्येकं द्वादशाब्दिक उदयः स्यादेवं द्वादश द्वादश ज्ञात्वा इकारादीनां चतुर्णामिति। अत्र अस्वरे। प्रभव १ विभव २ क्रूर ३ प्रमोद। ४। प्राजापत्यः ५। अङ्गिरा ६ श्रीमुख ७ भाव ८ युवा ९ धाता १० ईश्वरे ११ बहुधान्याः १२॥ ईस्वरे॥ प्रमाथि १३ विक्रम १४ वृष १५ चित्रभानु १६ स्वर्भानु १७ तोरण १८ पार्थिव १९ व्यय २० सर्वजित् २१ सर्वधारि २२ विरोधि २३ विकृताः २४॥ उस्वरे॥ खर २५ नन्दन २६ विजय २७ जय २८ मन्मथ २९ दुर्मुख ३० हेलम्ब ३१ विलम्ब ३२ विरोध ३३ शर्वरी ३४ प्लव ३५। शुभकृत् ३६॥ एस्वरे। शोभन ३७ क्रोध ३८ विश्वावसु ३९ पराभव ४० प्लवङ्गः ४१ कीलक ४२

सौम्य ४३ साधारण ४४ विरोधि ४५ परिधावि ४६ प्रमाथि ४७ आनन्दाः ४८ ॥ ओम्बरे ॥ राक्षस ४९ अनल ५० पिङ्गल ५१ कालसूत्र ५२ सिद्धार्थ ५३ रौद्र ५४ दुर्मति ५५ दुन्दुभि ५६ रक्त ५७ रक्ताक्ष ५८ क्रोध ५९ क्रोधाः ६० ॥ व्यवहारसमये द्वादशाब्दिके कस्योदयः कस्य चान्तरोदय एतज्ज्ञापनार्थं रत्नमालायाम्। शकेन्द्रकालः पृथगाकृतिघ्नः शशाङ्कनन्दाश्वियुगैः समेतः। शराद्रिवस्विन्दुहृतः स लब्धः षष्ट्याप्तशेषे प्रभवादतोऽब्दाः॥ वर्षवर्जन्तु यच्छिष्टं सूर्य्यैः सम्पूर्य्य खोर्म्मिभिः। हृते व्युत्क्रमतः खाग्निहृतेऽंशमासकादयः॥ अस्यार्थः। शकाब्दः पृथक् द्विष्ठस्तत्रैक आकृतिघ्नः २२ द्वाविंशत्या पूरितः। द्वाविंशत्यक्षरच्छन्दस आकृतिनामकरणेनाकृतिः द्वाविंशतिरिति सङ्केतः। शशाङ्कनन्दाश्वियुगैरेकनवत्युत्तरशतद्वयाधिकचतुःसहस्रैः समितः सोऽङ्कः शराद्रिवस्विन्दुहृतः पञ्चसप्तत्यधिकाष्टादशशतैर्यावत्सङ्ख्यं गन्तुं शक्नोति तावता हृतः कर्त्तव्यः। स लब्धः पूर्वस्थितशकाब्दाङ्केन युतः कार्य्यः। षष्ट्याप्तशेषे पश्चादेषोऽङ्कः पूर्ववत् षष्ट्या हृतलब्धस्यावशिष्टे प्रभवादयोऽब्दा भवन्ति एकावशेषे प्रभवः द्व्यवशेषे विभव इत्यादिः॥ वर्षवर्जमित्यस्यार्थः। वर्षवर्जन्तु यच्छेषं वर्षातिरिक्तं शराद्रिवस्विन्दुहृतावशिष्टं यत् तत् सूर्य्यैर्द्वादशभिः सम्पूर्य्य खोर्म्मिभिः षष्ट्या हृतं कर्त्तव्यम्। व्युत्क्रमत इत्यनेन षष्टिहृतावशेषाङ्का दण्डाः षष्टिहृते लब्धेऽंशके खाग्निहृते त्रिंशता हृतेऽवशिष्टा अंशका दिनानीति यावत्। लब्धा अङ्का मासा ज्ञेया इति॥ प्रभवादिषष्टिवर्षाण्युपक्रम्य। तत्राद्या विंशतिर्ब्राह्मी द्वितीया वैष्णवी तथा। तृतीया रुद्रदैवत्या श्रेष्ठा मध्याधमा क्रमादिति।

अधुना प्रक्रिया क्रियते १७४२ शकाब्दे वैशाखशुक्लप्रतिपदि शकाङ्कः १७४२। द्वाविंशत्या २२ पूरितः। ३८३२४ शशाङ्कन-

शराग्नियुगैः ४२९१ समितः संयुक्तः सन् भूतः । ४२६१५ एष एव शराद्रिवस्विन्दुहृतः १८७५ लब्धः २२ अवशिष्टाङ्कः १३६५ एष च द्वादश १२ पूरितः सन् जातः १६३८० पूर्ववत् शराङ्के-त्याद्यङ्कैः १८७५ हृतलब्धो मासः । ८ । अवशिष्ट १३८० एष तु त्रिंशता ३० पूरितः सन् जातः ४१४०० पूर्ववत् शरा-द्रीत्याद्यङ्कैः १८७५ हृतलब्धाः ४ द्वाविंशति २२ दिनानि अवशिष्टाङ्कः १५० षष्टि ६० पूरितः सन् जातः ९३० पूर्ववत् शराद्रीत्याद्यङ्कैः १८७५ हृतलब्धाः ४ दण्डा अवशिष्टाङ्कः १५०० षष्टिपूरितः ६० सन् जातः ९०००० पूर्ववत् शराद्रीत्या-द्यङ्कैः १८७५ हृतलब्धाः ४८ पलानि अवशिष्टं किञ्चिदपि नास्ति। एतेन २२ वर्ष ८ मास २२ दिन ४ दण्ड ४८ पलानि समुदायप्रक्रियायामायातानि ॥ शकाङ्क १७४२ सम्मतानि सन्ति जातानि १७६४ । ८ । २२ । ४ । ४८ । षष्ट्या हृतलब्धाः २४ वर्षा ८ मासा २२ दिनानि ४ दण्डाः ४८ पलानीति । तत्र द्वादशाब्दिकस्वरज्ञानार्थं द्वादशभागेन हृते भुक्तस्वर-द्वितीय २ इकार ४ तृतीय ३ उकारस्वरो वर्त्तमानः तेन द्वादशाब्दिक उकारस्वरोदय इति ॥ अत्र भुक्तभोग्यादिना अन्तरोदयोऽग्रे व्यक्तीभविष्यति ॥ अस्यान्तरोदय इति । अस्य द्वादशाब्दस्यान्तरोदय एकादशभागेन द्वादशे हृते लब्धवर्षः १ मास १ दिन २ दण्ड ४३ पल २८ एतदेव ॥ वर्षमेक-मित्यादि। एतेन वर्षमासदिनदण्डाः पलीकर्त्तव्याः । तद् यथा वर्षं द्वादशेन सङ्गुण्य तत्र मासं संयोज्य तं त्रिंशता ३० सङ्गुण्य दिनीकृत्य दिनद्वयं २ तत्र दत्त्वा दिनानि षष्ट्या ६० सङ्गुण्य दण्डान् तत्र दत्त्वा दण्डान् षष्ट्या ६० सङ्गुण्य पलानि दत्त्वा हृतान्तरोदयमानपलानि ९४३४४० भागहारकाणि प्रश्नैर्भुक्त-वर्षं द्वादशभिः १२ सङ्गुण्य ३ मासान् त्रिंशता ३० सङ्गुण्य तत्र

दिनानि दत्त्वा तत्र षष्टिगुणिते नव दण्डान् दत्त्वा षष्ठ्या मुहूर्त्तस्य ६० पलमिलने तेन तत्रान्तरोदयपलमानेन भागो गृह्यते लब्धाङ्कः २ एतेन द्वादशादिकस्वर उकारस्तदादिक ओकारोऽकारश्च द्वौ स्वरावन्तरोदये भुक्तौ इकारो वर्त्तमानस्य भागशेषपलानि ८७३७४० अस्मिन्नन्तरोदये पलमाने पतिते भोग्यपतिते भोग्यपलानि ५४००७८ अत्र गते षष्ठ्यामुहूर्ते भुक्ते लब्धवर्षमास ३ दिन २ दण्ड ४२ पल २० भोग्यलब्धवर्षः मास ५ दिनम् दण्ड १ पलानि १८। अन्तरोदयमानन्तु सर्व्वत्रैकदशांश एव वर्षादि पलीकृत्य भुक्तान्तरोदयज्ञानप्रकारो यः। द्वादशाब्दस्वरादीनां भुक्तं पलमयन्तु यत्। तद्भुक्तं स्वस्वभोगेन लब्धं शेषो द्विकं भवेत्। इत्यग्रे वक्ष्यते। इति द्वादशस्वरवार्षिकम्॥

प्रभवेति एकैकं प्रत्येकं प्रभवाद्यब्दं अस्वरादिकस्तदधः। प्रभवो विभवः शुक्लः प्रमोदोऽथ प्रजापतिः। पञ्च वर्षाणि अकारादिपञ्चस्वरस्य। एवमग्रे पञ्चवर्षाणि ५ पञ्चस्वराणां ५। एवमाब्दिकस्वरे द्वादशवारं पुनः पुनर्भोगः। द्वादशाब्दस्यान्तरोदयभुक्तिर्व्वर्षोना सती वार्षिकस्वरे तद्भुक्तिरन्तरोदयभुक्तिः। वर्षं।०। मास १। दिनं २ दण्डं ४३ पलं ४८। प्रकृते न्यासो यथा आब्दिकभुक्तवर्षशून्यं।०। मासा ८ दिनं २२ दण्डा ४ पलं ४८। अत्राब्दिकभुक्तावकारेकारौ। उकारस्वरो वर्त्तमानः। तत्र भुक्तमास ८ दिन २२ दण्ड ४ पलं ४८ पलीकृतान्तरोदयमानं ८४३४४० हारकभाज्यपलीकृतमानादि। तत्र हरणाल्लब्धभुक्तिस्वरद्वितीयावृत्तौ वर्त्तमानकारस्वरो भगशेषः गतगम्ये भोगपले अस्मिन् षष्ठ्या हृते भोग्यदिनदण्डपलानि इत्याब्दिकस्वरः॥ अयनस्वर इति॥ दक्षिणे दक्षिणायने कर्कटादिराशिषट्के अकारः स्वरः ४। उत्तरायणे मकरादिषण्मासे इकार ४ स्वर ४ षाण्मासिकस्वरे अयनस्वरे

वर्षभुक्त्यर्द्धमानेन वर्षं यदन्तरोदयभुक्तिमानं तदर्द्धमन्तरोदय-भुक्तिः स्वरमासदिनदण्डपलानि एतत् पलीकरणात् वृत्तहारक-४ मुद्दिदिनम् २ अत उत्तरायणे भुक्तमासदिनम् अस्मिन् पलीकृते हारकेण लब्धस्वरकारात् षष्ठो द्वितीयावृत्तौ वर्त्तमानकारः भागशेषगतगम्ये षष्ट्युद्धृतवृत्तभोग्यादि-दिनदण्डपलानि एतदन्तरं कारप्रवृत्तिरिति अन्यस्वरः॥

अकारादिति॥ पञ्चाकारादिस्वरवेधान्तादि षड़ृतौ क्रमेणो-दयो येषाम् ते तथा ज्ञातव्याः। एकैकस्मिन् प्रत्येकं द्विसप्तति-दिनोदयाः ७२ प्रोक्ताः। पञ्च ५ स्वराः षड़ृतवः ६ तेनाग्रिमस्व-रस्य द्वादशतिथ्यन्तर्भाविण द्विसप्तति ७२ दिनानि भवन्ति। एवं पञ्चस्वरा द्विसप्ततिसन्निवेशः अन्तरोदयमानं षड्दिनानीत्यादिदिनदण्डपलानि अत्र हारकान्तरोदय-पलं वैशाखादिषु सौरक्रमेण गतदिनपलीकरणादेतद्वृत्तभाज्यं हारकेण लब्धभुक्तस्वरः। एतेन वसन्ते अकारोदय-स्तदधिकश्चतुर्थः स्वरकारो वर्त्तमानः वर्त्तमाने भुक्तशेष-पलगतगम्यकरणात् गम्यपलम् अस्मात् षष्ट्युद्धृतगम्यदिन-दण्डपलानि एवमग्रेऽपि चिन्त्यम्॥

ऋतुस्वरः॥ नभस्य इति॥ तत्र भाद्रमार्गवैशाखानाम-कारोदयः। एवमाश्विनश्रावणाषाढ़ानामिकारः चैत्रपौ-षयोरुकारः। ज्यैष्ठकार्त्तिकयोरेकारः। माघफाल्गुनयोरो-कारः। उदेति। अत्र मासिकस्वरे द्वे दिने इत्याद्य-स्यान्तरोदयः। दिन २ दण्ड ४२ पलं ३८ पलीकृतैतद्धारकं ९८१८ अतएव मासः कृष्णादिः स्वरक्रमेण कृष्णपच्च-मादितः। वैशाखशुक्लप्रतिपदि गतदिनं अस्य पलीकरणात् वृत्तभाज्यम् अत्र हारकेण लब्धं तेन पञ्चस्वराः षष्ठस्वरे वर्त्त-मानाः। स च कारादिक्रमेण द्वितीयावृत्ताकारो वर्त्तमान-

स्तस्य भुक्तपलम्। अस्मिन् षष्ट्या हृतेन षट् स्वराः सप्तमो वर्त्तमानस्वराः कारादिद्वितीयावृत्ताविकारस्तस्य च भुक्तपलभोग्यः अस्मिन् षष्ट्युद्धृते वृत्तदिनदण्डपलमिति मासस्वरः॥

पक्षस्वर इति॥ पञ्चाम्रिकाः पञ्चरूपास्ता अन्तरे मध्ये भुक्तिरन्तरोदयभुक्तिमासभुक्त्यर्द्धमाने ज्ञेया मानान्तरोदयभुक्त्यर्द्धमाना पक्षस्यान्तरोदयभुक्तिः। सा च दिनं दण्डं पलम् एतत्पलीकरणाद्धारकः। वैशाखशुक्लप्रतिपदि गतदिनं अस्मिन् पलीकृते वृत्तं अत्र हारकेण लब्धं तेन शुक्लपक्षकारस्वर इति। स एवान्तरोदये वर्त्तमानप्रथमकारः तेन च भुक्तभोग्यपलम् अस्मिन् षष्ट्या हृते दिनदण्डपलमिति पक्षस्वरः॥

अकारादीति॥ अकारादिक्रमः येन क्रमेणाकार इकार उकार एकार ओकार औकारस्य तिर्य्यक् पंक्तिक्रमेण लिखितस्तेन क्रमेण तदधस्तात् नन्दादितिथिपञ्चकं प्रतिपदादि त्रिरावृत्तं न्यस्य लिखित्वा नित्य प्रत्यहं दिनस्वरोदयः। स्वस्वतिथ्यादि यथा स्यात् एवं जायते भवति यथा अकारस्याधस्तात् प्रतिपत्षष्ठ्येकादशीतिथयस्तासु अकारस्योदयः। द्वितीयासप्तमीद्वादशीषु इकारस्य तृतीयाष्टमीत्रयोदशीषु उकारस्य। चतुर्थीनवमीचतुर्दशीषु एकारस्य। पञ्चमीदशमीपौर्णमासीषु ओकारस्य। एवं तिथिषु स्वराणामुदयश्चिन्त्यः। अस्य अन्तरोदयपञ्चघटिका दण्डाः पलानि सप्तविंशतिः २७। तथा तिथ्यन्तरोदयमानं दण्ड ५ पल २७ पलीकृताद्धारक ३२७ वैशाखभुक्तदिनभुक्तदण्डं अस्मिन् पलीकृते वृत्तभाज्यहारकेण लब्धभुक्तस्वरवर्त्तमानः। स चाध्यारोपक्रमात् पुनरावृत्त्या कारस्तेन भुक्तपलभोग्यपलम्। अत्र षष्ट्या हृते दण्डपले अयमर्थोऽग्रे तिथिभुक्तघटीसङ्ख्यां कृत्वा पलं ततः। त्र्यम्बकाक्षि ३२७ शेषे स्वरस्तत्काल-

सम्भवः। इति वक्ष्यते। चक्रन्यासो यथा घटीस्वरस्य तत्स्थत्वात् प्रसङ्गेन तदनन्तरोदयं सङ्कथयति। अस्येति॥ अस्य तिथ्यन्तरोदयस्यान्तरोदया घटिकार्द्धमानतो दण्डार्द्धप्रमाणमिति॥ इति स्वरः॥

तिथ्यन्तरोदयमानेनेति। तिथ्यन्तरोदयमानेन पूर्वं कथितेन घटिकास्वरे घटीस्वरस्य षष्ठीसप्तम्योरभेदात् उदयो ज्ञेयो ज्ञातव्यः। आदिजामले उपजीव्यग्रन्थे एवंविधानेन प्रकारेण उक्तः। तथा च पञ्चाशद्दण्डद्वयमस्य उकारस्यान्तरोदयस्तेन च सप्तपञ्चाशत् ५७ पलानि भुक्तानि तत्रान्तरोदयो घटिकार्द्धमानेन द्वितीयस्याकारस्य पलं यावदिति घटीस्वरः॥ अन्तरोदयादिकं यथा भवति तत्कथयति॥ द्वादशाब्देति॥ द्वादशाब्दादिस्वरा णाद्यन्ता अष्टौ स्वराः संस्थानात् स्वभोगसमतात् स्वकालतः स्वभोगकालेन द्वादशाब्दवर्षादिना उदयास्तं तत्र स्वभोगमानेन एकादशोदयैरन्तः पुनरुदयन्ते इत्यनुयुज्यते। अत एवान्तरोदयजिज्ञासायामेकादशेन यो यत्र भागो लभ्यते स तत्रान्तरोदयमानं भवतीति द्योतितमिति पूर्वं तथैव कृतमिति॥ वर्षेति। अत्रान्तरोदयसंज्ञके स्वरोदये पञ्चप्रकारेण क्रमात् कालमानं समयमानं मयोक्तं वर्षं मासो दिननाड़ीपलानि चेति यथा द्वादशवार्षिके वर्षादिपञ्चापि वार्षिकस्वरमासादि अयने दिनानि ऋतौ दिनानि पक्षे दिनानि दिने दण्डादि घटिकायां पलादीति॥ गतसमये भुक्तवर्त्तमानस्वरज्ञानार्थमाह द्वादशाब्देति। द्वादशाब्दिकस्वराणां यद्भुक्तं तत् पलमवज्ञाय स्वरभोगेण प्रत्येकमेकादशलब्धान्तरोदयमानेन भुक्तं कर्त्तव्यम्। लब्धं भुक्तस्वरा ज्ञेयम् शेषा वर्त्तमानस्वराः। अस्मिन् वर्त्तमानभुक्तपले भागहारपलेषु पातिते भुक्तभोग्यपले भवतस्तत्र भुक्तभोग्ये च षष्ट्यादिना भुक्ते च भुक्तात्

भुक्तमानभोग्यात् भोग्यमानं वर्त्तमानस्य भवति। एतदनुक्रमणिका द्वादशाब्दे स्वरस्य व्याख्याने अनुसरणीया॥

उदितस्येति। उदितस्य स्वरस्य नामवर्णमिलितेषु स्वस्वकालप्रमाणत: स्वस्वभोग्यसमयप्रामाख्यात् बालादिका अवस्था: पञ्च स्यु:॥ अवस्थां कथयति॥ आद्यो बाल इति निजावस्था बालत्वाद्यनुसारेण फलदा यथा बाला: कार्य्या: क्षमास्वथेत्यादि॥ किं लाभ इत्यादि॥ नष्टे गतद्रव्ये दष्टे सर्पादिदष्टे रुजान्विते सरोगे एतेषु कार्य्येषु बालस्वरो निषिद्ध:। यथा यस्य बालस्वरोदयस्तदानीं द्रव्यनाशे सर्पदंशे सरोगे च निषिद्धं फलमित्यर्थ:। विवाहादिषु शुभकार्य्येषु शुभद:। यात्रायां युद्धे च दीक्षामन्त्रोपदेशे च तत्र मृत्युस्वरोदयेषु बालस्वरावधिकस्वष्टस्वरोदयो योगस्वराद्यधिकनाम अष्टौ स्वरास्तेषां तेषां बालान्ततदवधिका द्वादशाब्दादि शिष्टं तदन्तरोदय: बालादिपञ्चस्वरव्यवस्थेत्यग्रे व्यक्तीभविष्यति॥ स्वराणां न्यूनाधिकबलमाह॥ मृत इति॥ मृताद्वृतो बली तत: कुमार इति ध्येयम्। अयमर्थ:। एकस्य मृतस्वरोदय: अपरस्य वृद्धादिस्वरस्तदा पूर्वापेक्षया परो जन: सङ्ग्रामे जयम् यो यास्यति। यस्य बालस्वरमधिकृत्य य: पञ्चमे स्थाने स्वर: स तस्य मृत्युदायक इति मृतत्वेनाभिधीयते। तृतीये युद्धस्वरोदये सकलक्रियासु वृद्धि:। शेषा बालकुमारवृद्धा वृद्धा मृत्युरिति॥ हीनस्वरे सति मृत्युर्भवति उदितस्वराधिक्ये जय:। साम्ये साम्यं समता योधयो: सन्धानं सन्धि: जयपराजयौ वा समौ॥ एकस्वर इति॥ एक उभयोर्योधयोर्बालवशे तु तदा साम्यं जयभङ्गौ समौ। द्वितीयेऽर्द्धफलं बालापेक्षया कुमारेऽर्द्धजय: यूनि पूर्णफलं वृद्धे बद्ध: बन्धनं पराच्छत्रोर्जयस्य॥ शत्रोरिति॥ शत्रो: मृत्युस्वरे पञ्चमस्वरे उदिते स्वकीययूनि तस्मिन् तत्र

नयो निश्चितः । नामजाद्य स्वरोत्पत्तिं द्वादशाद्यष्टस्वरेषु पूर्वं प्रतिज्ञातं दर्शयति ॥ तत्काल इति ॥ तत्काले घटीस्वरे मात्रास्वरे उदेतीति सम्बन्धः । तथा दिने तिथौ वर्णस्वरमुपक्रम्य बालादिकव्यवस्थापक्षे पक्षस्वरोदये ग्रहस्वरोदय इति ज्ञेयः । मासे मासस्वरे जीवस्वरोदयः जीवस्वरावधिका बालादिचिन्ता ॥ ऋतौ राश्यंशस्वरे राशिस्वराधिका बालादिव्यवस्था । तद्यथा ॥ नरहरिनामस्वरे चिन्ता षण्मासे अयनस्वरेऽपि स्व-सम्भवो नक्षत्रस्वरः तदवधिका बालादिचिन्ता । षष्टे वर्षे पिण्डतः पिण्डस्वराद्बालादिव्यवस्था । द्वादशवार्षिके द्वादशाब्दिके योगस्वर इति तदवधिका बालादिव्यवस्था ॥ तद्यथा रामतोषणनाम्नि मात्रास्वरोकारः वर्णस्वर एकारः ग्रहस्वरकारः जीवस्वरकारः राशिस्वरकारः पिण्डस्वरकारः योगस्वरकारः इत्यष्टौ नामजा मात्रास्वराद्या योगान्ताः प्रथमं लिखिताः । घट्यादिद्वादशाब्दान्ताकष्टावादौ स्थूलक्रमेण ततोऽन्तरोदयक्रमेण लिखिताः । यत्र स्थूले सूक्ष्मे बालादिजिज्ञासा भवति अत्रेदं व्यवहरणीयम् । यथा मात्रास्वरकार इति स्थूलक्रमोदितः घटीस्वरकारः स च कारावधिकः पञ्चमः । अन्तरोदयघटीस्वरे कारोदयः मात्रास्वरकारः ॥ इति बालस्वरोदयः ॥ एवं वर्णस्वरकारस्तदवधिकः प्रतिपद्यकार उदितः स च पञ्चमो निषिद्धः । अत्रान्तरोदयकारोदयः सवर्णावधिकस्तुर्यो वृद्ध इति फलदः ग्रहस्वरोकारस्तदवधिकपक्षस्वरे स्थूलक्रमेणोदितकारः स च कारद्वितीयः कुमारो भवति अन्तरोदयेऽपि कारः सोऽपि कारो द्वितीयः कुमार इति तत्फलदः । एवं जीवस्वरोऽकारा तस्य मासे उदयः मासस्वरस्तु कारः स चाकारावधिकस्थूलक्रमेण स्वरान्तरोदयः स च काराद्द्वितीयः इति कुमारफलदः । एवं राशिस्वरकारः

तस्य गतावुदय ऋतुस्वरकारः स च राशिस्वरात् तृतीयः॥ इति स्वरोदयः। कार उदितः जीवराशिस्वरः इति बालोदयः एवं नक्षत्रस्वरकारः। तस्यानयने उदयः स च राशिस्वरा-त्तृतीय इति स्वरोदयः। अन्तरोदयः कारोदयः स च नक्षत्र-स्वरात्तृतीयः इति युवस्वरः। एवं पिण्डस्वरकारस्तस्य वार्षिक-स्वर उदयः। वार्षिकस्वरकारः स पिण्डस्वरात् पञ्चमः अन्तरोदये कारोदयः स च पिण्डस्वराच्चतुर्थो वृद्धः। एवं योगस्वरकारस्तस्य द्वादशवार्षिके उदयः। द्वादशवार्षिके स्वरकारो योगस्वराद्द्वितीयः। कुमारः अन्तरोदयः कारः स एव योगस्वरः। इति बालोदयः। मात्रादियोगान्तास्तु स्वराणां नामजानां कालजवैपरीत्यक्रमव्यस्तवटीस्वरादि-द्वादशवार्षिकस्वरेषु अष्टस्वरसमुत्पत्तिक्रमनिरसनं हृदा परि-भावनीयमिति॥ अत्र नामजाष्टस्वरेष्विति प्राशस्त्यमवश्या-पेक्षणीयम्। वर्णस्वरस्योपदर्शयति सर्वकालेबली वर्ण इति। वर्णो वर्णस्वरः सर्वकालबली सर्वस्मिन् काले द्वादशाब्द-रूपे बली बलवान् सफलदः। अत्र संशयो न। हेतुगर्भविशेषणमाह सर्वव्यापीति सर्वेषां मात्रास्वरशद्वादीनां व्यापी व्यापकः तेषामितद्व्याप्यत्वात् यतो वर्णस्वरबलेनाति-बलिनोऽपि तस्य तेषामपि नैरपेक्षेण फलवत्वमिति तस्माद्धेतोः सर्वप्रयत्नेन शुभाशुभं वीक्ष्यम्॥ यथा पदा॥ यथा हस्तिपद-चिह्ने अन्यपदचिह्नानि प्रविष्टानि तथा मात्रास्वराः कारादयः स्वप्नवर्णफलोदयस्थाः फलदानार्थं प्रविष्टाः। वर्णफलोदयस्था इति क्वचित् पाठः। वर्णफलं पुरस्कृत्य उदयस्थाः वर्णबलेन बलिन इत्यर्थः। तत्र विशेषमाह। साधनं वर्णबले युद्धे विशे-षतो वर्णबलं ग्राह्यम्। योगेन योगस्वरेण शरीरस्य ज्ञानसम्भवं योगं साधयेत्। आणवं अणिमादिसिद्धिभवम्। शाम्भवं शम्भु-

विषयकं शाक्तेयं गौर्य्यादिभवम्॥ इति स्वरचक्रविवरणम्। वर्णेति वर्णस्वराधिकपृथक्प्रकाशिततिथिनक्षत्रादीनां बालादिव्यवस्थासु दर्शयन्नाह तिथिवाराविति। तिथिः नन्दादिः। वारो मङ्गलादिः। पृथक् पृथक् भिन्नक्रमेण सर्वं सम्भाषितं तत् सर्वमेकत्र सर्वस्वरस्थाने स्थितं तस्मिन्न वर्त्तुलीकृत्य वर्णस्वरोदयं कुर्य्यात्। अयमर्थः। अकारादिपञ्चको वर्णः स्वरस्तदधः स्वरचक्रतिथिवारनक्षत्रबले न्यस्तानि तानि बालस्वरस्य बालत्वे बालादिकुमारादित्वे कुमारादिफलदानि यथा श्रीरामतोषणनाम्नि कारोपस्थिते इकारो वर्णस्वरो बालस्तदधश्चक्रान्तरस्थिता द्वितीयासप्तमीद्वादशीतिथयो बालाः। एवं तदधो बुधचन्द्रौ वारौ तौ बालौ तदधश्चक्रान्तरस्थानि नक्षत्राणि बालानि तदग्रिमतिथिवारनक्षत्राणि कुमारादीनि व्यवहरणीयानि। एवमन्यनाम्नापि व्यवहारः कर्त्तव्यः॥

यस्येति। यस्य पुंसो नामादिकं वर्णं नामाद्याक्षरं तिथिवारौ नक्षत्रञ्च मृतं तदीयपञ्चमस्वरोदया यस्मिन् दिने तद्दिनं तस्याभिमतक्रियासु वर्जयेत्। यद्दृक्षं यद्दिनं तद्दिनं तस्य हानिमृत्युकरम्। अनेनेति॥ अनेन स्वरयोगेण यदा शत्रोर्मृतस्वरोदयः स्वस्य बालाद्युदयो विशेषः कुमारयुवोदयस्तदा शत्रूणां मारणादिकं मन्त्रादिक्रियाञ्च तद्दिने बुधः पण्डितः साधयेत् कुर्य्यादित्यर्थः॥ इति तिथिवारनक्षत्रस्वरचक्रविवरणम्॥ बालादीनां प्रत्येकं फलान्याह बालेति॥ बालस्वरादिकावस्था भानुसङ्ख्या भवन्ति ताश्च स्वभोगप्रमाणक्रमेणोदयन्तु घटिकाख्ये दिने पक्षे मासे ऋतौ अयने वर्षे द्वादशवार्षिके द्वादश भागाः। अयने षण्मासे पक्षे द्वादशभागः वर्षे मासो द्वादशभागः द्वादषवर्षे एकवर्षं प्रति क्रमात् एवं भोगप्रमाणात् स्वस्वावस्था भवन्ति। भुक्त-

स्वप्रमाणञ्चेति। यस्य बालादिस्वरस्यावस्था घटीस्वरादौ ज्ञातुमिच्छति तेन यद्युक्तं तत् पूर्वं प्रत्येकं पलीकृत्य स्वस्वभोगद्वादशभागेन विभजेत्। भागे हृते यल्लब्धं तत्सङ्ख्या-गतावस्थाशेषो वर्त्तमानावस्थशेषे तु गतगम्यकरणात् गते षष्ट्याद्युद्धृते गतसमयः गम्ये षष्ट्याद्युद्धृते गम्यसमयो वर्त्तमाना-वस्था आयाति। क्रमणिका यथा। नाम्नो युवतिथिः तृतीया तस्य गतदण्डः। अत्र द्वादशावस्थाजिज्ञासायां भुक्तदण्डं पलीकृत्य पलानि तत्र संयोज्य वृत्ततिथिद्वादशभागेन पलीकृत्य तत् पञ्चदण्डेन वृत्तम् अनेन भागे गृहीतं लब्धम्। चतस्रोऽव-स्थागताः पञ्चमीवर्त्तमाना भागशेषाः। अस्मित् भागहारके पातिते भोग्यं उभयत्र षष्ट्या हरणात् लब्धपलम्। एतेन पञ्च-मावस्थायां गतं गम्यञ्च सार्द्धदण्डद्वयात्मकम्। यत्र तु दिनमा-ससम्भावना तत्र दण्डे षष्ट्युद्धृते मास इति प्रकृते च द्वादशा-वस्था मध्ये वा पञ्चमावस्था कथितास्ति सा अशनफलदा एवमन्येषु घटीस्वरादिस्वरावस्थाः कार्य्याः। अवस्थाश्लोकास्तु ग्रन्थे लिख्यन्ते॥ शूला च बाला शिशुहासिका च कुमारिका यौवनराज्यदा च। क्लेशप्रमोदा जरिता तथासौ मृता च बाल-स्वरजाद्यवस्थाः॥ १॥ स्वस्थाभृता मेघनिघर्षवृद्धा महोदया शान्तिकरी न च स्त्री। वृद्धा समा सा तु गुणोदया च मङ्गल्यदा द्वादशिका कुमारे॥ २॥ उत्साहधैर्य्योग्रजरा बला च मङ्गल्य-योगा च सकामपुष्टिः। शाखी च सिद्धा बधनेश्वरी च शान्ता-भिधा द्वादशिका युवाख्ये॥ ३॥ वैकल्यशेषा खलु या च मोघा-च्युतिश्चमा दुःखितरात्रिनिद्रा। बुद्धिप्रसङ्गा च तथा च चण्डा जरा मृता द्वादशिका च वृद्धिः॥ ४॥ चिन्ता च बद्धा प्रतिघातकी च शेषी महीज्वालभवाब्धिदा च। प्राणी किरा भेदकरी वदाद्या मृत्युश्चया द्वादशमृत्युजाश्च ॥ ५॥

एवं षष्टिरवस्था स्युरवस्थापञ्चकं सदा। तासु सर्वासु विज्ञेयं स्वनामसदृशं फलम्। प्रथमश्लोकात् शिशुर्हासिका च यौवनराज्यदा च मेघनिघर्षा वृद्धा च गुणोदया च ॥ ५ ॥ उत्साहधैर्य्योग्रजवा च बाला सकामपुष्टिः वैकल्यशेषा च दुःखितो रात्रिर्निद्रा च महोजवा च भाववर्द्धिदा च ॥ इत्यवस्था ॥ पूर्वस्मिन्निति ॥ पूर्वस्मिन् प्रदेशे अस्वरस्वामी एवमष्टस्विकारादयः मध्ये ओकारः नन्दायामस्वरः प्राच्यामुदेति तत्रायनिस्वरो दक्षिणा इत्यादि ॥ याम्यम् ॥ यत्तिथौ यः स्वरः यस्यां सर्वदा उदयं याति तत्पञ्चमीं दिशं सर्वकार्य्येषु वर्जयेत्। विशेषतो यात्रायां यथा इकारस्वरो द्वितीयासप्तमीद्वादशीषु दक्षिणा दिगुदेति तत्पञ्चमी दिक् पूर्वाशा मन्तव्या। तत्र अतस्वरस्योदितत्वात् मध्यदिक् व्यवस्था कथं कार्य्या इति संशये प्रतिपत् षष्ठ्येकादशीषु अकारोदयः पूर्वदिशीति तत्पञ्चमप्रवेशो मध्यं प्रासादादावूर्द्धाधःस्थितगृहादि न गच्छेदिति सम्बन्धनीयम् ॥

पृच्छत इति ॥ स्वरस्य दिक् क्रमेणोदितस्य पञ्चमीं दिशं लक्षीकृत्य अवस्थासु पृच्छको यदि प्रश्नं करोति तदा हान्यादिकं जायते अत्र संशयो न। तथा च द्वितीयाकारस्य दक्षिणदिश्युदयात् पूर्वदिगस्तमिता तदरति स्थिते पृच्छके फलमेव वक्तव्यमित्यर्थः। इति दिक्स्वरविवरणम् ॥ तिथिस्वरे अन्तरोदयस्थबालादिस्वरस्य प्रश्नात् फलक्रमपदर्शनाह तिथ्यादाविति ॥ तिथ्यादौ तिथ्युपक्रमे तिथिस्वरमारभ्य बालस्वरादिको घटीस्वर उदयं याति। तत्र प्रश्ने सति तस्य बालादिस्वरस्य बलं वदामि तदुदयप्रकारमाह तिथौति ॥ तिथेर्यावती घटी दण्डरूपा भुक्ता तत्सङ्ख्या षष्ठ्या सङ्गुण्य पलमयीं कृत्वा तत्र

ऋष्टत्वरक्विद्धते सप्तविंशत्यधिकशतत्रयहृते यल्लब्धं तत्तिथि-
स्वरावधिके भुक्तः स्वरः शेषे तत्कालसम्भवः। तात्कालिक-
स्वरो ज्ञातव्यः। स एव तिथिरन्तरोदयघटीस्वर इति दातव्यः।
तिथिरन्तरोदयवर्णस्वरक्रमिका बालादिव्यवस्था घटीस्वरे तु
मात्रास्वराद्बालादिव्यवस्थेत्युक्तेरव्यवस्थितः पक्षः। फलभागित्व-
मुपदर्शयति यमुद्दिश्येति॥ यं जनमुद्दिश्य प्रश्नः कृतस्तस्य
फलं प्रजायते फलभागित्वं भवति तन्नाम्नो बालादिस्वरवशेने-
त्यर्थः। यत्र किञ्चिन्नाम नोद्दिश्यते प्रकाश्यते तत्र प्रष्टुरेव
शुभमशुभञ्च फलं वक्ष्यमाणं वक्तव्यम्। एतत् फलं श्लोकपञ्च-
केनाह कुमारेत्यादि स्फुटम्॥

विषमसमभेदेन प्रश्नान्तरमाह ओजस्वरा इति॥ ओजाः
प्रथमतृतीयपञ्चमाः पुरुषस्वराः स्युः युग्मस्वरान् इकारोकारान्
स्त्रिय इति विदुः। एवमन्यत् स्वस्वरे स्वपक्षीयस्वरे पुंसां स्त्रीणां
बलं जायते। तथा च पुंस्वरे वर्त्तमाने बालादौ पुमान् बलवान्
अधीने तु पुत्त्रोत्पत्तिः। एवं स्त्रीषु अन्यदाह गर्भार्थे इति।
गर्भप्रश्ने पुंस्वरे पुत्त्रोत्पत्तिः समे कन्योत्पत्तिः युग्मविषय-
स्वरावधिस्वरनिर्व्यूढे प्रश्ने युग्मञ्च भवति नष्टस्वरावसाने क्षयो
भवति गर्भनाशो वाच्यः। संक्रमे स्वरप्रारम्भे मातुर्मृत्यु-
र्भवति। युग्मगर्भयोग्यतायोग्यमाह द्युनाड़ीस्वरयोरिति
द्युर्दिवसः नाड़ी घटी तत्तन्निरूपितस्वरौ दिनस्वरघटीस्वरौ
तयोः सतोः पुंयुग्मं पुरुषद्वयम्। समस्वरयोः कन्याद्वयम्
पुंस्त्रियोः एको विषमः स्वरो द्वितीयः समस्वरः तदा पुंस्त्री
कन्या पुत्त्रश्च इति गर्भयुग्मगर्भविषये प्रश्ने विनिर्दिशेत्
वदेदिति तात्कालिकस्वरः॥ जन्मर्क्षे इति॥ जन्मर्क्षे
जन्मनक्षत्रे जन्मपादा जन्मनक्षत्रपादिका तद्वर्ण शतपदचक्रोक्त-
क्षेत्रे पादप्रकारस्वाक्षरे योऽक्षरो वर्णस्वरः यथा केकोह-

ह्रीत्यक्षरचतुष्टयं पुनर्वसुपादिकाचतुष्टयस्य तेन प्रथमद्वितीय-पादिकयोः ककारः तस्य वर्णस्वरोऽकारः तृतीयचतुर्थयोर्हकार-स्तस्य वर्णस्वर ओकारस्तत्पादिकयोर्जातस्य वर्णस्वरो नाड़ी-स्वर इत्यन्वयः प्राणिनां स्वभावः स्वभावसिद्ध इत्यर्थः॥ नड़ीस्वरप्रयोजनं जन्मन्याह च फलेति। तिथिस्वरो विशिष्य तदन्तरोदयस्वरो वा नाड़ीस्वरावधिकबालादिस्वरे श्लोकपञ्चकेन फलं स्फुटम्॥ तत्कालस्वरे जातकनिर्णयः॥

अथ योधयोर्युद्धे को जयी स्यादित्याह। ककारादि-जकारान्ता वर्णास्तथा पञ्च ह्रस्वस्वराः कखगघचछजझटठडढ-तथदध अ इ उ ए ओ एते सिते शुक्लपक्षे बलिनः स्युः। शेषा धनपफबभमयरलवशषसह आ ई ऊ ऐ औ एते सर्वे सितेतरे कृष्णपक्षे बलिनः स्युः॥ एकस्वर इति॥ यत्रोभयः स्वरः एकः पृथक्पक्षयोर्वर्णानामादौ भवति तत्र पक्षबलं ग्राह्यं शुक्लकृष्णविभेदतः। यथा कर्मुघर्मुरमुकयो-रेकपक्षाक्षरयोर्नामादिवर्णस्वरः ककारः शुक्लपक्षे वकारः कृष्ण-पक्षेऽस्तीति तत्र पक्षे तौ प्रत्येकं जयिनौ शुक्लकृष्णभेदादिति स्वरैक्यया वाचा एकपक्षान्तरान्यतरतामाह॥ एकपक्षाक्षर इति॥ द्वयोर्योधयोरेकपक्षाक्षरयोर्नामादिवर्णस्वरः ककारः। एकश्चेत्तदा शुक्लपक्षे गौरो गौरवर्णः। अपरे कृष्णपक्षे कृष्णवर्णः श्यामवर्णः निश्चितं जयति यथा कर्मुर्गौरवर्णः घर्मुः सितेतरः श्यामवर्णः स्वरश्चोभयोरेकोऽकारः पञ्चै-कश्च तत्र कर्मुर्गौरत्वेन शुक्लपक्षे जयी तदितरश्यामवर्णत्वात् कृष्णपक्षे जयीति॥

यस्मिन्निति॥ यस्मिन् एकपक्षाक्षरे एक एव स्वरः योधौ गौरौ कृष्णौ वा ह्रस्वदीर्घौ भवतः तत्र यदि ह्रस्वो यो वर्णस्वरे लिखनक्रमेण स्वरासन्नाक्षरः सन् स

तदा जयी भवति। यस्तयोर्दीर्घः स यदि स्वराङ्कवाचर-स्तदा जयो भवतीत्यर्थः॥ प्रमाणे॰त॥ प्रमाणं कृस्वादि नामजाख्या वर्णा गौरवर्णादयः। तेषामैक्यं समता योधयोर्यदि भवति तत्र यायिस्थायिविभेदतो युद्धबलं ज्ञेयम्। एतदेव व्यक्तीकृत्य व्यवस्थापयति योधयोरिति। योधयोः सर्वभेदेन प्रमाणादिना पूर्वश्लोककथितेनैक्ये समतायां यूनि मारके च स्वरे उदिते सति यायी प्रथमोद्यतो जयी। तथा तेनैव प्रकारेण बाले वृद्धे अन्तिमे मृते च स्वरे स्थायी प्रतिवादी जयी। बालतिथित्रयोपरिस्थिते सप्ताक्षरेष्वक्षरभेदेन तिथिषु प्रत्येकं फलमाह आद्यतिथेरिति। प्रतिपत्षष्ठ्येकादशीनामुपरि अकछडधभव इति सप्ताक्षराणि सन्ति। तेषां ता एव तिथयो बालास्तासु आद्यतिथिः प्रतिपदस्तयोर्वर्णा अकारककारछकाराः एवं शेषयोः षष्ठ्येकादश्योर्द्वौ वर्णौ मतौ। ततः षष्ठ्यां डकारधकारौ एकादश्यां भकारवकारौ एवं तिथिस्वरे तिथित्रये वर्णसङ्ख्या ज्ञेया॥ वर्णतिथ्यादीति॥ एवं यस्यास्तिथेर्यो वर्णस्तस्य सा तिथिर्भवति। तदाद्येकाद्यनुक्रमेण तिथित्रयस्य यमहादिस्तथा मृतिरिति मासत्रयं यस्य ककारस्य प्रतिपज्जन्मनाम्नी षष्ठ्यहादिनाम्नी एकादशी मृतिनामिका। अत्र प्रत्येकं फलमाह श्रीजन्मनीत्यादि॥ इति स्वरप्रकारविशेषनिर्णयः॥

अस्मिन् दिने पुरुषस्य किं फलं स्यादिति स्वरभेदेन विचारयन्नाह यदुक्तमिति। तदहं दिनफलं स्वरादकारादिस्वरात् मात्रादिनामकात् दिनफलं वच्ये। कीदृशं पुंसां धर्मादिप्रकाशनं पुंसामित्युपलक्षणम् अन्येषामपि यद् जामले जामलादौ तन्मे गुरुप्रसादतो गुरूपदेशाज्ज्ञातम्। प्रकारमुपदर्शयन्नाह योगेति॥ योगस्वरपिण्डस्वरराशिस्वरजीवस्वरग्रहस्वरवर्णस्वरनक्षत्रस्वर मात्रास्वरास्तान् अष्टौ स्वरान्नाम उत्पाद्य स्थापयेत्

तिर्य्यक्पंक्तिक्रमेण लिखेत्। तस्येति॥ तस्य योगस्वरादेरधस्तात् द्वादशाब्दादिकालजान् द्वादशाब्दाब्दायनर्त्तुमासपक्षदिनघटीसम्भवानष्टौ स्वरान्नामादौ लिखेत् कथम्भूतान् स्वरभोगेन समायुक्तान् स्थूलक्रमेणान्तरोदयमानेन च विशिष्य सहितान्। भोगमाह भोगास्त्वेकादशांशकः स्थूलमानं प्रत्येकमेकादशेन यो भोगः प्राप्यते वर्षादि यो यस्मिन् यः स भोगोत्पत्तिरित्यर्थः। यथा द्वादशवार्षिके वर्षमेकमादौ दिनद्वयं लोकाब्धिनाड़िका अष्टत्रिंशत् १।१।२।४३। तत्पलानि चेत्यादि यथायथमष्टानीकानीति तत्रैव योगस्वरादिकान्तस्वराणां स्वराधिकस्वरेषु बालादिव्यवस्था। यथोत्तरेति। स्वरवेदिभिरेते स्वरा यथोत्तरबला ज्ञातव्याः। के ते योगादिका मानान्ता अष्टौ नामजा नामत उत्पादिताः तथा तेनैव प्रकारेण फलोदयाश्चापि द्वादशाब्दादिका घटीपर्य्यन्ता सवयोदिता यथोत्तरबला ज्ञातव्याः। यथा योगस्वरात् पिण्डस्वरो बली पिण्डान्मात्रस्वर एवं क्रमेणापि तथा द्वादशाब्दिकस्वराद्द्वार्षिको वार्षिकादयनस्वर एवं क्रमेणाग्रतोऽपि ज्ञातव्यमित्यर्थः॥

अकारादीति॥ अकारादिक्रमात् अ इ उ ए ओ एवं क्रमेण लिखित्वा तदधस्तात् वेदाश्चत्वारस्तत्प्रमाणिकाश्चतुःसङ्ख्या विन्यस्य स्वरज्ञैर्विशोपका मता स्वीकृता इत्यर्थः। प्रयोजनन्तु अस्याष्टस्वरेषु प्रत्येकमत एव चतुःसङ्ख्याविन्यासः शुभाशुभकोटिद्वये विभाव्यत इति पूर्वप्रतिज्ञातानां नामजाष्टस्वराणां द्वादशाब्दिककालजां बालाद्यवस्थां सूचयन् कुतः कुत्र सा चिन्तनीयेत्याह योगादिति। योगात् योगस्वरात् बालभूतात् द्वादशवर्षे बालाद्यवस्थाः स्युः। अयमर्थः द्वादशवार्षिकस्वरे यः स्वरोऽकारादिषु उदितः स योगस्वरमानमधिकृत्य बालादिस्वरैः स्थले विशिष्यान्तरोदये सूक्ष्मे व्यवस्थाप-

नीय इति एवमग्रेऽपि सप्तावस्थाः कथिता वर्षैर्बाला बोद्धव्याः॥ तद् यथा पिण्डतः पिण्डस्वरादाब्दिके वार्षिकस्वराद्दस्वरात् नक्षत्रस्वरात् अयने मकरकर्कटादिराशिषु द्वयोराशिस्वरात् ऋतुस्वराज्जीवस्वरान्मासस्वरे अवस्था बालाद्यवस्था ग्रहात् ग्रह-स्वरात् पक्षस्वरे वर्णात् वर्णस्वरात्तिथिस्वरे मात्रास्वरात् घटी-स्वरे बालाद्यवस्था चिन्तनीयेति॥

द्वादशाब्दिक इति॥ अकारादिस्वरे अ इ उ ए ओ एवंरूपद्वादशाब्दिककालः समयः स्थितः स यदि पञ्चावस्थासु शुभः स्यात् पञ्चावस्थासु अकारादिक्रमस्थितासु अशुभदो निषिद्धफलदः अन्तरोदयक्रमेण न स्यात् तदा शुभः स्यात् अवस्थासु पञ्चावस्थासु स्वरोदयवर्षमासदिननाड़ीपलरूपासु न शुभः स्यात्तदा शुभो न स्यात्। यद्वा पञ्चावस्थाशुभोऽपि पञ्चावस्थायां बालादिक्रमेण वर्षमासदिनेत्यादिक्रमेण शुभोऽपि यदि दिनचर्य्यायां कथितप्रकारेणाभद्रकराशिरवशिष्यते तदा शुभो न स्यात्। यदा पञ्चावस्थाशुभः पञ्चस्ववस्थासु अशुभः शुभ-ग्रहः न शुभोऽशुभग्रहः स्यात् तदा फलं वाच्यं परिशेषक्रमेण इत्यभिप्रायः। यथा ये बालादिस्वरा अन्तरोदयगतास्तेषा-मस्तराशिपतिरशुभः शुभश्च तदुपरिस्थितस्वरेषु विंशोपकारं परिकल्प्य शुभाशुभकोटिद्वयाङ्कमालिख्य स्वल्पस्य बहुषु पात-नात् परिशेषेण यदि शुभग्रहराशिस्तदा शुभं अन्यथा अशुभं सामान्यतो ज्ञात्वा विंशत्येत्यादिप्रकारेण वर्त्तमानस्वरं निरूप्य तदधःस्थग्रहवशेन फलं वाच्यं परिशेषे शुभग्रहकोटिः विंशत्ये-त्यादिक्रमेणाशुभकोटिस्तदा मिश्रफलं वाच्यं परिशेषे तु शुभ-ग्रहकोटिस्तदा मिश्रफलं वाच्यं लाभालाभौ धातुमूलजीवाधि-पग्रहवशेन तत्तद्द्रव्याणामिह परिपाटी चिन्तनीया। प्रागुक्त-दिनफलव्यवस्थार्थं बालादिषु व्यवस्थामाह स्वरावित। इह्वास्तमौ

वृद्धमृतौ स्वरौ दुष्टौ निषिद्धफलदौ तथा बालापूर्वफलं बालस्वर-प्रथमार्द्धं तथा दुष्टमित्यर्थः । शेषं सार्द्धद्वयं बालोत्तरार्द्धसहित-कुमारयूनोरिति तत्र इत्यनेन प्रकारेण शुभाशुभं ज्ञेयम् ॥

द्वादश इति ॥ स्वान्तरोदयसंस्थिता ये द्वादशवार्षिकाद्या अष्टौ ते शुभाः बालोत्तरार्द्धं कुमारयुवानः स्वरा विंशोपसङ्ख्यास-हिता एकत एकदेशे स्थाप्या अशुभा बालपूर्वार्द्धमृतवृद्धस्वरा विंशोपकाः स्थाप्याः । विंशोपकाः प्रत्येकं कुमारादीनां चत्वारः । बालो मिश्रफलत्वेनोभयत्र द्विसङ्ख्या तत्र प्रथमार्द्धसमये अशु-भद्विः ॥४२॥ उत्तरार्द्धसमये शुभद्विः ॥४२॥ शुभाशुभेति ॥ शुभरू-पस्याशुभस्वरूपस्य च राशियुग्मस्य मध्यतः एकस्मादस्मिन् पातिते शेषे शुभराशयः शुभराशौ वा स्वरूपं तद्दिनजं फलं भवतीत्यर्थः ॥ रोगादिकस्य फलं कुतो वा स्यादित्याकाङ्क्षायामाह विंशत्येति। शेषे पातितशेषे विंशत्या ताड़िते गुणिते चतुःषष्टिविभाजिते चतुःषष्ट्या हृतभागे लब्धं तत्तत्र तेषां मध्ये विंशोपकाः शुभाः शुभप्रकाशकाः । यथा एकलाभे योगतः द्विलाभे पिण्डतः एक-मष्टपर्य्यन्तेन मात्रान्तात् फलम् । तत्तत्कथितादिति पञ्चस्वरेषु प्रत्येकं चतुःसङ्ख्या विन्यस्य विंशतिसङ्ख्या भवति तेन विंशत्या गुणः योगादिमात्रान्ता स्वराणामष्टसङ्ख्या द्वादशाब्दादिघस्र-न्तस्वराणामप्यष्टसङ्ख्या अतोऽष्टाभिरष्टगुणनाच्चतुःषष्टिसङ्ख्या भागहारकेत्यभिप्रायः॥ चतुःपञ्चविभाजिते इत्ति नेत्रपाठः । तत्र चतुःपञ्चाशता भागो ग्राह्य इति ॥

योगादिसङ्ख्यालाभे एकादिक्रमेण कुतः फलं स्यादि-त्याह ॥ योग इति ॥ योगलब्धे एकसङ्ख्यालाभे स्वक-र्म्मतः स्वव्यापारात् पिण्डे द्विसङ्ख्यालाभे शरीरात् स्वकी-यादेव भे नक्षत्रे तत्सङ्ख्यालब्धे सुहृज्जनात् राशौ चतुःसङ्ख्यातो लब्धे स्वकुलतः स्वकुलजनात् जीवे पञ्च-

सङ्ख्यातो लब्धे स्ववित्तात् स्वधनात् स्वचित्तादिपाठे स्वमानसात् सुखं दुःखं वा भवतीति । ग्रहतो ग्रहे स्वसङ्ख्यातो लब्धे रिपोः शत्रुजनात् ग्रहत इत्यत्र सर्वं भक्तिकष्टमिति । वर्णे सप्तसङ्ख्यातो लब्धे स्वस्वामितः सेव्यात् सर्वेषामष्टसङ्ख्यातो लब्धे अष्ट-लब्धायां स्त्रीजनात् शुभं फलं अशुभं फलं वा भवतीति प्रकारः सामान्यतः प्राप्तोऽर्द्धव्यक्तीकरणाय लिख्यते । यस्य देवदत्तादि-नाम्नो दिनफलं ज्ञातुमिष्यते तन्नाम्नो मात्राद्यष्टस्वरानुत्पाद्य व्युत्क्रमेण योगस्वरमुपक्रम्य मात्रान्ता तिर्य्यक्क्रमेणालिख्य द्वादशाब्दिकघट्यन्तान् स्थूलक्रमेण विंशत्यान्तरोदयक्रमेणाष्ट-स्वरानुत्पाद्य तदधोऽनुक्रमेण लिखित्वा तत्र योगस्वरादितः प्रत्येकं बालकुमारादिव्यवस्थां विधाय पञ्चस्वरविंशोपकं प्रत्येकं चतुःसङ्ख्याव्यवस्थितमत्र लिखेत् । तद् यथा बालोत्तरार्द्धसमये द्वयं कुमारे यूनि च प्रत्येकं चतुस्रतुः कृत्वा शुभराशिं परि-कल्प्य लिखेत् । बालपूर्वार्द्धसमये द्वयं वृद्धे मृते च चतुस्रतुः-सङ्ख्यामशुभकोटौ लिखित्वा शुभाशुभराश्योरन्तरे यत्रावशिष्यते तन्नामसदृशं फलं भवति । तत्र यदवशिष्यते तद्दिंशांशे सङ्गुण चतुःषष्ट्या हरणात् यल्लब्धं तत्संख्यायोगादिषु ते भुक्तस्वराः तदु-त्पत्तिज्ञानार्थं सकलसाधारणाधिकशत १०० शकवर्षीयशुक्ल-प्रतिपदि द्वादशाब्दाद्यष्टस्वराः स्वान्तरोदयस्था गतगम्यरूपाः पूर्वं लिखिताः । तथा दिनदर्शनार्थं लिख्यन्ते यथा श्रीरामतोषण-नाम्नो मात्राद्यष्टस्वरा व्युत्क्रमेण योगादिकाः यद्यप्यादौ योगस्वरादिद्वादशाब्दादिस्वरूपेष्वुत्पत्तिस्तेन प्रथमत एव स्वरा व्यवस्थापयितुमर्हन्ति । तत्रापि मात्रादिस्वरसप्तकव्यवस्थाव्यति-रेकेण तद्व्यवस्था न भवतीति शेषे तस्य कथनमिति तात्पर्य्यम् । अत्र द्वादशाब्दाद्यन्तरोदये योगस्वराद्यवधिकबालादिकव्यव-स्थाया योगस्वरकारस्तदवधिको द्वादशाब्दे उदितकारो बाल-

स्तस्योत्तरार्द्धमिति शुभराशौ द्विसंख्यापिण्डस्वर एकारस्तद-वधिको वर्षं उदितकारो वृद्धस्तस्याशुभकोटौ चतुःसंख्या। नक्षत्रस्वरकारस्तदवधिकोऽयने उदित एकारो युवा शुभराशौ तस्य चतुःसंख्या। राशिस्वरकारस्तदवधिक ऋतौ उदितकारो बालस्तस्योत्तरार्द्धमिति शुभराशौ द्विसंख्या। वस्वरीकारस्तद-वधिको मास उदितकारः कुमारस्तस्य राशौ चतुःसंख्या। ग्रह-स्वरोऽकारस्तदवधिकः पक्ष उदितः कारस्तस्य शुभराशौ चतुः-संख्या। वर्णस्वरकारस्तदवधिको दिने उदितकारोऽत्यशुभराशौ तस्य चतुःसंख्या। मात्रास्वरकारस्तदवधिको घट्युदितकारो बालस्तस्योत्तरार्द्धमिति शुभराशौ द्विसंख्या। एतावता बाल-तयोत्तरार्द्धत्वेन षट्संख्या कुमारद्वयस्य चाष्टौ यूनः कारस्य चत्वारः वर्त्तुलीकरणादष्टादश १८। शुभराशौ वृद्धस्यचाष्टौ च बालत्रयस्य भुक्तपूर्वार्द्धस्य षट् ६। वर्त्तुलीकरणादशुभराशौ चतु-र्दशसंख्या १४। राशिद्वयेऽधिकराशेरन्यो राशिः पातनीयः। प्रकृते यूनश्चाष्टमराशेरधिकशुभराशौ पातनादवशेषः। अवशेषेण शुभराशिस्थितौ फलं शुभं स्यात्। शेषे चतुःसंख्यायां विंशतिगु-णितायां वृत्तं ८०। अत्र चतुःषष्टिहरणाल्लब्धशेषः। एवं द्वितीयो वर्त्तमानः पिण्डः स्वरः शुभः शुभफलं शरीरं चिन्तनीयं शरीरं भृत्यूपलक्षणं स्त्रीयजनादित्यर्थः। एवं साधारणे द्वादशाब्दादि-समयनिरूपितस्वरेऽपि प्रतिव्यक्ति नामजस्वराणां बालकुमारा-दिव्यवस्थामुत्पाद्य यथायथं कर्म्माणि दिनफले च कर्त्तव्या-नीति॥ एवमिति॥ एवमनेन प्रकारेण विद्वान् पण्डितो ज्ञात्वा शुभाशुभं वा फलं वदेत्॥

इति श्रीप्राणतोषिण्यां षष्ठे काम्यमाण्डे शिष्यागुरूपदेशलब्ध-फलकबालादिचक्रकथनं नाम षष्ठः परिच्छेदः॥

अथातः सम्प्रवक्ष्यामि चक्रं त्रैलोक्यदीपकम्। विख्यातं

सर्वतोभद्रं सद्यः प्रत्ययकारकम्। ऊर्द्ध्वगा दश विन्यस्य तिर्य्यं-ग्रेखास्तथा दश। एकाशीतिपदं चक्रं ८१ जायते नात्र संशयः। अकारादिस्वराः कोष्ठे लीशादौ विदिशि क्रमात्। सृष्टिमार्गेण दातव्याः षोड़शैव चतुर्भ्रमम्। कृत्तिकादीनि धिष्ण्यानि पूर्वाशादौ लिखेद्बुधः। सप्तसप्तक्रमादेतान्यष्टाविंशतिसंख्यया। लेख्या अवकहडाः प्राच्यां मटपवताश्च दक्षिणे। लयभजखाश्च वारुण्यां पसदचलास्तथोत्तरे। त्रयस्त्रयो वृषाद्याश्च पूर्वाशादिक्रमाद्बुधः। राशयो द्वादश ज्ञेया मेषान्ताः सृष्टिमार्गतः। शेषेषु कोष्ठकेष्वेवं नन्दादितिथिपञ्चकम्। वाराणां सप्तकं लेख्यं भौमादिप्रक्रमेण च। रवेर्मेषतुले प्रोक्ते चन्द्रस्य वृषवृश्चिकौ। भौमस्य मृगकर्कौ च कन्यामीनौ बुधस्य च। जीवस्य कर्कमकरौ मीनकन्ये सितस्य च। तुलामेषौ च मन्दस्य उच्चनीचौ प्रकीर्त्तितौ। शन्यर्कराहुकेत्वाराः क्रूराः शेषाः शुभग्रहाः। क्रूरयुक्तो बुधः क्रूरः क्षीणचन्द्रस्तथैव च। यस्मिन्नृक्षे स्थितः खेटस्ततो वेधत्रयं भवेत्। ग्रहदृष्टिवशेनात्र वामसम्मुखदक्षिणे। भुक्तं भोग्यं तथा क्रान्तं विद्धं क्रूरग्रहेण भम्। शुभाशुभेषु कार्य्येषु वर्जनीयं प्रयत्नतः। वक्रगे दक्षिणा दृष्टिर्वामा दृष्टिश्च शीघ्रगे। मध्यचारे तथा मध्या ज्ञेया भौमादिपञ्चके। सूर्य्यमुक्ता घटीयन्त्रे शीघ्राश्चार्कं द्वितीयगे। समास्तृतीयगे ज्ञेया मन्दा भानौ चतुर्थगे। मन्दाः स्युः पञ्च षष्ठेऽर्के अतिवक्रा नगाष्टगे। नवमे दशमे भानौ जायते कुटिला गतिः। द्वादशैकादशे सूर्य्ये लभन्ते शीघ्रतां पुनः। राहुकेतू सदा वक्रौ शीघ्रगौ चन्द्रभास्करौ। गतेरेकस्वभावत्वादेषां दृष्टित्रयं सदा। क्रूरा वक्रा महाक्रूराः सौम्या वक्रा महाशुभाः। स्युः सहजस्वभावस्थाः सौम्याः क्रूराश्च शीघ्रगाः। घङछाः षणठाश्चैव

धफडाः स्वभञास्तथा। एतन्त्रिकं त्रिकं विद्धं विद्धैः कफभदैः क्रमात्। वङछा रौद्रवेधेन षणठा हस्तगे ग्रहे। धफडाः पूर्वाषाढ़ायां खभञा भाद्र उत्तरे। रवौ शसौ यजौ तत्र ङञौ चैव परस्परम्। एकेन द्वितीयं विद्धं शुभाशुभग्रहव्यधे। अवर्णादिस्वरो वेधे नैकवेधे द्वयोर्व्यधः। युग्मस्वरात्मके वेधे ह्यानुस्वारविसर्गयोः। कोणस्थधिष्ण्ययोर्मध्ये अन्त्यादिपादगे ग्रहे। अस्वरादिचतुष्कस्य वेधः पूर्वतिथिस्तथा। एकादिक्रूरवेधेन फलं पुंसां प्रजायते। उद्वेगश्च भयं हानीरोगो मृत्युः क्रमेण च। ऋचे भ्रमोऽक्षरे हानिः स्वरे व्याधिभयं तिथौ। राशौ विद्धे महाविघ्नः पञ्चविद्धो न जीवति। एकविद्धे भयं युद्धे युग्मवेधे धनक्षयः। त्रिवेधेन भवेद्भङ्गो मृत्युर्वेधे चतुर्ग्रहे। यथा दुष्टफलाः क्रूरास्तथा सौम्याः शुभावहाः। क्रूरयुक्तः पुनः सौम्यो ज्ञेयः क्रूरफलप्रदः। अर्कवेधे मनस्तापो द्रव्यहानिश्च भूसुते। रोगपीड़ाकरः सौरीराहुकेतू च विघ्नदौ। चन्द्रे मिश्रफलं पुंसां रतिलाभश्च भार्गवे। बुधवेधे भवेत् प्रज्ञा जीवः सर्वशुभप्रदः। स्वचेत्रस्थे बलं पूर्णं पादोनं मित्रभे गृहे। अर्द्धं समगृहे ज्ञेयं पादं शत्रुगृहे स्थिते। इदञ्च सौम्यक्रूराणां बलं स्थानवशात् स्वयम्। एतदेव फलं ज्ञेयं सौम्यैः क्रूरैर्विपर्य्यये। स्थानवेधसमायोगे यत्सङ्ख्यं जायते बलं। तत्सङ्ख्यं वेध्यवस्तूनां बलं ज्ञात्वा फलं वदेत्। वक्रग्रहे फलं द्विघ्नं त्रिगुणं स्वोच्चसंस्थिते। स्वभावजं फलं शीघ्रे नीचस्थेऽर्द्धफलो ग्रहः। तिथिराश्यंशनक्षत्रं विद्धं क्रूरग्रहेण यत्। शुभाशुभेषु कार्य्येषु वर्जनीयं प्रयत्नतः। न नन्दति विवाहे च यात्रायां न निवर्त्तते। स रोगान्मुच्यते रोगी वेधवेलाकृतोद्यमः। रोगकाले भवेद्वेधः क्रूरखेचरसम्भवः। वक्रगत्या भवेन्मृत्युः शीघ्रे चाप्य-

रुजान्वितः । वेधस्थाने भवेद्भङ्गो दुर्गे खण्डिः प्रजायते । कविप्रवेशनं तत्र योधाघातश्च तत्र वै । यत्र पूर्वादिकाष्ठायां वृषराश्यादिगो रविः । सा दिगस्तमिता ज्ञेया तिस्रः शेषाः सदोदिताः । ईशानस्थाः स्वराः प्राच्यां ज्ञेया आग्नेययाम्यके । नैरृतस्थास्तु वारुण्यां वायव्यां सौम्यगा मताः । नक्षत्राणि स्वरा वर्णा राशयस्तिथयो दिशः । ते सर्वेऽस्तमिता ज्ञेया यत्र भानुस्त्रिमासिकः । नक्षत्रेऽस्ते रुजा वर्णे हानिः शोकस्तथा स्वरे । राशौ विघ्नस्तथा भीतिः पञ्चास्ते मरणं ध्रुवम् । यात्रा युद्धं विवादश्च द्वारं प्रासादहर्म्ययोः । न कर्त्तव्यं शुभं चान्यदस्ताशाभिमुखं नरैः । अस्ताशायां स्थितं यस्य पुंसो नामाद्यमक्षरम् । स आर्त्तः सर्वकार्य्येषु ज्ञेयो दैवहतो नरः । कवौ कोटे तथा युद्धे चातुरङ्गे महाहवे । वर्ज्या अस्तङ्गता योधा यदीच्छेद्विजयं रणे । नक्षत्रेऽभ्युदिते पुष्टिर्वर्णे लाभः स्वरे सुखम् । राशौ जयस्तिथौ तेजः पदाप्तिः पञ्चकोदये । प्रश्नकाले भवेद्विद्धं यल्लग्नं क्रूरखेचरैः । तद्दुष्टं शोभनं सौम्यैर्मिश्रैर्मिश्रफलं मतम् । ग्रहाविद्धश्च यल्लग्नं फलं तस्य स्वभावतः । ज्ञातव्यमीक्षणे केन्द्रे भाषितं यच्चरादिकम् । क्रूरैरुभयतो विद्धा यस्याक्षरतिथिस्वराः । राशिर्धिष्ण्यश्च पञ्चापि तस्य मृत्युर्न संशयः । मण्डलं नगरं ग्रामं दुर्गं देवालयं पुरम् । क्रूरोभयस्थिते वेधे विनश्यति यथाक्रमम् । कृत्तिकादित्रिकर्क्षे क्रूरवेधे च कूर्मतः । सर्वे नाभिस्थदेशाद्या विनश्यन्ति यथाक्रमम् । कृत्तिकायां तथा पुष्ये रेवत्याञ्च पुनर्वसौ । वेधे सति क्रमाद्वेधो वर्णेषु ब्राह्मणादिषु । तैलं भाण्डं रसो धान्यं गजाश्वादिचतुष्पदाः । सर्वे महार्घ्यतां याति यत्र क्रूरो व्यवस्थितः । क्रूरवेधसमायोगी यस्योपग्रहसम्भवः । तस्य

मृत्युर्न सन्देहो रोगाद्वापि रणेऽपि वा। सूर्य्यभात् पञ्चमं धिष्ण्यं ज्ञेयं विद्युन्मुखाभिधम्। शूलञ्चाष्टमं प्रोक्तं सन्निपातं चतुर्दशम्। केतुमष्टादशं विद्यादुल्का स्यादेकविंशतिः। द्वाविंशतितमे कल्पस्त्रयोविंशे च वज्रकम्। निर्घातश्च चतुर्विंशे उक्ताश्चाष्टावुपग्रहाः। प्रस्थाने विघ्नदाः प्रोक्ताः सर्वकार्य्येषु सर्वदा। जन्मभं कर्म चाधानं वैनाशं सामुदायिकम्। साङ्घातिकमिदं धिष्ण्याष्टकं सर्वजनीनकम्। जातिदेशाभिषेकैश्च नवाधिष्ठानभूपतेः। वेधं ज्ञात्वा फलं ब्रूहि सौम्यैः क्रूरैः शुभाशुभम्। जन्मभं जन्मनक्षत्रं दशमं कर्मसंज्ञितम्। एकविंशं तथाधानं त्रयोविंशं विनाशकम्। अष्टादशञ्च नक्षत्रं सामुदायिकसंज्ञकम्। साङ्घातिकञ्च विज्ञेयं ऋक्षं षोड़शमेव हि। शरीरं राज्यजातं हि जातिनामधनाभिधम्। देशभं देशनामर्क्षं राज्यर्क्षञ्चाभिषेककम्। मृत्युः स्याज्जन्मभे बिद्धे कर्मभे क्लेश एव च। आधानभे प्रवासः स्याद् विनाशे वर्णविग्रहः। सामुदायिकभेऽनिष्टं हानिः साङ्घातिके तथा। जातिभे कुलनाशः स्याद् बन्धनञ्चाभिषेकभे। देशभे देशभङ्गश्च क्रूरो वरं शुभैः शुभम्। उपग्रहसमायोगे मृत्युर्भवति नान्यथा। भयं भङ्गश्च घातश्च मृत्युभङ्गयुता स्मृतिः॥

अथातः सम्प्रवक्ष्यामि यदुक्तं ब्रह्मजामले। एकाशीतिपदे चक्रे ग्रहवेधात् शुभाशुभम्। क्रूरैरेकादिपञ्चान्ते युधि वेधे फलं लभेत्। तिथिर्धिष्ण्यं स्वरा राशिर्वर्णश्चैव तु पञ्चमः। यद्दिने बिध्यते चन्द्रात् तद्दिने स्यात् शुभाशुभम्। देशः कालस्ततः पण्यमिति त्रीण्यर्घ्यनिर्णये। चिन्तनीयानि वेधानि सर्वकालं विचक्षणैः। देशोऽथ मण्डलं स्थानमिति देशस्त्रिधोच्यते। वर्षं मासं दिनञ्चेति त्रिकालेऽपि च कथ्यते। धातुर्मूलञ्च जीवञ्च पण्यमेवं त्रिधा मतम्। अथ त्रिकत्रयस्यास्य

वक्ष्यामि स्वामिखेचरान्। देशेशा राहुमन्देज्या मण्डलस्वा-
मिनः पुनः। केतुसूर्य्यसिताः स्थाननाथाश्चन्द्रारचन्द्रजाः।
वर्षेशा राहुकेत्वार्किजीवा मासाधिपाः पुनः। भौमोऽर्कस्तु
सितौ ज्ञेयश्चन्द्रः स्याद्दिवसाधिपः। धात्वीशाः सौरिर्शीतांश
जीवेशा ज्ञेन्दुसूरयः॥ मूलेशाः केतुशुक्रार्का इति पञ्चाधिपा
ग्रहाः। पुंग्रहा राहुकेत्वर्कजीवभूमिसुता मताः। स्त्रीग्रहौ
सितशीतांशू सौरिसौम्यौ नपुंसकौ। सितेन्दू सितवर्णौ रक्तौ
भौम्यभास्करौ। पीतौ सौम्यगुरू कृष्णा राहुकेत्वर्कजा मताः।
ग्रहे वक्रोदयी यः स्यादुदये च बलाधिकः। देशादीनां स एवैकः
स्वामिखेटस्तथा मतः। वक्रोदयः खहर्म्येषु पूर्णवीर्य्यो भवेद्
ग्रहः। तदग्रपृष्ठगे खेटे बलं त्रैराशिकं मतम्। उच्चस्थे च
बलं पूर्णं नीचांशस्थे बलं दलम्। त्रैराशिकवशाज्ज्ञेयमन्तरे
तु बलं बुधैः। एवं देशादिनाथानां वेधो ज्ञेयो ग्रहं प्रति।
सुहृदः शत्रवो मध्याश्चिन्तनीयाः प्रयत्नतः। स्वमित्रसमशत्रूणां
वेधाद्देशादिके क्रमात्। शुभो ग्रहः शुभं दत्ते चतुस्त्रिद्व्येकपा-
दतः। दुष्टं दुष्टग्रहः कुर्य्यादेकद्वित्रिचतुष्पदैः। विद्धः पूर्णदृशा
पश्यन् तत्पादेन फलं ग्रहः। विदधात्यन्यथा ज्ञेयं फलं दृष्ट्यनु-
सारतः। वर्णादिस्वरराशीनां मेषाद्ये राशिमण्डले। ग्रहदृष्टि-
वशात् सोऽपि वेधो वर्णादिके मतः। स्वरवर्णाः स्वचक्रोक्तास्ति-
थिवेधस्य पीड़काः। तिथौ वर्णे च राशौ च स्वदृष्ट्या दृष्टिजं
फलम्। अशुभो वा शुभो वापि शुक्रो वेध्यतिथौ ग्रहः। सर्वं
निजफलं दत्ते कृष्णपक्षे तु तद्दलम्। खेटकस्यांशको ज्ञेया पूर्णा
दृष्टिः सदा बुधैः। दृष्टिहीने पुनर्वेधे न स्यात् किञ्चिच्छुभाशु-
भम्। सौम्यः पूर्णदृशा पश्यन् विध्यन् वर्णादिपञ्चकं। फलं
विंशोपकान् पञ्च क्रूरश्च चतुरो दिशेत्। वेध्यवर्णादिके यावत्
स्थाने वेधे च यावती। दृष्टिस्तदनुमानेन वाच्या विंशोपका

बुधैः । एवं विंशोपका यत्र सम्भवन्ति शुभाशुभम् । तस्मादेवं विधानेन तेषां ज्ञेयं शुभाशुभम् । वर्त्तमानार्घ्य-विंशांशकल्पना तेषु च क्रमात् । वर्त्तमानार्घ्यके दद्यादुत्पाद्य च शुभाशुभम् । देशध्वंसः प्रजापीड़ा क्षतिः प्राणिवधस्तथा । यत्र दृष्टिस्तु तत्र स्याद् दुर्भिक्षं मण्डले स्फुटम् । अकालेऽपि फलं पुष्पं वृक्षाणां यत्र जायते । स्वजातिमांसभुक्तिश्च दुर्भिक्षं तच रौरवम् । परचक्रागमस्तत्र दुर्भिक्षञ्च स्वराज्यके । ऋतौ विपर्य्ययो यत्र दुर्भिक्षं मण्डले भवेत् । भूमिकम्पो रजःपातो रक्तपातश्च जायते । देशे सर्वसुखोपेते वैधादर्घ्यो भवेद्भयम् । दीपो यथा गृहस्यान्तरुद्योतयति सर्वतः । तस्येदं सर्वतोभद्र-चक्रं ज्ञानप्रकाशकम् ॥

अस्य व्याख्यानं प्रक्रिया सङ्केतश्चोच्यते ऊर्द्धेति । पूर्वपश्चिमक्रमेण रेखादशकं विन्यस्योत्तरदक्षिणक्रमेण पुन-स्तत्र रेखादशकं न्यसेत् । एतेनैकाशीतिः कोष्ठकानि भवन्ति । तत्र कोष्ठे ईशानादिकोणकोष्ठेषु सृष्टिमार्गेणादावी-शानकोणे ततश्चाग्निकोणे ततो नैर्ऋते ततश्च वायव्ये एवं चतुरावृत्त्या अकारादिस्वरान् लिखेत् । पूर्वदिगवधिसप्तसप्त-क्रमेण कृत्तिकादीन्यष्टाविंशतिनक्षत्राणि चतुर्दिक्षु प्रथमपंक्तौ लिखेत् । तदधःपंक्तौ अवकहेत्यादिवर्णविंशतिकं तदधः-पंक्तौ वृषादिराशिद्वादशकञ्च लिखेत् । अवशिष्टकोष्ठपञ्चके नन्दादितिथिपञ्चकं लिखेत् । तत्रेशाने अ उ ऌ ओ इति स्वरचतुष्कम् । आग्नेये आ ऊ ॡ औ इति स्वरचतुष्कम् । नैर्ऋते इ ऋ ए अं इति स्वरचतुष्कम् । वायव्ये ई ॠ ऐ अः इति स्वरचतुष्कञ्च लिखेत् । ततः पूर्वदिशि प्रथमे पंक्तौ कृत्ति-कादीनि सप्त ऋक्षाणि द्वितीयपंक्तौ अवकहडेति । तृतीयपंक्तौ वृषमिथुनकर्कटेति । तदधःकोष्ठे नन्दादितिथिश्च लिखेत् । ततो

दक्षिणदिशि पूर्ववत् पंक्तिक्रमेण मघादीनि मटपवतेति सिंह-
कन्यातुलेति भद्राञ्च लिखेत्। पश्चिमायां दिशि पूर्ववत् तत्र
नन्दाकोष्ठे रविमण्डलौ भद्राकोष्ठे इन्दुबुधौ जयाकोष्ठे गुरुं
रिक्ताकोष्ठे शुक्रं पूर्णाकोष्ठे शनिं लिखेत्। ग्रहाणां बलविज्ञानाय
उच्चनीचस्थानमाह रवेर्मेष इत्यादि॥ ग्रहाधीना हिं सकल-
शुभाशुभचिन्तेत्यतो ग्रहाणां क्रूरसौम्यत्वमाह शन्यर्केति।
शनिरविराहुकेतुमङ्गलाः क्रूराश्च बुधगुरुशुक्राः शुभाः। बुधस्तु
क्रूरयुक्तः पापः। एवं क्षीणचन्द्रः क्षीणस्तु ज्योतिषे। कृष्णाष्ट-
मीदलादूर्द्ध्वं यावत् शुक्लाष्टमीदलम्। तावदेव शशी क्षीणः पूर्णः
स्यादन्यतः शशी॥ इति। एतत्कथनप्रयोजनमाह यस्मिन्निति।
यत्र चक्रे ग्रहाश्रयनक्षत्रस्य वामसम्मुखदक्षिणक्रमेण नक्षत्रेण
सह वेधत्रयं भवेत्। भुक्तग्रहाश्रयनक्षत्रे पूर्वं भोग्यं तन्नक्षत्रात्
परम् आक्रान्तं ग्रहेणाधिष्ठितम्। तत्र कर्म न कर्त्तव्यमित्यर्थः॥

दृष्टिफलं कथयति वक्रगेति॥ मङ्गलादिग्रहपञ्चके वक्र-
गामिणि सति दक्षिणा दृष्टिर्ज्ञातव्या। अत्र दक्षिणवेधफलं
वाच्यं शीघ्रगामिणि वामदृष्टिर्वामवेधफलं वाच्यम्। मध्यचारि
प्रकृतगतौ मध्या सम्मुखे दृष्टिर्ज्ञेया तत्र सम्मुखवेधफलं वाच्यम्।
ग्रहाणां वक्रशीघ्रादिसमयमाह सूर्य्ययुक्त इति। सूर्य्येण सह
एकराशिस्था ग्रहा अंशविशेषे अस्ता भवन्ति। उक्तञ्च ज्योति-
स्तत्त्वे। सूर्य्येण युक्ता अग्रिमराशिं गता उदिताः स्युः। सूर्य्ये
द्वितीयगे ग्रहाक्रान्तराशेरग्रिमराशिगते सूर्य्ये तु ग्रहाः शीघ्राः
शीघ्रगतयो भवन्ति। एवं क्रमेण तृतीयराशिगे सूर्य्ये ग्रहाः
समाः प्रकृतगतयो भवन्ति। चतुर्थे सूर्य्ये मन्दाश्वक्रपूर्वसम-
गतयो भवन्ति। एवं पञ्चमराशिगे सूर्य्येऽपि सप्तमाष्टमराशिगे
सूर्य्ये ग्रहा अतिवक्रगतयो भवन्ति। एवं नवमदशमराशिगे
सूर्य्ये ग्रहाणामकुटिला सहजा गतिर्जायते। एकादशद्वादश-

राशिगे सूर्य्ये ग्रहाः शीघ्रगतयो भवन्ति। एषा वक्रशीघ्रादि-गतिस्तु मङ्गलादिपञ्चकानामेव। अन्येषां गतिविशेषमाह राहुकेतू इति। राहुकेतुचन्द्रसूर्य्याणामेकगतित्वात् सदा दृष्टि-त्रयं वामदक्षिणमध्यदृष्टिः सदैव भवति। क्रूरा इत्यादि। शन्यादिग्रहा वक्रगतयः सन्तो महाक्रूरा एवं सौम्याः शुभ-ग्रहा वक्राः सन्तो महाशुभा भवन्ति। तथाच तयोः शुभाशु-भयोर्वक्रगत्योर्ह्यनुक्रमेण शुभं विरुद्धञ्च फलं भवति। सह-जगत्या प्रकृतगत्या स्वभावे स्वराशौ स्थिता वक्रा वा उभय-थापि सौम्याः शुभग्रहा महाशुभा भवन्ति। एवं सौम्याः क्रूराश्च ग्रहाः शीघ्रगाः सन्तोऽपि शुभा भवन्ति। क प भ द इत्यक्षरचतुष्टये विद्धे सति घ ङ छेत्यक्षरत्रिकं ष ण ठेति ध फ ढेति त्रिकं थ झ ञेति त्रिकं यथाक्रमं विद्धं भवति। तथा च ककारे विद्धे घ ङ छेति वर्णत्रयं विद्धं भवति। एवं पकारे विद्धे ष ण ठेति वर्णत्रयं भकारे विद्धे ध फ ढेति वर्णत्रयं दकारे विद्धे थ झ ञेति वर्णत्रयं क्रमेण विद्धं भवति। आर्द्रानक्षत्रे विद्धे सति क घ ङ छेति वर्णचतुष्कं विद्धम्। एवं हस्तानक्षत्रे विद्धे प ष ण ठेत्यक्षरचतुष्कं पूर्वाषाढ़ानक्षत्रे विद्धे भ ध फ ढेति वर्णचतुष्कं उत्तरभाद्रनक्षत्रे विद्धे द थ झ ञेति वर्णचतुष्कं क्रमाद् विद्धं भवति। रवावित्यादिवचनोपात्तौ एकविभक्त्यन्तौ यौ द्वौ द्वौ वर्णौ स्तः तयोर्मध्ये शुभाशुभग्रहैरेकस्मिन् विद्धे सति अपरमपि विद्धं भवति। एवमनुस्वारविसर्गयोरेकस्मिन् विद्धेऽपरमपि॥

कोणस्थेति॥ कोणस्थनक्षत्रयोः भरणीकृत्तिकयोरश्लेषा-मघयोर्विशाखानुराधयोः श्रवणाधनिष्ठयोरन्त्याद्यपादगते ग्रहे सति प्रत्येकमकारादिस्वरचतुष्केषु पूर्णातिथेः पञ्च-मीदशमीपौर्णमास्यमावस्यानां वेधो भवति। यथा भरण्या

अन्त्यपादे कृत्तिकाया आद्यपादे यदि ग्रहो वर्त्तते तदा अकारादयः स्वराश्चत्वारो विद्धाः पूर्णातिथ्या सह भवन्ति एवमन्येष्वपि कोणेषु ज्ञेयम्॥ एकेत्यादि॥ एकक्रूरवेधे उद्वेगः द्विवेधे भयं त्रिवेधे हानिश्चतुर्वेधे रोगः पञ्चवेधे मृत्युः॥ ऋक्षेत्यादि॥ पापग्रहेण नक्षत्रे विद्धे सति भ्रमो बुद्धिभ्रंशः। अन्यत् सुगमम्॥ युद्धे विशेषमाह एकेति। नामवर्णादिके एकपापेन विद्धे युद्धे भयं द्वाभ्यां धनहानिस्त्रिभिर्भङ्गश्चतुर्भिर्मृत्युरित्यर्थः॥ शुभग्रहफलमाह यथेति॥ अर्केत्यादि॥ भृगुसुतो मङ्गलः सौरिः शनिः। चन्द्रेत्यादि। यदि चन्द्रः क्षीणस्तदा पापफलं यदा पूर्णश्चन्द्रस्तदा शुभफलं सर्वप्रकारेण शुभफलदः। ग्रहाणां यादृग्बलं तादृक् फलं स्यादिति बलं दर्शयति स्वक्षेत्रे इत्यादि सुगमम्। दृदक्षेति स्थानबलं शुभाशुभग्रहाणां तुल्यम्। फलन्तु विपर्य्ययेण ज्ञेयम्। यदा पापग्रहः पूर्णबलस्तदा फलं मन्दं यदा शुभग्रहः पूर्णबलस्तदा अतीव शुभम्॥ तिथीत्यादि॥ तिथिराशिनवांशक्रमेण नक्षत्रञ्च यत् क्रूरग्रहेण विद्धं यत्तद्वर्ज्यं तत्र शुभकर्म्म न कर्त्तव्यमित्यर्थः। वेधफलमाह न नन्दतीत्यादि सुगमम्। विद्धनक्षत्रादौ राज्ञा दुर्गे कृते खण्डिः खण्डनं जायते तस्य भङ्गो भवतीति तात्पर्य्यम्। कविड़ाकारीति प्रसिद्धस्तस्य तस्य प्रवेशनं विद्धनक्षत्रदिक्कृतदुर्गे भवति। एवं तत्र कोष्ठे कृते योधानामवघातश्च। अत्र तु यत् सेनाङ्गनामाद्यवर्णो विद्धपुरुषस्य दुर्गादेर्वा पापग्रहविद्धो भवति इत्यप्यूह्यम्। यत्रेति यत्र पूर्वादिदिशि वृषादित्रिराशिभो रविर्भवति सा दिगस्तमिता ज्ञेया इत्यर्थः। शेषा दिश उदिता भवन्ति। ईशानेति॥ ईशानदिक्स्थाः स्वराः अ उ ऌ ओ एवं रूपाश्चत्वारः प्राच्यां तत्र स्थिता ज्ञेयास्तस्यामस्तमितायां तेऽप्यस्तमिता ज्ञेया इत्यर्थः। एवमन्यत्र नक्षत्राणीति॥

यत्र दिशि राशित्रयभोगक्रमेण सूर्य्यः स्थितस्तत्रस्था नक्षत्रवर्ण-राशितिथिवाराः सर्वेऽस्तमिता भवन्ति। तत्फलमाह नक्षत्रेति। सुगमम्॥ यात्रेति॥ शुभं यात्रादि अशुभं मरणादि अस्तदिगभिमुखं नरेनं कार्य्यमित्यर्थः॥ अस्ताशायामिति॥ यस्य पुंसो नामाक्षरमस्तदिग्स्थं भवति स दैवहत इव ज्ञेयः। कराविति सुगमम्॥ पदावभिमतलाभः प्रश्नेति। प्रश्नलग्नं अशुभविद्धञ्चेत्तदा अशुभं शुभविद्धञ्चेत्तदा शुभं शुभाशुभविद्धञ्चेत्तदा मिश्रम्॥ ग्रहाविद्धेत्यादि॥ ग्रहेणाविद्धं लग्नं चरस्थिरद्व्यात्मकरूपं ग्रहदृष्ट्यनुसारेण च यद्यत् फलं स्वभावजफलञ्च वाच्यमित्यर्थः। अयमभिप्रायः॥ यल्लग्नमस्मिन् चक्रे ग्रहेणाविद्धं स्यात् तस्य केन्द्रगतदृष्ट्यनुसारेण फलं वाच्यम्। किन्तु स ग्रहो यदि स्वामिव्यतिरिक्तपापः स्यात् तदा कार्य्यस्यासिद्धिर्वाच्या यदि स शुभस्तदा कार्य्यसिद्धिर्म्मिश्रश्चेन्मिश्रफलं वाच्यम्॥

चरादिसंज्ञा दीपिकायाम्॥ चरस्थिरद्व्यात्मकनामधेया मेषादयोऽमी क्रमशः प्रदिष्टा इति॥ क्रूरैरित्यादि॥ पापग्रहैर्यस्य वर्णादयः पञ्चमोत्क्रमाभ्यां मण्डलादिकं पापविद्धञ्चेत्तदा विनश्यति। मण्डलं देशः॥ नगरं राजस्थितिस्थानम्। दुर्गं कोटादि। देवालयः प्रसिद्धः। पुरं राजनामचिह्नितराजधानी। कृत्तिकेत्यादि कूर्म्मचक्रे त्रीणि त्रीणि कृत्वा सप्तविंशतिनक्षत्राणि नवभागक्रमेणाङ्गानि व्यवस्थेयानि। तत्र कृत्तिकादिनक्षत्रत्रिके क्रूरविद्धे सति नाभिस्थदेशा नश्यन्ति एवमन्यत्र। अयमभिप्रायः। कूर्मचक्रे सर्वतोभद्रचक्रे च यदि पापविद्धं नक्षत्रं स्यात्तदा तन्नक्षत्राङ्कितदेशा नश्यन्ति महोपद्रुता भवन्ति। एकचक्रे विद्धञ्चेत्तदा किञ्चिदुपद्रुता इति॥ कृत्तिकायामिति॥ कृत्तिकायां विद्धायां ब्राह्मणो विध्यति एवं पुष्ये विद्धे क्षत्रियो विध्यति रेवत्यां वैश्यः पुनर्वसौ शूद्रश्च। तत्र शुभविद्धे

शुभं पापविद्धे अशुभं मिश्रे मिश्रफलम्। मतान्तरे, लग्नवेधे-नापि यदाह वराहः। पूर्वात्रयं सानलमग्रजानां राज्ञान्तु पुष्येण सहोत्तराणि। सपौष्णमैत्रं पितृदैवतञ्च प्रजापतेर्भञ्च कृषीवलानाम्॥ आदित्यहस्ताभिजिदश्विभानि वणिग् जनानां प्रवदन्ति भानि। मूलत्रिनेत्रानिलवारुणानि भान्युग्रजातेः प्रभ-विष्णुतायाम्॥ सौम्येन्दुचित्रावसुदैवतानि सेवाजनस्वाम्यमुपा-गतानि। सर्पं विशाखा श्रवणाभरण्यश्चाण्डालजातेरपि निर्दि-शन्ति॥ तौल्यमिति॥ तौल्यं तुलनार्हंद्रव्यं भाण्डं रत्नं रसो घृततैलादि। धान्यं शस्यं महार्घ्यतामधिकन्यूनतामित्यर्थः। शुभवेधे सुभिक्षमिति। क्रूरवेध इति सुगमम्॥ उपग्रहमाह सूर्य्यभादिति सुगमम्। नाडीनक्षत्रमाह जन्मनि भेति। इदं नक्षत्रषट्कं सर्वजनसाधारणं ज्ञातव्यम्। जातिभमुक्तम्। देशभं देशनामाद्यक्षरेण शतपदचक्रे ज्ञातव्यम्। यस्मिनृक्षे राज्ञोऽभिषेको भवति तन्नक्षत्रमभिषेकभम्। तत्र क्रूरवेध-फलमुक्तं शुभफलं वाच्यम्। तिथिरिति यस्मिन् दिने शुभाशुभ-वेधे सति चन्द्रवेधेन तद्विध्यते तिथ्यादिपञ्चकेषु यत्र यदा चन्द्रवेधस्तदा तस्य कथितफलं वाच्यम्। तिथ्यादिपञ्चके विद्धे चन्द्रयोगो यदा भवेत्। तदुक्तं फलं तदा वाच्यं तद्दिने ग्रहसम्भवम्॥ देश इति॥ पण्यं विक्रेय-द्रव्यम्। धातुरिति धातुः स्वर्णादिपृथिव्यन्तः। मूलं वृक्षादि-गुल्मान्तम्। जीवो मनुष्यादिकीटपर्य्यन्तः। देशेत्यादि राहुश-निवृहस्पतयः देशस्वराः। केतुरविशुक्रा मण्डलेशाः। चन्द्रमण्ड-लबुधाः स्थानपतयः। राहुकेतुशनिवृहस्पतयो वर्षाधिपाः। रवि-भौमबुधशुक्रा मासाधिपाः। चन्द्रो दिवसाधिपः। शनिराहुकुजा धात्वधिपाः। बुधचन्द्रवृहस्पतयो जीवेशाः। रविकेतुशुक्रा मूलेशाः। राहुकेतुरविजीवमङ्गलाः पुरुषाधिपाः। शुक्रचन्द्रौ

स्त्रीग्रहौ । शनिबुधौ नपुंसकौ । ग्रहे इति । ग्रहे स्वगृहे स्वस्वराशौ यथा सिंहे सूर्य्य इत्यादि वक्रे भुक्तांशेषु परावृत्य गमने स्वहर्म्येषु स्वगृहेषु तत्पूर्वपरगृहेऽपि पूर्णबल इति त्रैराशिकं बलम्। उच्चेति दलमर्द्धम्। अन्तरे उच्चनीचमध्ये त्रैराशिकवशादनुपातेन बलं ज्ञेयम् । अनुपातो यथा। उच्चा-वधिप्रतिराशित्रिंशांशके प्रत्येकं दश दश विकला हानिरेवं नीचावधिप्रतिराशित्रिंशांशके प्रत्येकं दश दश विकला वृद्धि-रिति। एवमिति । तत्तत्प्रभुत्वविषयकदेशादौ वेधचिन्ता कार्य्या इत्यर्थः । एवं ग्रहं प्रति वेधका ग्रहाः के सुहृदः के वा शत्रवः के वा मध्या इति चिन्तनीयम्। यथा मण्डलस्वामी सूर्य्यः तस्य मित्राणि चन्द्रकुजगुरवः। तैर्यदि मण्डलं विद्धं तदा शुभफलम् ; सौम्यो बुधस्तस्य वेधान्न निषिद्धं शनिशुक्रौ शत्रू तयोर्वेधाद्विरुद्धफलमेवमन्येष्वपि ज्ञेयम् । स्वमित्रेति देशादिके देशमण्डलपण्ये स्वस्य मित्रस्य समस्य शत्रोश्च वेधात् शुभग्रहः शुभफलं ददाति चतुस्त्रिद्व्येकपादकैः। तथा च स्ववेधे पूर्णं मित्रवेधे पादोनं समवेधेऽर्द्धं शत्रुवेधे पादफलमिति। दुष्ट-ग्रहो विरुद्धफलं दत्ते तथा च स्ववेधे पादफलं मित्रवेधे अर्द्धफलं समवेधे पादोनं शत्रुवेधे पूर्णम्। विद्धमिति विद्धराशिं पूर्णदृष्ट्या पश्यन् यद्राश्यक्षरं यदा विद्धम् करोति तदा पादेन फलं विदधाति दृष्ट्यनुसारतोऽत्र विपरीत-क्रमो यथा। पूर्णदृष्ट्या च कपालफलं तथा पाददृष्ट्या पूर्णफलम्। अर्द्धदृष्ट्या पादत्रयं पादत्रयदृष्ट्या अर्द्धम् ॥ वर्णेति ॥ मेषादिद्वा-दशराशिषु वर्णं आदिभूतो येषां अ इ उ ए ओ इत्येतेषां वर्ण-सङ्घटनतो रविर्बुधो वा एवं क्रमेण राश्यंशकव्यवस्थितराशीनां ग्रहदृष्टिवशाद्वेधफलदः सोऽपि वेधो वर्णादिको मतः। यत्रांशक-वेधस्तत्र तत्रत्यांशवर्णस्वरयोरपि वेधस्तत्रापि फलं विद्धनवांशक-

राशौ ग्रहस्य दृष्टिवशेन। स्वरवर्णेति॥ एषां ये च वर्णास्ते स्वरचक्रोक्ता नामजाः स्वीयचक्रे कथिताः। ककारादिनाम्नः ककारो वर्णः अकारस्वरः एवं स्वस्ववर्णाः पापग्रहविद्धाः पीड़कास्तिथिवेधाश्चैताहृशाः पीड़का एव। एवं तिथौ यो वर्णो यश्च राशिस्तत्रापि शुभाशुभग्रहवेधात् स्वदृष्ट्या पाददृष्टिक्रमेण दृष्टिजं फलं ज्ञेयम्। अशुभेति॥ पापग्रहः शुभग्रहो वा शुक्लपक्षे तिथिवेधं कुर्वन् सर्वं स्वकीयफलं दृष्टिकल्पितं दत्ते कृष्णपक्षे तु तदर्द्धमिति। खेटेति। ग्रहस्य अंशके पूर्णा दृष्टिः पण्डितैः सदा चिन्तनीया यतो दृष्टिहीने वेधे पुनः किञ्चिदपि शुभाशुभफलं न स्यादिति हेतुगर्भेण योजना। सौम्येति॥ एवं प्रकारेण वर्णादिपञ्चके वर्णस्वरर्क्षराशि-तिथ्यात्मके विद्धे सति ग्रहो वेधकः शुभाशुभफलं दत्ते। सौम्य इति॥ दिशि सर्वतोभद्रचक्रपूर्वादौ वर्णादिपञ्चके पूर्णदृशा पश्यन् बिध्यन् पञ्चविंशोपकान् पतितपादं पञ्चपञ्च-विंशोपकसंज्ञकं फलं शुभग्रहो ददाति। क्रूरग्रहः प्रतिपादं चतुर्विंशोपकान् फलं ददाति। वृषादिराशित्रये अवदहडा-वर्णाः कृत्तिकादीनि सप्तभानि सिंहादित्रये मटपरता वर्णा मघादीनि सप्तभानि वृश्चिकादित्रये नयभजखा वर्णा अनुराधा-दीनि सप्तभानि कुम्भादित्रये गशदचला वर्णा धनिष्ठादीनि सप्तभानि एवं नक्षत्राणि वर्णाश्च राशीनां ज्ञेयाः

यदि पश्यन्ति ते खेटाः पाददृष्ट्या प्रकल्पयेत्। विंशोपकाः स्युः पञ्चैव प्रतिपादं शुभग्रहैः। अशुभैर्वेदमिता ज्ञेयाः पाददृष्ट्या विचक्षणैरिति॥ वेधे इति॥ वर्णादिपञ्चके वेधे यावद्दृष्टि-बलं स्थानवेधे च यावती दृष्टिस्तदनुमानेन बुधैर्विंशोपका वाच्या इति। एवमिति॥ एवं प्रकारेण यत्राशुभे शुभे वा ग्रहे दृष्ट्यादिबलभेदेन विंशोपका व्यवस्थाक्रमेण सम्भवन्ति

शुभग्रहविंशोपका एकत्र धार्य्या अशुभग्रहविंशोपका अपरत्र धार्य्याः। तेषां मध्ये परस्परं ये यस्मान्न्यूनास्ते अधिके परिशोधनीयाः। शेषं यद्ग्रहस्य तच्चिह्नितं शुभमशुभं वा फलं वाच्यम्। यत्र यावती दृष्टिरित्यस्यार्थो विविच्य लिख्यते। द्वितीये दशमे वा वेधे पञ्चविंशोपकाः। नवमे पञ्चमे वा दशविंशोपकाः। चतुर्थेऽष्टमे वा प्रत्येकं पञ्चदश। समसप्तके विंशतिः॥ तथा च दृष्टिकथने ज्योतिःशास्त्रम्। पादैकदृष्टिर्दशमे तृतीये द्विपाददृष्टिर्नवपञ्चके च। द्विपाददृष्टिश्चतुरष्टके च सम्पूर्णदृष्टिः समसप्तके चेति॥ सर्वक्रूरग्रहाणां पाददृष्ट्या चत्वारश्चत्वारो विंशोपका जायन्ते। इति सम्पूर्णदृष्टौ षोड़शविंशोपका भवन्ति। एवं क्रमेण यत्र यत्र ये विंशोपकाः शुभात्मका अशुभात्मका भवन्ति तत्र शुभग्रहविंशोपकान् एकत्रैव परत्र क्रूरग्रहविंशोपकान् लिखित्वा यो यत्र पतति तं तत्र पातयित्वा अवशिष्टौ यदि शुभग्रहस्य तदनुमानेन शुभम्। पापग्रहस्य चेत्तदा अशुभं फलं भवति॥

वर्त्तमानेत्यादि। तेषु विक्रेयद्रव्येषु वर्त्तमानधान्यादिद्रव्यमूल्ये तन्नामनक्षत्रस्वरवर्णतिथिराशिभेदेन पूर्वोक्तप्रकारेण विंशांशकल्पना अन्योन्यपरिशोधनपर्य्यन्ता कार्य्या। ततोऽवशिष्टविंशोपकभागे परिकल्पनेन शुभग्रहादिष्वेकावशेषे विंशत्यंशो मूल्ये ह्रसति। तद्विशेषे द्वौ भागौ ह्रसतः। एवमधिके चिन्तनीयम्। यत्र देशादेर्वर्णादिपञ्चकं शुभक्रूरविंशोपकशेष एवं क्रमेण एकद्वित्र्यादिविंशान्तभागान्मध्ये अधिकीक्रियते। मूल्यमेवाधिकं भवति शुभाशुभश्चोत्पाद्यम्। एवं यत्रादौ पापग्रहवेधस्तत्राशुभं किञ्चिद्वस्तु वेधादपि चिन्तनीयम्। यत्र देशादेर्वर्णादिपञ्चकं शुभमात्रेण विद्धं तत्रातीव शुभम्। यत्र पापमात्रेण तत्रातीवाशुभम्। यत्र भूतवेधस्तत्र दृष्टिभेदेन विंशोप-

कान् परिकल्प्य शुभाशुभविशेषकाच्छुभमशुभफलं वाच्यम्। देश इत्यादि यत्र देशे क्रूरग्रहवेधे सति तद्दृष्टिरधिका कथितप्रकारेण सम्पद्यते तस्य विनाशः। एवं तस्मिन् देशे प्रजापीड़ाप्रकारोपद्रवः। राजविनाशो मण्डले च दुर्भिक्षम्। कूर्मचक्रे पापग्रहपीड़ा यत्र सर्वतोभद्रेऽपि पापग्रहपीड़ा तस्यावश्यं देशादेर्विनाशः प्रजापीड़ादिकञ्च फलं भवति। एतत् सकलनिमित्तान्युपदर्शयति। अकालेऽपीत्यादि। यत्र देशादौ वृक्षाणामकाले पुष्पाद्युद्गमनसमयान्यसमये पुष्पं फलं वा भवति तत्र स्वजातिमांसभुक्तिर्मनुष्यमांसं मनुष्यो भुंक्ते एवमन्यजातीयानामपि तत्र रौरवं भयानकं दुर्भिक्षं यत्रैव भवति तत्र परचक्रागमोऽपि भवति। सुराजकै शोभनराज्ञि अपि देशे दुर्भिक्षम्। ऋतोरित्यादि। यत्र देशे ऋतो विपर्य्ययः अन्याहृशः क्रमः पौषादिसम्भावितकुहेलिकादिर्ग्रीष्मादौ सम्भवति यथा साधारणक्रमे शीतलसमये उष्णता ग्रीष्मादौ शैत्यम्। अन्यस्तु धर्मवद्धेतुविपर्य्ययो वा तत्रापि दुर्भिक्षं भवति। भूकम्प इत्यादि। सर्वसुखोपेतदेशे विधात् पापग्रहक्रतो दीर्घभूमिकम्पो रजःपातो धूलीवृष्टिः रक्तवृष्टि र्वा जायते॥ दीपो यथेति। इदं सर्वतोभद्रचक्रं तथा ज्ञानप्रकाशकम्। यथा दीपो गृहस्यान्तर्मध्यं द्योतयति। यथा दीपद्योतवशेन गृहान्तर्वर्त्तिद्रव्यज्ञानं भवति तथास्मात् सर्वतोभद्रचक्रात् सर्वविषयकज्ञानमुत्पद्यते॥

चक्रं शतपदं वक्ष्ये ऋक्षांशाक्षरसम्भवम्। नामादिवर्णतो ज्ञेया ऋक्षराश्यंशकास्तथा। तिर्य्यगूर्द्धगता रेखा रुद्रसङ्ख्या लिखेद्बुधः। जायते कोष्ठकानान्तु शतमेकं न संशयः। विन्यस्यावकहडादीनि रुद्रादिविदिशि क्रमात्। पञ्च पञ्च क्रमेणैव शुद्धवर्णान् नियोजयेत्। पञ्चस्वरसमायोगादेकैकं पञ्चधा कुरु।

कुर्य्यात् कुपुभुदुस्थाने त्रीणि त्रीण्यक्षराणि च। कुघङक्षा भवेत् स्तम्भे रौद्रे त्वीशानयोगके। पुषणठो भवेत् स्तम्भे हस्ते आग्नेयसंज्ञिते। भवेद्भुधफढाः स्तम्भे पूर्वाषाढ़े च नैरृते। दथझञा भवेत् स्तम्भे वायव्ये भाद्र उत्तरे। एवं स्तम्भचतुष्कञ्च ज्ञातव्यं स्वरवेदिभिः। धिष्ण्यानि कृत्तिकादीनि प्रत्येकं चतुरक्षरैः। साभिजित्यंशकस्तत्र शतैकं द्वादशाधिकम्। यद्दृक्षांशककोष्ठस्थः क्रूरः सौम्योऽपि वा ग्रहः। सौम्यवेधे शुभं ज्ञेयमशुभं क्रूरखेचरैः। मिश्रैर्मिश्रफलं तत्र निर्वेधेन शुभाशुभम्। यदुक्तं सर्वतोभद्रे ग्रहोपग्रहवेधतः। शुभाशुफलं सर्वं तदिहापि विचिन्तयेत्॥

अस्यार्थः। शतपदं कोष्ठचक्रं वक्ष्ये किम्भूतं ऋक्षांशाक्षरसम्भवम्। ऋक्षस्य नक्षत्रस्य येऽंशाः पादरूपास्तेषां यान्यक्षराणि वक्ष्यमाणानि तैः सम्भवो यस्य तत्। तत्तदक्षरघटितमित्यर्थः। नामादिवर्णेन नक्षत्रसम्बन्धांशो ज्ञेयः। चक्रन्यासमाह तिर्य्यगित्यादि। रुद्रसंख्या एकादशसंख्याः। रेखास्तिर्य्यगूर्द्ध्वगताः पूर्वपश्चिमक्रमेणैकादश दक्षिणोत्तरक्रमेणाप्येकादश लिखेत्। ईशाणकोणमारभ्य पूर्वपंक्तौ प्रथमकोष्ठपञ्चकेषु अवकहडेति वर्णपञ्चकं शुद्धमकारस्वरमात्रयुक्तं नियोजयेत् लिखेत्। एवमाग्नेयकोणाद्यारभ्य दक्षिणपश्चिमोत्तरपंक्तिषु कोष्ठपञ्चकेषु मटपरतेति लयभजखेति गशदचलेति वर्णपञ्चकं क्रमेण लिखेत्। अइउएओ इति पञ्चस्वरयोगेन लिखितवर्णः पञ्चधातुः। अइउएओ वविवुवेवो इति क्रमेणाधोऽधो लिखेदिति तात्पर्य्यार्थः। लिखितमध्ये कुपुभुदुस्थाने अन्यानि त्रीणि त्रीण्यक्षराणि कुर्य्याल्लिखेदित्यर्थः। ईशानकोणावस्थितस्तम्भे आर्द्रानक्षत्रे कुघङछ इति वर्णचतुष्कम् एवमग्निकोणे हस्तानक्षत्रे पुषणठेति वर्णचतुष्कं

नैर्ऋतकोणस्तम्भे पूर्वाषाढ़ानक्षत्रे भुधफढेति वर्णचतुष्कं वायुकोणस्तम्भे उत्तरभाद्रपदनक्षत्रे ह्रथभञेति वर्णचतुष्कम्। एवं प्रत्येकं वर्णचतुष्टयं मात्रादिचतुष्टये व्यवस्थापकस्वरवेदिभिः स्तम्भचतुष्टयं ज्ञातव्यम्। धिष्ण्यानीत्यादि। न्यस्ताक्षरेष्वकार-मारभ्य चतुर्भिश्चतुर्भिरक्षरैः साभिजित्सहितानि कृत्तिकादीन्य-ष्टाविंशतिनक्षत्राणि भवन्ति। तत्र प्रतिनक्षत्रं चत्वारश्चत्वारो-ऽंशा द्वादशाधिकशतसङ्ख्या भवन्ति। एतेन अइउए कृत्तिका। ओववीवु रोहिणी। वेवोककि मृगशिराः। कुघङछ आर्द्रा। केकोहहि पुनर्वसुः। हुहेहोड पुष्या। डिडुडेडो अश्लेषा। ममि-मुमे मघा। मोटटिटु पूर्वफल्गुनी। टेटोपपि उत्तरफल्गुनी। पुषणठ हस्ता। पेपोववि चित्रा। ववेवोत स्वाती। तितुतेतो विशाखा। ललिलुले अनुराधा। नोययियु ज्येष्ठा। येयोभभि मूला। भुधफढ पूर्वाषाढ़ा। भेभोजजि उत्तराषाढ़ा। जुजेजोथ अभिजित्। खिखुखेखो श्रवणा। गगिगेगो धनिष्ठा। शोशशिशु शतभिषा। शेशोददि पूर्वभाद्रपदम्। ह्रखभञ उत्तरभाद्रप-दम्। देदोचचि रेवती। चुचेचोल अश्विनी। लिलुलेलो भरणी। इत्यष्टाविंशतिनक्षत्राणि॥

प्रयोजनमुपदर्शयति यद्दक्षांशक इत्यादि। क्रूरः सौम्यो वा ग्रहः यस्मिन्नक्षत्रे स्थितस्तस्मात् पुनस्तिर्य्यक्क्रमेण पुंसः पुरुषस्य नामाद्यक्षरं वेधयेत्। यदीति योजनीयम्। वेध-फलमाह सौम्यवेध इत्यादि। शुभवेधे शुभं पापवेधे त्वशुभ-मिति। मिश्रैः शुभपापैर्वेधे मिश्रं शुभाशुभम्। वेधशून्येन किमपीति। सर्वतोभद्रचक्रे ग्रहतो ग्रहवेधतो यत् फलमुक्तं तदत्रापि। पेपोववीति चित्रानक्षत्रं तेन रामतोषणनाम्न-श्चित्रानक्षत्रं तृतीयपादाश्रिततुलाराशिरेवमन्यनाम्नोऽपि नक्षत्रं यम्। प्रश्ने च्चे तु प्रष्टारं दृष्ट्वा ॐ मनश्चिन्तितवस्तूनां प्रष्टु-

रास्येन भाषिणीम्। तां वर्णरूपिणीं वन्दे भारतीं भक्तवत्सलाम्। इत्यनेन सरस्वतीं नत्वा मनसा शतधा वाग्भवं स्वीयेष्टमन्त्रं वा जप्त्वा किमर्थमत्रागतस्त्वं कथयेत्यादि पृच्छेत्। ततः प्रष्टा प्रथमं यद्वदिष्यति तस्याद्यक्षरेण लग्ननवांशकं ज्ञात्वा ग्रह-वेधवशेन ग्रहदृष्टिवशेन च धातुमूलजीवादिकं वर्णाका-रादिकं तच्छुभाशुभञ्च वाच्यमिति॥

त्रयोदशोर्द्ध्वगा रेखास्तिर्य्यग्रेखास्तथा दश। भवेयुः कोष्ठकास्तत्र संख्यायाश्चोत्तरं शतम्। कवर्गं नवधालिख्य कोष्ठके प्रथमेऽष्टमे। द्वितीये सप्तमे चाद्या नटाभ्यां तस्य त्रिषष्ठके। यशौ वर्गौ चतुर्थे च तथा वर्गञ्च पञ्चमे। नवद्वादशके ताद्यान् शेषे पाद्यान् द्विकोष्ठके। चतुरक्षरसंयोगि अश्विन्यादिक्रमेण च। ज्ञेया नवांशका वर्णा मेषादौ राशिमण्डले। भौमं शुक्रं बुधं चन्द्रं भानुं सौम्यं सितं कुजम्। गुरुं सौरिं शनिं जीवं विदध्यात् कोष्ठकोपरि। कोष्ठकाक्षरतो ज्ञेयश्चन्द्रस्तत्कालसम्भवः। तदधीनं फलं सर्वं लाभालाभं जयाजयम्। इष्टनाड्या हता-धिष्ण्यैः षष्टिभागाप्तशेषकैः। अश्विन्यादीन्दुभुक्तेन योगात्तत्-कालचन्द्रमाः। क्रूरक्षेत्राक्षरे चन्द्रे न शुभं सर्वकर्मसु। शुभ-क्षेत्रे शुभन्त्वेवं प्रस्तारे चन्द्रनिर्णयः। च तु ४ स्त्रि ३ मुनयः ७ सूर्य्याः १२ सप्त ७ नन्द ९ गुणै ३ षवः ५। मासाः १२ शैलाः ७ इना १२ स्तुल्या २४ राशीनाञ्च ध्रुवा इमे॥ गुणाः ३ शैला ७ युगाः ४ पञ्च सप्त पञ्च ५ त्रयो ३ युगाः ४। नागा ८ वाणा ५ रसा ६ भूता ५ मासादेरंशका ध्रुवाः। अंशकेनांशकं गुण्यं ध्रुवयुक्तकृतं पुनः। स्वगुणै गुणयेत् पश्चात् मूलाङ्के भाज-येत् सुधीः। षष्टि ६० र्वाणा ५ रविः १२ पक्षौ २ वह्नि ३ र्नेत्रं २ रवि १२ स्तथा। चन्द्रभूसुतशुक्राणां गुरुज्ञरविसौरिणाम्।

नाड़ीफलौ यशौ वर्गौ वर्गौ दिनफलोदयः। कः पञ्चेण च मासेन टतपा त्वयनाब्दकैः। प्रश्नकाले विवाहे च घाते जन्मनि सङ्करे। शशाङ्कस्य फलं श्रेष्ठं सर्वशास्त्रे प्रकाशितम्॥ इति प्रस्तारचक्रम्॥

अस्यार्थः प्रक्रिया सङ्केतश्चोच्यते। त्रयोदश इत्यादि। एतेन ऊर्द्धाधःक्रमेण नव कोष्ठानि द्वादशस्थानेषु भवन्ति। तत्र वर्णक्षेमविन्यासः। नवांशक्रमेण द्वादशसु नव नव पादिका भवन्ति इति दर्शयन्नाह कवर्गमित्यादि। कवर्गप्रथमे मेषे अष्टमे वृश्चिके ऊर्द्धाधःक्रमेण नवकोष्ठकेन नवधा नवप्रकारेण क ख ग घ ङ क ख ग घ एवं विलिख्य तथैव द्वितीये वृषरूपे सप्तमे तुलारूपे चाद्यान् चकारादीन् वर्गवर्णान् लिखेत्। त्रिषष्ठके मिथुनकन्यास्वरूपे टाद्यान् टकारादीन् वर्णान् विलिख्य चतुर्थे कर्कटरूपे यशवर्गौ तथैवावर्गं अ इ उ ए ऐ ओ औ अं अः स्वरूपं पञ्चमे सिंहस्वरूपे नवद्वादशे धनुर्मीनस्वरूपे ताद्यान् तवर्गवर्णान् शेषे द्विकोष्ठके मकरकुम्भस्वरूपाद्यान् पवर्गवर्णान् लिखेत्। चतुरक्षरेति। क ख ग घ एवं क्रमेण मेलनादश्विन्यादिसप्तविंशतिनक्षत्राणि भवन्ति। तत्र नवभिर्नवभिरक्षरैर्नवांशैः पादिकारूपैर्द्वादश राशयस्तदंशा व्यवस्थिता इति॥ भौममिति॥ विदध्याल्लिखेत्। तत्कालसम्भव एव नक्षत्रमाने सप्तविंशतिनक्षत्राणामन्यतमभोगभागस्थश्चन्द्रः कोष्ठाक्षरतत्तत्पादिकारूपनवांशस्थो ज्ञेयः। इष्टनाड्य इति॥ इष्टदण्डाः सप्तविंशतिभिः पूरिताः पुनः षष्ट्या हरणेन लब्धमेकनक्षत्रं पञ्चदशाद्यन्तरपलावशेषे नक्षत्रस्य प्रथमप्रथमपादिका तदुपरि त्रिंशांशदण्डाभ्यन्तरे द्वितीयपादिका तदुपरि पञ्चचत्वारिंशत्पलाभ्यन्तरे तृतीयपादिका तदुपरि षष्ट्यभ्यन्तरे चतुर्थपादिके तु तत्तदवशेषे तत्र तत्र तात्कालिकश्चन्द्रः स्थाप्यः। एतेनैतदायातं षष्ट्याप्तं यस्त-

भुक्तनक्षत्रं यच्छेषं तद्भुज्यमानमिति तत्र चन्द्रभुक्तनक्षत्राङ्क-योगेन यदि सप्तविंशत्यधिकं भवति तदा सप्तविंशतिमपास्य तात्कालिकश्चन्द्रः स्थाप्य इति सत्युदयं गन्तव्यमिति॥

तात्कालिकीकरणप्रकारमुपदर्शयति। इष्टनाड्यो नक्षत्रभुक्तदण्डा धिष्ण्यैः सप्तविंशत्या हताः कर्त्तव्याः। तत्र षष्टिभागात्मशेषिके अधिकरणे षष्ट्या हरणादग्रे भुक्तनक्षत्रसंख्याङ्के शेषे च भुज्यमाननक्षत्रशरीरे उपर्य्यधःक्रमेण कृते प्रकृतक्रमेणाश्वीत्यादौन्दुभुक्तेन नक्षत्राङ्केन युक्तो यदि सप्तविंशतिमपास्याव-शिष्टं भुक्तनक्षत्रं शेषञ्च तदप्रमाणनक्षत्रभागश्चन्द्रभुज्यमान एवं तत्कालचन्द्रो भवति। नक्षत्रभोगसमयस्तु त्रयोदशपलाधिकद-ण्डद्वयाधिक इत्यर्थः। अपवादस्तु पले षष्टिन्यूनाधिकनक्षत्रमाने सति भवति। तत्फलान्युपदर्शयति क्रूरक्षेत्राक्षरमिति॥ चन्द्रे क्रूरक्षेत्राक्षरे पापग्रहराश्यक्षरस्थे सर्व्वकर्मसु न शुभम्। शुभ-क्षेत्रे शुभग्रहराशिनक्षत्रे चन्द्रे स्थिते सति शुभं कालमिति। प्रस्तारे चक्रे चन्द्रनिर्णयः कथितः। कथितफलं कदा स्यादि-त्यादिशङ्कायामाह॥ नाड़ीफलाविति॥ यशौ यवर्गशवर्गौ नाड़ीफलौ दिनाभ्यन्तरफलदौ तत्र चन्द्रे णैकपादिकालङ्घने त्रयस्त्रिंशत्पलानि तदुपरि कार्य्यसिद्धिरेवं प्रतिपादमवधिक-पादलङ्घने तत्पादपवमानं वर्त्तुलीकृत्य दण्डरूपः समयो वक्तव्यः। स च राशिशेषे पलत्रयन्यूनाः पञ्च दण्डाः परं भवन्ति। अवर्गौ दिनफलोदय एकदिनेन कथितफलदाता कः कवर्गः पक्षे। चवर्गो मासे। टः टवर्ग ऋतून् प्रति। तपौ तवर्गपवर्गौ अयनाब्दयोः। षण्मासे तवर्गः अब्दे पवर्गः फलदातरीति। प्रश्नकाल इति। एतेषु कार्य्येषु शशाङ्कस्थानेन प्रकारेण सर्व्वशास्त्रेषु गोपितेषु न प्रकटीकृतप्रश्नकाले विवाहे कृत्यादौ तत्कालचन्द्रात् शुभाशुभं चिन्त्यम्॥ इति प्रस्तारचक्रम्॥

जयति निखिलमान्यः प्राणकृष्णः शरण्यः सुकृतविततकीर्त्युल्लसर्गगण्यो वरेण्यः। लिपिकृतनवकीर्त्याख्येय एकोऽतिपुण्यो निरसितगुणिदैन्यो गौड़भूमध्यधन्यः॥ श्रीरामतोषणलिपिप्रतिरूढ़शाखं व्याकोषपुष्पसुरभीकृतदिग्विभागम्। सर्व्वैकलभ्यमतिकर्मठगम्यभावं श्रीप्राणकृष्णहृदये मुदमातनोतु॥

इति श्रीप्राणकृष्णविश्वासानुमतायां श्रीरामतोषणविद्यालङ्कारभट्टाचार्य्यविरचितायां श्रीप्राणतोषिण्यां पञ्चपुष्पस्तवकान्वितं षष्ठं ज्ञानकाण्डं समाप्तम्॥

महाकालोल्लासप्रथितरतियुद्धप्रणयिनी गलद्देणीबन्धा गगनवसना खिन्नवदना। नवाम्भोदस्निग्धा शवविहितरक्तेचरणयुता हृदि ध्वान्तागारे तड़िदिव सदा सा स्फुरतु मे॥ निर्गुणाख्यस्य काण्डस्य सप्तमस्य विधीयते। निर्घण्टः प्रथमस्तत्र पशुभावादिनिर्णयः। भावत्रयफलं पूर्वाह्लादौ भावत्रयं ततः। पशुभावे सिद्धिवीजं दिव्यवीरप्रशंसनम्। पश्वादिलक्षणं तेषां कृत्याकृत्यविनिर्णयः। भावत्रयस्योत्तमत्वादिनिर्णीतिस्ततः परम्। आरम्भादिप्रभेदेन भावत्रयनिरूपणम्। भावनिरूपणं ब्रह्मचर्य्यनिरूपणं ततः। ताम्रस्य धारणफलमङ्गभेदादनेकधा। आश्रमत्रयमात्रन्तु कलौ ज्ञेयं मनीषिभिः। गृहस्थकृत्यमातिथ्यं पित्रार्च्चा दारलक्षणम्। परस्त्रीवर्जनं पुत्रकन्यादिलालनादि च। कृत्याकृत्ये गृहस्थस्यान्यद्विज्ञेयं यथास्थलम्। भिक्षुकाश्रमकृत्यादि कलौ तत्प्रतिषेधनम्। दशावधूतनामानि ततोऽवधूतनिर्णयः। तत्कृत्यं लक्षणं तेषां प्रशंसा च ततः परम्। ओँ तत्सदिति निर्द्देशफलं तस्य प्रशंसनम्। आचारभेदकथनमिति च्छेदोऽग्रिमः स्मृतः। पूर्णाभिषेकस्तस्यापि प्रयोगस्तदनन्तरम्। अभिषेकान्तरं वीरप्रशंसा वीरकृत्यकम्। वैधेतरसुरापाणनिषिद्धं शास्त्रसम्मतम्। द्रव्याभावे चानुकल्पविधानं तदन-

न्तरम् । असंस्कृतसुरापाणनिन्दा विप्राधिकारिता । तत्र तत्फलसंयुक्ता शापमुक्तिफलं ततः । रसासक्तौ जपफलं मानसो भाव एव च । धर्मः पञ्चमकारस्य निर्णयस्तदनन्तरम् । फलं पञ्चमकाराणां तैर्विनार्च्चननिन्दनम् । वैष्णवानां पञ्चतत्त्वं पञ्चतत्त्वस्य शोधनम् । स्वयम्भूकुसुमादीनां निरूपणमतः परम् । तदुत्पत्तिप्रकारश्च तेषां शोधनमेव च । कारणानां मन्त्रादिश्च पात्राणां स्थापनक्रमः । तर्पणस्य क्रमश्चैव मन्त्रमुद्रानिरूपणम् । तर्पणस्थाननिर्णीति भावभेदक्रमेण तु । तत्त्वशुद्धिरिति च्छेदद्वितीयस्य समापनम् ॥ वीरपूजा तु तत्रादौ द्वाविंशत्यक्षरो मनुः । ऋष्यादिन्यसनं ध्यानं पीठपूजादिरेव च । ततो महाकालपूजा परनिन्दा ततः परम् । जपार्च्चन फलप्राप्ति वीजञ्च सिद्धिकारणम् । ब्राह्मणादिविभेदेन पुरश्चर्य्याविधिस्ततः । मालासिद्धिक्रमादिश्च ततः कूलवटीक्रमः । अन्यान्यपि साधनानि प्रयोगत्रयं ततः परम् । सिद्धिर्न जायते चेत्तत्रोपायान्तरमेव च । दक्षिणादिसाधनञ्च द्वितीयायजनक्रमः । महामन्त्रप्रशंसा च मन्त्रशुद्धग्रादिरेव च । द्वितीयानामशतकं वीरहोमस्ततः परम् । द्रव्यदानफलञ्चैव सुराभेदफलं ततः । महाशङ्खप्रकरणमशोकादिनतिस्ततः । पर्व्वतादौ करणीयं नतिमन्त्रस्ततः परम् । श्मशानादिक्रियानिन्दा तेषामकरणे ततः । रसास्वादश्च वीराणां तत्फलं तदनन्तरम् । षट्कर्मसाधनञ्चैव वीराणां तदनन्तरम् । तृतीयपरिच्छेदस्य समापनमिदं स्मृतम् । कुलाचारः कुलीनस्य लक्षणं तदनन्तरम् । कुलाचारो द्विधा कौलकर्त्तव्यं तदनन्तरम् । कौलनिन्दानिषेधश्च गृहावधूतनिर्णयः । रात्रिकृत्यं कुलाचारः कौलप्रशंसनं ततः । अन्तर्यागप्रकरणं स्नानहोमविधिस्ततः । श्रीचक्रस्य

क्रमो लोभपाननिन्दा ततः परम्। अङ्गानि पाननिन्दादिपूजके लक्षणादि च। आवश्यकं पञ्चशुद्धेर्मण्डलस्य च लक्षणम्। तर्पणे यन्निषिद्धञ्च विहितञ्च ततः परम्। द्रव्यशुद्धग्रादि च ततो गुरुपंक्तिक्रमस्ततः। कुलाचारक्रमस्यैव कुपात्रादिनिषेधनम्। अस्नातादेः कुलद्रव्यनिषेधस्तदनन्तरम्। उच्छिष्टस्पर्शनस्यैव प्रतिषेधस्ततः परम्। द्रव्यभाण्डोद्गारदोषचक्रविघ्नः सशान्तिकः। प्रौढ़ोल्लासे ज्ञानिमत्तज्ञानचिह्नान्यतः परम्। चक्रे च परिहासादिवर्ज्जनं पात्रगोपनम्। पशुसङ्गेन कृत्यं यद् वाग्वादादिविवर्ज्जनम्। पशुशास्त्रवर्ज्जनञ्चाश्रद्दधानस्य निन्दनम्। अकामो गुरुशक्त्यादावर्च्चनं देवताधिया। बलात्कारनिषेधश्चाममांसाद्यभिवन्दनम्। कुलशास्त्रादिनिन्दायाः प्रतिषेधस्ततः परम्। आनन्दरूपकथनमतिपानादिनिन्दनम्। सुखार्थपानदोषश्चानुकल्पस्तदनन्तरम्। धुस्तूरादिनिषेधश्च सर्वानुकल्प एव च। पारम्पर्य्यं विना पञ्चतत्त्वसेवनगर्हणम्। महापापं पशूनान्तु पञ्चतत्त्वनिषेवणे। चक्रानुष्ठाननिर्णीतिस्ततश्च पात्रवन्दनम्। पात्रमानञ्च चक्रे शक्त्युच्छिष्टविचारणम्। शान्तिस्तोत्रं ततश्चक्रसमाप्तिक्रमनिर्णयः। आनन्दस्तोत्रकथनमानन्दोल्लासनिर्णयः। इति च्छेदचतुर्थस्य समाप्तिरभिधीयते॥ चक्रपञ्चककर्त्तव्यानुष्ठानञ्चक्रनाम च। चक्राधिकारी श्रीराजचक्रशक्त्यादिनिर्णयः। महाचक्रशक्तिसुधाशुद्ध्यादिनिर्णयस्ततः। देवचक्रस्य शक्त्यादिनिर्णयस्तदनन्तरम्। वीरचक्रे तथा शक्त्यादिनिर्णीतिस्ततः परम्। मात्रादिनिर्णयः सङ्केतान्नवीरविवर्जनम्। पशुचक्रस्य शक्त्यादिनिर्णीतिस्तदनन्तरम्। कुलशक्तिः स्वीयशक्तिपूजनं प्रथमं ततः। परशक्त्यर्च्चनं सिद्धमन्त्रिणामेव केवलम्। शक्तिसाधनकर्मापि शक्त्याद्यङ्गपीठनिर्णयः। तत्र तत्र जपफलं

नानाशक्तिफलं ततः। शक्तेः पूजा च शीर्षादौ जपनिर्णय एव च। लिङ्गमन्त्रजपादिश्च होमः पूर्णाहुतिस्ततः। चक्रे च कामनासिद्धिकथनं तदनन्तरम्। लतासाधनमन्यच्च शय्याशुद्धिस्ततः परम्। नवशक्तिविनिर्देशः कापालिक्यादिलक्षणम्। वेश्याविशेषनिर्देशो विपरीतजपे फलम्। वयःक्रमेण सा शक्तिः काल्यादिनामधारिणी। श्यामादिविद्यासिद्धिश्च शक्तिविशेषयोगतः। तत्प्रयोगश्चैव योनेर्ध्यानं स्तोत्रं ततः परम्। कवचं योनियोगे च जपस्य फलनिर्णयः। नवपुष्पविनिर्णीतिः शक्तिप्राशस्त्यनिश्चयः। शक्त्यर्पितफलञ्चैव शक्त्यङ्गे देवतास्थितिः। अन्यल्लतासाधनञ्चार्च्चनेऽन्यदारसङ्गमः। स्त्रीदेहे सर्वतीर्थानि योनिपूजाविधिस्ततः। योनिपूजाविधा योनिक्षरणादिफलं ततः। आवाहनादिरहितं योनिपूजनमेव च। शक्तिपादोदकादेश्च पानादिजफलं ततः। भगतत्त्वकुन्तलयोर्माहात्म्यं तदनन्तरम्। बन्धाश्चेति परिच्छेदपञ्चमस्य समापनम्। ज्ञेयमन्यद् यथास्थानं धीमद्भिर्ग्रन्थमध्यतः॥ भावसारमतियत्नचिन्तने रामतोषणविनिर्मितं बुध!। पश्य काण्डमिदमेव निर्गुणं मोक्तुमिच्छसि भवार्णवाद्यदि॥

अथ भावनिर्णयः॥ रुद्रयामले उत्तरखण्डे अष्टपटले॥ पशुभावस्थितां नाथ! देवतां शृणु विस्तरात्। दुर्गापूजां विष्णुपूजां शिवपूजाञ्च नित्यशः। अवश्यं हि यः करोति स पशूत्तमः स्मृतः। केवलं शिवपूजाञ्च यः करोति च साधकः। पशूनां मध्यतः श्रीमान् शिवया सह चोत्तमः। केवलं वैष्णवो धीरः पशूनां मध्यमः स्मृतः। भूतानां देवतानाञ्च सेवां कुर्वन्ति सर्वदा। पशूनां मध्यमाः प्रोक्ता नरकस्था न संशयः। त्वत्सेवां मम सेवाञ्च ब्रह्मविष्ण्वादिसेवनम्।

कृत्वान्यसर्वभूतानां नायिकानां महाप्रभो!। यक्षिणीनां भूतिनीनां ततः सेवां शुभप्रदाम्। यः पशुर्ब्रह्मकृष्णादिसेवाञ्च कुरुते सदा। तथा श्रीतारकब्रह्मसेवां ये वा नरोत्तमाः। तेषामसाध्या भूतादिदेवता सर्वकामहा। वर्ज्जयेत् पशुमार्गेण विष्णुपूजापरो जनः। द्वितीयपटले॥ नित्यं श्राद्धं तथा सन्ध्यावन्दनं पितृतर्पणम्। देवतादर्शनं पीठदर्शनं तीर्थदर्शनम्। गुरोराज्ञापालनञ्च देवतानित्यपूजनम्। पशुभावस्थितो मर्त्त्यो महासिद्धिं लभेद्ध्रुवम्॥ षष्ठपटले॥ पुनर्भावं पशोरेव शृणु सादरपूर्वकम्। अकस्मात् सिद्धिमाप्नोति पशुर्नारायणोपमः। वैकुण्ठनगरे याति चतुर्भुजकलेवरः। शङ्खचक्रगदापद्महस्तो गरुड़वाहनः। महाधर्मस्वरूपोऽसौ महाविद्याप्रसादतः। पशुभावं महाभावं भावानां सिद्धिदं परम्। आदौ भावं पशोः कृत्वा पश्चादावश्यकं चरेत्। वीरभावं महाभावं सर्वभावोत्तमोत्तमम्। तत्पश्चादतिसौन्दर्य्यं दिव्यभावं महाफलम्॥ इति भावाः॥

भावफलमपि तत्रैव॥ फलाकाङ्क्षी मोक्षगामी सर्वभूतहिते रतः। विद्याकाङ्क्षी धनाकाङ्क्षी रत्नाकाङ्क्षी च यो नरः। कुर्य्याद्भावत्रयं दिव्यं भावसाधनमुत्तमम्। भावेन लभते राज्यं धनं रत्नं महाफलम्। वाराणस्यां कोटिलिङ्गपूजनेन च यत् फलम्। तत् फलं लभते मर्त्त्यः क्षणादेव न संशयः॥ इति भावफलम्॥

भावविशेषफलमपि तत्रैव॥ आदौ दशमदण्डेन पशुभावमथापि वा। मध्याह्ने दशदण्डेन वीरभावमुदाहृतम्। सायाह्ने दशदण्डे तु दिव्यभावं शुभप्रदम्। अथवा पशुभावेन यजेदिष्टादिदेवताम्। जन्मावधि जपेन्मन्त्री महासिद्धिमवाप्नुयात्। पीठब्राह्मणमात्रेण महाषोढ़ाश्रमेण च। पशुभावस्थितो

मन्त्री सिद्धिमिकामवाप्नुयात्। यदि पूर्वपरस्थांश्च महाकौलिकदेवताम्। कुलमार्गस्थितो मन्त्री सिद्धिमाप्नोति निश्चितम्। यदि विद्याः प्रसीदन्ति वीरभावं तदा भवेत्। वीरभावप्रसादेन दिव्यभावमवाप्नुयात्। दिव्यभावं वीरभावं ये गृह्णन्ति नरोत्तमाः। वाञ्छाकल्पद्रुमलतापतयस्ते न संशयः। आश्रमी ध्याननिष्ठश्च मन्त्रतन्त्रविशारदः। भूत्वा श्रीमन्महापीठं साक्षान्मुक्तो भवेद् यतिः। किमन्येन फलेनापि यदि भावादिकं भवेत्। भावग्रहणमात्रेण मम ज्ञानी भवेन्नरः। वाक्यसिद्धिर्भवेत् क्षिप्रं वाणी हृदयगामिनी। नारायणं प्रविहाय लक्ष्मीस्तिष्ठति मन्दिरे। मम पूर्णोत्तमा दृष्टिस्तस्य देहे न संशयः। अवश्यं सिद्धिमाप्नोति सत्यं सत्यं सदाशिव!॥ तथा। भावस्तु त्रिविधो देव! दिव्यवीरपशुक्रमात्। गुरवश्च त्रिधा चात्र तथैव मन्त्रदेवता। दिव्यभावो महादेव! श्रेयान् स सर्वसिद्धिदः। द्वितीयो मध्यमः प्रोक्तस्तृतीयः सर्वनिन्दितः। बहुजापात्तथा होमात् कायक्लेशादिविस्तरैः। न भावेन महादेव! मन्त्रतन्त्राः फलप्रदाः॥ तथा। प्रथमं दिव्यभावन्तु कौलिके शृणु यत्नतः। सर्वदेवार्च्चितां विद्यां तेजःपुञ्जप्रपूरिताम्। तेजोमयीं जगत् सर्वां विभाव्य मूर्त्तिकल्पनाम्॥

एकादशपटले। त्रिविधं दिव्यभावञ्च वेदागमविवेकजम्। वेदार्थमधमं प्रोक्तं मध्यमञ्चागमोद्भवम्। उत्तमं सफलं प्रोक्तं विवेकोल्लाससम्भवम्। तत्रैव त्रिविधं भावं दिव्यवीरपशुक्रमम्। दिव्यवीरैकजं प्रोक्तं सर्वसिद्धिप्रदायकम्। उत्तमं तद्विजानीयादानन्दरससागरम्। मध्यमञ्चागमोल्लासं वीरभावं क्रियान्वितम्। वेदोद्भवं फलार्थञ्च पशुभावं हि चाधमम्। सर्वनिन्दासमाव्याप्तं भावानामधमं पशोः। उत्तमे उत्तमं ज्ञानं भावसिद्धिप्रदं नृणाम्। मध्यमे मधुमत्याश्च मत्कुलागमसम्भवम्।

श्चालम्त्यं हरणं भावानामतिदुर्लभम्। वीरभावं विना नाथ! न सिध्यति कदाचन। अधर्मे अधर्मं व्याख्यानिन्दार्थवाचकं सदा। यदा निन्दां न करोति तदा तत्फलमाप्नुयात्। पशुभावेऽपि सिद्धिः स्याद्यदि वेदं सदाभ्यसेत्। वेदार्थचिन्तनं नित्यं वेदपाठध्वनिप्रियम्। सर्वनिन्दाविरहितं हिंसालस्यविवर्जितम्। लोभमोहकामक्रोधमदमात्सर्य्य वर्जितम्। यदि भावस्थितो मन्त्री पशुभावोऽपि सिद्धिभाक्। पशुभावं महाभावं ये जानन्ति महीतले। किमसाध्यं महादेव! अमाभ्यासेन यान्ति तत्। अमाधीनं जगत् सर्वं अमाधीनाश्च देवताः। अमाधीनं जगत् सर्वं अमाधीनं परं तपः। अमाधीनं कुलाचारं पशुभावोपलक्षणम्। वेदार्थज्ञानमात्रेण पशुभावं कुलप्रियम्। स्मृत्यागमपुराणाणि वेदार्थविहितानि च।

भावाश्रमप्रकारमाह तत्रैव॥ अभ्यस्य सर्वशास्त्राणि तत्त्वं ज्ञात्वा तु बुद्धिमान्। पललानीव धान्यार्थी सर्वशास्त्राणि सन्त्यजेत्। ज्ञानी भूत्वा भावसारमाश्रयेत् साधकोत्तमः। वेदे वेदक्रिया कार्य्या मदुक्तवचनाद्यतः। पशूनां अमदाह्वानामिति लक्षणमीरितम्। आगमार्थक्रिया कार्य्या सदा मत्कुलचेष्टया। वीराणामुद्धतानाञ्च मच्छरीरानुगामिनाम्। मच्चेष्टाकुलतत्त्वानामिति लक्षणमीरितम्। विवेकसूत्रसंज्ञानां क्रियासु दृढ़चेतसाम्। सर्वत्र समभावानां भावमात्रं हि साधनम्। सर्वत्र मत्पदाम्भोजसम्भवं हि चराचरम्। दृष्ट्वा यत् कुरुते कर्म्म चातुलं फलसिद्धिदम्। अखण्डज्ञानचित्तानामिति भावं विवेकिनाम्। निर्म्मलानन्ददिव्यानामिति लक्षणमीरितम्। दिव्यन्तु त्रिविधं भावं यो जानाति महीतले। न नश्यति महावीरः कदाचित् साधकोत्तमः। क्रमेण दिव्यभावादीनाश्रित्य साधयेद् यदि। दिव्यभावे महा-

सिद्धिं प्राप्नोति साधकोत्तमः। दिव्यभावं विना नाथ! मत्-पदाम्भोजदर्शनम्। य इच्छति महादेव! स मूढ़ः साधकः कथम्। पशुभावं हि प्रथमे द्वितीये वीरभावकम्। तृतीये दिव्यभावश्च इति भावत्रयं क्रमात्। तत्प्रकारं शृणु शिव! त्रैलोक्यपरिपालन!। भावत्रयविशेषज्ञः षड़ाधारस्य भेदिनः। पञ्चतत्त्वार्थभावज्ञो दिव्याचाररतः सदा। स एव भवति श्रीमान् साध्यानामादिपारगः। शिववद्विहरेल्लोके अष्टैश्वर्य्य-समन्वितः। सर्व्वत्र शुचिभावेन आनन्दघनसाधनम्। जापनं धारणं वापि चित्तमायाति यत्नतः। एकान्ते निर्जने देशे सिद्धो भवति निश्चितम्। तत्कालं वीजभावार्थं भावमात्रं हि साध-नम्। भावेन लभ्यते सिद्धिर्नीरादन्यत्र कुत्रचित्। रात्रौ सन्ध्यादि सम्पूज्य ताम्बूलपूरिताननः। विजयानन्दसम्पूर्णो जीवात्मपरमात्मनोः। ऐक्यं चित्ते समादाय आनन्दोद्रेकस-म्भ्रमः। यो जपेत् सकलां रात्रिं गतभीर्निर्जने गृहे। स भवेत् कालिकादासो दिव्यानामुत्तमोत्तमः। एवं भावत्रयं ज्ञात्वा यः कर्म्म साधयेत्ततः। अष्टैश्वर्य्ययुतो भूत्वा सर्व्वज्ञो भवति ध्रुवम्॥

कुब्जिकातन्त्रे सप्तमपटले च। भावस्य त्रिविधो देवि! दिव्यवीरपशुक्रमात्। विश्वञ्च देवतारूपं भावयेत् सुरसुन्दरि!। स्त्रीमयञ्च जगत् सर्व्वं पुरुषं शिवरूपिणम्। अभेदे चिन्तयेद् यस्तु स एव देवतात्मकः। देवतात्मको देवतास्वभाव इत्यर्थः। सर्व्वत्राभेदचिन्तनेन शिवशक्तिमयत्वमखिलस्येत्यायातञ्चेत्तदा स्नानादिकं न कर्त्तव्यमिति शङ्कानिरासायोक्तं तत्रैव यथा। नित्यस्नानं नित्यदानं त्रिसन्ध्यञ्च जपार्च्चनम् निर्म्मलं वसनं देवि! परिधानं समाचरेत्। वेदशास्त्रे दृढ़ज्ञानं गुरौ देवे तथैव च। मन्त्रे चैव दृढ़ज्ञानं पितृदेवार्च्चनं तथा। बलिवस्त्रं तथा श्राद्धं नित्यकार्य्यं शुचिस्मिते!। शत्रुं मित्रसमं देवि!

चिन्तयेत्तु महेश्वरि!। अन्नञ्चैव महेशानि! सर्वेषां परिवर्जयेत्। गुरोरन्नं महेशानि! भोक्तव्यं सर्वसिद्धये। कदर्य्यञ्च महेशानि! निष्ठुरं परिवर्जयेत्। देवतानिन्दकं दृष्ट्वा नालापञ्च समाचरेत्। सत्यञ्च कथयेद्देवि! न मिथ्या च कदाचन। केवलं दिव्यभावेन पूजयेत् परमेश्वरीम्। गुरोराराधनं देवि! प्रत्यहं चिन्तयेत् सुधीः। सर्वञ्च देवतारूपं परमेष्ठिस्वरूपकम्। एकाग्रमे स्थितो नित्यं त्रिसन्ध्यं पूजयेद्गुरुम्। गुरुतुल्यं महेशानि! नमस्कुर्य्याद्वरानने!। स्त्रीणां पादतलं दृष्ट्वा गुरुवद्भावयेत् सदा। श्रीखण्डपङ्कं रुधिरं भूषितं सुमनोहरम्। शरीरं कारयेद्देवि! गन्धर्वदेवसुत्तमम्। त्रिपुण्ड्रं भस्मना वापि रक्तचन्दनकेन वा। रुद्राक्षभूषणं देवि! सर्वाङ्गे च महेश्वरि!। केवलं भैरवो भूत्वा यजेद्देवीं सनातनीम्। प्रत्यहञ्च बलिं दद्याद् देवताभावसिद्धये। समयाञ्च गृहीत्वा तु पूजादौ च महेश्वरि!। निशीथे पूजनञ्चैव कर्त्तव्यञ्च महेश्वरि!। कुलवृक्षं तथा दृष्ट्वा कर्त्तव्यञ्च वरानने। प्रणामं वन्दनञ्चैव प्रत्यहञ्च महेश्वरि!। रात्रौ चैव यजेद्देवीं न दिवापि कदाचन। रात्रौ ताम्बूलपूरास्यो जपेन्मन्त्रं महेश्वरि!। सर्वञ्चैव महादेवि! परदेव्यै समर्पयेत्॥ पशुभावकर्त्तव्याकर्त्तव्यगर्भतद्भावनिन्दामाह तत्रैव॥ पशुभावरता ये च केवलं पशुरूपिणः। रात्रौ यन्त्रञ्च मन्त्रञ्च न स्पृशेन्न जपेत् क्वचित्। संशयो बलिदाने च तन्त्रे च संशयः सदा। मन्त्रे चाक्षरबुद्धिश्च अविश्वासो गुरौ सदा। प्रतिमासु शिलाबुद्धिर्भेदको दैवते पुनः। निरामिषेण देवेशि! देवतायाः प्रपूजनम्। अज्ञानेन सदा स्नानं प्रत्यहं देवताड़नम्। सर्वेषाञ्चैव निन्दात्तु यः कुर्य्याच्च महेश्वरि!। स एव पशुभावेन अधमः परिकीर्त्तितः॥ नित्यातन्त्रे प्रथमपटलेऽपि॥ रात्रौ नैव यजेद्देवीं सन्ध्यायां वापराह्णके। ऋतुकालं विना

देवि ! रमणं परिवर्जयेत्। मांसादिकं महेशानि ! त्यजेत् पञ्चसु पर्वसु। यदन्यद्वेदविहितं कुर्य्यान्नियमतत्परः॥ इति पशुभावनिन्दा॥

दिव्यवीरयोरुत्तमत्वमपि तत्रैव॥ उत्तमो दिव्यभावश्च वीरभावश्च मध्यमः। अधमः पशुभावश्च देवि ! सत्यं न संशयः। पशुभावे स्थिता मन्त्राः केवलं वर्णरूपिणः। कर्त्तव्यञ्च महेशानि ! देवताभावबोधनम्। तस्मात् खलु प्रयत्नेन वीरभावेन साधयेत्। दृष्ट्वा कुलस्त्रियं देवि ! कुलवृक्षं विशेषतः। कुलगेहं तथा देवि ! नमस्कुर्य्याद्वरानने !। कुलस्त्रियं महेशानि ! तन्त्रमन्त्रविशारदाम्। दूतीं यागरताञ्चैव वेश्यां वा पुंश्चलीं तथा। वृद्धां वा युवतीं वापि नमस्कुर्य्याद्वरानने !॥

पिच्छिलातन्त्रे दशमपटले। दिव्यवीरौ महाभावावधमः पशुभावकः। वैष्णवः पशुभावेन पूजयेत् परमेश्वरम्। शक्तिमन्त्रे वरारोहे ! पशुभावो भयानकः। दिव्यैर्वीरैर्महेशानि ! जायते सिद्धिरुत्तमा। दिव्ये वीरे न भेदोऽस्ति भेदो वीरो महोद्धतः। दिव्यवीरौ प्रवक्ष्यामि सर्वभावोत्तमौ मतौ। विना शक्तिं न पूजास्ति मत्स्यमांसं विना प्रिये !। मुद्राञ्च मैथुनञ्चापि विना नैव प्रपूजयेत्। स्त्रीभगं पूजनाधारः स्वर्णरूप्यात्मकः कुशः। अभावे सर्वद्रव्याणामनुकल्पः कलौ युगे। अथवा परमेशानि ! मानसं सर्वमाचरेत्। स्नानन्तु मानसं प्रोक्तं वैदिको मानसः सदा। यत्र भुक्त्वा महापूजा मानसं भोजनन्तु तत्। स्वकीयां परकीयां वा मानसन्तु रमेत् स्त्रियम्। मानसं मद्यमांसादि स्वीकुर्य्यात् साधकोत्तमः। स्वयम्भूकुसुमं तद्वन्मानसं समुपाचरेत्। मानसं भगरोमादि मानसं भगपूजनम्। सर्वन्तु मानसं कुर्य्यात्तेन सिध्यति साधकः। न कलौ प्रकृताचारः संशयात्मनि नैव सः। मानसेनैव भावेन सर्वसिद्धिमुपालभेत्॥ निगमकल्पद्रुमे

द्वितीयपटले ॥ पशूनाञ्चैव वीराणां दिव्यानां परमेश्वर!। आरम्भश्च समाप्तिश्च तेषाञ्चैव पृथक् पृथक्। पशुभावसमाप्तिश्च वीरभावावरम्भकः। दिव्यावरम्भको वीरभावनाशक एव च। यथा बाल्यं यौवनञ्च वृद्धभावः क्रमात् प्रियम्। यथा पुष्पं फलञ्चैव वीजञ्चैव यथाक्रमम्। यथा दुग्धं नवनीतं घृतञ्चेति महेश्वर!। यथा सङ्कल्पकार्य्यञ्च दक्षिणा चेति भैरव!। तथा भावत्रयं ज्ञेयमारम्भारम्भजम्भकम्। अज्ञानप्रभवं सर्वं जगत् स्थावरजङ्गमम्। अज्ञानरज्जुभिर्बद्धः सृजामीह पुनः पुनः। अज्ञानञ्च क्रियामूलं यावत्तत्त्वं न विन्दति। तत्त्वे समुद्गते किञ्चित् क्रियायां नास्ति वासना। वासनारहितो यस्तु ह्यभिषेकः प्रपूर्वकः। तस्यापि कारणं कार्य्यं शृणु मद्वाक्यसम्भवम्। अतएव महेशानि! वीराणां कारणं पशुः। दिव्यानां वीरभावश्च तस्मात् किञ्चिन्न विद्यते। मद्वाक्यं त्यजतः कोऽपि यदि शुद्धिं न चाचरेत्। कार्य्यं न विद्यते तस्य यथेष्टकुलभागिनः॥ अतएव वामकेश्वरतन्त्रे एकपञ्चाशत्पटले॥ जन्ममात्रं पशुभावं वर्षषोड़शकावधि। ततश्च वीरभावस्तु यावत् पञ्चाशतो भवेत्। द्वितीयांशे वीरभावस्तृतीयो दिव्यभावकः। एवं भावत्रयेणैव भावमैक्यं भवेत् प्रिये!। ऐक्यज्ञानात् कुलाचारी येन देवमयो भवेत्। भावो हि मानसो धर्मो मनसैव सदाभ्यसेत्। आश्रमिणो भावग्रहणस्य प्रागुक्तत्वेनाश्रमज्ञानाकाङ्क्षायामाश्रमा निरूप्यन्ते। तत्रापि ब्रह्मचर्य्यस्य प्रथमोपस्थितत्वात् तदेवादौ निरूप्यते॥

निर्वाणतन्त्रे चतुर्दशपटले। यथा। ब्रह्मार्च्चनं प्रवक्ष्यामि शृणु देवि! समाहिता। यस्याचरणमात्रेण नरो नारायणो भवेत्। गैरिकं वसनं कुर्य्याद् देवताध्यानतत्परः। फलमूलाहाररतो दुग्धं गव्यं समाहरेत्। शाल्युद्भवं न गृह्णीयात् शूद्रानीतं तथा

जलम्। ऋतुकालं विना नैव स्वकान्तागमनं चरेत्। गृहस्थोऽपि महेशानि! ब्रह्मचारी सदा गुरुः। उदासीनः कदाचिद्वै गुरुकर्माधिपो भवेत्। तस्य शिष्यस्य कल्याणं कदाचिन्नास्ति चण्डिके!। नखलोमादिकं देवि! न त्याज्यं ब्रह्मचारिणा। सदैव तु सदा भावं सदैव ध्यानतत्परः। त्रिशूलं धारयेच्चैकं त्रिशिखां वापि धारयेत्। ताम्रयुक्तञ्च रुद्राक्षं कर्णयुग्मे निवेशयेत्॥

ताम्रधारणस्य फलमुक्तम् योगसारे द्वितीयपरिच्छेदे॥ बाहौ च धारणात्ताम्रं ब्रह्महत्यां व्यपोहति। हस्तयोर्धारणादेव सर्वतीर्थफलं लभेत्। कर्णयोर्धारणात्ताम्रं कोटितीर्थफलं लभेत्। कण्ठे च धारणात्ताम्रं योगी मोक्षमवाप्नुयात्॥ ताम्रमिति षष्ठ्यर्थे द्वितीया॥

ब्रह्मचर्य्यफलमुक्तं निर्वाणतन्त्रे चतुर्दशपटले॥ यद्देशे विद्यते देवि! ब्रह्मचारी तपोधनः। तद्देशे च स्थिरा लक्ष्मीर्जायते नात्र संशयः॥ वस्तुतस्तु कौलस्य ब्रह्मचर्य्याश्रमो नास्ति॥ तदुक्तं महानिर्वाणतन्त्रे अष्टमोल्लासे॥ श्रीसदाशिव उवाच॥ चत्वारः कथिता वर्णा आश्रमा अपि सुव्रते!। आचारश्चापि वर्णानामाश्रमाणां पृथक् पृथक्। कृतादौ कलिकाले तु वर्णाः पञ्च प्रकीर्त्तिताः। ब्राह्मणः क्षत्रियो वैश्यः शूद्रः सामान्य एव च। एतेषां सर्ववर्णानामाश्रमौ द्वौ महेश्वरि!। तेषामाचारधर्मांश्च शृणुष्वाद्ये! वदामि ते। पुरैव कथितं तावत् कलिसम्भवचेष्टितम्। तपःस्वाध्यायहीनानां नृणामल्पायुषामपि। क्लेशप्रयासशक्तानां कुतो देहपरिश्रमः। ब्रह्मचर्य्यासमो नास्ति वानप्रस्थोऽपि न प्रिये!। गृहस्थो भिक्षुकश्चैव आश्रमौ द्वौ कलौ युगे। इति लिखितस्तु स आश्रमः क्वचित् क्वाचित् व्यवहारदर्शनादिति॥

अथ गार्हस्थ्यम्॥ निर्वाणतन्त्रे॥ अथ वक्ष्ये गृहस्थस्य लक्षणं शृणु चण्डिके!। पाठो होमश्चातिथीनां सेवनं देवपूजनम्। पितृश्राद्धं कुलाचारं तत्त्वज्ञानं समाचरेत्। निजकान्ता सदा पूज्या निजकान्ता हि देवता। मानसं पूजनं कुर्य्यात् मानसं जपमाचरेत्। मानसो हि महाधर्मो मानसं नास्ति पातकम्॥ महानिर्वाणतन्त्रे॥ गृहस्थस्य क्रियाः सर्वा आगमोक्ताः कलौ शिवे!। नान्यमार्गैः क्रियासिद्धिः कदापि गृहमेधिनाम्। विप्राणामितरेषाञ्च वर्णानामितरे कलौ। उभयत्राश्रमे देवि! सर्वेषामधिकारिता। सर्वेषामेव संस्कारकर्माणि शैववर्त्मना। कर्मणामितरेषाञ्च कर्मलिङ्गं पृथक् पृथक्। जातमात्रो गृहस्थः स्यात् संस्कारादाश्रमी भवेत्। गार्हस्थ्यं प्रथमं कुर्य्याद् यथाविधि महेश्वरि!। तत्त्वज्ञाने समुत्पन्ने वैराग्यं जायते यदा। तदा सर्वं परित्यज्य सन्न्यासाश्रममाश्रयेत्। विद्यामुपार्जयेद्बाल्ये धनदारांश्च यौवने। प्रौढ़े धर्म्याणि कर्माणि चतुर्थे प्रव्रजेत् सुधीः। मातरं पितरं वृद्धं भार्य्याञ्चैव पतिव्रताम्। शिशुञ्च तनयं हित्वा नावधूताश्रमं व्रजेत्। मातॄः पितॄन् शिशून् दारान् स्वजनान् बान्धवानपि। यः प्रव्रजति हित्वैतान् स महापातकी भवेत्। मातृहा पितृहा स स्यात् स्त्रीवधी विप्रघातकः। असन्तर्प्य तु पित्रादीन् यो गच्छेद्भिक्षुकाश्रमे। ब्राह्मणो विप्रभिन्नश्च स्वस्ववर्णोक्तसंस्क्रियाम्। शैवेन वर्त्मना कुर्य्यादेष धर्म्मः कलौ युगे॥ श्रीदेव्युवाच॥ को वा धर्मो गृहस्थस्य भिक्षुकस्य च किं विभो!। विप्रस्य विप्रभिन्नानां संस्कारादीनि मे वद॥ श्रीसदाशिव उवाच॥ गार्हस्थ्यं प्रथमं धर्मं सर्वेषां मनुजन्मनाम्। तदेव कथयाम्यादौ शृणु कौलिनि! तत्त्वतः। ब्रह्मनिष्ठो गृहस्थः स्याद् ब्रह्मज्ञानपरायणः। यद्यत् कर्म प्रकुर्वीत तद्ब्रह्मणि

समर्पयेत् । न मिथ्याभाषणं नान्यन्न चासाध्यं समाचरेत् ।
देवतातिथिपूजासु गृहस्थो निरतो भवेत् ॥

अतिथिर्यथा नारदपञ्चरात्रे षष्ठाध्याये ॥ अतिथिः पूजितो येन विश्वञ्च तेन पूजितम् । अतिथिर्यस्य तुष्टो हि तस्य तुष्टो हरिः स्वयम् । अधिष्ठातातिथिर्गेहे सन्ततं सर्वदेवताः । तीर्थान्येनानि सर्वाणि पुण्यानि च व्रतानि च । तपांसि यज्ञाः सत्यञ्च शौलं धर्मः सुकर्म च । अपूजितैरतिथिभिः सार्द्धं सर्वैः प्रयान्ति ते । अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते । पितरस्तस्य देवाश्च पुण्यधर्महुताशनाः । यशः प्रतिष्ठा लक्ष्मीश्चापीष्टदेवो गुरुस्तथा । निराशाः प्रतिगच्छन्ति त्यक्त्वा पापञ्च पूरुषम् । स्त्रीघ्नैर्गोघ्नैः कृतघ्नैश्च ब्रह्मघ्नैर्गुरुतल्पगैः । विश्वासघातिभिर्दुष्टैर्मित्रद्रोहिभिरेव च । सत्यघ्नैश्च कृतघ्नैश्च कीर्त्तिघ्नैः पापिभिस्तथा । आलापवारकैश्चैव कन्याविक्रयिभिस्तथा । सोमापहारिभिश्चैव मिथ्यासाक्ष्यप्रदातृभिः । ब्रह्मस्वहारिभिश्चैव तथा स्थाप्यस्य हारिभिः । वृषवाहैर्देवलैश्च तथैव ग्रामयाजिभिः । शूद्रान्नभोजिभिश्चैव शूद्रश्राद्धाहभोजिभिः । श्रीकृष्णविमुखैर्विप्रैर्हिंस्रैर्नरविघातकैः । गुरावभक्तै रोगार्त्तैः शश्वन्मिथ्याप्रवादिभिः । विप्रस्त्रीगामिभिः शूद्रैर्मातृगामिभिरेव च । अश्वत्थघातिभिश्चैव पत्नीभिः पतिघातिभिः । पितृमातृघातिभिश्च शरणागतघातिभिः । ब्राह्मणक्षत्रविट्शूद्रैः शिलास्वर्णापहारिभिः । तुल्यदोषो भवत्येभिर्यस्यातिथिरनर्चितः । मातरं पितरञ्चैव साक्षात् प्रत्यक्षदेवताम् । सदा गृही निषेवेत सदा सर्वप्रयत्नतः । तुष्टायां मातरि शिवे ! तुष्टे पितरि पार्वति ! । तव प्रीति र्भवेद्देवि ! परं ब्रह्म प्रसीदति । त्वमाद्ये ! जगतां माता पिता ब्रह्म परात् परम् । युवयोः प्रीणनं यत् स्यात् तस्मात् किं गृहिणां तपः । आसनं भोजनं वस्त्रं पानं भजन-

मेव च। तत्तत् समयमाज्ञाय मात्रे पित्रे नियोजयेत्। श्राव-
येन्मृदुलां वाणीं सर्व्वदा प्रियमाचरेत्। पित्रो राज्ञानुसारी
स्यात् स पुत्रः कुलपावनः। श्रौद्धत्यं परिहासञ्च तद्वर्ज्यं बहु-
भाषणम्। पित्रोरग्रे न कुर्वीत यदीच्छेदात्मनो हितम्। मातरं
पितरं वीक्ष्य नत्वोत्तिष्ठेत् ससम्भ्रमः। विनाज्ञया नोपविशेत्
संस्थितः पितृशासने। विद्याधनमदोन्मत्तो यः कुर्य्यात् पितृ-
हेलनम्। स याति नरकं घोरं सर्वधर्मवहिष्कृतः।
मातरं पितरं पुत्रदारानतिथिसोदरान्। हित्वा गृही न भुञ्जी-
यात् प्राणैः कण्ठगतैरपि। वञ्चयित्वा गुरून् बन्धून् यो भुङ्क्ते
स्वोदरम्भरिः। इहैव लोके गर्ह्योऽसौ परत्र नारकी भवेत्। गृहस्थो
गोपयेद्दारान् विद्यामभ्यासयेत् सुतान्। गोपयेत् स्वजनान् बन्धू-
नेष धर्म्मः सनातनः। जनन्या वर्द्धिता देहो जनकेन प्रवर्द्धितः।
स्वजनैः शिक्षितः प्रीत्या सोऽधमस्तान् परित्यजेत्। एषामर्थे
महेशानि! कृत्वा कष्टशतान्यपि। प्रीणयेत् सततं यस्तु धर्म्मो
ह्येष सनातनः। स धन्यः पुरुषो लोके स कृती परमार्थवित्।
ब्रह्मनिष्ठः सत्यसन्धो यो भवेद्भुवि मानवः। न भार्य्यां ताड़येत्
क्वापि मातृवत् पालयेत् सदा। न त्यजेद्घोरकष्टेऽपि यदि साध्वी
पतिव्रता। स्थितेषु स्वीयदारेषु स्त्रियमन्यां न संस्पृशेत्।
दुष्टेन चेतसा विद्वानन्यथा नारकी भवेत्। विरले शयनं वासं
त्यजेत् प्राज्ञः परस्त्रिया। अयुक्तभाषणञ्चैव स्त्रियै शौर्य्यं न
दर्शयेत्। धनेन वाससा प्रेम्णा श्रद्धयामृतभाषणैः। सततं
तोषयेद्दारान्नाप्रियं क्वचिदाचरेत्। उत्सवे लोकयात्रायां
तीर्थेष्वन्यनिकेतने। न पत्नीं प्रेषयेत् प्राज्ञः पुत्रामात्यविव-
र्जिताम्। यस्मिन् नरे महेशानि! तुष्टा भार्य्या पतिव्रता।
सर्वं धर्म्मं कृतं तेन भवति प्रिय एव सः। चतुर्वर्षावधि सुतान्
लालयेत् पालयेत् पिता। ततः षोडशपर्य्यन्तं गुणान् विद्याश्च

शिक्षयेत्। विंशत्यब्दाधिकान् पुत्रान् प्रेरयेद् गृहकर्मसु। ततस्तान् तुल्यभावेन मत्वा स्नेहं प्रदर्शयेत्। कन्याप्येवं पालनीया शिक्षणीयातियत्नतः। देया वराय विदुषे धनरत्नसमन्विता। एवं क्रमेण भ्रातॄंश्च स्वसृभ्रातृसुतानपि। ज्ञातीन् मित्राणि भृत्यांश्च पालयित्तोषयेद्गृही। ततः स्वधर्मनिरतानेकग्राम-निवासिनः। अभ्यागतानुदासीनान् गृहस्थः परिपालयेत्। यद्येवं नाचरेद्देवि! गृहस्थो विभवे सति। पशुरेव स विज्ञेयः स पापी लोकगर्हितः। निद्रालस्यं देहयत्नं केशविन्यासमेव च। आसक्तिमशने वस्त्रे नातिरिक्तं समाचरेत्। युक्ताहारो युक्त-निद्रो मितवाङ्मितमैथुनः। स्वच्छो नम्रः शुचिर्दक्षो युक्तः स्यात् सर्वकर्मसु। शूरः शक्तो विनीतः स्याद्बान्धवे गुरुसन्निधौ। जुगुप्सितान्न मन्येत नावमन्येत मानिनः। सौहृदं व्यवहारांश्च प्रवृत्तिं प्रकृतं नृणाम्। सहवासेन तर्केण च विदित्वा विश्वसे-त्ततः। एष इष्ट्रापरि चुद्रात् समयं वीक्ष्य बुद्धिमान्। प्रदर्शये-दात्मभावान्नैव धैर्यं विलङ्घयेत्। स्वीयं यशः पौरुषञ्च गुप्तये कथितञ्च यत्। कृतं यदुपकाराय धर्मज्ञो न प्रकाशयेत्। जुगुप्सितप्रवृत्तौ च निश्चितेऽपि पराजयः। गुरुणा लघुना वापि यशस्वी न विवादयेत्। विद्याधनयशोधर्मान् यत्नमान-मुपार्जयेत्। व्यसनञ्चासतां सङ्गं मिथ्याद्रोहं परित्यजेत्। अवस्थानुगताश्चेष्टाः समयानुगताः क्रियाः। तस्मादवस्थां समयं वीक्ष्य कर्म समाचरेत्। योगक्षेमरतो दक्षो धार्मिकः प्रिय-बान्धवः। मितवाङ्मितहास्यः स्यान्मान्याग्रे तु विशेषतः। जितेन्द्रियः प्रसन्नात्मा सुचिन्तः स्याद्दृढव्रतः। अप्रमत्तो दीर्घ-दर्शी मात्रास्पर्शान् विशोधयेत्। सत्यं मृदु प्रियं धीरो वाक्यं हितकरं वदेत्। आत्मोत्कर्षं तथा निन्दां परेषां परिवर्जयेत्। जलाशयश्च वृक्षश्च विश्रामगृहमध्वनि। सेतुः प्रतिष्ठितो येन

तेन लोकत्रयं जितम्। सन्तुष्टौ पितरौ यस्मिन्ननुरक्ताः सुहृज्जनाः। गायन्ति यद्यशो लोकास्तेन लोकत्रयं जितम्। सत्यमेव व्रतं यस्य दया दीनेषु सर्वथा। कामक्रोधौ यस्य वश्यौ तेन लोकत्रयं जितम्। शौचन्तु द्विविधं देवि! वाह्याभ्यन्तरभेदतः। ब्रह्मण्यात्मार्पणं यत्तत् शौचमान्तरिकं स्मृतम्। अद्भिर्वा भस्मना वापि मलानामपकर्षणम्। देहशुद्धिर्भवेद्येन वह्निःशौचं तदुच्यते। भस्मात्र याज्ञिकं श्रेष्ठं मृत्स्नापि मलवर्जिता। निद्रान्ते मैथुनस्यान्ते त्यागे च मलमूत्रयोः। भोजनान्ते मले स्पृष्टे वह्निःशौचं विधीयते। किन्त्वत्र बहुनोक्तेन शौचाशौचविधौ शिवे!। मनः पूतं भवेद्येन गृहस्थस्तु तदाचरेत्। सन्ध्या त्रैकालिकी कार्य्या वैदिकी तान्त्रिकी क्रमात्। उपासनादिभेदेन पूजां कुर्य्याद्यथाविधि॥ तथा। अर्घ्यदानं दिनेशाय गायत्रीजपनं तथा। अष्टोत्तरसहस्रं वा शतं वा दशधापि वा। जपानां नियमो भद्रे! सर्वत्राह्निककर्मणि। शूद्रसामान्यजातीनामधिकारोऽस्ति केवलम्। आगमोक्तविधौ देवि! सर्वसिद्धिस्ततो भवेत्॥

निर्वाणतन्त्रे द्वितीयपटले॥ गृहस्थस्य दिव्यमूर्त्तिं चन्दनादि-विभूषिताम्। सर्वेषां पितृरूपोऽसौ गृहस्थः साधुरूपकः। सदा दानरतः श्रीमान् सदा यज्ञपरायणः। स्थापयेत् पञ्च तत्त्वानि गेहमध्ये प्रयत्नतः॥ तदैव सर्वसिद्धीशो भवत्येव न संशयः। यस्मिन्मन्त्रे विचारोऽपि सिद्धादिगणदूषणम्। तत्तत् सर्वं महेशानि! गृहस्थस्य सुनिश्चितम्। सुविचार्य्य महामन्त्रं गृह्णीयात् साधकोत्तमः। एकाक्षरे तथा कूटे मालामन्त्रादिके तथा। विचारो नास्ति देवेशि! स्वप्नलब्धे तथैव हि। तथापि च गृहस्थस्य सुविचार्य्यो महामनुः। दरिद्रो भूषणं नास्ति सर्वमन्त्रस्य शोधने।

गृहस्थाश्रममासाद्य तत्त्वज्ञानेषु यो रतः। स मुक्तः सर्वपापेभ्यः स तु साक्षान्महेश्वरः। अन्नदानेन यत् पुण्यं तोयदानेन यत् फलम्। तत्तत्सर्वं गृहस्थस्य नान्यस्य सुरसुन्दरि!॥ नित्यातन्त्रे अष्टमपटले॥ देव्युवाच॥ कथितं परमेशान! कौलाचारस्य लक्षणम्। वर्त्तते तत्कथं नाथ! गृहस्थेषु च राजसु। ईश्वर उवाच। सत्त्वं रजस्तम इति गुणत्रयविभेदतः। सर्वेषु वर्त्तते देवि! कौलधर्मः सनातनः। सत्त्वं स्याज्ज्ञानयोगेन सर्वोत्पत्तेरेककारणम्। अत एव महेशानि! गृहस्थाः सात्त्विका मताः। रजः स्यात् कर्मयोगेन कर्मकर्त्ता महीपतिः। अत एव महेशानि! राजा राजसिकः स्मृतः। तमोभावस्थितः शम्भुर्योगीशः परमेश्वरः। अत एव तमोभावमाश्रयेत् सङ्गवर्जितः। शक्तिचक्रं राजचक्रं वीरचक्रं महेश्वरि!। अत एव प्रकर्त्तव्यं क्रमेण परमेश्वरि!॥ कुब्जिकातन्त्रे सप्तमपटले॥ अशोकं विल्ववृक्षं च शिवां चैव सुरेश्वरि! दृष्ट्वा प्रणामं कुर्य्याच्च सर्वकामार्थसिद्धये। उलूकं शङ्खचिल्लञ्च गृध्रं चैव सुरेश्वरि!। नमस्कुर्य्यान्महाकालीं युद्धेषु जयमालभेत्। चतुष्पथं श्मशानञ्च नमस्कुर्य्याद्विशेषतः। तन्त्रज्ञं चावधूतञ्च नमस्कुर्य्याद्वरानने!। उपासकं सदा दृष्ट्वा मधुरं भाषणं चरेत्। समयाच्च विना देवि! न सिद्धिः स्यात् कदाचन। तस्माच्चैव प्रयत्नेन गृह्णीयान्नात्र संशयः॥

अथ यत्याश्रमः॥ निर्वाणतन्त्रे त्रयोदशपटले॥ सर्वलक्षणसंयुक्तो ब्राह्मणो गमनं चरेत्। गत्वा च दण्डिनिकटे प्रणमेद्दण्डवद्भुवि। त्वमेव देवदेवेश! त्वमेव त्राणकारकः। त्वमेव जगतां वस्ता पाहि मां शरणागतम्। वस्तेत्यत्रान्तर्भूतण्यर्थो विवक्षितो वस्ता वासयितेति यावत्। इति श्रुत्वा दण्डधारी पप्रच्छ सादराज्जनम्। कस्त्वं कस्य सुतस्त्वं

हि केन वागमनं वद। श्रुत्वा तद्वचनं विप्रः प्रोवाचात्म-निवेदनम्। विप्रवंशे समुद्भूतो ह्यमुकोऽहं विवेकवान्। नास्ति मे तु पिता माताबास्ति मे स्त्रीसुतादिकम्। मृतौ च मातापितरौ मृता भ्रातादयः सुताः। पश्चात् स्वकान्तानाशे तु ह्यहमत्यन्ततापवान्। अतएव हि भोः स्वामिन्! देहि मे परमाश्रमम्। एतेन पित्रादिषु तिष्ठत्सु यत्याश्रमो न भव-तीति सूचितम्। तान् विहाय दण्डस्य धर्त्तुर्दोषकथनगर्भ-दण्डिवचनं तत्रैव॥ सत्यं कुरु द्विजश्रेष्ठ! यदुक्तं वै ममान्तिके। मिथ्याभाषणदोषेण ब्रह्मतत्त्वं विवर्जितम्। भवत्येव न सन्देहो द्विज! मत्पुरतो वद। स्थितायां यौवनयुतकान्तायां परमे-श्वरि!। सर्वं हि विफलं तस्य यः कुर्य्याद्दण्डधारणम्। विद्येते पितरौ देवि! यः कुर्य्याद्दण्डधारणम्। सन्न्यासो विफलस्तस्य रौरवाख्यं गमिष्यति। विद्यते बालभावेन यस्य कान्ता सुत-स्तथा। सन्न्यासधारणं तस्य वृथा हि परमेश्वरि!। स गुरु-श्चापि शिष्यश्च रौरवाख्यं प्रपद्यते। इत्यादि दृढ़वाक्यञ्च श्रुत्वा दण्डी जितेन्द्रियः। सन्न्यासदानं तस्यैव दद्या-न्मुक्तिञ्च शाश्वतीम्॥ इत्यादिना दोषदर्शनेन पुनः पित्रादि-मरणनिश्चायकं दृढ़वाक्यं श्रुत्वा तस्य सन्न्यासदानमर्पयेदित्य-न्वयः॥

तत्प्रकारमाह। आदौ दशाक्षरं मन्त्रं प्रथमे श्रावयेद्गुरुः॥ श्रीशङ्कर उवाच॥ शृणु देवि! प्रवक्ष्यामि मन्त्रं दशाक्षरं परम्। यस्य श्रवणमात्रेण मूढ़ोऽपि विष्णुरूपधृक्। पुंमन्त्रो-ऽपि च देवेशि! शक्तिमन्त्रं जपेद् यदि। अज्ञात्वा तं महा-मन्त्रं स भवेद्ब्रह्मराक्षसः। अज्ञात्वा तं महामन्त्रं तत्त्वज्ञानी भवेद् यदि। तथापि नरकं गच्छेदिति वेदस्य सम्मतम्। शृणु देवि! प्रवक्ष्यामि दशनं मन्त्रमुत्तमम्। मयावीजं वधू-

वीजं लक्ष्मीः काली च पाशकम्। गगनं पक्षिवीजञ्च वह्निकान्ता ततः प्रिये!। इति ते कथितं चण्डि! दशाक्षरमनुत्तमम्। यज्ज्ञानादमरत्वञ्च लभते नात्र संशयः। अस्य ग्रहणमात्रेण नरो नारायणो भवेत्। अस्य प्रसादमात्रेण दण्डी निर्वाणतां व्रजेत्। दण्डोपरि जपेदेतद्दशार्णं परमेश्वरि!। अस्मान्मन्त्रान्महामन्त्रा जायन्ते नात्र संशयः। सर्वो देवसमाचारो दशार्णाज्जायते ध्रुवम्। महाविद्योपासकश्च दशार्णं न हि पश्यति। इह लोके दरिद्रश्च परे च ब्रह्मराक्षसः। तस्माद् यत्नेन देवेशि! दशार्णं श्रावयेद्गुरुः। केवलं श्रवणं कुर्य्यान्न जपेत् साधकोत्तमः। श्रावयेद् यो दशार्णञ्च स नरो गुरुसत्तमः। मन्त्रदाता यदा देवि! तदैव स गुरुः स्मृतः। दशार्णदाता यो देवि! स एव परमो गुरुः। यथामरतरङ्गिण्या असमाः सकलापगाः। दशार्णस्य समो नास्ति मन्त्रस्य सुरपूजिते!॥ तथा॥ अतः परम् प्रवक्ष्यामि यद्रूपं दण्डधारणम्। साधुरूपो गृहस्थश्च ब्राह्मणो ब्रह्मवादकः। सर्वमायासमात्यक्तः सर्वधर्मपरायणः। जितेन्द्रियो जितक्रोधः समत्वं सर्वजातिषु। पुत्रे रिपौ समत्वञ्च सन्ध्यायां पौष्टिके तथा। कायप्राणे न सम्बन्धो मृत्यु रत्र युगान्तिके। ब्रह्मज्ञानं विना ज्ञानं यस्य चित्ते मनोरमम्। सन्न्यासधारणं कार्य्यं विप्राणां मुक्तिहेतवे। यो विप्रो धारयेद्दण्डं सैव नारायणः स्वयम्। चतुर्भुजाः प्रजायन्ते दण्डधारणमात्रतः। तत् श्रुत्वा च महारण्यगमनं कारयेत्ततः। क्रोशं वा क्रोशयुग्मं वा वेगेन गमनञ्चरेत्। गुरुणा ह शिष्येण पृष्ठे पृष्ठे विधानतः। तिष्ठ तिष्ठ महावाहो! मां त्यक्त्वा नहि गच्छतु। शिष्यः परमहंसस्त्वं त्वत्समो नास्ति भूतले। क्षन्तव्यमपराधं मे त्वमेव विष्णुरूपधृक्। त्वमेव जगतां वन्द्यस्त्वमेव सर्वपूजितः। त्वमेव

परमो हंसस्तिष्ठ तिष्ठेति मा व्रज। स शिष्यो दण्डिना देवि! इति वाक्यं वदेद्यत: : अत: स परमो हंस: पथि शेते प्रमोहित:। तस्यैव दर्शनार्थाय चान्तरीक्षे च देवता:। सस्त्रीका: सपरीवारास्त्वायान्ति दिग्विदिक्षु च। एतस्मिन् समये दण्डी सान्त्वयेच्छिष्यमुत्तमम्। फुत्कारं बहुशो दत्त्वा मन्त्रेणानेन सुव्रत:। फुत्कारैर्वायुवेगैश्च पुन: प्राणान् प्रयोजयेत्। जन्मान्तरञ्च तस्यैव तत्क्षणे जायते किल। जन्मान्तरं यमालोक्य संस्कारमाचरेद्गुरु:। दण्डान्तिके समानीय ग्वन्नप्राशनमाचरेत्। अमुकस्त्वं समाभाष्य पुष्पं वह्नौ विनिक्षेपेत्। इति नाम्ना तु संस्थाप्य महासंस्कारमाचरेत्। ततोऽपि दण्डिना देवि! शिष्याय ज्ञानहेतवे। शृणु शिष्य! महाधीर! मद्वाक्यं हृदये कुरु। जन्मान्तरन्तु तस्यैव प्राणाधिकं विकारयेत्। मृतदेहस्वरूपोऽयं शरीरोऽयं न संशय:। विरतो भव सर्वत्र तोषान्नाहारचेष्टया। ब्राह्मणेनैव यद्दत्तं तन्मात्रभोजनं कुरु। पञ्चतत्त्वं सदा सेव्यं गुप्तभावो जितेन्द्रिय:। सदैव मानसीं पूजां सदा मानसतर्पणम्। त्रिसन्ध्यं मानसं योगं नाभिकुण्डे प्रयत्नत:। सदैव मानसं भोगं त्यागं कुरु प्रयत्नत:। षड़्वर्गेषु जितो भूत्वा नरो नारायण: स्वयम्। भवत्येव न सन्देहो दण्डधारणमात्रत:। पितृवंशे सप्तदश मातृवंशे त्रयोदश। कान्ताया: सप्तमश्चैव लक्ष्मीनारायणो भवेत्। इति श्रुत्वा वचस्तस्य शिष्यश्चैवाब्रवीद्वच:। यदुक्तं मयि मुक्त्यर्थं तत्करोमि निरन्तरम्। पञ्चतत्त्वं सदा सेव्यं कस्माल्लाभो वदस्व मे। यत्रैव वर्त्तते दण्डी बहुशिष्यसमावृत:। तत्र गत्वा प्रयत्नेन बहुशिष्यं विचेष्टय। अथवा वीरमध्ये तु यत्नेन गमनं चर। तत्त्वज्ञानं गृहस्थस्य सन्निधाने व्रजेत् किल। सुदूरमपि गन्तव्यं यत्रास्ते कुलनायक:। भिक्षुचर्य्या न च

स्वार्थं देवतायाः कृते पुनः। आचार्य्यपत्नीं दृष्ट्वा तु भिक्षां कुर्य्यात् समाहितः। हे मातर्देहि मे भिक्षां कुण्डलीं तर्पयाम्यहम्। एवमुक्त्वा ततो दण्डी महासंस्कारमाचरेत्। दण्डान्तिके समानीय होमयेद्विधिपूर्वकम्। ततो हुनेत् करं धृत्वा आज्यैरष्टाहुतीः पुनः॥ विपरीतक्रमेणैव कुर्य्यादङ्गविशोधनम्। ततः कुर्य्यात् प्रयत्नेन अन्तर्यज्ञोपवीतकम्। शिखां तस्य शिखां मन्त्री पूगमध्ये विधारयेत्। मूलेन यज्ञसूत्रन्तु तस्मिन्नेव निवेशयेत्। घृतैर्मृत्तिकया पूगं विलिप्य शोधयेत्ततः। तत्पूगं मूलमन्त्रेण कुण्डमध्ये विनिक्षिपेत्। पूर्णाहुतिं ततो दद्यात् तत्पूगमानयेत् सुधीः। सयज्ञसूत्रं सशिखं तत्पूगं प्रेषयेत् प्रिये!। मूलमन्त्रं जपेत्तत्र गजान्तकसहस्रकम्। ततश्च श्रावयेन्मन्त्रं कालिकायाश्च सुन्दरि!। अथवा श्रावयेन्मन्त्रं तारायाः दुर्लभं परम्। मूलमन्त्रं समुच्चार्य्य पूगभस्म प्रयत्नतः। भक्षणात् तत्क्षणे साक्षादन्तर्यज्ञोपवीतवान्। भवत्येव न सन्देहो नरो नारायणः स्वयम्। विल्वदण्डं समानीय वंशस्यैकं समानयेत्। विल्वदण्डे न्यसेन्न्यासान् कालिकायाः प्रयत्नतः। जीवन्यासं ततः कृत्वा दण्डे देवीं विचिन्तयेत्। विल्वे स्थितञ्च चैतन्यं वंशदण्डे नियोजयेत्। इष्टदेवीस्वरूपोऽयं दण्डश्च परमेश्वरि!। शिष्यस्य दक्षिणे हस्ते दण्डस्थापनमाचरेत्। कमण्डलुं समानीय वारुणं प्रजपेत् सुधीः। वारुणीं निक्षिपेत्तत्र ततो मूलमनुं जपेत्। अष्टोत्तरशतं जप्त्वा तस्य वामकरे न्यसेत्। गैरिकं कपिलं वस्त्रं यत्नेन परिधापयेत्। दण्डधारणमात्रेण नरो नारायणो भवेत्। अद्यावधि महामायां दण्डोपरि विभावय। कुरु पूजां महाकाल्या दण्डोपरि हृदा ततः। साक्षान्नारायणस्त्वं हि धर्माधर्मपरो भव। तव माता पिता स्वामी सर्वं दण्डान्तिके स्थितम्॥ इति परमाश्रमग्रहणम्॥

दण्डिनो भिक्षाचरणप्रकारस्तु तत्रैव ॥ सुदूरं गमनं गेहे गृहस्थस्य द्विजस्य च । नारायणं समाभाष्य द्वारि तस्य व्रजेत् सुधीः । दण्डिगमनानन्तरं गृहस्थकर्त्तव्यमाह तत्रैव ॥ इति श्रुत्वा गृहस्थश्च पुटाञ्जलिपरो भवेत् । द्वारि च दण्डिनं दृष्ट्वा प्रणमेद्ब्राह्मणो वरः । भिक्षां दद्यात् प्रयत्नेन मधु मांसं विना प्रिये ! । आदाय भिक्षां देवेशि ! चौरवद्गमनं चरेत् ॥ दण्डिनोऽवस्थितिप्रकारोऽपि तत्रैव ॥ गृहस्थस्यालये देवि ! रात्रिवासञ्च कारयेत् । तथा हि नगरं गत्वा त्रिरात्रं वसतिं चरेत् । तीर्थभूमिं ततो गत्वा सप्तरात्रं वसेत्ततः ॥ दण्डिनं दृष्ट्वा ब्राह्मणस्य कर्त्तव्यमुक्तं तत्रैव ॥ ब्राह्मणो दण्डिनं दृष्ट्वा प्रणमेद्विधिपूर्वकम् । तोयपूर्णञ्च देवेशि ! किं वा शून्यं कमण्डलुम् । दृष्टिमात्रेण तत्पात्रं पूर्णं कुर्य्याद्द्विजोत्तमः । कमण्डलौ जलदानफलमपि तत्रैव ॥ कुशाग्रमात्रं विन्दुञ्च यदि दद्यात् कमण्डलौ । समुद्रसप्तदानस्य फलं स लभते ध्रुवम् ॥ जलदाननिन्दापि तत्रैव ॥ दद्यान्न यदि मोहेन स भवेदापदाश्रयः । त्रिंशद्वर्षसहस्राणि स पुनर्विटपो भवेत् । इति ते कथितं चण्डि ! सन्यासधारणं परम् । न वक्तव्यं पशोरग्रे प्राणान्तेऽपि कदाचन । वस्तुतस्तु कलौ दण्डग्रहणं नास्ति ॥ दीर्घकालं ब्रह्मचर्य्यं धारणञ्च कमण्डलोः । इत्यादिभिर्वचनैरुद्वाहतत्त्वादिधृतैर्निषिद्धत्वात् ॥

महानिर्वाणतन्त्रे अष्टमोल्लासेऽपि ॥ भिक्षुकेऽप्याश्रमे देवि ! वेदोक्तं दण्डधारणम् । कलौ नास्त्येव तत्त्वज्ञो यतस्तत् श्रौतसंस्कृतिः । शैवसंस्कारविधिनावधूताश्रमधारणम् । तदेव कथितं भद्रे ! सन्यासग्रहणं कलौ ॥ नारदपञ्चरात्रे द्वितीयरात्रे च ॥ कलौ च दण्डग्रहणं नैव निर्वाणकारणम् । परं वेदविरुद्धञ्च विपरीताय कल्पते ॥ इत्यादिभिः

प्रतिषिद्धत्वाच्च॥ यत्तु निर्वाणतन्त्रे चतुर्दशपटले॥ ब्राह्मणेन विनान्यत्र सन्न्यासो नास्ति चण्डिके!। कुर्य्यान्मोहेन योऽन्यत्र स वै पापाश्रयो नरः। गुप्तभावेन देवेशि! शृणु मत्प्राणवल्लभे!। सन्न्यासिना सदा सेव्यं पञ्चतत्त्वं वरानने!। द्वादशाब्दस्य मध्ये तु यदि मृत्युर्न जायते। दण्डं तोये विनिक्षिप्य भवेत् परमहंसकः। अवधूताचाररतो हंसः परमपूर्ब्बकः। सैव चानन्दविख्यातो द्वादशाब्दे सरस्वती॥ इति वचनमपि कलौतरपरम्। सरस्वतीति दशनामावधूतमध्ये संज्ञाविशेषः तत्प्रमाणन्तु॥ तीर्थाश्रमवनारण्यगिरिपर्व्वतसागरः। सरस्वती भारती च पुरीति दश कीर्त्तिताः॥ इति॥ एषां लक्षणन्तु शङ्करविजये॥ विद्यारण्यस्वामिधृतं यथा॥ त्रिवेणी सङ्गमे तीर्थे तत्त्वमस्यादिलक्षणे। स्नायात्तत्त्वार्थभावेन तीर्थनामा स उच्यते॥ १॥ आश्रमग्रहणे प्रौढ़ आशापाशविवर्जितः। यातायातविनिर्मुक्त एतदाश्रमलक्षणम्॥ २॥ सुरम्ये निर्झरे देशे वने वासं करोति यः। आशापाशविनिर्मुक्तो वननामा स उच्यते॥ ३॥ अरण्ये संस्थितो नित्यमानन्दनन्दने वने। त्यक्त्वा सर्व्वमिदं विश्वमानन्दलक्षणं किल॥ ४॥ वासो गिरिवरे नित्यं गीताभ्यासे हि तत्परः। गम्भीरचलबुद्धिश्च गिरिनामा स उच्यते॥ ५॥ वसेत् पर्व्वतमूलेषु प्रौढ़ो यो ध्यानधारणात्। सारात्सारं विजानाति पर्व्वतः परिकीर्त्तितः॥ ६॥ वसेत् सागरगम्भीरो वनरत्नपरिग्रहः। मर्य्यादाञ्च न लङ्घेत सागरः परिकीर्त्तितः॥ ७॥ स्वरज्ञानवशो नित्यं स्वरवादी कवीश्वरः। संसारसागरे साराभिज्ञो यो हि सरस्वती॥ ८॥ विद्याभरेण सम्पूर्णः सर्व्वभारं परित्यजेत्। दुःखभारं न जानाति भारती परिकीर्त्तितः॥ ९॥ ज्ञानतत्त्वेन सम्पूर्णः पूर्णतत्त्वपदे स्थितः। परब्रह्मरतो नित्यं पुरीनामा स उच्यते॥ १०॥ केवलनिर्वाणतन्त्रदर्शिन-

स्त्वधुनापि तथाचरन्ति। अवधूततापि चतुर्थाश्रमिणामेव॥ तथा च योनितन्त्रे॥ चतुर्थाश्रमिणां मध्ये अवधूताश्रमो महान्। तत्राहं कुलयोगेन महादेवत्वमागतः॥

अथावधूताश्रमः॥ महानिर्वाणतन्त्रे अष्टमोल्लासे॥ श्रीसदाशिव उवाच॥ अवधूताश्रमो देवि! कलौ सन्न्यास उच्यते। विधिना येन कर्त्तव्यं तत्सर्वं शृणु साम्प्रतम्। ब्रह्मज्ञाने समुत्पन्ने विरते सर्वकर्मणि। अध्यात्मविद्यानिपुणः सन्न्यासाश्रममाचरेत्। विहाय वृद्धौ पितरौ शिशुं भार्य्यां पतिव्रताम्। त्यक्त्वा समर्थान् बन्धूंश्च प्रव्रजन्नारकी भवेत्। सम्पाद्य गृहकर्माणि परितोष्यागमानपि। निर्म्ममो निलयाद्गच्छेन्निष्कामो विजितेन्द्रियः। आहूय स्वजनान् बन्धून् ग्रामस्थान् प्रतिवासिनः। प्रीत्यानुमतिमन्विच्छेद्गृहाज्जिगमिषुर्नरः। तेषामनुज्ञामादाय प्रणम्य परदेवताम्। ग्रामं प्रदक्षिणीकृत्य निरपेक्षो गृहादि यत्। मुक्तः संसारपाशेभ्यः परमानन्दवृंहितः। कुलावधूतं ब्रह्मज्ञं गत्वा सम्प्रार्थयेदिदम्। गृहाश्रमे परं ब्रह्मन्! ममैतद्वि विगतं वयः। प्रसादं कुरु मे नाथ! सन्न्यासग्रहणं प्रति। निवृत्तगृहकर्माणं विचार्य्य विधिवद्गुरुः। शान्तं विवेकिनं वीक्ष्य द्वितीयाश्रममादिशेत्। ततः शिष्यः कृतस्नानो यतात्मा विहिताह्निकः। ऋणत्रयविमुक्त्यर्थं देवर्षींश्चार्चयेत् पितॄन्। देवा ब्रह्मा च विष्णुश्च रुद्रश्च सगणैः सह। ऋषयः सनकाद्याश्चात्रयाद्या देवर्षयस्तथा। अत्र ये पितरः पूज्या वक्ष्यामि शृणु तानपि। पिता पितामहश्चैव प्रपितामह एव च। माता पितामही देवि! तथैव प्रपितामही। मातामहादयोऽप्येवं मातामह्यादयोऽपि च। प्राच्यामृषीन् यजेद्देवान् दक्षिणस्यां पितॄन् यजेत्। मातामहान् प्रतीच्यान्तु पूजयेन्न्यासकर्मणि। पूर्वादिक्रमतो दद्यादासनानां द्वयं द्वयम्।

देवादीन् क्रमतस्तत्रावाह्य पूजां समाचरेत् । समर्च्य विधिवत्तेभ्यः पिण्डान् दद्यात् पृथक् पृथक् । पिण्डप्रदानविधिना दत्त्वा पिण्डं यथाक्रमम् । कृताञ्जलिपुटो भूत्वा प्रार्थयेत् पितृदेवताः । तृप्यध्वं पितरो ! देवा ! देवर्षिमातृका ! गणाः ! । गुणातीतपदे यूयमनृणीकुरुताचिरात् । आनृण्यमर्थयित्वा तु प्रणम्य च पुनः पुनः । ऋणत्रयविनिर्मुक्तमात्मश्राद्धं प्रकल्पयेत् । पितामहात्मैव सर्वेषां तत्पिता प्रपितामहः । आत्मन्यात्मार्पणार्थाय कुर्य्यादात्मक्रियां सुधीः । उत्तराभिमुखो भूत्वा पूर्ववत् कल्पितासने । आवाह्यात्मपितॄन् देवि ! दद्यात् पिण्डं समर्चयन् । प्रागग्रान् दक्षिणाग्रांश्च पश्चिमाग्रान् यथाक्रमात् । पिण्डार्थमास्तरेद्दर्भानुदग्रान् स्वस्वकर्मणि । समाप्य श्राद्धकर्माणि गुरुदर्शितवर्त्मना । मुमुक्षुश्चित्तशुद्ध्यर्थमिमं मन्त्रशतं जपेत् । क्लीं त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । उपासनानुसारेण विद्यां मण्डलपूर्वकम् । संस्थाप्य कलसं तत्र गुरुः पूजां समारभेत् । ततस्तु परमं ब्रह्म ध्यात्वा शाम्भववर्त्मना । विधाय पूजां ब्रह्मज्ञो ब्रह्मस्थापनमाचरेत् । प्रागुक्तसंस्कृते वह्नौ सङ्कल्पोक्ताहुतिं गुरुः । दत्त्वा शिष्यं समाहूय साकल्यं हावयेत्तु तम् । आदौ व्याहृतिभिर्हुत्वा प्राणहोमं प्रकल्पयेत् । प्राणोऽपानः समानश्चोदानव्यानौ च वायवः । तत्र होमं ततः कुर्य्याद्देहामिध्यस्य शुद्धये । पृथिवी सलिलं वह्निर्वायुराकाशमेव च । गन्धो रसश्च रूपञ्च स्पर्शः शब्दो यथाक्रमात् । ततो वाक्पाणिपादाश्च पायूपस्थौ ततः परम् । श्रोत्रं त्वक् नयनं जिह्वा घ्राणबुद्धीन्द्रियाणि च । एतानि मे पदान्ते च शुध्यन्ति पदमुच्चरेत् । क्लीं ज्योतिरहं विरजा विपाप्मा भूयासं द्विठ इत्यपि । चतुर्विंशतितत्त्वानि कर्माणि वैदिकानि च । हुत्वाग्नौ

निष्क्रियो देहं मृतवच्चिन्तयेत्ततः। विभाव्य मृतवत्कार्य्यं रहितं सर्वकर्मणा। स्मरन् तत् परमं ब्रह्म यज्ञसूत्रं समुद्धरेत्। ऐं क्लीं हुं इति मन्त्रेण स्कन्धादुत्तार्य्य तत्त्ववित्। यज्ञसूत्रं करे धृत्वा पठित्वा व्याहृतित्रयम्। वह्निजायां समुच्चार्य्य घृताक्तमनले क्षिपेत्। हुत्वैवमुपवीतञ्च कामबीजं समुच्चरन्। छित्वा शिखां करे कृत्वा घृतमध्ये नियोजयेत्। ब्रह्मपुत्रि! शिखे! त्वं हि वालरूपा सनातनी। दीयते पावके स्थानं गच्छ देवि! नमोऽस्तु ते। कामं मायां कूर्चमन्त्रं वह्निजायामुदीरयेत्। शिखामाश्रित्य पितरो देवा देवर्षयस्तथा। सर्वाश्चाश्रयकर्माणि निवसन्ति शिखोपरि। ततः सन्तर्प्य ताः सर्वा देवर्षिपितृदेवताः। शिखासूत्रपरित्यागाद्देही ब्रह्ममयो भवेत्। यज्ञसूत्रशिखात्यागात् सन्न्यासः स्याद्द्विजन्मनाम्। शूद्राणामितरेषाञ्च शिखां हुत्वैव संस्क्रिया। ततो मुक्तशिखासूत्रः प्रणमेद्दण्डवद्गुरुम्। गुरुरुत्थाप्य तं शिष्यं दक्षकर्णे वदेदिमम्। तत्त्वमसि महाप्राज्ञ! हंसः सोऽहं विभावय। निर्ममो निरहङ्कारः स्वभावेन सुखं चर। ततो घटञ्च वह्निञ्च विसृज्य ब्रह्मतत्त्ववित्। आत्मस्वरूपं तं मत्वा प्रणमेच्छिरसा गुरुम्। नमस्तुभ्यं नमो मह्यं तुभ्यं मह्यं नमो नमः। त्वमेव त्वदहमेव विश्वरूप! नमोऽस्तु ते। ब्रह्ममन्त्रोपासकानां तत्त्वज्ञानां जितात्मनाम्। स्वमन्त्रेण शिखाच्छेदात् सन्न्यासग्रहणं भवेत्। ब्रह्मज्ञानविशुद्धानां किं यज्ञैः श्राद्धपूजनैः। स्वेच्छाचारपराणान्तु प्रत्यवायो न विद्यते। ततो निर्द्वन्द्वरूपोऽसौ निष्कामः स्थिरमानसः। निर्ममो विहरेच्छिष्यः साक्षाद्ब्रह्ममयो भुवि। मुक्तो विधिनिषेधाभ्यां निर्योगक्षेममात्मवित्। सुखदुःखसमो धीरो जितात्मा विगतस्पृहः। स्थिरात्मा प्राप्तदुःखोऽपि सुखे प्राप्तेऽपि निःस्पृहः। सदानन्दः शुचिः शान्तो निरपेक्षो निरा-

कुल:। नोद्वेजकः स्याज्जीवानां सदा प्राणिहिते रतः। विगतामर्षभीर्दान्तो, निःसङ्कल्पो निरुद्यमः। शोकद्वेषविमुक्तः स्याच्छत्रौ मित्रे समो भवेत्। शीतवातातपसहः समो मानापमानयोः। समः शुभाशुभे तुष्टो यदृच्छालाभवस्तुना। निस्त्रैगुण्यो निर्विकल्पो निर्लोभः स्यादसञ्चयी। यथा सत्यमुपाश्रित्य मृषा विश्वं प्रतिष्ठति। आत्माश्रितस्तथा देहो जानन्नेवं सुखी भवेत्। इन्द्रियाण्येव कुर्वन्ति स्वं स्वं कर्म पृथक् पृथक्। आत्मा साक्षी विनिर्लिप्तो ज्ञात्वैवं मोक्षभाग्भवेत्। धातुप्रतिग्रहं निन्दामनृतं क्रीड़नं स्त्रिया। रेतस्त्यागमसूयाञ्च सन्यासी परिवर्जयेत्। सर्वत्र समदृष्टिः स्यात् कीटे देवे तथा नरे। सर्वं ब्रह्मेति जानीयात् परिव्राट् सर्वकर्मसु। विप्रान्नं श्वपचान्नं वा यस्मात्तस्मात् समागतम्। देशं कालं तथा चान्नमश्नीयादविचारयन्। अध्यात्मशास्त्राध्ययनैः सदा तत्त्वविचारणैः। अवधूतो नयेत् कालं स्वेच्छाचारपरायणः। सन्यासिनां मृतं कायं दाहयेन्न कदाचन। सम्पूज्य गन्धपुष्पाद्यैर्निखनेद्वाप्सु मज्जयेत्। अप्राप्तयोगमर्त्यानां सदा कामाभिलाषिणाम्। प्रभावाज्जायते देवि! प्रवृत्तिः कर्मसङ्कुले। अत्रापि ते सानुरक्ता ध्यानार्चा जपसाधने। श्रेयस्तदेव जानन्तस्तत्रैव दृढ़निश्चयः। अतः कर्मविधानानि प्रोक्तानि चित्तशुद्धये। नामरूपं बहुविधं तदर्थं कल्पितं मया। ब्रह्मज्ञानं विना देवि! कर्मसन्यसनं विना। कुर्वन् कल्पशतं कर्म न भवेन्मुक्तिभाजनः। कुलावधूतस्तत्त्वज्ञो जीवन्मुक्तो नराकृतिः। साक्षान्नारायणं मत्वा गृहस्थस्तं प्रपूजयेत्। यतेर्दर्शनमात्रेण विमुक्तः सर्वपातकात्। तीर्थव्रततपोदानसर्वयज्ञफलं लभेत्॥ इत्यवधूताश्रमः॥

सङ्केदास्तु चतुर्दशोल्लासे॥ देव्युवाच॥ द्विविधावाश्रमौ

प्रोक्तौ गार्हस्थौ भैक्षुकस्तथा। किमिदं श्रूयते चित्रमवधूता-श्चतुर्विधाः। एतद्वेदितुमिच्छामि तत्त्वतः कथय प्रभो!। चतुर्विधावधूतानां लक्षणं सविशेषतः॥ श्रीसदाशिव उवाच॥ ब्रह्ममन्त्रोपासका ये ब्राह्मणक्षत्रियादयः। गृहाश्रमे वसन्तो-ऽपि ज्ञेयास्ते यतयः प्रिये!। पूर्णाभिषेकविधिना संस्कृता ये च मानवाः। शैवावधूतास्ते ज्ञेयाः पूजनीयाः कुलार्च्चिते!। ब्रह्मावधूताः शैवाश्च स्वाश्रमाचारवर्त्तिनः। विदध्युः सर्वकर्म्माणि शम्भदीरितवर्त्मना। विना ब्रह्मार्पितञ्चैते तथा चक्रार्पितं विना। निषिद्धमन्नं तोयञ्च न गृह्णीयुः कदाचन। ब्रह्मावधूत-कौलानां कौलानामभिषेकिणाम्। प्रागेव कथितं धर्म्ममाचा-रांश्च वरानने!। स्नानं सन्न्यसनं पानं दानञ्च दाररक्षणम्। सर्व्वमागममार्गेण शैवब्रह्मावधूतयोः॥

निर्व्वाणतन्त्रे चतुर्दशपटले॥ श्रीशङ्कर उवाच॥ शृणु देवि! प्रवक्ष्यामि अवधूतो यथा भवेत्। वीरस्य मूर्त्तिं जानीयात् सदा तत्त्वपरायणः। यद्रूपं कथितं सर्व्वं सन्न्यासधारणं परम्। तद्रूपसर्व्वकर्म्माणि प्रकुर्य्याद्वीरवल्लभः। दण्डिनो मुण्डनं चामावास्यायामाचरेद्यथा। तथा ैव प्रकुर्य्यात्तु वीरस्य मुण्डनं प्रिये!। असंस्कृतं केशजाल-मुक्तालम्बिकचोच्चयम्। अस्थिमालाविभूषा वा रुद्राक्षानपि धारयेत्। दिगम्बरो वा वीरेन्द्रश्चाथवा कौपिनी भवेत्। रक्तचन्दनसिक्ताङ्गं कुर्य्याद्भस्माङ्गभूषणम्॥

योगसारे द्वितीयपरिच्छेदे॥ नृकरोटिं विधार्य्यैश्च काष्ठदण्डं तथा प्रिये!। परशुं चाजिनञ्चैव योगीव धारयेत् सदा। खट्वाङ्गं धारयेद्योगी वासरूपकवाससी। कपाले धारयेच्चन्द्रं चन्द-नाद्यैर्विशेषतः। ईषत्पिङ्गलकं वस्त्रं धारयेत् सर्व्वदा सुत। सुत इति शिवस्य सम्बोधनम्॥ सुदर्शनाख्यं यच्चक्रं तस्य

सन्धारयेद्‌बुध:। तिपञ्चीं कपिलञ्चैव मड्ड,डिण्डिमझर्झरान्। वादयन् डमरुं योगी यत्र कुलाश्रमे स्थित:॥ निर्वाणतन्त्रे॥ क्षमा दानं ततो ध्यानं बालभावेन शैलजे!। शिवोऽहं भैरवानन्दो मुक्तोऽहं कुलनायक:। एवं भावपरो मन्त्री हेतुयुक्त: सदाशिव:। संविदासेवनं कुर्य्यात् सदा कारणसेवनम्। भवेत् साक्षात् स पुरुष: शम्भुरूपो न संशय:॥ महानिर्वाणतन्त्रे॥ ब्राह्मण: क्षत्रियो वैश्य: शूद्र: सामान्य एव च। कुलावधूतसंस्कारे पञ्चानामधिकारिता॥ निर्वाणतन्त्रे॥ निर्वाणमुक्तिमाप्नोति ब्राह्मणो वीरभावत:। अवधूत: क्षत्रियश्च महायोगी न संशय:। स्वरूपोऽपि भवेद्वैश्य: शूद्रोऽपि सह लोकवान्। सम्पूर्णफलमाप्नोति विप्रो निर्वाणतां व्रजेत्। त्रिभागं फलमाप्नोति क्षत्रियो वीरभावत:। पादद्वयन्तु वैश्यस्य शूद्रस्य चैकपादकम्॥ दशानामवधूतानां प्रत्येकं नाम प्रागुक्तमिदानीमपि तेषां प्रधानत्वेनाङ्गीकरणार्थं संज्ञाकथनं गर्भलक्षणविशेषमाह तत्रैव॥ अवधूतस्य चाख्यानं शृणुष्व पर्वतात्मजे!। वनारण्ये भारती च गिरिश्च पुरिरेव च। एकस्थाने तु संस्थित्य इष्टध्यानादिकं चरेत्। यो मन्त्रदानं तपसा स वन: परिकीर्त्तित:। मस्तकेशो जटाजूट: सदा वातूलवच्चरेत्। अन्तर्योगी महावीरोऽरण्यसञ्ज्ञश्च शैलजे!। नानाशास्त्रेषु यो विज्ञो नानाकर्म्मविशारद:। सदेष्टदेवीभावेन भावयेद्यो हि चामलाम्। स एव भारती वीरो महाज्ञानी जितेन्द्रिय:। सदोर्द्ध्वबाहुर्यो वीरो मुक्तकेशो दिगम्बर:। सर्व्वत्र समभावेन भावयेद्यो नरोत्तम:। इष्टदेवीं विना नास्ति स गिरि: प्रकीर्त्तित:। नानादेशेषु पीठेषु क्षेत्रेषु तीर्थभूमिषु। भ्रमणं कुरुते नित्यं कुर्य्याद्‌यत्नेन पूजनम्। देवताया: सदा ध्यानं श्रीगुरो: पूजनं तथा। अन्तर्यागेषु यो निष्ठ: स वीर: पुरिरेव च। अवधूताश्रमे देवि!

यस्य भक्तिः सुनिश्चला। तस्य तुष्टा भवेत् काली किं न सिध्यति भूतले। अवधूतं समालोक्य शम्भुवत् पूजनं चरेत्। भक्तितः पञ्चतत्त्वानि यत्नेनैव निवेदयेत्। अशक्तः परमेशानि! भक्तितः परितोषयेत्॥ महानिर्वाणतन्त्रे॥ भक्तावधूतो द्विविधः पूर्णापूर्णविभेदतः। पूर्णः परमहंसाख्यः परिव्राडपरः स्मृतः। कृतावधूतसंस्कारो यदि स्याज्ज्ञानदुर्बलः। तदा लोकालये तिष्ठन्नात्मानं स तु शोधयेत्। रक्षन् स्वजातिचिह्नञ्च कुर्वन् कर्माणि केवलम्। सदा ब्रह्मपरो भूत्वा साधयेज्ज्ञानमुत्तमम्॥

मुण्डमालातन्त्रे द्वितीयपटले॥ अवधूतः शिवः साक्षादवधूतः सदाशिवः। अवधूतो शिवा देवी अवधूताश्रमं शृणु। चतुराश्रमिणां मध्ये अवधूताश्रमो महान्। अवधूतश्च द्विविधो गृहस्थश्च चितानुगः। सचेलश्चापि दिग्वासा विधियोनिविहारवान्। सदारः सर्वदारस्थो अट्टहासी दिगम्बरः। गृहावधूतो देवेशि! द्वितीयस्तु सदाशिवः। अवधूतस्य ओं तत्सदिति मन्त्रेण कर्म्म कर्त्तव्यमाह महानिर्वाणतन्त्रे॥ ओं तत्सन्मन्त्रमुच्चार्य्य सोऽहमस्मीति चिन्तयन्। कुर्य्यादात्मोचितं कर्म सदा वैराग्यमाश्रितः। कुर्वन् कर्माण्यनासक्तो नलिनीदलनीरवत्। यतेतात्मानमुद्धर्त्तुं तत्त्वज्ञानविवेकतः। सर्वेषामों तत्सदिति निर्देशेन कर्म्मफलमाह तत्रैव॥ ओं तत्सदिति मन्त्रेण यो यत्कर्म समाचरेत्। गृहस्थो वाप्युदासीनस्तस्याभीष्टाय तद्भवेत्। तन्मन्त्रक्रियमाणकर्मणः सम्पूर्णत्वमपि तत्रैव॥ जपहोमप्रतिष्ठा च संस्काराद्यखिलाः क्रियाः। ओं तत्सदिति निष्पन्नाः सम्पूर्णाः स्युर्न संशयः। किमन्यैर्बहुभिर्मन्त्रैः किमन्यैर्भूरिसाधनैः। ब्राह्मेणानेन मन्त्रेण सर्वकर्माणि साधयेत्। सुखसाध्यमबाहुल्यं सम्पूर्णफलदायकम्। नास्त्येतस्मान्महामन्त्रादुपायान्तरमम्बिके!। पुरप्रदेशे देहे वा

लिखित्वा धारयेदिदम् । गेहे तस्य महातीर्थं देहः पुण्यमयो भवेत् । निगमागमतन्त्राणां सारात्सारतरो मनुः । ओं तत्सदिति देवेशि ! तवाग्रे सत्यमीरितम् । चतुर्विधानां तत्त्वानामन्येषामपि वस्तुनाम् । मन्त्रान्यैः शोधनेनालं स्याच्चेदेतेन शोधितम् । पश्यन् सर्वत्र सद्रूपं जपंस्तत्सन्महामनुम् । स्वेच्छाचारः शुद्धचित्तः स एव भुवि कौलराट् । जपादस्य भवेत् सिद्धो मुक्तः स्यादर्थचिन्तनात् । साक्षाद्ब्रह्ममयो देही सार्थमेनं जपेन्मनुम् । त्रिपदोऽयं महामन्त्रः सर्वकारणकारणम् । साधनादस्य मन्त्रस्य भवेन्मृत्युञ्जयः स्वयम् । युग्मयुग्मपदं वापि प्रत्येकं पदमेव वा । जप्तैतस्य महेशानि ! साधकः सिद्धिभाग्भवेत् ॥ इति मन्त्रप्रशंसा ॥

शैवावधूतस्य सर्वकर्मानधिकारमाह तत्रैव ॥ शैवावधूतसंस्कारविधूताखिलकर्मणः । नापि देवे न वा पित्रे नार्षे कृत्येऽधिकारिता ॥

अथ परमहंसः ॥ चतुर्णामवधूतानां तुरीयो हंस उच्यते । त्रयोऽन्ये योगभोगाढ्या मुक्ताः सर्वे शिवोपमाः । हंसो न कुर्य्यात् स्त्रीसङ्गं न विधत्ते परिग्रहम् । प्रारब्धमश्नन् विहरेन्निषेधविधिवर्जितः । त्यजेत् स्वजातिचिह्नानि कर्माणि गृहमेधिनाम् । तुरीयो विचरेत् क्षोणीं निःसङ्कल्पो निरुद्यमः । सदात्मभावसन्तुष्टः शोकमोहविवर्जितः । निर्निकेतस्तितिक्षुः स्यान्निःसङ्गो निरुपद्रवः । नार्पणं भक्ष्यपेयानां न तस्य ध्यानधारणा । मुक्तो विमुक्तो निर्द्वन्द्वो हंसाचारपरो यतिः । इति ते कथितं देवि ! चतुर्णां कुलयोगिनाम् । लक्षणं सविशेषेण साधूनां मत्स्वरूपिणाम् । एतेषां दर्शनात् स्पर्शादालापात् परितोषणात् । सर्वतीर्थफलावाप्तिर्जायते मनुजन्मनाम् ॥

अथ आचारभेदाः॥ वेदाचारस्तु पूर्व्वमुक्तः। अधुना वैष्णवादिरुच्यते। निरुत्तरतन्त्रे प्रथमपटले॥ अथ वक्ष्ये महेशानि! वैष्णवाचारमुत्तमम्। यस्य विज्ञानमात्रेण कालः स्यादिह स्थिताञ्जलिः। वेदाचारक्रमेणैव सदा नियमतत्परः। मैथुनं तत्कथालापं कदाचिन्नैव कारयेत्। हिंसां निन्दाञ्च कौटिल्यं वर्जयेन्मांसभोजनम्। रात्रौ मालाञ्च यन्त्रञ्च स्पृशेन्नैव कदाचन। विष्णुं समर्च्चयेद्देवि! विष्णौ कर्म्म निवेदयेत्। भावयेत् सर्व्वदा देवि! सर्व्वं विष्णुमयं जगत्। इति वैष्णवाचारः॥

तथा॥ शृणु चार्व्वङ्गि! सुभगे! शैवाचारं सुदुर्लभम्। वेदाचारक्रमेणैव शैवे शाक्ते व्यवस्थितम्। तद्विशेषं महादेवि! केवलं पशुघातनम्। इदानीं शृणु वक्ष्यामि दक्षिणाचारमद्रिजे!। दक्षिणामूर्त्तिमुनिना आश्रितोऽसौ यतः पुरा। अतएव महेशानि! दक्षिणाचार उच्यते। प्रावर्त्तकोऽयमाचारः प्रथमो दिव्यवीरयोः। वेदाचारक्रमेणैव पूजयेत् परमेश्वरीम्। स्वीकृत्य विजयां रात्रौ जपेन्मन्त्रमनन्यधीः॥ तृतीयपटले॥ दिव्यवीरमतं भद्रे! शृणु सर्व्वाङ्गसुन्दरि!। समासतः प्रवक्ष्यामि पञ्चमाचारमुत्तमम्। दिवसेषु महेशानि! ब्रह्मचारी समाहितः। पञ्चतत्त्वानुकल्पेन रात्रौ देवीं समर्च्चयेत्। अपरं शृणु वक्ष्यामि सारात्सारं परात्परम्। ब्रह्मानन्दमयी ज्ञाने तव स्नेहेन पार्व्वति!। वेदशास्त्रपुराणेषु गूढो ज्ञानसमुच्चयः। काष्ठमध्ये यथा वह्निस्तथा देवि! प्रतिष्ठितः। अश्वमेधक्रतौ नैव वाजिहत्या यथा भवेत्। तथैव परमेशानि! यज्ञे दोषो न विद्यते। शुद्धाशुद्धं भवेच्छुद्धं शोधनादेव पार्व्वति!। एतदेव महेशानि! सिद्धान्ताचारलक्षणम्॥ समयाचारतन्त्रे द्वितीयपटले॥ स्नातः शुक्लाम्बरधरः शुद्धवेशधरस्तथा। देवपूजारतो नित्यं तथा विष्णुपरो दिवा। नक्तं द्रव्यादिकं सर्व्वं यथा

लाभेन चोत्तमम्। विधिवत् क्रियते भक्त्या स सर्वञ्च फलं लभेत्॥ कुलाचारं पश्चादुपपादयिष्यति॥ इत्याचारभेदाः॥

इति श्रीप्राणतोषिण्यां सप्तमे निर्गुणकाण्डे पशुभावादिनिर्णयादिरूपग्रन्थिकथनं नाम प्रथमः परिच्छेदः॥

अथ पूर्णाभिषेकः॥ महानिर्वाणतन्त्रे दशमोल्लासे॥ श्रीसदाशिव उवाच॥ विधानमेतत् परमं गुप्तमासीज्जगत्त्रये। गुप्तभावेन कुर्वन्तो नरा मोक्षं ययुः पुरा। प्रबले कलिकाले तु प्रकाशे कुलवर्त्मनः। नक्तं वा दिवसे कुर्य्यात् सप्रकाशाभिषेचनम्। नाभिषेकं विना कौलः केवलं मद्यसेवनात्। पूर्णाभिषिक्तः कौलः स्याच्चक्राधीशः कुलार्चकः। तत्राभिषेकपूर्वाह्णे सर्वविघ्नोपशान्तये। यथाशक्त्युपचारेण विघ्नेशं पूजयेद्गुरुः। गुरुश्चेन्नाधिकारी स्याच्छुभपूर्णाभिषेचने। तथाभिषिक्तकौलेन तत्सर्वं साधयेत् प्रिये!। खान्तार्णं विन्दुसंयुक्तं बीजमस्य प्रकीर्त्तितम्। गणकोऽस्य ऋषिश्छन्दो नीवृद्विघ्नस्तु देवता। कर्त्तव्यकर्मणो विघ्नशान्त्यर्थं विनियोगिता। षड्दीर्घयुक्तमूलेन षड़ङ्गानि समाचरेत्। प्राणायामं ततः कृत्वा ध्यायेद्गणपतिं शिवे!॥ सिन्दूराभं त्रिनेत्रं पृथुतरजठरं हस्तपद्मैर्दधानम् खङ्गं पाशाङ्कुशेष्टान्यरुणकरलसद्वारुणीपूर्णकुम्भम्। बालेन्दूद्दीप्तमौलिं करिपतिवदनं बीजपूराद्र्रगण्डं भोगीन्द्राबद्धभूषं भजत गणपतिं रक्तवस्त्राङ्गरागम्॥ ध्यात्वैवं मानसैरिष्ट्वा पीठशक्तिं प्रपूजयेत्। तीव्रा च ज्वालिनी नन्दा भोगदा कामरूपिणी। उग्रा तेजस्वती सत्या मध्ये विघ्नविनाशिनी। पूर्वादितोऽर्चयित्वैताः पूजयेत् कमलासनम्। पुनर्ध्यात्वा गणेशानं पञ्चतत्त्वोपचारकैः। अभ्यर्च्य च चतुर्दिक्षु गणेशं गणनायकम्। गणनाथं गणक्रीड़ं यजेत् कौलिनि! सत्तमः। एकदन्त वक्रतुण्ड लम्बोदरगजाननौ। महादेवञ्च विकटं

धूम्राभं विघ्ननाशनम्। ततो ब्राह्मीमुखा शक्तीर्दिक्पालांश्च प्रपूजयेत्। तेषामस्त्राणि सम्पूज्य विघ्नराजं विसर्जयेत्। एवं सम्पूज्य विघ्नेशमधिवासनमाचरेत्। भोजयेच्च पञ्चतत्त्वै-र्ब्रह्मज्ञान् कुलसाधकान्। ततः परदिने स्नातः कृतनित्यो-दितक्रियः। आजन्मकृतपापानां क्षयार्थं तिलकाञ्चनम्। उत्सृजेत् कौलतुष्ट्यर्थं भोज्येकैकमपि प्रिये!। अर्घ्यं दत्त्वा दिनेशाय ब्रह्मविष्णुनवग्रहान्। अर्चयित्वा मातृगणान् वसुधारां प्रकल्पयेत्। कर्मणोऽभ्युदयार्थाय वृद्धिश्राद्धं समाचरेत्। ततो गत्वा गुरोः पार्श्वं प्रणम्य प्रार्थयेदिदम्। एहि नाथ! कुलाचार! नलिनीकुलवल्लभ!। त्वत्पदाम्भोरुहच्छायां देहि मूर्ध्नि कृपा-निधे!। आज्ञां देहि महाभाग! शुभपूर्णाभिषेचने। निर्विघ्नं कर्मणः सिद्धिमुपैमि त्वत्प्रसादतः। शिवशक्त्याज्ञया वत्स! कुरु पूर्णाभिषेचनम्। मनोरथमयी सिद्धिर्जायतां शिवशासनात्। इत्यमाज्ञां गुरोः प्राप्य सर्वोपद्रवशान्तये। आयुर्लक्ष्मीबला-रोग्यावाप्त्यै सङ्कल्पमाचरेत्। ततस्तु कृतसङ्कल्पो वस्त्रालङ्कार-भूषणैः। कारणैः शुद्धिसहितैरभ्यर्च्य वृणुयाद्गुरुम्। गुरुर्मनो-हरे गेहे गैरिकादिविचित्रिते। चित्रध्वजपताकाभिः फल-पुष्पेण शोभिते। किङ्किणीजालमालाभिश्चन्द्रातपविभूषिते। घृतप्रदीपावलिभिस्तमोलेशविवर्जिते। कर्पूरसहितैर्धूपैर्यक्षधूपैः सुवासिते। व्यजनैश्चामरैर्बर्हैर्दर्पणाद्यैरलङ्कृते। सार्द्धहस्तमितां वेदीमुच्चकैश्चतुरङ्गुलाम्। रचयेन्मृण्मयीं तत्र चूर्णैरक्षतसम्भवैः। मण्डलं सर्वतोभद्रं विदध्यात् श्रीगुरुस्ततः। स्वस्वकल्पोक्त-विधिना कुर्य्यादर्चाविधिक्रियाम्। कृत्वा पूर्वोक्तविधिना पञ्चतत्त्वानि शोधयेत्। संशोध्य पञ्चतत्त्वानि पूर्वकल्पित-मण्डले। स्वर्णं वा राजतं ताम्रं मृण्मयं घटमेव वा। क्षालितं चन्द्रबीजेन दध्यक्षतविचर्चितम्। स्थापयेद्ब्रह्मबीजेन सिन्दूरे-

याज्ञयेत् श्रिया। क्षकाराद्यै रकारान्तैर्वर्णैर्विन्दुविभूषितैः। मूलमन्त्रप्रजापेन पूरयेत् कारणेन तम्। अथवा तीर्थतोयेन शुद्धेन पाथसापि वा। नवरत्नं सुवर्णं वा घटमध्ये विनिक्षिपेत्। पनसोडुम्बराश्वत्थवकुलाम्रसमुद्भवम्। पल्लवं तन्मुखे दद्याद्वाग्भवेन कृपानिधिः। शरावं मार्त्तिकञ्चापि फलाक्षतसमन्वितम्। रमां मायां समुच्चार्य्य स्थापयेत् पल्लवोपरि। बध्नीयाद् वस्त्रयुग्मेन ग्रीवां तस्य वरानने!। शक्तौ रक्तं शिवे विष्णौ श्वेतवासः प्रकीर्त्तितम्। स्त्रां स्त्रीं मायां रमां स्मृत्वा स्थिरीकृत्य घटान्तरे। निक्षिप्य पञ्चतत्त्वानि नवपात्राणि विन्यसेत्। राजतं शक्तिपात्रं स्याद्रूपाचं हिरण्मयम्। श्रीपात्रन्तु महाशङ्खं ताम्राद्यन्यानि कल्पयेत्। पाषाणदारुलौहानां पात्राणि परिवर्ज्जयेत्। शक्त्या प्रकल्पयेत् पात्रं महादेव्याः प्रपूजने। पात्राणां स्थापनं कृत्वा गुरून् देवीं प्रतर्पयेत्। ततस्त्वमृतसम्पूर्णघटमभ्यर्च्चयेत् सुधीः। दर्शयित्वा धूपदीपौ सर्वभूतबलिं हरेत्। प्राणायामं ततः कृत्वा ध्यात्वावाह्य महेश्वरीम्। स्वशक्त्या पूजयेदिष्टां वित्तशाठ्यं विवर्जयेत्। होमन्तु कृत्वा निष्पाद्य कुमारीशक्तिसाधनम्। पुष्पचन्दनवासोभिरर्चयेत् स गुरुः शिवे!। अनुगृह्णन्तु कौला मे शिष्यं प्रति कुलव्रताः। पूर्णाभिषेकसंस्कारे भवद्भिरनुमन्यताम्। एवं पृच्छति चक्रेशे ते ब्रूयुर्गुरुमादरात्। महामायाप्रसादेन प्रभावात् परमात्मनः। शिष्यो भवति पूर्णस्ते परतत्त्वपरायणः। शिष्येण च गुरुर्देवीमर्चयित्वार्चिते घटे। कामं मायां रमां जप्त्वा चालयेद्घटमुत्तमम्। उत्तिष्ठ ब्रह्मकलसमुत्तराभिमुखं गुरुः। मन्त्रैरेतैर्वक्ष्यमाणैरभिषिञ्चेत् कृपान्वितः। शुभपूर्णाभिषेकस्य सदाशिव ऋषिः स्मृतः। छन्दोऽनुष्टुप् देवताद्या प्रणवं वीजमीरितम्। शुभपूर्णाभिषेकार्थे

विनियोगः प्रकीर्त्तितः। गुरवस्त्वाभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः। दुर्गालक्ष्मीभवान्यस्त्वामभिषिञ्चन्तु मातरः॥ १॥ षोड़शी तारिणी नित्या स्वाहा महिषमर्दिनी। एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा॥ २॥ जयदुर्गा विशालाक्षी ब्रह्माणी च सरस्वती। एतास्त्वामभिषिञ्चन्तु वगला वरदा शिवा॥ ३॥ नारसिंही च वाराही वैष्णवी वनमालिनी। इन्द्राणी वारुणी रौद्री त्वाभिषिञ्चन्तु शक्तयः॥ ४॥ भैरवी भद्रकाली च तुष्टिः पुष्टिरुमा क्षमा। श्रद्धा कान्तिर्दया शान्तिरभिषिञ्चन्तु ते सदा॥ ५॥ महाकाली महालक्ष्मीर्महानीलसरस्वती। उग्रचण्डा प्रचण्डा च अभिषिञ्चन्तु सर्वदा॥ ६॥ मत्स्यः कूर्मो वराहश्च नृसिंहो वामनस्तथा। रामो भार्गवरामस्त्वामभिषिञ्चन्तु वारिणा॥ ७॥ असिताङ्गो रुरुश्चण्डः क्रोधोन्मत्तभयङ्करः। कपाली भीषणश्च त्वामभिषिञ्चन्तु वारिणा॥ ८॥ काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी। विप्रचित्ता महोग्रा त्वामभिषिञ्चन्तु सर्वदा॥९॥ इन्द्रोऽग्निः शमनो रक्षो वरुणः पवनस्तथा। धनदश्च महेशानः सिञ्चन्तु त्वां दिगीश्वराः॥ १०॥ रविः सोमो मङ्गलश्च बुधो जीवः सितः शनिः। राहुः केतुः सनक्षत्रा अभिषिञ्चन्तु ते ग्रहाः॥ ११॥ नक्षत्रं करणं योगो वाराः पक्षौ दिनानि च। ऋतुर्म्मासो हायनस्त्वामभिषिञ्चन्तु सर्वदा॥ १२॥ लवणेक्षुसुरासर्पिर्दधिदुग्धजलान्तकाः। समुद्रास्त्वाभिषिञ्चन्तु मन्त्रपूतेन वारिणा॥ १३॥ अनन्ताद्या महानागाः सुपर्णाद्याः पतत्रिणः। तरवः कल्पवृक्षाद्याः सिञ्चन्तु त्वां दिगीश्वराः॥ १४॥ पातालभूतलव्योमचारिणः क्षेमचारिणः। पूर्णाभिषेकसन्तुष्टा अभिषिञ्चन्तु पाथसा॥ १५॥ दौर्भाग्यं दुर्यशो रोगा दौर्म्मनस्यं तथा शुचः। विनश्यन्त्वभिषेकेन कालीवीजेन ताड़िताः॥ १६॥ भूतप्रेतपिशाचाश्च ग्रहा

ये रिष्टकारिणः । विद्रुतास्ते विनश्यन्तु रमाबीजेन ताड़िताः ॥ १७ ॥ अभिसारकृता दोषा वैरिमन्त्रोद्भवाश्च ये । मनोवाक्-कायजा दोषा विनश्यन्त्वभिषेचनात् ॥ १८ ॥ नश्यन्तु विपदः सर्वाः सम्पदः सन्तु सुस्थिराः । अभिषेकेण पूर्णेन पूर्णाः सन्तु मनोरथाः ॥१९॥ इत्येकाधिकविंशत्या मन्त्रैः संसिक्तसाधनम् । पश्चोर्मुखाल्लक्ष्ममन्त्रं पुनः संश्रावयेद्गुरुः ॥ पूर्वोक्तनाम्ना सम्बोध्य ज्ञापयन् शक्तिसाधकान् । दद्यादीन् कुलनाथान्त-माख्यानं कौलिको गुरुः । श्रुतमन्त्रगुरौ देवि ! सम्पूज्य निजदेवताम् । पञ्चतत्त्वोपचारेण गुरुमभ्यर्चयेत्ततः । गोभू-हिरण्यवासांसि यानालङ्करणानि च । गुरवे दक्षिणां दत्त्वा यजेत्कौलान् शिवात्मकान् । कृतकौलार्चनो धीरः शान्तोऽति-विनयान्वितः । श्रीगुरोश्चरणौ स्पृष्ट्वा भक्त्या नत्वेदमर्थयेत् । श्रीनाथ ! जगतां नाथ ! मन्नाथ ! करुणानिधे ! । परामृतप्र-दानेन पूरयास्मन्मनोरथम् । आज्ञा मे दीयतां कौलाः ! प्रत्यक्ष-शिवरूपिणः ! । मच्छिष्याय विनीताय ददामि परमामृतम् । चक्रेश ! परमेशान ! कौलपङ्कजभास्कर ! । कृतार्थं कुरु सच्छिष्यं देह्यसुषैः कुलामृतम् । आज्ञामादाय कौलानां परमामृत-पूरितम् ॥ सशुद्धिकं पानपात्रं शिष्यहस्ते समर्पयेत् । हृद्या-कृष्य गुरौ देवीं स्रुवसंलग्नभस्मना । स्वस्य शिष्यस्य कौलानां कूर्चे च तिलकं न्यसेत् ॥ कूर्चे भ्रूमध्ये ॥ ततः प्रसादतत्त्वानि कौलेभ्यः परिवेशयेत् । भक्तानुष्ठानविधिना विदध्यात् पान-भोजनम् । इति ते कथितं देवि ! शुभपूर्णाभिषेचनम् । ब्रह्म-ज्ञानैकजननं शिवत्वफलसाधनम् । नवरात्रं सप्तरात्रं पञ्च-रात्रं त्रिरात्रकम् । अथवाप्येकरात्रञ्च कुर्यात् पूर्णाभिषेच-नम् । संस्कारेऽस्मिन् महेशानि ! पञ्चकल्पाः प्रकीर्त्तिताः । नवरात्रे विधातव्यं सर्वतोभद्रमण्डलम् । नवनाभं सप्तरात्रे

पञ्चाङ्गं पञ्चरात्रके। त्रिरात्रं चैकरात्रे च पद्ममष्टदलं प्रिये!। मण्डले सर्वतोभद्रे नवनाभेऽपि साधकैः। स्थापनीया नवघटाः पञ्चाङ्गे पञ्चसङ्ख्यकाः। नलिनेऽष्टदले देवि! घटस्त्वेकः प्रकीर्त्तितः। अङ्गावरणदेवांश्च केशरादिषु पूजयेत्। पूर्णाभिषेकसिद्धानां कौलानां निर्म्मलात्मनाम्। दर्शनात् स्पर्शनाद्वापाद् शुद्धिर्विधीयते। शाक्तैर्वा वैष्णवैः शैवैः सौरैर्गाणपतैरपि। कौलवर्त्माश्रितः साधुः साधयेदतियत्नतः। तथा शक्तिपूजनं स्यात् पञ्चतत्त्वादि शोधयेत्। स्वेष्टपूजाविधानेन न तु चक्रेश्वरो भवेत्॥ तथा॥ उक्ताः प्रयोगा बहवः कर्म्माणि विविधानि च। ब्रह्मज्ञनिष्ठकौलस्य त्यागानुष्ठानयोः समम्। एकमेव परं ब्रह्म जगदावृत्य तिष्ठति। सर्वं तदन्वितं कर्म जानन्तो हि रताः प्रिये!। पृथक्त्वेन यजन्तोऽपि तत् प्रयान्ति विशन्ति च। सर्वं ब्रह्मणि सर्वत्र ब्रह्मैव पर्य्यवस्यति। ज्ञेयः स एव सत्कौलो जीवन्मुक्तो न संशयः॥

अथ पूर्णाभिषेकप्रयोगः॥ महानिर्वाणतन्त्रे॥ अभिषेकपूर्वाह्ने सर्वविघ्नोपशान्त्यर्थं यथाशक्त्युपचारेण गुरुर्विघ्नेशं पूजयेत्। गुरुस्तत्र चेन्नाधिकारी तदाभिषिक्तकौलं गुरुत्वेन स्वीकृत्य तेन सर्वं कारयेत्। गमिति गणेशस्य वीजं कृतनित्यक्रिय आसने उपविश्याचान्तोऽर्घ्यस्थापनादिभूतशुद्ध्यन्तं कर्म कृत्वा ऋष्यादिन्यासं कुर्य्याद् यथा। गणक ऋषिर्नीवृच्छन्दो विघ्नराजो देवता स्वकर्त्तव्यपूर्णाभिषेककर्मणः सर्वविघ्नशान्त्यर्थं जपे विनियोगः। शिरसि ओं गणक ऋषये नमः। मुखे नीवृच्छन्दसे नमः। हृदि विघ्नराजाय देवतायै नमः। गां हृदयाय नम इत्यादिनाङ्गन्यासकरन्यासौ विधाय मूलेन प्राणायामत्रयं कृत्वा ध्यायेद्यथा॥ सिन्दूराभं त्रिनेत्रं पृथुतरजठरं हस्तपद्मैर्दधानं खड्गं पाशाङ्कुशेष्टान्यरुणकरलसद्वारुणी-

पूर्णकुम्भम् । बालेन्दूद्दीप्तमौलिं करिपतिवदनं वीजपूरार्द्रगण्डं भोगीन्द्राबद्धभूषं भजत गणपतिं रक्तवस्त्राङ्गरागम् ॥ एवं ध्यात्वा मानसोपचारेण सम्पूज्य यन्त्रे घटे वा पीठशक्तीः पूजयेद्यथा । एते गन्धपुष्पे ओं तीव्रायै नमः । एवं सर्वत्र प्रणवादिनमोऽन्तेन ज्वालिन्यै नन्दायै कामरूपिण्यै उग्रायै तेजस्वत्यै सत्यायै मध्ये विघ्ननाशिन्यै पूर्वादिक्रमेण पूजयेत् । तत एते गन्धपुष्पे ओं कमलासनाय नमः । पुनर्ध्यात्वा घटादौ दत्त्वा गणेश इहागच्छेत्यावाह्य पाद्यादिभिः पञ्चतत्त्वोपचारैश्च सम्पूज्य चतुर्दिक्षु एते गन्धपुष्पे गणेशाय नमः । एवं गणनायकाय गणनाथाय गणक्रीड़ाय एकदन्ताय वक्रतुण्डाय लम्बोदराय गजाननाय महादेवाय विकटाय धूम्राभाय विघ्ननाशनाय सर्वत्र प्रणवादिनमोऽन्तेन गन्धपुष्पाभ्यां पूजयेत् । ब्राह्म्यै माहेश्वर्य्यै कौमार्य्यै वैष्णव्यै वाराह्यै इन्द्राण्यै नारसिंह्यै महालक्ष्म्यै इन्द्रादिदिक्पालेभ्यो वज्राद्यस्त्रेभ्यो नम इत्यनेन पूजयित्वा ततो यथाशक्ति मूलमन्त्रं जप्त्वा जपं समर्प्य प्रणम्य गणपते क्षमस्वेति विसर्जयेत् । ततो दीक्षापद्धत्युक्तमधिवासनं कृत्वा ब्रह्मज्ञकुलसाधकान् पञ्चतत्त्वैर्भोजयेत् । ततः परदिने स्नातः कृतनित्यक्रियः ओं तत्सदित्युच्चार्य्य ओं अद्येत्यादि अमुके मासि अमुकराशिस्थे भास्करेऽमुके पक्षेऽमुकतिथौ अमुकगोत्रः श्रीअमुकदेवशर्म्मा आजन्मज्ञानाज्ञानकृतपापक्षयकाम एतत् सतिलकाञ्चनं विष्णुदैवतं यथासम्भवगोत्रनाम्ने ब्राह्मणायाहं सम्प्रददे ॥ इति तिलकाञ्चनमुत्सृज्य दक्षिणां दद्यात् । ततः कौलत्रयस्यैव भोज्यमेकमुत्सृजेत् । ततः सूर्य्यायार्घ्यं दत्त्वा ब्रह्मविष्णुनवग्रहान् सम्पूज्य गौर्य्यादिषोड़शमातृकापूजावसुधारासम्पातनायुष्यसूक्तजपाभ्युदयिकश्राद्धानि कृत्वा गुरोः पार्श्वं गत्वा प्रणम्य प्रार्थयेत् । ओं एहि नाथ ! कुलाचार !

नलिनीकुलवल्लभ!॥ त्वत्पादाम्भोरुहच्छायां देहि मूर्द्ध्नि कृपानिधे!। आज्ञां देहि महाभाग! शुभपूर्णाभिषेचने। निर्विघ्नं कर्म्मणः सिद्धिमुपैमि त्वत्प्रसादतः॥ ततो गुरुर्वदेत्॥ ओँ शिवशक्त्याज्ञया वत्स! कुरु पूर्णाभिषेचनम्। मनोरथमयी सिद्धिर्जायतां शिवशासनात्। इति गुरोरनुज्ञां गृहीत्वा अद्येत्यादि अमुकगोत्रः श्रीअमुकदेवशर्म्मा आयुर्लक्ष्मीबलारोग्यप्राप्तिकामो महानिर्वाणतन्त्रीयदशमपरिच्छेदोक्तपूर्णाभिषेकमहं करिष्ये। इति सङ्कल्प्य ओँ यज्जाग्रत इति ओँ देवी व इति वा पठेत्। ततः ओँ साधुभवानास्तामित्यादि कर्म्म कृत्वा वस्त्रालङ्करणादिना सम्बुद्धिकारणेन च गुरुमभ्यर्च्य ओँ अद्येत्यादि मत्सङ्कल्पितमहानिर्वाणतन्त्रीयदशमपरिच्छेदोक्तपूर्णाभिषेककर्म्मणि अमुकगोत्रं श्रीअमुकानन्दनाथं गुरुत्वेन गुरुकर्म्मकरणाय वा भवन्तमहं वृणे इति शिष्यो वदति। ओँ वृतोऽस्मीति गुरुर्ब्रूयात्। ततः शिष्यः, ओँ यथाविहितं गुरुकर्म कुरु इति शिष्यो वदति। ओँ यथाज्ञानतः करवाणीति गुरुर्ब्रूयात्। ततो गुरुर्मनोहरगृहे सुचित्रिते चित्रध्वजपताकाचन्द्रातपाद्युपशोभिते धूपगुग्गुल्वादिभिः सुवासिते घृतप्रदीपमालाविगतान्धकारलेशे चतुरङ्गुलोच्छ्रायसार्द्धहस्तमितमृण्मयवेदिकायां सर्बतोभद्रादिमण्डलं पञ्चवर्णरजोभिर्विदध्यात्॥

तत्र क्रमः॥ नवरात्राभिषेके सर्वतोभद्रं सप्तरात्राभिषेके नवनाभं पञ्चरात्राभिषेके पञ्चाब्जं त्रिरात्रैकरात्राभिषेके अष्टदलपद्मं निर्म्माय तत्र घटस्थापनं दीक्षापद्धत्युक्तं कुर्य्यात्। ततः पञ्चतत्त्वादिकं संशोध्य ठमिति चन्द्रबीजेन घटे दध्यक्षतौ दद्यात्। ओमिति ब्रह्मबीजेन घटं स्थापयेत्। श्रीमिति लक्ष्मीबीजेन घटे सिन्दूरं दद्यात्। सबिन्दुकैः चकाराद्यकारान्तैर्वर्णैर्मूलमन्त्रेण ठकारेण घटं पूरयेत्। अथवा तीर्थतोयेन

शुद्धजलेन वा पूरयेत्। नवरत्नं स्वर्णं वा घटमध्ये निक्षिपेत्। पनसोडुम्बराश्वत्थवकुलाम्राणां पञ्चपल्लवानि ऐमिति वाग्भव-वीजेन घटमुखे दद्यात्। फलाक्षतयुक्तनूतनशरावं श्रीमिति क्लीमिति मन्त्रेण तदुपरि दद्यात्। वस्त्रयुग्मेन घटस्य ग्रीवां बध्नीयात्। तत्र क्रमः। शाक्ते रक्तेन शैवे वैष्णवे च श्वेतेन। ततः स्थां स्थीं क्लीमिति श्रीमिति मन्त्रेण घटं स्थिरीकृत्य घट-श्रीपात्रयोर्मध्ये दक्षिणादितो नव पात्राणि स्थापयेत्। तत्र क्रमः। शक्तिपात्रं राजतं गुरुपात्रं हिरण्मयं वीरपात्रं महा-शङ्खमात्मपात्रमपि तथा। अथवा पाषाणदारुलौहभिन्नानि पात्राणि कुर्य्यात्। ततो गुरुं देवीञ्च कारणेन तर्पयेत्। ततः कारणपूर्णघटे स्वस्वकल्पोक्तविधिना देवतां सम्पूज्य यथा-शक्ति जप्त्वा जपं समर्प्य बलिदानादिकं कृत्वा स्वकवचादिकं पठित्वाष्टोत्तरं सहस्रं शतं वा हुत्वा गन्धपुष्पवस्त्रमाल्यपात्रा-दिभिः कुमारीशक्तिसाधकान् सम्पूज्य। ओं अनुगृह्णन्तु कौला मे शिष्यं प्रति कुलव्रताः। पूर्णाभिषेक संस्कारे भवद्भिरनुमन्य-ताम्। इति चक्रेश्वरे पठति ते ब्रूयुः। ओं महामायाप्रभावेण प्रभावात् परमात्मनः। शिष्यो भवति पूर्णस्ते परतत्त्वपरा-यणः। ततो गुरुः पूर्वोक्तघटे शिष्येण देवीमर्चयित्वा श्रीमिति क्लीमिति जप्त्वा घटं चालयेत्। ओं उत्तिष्ठ ब्रह्मकलस! देवता-भीष्टसिद्धिदः। सर्वतीर्थाम्बुपूर्णेन पूरयास्य मनोरथम्। इति पठित्वा। सदाशिव ऋषिरनुष्टुप्छन्दः शिष्येष्टदेवता प्रणवो वीजं आयुःकीर्त्तिबलारोग्याद्यवाप्त्यै पूर्णाभिषेके विनियोगः। ओं गुरवस्त्वाभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः। दुर्गालक्ष्मी-भवान्यस्त्वामभिषिञ्चन्तु मातरः॥१॥ षोड़शी तारिणी नित्या स्वाहा महिषमर्दिनी। एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा॥२॥ जयदुर्गा विशालाक्षी ब्रह्माणी च सरस्वती।

एतस्त्वामभिषिञ्चन्तु वगला वरदा शिवा ॥ ३ ॥ नारसिंही च वाराही वैष्णवी वनमालिनी। इन्द्राणी वारुणी रौद्री त्वाभि-षिञ्चन्तु मातरः॥ ४ ॥ भैरवी भद्रकाली च तुष्टिः पुष्टिरुमा क्षमा। श्रद्धा कान्तिर्दया शान्तिरभिषिञ्चन्तु ते सदा ॥ ५ ॥ महाकाली महालक्ष्मीर्महानीलसरस्वती। उग्रचण्डा प्रच-ण्डाद्या अभिषिञ्चन्तु सर्वदा ॥६॥ मत्स्यः कूर्मो वराहश्च नृसिंहो वामनस्तथा। रामो भार्गवरामस्त्वामभिषिञ्चन्तु वारिणा ॥७॥ असिताङ्गो रुरुश्चण्डः क्रोधोन्मत्तो भयङ्करः। कपाली भीषणश्च त्वामभिषिञ्चन्तु वारिणा॥ ८ ॥ काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी। विप्रचित्ता महोग्रा त्वामभिषिञ्चन्तु सर्वदा ॥ ९ ॥ इन्द्रोऽग्निः शमनो रक्षो वरुणः पवनस्तथा। धनदश्च तथेशानः सिञ्चन्तु त्वां दिगीश्वराः ॥ १० ॥ रविः सोमो मङ्गलश्च बुधो जीवः सितः शनिः। राहुः केतुः सनक्षत्रा अभि-षिञ्चन्तु ते ग्रहाः॥ ११ ॥ नक्षत्रं करणं योगा वाराः पक्षौ दिनानि च। ऋतुर्मासो हायनस्त्वामभिषिञ्चन्तु सर्वदा ॥१२॥ लवणेक्षुसुरासर्पिर्दधिदुग्धजलान्तकाः। समुद्रास्त्वाभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥ १३ ॥ अनन्ताद्या महानागाः सुपर्णाद्याः पतत्त्रिणः। तरवः कल्पवृक्षाद्याः सिञ्चन्तु त्वां दिगीश्वराः ॥१४॥ पातालभूतलव्योमचारिणः क्षेमचारिणः। पूर्णाभिषेकसन्तु-ष्टास्त्वाभिषिञ्चन्तु पाथसा ॥ १५ ॥ दौर्भाग्यं दुर्यशो रोगा दौर्मनस्यं तथा शुचः। विनश्यन्त्वभिषेकेण कालीवीजेन ताड़िताः ॥ १६ ॥ भूताः प्रेताः पिशाचाश्च ग्रहा ये रिष्टकार-काः। विद्रुतास्ते विनश्यन्तु रमावीजेन ताड़िताः ॥ १७ ॥ अभिचारकृता दोषा वैरिमन्त्रोद्भवाश्च ये। मनोवाक्कायजा दोषा विनश्यन्त्वभिषेचनात् ॥ १८ ॥ नश्यन्तु विपदः सर्वाः सम्पदः सन्तु सुस्थिराः। अभिषेकेण पूर्णेन पूर्णाः सन्तु मनोरथाः

॥१८॥ इत्येतैर्मन्त्रैः शिष्यमभिषिच्य पश्चोर्मुखाद् यन्मन्त्रो लब्धस्तं पुनस्तं गुरुः श्रावयेत् । पूर्वोक्तनाम्ना शिष्यं सम्बोध्य शक्तिसाधकान् विज्ञाप्य गुरुरानन्दनाथान्तं नाम शिष्याय दद्यात् । श्रुतमन्त्रो गुरौ इष्टदेवतां सम्पूज्य पञ्चतत्त्वैर्गुरुं समर्चयेत् । ततो गोभूहिरण्यवासोयानालङ्करणानि गुरवे दक्षिणां दद्यात् । ततः पञ्चतत्त्वैः कौलशक्तिसाधकान् अभ्यर्च्य गुरोश्चरणौ स्पृष्ट्वा प्रार्थयेद् यथा । श्रीनाथ ! जगतां नाथ ! मन्नाथ ! करुणानिधे ! । परामृतप्रदानेन पूरयास्मन्मनोरथम् ॥ ततो गुरुः ॥ आज्ञा मे दीयतां कौलाः ! प्रत्यक्षशिवरूपिणः ! । सच्छिष्याय विनीताय ददामि परमामृतम् ॥ ते ब्रूयुः ॥ चक्रेश ! परमेशान ! कौलपङ्कजभास्कर ! । कृतार्थं कुरु सच्छिष्यं देह्यस्मै कुलामृतम् ॥ इति कौलाज्ञामादाय शुद्धिसहितं कारणपात्रं शिष्याय दद्यात् । ततः सुवलग्नभस्मना सर्वेषां ललाटे तिलकं दद्यात । ततश्चक्रसम्पूर्णं कृत्वा यथेष्टं विहरेदिति ॥ इति पूर्णाभिषेकप्रयोगः ॥

पूर्णाभिषेकानन्तरन्तु वामकेश्वरतन्त्रे चतुःपञ्चाशत्पटले ॥ भैरव उवाच ॥ मण्डपं विधिवत् कुर्य्यात् पूजोपकरणानि च । परमहंसेन गुरुणा पूर्णाभिषेचनञ्चरेत् । नवरत्नं जले स्थाप्य जलेनापूर्य्य कुम्भकम् ॥ द्विपञ्चाशत्पटले ॥ नातिह्रस्वं नातिदीर्घं कलसाष्टकमुत्तमम् । अभिषेकात्मकमिति रत्नादिभिरलङ्कृतम् । ईशाने च पुनः कुम्भं स्वर्णादिभिरलङ्कृतम् । वस्त्रेण वेष्टयेत् कुम्भान् माल्यचन्दनपूर्वकम् । गङ्गाद्याः सरितः सर्वाः समुद्राश्च सरांसि च । नदा ह्रदाः पुण्यतमा नद्यः पातालवर्त्मगाः । सर्वतीर्थाणि पुण्यानि घटे कुर्वन्तु सन्निधिम् । रमावीजेन जप्तेन पल्लवं प्रतिपादयेत् । कूर्चेन फलदानं स्यात् स्त्रीवीजेन स्थिराकृतिः । सिन्दूरं वह्निवीजेन पुष्पं प्रेतेन

विन्यसेत्। मूलेन प्रणवेनापि दूर्वां दद्याद्विचक्षणः। हुँ फट् स्वाहेति मन्त्रेण कुर्य्याद्दर्भेण ताड़नम्। ईशकुम्भे यजेद्देवीं सङ्कल्पोक्तविधानतः। सङ्कल्पोक्तेन विधिना यजेदावरणं ततः। बलिं दद्यात् प्रयत्नेन होमयेत्तन्त्रवित् सुधीः। आगमोक्तविधानेन कुर्य्यात्तत्र कुशण्डिकाम्। त्रिमध्वाक्तेन विधिना विल्वपत्रेण होमयेत्॥ उपचारैः षोड़शैस्तु पुनर्देवीं प्रपूजयेत्। पुनरावरणं देवि! पूजयेद् यत्नतः सुधीः। ततः पूर्णाहुतिं दत्त्वा प्रकुर्य्याद् गुरुपूजनम्। स्ववेद्याः पूजयेदष्टौ कुमारीश्च प्रपूजयेत्॥

चतुःपञ्चाशत्पटले॥ पूजावसाने देवेशि! कलसैरभिषेचयेत्। विशेषतश्च तन्मन्त्रं वक्ष्यामि शृणु सादरात्। ओं क्रीं श्रीं ह्सौः पुत्र! त्वं सर्वसिद्धीश्वरो भव। इति पूर्वकलसेन गुरुः सिञ्चेच्छिशुं शुभम्। ओं ऐं क्रीं श्रीं क्रों ह्रौः हंसः पुत्र! त्वं वेतालो भव। इत्यग्निकलसेनैव गुरुः सिञ्चेच्छिशुं शुभम्। ओं क्रीं ऐं क्रीं ह्सौः हंसः पुत्र! त्वमणिमादिसिद्धीश्वरो भव। इति दक्षिणकलसेन गुरुः सिञ्चेच्छिशुं शुभम्। ओं हुँ क्रों क्रौं श्रीं पुत्र! त्वमञ्जनासिद्धीश्वरो भव। इति नैरृतकलसेन गुरुः सिञ्चेच्छिशुं शुभम्। अं आं ऐं क्रौं श्रीं क्रीं पुत्र! त्वं लघिमादिसिद्धीश्वरो भव। इति वारुणकलसेन गुरुः सिञ्चेच्छिशुं शुभम्। ओं आं ऐं क्रीं क्रीं पुत्र! त्वं काम्यसिद्धीश्वरो भव। इति मरुत्कलसेन गुरुः सिञ्चेच्छिशुं शुभम्। ऐं ओं क्रीं पुत्र! त्वं स्तम्भनादिसिद्धीश्वरो भव। इति कुवेरकलसेन गुरुः सिञ्चेच्छिशुं शुभम्। हंस ऐं क्रीं नवनवनामकरणाभिधानपूर्वकं पुत्र! त्वमाकर्षणसिद्धीश्वरो भव। इतीशानकलसेन गुरुः सिञ्चेत् शिशुं शुभम्। दक्षिणान्तं क्रियाकाण्डं कुर्य्यात्साधकसत्तमः॥ इत्यभिषेकप्रकरणम्॥

अथ वीरप्रशंसा॥ उत्पत्तितन्त्रे त्रिषष्टिपटले॥ यत्र वीरो वसेद्देवि! दिव्यो वा परमेश्वरि!। तत्र सर्वाणि तीर्थाणि वसन्ति वीरसाधने। यो वीरः स शिवः साक्षाद्देव एव न संशयः। यत्र वीरो वसेद्देवि! तत्र कस्य भयं भवेत्। नाकालमरणं तत्र न दुर्भिक्षभयं तथा। राजपीड़ाभयं देवि! तत्र नास्ति कदाचन॥

अथ वीरकृत्यं तत्रैव॥ कुलाचाररतो वीरः कुलसङ्गी सदा भवेत्। संविदासेवनं कुर्य्यात् सोमपानं महेश्वरि!। सर्वथा कुरुते देवि! वीरस्त्वोद्धतमानसः। दिव्यस्तु देवताप्रायश्चन्दनागुरुलेपनैः। रक्तचन्दनगन्धैश्च सुदिग्धो नात्र संशयः। भस्माङ्गधूसरो वीर उन्मत्तवद्विचेष्टितः। सुरापानरतो नित्यं बलिपूजापरायणः। नरश्छागश्च महिषो मेषः शूकर एव च। शशकः शल्लकी गोधा खड्गो कूर्मो दश स्मृताः। वानरश्च खरश्चैव गजाश्वादिविहङ्गमाः। इत्यादिभिर्बलिदानैः पूजयेत् स्वेष्टदेवताम्॥ तथा। नित्यं नैमित्तिकं काम्यं प्रकुर्य्याच्च दिने दिने। कुलवारे कुलर्क्षे च तिथौ चन्दनके तथा। भैरव्याः कल्पितं चक्रं संस्थाप्य पूर्ववत् प्रिये!। सुराणां शोधनं कुर्य्याद् यथावत् परमेश्वरि!। प्रवृत्ते भैरवीचक्रे सर्वे वर्णा द्विजोत्तमाः। निवृत्ते भैरवीचक्रे सर्वे वर्णाः पृथक् पृथक्। ननु ब्रह्महत्यासुरापानमित्यादि स्मृत्युक्तेन महापातकजनकस्य सुरापानस्य निषिद्धत्वात् सुरापानरत इति सुराणां शोधनम् इति च कथं सङ्गच्छत इति चेत् सत्यम्। तत्तद्वचनं नैमित्तिकवैधेतरपाननिषेधकमित्यवगन्तव्यमन्यथा वेदविरुद्धत्वेन तत्तत्स्मृतेरप्रामाण्यापत्तिः स्यात्। तथा च सौत्रामणीष्टौ वाजपेययागे च सुराग्रहान् गृह्णाति सोमग्रहांश्च सुराग्रहांश्च गृह्णाति वाजसृजः सुराग्रहान् हवन्तीत्यादि। इति हंसः शुचिसदि-

त्यादिना सुराशोधनञ्चोक्तम्। तर्हि मद्यमदेयमपेयमग्राह्यमिति श्रुत्यन्तरस्य का गतिरिति चेन्नैवमर्थापरिज्ञानेन दोषमाशङ्कसे। तथा हि देवताभ्योऽदेयं देवतासम्प्रदानकभिन्नं मद्यमपेयमग्राह्यञ्चेति तस्या अर्थः। निमित्तयागादीतरत्र मद्यदानपानादिनिषेधार्था वा सा श्रुतिरिति मन्तव्यम्। नराश्वमेधौ मद्यञ्च कलौवर्ज्यं द्विजातिभिरित्यादिवचनैकवाक्यतया कलीतरपरत्वं वाजपेयादीनामिति न वाच्यम्। विद्याकरवाजपेयिप्रभृतीनां नामानुसारेण कलावपि तस्यावधारितत्वात्। विजयाञ्चानुकल्पञ्च द्विजो दद्याद् युगे युगे॥ इत्यादिवचनादनुकल्पेन यागनिर्वाह इति तु कुधियां सिद्धान्तः मुख्यालाभ एवानुकल्पस्य उक्तत्वात्॥

तथा च निरुत्तरतन्त्रे पञ्चमपटले॥ द्रव्याभावे चानुकल्पैः पूजयेत् परदेवतामिति। सुराभावे च गोक्षीरं द्विजो दद्याद् युगे युगे। इत्यादिवचनादनुकल्पेन यागनिर्वाह इति तु कुधियां सिद्धान्तो मुख्यालाभ एवानुकल्पस्योक्तत्वात्॥ तथा च निरुत्तरतन्त्रे पञ्चमपटले॥ द्रव्याभावे चानुकल्पैः पूजयेत् परदेवतामिति। सुराभावे च गोक्षीरं द्विजो दद्याद् युगे युगे। इति चोक्तमत एव। न मांसभक्षणे दोषो न दोषो मद्यपानतः। प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला। इति मद्यपानदोषाभावो मनुना उक्त इति असंस्कृतसुरापानपरं वा। तदुक्तमुत्पत्तितन्त्रे॥ असंस्कृतां सुरां पीत्वा ब्राह्मणो ब्रह्महा भवेत्। संस्कृतान्तु सुरां पीत्वा ब्राह्मणो ज्वलदग्निवत्। सौत्रामण्यां कुलाचारे ब्राह्मणः प्रपिबेत् सुराम्। अन्यच्च कामतः पीत्वा ब्राह्मण्यादेव हीयते। यद्वा सुरानिषेधकवचनानि अनभिषिक्तपराणीति ज्ञेयम्। तत्रैव सर्वेषां सुरापानविधिदर्शनात्। तत्प्रमाणन्तु किञ्चिल्लिखितम्। लेखितव्यञ्च यत्तु

मातृकाभेदतन्त्रे तृतीयपटले ॥ सर्वयज्ञाधिपो विप्रः संशयो नास्ति पार्वति!। सौत्रामण्यां महायज्ञे चत्वारो ब्राह्मणादयः। ब्राह्मणस्य महामोक्षं मद्यपाने प्रियंवदे!। ब्राह्मणः परमेशानि! यदि पानादिकञ्चरेत्। तत्‌क्षणाच्छिवरूपोऽसौ सत्यं सत्यं हि शैलजे!। तोये तोयं यथा लीनं तैजसं तेजसे यथा। घटे भग्ने यथाकाशं वायौ वायुर्यथा प्रिये!। तथैव मद्यपानेन ब्राह्मणो ब्रह्मणि प्रिये!। लीयते नात्र सन्देहः परमात्मनि शैलजे!। सायुज्यादिमहामोक्षं नियुक्तं क्षत्रियादिषु। मद्यपानं विना देवि! तत्त्वज्ञानं न लभ्यते। अत एव हि विप्रस्तु मद्यपानं समाचरेत्। वेदमातृजपेनैव ब्राह्मणो न हि शैलजे!। ब्रह्मज्ञानं यदा देवि! तदा ब्राह्मण उच्यते। देवानाममृतं ब्रह्म तदेव लौकिकी सुरा। सुरत्वं भोगमात्रेण सुरा तेन प्रकीर्त्तिता। इति ब्राह्मणस्य मद्यपानविधायकवचनं तदप्यभिषिक्तब्राह्मणपरम्। ननु अभिषेके स्वस्ववर्णं परित्यज्य शिवत्वं लभते ध्रुवमिति प्रागुक्तवचनादभिषिक्तस्य जातिविचाराभावात् कथमभिषिक्तपरमिति चेत् सत्यम्। स्वजातिचिह्नरक्षकस्य ज्ञानदुर्बलस्य पानार्थमेतद्वचनमित्यवेहि। अथवा अभिशप्तसुरापाणनिषेधार्थं सुरापाणनिषिद्धवचनम्। सुरा तु चतुर्युग एव पवित्रकारिणी। केवलमभिशापेनैवापेया अतः शापमोचनपूर्वरूपतया पेयैव तदाह तत्रैव ॥ मन्त्रत्रयं सदा पाठ्यं ब्रह्मशापादिमोचनम्। प्रकुर्य्यात्तर्हि येनैव तदा ब्रह्ममयी सुरा। हविरारोपमात्रेण वह्निर्दीप्तो यथा भवेत्। शापमोचनमात्रेण सुरा मुक्तिप्रदायिनी। अत एव हि देवेशि! ब्राह्मणः पानमाचरेत्। स ब्राह्मणः स वेदज्ञः सोऽग्निहोत्री स दीक्षितः। बहु किं कथ्यते देवि! स एव निर्गुणात्मकः। मुक्तिमार्गमिदं देवि! गोप्तव्यं पशुसङ्कटे।

प्रक्षाघात् सिद्धिहानिः स्यान्निन्दनीयो न चान्यथा। यदि शापमोचनादप्यग्राह्यत्वं तस्या इत्युच्यते तदा गायत्रीग्रहण-मपि ब्राह्मणानामसङ्गतं स्यात्तत्रापि शापदर्शनादिति। उत्पत्तितन्त्रे। कुलस्त्रीसेवनं कुर्य्यात् सर्वथा परमेश्वरि!। रमते युवतिं रम्यां कामोन्मत्तविशालिनीम्। नटीं कापालिकां वेश्यां हड्डिपानां वराङ्गनाम्। शूद्राणीं म्लेच्छरमणीं यवनीं परमेश्वरि!। मातृयोनिविचारोऽस्ति मातृयोनिं विना प्रिये!। कुलाचारपरो वीरः कुलपूजापरायणः। भगलिङ्गसमायोगा-दाकृष्य जपमाचरेत्। निश्चलन्तु भवेच्चित्तं कोटिसूर्य्यग्रहेण किम्। चले चित्ते भवेद्व्याधिर्निश्चले निश्चलं यथा॥ तथा॥ शवानां साधनं देवि! लतासाधनमुत्तमम्। चितायाः साधनं देवि! सिद्धिरस्ति कलौ युगे। महाकाल्या महापीठे यत्र कुत्र महेश्वरि!। बलिदानं नरस्यापि हठाद्बाधा भविष्यति। निवृत्तं हि ततो देवि! बलिदानं नरादिकम्। ततः प्रभृति देवेशि! भावद्वयं विवर्जयेत्॥ एतद्वचनं प्रबलकलीतरपरम्॥ तदुक्तं महानिर्वाणतन्त्रे॥ दिव्यवीरमयो भावः कलौ नास्ति कदाचन। केवलं पशुभावेन मन्त्रसिद्धिर्भवेन्नृणाम्॥

उत्पत्तितन्त्रे चतुःषष्टिपटले॥ भावः को वा महादेव! वीरः को वा महेश्वर!। दिव्य एवं कथं देव! वद मे शङ्कर! स्वयम्। इति देवीप्रश्नानन्तरं महादेव उवाच॥ भावस्तु मानसो धर्मः स तु साङ्गः कथं भवेत्। निर्विकल्पं महेशानि! परं ब्रह्ममयो भवेत्। मानसः कारणं देवि! शिव एव न संशयः। सिद्धमन्त्री भवेद्वीरो न वीरो मद्यपानतः। कलौ तु भारते वर्षे लोका भारतवासिनः। गृहे गृहे सुरां पीत्वा वर्णभ्रष्टा भवन्ति हि। दिव्ये वीरे न भेदोऽस्ति ज्ञानी स्यात् कुल-साधनैः। त्रिसूत्रज्ञः कुलाचारो ज्ञानी कुलगुरुः स्मृतः।

षट्‌चक्रं षोड़शाधारं त्रैलोक्यं व्योमपञ्चकम्। स्वदेहे ये न जानन्ति कथं सिध्यन्ति योगिनः॥

अथ पञ्चमकारः॥ निर्वाणतन्त्रे एकादशपटले॥ शङ्कर उवाच॥ शृणु देवि! प्रवक्ष्यामि तत्त्वं परमगोपनम्। श्रुत्वा गोपय यत्नेन स्वयोनिमिव सुन्दरि!। गुप्तसाधनतन्त्रे सप्तमपटले॥ शृणु देवि! प्रवक्ष्यामि तत्त्वं परमगोपनम्। मन्त्रोद्धारक्रमेणैव तत्त्वं कथयामि ते। भमं तकारसंयुक्तं थान्तं वायुयुतं कुरु। विन्दुयुक्तं पुनर्भान्तं साकारं विन्दुसंयुतम्। चन्द्रवीजं समुच्चार्य्य अकारसंयुतं कुरु। पुनर्भान्तं तकारान्तं चन्द्रं वायुसमन्वितम्। पुनर्भान्तं महेशानि! पञ्चमस्वरभूषितम्। थान्तं वह्निसमारूढ़माकारसंयुतं कुरु। पुनर्भान्तं महेशानि! सूर्य्यस्वरसमन्वितम्। तान्तकुमारसंयुक्तं धान्तमकारसंयुतम्। पञ्चतत्त्वमिदं देवि! सर्वतन्त्रेषु गोपितम्। कैवल्यतन्त्रे प्रथमपटले॥ पञ्चतत्त्वात् परं नास्ति शाक्तानां सुखमोक्षयोः। केवलैः पञ्चभिरेव सिद्धो भवति साधकः। एषां मध्ये महेशानि! परतत्त्वं विशिष्यते॥ तथा॥ केवलेनाद्ययोगेन साधको भैरवो भवेत्। द्वितीयेन च तत्त्वेन महाभैरवतां व्रजेत्। तृतीयेन च तत्त्वेन साधकः शिवरूपधृक्। चतुर्थेन वरारोहे! रुद्ररूपधरो भवेत्। परेण परतां याति मम तुल्यो न संशयः। मद्यं मांसं तथा मत्स्यं मुद्रा मैथुनमेव च। पञ्चतत्त्वमिदं देवि! निर्वाणमुक्तिहेतवे। मकारपञ्चकं देवि! देवानामपि दुर्लभमिति॥ कामाख्यातन्त्रे पञ्चमपटले॥ मद्यैर्मांसैस्तथा मत्स्यैर्मुद्राभिर्मैथुनैरपि। स्त्रीभिः सार्द्धं महासाधुरर्च्चयेद् जगदम्बिकाम्। अन्यथा च महानिन्दा गीयते पण्डितैः सुरैः। कायेन मनसा वाचा तस्मात्तत्त्वपरो भवेत्। कालिकातारिणीदीक्षां गृहीत्वा मद्यसेवनम्। न

करोति नरो यस्तु स कलौ पतितो भवेत्। वैदिके तान्त्रिके चैव जपहोमवहिष्कृतः। अब्राह्मणः स एवोक्तः स एव हस्ति-मूर्खकः। शुनीमूत्रसमं तस्य तर्पणं यत् पितृष्वपि। कालीतारामनुं प्राप्य वीराचारं करोति न। शूद्रत्वं तच्छरीरेण प्राप्नुयात् स न चान्यथा।

समयाचारतन्त्रे द्वितीयपटले। या सुरा सर्वकार्य्येषु कथिता भुवि मुक्तिदा। तस्या नाम भवेद्देवि! तीर्थं पानं सुदुर्लभम्। शूद्राणां भक्ष्ययोग्यानां यन्मांसं देव-निर्मितम्। वेदमन्त्रेण विधिवत् प्रोक्ता सा शुद्धिरुत्तमा। भक्ष्ययोग्याश्च कथिता ये ये मत्स्या वरानने!। ते रहस्ये मया प्रोक्ता मीनाः सिद्धिप्रदायकाः। पृथुका तण्डुला भृष्टा गोधूम-चणकादयः। तस्य नाम भवेद्देवि! मुद्रा मुक्तिप्रदायिनी। भगलिङ्गस्य योगेन मैथुनं यद्भवेत् प्रिये!। तस्य नाम भवे-द्देवि! पञ्चमं परिकीर्त्तितम्। प्रथमन्तु भवेन्मद्यं मांसञ्चैव द्वितीयकम्। मत्स्यञ्चैव तृतीयं स्यान्मुद्रा चैव चतुर्थिका। पञ्चमं पञ्चमं विद्यात् पञ्चेति नामतः स्मृताः॥

मत्स्यादिशब्दव्युत्पत्तिस्तु कुलार्णवतन्त्रे पञ्चमखण्डे सप्तदशो-ल्लासे॥ मायामलादिशमनान्मोक्षमार्गनिरूपणात्। अष्टदुःखा-दिविरहान्मत्स्येति परिकीर्त्तितः। माङ्गल्यजननाद्देवि! संविदा-नन्ददानतः। सर्वदेवप्रियत्वाच्च मांस इत्यभिधीयते॥ तथा। पञ्चमं देवि! सर्वेषु मम प्राणप्रियं भवेत्। पञ्चमेन विना देवि! चण्डीमन्त्रं कथं जपेत्। यदि पञ्चमकारेषु भ्रान्तिं चेत् कुरुते प्रिये!। तस्य सिद्धिः कुथं देवि! चण्डीमन्त्रं कथं जपेत्। आनन्दं परमं ब्रह्म मकारास्तस्य सूचकाः॥ अथैषां फलम् निर्वाणतन्त्रे एकादशपटले॥ अष्टैश्वर्य्यं परं मोक्षं मद्यपानेन शैलजे!। मांसभक्षणमात्रेण साक्षान्नारायणो भवेत्। मत्स्य-

षट्चक्रं षोड़शाधारं त्रैलोक्यं व्योमपञ्चकम्। स्वदेहे ये न जानन्ति कथं सिध्यन्ति योगिनः॥

अथ पञ्चमकारः॥ निर्वाणतन्त्रे एकादशपटले॥ शङ्कर उवाच॥ शृणु देवि! प्रवक्ष्यामि तत्त्वं परमगोपनम्। श्रुत्वा गोपय यत्नेन स्वयोनिमिव सुन्दरि!। गुप्तसाधनतन्त्रे सप्तमपटले॥ शृणु देवि! प्रवक्ष्यामि तत्त्वं परमगोपनम्। मन्त्रोद्धारक्रमेणैव तत्त्वं कथयामि ते। भमं तकारसंयुक्तं थान्तं वायुयुतं कुरु। विन्दुयुक्तं पुनर्भान्तं साकारं विन्दुसंयुतम्। चन्द्रवीजं समुच्चार्य्य अकारसंयुतं कुरु। पुनर्भान्तं तकारान्तं चन्द्रं वायुसमन्वितम्। पुनर्भान्तं महेशानि! पञ्चमस्वरभूषितम्। थान्तं वह्निसमारूढ़माकारसंयुतं कुरु। पुनर्भान्तं महेशानि! सूर्य्यस्वरसमन्वितम्। तान्तकुमारसंयुक्तं धान्तमकारसंयुतम्। पञ्चतत्त्वमिदं देवि! सर्वतन्त्रेषु गोपितम्। कैवल्यतन्त्रे प्रथमपटले॥ पञ्चतत्त्वात् परं नास्ति शाक्तानां सुखमोक्षयोः। केवलैः पञ्चमैरेव सिद्धो भवति साधकः। एषां मध्ये महेशानि! परतत्त्वं विशिष्यते॥ तथा॥ केवलेनाद्ययोगेन साधको भैरवो भवेत्। द्वितीयेन च तत्त्वेन महाभैरवतां व्रजेत्। तृतीयेन च तत्त्वेन साधकः शिवरूपधृक्। चतुर्थेन वरारोहे! रुद्ररूपधरो भवेत्। परेण परतां याति मम तुल्यो न संशयः। मद्यं मांसं तथा मत्स्यं मुद्रा मैथुनमेव च। पञ्चतत्त्वमिदं देवि! निर्वाणमुक्तिहेतवे। मकारपञ्चकं देवि! देवानामपि दुर्लभमिति॥ कामाख्यातन्त्रे पञ्चमपटले॥ मद्यैर्मांसैस्तथा मत्स्यैर्मुद्राभिर्मैथुनैरपि। स्त्रीभिः सार्द्धं महासाधुरर्च्चयेद् जगदम्बिकाम्। अन्यथा च महानिन्दा गीयते पण्डितैः सुरैः। कायेन मनसा वाचा तस्मात्तत्त्वपरो भवेत्। कालिकातारिणीदीक्षां गृहीत्वा मद्यसेवनम्। न

करोति नरो यस्तु स कलौ पतितो भवेत्। वैदिके तान्त्रिके चैव जपहोमवहिष्कृतः। अब्राह्मणः स एवोक्तः स एव हस्ति-मूर्खकः। शुनीमूत्रसमं तस्य तर्पणं यत् पितृष्वपि। कालो-तारामनुं प्राप्य वीराचारं करोति न। शूद्रत्वं तच्छरीरेण प्राप्नुयात् स न चान्यथा।

समयाचारतन्त्रे द्वितीयपटले। या सुरा सर्वकार्य्येषु कथिता भुवि मुक्तिदा। तस्या नाम भवेद्देवि! तीर्थं पानं सुदुर्लभम्। शूद्राणां भक्ष्ययोग्यानां यन्मांसं देव-निर्मितम्। वेदमन्त्रेण विधिवत् प्रोक्ता सा शुद्धिरुत्तमा। भक्ष्ययोग्याश्च कथिता ये ये मत्स्या वरानने!। ते रहस्ये मया प्रोक्ता मीनाः सिद्धिप्रदायकाः। पृथुका तण्डुला भृष्टा गोधूम-चणकादयः। तस्य नाम भवेद्देवि! मुद्रा मुक्तिप्रदायिनी। भगलिङ्गस्य योगेन मैथुनं यद्भवेत् प्रिये!। तस्य नाम भवे-द्देवि! पञ्चमं परिकीर्त्तितम्। प्रथमन्तु भवेन्मद्यं मांसञ्चैव द्वितीयकम्। मत्स्यञ्चैव तृतीयं स्यान्मुद्रा चैव चतुर्थिका। पञ्चमं पञ्चमं विद्यात् पञ्चेति नामतः स्मृताः॥

मत्स्यादिशब्दव्युत्पत्तिस्तु कुलार्णवतन्त्रे पञ्चमखण्डे सप्तदशो-ल्लासे॥ मायामलादिशमनान्मोक्षमार्गनिरूपणात्। अष्टदुःखा-दिविरहान्मत्स्येति परिकीर्त्तितः। माङ्गल्यजननाद्देवि! संविदा-नन्ददानतः। सर्वदेवप्रियत्वाच्च मांस इत्यभिधीयते॥ तथा। पञ्चमं देवि! सर्वेषु मम प्राणप्रियं भवेत्। पञ्चमेन विना देवि! चण्डीमन्त्रं कथं जपेत्। यदि पञ्चमकारेषु भ्रान्तिं चेत् कुरुते प्रिये!। तस्य सिद्धिः कथं देवि! चण्डीमन्त्रं कथं जपेत्। आनन्दं परमं ब्रह्म मकारास्तस्य सूचकाः॥ अथैषां फलम् निर्वाणतन्त्रे एकादशपटले॥ अष्टैश्वर्य्यं परं मोक्षं मद्यपानेन शैलजे!। मांसभक्षणमात्रेण साक्षान्नारायणो भवेत्। मत्स्य-

भक्षणमात्रेण काली प्रत्यक्षतामियात्। मुद्रासेवनमात्रेण भूसुरो विष्णुरूपधृक्। मैथुनेन महायोगी मम तुल्यो न संशयः॥ तथा॥ एकां शक्तिं समानीय एक एव तु साधकः। पूजयेद्बहुयत्नेन पञ्चतत्त्वेन कौलिकः। एवं कृत्वा लभेत् सिद्धिं नान्यस्य दृष्टिगोचरे। शैवे शाक्ते गाणपत्ये सौरे चान्द्रे सुलोचने!। तत्त्वज्ञानमिदं प्रोक्तं वैष्णवे शृणु यत्नतः॥ द्वादशपटले॥ गुरुतत्त्वं मन्त्रतत्त्वं मनस्तत्त्वं सुरेश्वरि!। देवतत्त्वं ध्यानतत्त्वं पञ्चतत्त्वं वरानने!। तत्रादौ श्रीगुरोस्तत्त्वं स्नेहाद्वक्ष्यामि पार्वति!। सतैलं वर्त्तिकायुक्तं देहस्थं ब्रह्मतेजसम्। गुरुणा मन्त्रदानेन तत्सूच्चं दीपितं भवेत्। देवतायाः शरीरं हि मन्त्रादुत्पद्यते ध्रुवम्। अतएव हि तस्यात्मा देवरूपो न संशयः। ईश्वरस्य तु यद्वीर्य्यं तदेव अक्षयात्मकम्। तेन वर्णात्मकं देहं जन्तोरेव न संशयः। मन्त्रवर्णे सर्ववर्णमयास्ते परमेश्वरि!। वर्णतत्त्वमिदं देवि! सर्वस्वं मम यद्भवेत्। स्वयं देवो न चान्योऽस्मि निर्म्मलो देवरूपकः। सर्वत्र देवतां ध्यायेत् तृणगुल्मलतादिषु। ध्यानेन लभते सर्वं ध्यानेन विष्णुरूपकः। ध्यानेन सिद्धिमाप्नोति विना ध्यानं न सिध्यति। इति ते कथितं तत्त्वं वैष्णवस्य सुरेश्वरि!। यज्ज्ञानादमरत्वञ्च विष्णुरूपो भवेन्नरः। ते नरा न हि गच्छन्ति कदाचिद्यममन्दिरम्॥

तत्त्वशोधनप्रकारस्तु कैवल्यतन्त्रे द्वितीयपटले॥ श्रीशिव उवाच॥ शृणु पार्वति! वक्ष्यामि तेषां वै शोधनक्रियाम्। पद्मासनेन संविश्य करपुटं समाचरेत्। वामे गुरून् नमस्कृत्य दक्षिणे गणपतिं स्मरेत्। मध्ये देवीं नमस्कृत्य प्राणायामत्रयं चरेत्। शरीरे मातृकां न्यस्य ऋष्यादिन्यासमाचरेत्। स्वकल्पोक्तविधानेन षड़ङ्गन्यासमाचरेत्। पश्चाद्भूमौ त्रिकोणं वा षट्-

कोणं वा महेश्वरि!। विलिख्य मण्डलं शुद्धं तस्योपरि घटं न्यसेत्। त्रिकोणं वेत्यादिवाद्वयं समियोगशिष्टचकारवत् समुच्चयसूचकम्। तेन तन्मण्डलद्वयं कर्त्तव्यमित्यर्थः। वक्ष्यमाणभावचूड़ामणिवचनैकवाक्यत्वादिति स्वतन्त्रतन्त्रवचनैकवाक्यत्वादिति तथा च चतुरस्रमपि॥ बहुधा प्रोक्षणं कृत्वा फट्कारेण पुनः पुनः। ततस्तस्मिन् कारणन्तु मूलेनैव च स्थापयेत्। मातृकार्णेन देवेशि! विपरीतेन चैव हि। पुनः फट्कारमन्त्रेण प्रोक्षणं कारयेत् सुधीः। ततो वियच्छक्तिवीजं चतुर्दशस्वरान्वितम्। नादविन्दुयुतं कृत्वा तस्योपरि शतं जपेत्। ततो मूलं जपेन्मन्त्रं मायावीजं ततः परम्। धेनुं योनिं गालिनीञ्च त्रिखण्डं मीनसंज्ञकम्। दर्शयित्वा वरारोहे! घटं धृत्वा पठेन्मनुम्। ओँ एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम्। कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम्। ओँ सूर्य्यमण्डलसम्भूते! वरुणालयसम्भवे!। अमावीजमयि! देवि! शुक्रशापाद्विमुच्यताम्। ओँ वेदानां प्रणवो वीजं ब्रह्मानन्दमयं यदि। तेन सत्येन देवेशि! ब्रह्महत्यां व्यपोहतु। ततः षड़ङ्गयुक्तञ्च वकारं विन्दुसंयुतम्। एवं सकारणञ्चापि वर्णाक्षरसमन्वितम्। जप्त्वा मन्त्री ततो ध्यायेत् स्वमन्त्रं कुलसुन्दरि!। आनन्दभैरवं ध्यायेद् यथा तन्त्रानुसारतः। रक्तवर्णं चतुर्बाहुं त्रिनेत्रं वरदं शिवम्। जटाजूटधरं देवं वासुकीकण्ठभूषितम्। डमरुञ्च कपालञ्च मुद्गरं पाशमुत्तमम्। धारिणं तं भजेद्देवं व्याघ्रचर्माम्बरं शिवम्। एवं ध्यात्वा महेशानि! तस्य मध्ये प्रपूजयेत्। मायावीजं ततो हुँ फट् मन्त्रेणानेन सन्त्यजेत्। ततस्तस्मिन् महेशानि! आनन्दभैरवीं स्मरेत्। आनन्दभैरवीं देवीं वराभयलसत्कराम्। घोररूपां वरारोहां त्रिनेत्रां रक्तवाससम्। रक्तवर्णां महारौद्रीं सहस्रभैरवान्विताम्। ब्रह्मविष्णु-

महेशाद्यैः स्तूयमानां शिवां भजे। इति ध्यात्वा महेशानि! तेनैव मनुना यजेत्। तयोरैक्यं विभाव्यैव गायत्रीं दशधा जपेत्। भैरवं ङेऽन्तकञ्चोक्ता विद्महे तदनन्तरम्। सुधादेव्यै ततः पश्चाद्धीमहीति ततो वदेत्। तन्नो देवि! ततः पश्चात्तदन्ते च प्रचोदयात्। इति ते कथिता देवि! गायत्री परमाक्षरी। तस्याः स्मरणमात्रेण द्रव्यशुद्धिश्च जायते। तस्य प्रसादादीशोऽहं सत्यं सत्यं न संशयः। तस्य मध्ये मूलमन्त्रं विल्वदण्डैर्लिखेत् सकृत्। रक्तवस्त्रेण सम्पूज्य सुधां वस्त्रेण गोपयेत्॥ कारणशब्दार्थस्तु तत्रैव॥ धर्मार्थकाममोक्षाणां विषयाणाञ्च पार्वति!। सर्वेषां कारणं यस्मात् कारणं परिकीर्त्तितम्। अस्माकञ्च महेशानि! शरीरकारणं हि तत्। मृत्युञ्जयोऽहं वीरेशि! वीरकार्य्यप्रसादतः। निर्विकारेण देवेशि! निर्विकल्पेन चेतसा। सेव्यमानं कुलं भद्रे! भुक्तिमुक्तिप्रदायकम्। निर्विकल्पो महेशानि! मुक्तिभागी न संशयः। सविकल्पो वरारोहे! रौरवं याति निश्चितम्॥

अथ मांसादिशोधनं तृतीयपटले॥ श्रीशिव उवाच॥ वक्ष्येऽहं परमेशानि! मांसादेः शोधनं प्रिये!। पूर्ववन्मण्डलं कृत्वा पूजयेन्मण्डलोपरि। आधारशक्तिं कूर्मञ्च अनन्तं पृथिवीं तथा। तन्मध्ये स्थापयेन्मांसं मत्स्यं मुद्राञ्च पार्वति!। हुँवीजेन च संमन्त्र्य फट्कारैः प्रोक्षणञ्चरेत्। वारुणेन च धेन्वादिं दर्शयेत् साधकोत्तमः। ततो मायां वधूञ्चैव श्रीवीजं क्रमशो जपेत्। शुद्धिमन्त्रं पठेद्भक्त्या मूलमन्त्रं समुच्चरन्। पवित्रं कुरु देवेशि! मांसं मत्स्यं कुलेश्वरि!। मुद्रां शस्योद्भवां दिव्यां पूजार्थं कुलनायिके!। ततो हुँ फट् वारुणञ्च तस्योपरि जपेत् प्रिये!। मूलमन्त्रं च तन्मध्ये दशधा जपनं चरेत्॥

अथ शक्तिशोधनं तत्रैव॥ इदानीं कथयिष्यामि नारीणां

शोधनं प्रिये!। अग्रे वा दक्षिणे वापि संस्थाप्य मण्डलोपरि। भाले च मण्डलं कुर्य्यात्त्रैपुरं सिन्दुरेण च। नयने कज्जलं दद्यान्मूलमन्त्रं जपेत् सुधीः। अन्यैश्च विविधैर्द्रव्यैर्भूषयेत् शक्तिमग्रतः। ताम्बूलं वदने दद्यादिष्टमूर्त्तिं विभाव्य च। ततः षड़ङ्गमन्त्रैश्च षड़ङ्गन्यासमाचरेत्। मातृकार्णं ततो न्यस्य ऋष्यादिन्यासमाचरेत्। मूलेन व्यापकं कृत्वा मूर्ध्नि मूलं शतं जपेत्। हृदये कामवीजञ्च बधूवीजञ्च सञ्जपेत्। नाभौ श्रीं गुह्यदेशे च सर्व्ववीजञ्च पार्व्वति!। मौलौ च वाग्भवं कामं कुण्डलीं कुलकुण्डलीम्। शक्तिवीजं जपेन्मन्त्री सर्व्वसिद्धीश्वरो भवेत्। वामे मायां श्रावयेच्च कर्णे चैव महेश्वरि!। एवं क्रमेण देवेशि! नारीशुद्धिः प्रजायते॥ इति शक्तिशोधनम्॥

शुद्धशक्तिफलमाह तत्रैव॥ साधिता च जगद्धात्री यद्यद्वदति पार्व्वति!। तत् सर्व्वं सत्यतां याति सत्यं सत्यं न संशयः। दीक्षितानाञ्च देवेशि! शुद्धिर्नास्ति कदापि हि॥

श्यामारहस्यधृतपञ्चमकारशोधनादिर्यथा॥ स्ववामे षट्कोणान्तर्गतत्रिकोणविन्दुं विलिख्य वाह्ये वृत्तचतुरस्रं विधाय सामान्यार्घ्योदकेनाभ्युक्ष्य तत्राधारशक्तिभ्यो नम इति पूजयेत्। नम इत्याधारं प्रक्षाल्य मण्डलोपरि संस्थाप्य मं वह्निमण्डलाय दशकलात्मने नम इति सम्पूज्य फड़िति कलसं प्रक्षाल्य कारणेन सम्पूर्य्य रक्तवस्त्रमाल्यादिना भूषयित्वा ओँ इत्याधारोपरि देवीबुद्ध्या संस्थाप्य मं वह्निमण्डलाय दशकलात्मने नम इत्याधारं पूजयित्वा अं अर्कमण्डलाय द्वादशकलात्मने नम इति कलसं सम्पूज्य उं सोममण्डलाय षोड़शकलात्मने नम इति पूजयेत्। ततः फड़िति दर्भैर्द्रव्यं सन्ताड्य हुमित्यवगुण्ठनमुद्रयावगुण्ठ्य मूलमन्त्रेण संवीक्ष्य नम इत्यभ्युक्षणं कृत्वा मूलेन त्रिधा गन्धमादाय ओँ इति कुम्भे पुष्पं दत्त्वा द्रव्य-

मध्ये हसौः इत्यनेन त्रिकोणं विलिखेत् । हसौः हसौः नम इति इष्ट्वा क्लीं क्रीं परमस्वामिनि परमाकाशशून्यवाहिनि चन्द्र-सूर्य्याग्निभक्षिणि पात्रं विशविश स्वाहा । इति घटं धृत्वा दशधा प्रजप्य ऐं क्लीं क्रीं आनन्देश्वराय विद्महे सुधादेव्यै धीमहि तन्नोऽर्द्धनारीश्वरः प्रचोदयात् । इति तदुपरि जप्त्वा शापमोचनं कुर्य्यात् ॥

तदुक्तं स्वतन्त्रे ॥ ततश्च कारणं दिव्यं समानीय घटस्थितम् । वेष्टितं रक्तवस्त्रेण रक्तमाल्येन भूषितम् । वामभागे महेशानि ! मण्डलं चतुरस्रकम् । तत्र संस्थापयेद्‌भक्त्या देवीबुद्ध्या वरानने ! । मण्डले कलसे द्रव्ये वह्न्यर्कशशि-मण्डलम् । इति पूजयेदित्यर्थः ॥ भावचूड़ामणौ च ॥ वामभागे तु षट्‌कोणं तन्मध्ये ब्रह्मरन्ध्रकम् । लिखित्वा तत्र कुम्भं वै सौवर्णं राजतञ्च वा । ताम्रं भूमिमयं वापि यद्वा लौहविवर्जितमिति ॥ तन्त्रान्तरे च ॥ आधारे स्थापयेन्मन्त्री सौवर्णं वाथ राजतम् । कांस्यजं मृण्मयं वाति घटमव्रणशालिनम् ॥ सुवर्णादिमयघटस्य प्रत्येकफलमाह तत्रैव ॥ सौवर्णं भोगदं प्रोक्तं राजतं मोक्षदं तथा । कांस्यं शान्तिकरञ्चैव मृण्मयं पुष्टिदं भवेत् ॥

अथ शापमोचनमन्त्रास्तदुक्तं कुमारीतन्त्रे ॥ अन्यच्च शृणु देवेशि ! यथा पानादिकर्मणि । दोषो न जायते देवि ! तान् वै मन्त्रान् शृणुष्व मे । एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम् । कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम् । सूर्य्यमण्डलसम्भूते ! वरुणालयसम्भवे ! । अमावीजमये ! देवि ! शुक्रशापाद्विमुच्यताम् । वेदानां प्रणवो वीजं ब्रह्मानन्दमयं यदि ॥ इति । तेन सत्येन ते देवि ! ब्रह्महत्यां व्यपोहति । एवं मन्त्रत्रयेणैव अभिमन्त्र्य सुरां शुभाम् । प्रदद्यात् कालिकायै च ततो नैवेद्यभुग्भवेत् ।

इति मन्त्रत्रयं देवि! घटं धृत्वा त्रिधा पठेत्। ततः ओं वाँ वीँ वूँ वैँ वौँ वः ब्रह्मशापविमोचितायै सुधादेव्यै नम इति त्रिधा पठेत्। इति ब्रह्मशापविमोचनम्॥ ततः ओं शाँ शीँ शूँ शैँ शौँ शः शुक्रशापाद्विमोचितायै सुधादेव्यै नम इति दशधा जपेत्। इति शुक्रशापविमोचनम्॥ ततः ऐँ क्लीँ श्रीँ क्राँ क्रीँ क्रूँ क्रैँ क्रौँ क्रः कृष्णशापं विमोचय अमृतं स्रावय स्रावय स्वाहा। इति दशधा जपेत्। इति कृष्णशापविमोचनम्॥

अथ उत्तरतन्त्रे॥ ओं हंसः शुचिसद्वसुरन्तरीक्षं सद्धोता वेदिसदतिथिर्दुरोणसत्। नृसद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं वृहत्। इति द्रव्योपरि वारत्रयं पठेत्। ततो द्रव्यमध्ये आनन्दभैरवं आनन्दभैरवीञ्च ध्यायेत्॥ यथा॥ सूर्य्यकोटिप्रतीकाशं चन्द्रकोटिसुशीतलम्। अष्टादशभुजं देवं पञ्चवक्त्रं त्रिलोचनम्। अमृतार्णवमध्यस्थं ब्रह्मपद्मोपरि स्थितम्। वृषारूढं नीलकण्ठं सर्वाभरणभूषितम्। कपालखट्टाङ्गधरं घण्टाडमरुवादिनम्। पाशाङ्कुशधरं देव गदामुषलधारिणम्। खड्गखेटकपट्टीशमुद्गरं शूलदण्डधृक्। विचित्रं खेटकं मुण्डं वरदाभयपाणिनम्। लोहितं देवदेवेशं भावयेत् साधकोत्तमः। एवं ध्यात्वा हसक्षमलवरयूं आनन्दभैरवाय वषट्। इत्यानन्दभैरवं वारत्रयं जपेत्॥

अथानन्दभैरवीं ध्यायेद् यथा। भावयेच्च सुधां देवीं चन्द्रकोट्ययुतप्रभाम्। हिमकुन्देन्दुधवलां पञ्चवक्त्रां त्रिलोचनाम्। अष्टादशभुजैर्युक्तां सर्वानन्दकरोद्यताम्। प्रहसन्तीं विशालाक्षीं देवदेवस्य सम्मुखीम्। एवं ध्यात्वा स्हसक्षमलवरयीं सुधादेव्यै वौषट्। इत्यानन्दभैरवीं सम्पूज्य द्रव्यमध्ये शक्तिचक्रं लिखेत्। ततस्त्रिपंक्त्या दक्षिणावर्त्तेन अं १६ कं १६ खं १६ क्रमेण विलिख्य मध्ये हं लं क्षं

विलिखेत्। ततः शिवशक्त्योः समायोगाद् द्रव्यमध्ये अमृतत्वं विचिन्त्य धेनुमुद्रया अमृतीकृत्य वमिति वरुणबीजं मूलमन्त्रञ्चाष्टधा जप्त्वा देवतामयं भावयन् घटं धृत्वा पठेत्। इति द्रव्यशुद्धिः॥ तदुक्तं स्वतन्त्रतन्त्रे॥ ततश्च भावयेद्द्रव्यं मध्ये रक्तनिभं प्रिये!। अकथादित्रिपंक्त्या तु हलक्षत्रयमण्डितम्। पूर्वोक्तयोनिमुद्रायां शिवशक्त्याः समागमे। अमृतं चिन्तयेद्द्रव्यमष्टधा अमृतं जपेत्। अष्टधा मूलमन्त्रञ्च जपेद्धृत्वा घटं ततः। एतत्तु कारणं देवि! सुरसङ्घनिषेवितम्। अत एव तस्या नाम सुरेति भुवनत्रये। अस्या गन्धः केशवस्तु तेन गन्धेन कौलिकः। पूजयेच्च परां देवीं कालिकां दक्षिणां शिवाम्॥

अथ मांसशोधनम्॥ ओँ प्रतद्विष्णुस्तव ते वीर्य्येण मृगो न भीमः कुचरो गरिष्ठा यस्योरुषु त्रिषु विक्रमे धियन्ति भुवनानि विश्वा। इत्यनेन मांसं शोधयेत्। ततः ओँ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥ इति मीनशुद्धिः॥

ओँ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्। ओँ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते। विष्णोर्यत् परमं पदम्॥ इति मुद्राशुद्धिः॥

ओँ विष्णोर्योनिं कल्पयतु त्वष्टा रूपाणि पिंसतु। आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते। गर्भं देहि सिनीवाली गर्भं देहि सरस्वति!। गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ॥

अथ स्वयम्भूकुसुमादि॥ मुण्डमालातन्त्रे द्वितीयपटले॥ हरसम्पर्कहीनाया लतायाः काममन्दिरे। जातं कुसुममादौ यन्महादेव्यै निवेदयेत्। स्वयम्भूकुसुमं देवि! रक्तचन्दनसंम्मितम्। तथा त्रिशूलपुष्पञ्च वज्रपुष्पं वरानने!। अनुकल्पं

लोहिताक्षचन्दनं हरवल्लभम्॥ समयाचारतन्त्रे द्वितीय-पटले॥ स्त्रीणां ऋतुः प्रथमतो यस्मिन् वयसि जायते। गृह्णी-यादाशु सुभगे! ब्रह्मादीनाञ्च दुर्लभम्। स्वयम्भूकुसुमं नाम देवताप्रीतये सदा। यदि भाग्यवशाद्देवि! लभते कुसु-मन्दिदम्। ततः स्वदेवतानाञ्च कुर्य्यात् स्नानमनुत्तमम्। वाञ्छितं लभते मन्त्री सत्यं सत्यं वरानने!। इदं रहस्यं कथितं देवतास्नानहेतवे। न कुर्य्याल्लङ्घणं देवि! एतयोरु-भयोरपि। एतयोः शक्तिकुसुमस्वयम्भूकुसुमयोरित्यर्थः॥ तथा॥ जीवद्भर्त्तृकनारीणां पञ्चमं कारयेत् प्रिये!। तस्या भगस्य यद्द्रव्यं तत्कुण्डोद्भवमुच्यते। मृतभर्त्तृकनारीणां पञ्चमञ्चैव कारयेत्। तस्या भगस्य यद्द्रव्यं तद्गोलोद्भवमुच्यते। कुण्ड-गोलोद्भवं पुष्पं अभावे शृणु सुन्दरि!। अभावे स्वयम्भूकुसुमा-भावे॥ वल्लीपुष्पाणि सर्वाणि तरोः पुष्पाणि यानि च। तानि सर्वाणि सुभगे! देवतायै निवेदयेत्। अपराजितायाः पुष्पं यद्यच्चपुष्पञ्च यद्भवेत्। करवीरस्य यत् पुष्पं यत् पुष्पं बन्धुजी-वकम्। कमलस्य च यत् पुष्पं यत् पुष्पं चम्पकस्य च। विशेषतस्तु योग्यानि पुष्पाणि सुरसुन्दरि!। वर्व्वरापत्र-पुष्पाणि विल्वपत्राणि सुन्दरि!। पूजार्थं सर्व्वमादाय सर्व्व-सौभाग्यसिद्धये॥

उत्पत्तितन्त्रे प्रथमपटले॥ स्वयम्भूकुसुमैर्हुत्वा स्वयम्भू-पुष्पपूजनम्। यः करोति महादेवि! स वीरः शिव एव तु॥ गन्धर्व्वतन्त्रे द्वितीयपटले॥ आनीय कन्यकां दिव्यां प्रमदां यौवनान्विताम्। प्रोक्षितां मूलमन्त्रेण सुशी-लाञ्चारुहासिनीम्। सर्व्वदानन्दहृदयां घृणालज्जाविवर्जिताम्। गुरुभक्तां सुवेशाञ्च देवतापूजने रताम्। तस्य गात्रे न्यसेन्मन्त्री पञ्चकामान् शवानपि। पञ्चकूटं न्यसेन्मन्त्री पञ्चाशन्मातृका

न्यसेत्। दिव्यमालां समादाय साधको विजितेन्द्रियः। सहस्रैकप्रमाणेन जपेत् स्वप्नावतीं ततः। अनेनैव विधानेन भवेदाकर्षणं महत्। तस्यास्तु मदनागारे पूजयेत् परमेश्वरीम्। सर्वसङ्क्षोभिणीं मुद्रां बद्ध्वा योनिं प्रचालयेत्। कामेश्वरीस्वरूपां तां चिन्तयेत् साधकोत्तमः। कामेश्वरस्वरूपञ्च आत्मानमपि भावयन्। स्वयमक्षोभितो भूत्वा साधकः पञ्चमं चरन्। तस्याः पुष्पं स्वयं यावद्रक्षणीयं प्रयत्नतः। ताम्बूलगन्धपुष्पैश्च प्रत्यहं पूजयेच्च ताम्। नानारसान्नपानेन तृप्तिमाचर्य्य यत्नतः। वस्त्रालङ्कारभूषाद्यैस्तस्याः सन्तोषमानयेत्। यथाकाले तथा पुष्पं स्वयं तद्योग्यरूपतः। गृह्णीयात्तु प्रयत्नेन स्वयम्भूकुसुमं हि तत्। स्वयम्भूकुसुमं दिव्यं त्रैलोक्येष्वपि दुर्लभम्। प्राप्नोति साधकश्रेष्ठो दुर्लभं साधयेद्भुवि। स्वयम्भूपुष्पयोगेन साक्षात्तेन सदार्चयेत्। विद्यां स्वप्नावतीं जप्त्वा क्षिप्रमाकर्षणं भवेत्। देवताश्च ग्रहा नागा दानवा राक्षसाश्च ये। राजानश्च स्त्रियः सर्वा नित्यं वश्या भवन्ति हि। स्वयम्भूकुसुमैः पूजां प्रत्यहं यः समाचरेत्। जप्त्वा वै दिव्यमालायां सर्वकामसुपालभेत्॥

अथ स्वयम्भूकुसुमादिशुद्धिः॥ म्लुं स्लुं म्लुं स्लुं स्वाहा अमृते! अमृतोद्भवे! अमृतेश्वरि! अमृतवर्षिणि! अमृतं स्रावय स्रावय स्वाहा। इति कुण्डगोलोद्भवादिशुद्धिः॥ ततः सर्वं हुं इत्यवगुण्ठ्य धेनुमुद्रयामृतीकृत्य तालत्रयं दत्त्वा दशदिग्बन्धनञ्च कृत्वा तदुपरि मूलं सप्तधा जपेदिति शोधनम्॥ हसक्षमलवरयूं आनन्दभैरवाय वषट्। इत्यानन्दभैरवं सम्पूज्य अर्घ्यपात्रं धृत्वा पठेत्। ऐं क्लीं सौः ब्रह्माण्डखण्डसम्भूतमशेषरससम्भवम्। आपूरितं महापात्रं पीयूषरसमाहर। ऐं खण्डैकरसानन्दककरे रयसुधात्मनि। स्वच्छन्दस्फुरणामत्र निधेह्यकुलरूपिणि!। क्लीं अकुलस्थामृताकारे शुद्धिज्ञानकरे

परे। अमृतत्वं निधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणि!। सौः तद्रूपेणैकरस्यत्वं कृत्वाह्येतत्स्वरूपिणि। भूत्वा परामृताकारं मयि विस्फुरणं कुरु। ऐं ब्लुं ब्लुं ग्रं अमृते अमृतोद्भवे अमृतवर्षिणि अमृतं स्रावय स्रावय स्वाहा। ऐं वदवदवाग्वादिनि ऐं क्लीं क्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु कुरु ऐं क्लीं सौः महामोक्षं कुरु ह्रौः हसौः। अनेन कारणमभिमन्त्र्य तत्र देवीमावाह्य तालत्रयदिग्बन्धनं कृत्वा अवगुण्ठनमुद्रया अवगुण्ठ्य धेनुमुद्रयामृतीकृत्य योनिमुद्रां प्रदर्श्य ह्सौर्नम इति सम्पूज्य तत्र शङ्खमुद्रां प्रदर्श्य षडङ्गेन सकलीकृत्य मत्स्यमुद्रया पात्रमाच्छाद्य मूलं दशधा जप्त्वा देवीस्वरूपं पात्रं भावयेत्। ततो देव्या आज्ञां गृहीत्वा घटश्रीपात्रयोर्मध्ये पात्राणि स्थापयेत्। ततो घटसमीपे गुरुपात्रं ततो भोगपात्रं ततः शक्तिपात्रं योगिनीपात्रं वीरपात्रं बलिपात्रं पाद्यपात्रमाचमनीयपात्रञ्च स्थापयेत् सामान्यार्घ्यवत्। ततो मत्स्यमांसादियुक्तकारणेन तत्त्वमुद्रया श्रीपात्रात् स्वमूर्ध्नि श्रीआनन्दभैरवं तर्पयामीति तन्मन्त्रेण त्रिः सन्तर्प्य तत्तन्मन्त्रेण अमुकानन्दनाथगुरुश्रीपादुकां तर्पयामि इति त्रिः सकृद्वा सन्तर्प्य एवं परमपरापरपरमेष्ठिगुरून् तर्पयेत्। ततः श्रीपात्रामृतेन देवीं सायुधां सवाहनां सपरिवारां हृदि तर्पयेत्॥ तत्त्वमुद्रा यथा निरुत्तरतन्त्रे चतुर्दशपटले॥ अङ्गुष्ठानामिकायोगाद्वामहस्तस्य पार्वति!। तर्पयेत् कालिकां देवीं सायुधां सपरीकराम्। अङ्गुष्ठो भैरवो देवस्त्वनामा शक्तिरुच्यते। शिवशक्तिसमायोगात्तर्पयेद्देवि! देवताम्। तर्पणं त्रिविधं देवि! श्रेष्ठं मध्यं कनीयसम्। श्रेष्ठञ्च दिव्यभावस्य वीरभावस्य मध्यमम्। कनीयसं पशूनाञ्च हृदि यन्त्रे जले क्रमात्। ततस्तत्त्वशुद्धिं कुर्य्यात्। तदुक्तं श्रुतौ। प्राणा-

पानव्यानोदानसमाना मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा ॥ १ ॥ ओं पृथिव्यप्तेजोवाय्वाकाशानि मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा ॥ २ ॥ ॐ प्रकृत्यहङ्कारबुद्धिमनःश्रोत्राणि मे इत्यादि ॥३॥ ओं त्वक्चक्षुर्जिह्वाघ्राणवचांसि मे इत्यादि ॥ ४ ॥ ओं पाणिपादपायूपस्थशब्दा मे इत्यादि ॥ ५ ॥ ओं वायुतेजःसलिलभूम्यात्मानो मे इत्यादि ॥ ६ ॥ ओं स्पर्शरूपरसगन्धघोषाणि मे शुध्यन्तां ज्योतिरहमित्यादि ॥७॥ इति सप्तमात्रान् पठित्वा कारणेन करतलं सम्मार्ज्य दक्षहस्ते त्रिकोणं लिखित्वा कलासद्दशीं शुद्धिं त्रिकोणदक्षिणोत्तरसम्मुखमध्ये तु निधाय वामहस्ताङ्गुष्ठमध्यमानामायोगैरेकां गृहीत्वा मूलमन्त्रान्ते क्रीं श्रीं आत्मतत्त्वेन स्थूलदेहं शोधयामि स्वाहा। अनेनाधःशुद्धिं स्वीकृत्य क्रीं श्रीं विद्यातत्त्वेन सूक्ष्मदेहं शोधयामि स्वाहा। अनेन दक्षिणस्थां स्वीकृत्य क्रीं श्रीं शिवतत्त्वेन परदेहं शोधयामि स्वाहा। अनेनोत्तरस्थां स्वीकृत्य क्रीं श्रीं सर्वतत्त्वेन तत्त्वत्रयाश्रयं जीवं शोधयामि स्वाहा। अनेन वाममध्यमाञ्च स्वीकृत्य वस्त्रेण हस्तौ संशोध्य हस्ताभ्यां सर्वाङ्गं मार्जयेदिति तत्त्वशुद्धिः ॥

इति श्रीप्राणतोषिण्यां सप्तमे निर्गुणकाण्डे पूर्णाभिषेकादिकथनं नाम द्वितीयः परिच्छेदः ॥

अथ वीराचारपूजा ॥ कुकलासदीपिकायां तृतीयपटले ॥ आदौ दीपनी देवेशि! वक्तव्या वीरपूजिते!। यस्य विज्ञानमात्रेण जीवन्मुक्तो भवेन्नरः। सर्वेषामेव देवानां दीपनीया प्रकीर्त्तिता। चतुर्वर्गप्रदा विद्या सिद्धविद्यासु पार्वति!। अनया तु विना विद्या न सिध्यति कदाचन। विना पूजां विना ध्यानं विनाचारं महेश्वरि!। साधको ज्ञानमात्रेण भवेन्मुक्तो महार्णवः। तत्कुले नैव दारिद्र्यं तद्गोत्रे नास्त्यप-

ख्तित:। प्राणं देयाद्धनं देयात् कुलं देयात् स्त्रियोऽपि च। एनां विद्यां महेशानि! न दद्यादन्यस्य कस्यचित्। कालीवीजत्रयं कूर्चयुगलं तदनन्तरम्। लज्जावीजद्वयं देवि! दक्षिणे कालिके तथा। पुनस्तान्येव वीजानि वह्निकान्तावधिर्मनुः। भैरवोऽस्य ऋषिः प्रोक्त उष्णिक् छन्द उदाहृतम्। दक्षिणाकालिका प्रोक्ता देवता तन्त्रगोपिता। वीजं शक्तिश्च देवेशि! कूर्चं लज्जां क्रमात् प्रिये!। अङ्गन्यासकरन्यासौ मायया परिकीर्त्तितौ। करालवदनां घोरां मुक्तकेशीं दिगम्बराम्। चतुर्भुजां महादेवीं मुण्डमालाविभूषिताम्। सद्यः छिन्नशिरःखड्गवामोर्द्ध्वाधःकराम्बुजाम्। अभयं वरदञ्चैव दक्षिणाधोर्द्ध्वपाणिकाम्। महामेघप्रभां श्यामां करकङ्कालकान्विताम्। कण्ठावसक्तमुण्डालीं गलद्रुधिरचर्चिताम्। घोरदंष्ट्रां करालास्यां पीनोन्नतपयोधराम्। शवरूपमहादेवहृदयोपरिसंस्थिताम्। महाकालेन च समं विपरीतरतातुराम्। एवं ध्यात्वा प्रयत्नेन मद्यैर्मांसैश्च भक्तितः। रक्तपुष्पै रक्तपद्मै रक्ताम्बरसमन्वितैः। सम्पूज्य यत्नतो मन्त्री परिवारान् समर्चयेत्। पीठपूजां ततो देवि! आधारशक्तिपूर्वकम्। प्रकृतिं कमठञ्चैव शेषं पृथ्वीं तथैव च। सुधाम्बुधिं मणिद्वीपं चिन्तामणिगृहं तथा। श्मशानं पारिजातञ्च तन्मूले मणिवेदिकाम्। तस्योपरि मणेः पीठं न्यसेत् साधकसत्तमः। चतुर्दिक्षु मुनीन् देवान् शिवाश्च नरमुण्डकान्॥ धर्माद्यधर्मादींश्चैव ओं ह्रीं ज्ञानात्मने नमः। केशरेषु च पूर्वादिष्विच्छाज्ञानक्रिया तथा। कामिनी कामदा चैव रतिः प्रीतिस्तथैव च। प्रियानन्दा महेशानि! मध्ये चैव मनोन्मनी। कालीं कपालिनीं कुल्लां कुरुकुल्लां विरोधिनीम्। विप्रचित्तां महेशानि! वहिः षट्कोणके बुधः। उग्रामुग्रप्रभां दीप्तां न्यसेत् पत्रत्रिकोणके। मात्रां मुद्रां मिता-

श्चैव न्यसेच्चान्यत्रिकोणके। सर्वाः श्यामा असिकरा मुण्डमाला-विभूषिताः। तर्जनीं वामहस्तेन धारयन्त्यः शुचिस्मिताः। दिगम्बरा हसन्मुख्यः स्वस्ववाहनभूषिताः। एवं ध्यात्वा प्रयत्नेन पूजयेदष्टपत्रके। ब्राह्मीं नारायणीञ्चैव तथा माहेश्वरीं प्रिये!। अपराजिताञ्च कौमारीं वाराहीमर्च्चयेद्बुधः। नारसिंहीं प्रपूज्यैव ततो दक्षिणतो यजेत्। महाकालं यजेद्देवि! विपरीतरतान्तरे। दिगम्बरं मुक्तकेशं चण्डवेशं प्रयत्नतः। एवं सम्पूज्य यत्नेन यजेन्मन्त्रमनन्यधीः। विना मद्यं विना मांसं यदि देवीं प्रपूजयेत्। ब्रह्महत्यापमाप्नोति मृते नरकमश्नुते। विना परस्त्रिया देवि! जपेद् यदि तु साधकः। शतकोटिजपेनैव तस्य सिद्धिर्न जायते। स्त्रियो गतिः स्त्रियः प्राणाः स्त्रियः सिद्धिर्न संशयः। नारीणां स्मरणे काली स्मारिता स्यान्न संशयः। कण्ठे कण्ठं मुखे वक्त्रं वक्षोजं चोरसि प्रिये!। कुलागारे तथा दण्डं दत्त्वा यो जपते नरः। जपाद्देनैव देवेशि! साक्षाद्भवति कालिका। तस्यै कुलरसं देवि! पाययित्वा यथोचितम्। स्वयं पीत्वा जपेन्मन्त्रं सिद्धिर्भवति नान्यथा। एतस्य च प्रयोगेण ग्लानिर्यस्य प्रजायते। कालिकामन्त्रवर्गेषु नाधिकारी स उच्यते। लक्षमात्रजपेनैव पुरश्चरणमुच्यते। क्षत्रियाणां द्विलक्षं स्याद्वैश्यानाञ्च त्रिलक्षकम्। शूद्राणान्तु चतुर्लक्षं पुरश्चरणमुच्यते। लक्षमात्रं जपेद्देवि! हविष्याशी दिवा शुचिः। रात्रौ निशीथे तावच्च पीत्वा कुलरसं प्रिये!। कुलनारीगणोपेतो जपेन्मन्त्रमनन्यधीः। एवमुक्तविधानेन दशांशं होममाचरेत्। तद्दशांशं तर्पणञ्च तद्दशांशाभिषेचनम्। तद्दशांशविप्रभोज्यं कीर्त्तितं परमेश्वरि!। पुष्पिणीमकरन्देन होमतर्पणमाचरेत्। एवं प्रयोगमात्रेण सिद्धो भवति नान्यथा। वाक्सिद्धिं लभते देवि! कवित्वं निर्मलं

प्रिये!। धनेनापि कुवेरः स्याद्विद्यया स्याद्‌वृहस्पतिः। आक-ल्पजीवनो भूत्वा अन्ते मुक्तिमवाप्नुयात्। प्रयोगारम्भकाले च सुरा दुग्धमयी भवेत्। लोहितं वा भवेद्देवि! मांसं पुष्पमयं भवेत्। सुरापात्रं भवेच्छून्यं मांसपात्रं विशेषतः। कला कलान्तरञ्चैव पुष्पं पुष्पान्तरं भवेत्। नवनीतं मांसतुल्यं मांसं पुष्पं भवेत् प्रिये!। एवं ज्ञात्वा साधकेन्द्रो जायते च क्रमेण तु। यस्यात्र प्रत्ययो देवि! लभते नात्र संशयः। मनो-योगं तदर्द्धं स्याद्‌यत्नेन वरवर्णिनि!। सौवर्णं राजतञ्चैव तथा मौक्तिकमेव च। विद्रुमं पद्मरागञ्च तथैव वरवर्णिनि!। प्रोक्तं मालाचतुष्कञ्च समभागेन मालिकाम्। ग्रथयेत् पट्टसूत्रेण पुष्पिणी गृहवर्त्तिनी। लोहितेन वरारोहे! सर्पाकारां सुशो-भनाम्। स्नापयेत् पञ्चगव्येन मकरन्देन पार्वति!। तारं मायां कूर्चयुग्मं माले माले पदं तथा। वह्निकान्तां समु-च्चार्य्य शतं जप्त्वाभिमन्त्रयेत्। स्नापयेत् पीठमध्ये तु शून्यागारे वरानने!। ततस्तां मालिकां देवि! गृहीत्वा यत्नतः सुधीः। ज्ञात्वा सिद्धिन्तु निकटे महोत्सवमथाचरेत्। षोड़शाब्दां सुयुवतीं समानीय प्रयत्नतः। तामुद्वर्त्त्य स्वयं गन्धैः स्नापये-च्छुद्धवारिणा। दिव्यालङ्कारशोभाभिर्दिव्यपुष्पैः सुगन्धिभिः। पूजयित्वा च मिष्टान्नैर्भोजयेत्तां वराननाम्। आसवं पाययेद्‌ यत्नान्निश्चयं तन्मयं पिबेत्। ततो मन्त्री रमयेत्तां रतिमिच्छति सा यदा। तस्या हस्ते ततो मालां दत्त्वा तां याचयेद्‌बुधः। नीत्वा मालां तया दत्तां ब्राह्मणान् भोजयेत्ततः। तदा जपेद-र्द्धरात्रौ साक्षाद्भवति नान्यथा। तत्रापि प्रत्ययो नो चेत् कलामध्ये विशेद्‌बुधः। पर्य्यङ्कस्य चतुष्पार्श्वे पट्टसूत्रं मनो-रमम्। बद्ध्वा द्वाविंशतिग्रन्थिं रमापुटितमूलकैः। निवेश्यैव स्वरक्तार्थं पाञ्चालीं सैन्धवीं तथा। वक्ष्यमाणक्रमेणैव वस्त्रोपरि

निधापयेत्। षोड़शाब्दां परलतां गणिकाञ्च विशेषतः। समानीय प्रयत्नेन दिव्यपुष्पैर्निवेदयेत्। भोजयेन्मिष्टभोज्यानि क्षौमवस्त्रं परिधापयेत्। लेपयेद्दिव्यगन्धेन भूषणैर्भूषयेत् स्वयम्। रमयेत् परया भक्त्या साधकः सिद्धिहेतवे। जपस्याद्बीजपेनैव सिद्धिर्भवति नान्यथा। विना मद्यं महेशानि! न सिध्यति कदाचन। तस्मादादौ प्रयत्नेन पीत्वा तां पाययेद्बुधः। तत्रापि प्रत्ययो नो चेच्चारुहोमं प्रकल्पयेत्। निशीथे निर्भयो देवि! श्मशाने प्रान्तरे तथा। गन्धैः स्नानादिकं कृत्वा पादशौचादिपूर्वकम्। घटमारोपयेत्तत्र सौवर्णं राजतं तथा। ताम्रं वा तं महेशानि! विभवानुक्रमेण तु। कल्पयित्वा निशाभागे पूजयेत् परमेश्वरीम्। उपाचारैर्यथाशक्ति वित्तशाठ्यं विवर्जयेत्। देवीपूजां विधायैव पिष्टन्तु परिदापयेत्। चरौ निधाय यत्नेन चतुष्पिष्टकवर्त्तुलम्। ततश्चरुं पाययेत्तु कुण्डमध्ये तु पूजयेत्। रक्तां घनां बलाकाञ्च नीलां कालीं कलावतीम्। द्वारेषु पूजयेन्मन्त्री लोकपालान् प्रयत्नतः। ग्रहान् सम्पूजयेन्मन्त्री चतुष्कोणक्रमेण तु। हविर्धारां हुमेन्मन्त्री यथाशक्त्या ततश्चरुम्। श्रावयेन्मूलमन्त्रेण मधुना सिद्धिहेतवे। हुता सञ्छादयेन्मन्त्री हुताशं पीतवाससा। पूजयेद् यत्नतो मन्त्री ततो दक्षिणकालिकाम्। धूपदीपैश्च नैवेद्यैः प्रदक्षिणमथाचरेत्। पिष्टवर्त्तुलसञ्जातं सुवर्णादि प्रजायते। एकेनैव प्रयोगेण यदि सिद्धिर्भवेत् प्रिये!। तथा होमो द्वितीयेन रौप्यं वापि सुरेश्वरि!। तृतीयेन भवेत्ताम्रं लौहं तुर्य्येण च स्मृतम्। एषामन्यतमां ज्ञात्वा साधयेत् सिद्धिमुत्तमाम्। सिद्धायां कालिकायाञ्च नैन्द्रं दुर्लभमुच्यते। गुरुमूलमिदं सर्वं तस्मादादौ समर्चयेत्। तस्य प्रसादमात्रेण सिद्धो भवति नान्यथा। तत्रापि प्रत्ययो नोचेत्

प्रदक्षिणमथाचरेत्। अमावस्यादिने चैव निशीथे गत-साध्वसः। श्मशाने प्रान्तरे वापि गत्वा देवीं प्रपूजयेत्। मद्य-मांसोपचारैश्च धूपदीपैर्मनोरमैः। नैवेद्यैः सामिषान्नैश्च तथैव वरवर्णिनि!। द्रव्यैर्लोहितवस्त्रैश्च स्वर्णाभरणभूषितैः। जप-न्मूलं क्रोधरुद्ध' प्रदक्षिणमथाचरेत्। प्रणमेद्दण्डवद्भूमावनिशं गिरिसम्भवे!। निशायामुत्तमं यावन्निशाशेषं महेश्वरि!। यदि भीतिर्भवेत्तत्र तदा दृढ़तरो भवेत्। दन्तादन्ति विधा-येव मनसैव मनु' स्मरेत्। अवश्यं श्रूयते शब्दः शिखा च दृश्यते स्थले। यदि तत्र भवेद्देवि! शब्दो गुणगुणो भवेत्। ततः परलतासक्तः पुनः कार्य्यं तथैव च। तदा भवति चार्वङ्गि! देववाणी सुशोभना। सिद्धिमावश्यकीं ज्ञात्वा महोत्सवमथा-चरेत्। तथापि प्रत्ययो नोचेत् भगयागमथाचरेत्। कामिनीं युवतीं यत्नात् पुष्पिताञ्च विशेषतः। तामानीय प्रयत्नेन स्वच्च भूषणमाचरेत्। तामुद्वर्त्य स्वयं गन्धैर्भूषणैर्वसनैस्तथा। मिष्टान्नैर्भोजयित्वा च भक्त्या परमया शिवे!। तां विवस्त्रां विधायैव स्थापयेदूर्द्धतल्पगे। ततः पूजां विधायैव नाना-सम्भारसंयुतैः। तत्रैव रचयेद्यन्त्रं रक्तचन्दनयावकैः। भग-नासां भगप्राणां भगदेहां भगस्तनीम्। पूजयेदष्टपत्रेषु मध्ये देवीं प्रपूजयेत्। रक्तगन्धै रक्तमाल्यै रक्तवस्त्रैर्मनोरमैः। पूजये-द्भक्तितो मन्त्री देवीदर्शनकाम्यया। एतस्मिन् समये देवि! रतिमिच्छति सा यदा। लतान्तु रमयेद्देवि! यावद्धोमं करोति न। पुष्पिणीमकरन्देन ततो होमं समाचरेत्। ओं नमस्ते भगमालायै भगरूपधरे! शुभे!। भगरूपे! महाभागे! भोग-मोक्षैकदायिनि!। भगवत्याः प्रसादेन मम सिद्धिर्भविष्यति। कालि! कालकलारूपे! कुलीने! कुलरूपिणि!। कुलमार्ग-प्रसादेन मम सिद्धिर्भविष्यति। एवं स्तुत्वा महेशानि! कूर्च-

वीजसहस्रकम्। जप्यं देवेशि! वचसा नारसिंहं शतावधि। उन्मत्ता सा स्वयं ब्रूते यदा साक्षाद्भविष्यति। अवश्यं कथयेत् कान्ता नात्र कार्य्या विचारणा। इति ते कथितं देवि! गुह्याद्गुह्यतरं परम्। प्रकाशात् कार्य्यहानिः स्यात्तस्माद्यत्नेन गोपयेत्। अत्राशक्तो महेशानि! कलावटीं समाचरेत्। कुङ्कुमं चन्दनं चन्द्रं एकीकृत्य तु पेषयेत्। जपेत् सहस्रं देवेशि! देवीश्चैव प्रपूजयेत्। कामिनीं पूजयेद्भक्त्या तस्या मूर्द्धनि कारयेत्। तिलकं वश्यमात्रेण स्वयं शिरसि धारयेत्। रमा वाणी भवानी च सर्वसम्मोहिनी तथा। ङेयुता परमेशानि! वह्निकान्तावधिर्मनुः। अनेन शतजप्तेन तिलकं मूर्ध्नि कारयेत्। कलाञ्च पूजयेद्यत्नान्नानाभरणभूषिताम्। पाययेत् सा स्वयं यत्नात् स्वयं पीत्वा च यत्नतः। जायते देववाणी च ततो देवी न संशयः। एवं भूत्वा वरारोहे! ततो यत्नं समाचरेत्। अथवा देवदेवेशि! नग्नीभूय विचक्षणः। नग्नां परलतां पश्यन् जपेन्मन्त्रमनन्यधीः। यामोत्तरं समारभ्य यामद्वयमतन्द्रितः। मद्यमांसोपचारैश्च पूजयित्वेष्टदेवताम्। रक्षार्थं खड्गपाणिस्तु स्वपार्श्वेऽपि नियोजयेत्। गणनाथं क्षेत्रपालं वटुकं योगिनीं तथा। बलिभिः सामिषान्नैश्च यजेत् परमसुन्दरि!। घृतप्रदीपं प्रज्वाल्य ततो देवीं समर्चयेत्। ततः सहस्रं जपतो देवतादर्शनं भवेत्। अथवा नियमी भूत्वा भूतलिप्यादिसम्पुटम्। जपेत् प्रतिदिनं देवि! सहस्रं सिद्धिहेतवे। दिवारात्रौ संस्मरणं हविष्याशनमेव च। सर्वदा धौतवस्त्रञ्च परिधाय प्रयत्नतः। म्लेच्छसम्भाषणञ्चैव पिष्टकं यत्नतस्त्यजेत्। केवलं दुग्धपायी स्यादथवा यावकाशनः। शाकाहारी जलाहारी निराहारोऽथवा भवेत्। तीर्थमासाद्य निवसेद्गुवो वा प्रियमेव च। कुमारीं पूजयेद्यत्नान्नानाभरण-

संयुताम् । मासे पूर्णे वरारोहे ! निशीथे गतसाध्वसः । महापूजां प्रकुर्वीत लतामण्डलमध्यगः । मद्यैर्मांसैश्च विविधैरन्यैश्च विविधैस्तथा। सम्पूज्य विधिवद्भक्त्या सर्वदा तिमिरालये। सहस्रजपमात्रेण सिद्धिर्भवति नान्यथा । साचादायाति सा देवी सत्यं सत्यं न संशयः। साचाद्यति वरारोहे ! भवेदिन्दुसमो नरः। अञ्जनं पादुकासिद्धिः खड्गसिद्धिर्वरानने !। अजरामरता देवि ! कामिनीसिद्धिहेतवे। तथा मधुमतीसिद्धिर्जायते नात्र संशयः। देवचेटीशतं तस्या वश्यं भवति नान्यथा। स्वर्गे मर्त्ये च पाताले स यत्र गन्तुमिच्छति। तत्रैव चेटिकाः सर्वा नयन्ति नात्र संशयः। रम्भा वापि घृताची वा यदि जपति साधकः। तदैव याति सा देवी नात्र कार्य्या विचारणा। इच्छामृत्युर्भवेद्देवि ! किमन्यत् कथयामि ते। एष विधिर्दक्षिणाया गुह्यस्तन्त्रसहस्रके। तव स्नेहाद्वरारोहे ! कथितो हि न संशयः। अथवा गणिकां गत्वा पूजयेद्भक्तिभावतः। तया सह जपेन्मन्त्रं पिबेदनिशमासवम्। निवेद्य परया भक्त्या पाययेत्तां प्रयत्नतः। एवं ज्ञात्वा विधानन्तु मासमेकं वरानने!। प्रत्यहं होमयेद्विद्वान् नित्यं स्याद्विप्रभोजनम्। मासे पूर्णे साधकेन्द्रो निशीथे तु लतायुतः। साचात् पूजाक्रमेणैव पूजयेत् परमेश्वरीम्। महातिमिरमध्यस्थो जपेन्मन्त्रमनन्यधीः। तत्क्षणाज्जायते सिद्धिः सत्यं देवि! वदामि ते। अथवा निम्बकाष्ठेन पाञ्चालीं रचयेद्बुधः। कान्ताकारामसिद्धाञ्च स्नातामूर्द्ध्वकरैवतीम्। गत्वा निर्जनदेशे तु महाकान्तारके प्रिये!। तत्र पूजाविधिं कृत्वा प्रयोगविधिमाचरेत्। विलिखेच्चन्दनेनैव भुवि मन्त्रं मनोरमे!। पाञ्चालीं स्थापयेत्तत्र रक्तवस्त्रोपरि प्रिये!। तत्र गत्वा चतुर्दिक्षु कीलकान् रोपयेत् प्रिये!। तत्रैव लोक-

पालांश्च खड्गमन्त्रेण कीलितान्। गणेशं वटुकं चैव योगिनीं चन्द्रदिक्षु च। सम्पूज्य विधिवन्मन्त्री दूर्वाक्षतसमन्वितः। ओं ये चात्र संस्थिता भूताः श्वेताः कुष्माण्डरूपिणः। योगिन्यो यातुधानाश्च महारौद्राश्च ये तथा। गन्धर्वा विघ्नकर्त्तारः किन्नराश्च पिपीलिकाः। चिपिटाः शङ्कराश्चैव घोरदंष्ट्रा महोत्कटाः। सूचीमुखा महापापाः पापकर्मरताश्च ये। ताड़िताम्तु मया सर्वे प्रयान्तु शङ्कराज्ञया। कूर्चमन्त्रं समुच्चार्य्य ताड़येदक्षतैर्भृशम्। महापूजाविधानेन देवीं सम्पूज्य यत्नतः। ततः पुत्तलिकाभाले मूलमन्त्रं लिखेत् सुधीः। पूजयेद्देवतास्तस्या अङ्गे देवि! यथोचिताः। ललाटे कालिकाञ्चैव नेत्रयोर्भद्रकालिकाम्। कर्णयोर्गुह्यकालीञ्च जिह्वायां सिद्धिकालिकाम्। श्मशानकालिकां मूर्ध्नि महाकालीञ्च वक्षसि। कव्याश्च कालिकां यत्नाद् गले श्रीयोनिकालिकाम्। एवं सम्पूज्य यत्नेन हृदि मूलं शतं जपेत्। अन्धकारे महाघोरे निर्जने वा सुरालये। सहस्रजपमात्रेण साक्षाद्भवति नान्यथा। अथवापि चितामध्ये रम्भामूलं समाश्रयेत्। पूजयेत् परया भक्त्या नानाभरणसंयुताम्। मद्यमांसोपचारेण तरुणीगणमध्यगः। आनिशीथं जपेन्मन्त्रं साक्षाद्भवति नान्यथा। अथवा कर्णिकारस्य वीजेन परमेश्वरि!। रचयेन्मालिकां दिव्यां रक्तवस्त्रेण पार्वति!। पुष्पिणीगर्त्तरक्तेन शोभयेत् परमेश्वरि!। ततोऽपि धूपयेद्देवि! कालागुरुसमुद्भवैः। धूमैरम्भोजनयने! देवीं सम्पूज्य यत्नतः। मद्यमांसोपचारैस्तु साक्षाद्भवति नान्यथा। इति ते कथितं देवि! गुह्याद् गुह्यतरं परम्। प्रकाशात् सिद्धिहानिः स्यात्तस्माद् यत्नेन गोपयेत्। अथवा काकजङ्घाया लतां दग्ध्वा प्रयत्नतः। तद्भस्मना वरारोहे! भूषयेत् स्वतनुं तथा। ततश्चितायां देवेशि! नग्नीभूय विचक्षणः। जपे-

देकान्तरात्मा च साक्षाद्भवति नान्यथा। अथवापि वराहाणां भुक्तानां भुवि रोपयेत्। तत्र देवीं समभ्यर्च्च मद्यमांसप्रयोगतः। पूजयेत् परमेशानि! नानाद्रव्यैर्मनोरमैः। पूजयित्वा प्रयत्नेन जपेन्मन्त्रमनन्यधीः। ततः साक्षाद्वरारोहे! नात्र कार्य्या विचारणा। अथवापि वरारोहे! प्रयोगविधिमाचरेत्। नरमुण्डं समानीय मार्जारस्यापि पार्वति!। गोमुण्डं सार्द्धमानीय भूमौ निक्षिप्य यत्नतः। ततः पीठं समारोप्य देवीं ध्यात्वा तु साधकः। पूजयेदर्द्धरात्रौ तामासवादिसमन्वितः। जपेत्तु परया भक्त्या सहस्रावधि साधकः। ततः साक्षाद्भवेद्देवि! नात्र कार्य्या विचारणा। अथवा वनितां रम्यां गत्वा देवेशि! यत्नतः। पीत्वा तदधरं सम्यक् कर्पूरेण तु पूरयेत्। तद्योनौ कुङ्कमञ्चैव तत्कर्णे चौद्रमेव च। ततो भुक्त्वा तु तां कान्तां तन्मन्त्रं परमेश्वरि!। तत् कुङ्कमञ्च तत् चौद्रमेकीकृत्य प्रयत्नतः। तदेव तिलकं कृत्वा निशीथे गतसाध्वसः। सहस्रञ्च जपेन्मन्त्री ततः साक्षाद्भवेत्तदा। अथवापि शरीरोत्थरुधिरेण वरानने!। यन्त्रं निर्माय यत्नेन तत्र देवीं समर्चयेत्। मद्यमांसोपचारैश्च अर्कपुष्पैर्वरानने!। सहस्रजपमात्रेण सिद्धिर्भवति नान्यथा। अथवा परमेशानि! गङ्गातीरे वसेत् सुधीः। उपवासद्वयं कृत्वा कुर्य्यात् स्नानमतन्द्रितः। ततो देवीं समभ्यर्च्च धूपदीपैर्मनोरमैः। हविष्यान्नैश्च नैवेद्यैः स्वयं भुञ्जीत वाग्यतः। भुक्त्वा पीत्वा स्त्रिया सार्द्धं निशीथे गतसाध्वसः। जपेत् सहस्रं देवेशि! ततः सिद्धिर्वरानने!। अथवा वटमूलस्थो दिग्वासा मुक्तकेशवान्। लताभिर्वेष्टितो भूत्वा जपेन्मन्त्रमनन्यधीः। ततः साक्षाद्भवेद्देवि! नात्र कार्य्या विचारणा। एतेनापि प्रयोगेण यदि साक्षान्न जायते। ततो देवि! प्रवक्ष्यामि उपायं परमाद्भुतम्। एकेनैव प्रयोगेण यदि साक्षान्न जायते। द्वितीयं

वापि कुर्वीत तृतीयं वाथवा प्रिये!। तृतीयेन नचेत् सिद्धि-स्तत्रोपायं वदामि ते। वस्त्रे शुक्ले तथा रक्ते पीते वा नील-वाससि। पुत्तलीं रचयेद्देव्याः सर्व्वावयवसुन्दरीम्। पूजयेत् क्रोधरूपेण रक्तवस्त्रैर्मनोहरैः। तत्र देवीं जपेद् यन्त्रे समभ्यर्च्य सहस्रकम्। रक्तचन्दनवीजेन तत्र कल्पितमालया। ततः शाल्मलिकाष्ठेन निम्बकाष्ठेन वा प्रिये!। वह्निं प्रज्वाल्य यत्नेन तत्र वह्निं प्रपूजयेत्। ततः पुत्तलिकाभाले लिखेन्मन्त्रं वरानने!। सिन्दूरपुत्तलीं देवि! ततो वह्नौ तु तापयेत्। ताड़येन्मूलमन्त्रेण मूलमन्त्रेण रक्षयेत्। चालयेत् शुद्धदुग्धेन अथवा दधिवारिणा। ततो हुँकारं प्रजपेत् सहस्रं परमेश्वरि!। ततः साक्षाद्भवेद्देवि! नात्र कार्य्या विचारणा। अथवा ताड़ये-द्देवि! नारसिंहेन पार्व्वति!। हविष्याशी दिवा भूत्वा ब्रह्म-चारिसमो नरः। रात्रौ ताम्बूलपूरास्यो तलामण्डलमध्यगः। नारसिंहेन देवेशि! पुटितन्तु मनुं जपेत्। ततो लक्षजपेनैव साक्षाद्भवति नान्यथा। अवश्यं जायते साक्षान्ममैव वचनं यथा। अथवापि वरारोहे! नौकालोहेन पार्व्वति!। शूलं निर्म्माय यत्नेन पटे देवीन्तु कल्पयेत्। तां पूजयेत् प्रयत्नेन रक्तचन्दनपुष्पकैः। पूजयित्वा प्रयत्नेन तस्याङ्के पीठदेवताम्। आवाह्य विधिवद्भक्त्या जपेन्मन्त्रमनन्यधीः। शूलं सम्पूजयेद् यत्नात्तीक्ष्णं परमदुर्लभम्। ओँ महाशूल! नमस्तुभ्यं सर्व्वदैत्या-न्तकारिणे। अस्त्रद्वयं समुच्चार्य्य ततः शूलेन वक्षसि। उद्य-मेनैव सा काली आयाति च न संशयः। अवश्यं जायते साक्षा-न्ममैव वचनं यथा। अथवा कालिकावीजं शतं संलिख्य यत्नतः। पूर्व्वपक्षे कुङ्कुमेन मन्त्रं स्वर्णशलाकया। विलिख्य भुवि देवेशि! तत्र कान्तां समानयेत्। तद्भावे पूजयेद्देवीं नानाभरणसंयुताम्। निशीथे तु जपेन्मन्त्रमेकान्ते कान्तया

सह। जपेन्मन्त्रं सहस्रन्तु ततः साक्षाद्भवेद्ध्रुवम्। इति ते कथितं देवि! गुह्याद्गुह्यतरं परम्। अप्रकाश्यमिदं देवि! गोपयेत् मातृजारवत्॥

चतुर्दशपटले॥ दक्षिणायाश्च विद्याया गुह्यायाश्चापि सुन्दरि!। महाकाल्या महाविद्या सिद्धिकाल्याश्च पार्वति!। श्मशानकालिकायाश्च नायिकायाश्च शैलजे!। तन्नायिकानां देवेशि! वक्ष्यते साधनं ततः। उक्ताश्च परमेशानि! वक्तव्यश्चापि पार्वति!। कालीवीजं महेशानि! मन्त्रः सर्वोत्तमोत्तमः। त्रिगुणा देवि! विख्याता विद्या परमदुर्लभा। पूर्वोक्तं सकलं कुर्य्यात् फलं तावद्भवेत् प्रिये!। नमोऽन्तो वा भवेन्मन्त्रो वषडन्तोऽपि भाविनि!। लज्जाद्यो वा भवेद्देवि! वाग्भवाद्यो महामनुः। एतन्मन्त्रं वरारोहे! सर्वतन्त्रेषु गोपितम्। भैरवोऽस्य ऋषिः प्रोक्त उष्णिक् छन्द इति स्मृतम्। पूजाध्यानादिकं सर्वं पूर्ववत् परिकीर्त्तितम्। साधनं सकलं देवि! पूर्ववत् परिकीर्त्तितम्। या ख्याता त्र्यक्षरी विद्या स्वाहान्ता परिकीर्त्तिता। पञ्चाक्षरी महाविद्या सर्वतन्त्रेषु गोपिता। ध्यानं पूजादिकं सर्वं पूर्ववत् परिकीर्त्तितम्। साधनं सकलं देवि! लतागणसमन्वितम्। एकाक्षरी महाविद्या स्वाहान्ता त्र्यक्षरी स्मृता। साधनं परमेशानि! मद्यमांसोपचारतः। एकाक्षरी महाविद्या स्वाहान्ता परिकीर्त्तिता। फडन्ता वा महेशानि! वषडन्ता समीरिता। नमोऽन्ता वा महेशानि! सर्वसिद्धिप्रदायिनी। पूर्ववीजं वरारोहे! काली चान्द्रं वरानने!। कालिकाया महाविद्या गोपिता सर्वतन्त्रके। धरावीजं वरारोहे! काली लक्ष्मीश्च वाग्भवम्। एतन्मन्त्राक्षरं देवि! कालिकायाः सुदुर्लभम्। एतेषां मन्त्रवर्य्याणां ऋषिः स्यादुग्रभैरवः। छन्दोऽनुष्टुबिति ख्यातं देवता दक्षिणेरिता॥

अथ वक्ष्ये महेशानि! गुह्यकाल्याः शुभावहा। कालीवीज-त्रयं देवि! गुह्यकालीयुतं ततः। स्वाहान्ता कथिता विद्या विद्येयं परमा मता। नमोऽन्ता वापि सा ज्ञेया वषडन्तापि सा स्मृता। कालीवीजं समुद्धृत्य धरावीजं समुद्धरेत्। लज्जा-वीजं समुद्धृत्य कूर्चवीजं समुद्धरेत्। स्वाहान्ता कथिता विद्या चतुर्वर्गफलप्रदा। कूर्चलज्जायुगं देवि! तथा काली प्रकी-र्त्तिता। स्वाहान्ता कथिता विद्या सर्वतन्त्रेषु गोपिता। एतासामेव विद्यानां छन्द उष्णिगिति स्मृतम्। ऋषिः स्याद्द-क्षिणामूर्त्तिर्देवता दक्षिणा स्मृता। कूर्चत्रयं वरारोहे! स्वाहान्ता हि प्रकीर्त्तिता। कालीवीजं समुद्धृत्य कालीकालीपदं तथा। महाकालीपदं तस्मात् स्वाहान्तः प्रतिमानतः। सर्वतन्त्रेषु विख्यातो महाकाल्या महामनुः। कालीवीजं समुद्धृत्य महा-काली च ङेयुता। स्वाहान्ता कथिता विद्या चतुर्वर्गफल-प्रदा। असितावीजमुद्धृत्य महाकालीपदं द्विधा। स्वाहान्ता कथिता विद्या महाभूतिविवर्द्धिनी। काली लक्ष्मी रमा माया स्त्रीं परः परिकीर्त्तितः। नमोन्तोऽयं मनुर्देवि! साक्षा-न्मुक्तिप्रदो मतः। कालीवीजं समुद्धृत्य लज्जावीजं समुद्धरेत्। सिद्धिकालीपदं ङेऽन्तमसितान्तं वरानने!। एतासामेव विद्यानां गायत्रीच्छन्द ईरितम्। देवतास्या महाकाली चतु-र्वर्गफलप्रदा। स्वाहान्ता वा वरारोहे! फडन्ता वापि कालिका। लज्जावीजं समुद्धृत्य निजवीजं समुद्धरेत्। सिद्धि-काली ततो ङेऽन्ता स्वाहान्तेयं प्रकीर्त्तिता। नमोऽन्ता सा महादेवी चतुर्वर्गफलप्रदा। असितामेतदुद्धृत्य भवानीवीज-मुद्धरेत्। वाग्भवं परमेशानि! परावीजं ततः स्मृतम्। काली-कालीपदं तस्मात् सिद्धिकालीपदं ततः। फडन्तासौ महा-विद्या सर्वतन्त्रेषु गोपिता। रमावीजत्रयं देवि! लज्जावीज-

त्रयं तथा। कामवीजत्रयं देवि! सिद्धिकाली च ङेयुता। स्वाहान्ता कथिता विद्या मुक्तिमार्गप्रदीपिका। एतासां सौम्यविद्यानां गायत्रीच्छन्द ईरितम्। ऋषिः स्यात् कपिलो देवि! देवता सिद्धिकालिका। कालीवीजं समुद्धृत्य श्मशान-कालिकापदम्। ङेयुतं परमेशानि! सर्वसिद्धिप्रदायिनी। कालीवीजं समुद्धृत्य कूर्चवीजं वरानने!। स्वाहान्ता कथिता विद्या सर्वसिद्धिप्रदायिनी। कूर्चद्वयं वरारोहे! देवीवीजं महेश्वरि!। सर्वसिद्धिप्रदा विद्या सर्वशास्त्राविरोधिनी। विश्वामित्रो मुनिः प्रोक्तो गायत्रीच्छन्द उच्यते। श्मशान-कालिका देवी सर्वतन्त्रेषु गोपिता। एतासां साधनं देवि! पूर्वोक्तं परमेश्वरि!। सर्वासां वक्ष्यमाणन्तु पुरश्चरणमुच्यते। अनेनापि प्रयोगेण सिद्धिर्भवति नान्यथा। श्मशानकालिका-यास्तु कलायामुपवेशनम्। कलास्थाने महेशानि! कुमारी-योग उच्यते। अष्टवर्षा तु या बाला द्वादशाधो महेश्वरि!। स्थापयेत्तु चतुष्पार्श्वे मिष्टभोजनभोजिता। पूजयेत् परया भक्त्या स्वयं भुञ्जीत साधकः। पाययेदासवं यत्नात् स्वयञ्चापि पिबेत्ततः। सकारञ्च षकारञ्च लकारेण समन्वितम्। जपे-दष्टोत्तरशतं तासां कर्णे पृथक् पृथक्। तमभ्यर्च्य प्रयत्नेन कृत्वा वक्षसि साधकः। अङ्गन्यासयुतं देवि! जपेन्मन्त्रमनन्यधीः। एतस्मिन् समये देवि! रतिमिच्छति सा यदा। तदा तां रमयेन्मन्त्री पीड़ा न जायते यथा। शनैरधरपानञ्च शनै-र्वक्षोजमर्दनम्। शनैर्गुदनिवेशञ्च शनैरालिङ्गनं प्रिये!। यद्यत्र जायते पीड़ा तदा सिद्धिविनाशिनी। एवं प्रयोगे तु कालो साक्षाद्भवति नान्यथा। इति ते कथितं देवि! गुह्याद्-गुह्यतरं परम्। भक्तिहीनं क्रियाहीनं विधिहीनञ्च यद्भवेत्। तदा सिद्धिर्विलम्बेन निष्फलं नैव जायते। अविश्वासो न

कर्त्तव्य आलस्यं नैव पार्व्वति !। सर्व्वेषां मन्त्रवर्णानां सार-मुद्धृत्य पार्व्वति !। दुग्धमध्ये यथा सर्पिः काष्ठमध्ये यथानलः। तथा समुद्धृतः सारो देवि ! नास्त्यत्र संशयः। स्वयं सिद्धा हि ते मन्त्राः सर्व्वतन्त्रेषु गोपिताः। इति ते कथितं देवि ! गोपनीयं प्रयत्नतः ॥

तोड़लतन्त्रे चतुर्थपटले ॥ शृणु चार्व्वङ्गि ! सुभगे ! तारायाः पूजनं महत्। मन्त्रेणाचमनं कृत्वा गुरुदेवं नमेत्ततः। जलं संशोध्य हस्तौ च पादौ च क्षालयेत्ततः। मन्त्रेणाचमनं कृत्वा ततः पीठं विचिन्तयेत्। शिखां बद्धा ततो देवि ! विविधं विघ्ननाशनम्। भूम्यासनञ्च संशोध्य वस्त्रे ग्रन्थं विधाय च। कायवाक्‌शोधनं कृत्वा ततः पुष्पविशोधनम्। यन्त्रं कृत्वा साधकेन्द्रः सामान्यार्घ्यञ्च विन्यसेत्। द्वार-पालांश्च सम्पूज्य पीठपूजां समारभेत्। पीठशक्तीश्च लक्ष्म्या-द्यास्ततः पीठमनुं यजेत्। भूतशुद्धिं प्रवक्ष्यामि विशेष इह यद्भवेत्। कूर्च्चयुक्तेन हंसेन पूरकेण सुरेश्वरि !। कुण्डल्या सह चात्मानं चतुर्विंशतिवीजकम्। तत्र लीनानि देवेशि ! परमात्मनि साधकः। मायया सन्दहेत् पापं पुरुषं कज्जल-प्रभम्। कुम्भकेन वरारोहे ! भस्म कुर्य्याद्विचक्षणः। बधू-वीजेन देवेशि ! भस्मना सह रेचयेत्। पूरकेण तु कूर्च्चेन ललाटेऽमृतसञ्चयम्। चिन्तयेत् परमेशानि ! कुम्भकेना-मृताम्बुधिम्। आं ह्रीं क्रों वह्निजायान्तं हृदि त्रैकादशं जपेत्। ततस्तु चिन्तयेद्धीमाना:कारादृक्तपङ्कजम्। तस्योपरि पुनर्ध्यायेत् टाङ्कारादृक्तपङ्कजम्। तस्योपरि पुनर्ध्यायेत् हुङ्कारं नीलसन्निभम्। तस्योपरि पुनर्ध्यायेद्वीजभूषितकर्त्तृकाम्। तस्योपरि परं विन्दुं शिवरूपञ्च अव्ययम्। बालुकायाः सह-स्रैकभागं विन्दुं सुदुर्लभम्। विन्दुमध्ये मणिद्वीपं शतयोजनः

विस्तृतम्। विन्दुमध्ये परं ज्योतिर्बुद्बुदाकारमण्डलम्। यथैक-बुद्बुदे देवि! प्रतिविम्बं प्रपश्यति। तथा निरीक्षणं कार्य्यं प्रकुर्य्याज्ज्ञानचक्षुषा। मणिद्वीपन्तु तन्मध्ये सुवर्णबालुकामयम्। परितो भावयेन्मन्त्री पारिजातं मनोहरम्। मध्ये कल्पद्रुमं ध्यायेदात्मानं तारिणीमयम्। उदयादित्यसङ्काशं सहस्रादित्यवर्चसम्। चतुर्द्वारसमायुक्तं हेमप्राकारभूषितम्। बहुचामरघण्टादिदेवकन्यादिशोभितम्। मन्दवायुसमायुक्तं गन्धधूपैरलङ्कृतम्। तन्मध्ये वेदिकां ध्यायेन्नानारत्नोपशोभिताम्। सुवर्णसूत्रखचितं चिन्तयेच्छत्रमुत्तमम्। तदधश्चिन्तयेन्मन्त्री रत्नसिंहासनं प्रिये!। तत्र देवीं चिन्तयेच्च यथोक्तध्यानयोगतः। योगसारोक्तकैर्देवि! उपचारैः प्रपूजयेत्। प्राणायामं ततः कृत्वा ऋष्यादिन्यासमाचरेत्। तालत्रयं छोटिकाभिर्दशदिग्बन्धनञ्चरेत्। षोढ़ा न्यासं ततः कृत्वा व्यापकं तदनन्तरम्। विशेषार्घ्यञ्च संस्थाप्य पञ्चतत्त्वं विशोधयेत्। सुधादेवीं समानीय विपञ्चीकरमाचरेत्। कुम्भे पुष्पं समादाय त्रिकोणे त्रिः प्रपूजयेत्। वामदेवं त्रिधा चोक्त्वा खेचरीं दशधा जपेत्। तथा चानन्दगायत्रीमृचञ्च त्रिर्जपेत् सुधीः। ब्रह्मशापं शुक्रशापं कृष्णशापं सुरेश्वरि!। दिग्जपावाशयेद्धोमान् ततो मन्त्रत्रयं पठेत्। क्षुरिकाञ्च मृतञ्चैव श्रीतिरस्करिणीं प्रिये!। पावमानञ्च त्रिर्जप्त्वा शोधनादीन् समाचरेत्। वारुणं त्रिर्जपेद्देवि! चामृतं सप्तधा जपेत्। विद्यातत्त्वे धेनुमुद्रां प्रदर्श्य मूलमष्टधा। कुण्डलिनीं समुत्थाप्य शिवोऽहं भावयेत्ततः। मांसं मीनं शोधयित्वा मुद्राशोधनमाचरेत्। शक्तिञ्च कुलपुष्पञ्च तु शोधयेच्च साधकोत्तमः। देवान् पितॄन् ऋषींश्चैव तर्पयेदिष्टदेवताम्। शोधितं द्रव्यमादाय विशेषार्घ्यं विनिक्षिपेत्। ततो ब्रह्ममयं ध्यात्वा पूजाध्यानं समाचरेत्। नासास्थानात् समानीय पीठे

पुष्पं निधाय च। ततश्चावाहनं कृत्वा पञ्चमुद्राः प्रदर्शयेत्। षड़ङ्गेन च सम्पूज्य पुनर्मुद्राः प्रदर्शयेत्। जीवन्यासं ततः कृत्वा उपचारैः प्रपूजयेत्। षड़ङ्गानि च सम्पूज्य अष्टौ्ष्यं पूजयेदधः। गुरुपंक्तिं पूजयित्वा दलमूलेषु पूजयेत्। महा-पूर्वांश्च काल्यादीन् यजेद्वै रोचनादिकान्। पुनर्देवीं प्रपूज्याथ बलिं दद्याद्विचक्षणः। प्राणायामं ततः कृत्वा मन्त्रध्यानं समाचरेत्। जपं कृत्वा महेशानि! देव्या हस्ते समर्पणम्। प्राणायामं ततः कृत्वा तत्त्वस्वीकारमाचरेत्। तस्यै दत्त्वा स्वयं पीत्वा प्रजपेत् साधकोत्तमः। पीत्वा पीत्वा जपित्वा च मुक्तः कोटिकुलैः सह। प्रतिपात्रे जपेन्मन्त्रमष्टोत्तरशतं सुधीः। स्तुतिञ्च कवचं स्मृत्वा चाष्टाङ्गं प्रणमेत्ततः। विशेषार्घ्यं प्रदा-तव्यमात्मानञ्च समर्पयेत्। रुद्ररूपी स्वयं भूत्वा संहारेण विसर्जयेत्। अङ्गन्यासं महेशानि! प्राणायामं ततः परम्। ऐशान्यां मण्डलं कृत्वा चण्डाल्युच्छिष्टपूर्विकाम्। निर्माल्य-वासिनीं ङेऽन्तां चण्डेश्वर्य्यै नमो नमः। निर्माल्यं धारयेत् शीर्षे चन्दनञ्च ललाटके। गुरुस्थाने लिखेद्विन्दुं विहरेद्भैरवो यथा। संक्षेपपूजनं देवि! मानसं तत्त्ववर्जितम्। ततोऽन्न-माचरेदत्र नान्यत् सञ्चारयेत् सुधीः। अन्यसञ्चारणाद्देवि! क्रुद्धा भवति तारिणी॥ तत्रोक्तं वाह्यपूजाप्रकरणोक्तम्॥ तत्त्वज्ञानं मानसञ्च शक्तिमात्रे हि पार्वति!॥

पिच्छिलातन्त्रे द्वादशपटले॥ यस्मिन् कृते महामन्त्रः श्रूयते सावधानतः। तद्वीयन्ते शरीरस्थपातकानि महान्त्यपि। प्रयोगं मन्त्रशुद्ध्यादेः कथयामि महेश्वरि!। मन्त्रशुद्धिं विधा-याथ कुर्य्यान्मन्त्रशिखां ततः। कुल्लुकां मूर्ध्नि सञ्जप्य महासेतुं जपेत्ततः। नाभौ जपेत्तु निर्वाणं ध्यायेत् कुण्डलिनीं ततः। प्राणायामं विधायाथ षड़ङ्गन्यासमाचरेत्। तत अर्घ्यादिवि-

न्यासो जपेत् सप्तच्छदां सकृत्। भ्रुवेण पुटितं मन्त्रं सप्तधा प्रजपेत् प्रिये !। मन्त्रादौ प्रणवं दत्त्वा सकृज्जपेन्महेश्वरि !। प्रणवं वाथ मायां वा वाग्भवं वाथ दीपनीम्। मन्त्रादौ दत्त्वा प्रजपेत् सप्तधा परमेश्वरि ! कालीमन्त्रे तु देवेशि ! क्रीं मूलं सप्तधा जपेत्। विद्यामन्त्रञ्च मन्त्रादौ दत्त्वा च सप्तधा जपेत्। स्वगुरुं मूर्ध्नि सञ्चिन्त्य हृदि देवीं ततः परम्। स्वयं कामकलारूपं भावयन् जपमाचरेत्। जपस्यान्ते शिवं ध्यात्वा ध्यानस्यान्ते पुनर्जपेत्। अष्टोत्तरसहस्रं वा शतं वा प्रजपेन्मनुम्। श्यामाया दीपनीं विद्यारत्नं मन्त्रादितः शिवे !। दत्त्वा जपेत् सप्तवारं ततो जपसमर्पणम्। अन्यासां प्रणवं मायां दीपनीं वा जपस्य च। सेतुं जप्त्वा सप्तवारं प्रणवान्तं मनुं जपेत्। समर्पयेज्जपं पश्चात् प्राणायामान् समाचरेत्। जपस्यात्र विधानन्तु कथितञ्चानुषङ्गतः॥

अथ ताराशतनामस्तोत्रम्॥ श्रीशिव उवाच॥ तारिणी तरला तन्वी तारा तरुणवल्लरी। तीररूपा तरश्यामा तनुक्षीणपयोधरा। तुरीया तरला तीव्रगमना नीलवाहिनी। उग्रतारा जया चण्डी श्रीमदेकजटा शिवा। तरुणा शाम्भवी छिन्नभाला च भद्रतारिणी। उग्रा उग्रप्रभा नीला कृष्णा नीलसरस्वती। द्वितीया शोभिनी नित्या नवीना नित्यनूतना। चण्डिका विजयाराध्या देवी गगनवाहिनी। अट्टहास्या करालास्या चरस्यादितिपूजिता। सगुणा सगुणाराध्या हरीन्द्रदेवपूजिता। रक्तप्रिया च रक्ताक्षी रुधिरासवभूषिता। बलिप्रिया बलिरता दुर्गा बलवती बला। बलप्रिया बलरता बलरामप्रपूजिता। अर्द्धकेशेश्वरी केशा केशवेशविभूषिता। पद्ममाला च पद्माक्षी कामाख्या गिरिनन्दिनी। दक्षिणा चैव दक्षा च दक्षजा दक्षिणे रता। वज्रपुष्पप्रिया रक्तप्रिया कुसु-

मभूषिता। माहेश्वरी महादेवप्रिया पञ्चविभूषिता। इड़ा च पिङ्गला चैव सुषुम्ना प्राणरूपिणी। गान्धारी पञ्चमी पञ्चाननादिपरिपूजिता। इत्येतत् कथितं देवि! रहस्यं परमाद्भुतम्। श्रुत्वा मोक्षमवाप्नोति तारादेव्याः प्रसादतः। य इदं पठति स्तोत्रं तारास्तुतिरहस्यकम्। सर्वसिद्धियुतो भूत्वा विहरेत् क्षितिमण्डले। तस्यैव मन्त्रसिद्धिः स्यान्मम सिद्धिरनुत्तमा। भवत्येवं महामाये! सत्यं सत्यं न संशयः। मन्दे मङ्गलवारे च यः पठेन्निशि संयुतः। तस्यैव मन्त्रसिद्धिः स्याद्गाणपत्यं लभेत्त सः। श्रद्धयाश्रद्धया वापि पठेत्ताररहस्यकम्। सोऽचिरेणैव कालेन जीवन्मुक्तः शिवो भवेत्। सहस्रावर्त्तनाद्देवि! पुरश्चर्य्याफलं लभेत्। एवं सततयुक्ता ये ध्यायन्तस्त्वामुपासते। ते कृतार्था महेशानि! मृत्युसंसारबन्धनात्॥ इति मुण्डमालातन्त्रे तारिणीशतनामस्तोत्रं समाप्तम्॥

अथ तारिणीस्तोत्रानन्तरं महानीलतन्त्रे॥ घोररूपे! महामारे! सर्वशत्रुवशङ्करि!। भक्तेभ्यो वरदे! देवि! त्राहि मां शरणागतम्। सुरासुरार्चिते! देवि! सिद्धगन्धर्वसेविते!। जाड्यपापहरे! देवि! त्राहि मां शरणागतम्। जटाजूटसमायुक्ते! लोलजिह्वानुकारिणि!। द्रुतबुद्धिकरे! देवि! त्राहि मां शरणागतम्। सौम्यरूपे! घोररूपे! चण्डरूपे! नमोऽस्तु ते। सृष्टिरूपे! नमस्तुभ्यं त्राहि मां शरणागतम्। अष्टम्याञ्च चतुर्द्दश्यां नवम्याञ्चैकमानसः। षण्मासैः सिद्धिमाप्नोति नात्र कार्य्या विचारणा। बुद्धिं देहि यशो देहि कवित्वं देहि देहि मे। कुबुद्धिं हर मे देवि! त्राहि मां शरणागतम्। इन्द्रादिदिविषद्वृन्दवन्दिते! करुणामयि!। तारे! ताराधिनाथास्ये! त्राहि मां शरणागतम्। मोक्षार्थी लभते मोक्षं धनार्थी धनमाप्नुयात्। विद्यार्थी लभते विद्यां तर्कव्याकरणादिकाम्।

इदं स्तोत्रं पठेद्यस्तु सततं लभते नरः। तस्य शत्रुः क्षयं याति महाप्रज्ञा च जायते। पीड़ायां वापि संग्रामे जप्ये दाने तथा भये। य इदं पठति स्तोत्रं शुभं तस्य न संशयः। स्तोत्रेणानेन देवेशि! स्तुत्वा देवीं सुरेश्वरीम्। सर्वान् कामानवाप्नोति सर्वविद्यानिधिर्भवेत्। इति ते कथितं दिव्यं स्तोत्रं सारस्वतप्रदम्। अस्मात् परतरं नास्ति स्तोत्रं तन्त्रे महेश्वरि!॥ इति बृहन्नीलतन्त्रे द्वितीयपटले तारिणीस्तोत्रं समाप्तम्॥

अथ वीरहोमः॥ कैवल्यतन्त्रे पञ्चमपटले॥ शृणु पार्वति! वक्ष्यामि वाह्यहोमविधिं प्रिये!। आम्नायेषु च सर्वेषु व्यासेन कथितं पुरा। संक्षेपात् कथयिष्यामि येन मुक्तिं लभेन्नरः। भूमित्रिकोणमालिख्य मूलमन्त्रेण साधकः। भूर्भुवः स्वेति मन्त्रेण वह्निं संस्थापयेत्ततः। तत्र देवीं समावाह्य परिवारसमन्विताम्। पूजयेद्विविधैर्द्रव्यैर्निर्विकल्पेन चेतसा। मद्येन प्रथमं दद्यादाहुतिं मूलमुच्चरन्। एकं मांसेन मत्स्येन मुद्रया च कुलेश्वरि!। रम्भामूलसमुद्भूतैः मार्जन्या गलितैः सह। जुहुयादाज्ययोगेन सकृद्वारत्रयञ्च वा। घृतेन हवनञ्चैकं रक्तपुष्पेण चैव हि। कुण्डोद्भवेन देवेशि! वारद्वयमुदाहृतम्। गोलेन घृतयुक्तेन सकृद्धोमो विशिष्यते। गोपीचन्दनसिन्दूरैर्दशवारं हुनेत् शुचौ। वीरपुष्पेण गव्येन विल्वपत्रेण सुन्दरि!। सकृद्धोमो भवेद्वह्नौ ततो गव्येन चैककम्। पूर्णाहुतिं ततो दद्यात् पिण्याकैर्लवणान्वितैः। ततो मूलं जपेन्मन्त्री चाष्टोत्तरशतं प्रिये!। जप्त्वा स्तुत्वा नमस्कृत्य विसृजेद्वह्निमण्डले। इति ते कथितं देवि! कैवल्यसाधनं प्रिये!। अस्मात् परतरं नास्ति सत्यमेतद्ब्रवीमि ते। इदं रहस्यं परमं पशुभ्यो न प्रकाशयेत्। प्रकाशात् सिद्धिहानिः स्यात् सत्यं सत्यं न संशयः॥ इति वीरहोमः॥

इति सम्पूज्य हुत्वा च सामयिकैः सह द्रव्यपानादिकं कुर्य्यात्॥ देव्यै द्रव्यदानफलन्तु मुण्डमालातन्त्रे॥ पूजयित्वा महादेवीं सुरामांसकलादिभिः। अन्नैर्नानाविधैर्द्देवि! परितोष्य स ताद्दृश इति। सुरादानफलेनैव महायोगेश्वरी भवेत्॥

सुराभेदस्तु तत्रैव॥ सुरा तु द्विविधा प्रोक्ता स्फाटिकी डाकिनी तथा। काञ्चिकीस्फाटिकीदाने धनवृद्धिरनुत्तमा। डाकिनीदानमात्रेण सर्ववश्यो भवेद्ध्रुवम्। काञ्चिकीमुद्रया देवि! योऽर्च्चयेत् परमेश्वरीम्। महासिद्धीश्वरो भूत्वा वसेत् कल्पशतानि च। अन्नदातुर्महादेवि! महासिद्धिरनुत्तमा॥

अथ महाशङ्खः॥ नित्यातन्त्रे द्वितीयपटले॥ ईश्वर उवाच॥ महाशङ्खस्य माहात्म्यं कथयामि तवानघे!। स्वयोनिरिव गोप्तव्यं सर्वदा पशुसङ्कटे। भगरूपा महामाया शुक्रतर्पणतत्परा। जगदाकर्षिणी विद्या जगद्गुह्या वरानने!॥ तत्रैव गृह्यते सारं जगतां वीजरूपकम्। तद्वीजं परमेशानि! पञ्चाशद्वर्णरूपकम्। गर्भं प्राप्य भवेदस्थि शिशोर्मज्जासमन्वितम्। तदस्थितार्थमप्यस्ति पञ्चाशद्वर्णरूपकम्। वर्णमालासु देवेशि! शतं सञ्जप्य यत् फलम्। एकेनोच्चारणेनास्थिमालायां तत् प्रकीर्त्तितम्॥ इति महाशङ्खमालाजपफलम्॥

तन्मालाकरणे वर्जनीयमाह तत्रैव॥ स्वेच्छामृतं स्त्रियं विप्रं तिर्य्यग्योनिगतं तथा। रोगिणं यवनं वृद्धं दीक्षितञ्चापि वर्जयेत्। ग्राह्यमपि तत्रैव॥ वज्राहतं सर्पदष्टं पतित्वा वा जले मृतम्। व्याघ्रादिनिहतं वापि सम्मुखे वा रणे मृतम्। चण्डालाद्याः प्रधानास्ते अधमाः शूद्रजातयः॥ बृहन्नीलतन्त्रे चतुर्थपटले॥ युद्धे मृतस्य देवेशि! चण्डालस्यास्थिकेन च।

मस्तकस्य विशेषेण महाशङ्खं प्रकीर्त्तितम् ॥ नित्यातन्त्रे ॥ अतएव महेशानि ! अस्थिमालागले मम । प्रथमपटले ॥ समाश्रित्य महाशङ्खमालां वीरपदं व्रजेत् ॥

अथ महाशङ्खमालाकरणम् ॥ मुण्डमालातन्त्रे द्वितीयपटले ॥ नराङ्गुल्यस्थिभिर्माला ग्रथिता पर्वभेदतः । सर्वसिद्धिप्रदा मोक्षदायिनी वरवर्णिनि !। नाद्या सङ्ग्रथिता माला कार्य्या रक्तेन वाससा । नाड़ीभिर्ग्रथिता माला महासिद्धिप्रदा प्रिये !॥ स्वतन्त्रतन्त्रेऽपि ॥ आनीय छिन्नशीर्षन्तु नरस्य पतितस्य च । तुलसीगोमयास्पृष्टं तथा गङ्गोदकेन च । यवनब्राह्मणान्यस्य तत् कार्य्यं साधकैर्जनैः । अस्पृष्टं तच्च जानीयात् शालग्रामशिलादिभिः ॥

अथ महाशङ्खमालासंस्कारस्तत्रैव ॥ गुरुं तत्र प्रणम्यादौ संस्कुर्य्याज्जपमालिकाम् । कृतनित्यक्रियो मन्त्री मालाञ्च क्रमतो यजेत् । ओं ह्रीं श्रीं क्लीं क्लीं फट् स्वाहा । इति मन्त्रेण सप्तधाभिमन्त्र्य चषकादिपात्रादौ निक्षिपेत् । तत आवाहन्यादिमुद्रया देवीं तत्रावाह्य सपरिवारामुपचारैः सम्पूज्य तां वमिति धेनुमुद्रयामृतीकृत्य कवचेनावगुण्ठ्य मत्स्यमुद्रयाच्छाद्य देवीस्वरूपां तां मालां ध्यायन् विन्दुप्रक्षेपं कुर्य्यात् । तत्र मन्त्रः ॥ ओं ह्रीं स्वाहा । ओं हूं स्वाहा । ॐ ह्रः स्वाहा । ओं फट् स्वाहा । ओं ह्रीं श्रीं स्वाहा । ओं ह्रीं हूं स्वाहा । ओं ह्रीं फट् स्वाहा । इति सप्तार्घ्यविन्दुप्रक्षेपणं कृत्वा कस्तूरीं धूपयित्वा चषकादिपात्रादुत्तोल्य मालामभिमन्त्रयेत् । तत्र मन्त्रः ॥ ओं ह्रीं श्रीं महार्वाच्चिणि ! महाघोररूपे ! कर्कशमहास्थिमण्डले ! प्रविश सर्वसिद्धिं प्रयच्छ ओं ह्रीं ओं ह्रीं स्वाहा । ओं महाकपालिनि ! महाघोररूपे ! स्वाहा । इत्यनेनामन्त्र्य दूर्वाक्षतैरभ्यर्च्य कामवीजेनोद्दीपनं

कृत्वा उपचारैरभ्यर्च्च्य मातृकामन्त्रेण सन्दीप्य ओंकारेण वेष्टयेत्। ततः ह्रं क्रीं ह्रं श्रीं ह्रं श्रीं ह्रं श्रीं ह्रं ह्रं श्रीं ह्रं फट् ह्रं श्रीं स्वाहा। श्रीं ह्रं महायोगिनि! त्रिभुवन-तारिणि! महाशङ्खास्थिमध्ये निवासं कुरु सर्व्वसिद्धिं देहि सुरामांसोपहारान् गृह्ण गृह्णापय क्रीं श्रीं ह्रं फट् स्वाहा। इत्यनेन यथोक्तद्रव्येण बलिं दत्त्वा संहारमुद्रया देवीं विसृज्य निभृतस्थाने मालाः स्थापयेत्। विन्दुप्रक्षेप इत्यत्र विन्दुः सुराविन्दुरित्यर्थः। एवं शोधयित्वा पश्चान्माला-संस्कारविधानेनापि संस्कारः करणीय इति तान्त्रिकाः॥ तन्त्रे॥ अकस्मादीरिता माला महाशङ्खाख्यमालया। तथा चैवास्थि-घटिता महाशङ्खाः प्रकीर्त्तिताः। अत्रास्थिपदेन गुणादेशादि ग्राह्यमिति तान्त्रिकाः। इति महाशङ्खमालासंस्कारः॥

कुब्जिकातन्त्रे सप्तमपटले॥ अशोकं विल्ववृक्षञ्च शिवा-ञ्चैव सुरेश्वरि!। दृष्ट्वा प्रणामं कुर्य्याच्च सर्व्वकामार्थसिद्धये। उलूकं शङ्खचिल्लञ्च गृध्रञ्चैव सुरेश्वरि!। नमस्कुर्य्यान्महा-कालीं युद्धे च जयमालभेत्। चतुष्पथं श्मशानञ्च नमस्कुर्य्या-द्विशेषतः। तन्त्रज्ञञ्चावधूतञ्च नमस्कुर्य्याद्वरानने!। उपासकं सदा दृष्ट्वा मधुरं भाषणञ्चरेत्॥

बृहन्नीलतन्त्रे षष्ठपटले॥ पर्व्वते निर्जने चैव विजने शून्य-मण्डपे। चतुष्पथे कलामध्ये यदि देवान्महेश्वरि!। क्षणं ध्यात्वा मनुं जप्त्वा नत्वा गच्छेद्यथासुखम्। गृध्रं वीक्ष्य महाकालीं नमस्कुर्य्यादतन्द्रितः। क्षेमङ्करीं तथा वीक्ष्य जम्बुकीं यमदूतिकाम्। कुररं श्येनभूकाकौ कृष्णमार्जारमेव च॥

एतेषां प्रणाममन्त्रस्तत्रैव॥ कृशोदरि! महाचण्डे! मुक्त-केशि! बलिप्रिये!। कुलाचारप्रसन्नास्ये! नमस्ते शङ्करप्रिये!। श्मशाने च शवं दृष्ट्वा प्रदक्षिणमनुव्रजन्। प्रणम्यानेन मन्त्रेण

मन्त्री सुखमवाप्नुयात्। घोरदंष्ट्रे! करालास्ये! किटिशब्द-प्रणादिनि!। गुरुघोषवरास्फाले! नमस्ते चण्डनादिनि!। रक्तवस्त्रं रक्तपुष्पं विलोक्य त्रिपुराम्बिकाम्। विलोक्य दण्ड-वङ्माविमं मन्त्रं पठेन्नरः। बन्धूकपुष्पसङ्काशे! त्रिपुरे! भयनाशिनि!। भाग्योदयसमुत्पन्ने! नमस्ते वरवर्णिनि!। कृष्णवर्णं तथा पुष्पं राजानं राजपुत्त्रकम्। हस्त्यश्वरथशस्त्राणि कालवीरं तथा शिवम्। महिषं कुलनाथञ्च दृष्ट्वा महिषम-र्दिनीम्। प्रणम्य जयदुर्गां वा स तु विघ्नैर्न लिप्यते। जयदेवि! जगद्धात्रि! पूर्णे! आद्ये! त्रिदैवते!। भक्तेभ्यो वरदे! देवि! मुण्डमालाविभूषिते!। रक्तधारासमाकीर्णे! वरदे! त्वां नमा-म्यहम्। सर्वविघ्नहरे! देवि! नमस्ते हरवल्लभे!। एतेषां दर्शनेनैव यदि नैवं प्रकुर्वते। शक्तिमन्त्रं पुरस्कृत्य तस्य सिद्धिर्न जायते। एतेषां मारणोच्चाटहिंसनं वागुरादिभिः। क्रियते येन पापात्मा स मे भक्तः कथं भवेत्॥ इति वीरकृत्यम्॥

अथ वीराणां नैष्कर्म्यसाधनार्थं रसास्वादो वामकेश्वरतन्त्रे त्रयःपञ्चाशत्पटले॥ भैरव उवाच॥ क्रियाकाण्डप्रकथने तन्त्रं बहुतरं भवेत्। किञ्चिल्लक्षणमेतेषां सङ्क्षेपात् कथयामि ते। काव्यशास्त्रे नवरसा योगे चाष्टौ रसाः स्मृताः। अष्टादशप्र-कारा हि विद्यायां परिकीर्त्तिताः। भक्तियोगे नवरसा ऋतवो विषये स्मृताः। पञ्चमाद्या रसा देवि! पञ्चपञ्चाशतः स्मृताः। भेदं रसानां वक्ष्यामि शृणुष्वावहिता प्रिये!। शृङ्गारवीरक-रुणाहास्याद्भुतभयानकाः। वीभत्सः शान्तको रौद्रो नवधा काव्यशास्त्रके। यमश्च नियमश्चैव आसनं प्राणसंयमः। प्रत्या-हारो धारणा च ध्यानं समाधिरष्टधा। योगे शास्त्रे महादेवि! कथिता विस्तरात् प्रिये!। छन्दः पादौ च वेदस्य मुखं व्याकरणं स्मृतम्। शिक्षा घ्राणं महेशानि! हस्तौ कल्पोऽथ

कथ्यते। ज्योतिषं देवि! तन्नेत्रं निरुक्तं श्रोत्रमुच्यते। अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरैः। धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश। आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः। अर्थशास्त्रसमायुक्ता विद्याष्टादशधा रसाः। मननं कीर्त्तनं ध्यानं स्मरणं पादसेवनम्। अर्चनं वन्दनं दास्यं सख्यमात्म-समर्पणम्। इत्थं देवि! नवरसा भक्तियोगे प्रकीर्त्तिताः। स्रगन्धवनिताशय्यावस्त्रालङ्करणानि च। कथिताः परमे-शानि! विषये ऋतवो रसाः। खाद्याः पञ्चरसा गौड़ी माध्वी-त्सुफलशस्यकाः। एतेषु रसभावज्ञा ये ते वै रसिकाः स्मृताः। कृत्यविधिर्जपविधिर्द्रव्यशोधनिको विधिः। वाह्यमानसिकी-पूजाविधिश्च परमेश्वरि!। पुरश्चर्य्याविधिर्देवि! कर्मकाण्डानि पञ्चधा। त्रिधा कृत्यविधिर्देवि! प्रातः सायं दिनं तथा। अनु-भूय रसान् सर्वान् क्रियाकाण्डं विधाय च। साधकः स्थिरचि-त्तेन कुर्य्यात् पूर्णाभिषेचनम्॥

चतुष्पञ्चाशत्पटले॥ देव्युवाच॥ मन्त्रप्रकथनं नाथ! वेदप्रकथनं कथम्। तत्तद्रसानां वचनैश्चित्तं मोहयसीव मे। साम्प्रतं संशयच्छेदकारणं ब्रूहि मे प्रभो!। आश्चर्य्याख्यानमेवं हि श्रवणात् कौतुकं महत्॥ श्रीभैरव उवाच॥ तन्त्रोक्तं वेद-वाक्यञ्च सर्वज्ञानस्य कारणम्। भेदं रसानां वक्ष्यामि शृणुष्वा-वहिता मयि। शृङ्गारो वीरतो ज्ञेयस्तस्मिन् ते करुणादयः। शृङ्गारादिर्हि पूर्णादिश्च अपि शृङ्गारतो भवेत्। शृङ्गारस्तु यदा देवि! परमार्थकसूचकः। तदैव परमा शान्तीरुद्रत्वं सम्प्रप-द्यते। तेषां प्रकरणार्थन्तु शृणु प्राणाधिके! मयि। पादं विना शरीरस्य न गतिर्विद्यते प्रिये!। छन्दसा वेदमार्गे तु प्रवि-शेन्न कदाचन। अलङ्कारं विना छन्दो न शोभेत प्रियंवदे!। चक्षुः परोक्षभेदः स्याज्ज्योतिःशास्त्रं तथैव च। चन्द्रसूर्य्यस्य

ग्रहणाज्ज्योतिः प्रत्यक्षतामियात्। वेदशाखा निरुक्तं स्याच्छा-खाभिन्नं ह्य जायते। गानकार्य्ये श्रूयमाणे भक्तिर्भवति ब्रह्मणि !। तदैव गानन्नृत्यञ्च मुखनासिकयोर्भवेत्। गानं विना न नृत्यं स्यात् नृत्यं गानेन जायते। शिक्षाशास्त्रं नाटकादिशब्द-व्याकरणं स्मृतम्। अविनाभावसम्बन्धाद् द्वयोरेव शुचि-स्मिते !। वेदाः षडङ्गसहिता ब्रह्मव्याख्यानतत्पराः। न्यायेन सार्द्धं मीमांसा ब्रह्म निर्णीयते ध्रुवम्। ब्रह्मज्ञाने तु जीवस्य परमात्मविचारणम्। धर्मशास्त्रानुसारेण व्यवस्थादिनिरूपतः। पुराणाख्यानि तेनैव जायते सततं प्रिये !। ब्रह्मानन्दपरो जीव आत्मसंरक्षणोत्सुकः। आयुर्वेदं धनुर्वेदं गान्धर्वञ्च सम-भ्यसेत्। अथ सन्धानतो देवि ! पूर्णज्ञानी च साधकः। मधुनेक्षु-रसेनैव दुग्धादिफलशस्यकैः। गन्धमाल्यादिना देवि ! वस्त्रालङ्करणादिना। शय्यायां वनितारूपं पूजयेज्जगदम्बिकाम्। वनितापूजने देवि ! शृङ्गाररससाधनम्। पूजनं कर्मकाण्डञ्च पञ्चधा तत् प्रकीर्त्तितम्। तत्सर्वं साधयेद्वीरो देवीसम्प्राप्तिहेतवे। पूजने नवधा भक्तिरसोल्लासश्च जायते। तदा योगं समभ्यस्य समाधिस्थो भवेद्यतिः। अतएव महेशानि ! पुरैव कथितं मया। अनुभूय स्वरान् सर्वान् पञ्चपञ्चाशतः प्रिये !। विषये कर्मकाण्डेषु निष्कामी भवति प्रिये !। निष्कामे फलमाश्चर्य्यं तेन तुष्यति देवता। देही देहं समाश्रित्य न च कर्म परित्य-जेत्। दिव्यां क्रियां समाप्यैवं देवीयात्रादिकर्म्मणा। पूर्णज्ञान-रसानन्दाज्जीवन्मुक्तो भवेद् ध्रुवम्॥

अथ वीराणां षट्कर्मसाधनम्॥ योगिनीतन्त्रे पूर्वखण्डे चतुर्थपटले॥ श्रीदेव्युवाच॥ देवदेव ! जगद्वन्द्य ! सुरा-सुरनमस्कृत !। इदानीं श्रोतुमिच्छामि वीरषट्कर्मसाधनम्। धन्यं पुण्यव्रतां राज्ञां बाल्यादिकवयोजुषाम्। स्त्रियास्तु

सिद्धिसंस्थानां सर्व्वभोगविलासिनाम् ॥

षट् कर्म्माण्याह तत्रैव ॥ ईश्वर उवाच ॥ शान्तिवश्यस्तम्भनानि विद्वेषोच्चाटने तथा। मारणं परमेशानि! षट्कर्म्मेदं प्रकीर्त्तितम्। तारिणीं कालिकां छिन्नामधिकृत्य जगन्मयि!। कथयामि तव स्नेहात् द्रुतसिद्धिकरं परम्। रतिर्वाणी रमा ज्येष्ठा मातङ्गी कुलकामिनी। दुर्गा चैव भद्रकाली कर्म्मादौ कर्म्मसिद्धये। षोड़शैरुपचारैश्च यजेद्वीरः स्वशक्तिकः ॥

षट्कर्म्मणां मारणव्यतिरिक्तानां मारणस्य स्थानमाह तत्रैव ॥ शून्यागारे महारण्ये देवतायतनेऽपि वा। पञ्चकर्म्म प्रकुर्व्वीत मारणन्तु शवोपरि। तदभावे पितृभूमौ वासांसि कथयामि ते। मुख्यं दिगम्बरं ज्ञेयं द्वीपिचर्म्म द्वितीयकम्। तदभावे रक्तचौमं नान्यद्वस्त्रं प्रकल्पयेत् ॥ शान्त्यादिषु क्रमेणैव पूजापात्रमाह ॥ स्वर्णमादौ द्वितीये च राजतं स्तम्भने शिला। विद्वेषोच्चाटने ताम्रं कपालं मारणे शुभम्। विप्रान्त्योऽपि नरः प्रोक्तो युवा च कृष्णवर्णकः। अदुर्भिक्षा व्याधिमृता आसनस्य शुभावहाः। अभावे स्फाटिकी जप्या इन्द्राक्षैर्वा जपेत् प्रिये!। मृदौ वा कोमले वापि विष्टरे वा सुरेश्वरि!। मुण्डे वा योनिके देवि! त्वचि व्याघ्रस्य वा प्रिये! एकहस्ते द्विहस्ते च चतुर्हस्ते समन्ततः। स्थिरासमश्चरेत् सम्यक् न भयं तत्र चिन्तयेत्। भये जाते महेशानि! भैरवोक्तमनुं स्मरेत्। विषञ्च वज्रजालेन हनुयुग्ममतः परम्। सर्व्वभूतान्ततः कूर्च्चमन्त्रान्ते भैरवो मनुः। ततो भूतबलिं दद्यात् साधको धर्म्मसम्मितम्। तच्च तैलं महेशानि! उद्वर्त्त्यं कालकश्चरेत्। कुजवारादियोगेन पञ्चकर्म्म समाचरेत्। शनौ च मारणं देवि! निश्चितं वीरवन्दिते!। रात्रियोगे न

कर्त्तव्यं सर्वकर्म शुचिस्मिते!। प्राग् विद्वान् प्रजपेत् सम्यक् स्वमन्त्रं संयुतं शिवे!। प्रयोगस्य फलावाप्त्यै स्वस्वरचाक्षरं महत्। ततः शोधनदिने मन्त्री याममात्रगते निशि। माद्विभिः पञ्चभिर्द्रव्यैरिष्ट्वा कुलविलासिनीम्। दिग्वासा गलिताशेषचिकुरः कुलकौलिके!। शक्तियुक्तो जपेद्विद्यां सदा तां मनसा स्मरन्। हृच्चसङ्ख्यां महेशानि!। शक्ति-पूजापुरःसरम्। प्रत्यहं भोजयेद्विद्वान् कौलिकान्यान् दिनान्तिमे। मांसं मद्यं तथा मत्स्यं दुमेद्द् द्वौ द्वौ शतं शतम्। दक्षिणां गुरवे दद्याद् गुरुरूपेण शाम्भवि!। एवमुक्तविधानेन दिव्यो वा वीरपुङ्गवः। यदि कुर्य्यान्महेशानि! देवानपि तथा नयेत्। नापेक्षा जायते कान्ते! अवश्यं फलभाग् भवेत्। महाप्रयोगे देवेशि! कृष्णच्छागं बलिं हरेत्। पूजान्ते सततं देवि! दशांशेर्वह्निमर्चयेत्। विधिः सर्वत्र कथितो दिव्यवीर-पशुक्रमात्। क्रमेण फलमाप्नोति व्यत्यये पातको भवेत्। इति ते कथितं तुभ्यं सम्यक् षट्कर्म्मगोचरम्। गोपनीयं खले दुष्टे पशुपामरसन्निधौ॥

श्रीदेव्युवाच॥ सुरा वा किंविधा देव! शक्तिर्वा कीदृशी शुभा। षट्कर्म्मसु यथायोग्यं वद मे करुणानिधे!॥ ईश्वर उवाच॥ माध्वी शान्तिकरी प्रोक्ता वश्ये च स्फाटिकी शुभा। स्तम्भने डाकिनी ज्ञेया विद्वेषे पैष्टिकी मता। उच्चाटने तथा गौड़ी मारणे भैरवी मता। एतासां लक्षणं देवि! कथितं कुलमोहने!॥ शक्ति-भेदमाह तत्रैव॥ पद्मिनी शान्तिदा प्रोक्ता वश्ये च शङ्खिनी मता। स्तम्भनोच्चाटने देवि! प्रशस्ता नागवल्लभा। मारणे च तथा शस्ता डाकिनी शवमृत्युदा॥ पद्मिन्यादिलक्षण-मपि तत्रैव॥ गौराङ्गी दीर्घकेशी या सदा चामृतभाषिणी।

रक्तनेत्रा सुशीला च पद्मिनी साधने शुभा। मन्त्रसिद्धिकरी ह्येषा शङ्खिनी सापि भाविनी। दीर्घाङ्गी सा शङ्खिनी स्या-ज्जगद्रञ्जनकारिणी। श्यामाङ्गी शुभदेहा च न खर्वा नातिदीर्घिका। दीर्घकेशी ईषत्पुष्टा मृदुभाषा च नागिनी। कृष्णाङ्गी च कृशाङ्गी च दन्तुरा मदतापिता। ह्रस्वकेशी दीर्घघ्राणा सदा निष्ठुरवादिनी। सदा क्रुद्धा दीर्घदेहा महारावपरायणा। निर्लज्जा हास्यहीना च निद्रालुर्बहुभक्षिका। इयं सा डाकिनी प्रोक्ता मृत्युयोगे प्रशस्यते। एतास्तु शक्तयो देवि! सर्वजातिसमुद्भवाः। सापत्याश्च युवत्यश्च जातपुत्रादिकाः शुभाः। गृह्या कुलरसैः पूज्या भक्तिभावेन कामिनी।

श्रीदेव्युवाच॥ केन केन च मन्त्रेण मन्त्री षट्कर्मभाग् भवेत्। तत्तन्मन्त्रं महेशानि! यद्यहं तव वल्लभा। श्रीईश्वर उवाच॥ एकाक्षरं कालिकायास्तारायास्तु त्रिवीजकम्। वज्रवैरोचनीया-या मनुरेकादशाक्षरः। सर्वतेजोऽपहारी च मनुराख्यात एव च। बहुनात्र किमुक्तेन शृणु मत्प्राणवल्लभे!। केवलं शक्तिवीजेन जपेद्देवि! समाहितः। अवश्यं फलमाप्नोति नान्यथा वीरवन्दिते!। खलो यदि फलप्राप्तः सरलो यदि निष्फलः। भवेदत्र महेशानि! तदा सर्वं वृथा भवेत्। अहं धाता तथा पाता रक्षासु द्रोहणं शिवे!। तथापि फलसिद्धिः स्याच्चित्र-मेतन्नगात्मजे!। एवन्तु मारणं देवि! विशेषात् कथयामि ते। सान्तं वह्निसमायुक्तं वामनेत्रविभूषितम्। कूर्चयुग्मं ततो देवि! अमुकं मारय द्वयम्। चतुर्दशाक्षरो मन्त्रो स्वाहान्तः शत्रुनाशकः। खदिराङ्गारमादाय कुजाष्टम्यां विशेषतः। लेखयेत् पुत्तलीं शत्रुस्वरूपां लौहपत्रके। निशायां मस्तके नेत्रे ललाटे हृदये करे। नाभौ गुह्ये कटौ पृष्ठे क्रमोक्तेन पदद्वये। मन्त्रवर्णान् समालिख्य प्रतिष्ठां तत्र कारयेत्।

संहारमुद्रां बद्धा तु ध्यायेद्देवीं जयप्रदाम्। दीर्घाकारां कृष्ण-वर्णां सदोर्द्ध्वतनमस्तकाम्। नृमुण्डयुगलं हस्ते चर्वयन्तीं दिगम्बरीं। शत्रुनाशकरीं देवीं ध्यायेत् शत्रुक्षयाय च। एवं ध्यात्वेष्टिकाचूर्णैर्वामहस्तेन शङ्करि!। ओं शत्रुनाशकर्य्यै नम इति दत्त्वा महेश्वरि!। हरिद्राचूर्णसहितां धारां दद्यादनेन तु। अमुकस्य शोणितञ्च पिब पिबेति तत्परम्। मांसं खादय खादय क्लीं नम इति मन्त्रम्। मध्याह्ने मध्यरात्रौ तु पूजयित्वा शताष्टकम्। जपेदेकादशाहे च रोगः स्यान्नात्र संशयः। दण्डा-धिकैकविंशाहे मृत्युरेव रिपोर्भवेत्। अथवान्यप्रकारेण शत्रु-क्षयमहं वदे। पुंगोशकृत् समादाय पूजयेदुष्णवारिणा। विपरीतक्रमेणैव जपपूजादिकञ्चरेत्। महादेवाय नम इति पुंगोशकृत् समाहरेत्। शिवाय नम इति मन्त्रेण घटनञ्च समाचरेत्। पशुपतये नम इति प्राणान् संस्थापयेत्ततः। लौहपात्रे महेशानि! खदिराङ्गारयोगतः। शत्रुप्रतिकृतिं लिख्य तत्र संस्थापयेच्छिवम्। ततो ध्यायेन्महारुद्रं ध्यानन्तु सुसमाहितः। शत्रोर्वक्षःस्थितं रुद्रं ज्वलदग्निसमप्रभम्। वाम-हस्तधरं केशं दक्षिणं प्राणकर्षणम्। नरचर्म्माम्बरं देवं महा-व्यालादिवेष्टितम्। पिनाकधृक् इहागच्छागच्छेत्यादिना-वाह्य यत्नतः। शूलपाणये नम इति स्नापयेत् साधकोत्तमः। महेश्वराय नम इति पाद्यादिना प्रपूजयेत्। ईशानादींस्तथा-मूर्त्तीर्व्युत्क्रमेण प्रपूजयेत्। अग्निकोणादिपर्य्यन्तं पूर्वरीत्या महेश्वरि!। नमः शिवायेति मूलमष्टाविंशति सञ्जपेत्। हुं क्षमस्वेति वामेन करेण तु विसर्जयेत्। अजित! केशव! विष्णो! हरे! सत्य! जनार्दन!। हंस! नारायण! स्वाहा मन्त्रमेव सकृज्जपेत्। हुं नमो भगवते वासुदेवाय स्वाहा नम इत्यपि सकृज्जपेत्। एवमेकादशाहेन शत्रुच्छादनमञ्जसा। अवश्यं

जायते देवि! सत्यं सत्यं त्रिलोचने!॥ इति मन्त्रुच्छादनम्॥

अथ स्तम्भनम्॥ कथयामि महादेवि! वैरस्तम्भनमुत्तमम्। कुम्भकारस्य पयनादानयेत् पिठरं पुनः। एकः स्वयं प्रदिक् स्फुटं यत् कृतं साधकोत्तमः। आनीय च डखामध्याङ्गस्य पर्य्युषितं तथा। निक्षिप्य पिठरे शुष्कनालिकापत्रविस्तरम्। भस्मोपरि च संस्थाप्य वटिकायाः सुरेश्वरि!। ऐशान्यां विवरं कृत्वा शनैर्वारे महेश्वरि!। पूर्णमध्याह्नकाले च निर्ज्जने सति भाविनि!। चतुर्दिक्षु वाटिकाया गर्त्तस्य निकटात् प्रिये!। तत्रावति महादेवो चौरेभ्यो रक्षयामि च। प्रस्कन्दमनसा देवि! भूमौ परिक्रमं चरेत्। तावतीञ्च ततो भूमिं वामावर्त्तेन भाविनि! परिक्रम्य पुनस्तत्र गर्त्तस्य निकटं व्रजेत्। तत्रैव निर्ज्जने गर्त्ते शलाकां लौहनिर्म्मिताम्। रोपयित्वा तदुपरि पिठरं सशरावकम्। संस्थाप्य मृद्भिः सम्पूर्य्य तद्गर्त्तं गृहमाव्रजेत्। गतिस्तम्भो भवेद्देवि! चौरादीनां तथा खलु। त्वया योगवरो देव! दुर्लभो वसुधातले। पिशाचभूतवेतालकुष्माण्डब्रह्मराक्षसाः। दानवानां तथान्येषां गतिस्तत्र न जायते। धनपुत्रसमृद्धिस्तु वर्द्धतेऽहर्निशं तथा। दिने दिने धर्म्मबुद्धिर्ज्जायते नात्र संशयः॥

वृहन्नीलतन्त्रे॥ अथान्यत् सम्प्रवक्ष्यामि वशीकरणमुत्तमम्। येन विज्ञानमात्रेण मन्त्राः सिध्यन्ति तत्क्षणात्। प्रतिमां कारयेद्देवि! पलेन रजतस्य च। पलार्द्धेन महेशानि! साध्यस्य प्रतिमां शिवे!। हरितालं पलार्द्धञ्च हरिद्राचूर्णकं तथा। गर्त्तं कृत्वा सार्द्धहस्तं तत्र निक्षिप्य सुन्दरि!। रक्तासनं तत्र दत्त्वा विशेत्तद्गतमानसः। चतुर्दिक्षु महेशानि! पताका विनिवेशयेत्। रक्तासने चोपविश्य पूर्वास्यो जपमारभेत्। पूजाया नियमं देवि! जानीहि नगनन्दिनि!। तिल-

पूर्णघटं तत्र स्थापयेत्तत्र देशिकः। प्राणप्रतिष्ठामन्त्रेण प्राणान् संस्थापयेद्बुधः। अधः कृत्वा पूजयित्वा प्रबालमालया जपेत्। दशसाहस्रजापेन प्रयोगार्ह्ो भवेत्ततः। प्रणवं पूर्वमुच्चार्य्य मायाबीजं द्वितीयकम्। का त्वं त्वर्णाकिनीयुक्तं वामकर्णेन्दुभूषितम्। ततो रक्तपदं ब्रूयाच्चामुण्डे तदनन्तरम्। साध्यनाम ततो न्यस्य वशमानय तत्परम्। वह्निजायावधिर्मन्त्रो जपेद्दशसहस्रकम्। दशांशादिप्रमाणेन होमादींश्च समाचरेत्। प्रातः स्नात्वा हविष्याशी शुचिर्भूत्वा जितेन्द्रियः। प्रातःकालं समारभ्य जपेन्मध्यन्दिनावधि। जपे समाप्ते देवेशि! तृमेद्दिने दिने शुभे!। जातिपुष्पस्य होमेन वशयेन्नात्र संशयः। कर्पूरमिश्रितैस्तोयैस्तर्पयेत् परदेवताम्। पूर्वं प्रणवमुद्धृत्य चामुण्डां प्रवदेत्ततः। तर्पयाम्यग्निजायान्तं मन्त्रं जानीहि सुन्दरि!। अनेनैव विधानेन सन्तर्प्य परदेवताम्। सिद्धिप्रयोगाद्देवेशि! जायते नात्र संशयः॥ अभिषेकं ततः कुर्य्याद्भैरवि! प्राणवल्लभे!। प्रणवञ्च महेशानि! चामुण्डां तदनन्तरम्। अभिषिञ्चामि तत्पश्चात् हृदन्तेनाभिषिञ्चयेत्। तद्दशांशेन देवेशि! ब्राह्मणान् भोजयेत्तदा। एवं कृते महेशानि! वशीकरणमुत्तमम्। जायते नात्र सन्देहः सत्यं सत्यं न संशयः। कामतुल्यश्च नारीणां रिपूणां शमनोपमः। यावज्जीवितपर्य्यन्तं स्मरवाण इवेश्वरि!। जायते नात्र सन्देहः सत्यं सुरगणार्च्चिते!। श्वेतापराजितामूलं पेषयेद्रोचनायुतम्। शतेनामन्त्रितं कृत्वा तिलकं कारयेत्ततः। वशयेन्नात्र सन्देहः सत्यं सत्यं महेश्वरि!। चन्द्रसूर्य्यावपि वृथा तदा निष्फलभाग्भवेत्। रक्तवस्त्रेण चामुण्डां तोषयेद्बहुयत्नतः। सुवर्णं दक्षिणा देया वित्तानुसारतः प्रिये!। आद्यन्ते महतीं पूजां कुर्य्यात्तत्र वरानने!। पञ्चदिनप्रयो-

णेण राजानं वशमानयेत्। तव प्रीत्यै महादेवि! कथितं भुवि दुर्लभम्॥

अथ विद्वेषणम्॥ तत्रैव॥ विद्वेषणं महेशानि! शृणुष्वैकमनाः प्रिये!। करवीररसेनैव तथा धुस्तूरकेण वा। काकोलूकौ समालिख्यौ भूर्जपत्रे महेश्वरि!। साध्यानां नामसहितं मन्त्रं संलेख्य साधकः। एतयोर्यादृशं वैरं तादृशञ्चामुकयोर्भवेत्। वह्निजायावधिर्मन्त्रः सर्वविद्वेषकारकः। महाकालीदेवताया पूजा तस्याः शुभप्रदा। पञ्चसहस्रमानेन जपं कुर्य्यात् शुचिस्मिते!।

अथ मारणम्॥ तत्रैव॥ मारणञ्च विशेषेण शृणुष्वैकमनाः प्रिये!। निहतं कृष्णमार्जारं मस्तकं तत्र तं नयेत्। सिन्दूरेण समायुक्तं कुर्य्यात् साधकसत्तमः। तज्जिह्वायां महादेवि! साध्यनाम लिखेत् प्रिये!। साध्यनाम लिखित्वा तु कालीनाम जपेन्मुदा। निजवीजेन घटितं त्र्यक्षरं प्रजपेत्ततः। दशसाहस्रजापेन मारयेदरिसञ्चतः। श्मशानकालिकां तत्र चावाह्य पूजयेत्ततः। लौहालङ्कारसंयुक्तं वस्त्रं देव्यै निवेदयेत्। दक्षिणास्यो जपेन्मन्त्रं ततः सिद्धो भवेन्मनुः — अन्नं पक्का महादेवि! निर्जने दापयेत् प्रिये!। अर्द्धरात्रौ बलिं दत्त्वा खनेद्वैरिगृहे यदि। सप्ताहमध्ये देवेशि! शत्रुर्याति यमालयम्। इति ते कथितं देवि! सारात्सारतरं मतम्। तव स्नेहाद्वरारोहे! प्रकाशितमिदं पुनः॥

कामाख्यातन्त्रे षष्ठपटले॥ पूजयित्वा महादेवीं पञ्चतत्त्वेन शाम्भवि!। महानन्दमयो भूत्वा साधयेत् साधनं महत्। स्वकं मूत्रं महेशानि! कूर्च्चवीजेन शोधयेत्। तर्पयेद्भैरवीं घोरां शत्रुनाम्ना पिबेत् स्वयम्। दशदिक्षु महापीठे प्रक्षिपेदनलेऽपि च। नग्नो भूत्वा भ्रमेत्तत्र शत्रुनाशो भवेद्ध्रुवम्।

शुक्रशोणितमूत्रेषु वीरो घृणी भवेद् यदि। भैरवी कुपिता तस्य सत्यं सत्यं वदाम्यहम्॥ यथा॥ स मृत्पात्रं समादाय साध्यनाम लिखेच्छिवे !। वायुना पुटितं कृत्वा स्वमूत्रं तत्र निक्षिपेत्। मायाबीजं महेशानि! अष्टोत्तरशतं जपेत्। भैरव्यै तर्पयेद्देवि ! मारणोच्चाटनं भवेत्। स्वमूत्रञ्च समादाय वामहस्तेन पार्वति !। शोधितं भैरवीपात्रे निक्षिपेत् साधकोत्तमः। उन्मादो जायते शत्रुर्म्रियते वा महेश्वरि !। मोहितः क्षोभितो वापि वश्यो वापि भवेद् ध्रुवम्॥

एतेषां शान्तिस्तु योगिनीतन्त्रे॥ शान्तिकं शृणु सर्वज्ञे! येन जीवेत साधकः। उर्वशीं प्रथमं नीत्वा युगान्तकारकं परम्। स्तनद्वयेन संयुक्तं धूमिनीत्रितयं ततः। अस्य मन्त्रस्य देवेशि ! सहस्राष्टप्रमाणतः। जपं कुर्य्यान्महेशानि ! अन्नपूर्णा च देवता। पूजयेद्विविधैर्भक्ष्यैर्नानारससमन्वितैः। चर्व्यं चोष्यं तथा लेह्यं पेयं दद्यान्मनोहरम्। दशांशादिप्रमाणेन होमादींश्च समाचरेत्। पद्मपुष्पस्य होमेन शान्तिर्भवति सुन्दरि !। मधुना तर्पयेद्देवीं चान्नपूर्णां परां गतिम्। प्रथमेऽहनि देवेशि ! जलेन पूरयेद्घटम्। तद्घटे पूजयेद्देवीं त्वावाह्य सुरसुन्दरीम्। मन्त्रेणानेन देवेशि! यदि कुर्य्यात् प्रयोगकम्। सर्वव्याधिर्विनश्येत नात्र कार्य्या विचारणा॥

इति श्रीप्राणतोषिण्यां सप्तमे निर्गुणकाण्डे वीराचारपूजादिषट्कर्मकथनं नाम तृतीयः परिच्छेदः॥

अथ कुलाचारः॥ नित्यातन्त्रे तृतीयपटले॥ कुलाचारविधिं वक्ष्ये सावधानावधारय। यस्य विज्ञानमात्रेण कर्त्ता हर्त्ता सदाशिवः। दिक्कालनियमो नास्ति तिथ्यादिनियमो न च। नियमो नास्ति देवेशि! महामन्त्रस्य साधने॥ कौललक्षणन्तु तत्रैव॥ क्वचित् शिष्टः क्वचिद् भ्रष्टः क्वचिद् भूत-

पिशाचवत्। नानावेशधराः कौला विचरन्ति महीतले। कर्दमे चन्दनेऽभेदः पुत्रे शत्रौ तथा प्रिये!। श्मशाने भवने देवि! तथैव काञ्चने तृणे। न भेदो यस्य देवेशि! स कौलः परिकोर्त्तितः। मथित्वा ज्ञानदण्डेन वेदागममहोदधिम्। सारमेतन्महादेवि! कौलाचारं प्रकल्पितम्॥ समयाचारतन्त्रे॥ आर्द्रशुष्कविभागेन द्विधाचारं पुनः शृणु। आर्द्राचारस्तु विज्ञेयो मकारैः पञ्चभिर्युतः। मकारपञ्चरहितः शुष्काचारः प्रकीर्त्तितः। कलौ विशेषतो देवि! आर्द्राचारः फलप्रदः॥ गुप्तसाधनतन्त्रे प्रथमपटले॥ कुलाचारं महाज्ञानं गोप्तव्यं पशुसङ्कटे। प्रगोप्तव्यं महादेवि! स्वयोनिरिव पार्वति!। वेदागमपुराणानि यानि शास्त्राणि पार्वति!। तन्मध्ये सारभूतं हि कुलाचारं सुदुर्लभम्। वक्त्रकोटिसहस्रैस्तु जिह्वाकोटिशतैरपि। कुलाचारस्य माहात्म्यं वर्णितुं नैव शक्यते। किञ्चित्तथापि चापल्यात् कथयामि शृणुष्व मे। शक्तिमूलं जगत् सर्वं शक्तिमूलं परं तपः। शक्तिमाश्रित्य निवसेद् यत्र कुलाश्रमे वसन्। साधकस्योचितां शक्तिं साधकाज्ञानुवर्त्तिनीम्। इह लोके सुखी भूत्वा देवीदेहे प्रलीयते। साधकेन्द्रो महासिद्धिं लब्ध्वा याति हरेः पदम्॥

मुण्डमालातन्त्रे पञ्चमपटले॥ कुलधर्मं समाश्रित्य ये वसन्ति महीतले। ते शिवास्ते शिवा जीवा भवन्ति कुलधर्मतः। कुलीनः शङ्करो ज्ञेयः कुलीनस्तु हरिः स्वयम्। कुलीनो वासवो देवः कुलीनस्तु पितामहः। कुलीना मुनयः सर्वे कुलीनाः पितरः स्मृताः॥ तथा॥ मूर्खो वा पण्डितो वापि ब्राह्मणो वा वरानने!। क्षत्रियो वैश्यजः शूद्रश्चण्डाली वरवर्णिनि!। सर्वे तुल्याः कुलीनाश्च एतत् सर्वार्थसाधनम्। शृणु देवि! वरारोहे! मम वाक्यं शुचिस्मिते!। शृङ्गाररस-

लावण्यकोविदः सर्वकर्मसु। शृङ्गाराज्जायते सृष्टिः शृङ्गारा-ज्जायते रतिः। शृङ्गाराच्छङ्करस्तुष्टः शृङ्गारादपि पार्वती। प्रहारशब्दं ललितं कर्कशं वा सुरेश्वरि!। शृङ्गारशब्दमात्रेण जना यास्यन्ति सद्गतिम्। स्त्रियो देवाः स्त्रियः पुण्याः स्त्रिय एव विभूषणम्। स्त्रीद्वेषो नैव कर्त्तव्यस्तासु निन्दाप्रहारकम्। वर्जयेदेव देवेशि! घृणालज्जाविवर्जितः। स्त्रीरूपं तारिणी-रूपं यो वेत्ति धरणीतले। स श्रीपतिश्च विज्ञेयः स ज्ञेयः पार्वतीपतिः॥ तथा॥ कुलमार्गरतो जीवः शिव एव न संशयः। कुलधर्मार्थगो जन्तुर्विहरेत् कुलमार्गके। कुल-पुष्पं समाश्रित्य कुलीनाश्रममाश्रयेत्॥ षष्ठपटले॥ कुलवारे कुलीनन्तु कुलधर्मं कुलव्रतं। आश्रयेत् परमानन्दं परमा-नन्दमेव च॥ कुलीनानां भक्तिर्नास्तीत्यादिवचनेनापि दोष-माह तत्रैव॥ न कुलीने परा बुद्धिर्न कुलीने परा गतिः। न कुलीने परा भक्तिर्न कुलीने परा क्रिया। एवं वदति यो जन्तुः स मुक्तिं नैव याति वै। इहैव स्वर्गो देवेशि! इह कैलास-मन्दिरम्। इहैव भक्तिर्भुक्तिश्च मुक्तिरव्यभिचारिणी। भोगः स्वर्गश्च मोक्षश्च करस्थश्चैव शङ्करि!। शाक्तानां त्रिपुरेशानि! सत्यं वच्मि न संशयः॥

निर्वाणतन्त्रे एकादशपटले॥ यस्मिन् देशे य आचारो निर्दिष्टो मन्त्रसाधने। तदाचारविशिष्टो यः कौलिकः स हि कीर्त्तितः। महानिर्वाणतन्त्रे चतुर्थोल्लासे॥ कुलाचारेण पूतात्मा साक्षाच्छिवमयो भवेत्। यत्रास्ति भोगबाहुल्यं तत्र योगस्य का कथा। योगोऽपि भोगविरहः कौलस्तूभयमश्नुते॥

अथ कौलार्चनफलं तत्रैव॥ एकश्चेत् कुलतत्त्वज्ञः पूजितो येन सुव्रते!। सर्वे देवाश्च देव्यश्च पूजिता नात्र संशयः। पृथिवीं हेमसम्पूर्णां दत्त्वा यत् फलमाप्नुयात्। तस्मात् कोटि

गुणं पुण्यं लभते कौलिकार्चनात्। श्वपचोऽपि कुलज्ञानी ब्राह्मणादतिरिच्यते। कुलाचारविहीनस्तु ब्राह्मणः श्वपचाधमः। कौलधर्मात् परो धर्मो नास्ति ज्ञाने तु मामके। यस्यानुष्ठानमात्रेण ब्रह्मज्ञानी नरो भवेत्। अयन्तु परमो मार्गो गुप्तोऽस्ति पशुसङ्कटे। व्यक्तीभविष्यति चिरात् संप्रत्ते प्रबले कलौ। कलिकाले प्रवृत्ते हि सत्यं सत्यं मयोच्यते। न स्थास्यन्ति विना कौलान् पशवो मानवा भुवि॥

अथ कुलाचारप्रशंसा॥ कुलार्णवे पञ्चमखण्डे द्वितीयोल्लासे॥ मथित्वा ज्ञानदण्डेन वेदागममहार्णवम्। सारज्ञेन मया देवि! कुलधर्म्मः समुद्धृतः। एकतः सकला धर्मा यज्ञतीर्थव्रतादयः। एकतः कुलधर्म्मश्च तत्र कौलोऽधिकः प्रिये!। प्रविशन्ति यथा नद्यः समुद्रमृजुवक्रगाः। तथैव समयाः सर्वे प्रविष्टाः कुलमेव हि। यथा हस्तिपदे लीनं सर्वप्राणिपदं भवेत्। तथैव समयाः सर्वे प्रविष्टाः कुलमेव हि॥ तथा॥ मेरुसर्षपयोर्यद्वत् सूर्य्यखद्योतयोर्यथा। तथान्यसमयस्यापि कौलस्य महदन्तरम्। दर्शनेषु च सर्वेषु विनाभ्यासेन मानवाः। मोक्षं लभन्ते कौले तु सद्य एव न संशयः॥ तथा॥ योगी चेन्नैव भोगी स्याद् भोगी चेन्नैव योगवित्। भोगयोगात्मकं कौलमतः सर्वात्मकं प्रिये!। भोगो योगायते साक्षात् पातकं सुकृतायते। मोक्षायते च संसारः कुलधर्मे कुलेश्वरि!। ब्रह्मेन्द्राच्युतरुद्रादिदेवता मुनिपुङ्गवाः। कुलधर्म्मपरा देवि! मनुष्येषु च का कथा। विहाय सर्वधर्म्मांश्च नानागुरुमताय च। कुलमेव विजानीयाद्यदीच्छेच्छ्रियमात्मनः। पूर्वजन्मकृताभ्यासात् कुलज्ञानं प्रकाशते। सुप्तोत्थितप्रत्ययवदुपदेशादिकं विना॥

दिवा कुलाचारनिषेधस्तु॥ वामकेश्वरतन्त्रे एकपञ्चाश-

स्पटले ॥ न दिवा च कुलाचारः पूर्णज्ञानेन चान्यथा। आचारो द्विविधो देवि! वामदक्षिणभेदतः। जन्ममात्रं दक्षिणं हि अभिषेकेन वामकम्। निरुत्तरतन्त्रे प्रथमपटले॥ रात्रौ कुलक्रियां कुर्य्याद्दिवा कुर्य्याच्च वैदिकीम्। दिवा रात्रौ यजेद्देवीं योगी योगप्रभेदतः॥ वामकेश्वरतन्त्रे॥ गुरोराराधनाद्देवि! मन्त्रसाधनतः प्रिये!। चतुर्णामाश्रमाणां हि चावधूताश्रमो महान्। अवधूताश्रमं गच्छेत् साधकः स्थिरमानसः। कामक्रोधलोभमोहमदमात्सर्य्यवर्जितः। अवधूतः शिवः साक्षान्मम प्राणसमः प्रिये!। अवधूतश्च द्विविधो गृहस्थश्च दिगम्बरः। सचेलश्च सदारश्च भावकः साधकः शुचिः। गुरुभक्तिरतो ज्ञानी वाह्याभ्यन्तरधर्म्मकृत्। अष्टाङ्गाभ्यासनिरतः प्राणायामपरायणः। निष्कामी ज्ञानशुद्धात्मा शिवार्च्चनपरायणः। गृहावधूतो देवेशि! द्वितीयश्च सदाशिवः। दिगम्बरावधूतो हि पञ्चाचारपरायणः। सदानन्दः सदाशान्तो दिग्वासाः सर्वदायकः। सर्वभोगी सर्वजातिधर्म्मकर्म्मरतः सदा। न कलौ शोधयेन्मद्यमगम्यागमनं न हि। गृहावधूतैः कार्य्यन्तु कर्त्तव्यञ्च दिगम्बरैः। संविदासवयोर्म्मध्ये संविदेव गरीयसी। संविदापानमात्रेण स वीरः स च साधकः। एवंविधो विधानज्ञः कुलीनो भवति प्रिये!। तदैव दिव्यभावश्च जायते नात्र संशयः। ये शाक्ता ब्राह्मणा देवि! क्षत्रिया ब्राह्मणाः स्मृताः। वैश्याश्च ब्राह्मणा देवि! सर्वे शूद्रा द्विजोत्तमाः। अन्तःशाक्ता वहिःशैवाः सभायां वैष्णवा मताः। नानारूपधराः कौला विचरन्ति महीतले। अभिषिक्तो गृहस्थश्च सदावधूतकश्च सः। कर्त्ता पाता च संहर्त्ता शिवतुल्यो न संशयः। वाह्यपूजा प्रकर्त्तव्या गुरुवाक्यानुसारतः। अन्तर्यागात्मिका पूजा सर्वपूजोत्तमोत्तमा। वहिः-

पूजा विधातव्या यावज्ज्ञानं न जायते। ज्ञाने जाते च देवेशि! देवतामूर्त्तिभावना। अथवा देवतामूर्त्तिमालम्ब्य साधयेत् सुधीः॥

कामाख्यातन्त्रे पञ्चमपटले॥ स ब्राह्मणो वैष्णवः स शाक्तो गाणपतश्च सः। स शैवः परमार्थज्ञः स एव पूर्णदीक्षितः। पावनानीह तीर्थानि सर्वेषामिति सम्मतम्। तीर्थानां पावनः कौलो गिरिजे! बहु किं वचः। तस्यैव जननी धन्या धन्या हि जनकादयः। तस्य ज्ञातिकुटुम्बाश्च धन्या आलापिनो जनाः। नन्दन्ति पितरः सर्वे गाथां गायन्ति ते मुदा। अपि नः स्वकुले कश्चित् कुलज्ञानी भविष्यति॥

अथान्तर्यागः॥ मुण्डमालातन्त्रे षष्ठपटले॥ ध्यायेत्तु पूजयेद्देवं मनसा वचसा हृदा। तदेव साधको लोके चान्तर्यागपरायणः। अन्तर्यागं महामाये! साधकानामगम्यकम्। ब्रह्माण्डं वै शरीरन्तु सर्वेषां प्राणधारिणाम्। ब्रह्माण्डे ये गुणाः सन्ति ते तिष्ठन्ति कलेवरे। शरीरं तत्त्वघटितं नानारसपरिप्लुतम्। चन्द्रबिम्बसमायुक्तं नादविन्दुविभूषितम्। शरीरं शङ्करस्यापि दुर्लभं मुक्तिदायकम्। यावन्मुक्तिर्म्महामाये! तावदेव हि साधकः॥

नित्यातन्त्रे चतुर्थपटले॥ अथान्तर्यजनं वक्ष्ये शृणु सर्वाङ्गसुन्दरि!। न पुनर्जननीगर्भे यज्ज्ञात्वा याति साधकः। आधारे कुण्डलीं देवीं चिन्तयेद्भुजगाकृतिम्। पूरकेण महेशानि! त्वया चक्राणि षट् ततः। सहस्रानन्दसन्दोहमन्दिरं प्रापयेत् सुधीः। योजयित्वा पूरकेण साधकः परमात्मनि!। शिवशक्तिसमायोगात् सुखी भूयान्निरन्तरम्। विकाशितं भवेद्देहं सकलं तत्प्रभावतः। अनाहताद्बहिः पद्मं षोड़शारं विचिन्तयेत्। तन्मध्ये चिन्तयेन्मन्त्री सुधासागरमुत्तमम्।

शतयोजनविस्तीर्णं वलयाकारमुज्ज्वलम्। तन्मध्ये परमेशानि! मणिद्वीपं मनोहरम्। पारिजातादिरचितैरुद्यानैः परिशोभितम्। कल्पवृक्षं महादेवि! मध्यस्थाने विचिन्तयेत्। चतुर्वेदान्वितैः शाखैश्चतुर्भिरुपशोभितम्। चिन्तामणिगृहं तस्य मूले देवि! विचिन्तयेत्। सुवर्णरचितं नानारत्नसञ्चयरञ्जितम्। प्रवालमेखलायुक्तं घण्टाचामरराजितम्। तन्मध्ये परमेशानि! चिन्तयेन्मणिवेदिकाम्। तस्योपरि महादेवि! मणिपीठं मनोहरम्। स्वकल्पतन्त्रमुक्तं तद्योनिरूपं विचिन्तयेत्। भूमध्ये परमेशानि! यच्चान्द्रं पात्रमुत्तमम्। तत्रस्थमम्तं देवि! तत्र योनौ विनिक्षिपेत्। तेनैव विद्युदाकारं योनिमध्ये विचिन्तयेत्। आकाशाज्जायते वायुर्वायोरुत्पद्यते रविः। रवेरुत्पद्यते नीरं नीरादुत्पद्यते मही। अनेनैव विधानेन पञ्चभूतात्मकं भवेत्। सर्वेन्द्रियसमायुक्तं सर्वायुधसमन्वितम्। सर्वालङ्काररचितं देवीदेहं विचिन्तयेत्। स्नात्वाथ पुष्करे तीर्थे पूजयेत् परदेवताम्। पाद्यपात्रत्रयं भद्रे! अर्घ्यपात्रत्रयं तथा। तथाचमनपात्रञ्च त्रयं कुर्य्याद् वरानने!। स्नानपात्राष्टकं देवि! नियोज्याथ दले दले। पाद्यं चरणयोर्दत्त्वा कुण्डलिन्यमृतामृतैः। पात्राभ्यां परमेशानि! पादोदकमथाहरेत्। मनसार्घ्यं त्रिधा कृत्वा गुणत्रयविभेदतः। सुवर्णदोलया देवीमानयेत् कुलभैरवः। स्नापयेन्मधुगन्धाद्यैः सुवर्णकलसाष्टकैः। चीनया गात्रमार्जन्या गात्रनीरं समुद्धरेत्। पट्टवस्त्रं ततो देव्यै निवेद्य परिधापयेत्। कञ्चुकञ्च निवेद्याथ शङ्खं बाहुचतुष्टये। निवेदयेन्महादेव्यै गजदन्तविनिर्मितम्। नानालङ्करणं देव्यै निवेद्य साधकोत्तमः। भक्तियुक्तेन मनसा स्वस्वस्थाने नियोजयेत्। सुगन्धितैलं चिकुरे दत्त्वाथ कुलभैरवः। स्वर्णकङ्कतिकया

केशसंस्कारमाचरेत्। ततस्तु त्रिबलीं बद्ध्वा केशपाशं नियोजयेत्। सिन्दूरतिलकं दद्याद् भ्रूमध्ये कज्जलैः सुधीः। नेत्रञ्च रञ्जयेद्देव्याश्चामीकरशलाकया। अलक्तं चरणे दत्त्वा नखरागं कराम्बुजे। अनर्घ्यरत्नघटितं दद्याच्च नूपुरद्वयम्। सुवर्णरचितं दद्यात् पादुकायुगलं शुचिः। निवेदयेत् किरीटञ्च नानारत्नविनिर्मितम्। चन्दनागुरुकस्तूरीकुसीदकुङ्कुमादिभिः। कुर्य्यादालेपनं देव्याः कुङ्कगोलादिभिस्तथा। रक्तपद्मसहस्राणि मूलदेव्यै निवेदयेत्। समानीय ततः पीठे पुनश्च स्वर्णदोलया। चतुर्विंशतितत्त्वेन गन्धं देव्यै निवेदयेत्। तेजोरूपं महेशानि! दीपं देव्यै निवेदयेत्। अम्बरं चामरं सूर्य्यं दद्याद्दर्पणमुत्तमम्। चन्द्रं छत्रं महेशानि! षट्पद्ममेखलां तथा। अनाहतध्वनिमयीं घण्टाञ्च विनिवेदयेत्। सुधारसाम्बुधिं दद्यात् ततस्तु मां सपर्वतम्। ब्रह्माण्डपूरितं देव्यै पायसं विनिवेदयेत्। आनन्दं विनिवेद्याथ निष्कलः कुलभैरवः। मनोनर्त्तकसम्भूतशृङ्गारादिरसोत्तमैः। नृत्यैर्गीतैश्च वाद्यैश्च तोषयेत् परमेश्वरीम्। एवमेव विधानेन सम्पूज्य प्रजपेन्मनुम्॥

शाक्तानन्दतरङ्गिण्यां षष्ठोल्लासे॥ कश्चित् कश्चिद्विशेषो यथा॥ आत्मस्थां देवतां त्यक्त्वा वहिर्देवं हि मृग्यते। करस्थं कौस्तुभं त्यक्त्वा भ्रमते काचतृष्णया। प्रत्यक्षीकृत्य हृदये हृदिस्थां पूजयेच्छिवाम्। यस्य यस्य हि देवस्य यथा भूषणवाहनम्। तदेव पूजने तस्य चिन्तयेत् परमेश्वरि!। अथान्तर्यजनं वक्ष्ये येन देवमयो भवेत्। सुखासने समासीनः प्राङ्मुखो वाप्युदङ्मुखः। स्वकीयहृदये ध्यायेत् सुधासागरमुत्तमम्। रत्नद्वीपन्तु तन्मध्ये सुवर्णबालुकामयम्। मन्दारपारिजाताद्यैः कल्पवृक्षैः सुपुष्पितैः। सर्वतोऽलङ्कृतैर्दिव्यैर्नि-

त्यपुष्पफलद्रुमैः। नानासुगन्धिकुसुमगन्धामोदितदिङ्मुखम्। उत्फुल्लकुसुमामोदप्रहृष्टभृङ्गसङ्कुलम्। कूजत्कोकिलसङ्घेन वाचालितदिगन्तरम्। सर्वतोऽलङ्कृतं दिव्यं लसत्काञ्चनपङ्कजम्। मौक्तिकैः कुसुमैः स्रग्भिर्मुकुलैः स्वर्णतोरणैः। तन्मध्ये संस्मरेद्देवि! कल्पवृक्षं मनोहरम्। चतुःशाखाञ्चतुर्वेदं गुणत्रयसमन्वितम्। पीतं कृष्णं तथा श्वेतं रक्तं पुष्पञ्च सुन्दरि!। हरितञ्च विचित्रञ्च नानापुष्पविराजितम्। कोकिलैर्भ्रमरैर्देवि! शोभितं बहुपक्षिभिः। एवं कल्पद्रुमं ध्यात्वा तदधो रत्नवेदिकाम्। तत्रोपरि महद्व्याप्तं चिन्तयेद्रत्नमण्डपम्। उद्यदादित्यसङ्काशं रत्नसोपानमण्डितम्। ध्वजावलीसमाकीर्णं चतुर्द्वारसमन्वितम्। नानारत्नविशोभाढ्यं रत्नप्राकारमण्डितम्। स्वस्वस्थानस्थितावस्थैर्लोकपालैरधिष्ठितम्। सिद्धचारणगन्धर्वैर्विद्याधरमहोरगैः। किन्नरैरप्सरोभिश्च क्रीड़द्भिः परिदिङ्मुखम्। नृत्यवादित्रनिरतैरमरस्त्रीगणैर्युतम्। किङ्किणीजालसम्बन्धपताकाभिरलङ्कृतम्। महामाणिक्यवैदूर्य्यरत्नचामरभूषितम्। स्थूलमुक्ताफलोद्दामलम्बमानैरलङ्कृतम्। चन्दनागुरुकस्तूरीकुङ्कुमादिविलेपितम्। तन्मध्ये संस्मरेद्देवि! महामाणिक्यवेदिकाम्। उद्यदर्केन्दुकिरणां चतुरस्रोपशोभिताम्। ध्यायेत् सिंहासनं तत्र ब्रह्मविष्णुशिवात्मकम्। सिंहासने महेशानि! प्रसूनतूलिकां न्यसेत्। पीठपूजां ततः कृत्वा स्वकल्पोक्तक्रमेण तु। प्रेतपद्मासने तत्र चिन्तयेत् परमेश्वरीम्। आत्मन्यभीष्टदेवानां ध्यानं ध्यानमिहोच्यते। श्रीरत्नपादुके दत्त्वा नीत्वा तां स्नानमन्दिरे। सिंहासनोपविष्टायमुद्वर्त्तनमथाचरेत्। कर्पूरागुरुकस्तूर्य्या तथा मृगमदेन च। रोचनाकुङ्कुमैर्मिश्रैर्नानागन्धसमन्वितैः। देव्या उद्वर्त्तनं कृत्वा गन्धतैलं विलेपयेत्। दिव्यवारिसहस्रस्तु

स्वर्णकुम्भसहस्रकैः । आनीय वारिणा स्नातां चिन्तयेत् परदेवताम् । दुकूलैर्मार्जितं गात्रं दुकूले परिधे तथा । कङ्कत्या केशं संस्कुर्य्याद्विधिवद् बन्धनं तथा । पट्टगुच्छं केशपाशैर्नानारत्नोपशोभितम् । पादयोर्नूपुरे दद्यान्नासाग्रे गजमौक्तिकम् । निवेदयेद् यथाशक्त्या पुष्पमालाञ्च भूषणम् । सर्वाङ्गलेपनं कार्य्यं गन्धचन्दनसिक्तकैः । काञ्चनाञ्चितकञ्चूली शोभिता हृदयोपरि । समाधौ चिन्तयेद्देवीं भूतशुद्ध्रादिकं दिशेत् । न्यासजालं विधायाथ समाधौ पूजयेत् सदा । षोड़शानामुपचारैर्हृदिस्थां पूजयेच्छिवाम् । रत्नसिंहासनं दद्यात् स्वागतं कुशलं वदेत् । पाद्यञ्च पादयोर्देवि ! शिरस्यर्घ्यं निवेदयेत् । परामृतमाचमनं प्रदद्यान्मुखपङ्कजे । मधुपर्कं मुखे दद्यात् त्रिधा आचमनं मुखे । हेमपात्रगतं दिव्यं परमान्नं परिष्कृतम् । कपिलाघृतसंयुक्तमन्नञ्च व्यञ्जनान्वितम् । सुधाम्बुधिं मांसशैलं मत्स्यराशिं फलानि च । भक्ष्यं भोज्यं तथा लेह्यं चर्व्यं चोष्यं तथैव च । सकर्पूरञ्च ताम्बूलं मानसं परिकल्पयेत् । आवरणान् ततो देव्याः पूजनं मनसैव हि । इत्थमन्तः समाराध्य मानसैव जपेन्मनुम् । सहस्रादिजपं कृत्वा देव्यै सोदकमर्पयेत् । ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः । अत एव महादेव्याः पर्य्यङ्कं समुदाहृतम् । पयःफेननिभां शय्यां नानापुष्पोपशोभिताम् । पुष्पशय्याञ्च संस्कुर्य्यात्तत्र देवीं सुरेश्वरीम् । चिन्तयेत् साधको योगी नानासुखविलासिनीम् । नृत्यगीतैः सवाद्यैश्च तोषयेत् परमेश्वरीम् । ततो होमं प्रकुर्वीत पूजासाफल्यहेतवे । अथ होमं प्रवक्ष्यामि येन चिन्मयतां व्रजेत् । अथाधरामये कुण्डे चिदग्नौ होमयेत्ततः ॥

महानिर्वाणतन्त्रे पञ्चमपटले ॥ इत्यघ्नमासनं दद्यात्

सहस्रारच्युतामृतैः। पाद्यं चरणयोर्दद्यान्मनसार्घ्यं निवेदयेत्। तेनामृतेनाचमनं स्नानीयमपि कल्पयेत्। आकाशतत्त्वं वसनं गन्धन्तु गन्धतत्त्वकम्। चित्तं प्रकल्पयेत् पुष्पं धूपं प्राणान् प्रकल्पयेत्। तेजस्तत्त्वञ्च दीपार्थे नैवेद्यञ्च सुधाम्बुधिम्। अनाहतध्वनिं घण्टां वायुतत्त्वञ्च चामरम्। नृत्यमेन्द्रिय-कर्म्माणि चाञ्चल्यं मनसस्तथा। पुष्पं नानाविधं दद्यादात्मनो भावसिद्धये। अमायामनहङ्कारमरागममदं तथा। अमो-हकमदम्भञ्च अद्वेषाक्षोभके तथा। अमात्सर्य्यमलोभञ्च दश-पुष्पं प्रकीर्त्तितम्। अहिंसा परमं पुष्पं पुष्पमिन्द्रियनिग्रहम्। दयाक्षमाज्ञानपुष्पं पञ्चपुष्पं ततः परम्। इति पञ्चदशैः पुष्पै-र्भावपुष्पैः प्रपूजयेत्। सुधाम्बुधिं मांसशैलं भर्जितं मीन-पर्वतम्। मुद्राराशिं सुभक्तञ्च घृताक्तं पायसं तथा। कुला-मृतञ्च तत् पुष्पं पीठक्षालनवारि च। कामक्रोधौ तु विघ्नकृतौ बलिं दत्त्वा जपं चरेत्। माला वर्णमयी प्रोक्ता कुण्डलीसूत्र-यन्त्रिता। सविन्दुं वर्णमुच्चार्य्य मूलमन्त्रं समुच्चरेत्। अका-रादिक्षकारान्तमनुलोमविलोमतः। पुनर्लकारमारभ्य श्रीक-ण्ठान्तमनुं जपेत्। विलोम इति विख्यातः क्षकारो मेरु-रुच्यते। अष्टवर्गान्तिमैर्वर्णैः सह मूलमथाष्टकम्। एवमष्टो-त्तरशतं जप्त्वा तेन समर्पयेत्। सर्वान्तरात्मनिलये स्वाहा ज्योतिःस्वरूपिणी। गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपं मातराद्ये! कालि! नमो-ऽस्तु ते। समर्प्य जपमेतेन साष्टाङ्गं प्रणमेद्धिया। इत्यन्तर्यजनं कृत्वा वहिःपूजां समारभेत्॥

अथान्तर्होमः॥ निरुत्तरतन्त्रे सप्तमपटले॥ ज्ञानहोमविधिं वक्ष्ये शृणु सर्वाङ्गसुन्दरि!। यस्य विज्ञानमात्रेण कर्त्ता हर्त्ता सदाशिवः। आत्मेति चतुरस्रन्तु विचिन्त्य वीरवन्दिते!। आत्मान्तरात्मा परमज्ञानात्मा परमेश्वरि!। चतुर्भिरेतैर्देवेशि!

कुर्य्यात्तु चतुरस्रकम्। अर्द्धमात्रां योनिरूपां कुण्डमध्ये विचिन्तयेत्। आनन्दं मेखलां कुर्य्यात्त्रिरेखां बलयं तथा। ज्ञानाग्निं तत्र देवेशि! योजयेत् कुलभैरवः। शब्दाख्यं मातृकारूपं संविदग्नौ ततो हुनेत्। अक्षराणीह मे देवि! निःशब्दं ब्रह्म जायते। पुण्यं पापं विकल्पञ्च सङ्कल्पं वीरवन्दिते!। कृत्यञ्चाकृत्यमीशानि! हवींष्येतानि पार्वति!। चिन्तयेन्मूलविद्याञ्च जुहुयान्मनसा स्रुचा। तदा संविन्मयः साक्षात् परं ब्रह्मपदं व्रजेत्॥

अथ पञ्चाहुतयः॥ श्यामारहस्ये मूलान्ते॥ नाभिचैतन्यरूपाग्नौ हविषा मनसा स्रुचा। ज्ञानप्रदीपिते नित्यमक्षवृत्तीर्जुहोम्यहम्। स्वाहा। अनेन प्रथमाहुतिं दद्यात्॥ ततो मूलान्ते॥ धर्म्माधर्म्महविर्द्दीप्त आत्माग्नौ मनसा स्रुचा। सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम्। स्वाहा इति द्वितीयाहुतिं दद्यात्॥ ततो मूलान्ते॥ प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचा। धर्म्माधर्म्मकलास्नेहपूर्णमग्नौ जुहोम्यहम्। वह्निजायान्तमन्त्रेण तृतीयाहुतिमादिशेत्॥ अनेन तृतीयाहुतिं दद्यात् मूलान्ते॥ अन्तर्निरन्तरनिरिन्धनमेधमाने मायान्धकारपरिपन्थिनि संविदग्नौ। कस्मिंश्चिदद्भुतमरीचिविकाशभूमौ विश्वं जुहोमि वसुधादिशिवावसानम्॥

अथ श्रीचक्रक्रमः॥ कुलार्णवे पञ्चमखण्डे पञ्चमोल्लासे॥ आधारेण विना भ्रंशो न च तृप्यन्ति मातरः। तस्माद्विधिवदाधारं कल्पयेत् कुलनायिके!। आधारं त्रिपदं प्राहुः षट्पदं वा चतुष्पदम्। अथवा वर्त्तुलाकारं कुर्य्याद्देवि! मनोहरम्। इति पात्राधारकथनम्॥

स्वर्णरूप्यशिलाकूर्म्मकपालालावुमृण्मयम्। नारिकेलञ्च

शङ्खञ्च मुक्ताशुक्तिसमुद्भवम्॥ पुष्पवृक्षसमुद्भूतं पात्रं कुर्य्याद्विचक्षणः। अतिसूक्ष्ममतिस्थूलं छिन्नं भिन्नञ्च वर्जयेत्। इति पात्रकथनम्॥ सुवर्णरौप्यताम्राणि सर्वसिद्धिकराणि च। शान्तिके च शिलापात्रं स्तम्भने चैव मृण्मयम्। नारिकेलञ्च वश्यादावभिचारे च कूर्म्मजम्। शङ्खं ज्ञानप्रदं मुक्ता शुक्तिविद्याप्रदायिनी। कपालालावुपात्राणि योगसिद्धिकराणि च। पुष्पवृक्षजपात्राणि सर्वपापहराणि च। उक्तेष्वेतेषु देवेशि! पात्रमेकं प्रकल्पयेत्॥ इति कर्म्मविशेषे पात्रफलम्॥

एतदनन्तरं कुलद्रव्यकरणमुक्त्वा-इत्यादि मध्ये हेतूनि मद्यान्यन्यानि कारयेत्। पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम्। मधूत्थं सीधुमाध्वीकमैरेयं नारिकेलजम्। मद्यान्येकादशैतानि भुक्तिमुक्तिकराणि च। द्वादशन्तु सुरामद्यं सर्वेषामुत्तमं प्रिये!। गौड़ी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा। सर्वसिद्धिकरी पैष्टी गौड़ी भोगप्रदायिनी। माध्वी मुक्तिकरी प्रोक्ता सुरा स्याद्दवता प्रिये!। इति त्रिविधसुराकथनम्॥

विद्याप्रदैक्षवी माला माध्वी राज्यप्रदा भवेत्। तालजा स्तम्भने शस्ता खार्जूरी रिपुनाशिनी। नारिकेलभवा श्रीदा पानसी च शुभप्रदा। मधूकजा ज्ञानकरी माध्वीका रोगनाशिनी। मैरेयाख्या महेशानि! सर्वपापापहारिणी। इत्येकादशमद्यफलम्॥ चीरवृक्षसमुद्भूतं मद्यं वल्कलसम्भवम्। मधुपुष्पसमुद्भूतसासवं तण्डुलोद्भवम्। तद्गन्धघ्राणमात्रेण शतक्रतुफलं लभेत्। तस्य सम्पर्कमात्रेण तीर्थकोटिफलं लभेत्। देवि! तत्पानतः साक्षाल्लभेन्मुक्तिं चतुर्विधाम्॥ मद्याभावे वटिकोक्ता तत्रैव॥ मद्यमांसादिविजयां चाष्टगन्धैः सुमिश्रिताम्। सम्मर्द्य वटिकां कृत्वा सङ्गृह्याथ विचक्षणः। मद्या-

भावे तु वटिकां जले संयोज्य तर्पयेत्। वटिकाभावे द्रव्यान्तरेण तर्पणमुक्तं तत्रैव॥ गुड़मिश्रेण तक्रेण तर्पयेन्मधुभाजिना। सौवीरेणाथवा कुर्य्यादेतत् कर्म्म न लोपयेत्। प्रमादाद् यदि लुप्येत देवताशापमाप्नुयात्। मांसञ्च त्रिविधं प्रोक्तं खभूजलचरं प्रिये!। यथासम्भवमेष्वेकं तर्पणार्थं प्रकल्पयेत्। मांससन्दर्शनेनापि सुरादर्शनवत् फलम्। पितृदेवादियज्ञेषु वैधहिंसा विधीयते। आत्मार्थं प्राणिनां हिंसा कदाचिन्नोदिता प्रिये!। अनिमित्तं तृणं वापि छेदयेन्न कदाचन। देवतार्थं द्विजार्थं वा हत्वा पापैर्न लिप्यते॥ मांसाभावे मांसप्रतिनिधिरुक्तस्तत्रैव॥ मांसाभावे तु लसुनं सार्द्रकं नागरन्तु वा। आदाय पूजयेद्देवीं नान्यथा निष्फलं भवेत्॥ मत्स्यमांसतत्प्रतिनिध्यभावे केवलकारणेनापि तर्पणमुक्तम् तत्रैव॥ मत्स्यमांसादिहीनेन मद्येनापि च तर्पयेत्। न कुर्य्यान्मत्स्यमांसाभ्यां विना द्रव्येण पूजनम्॥ तर्पणफलमुक्तं तत्रैव॥ पिशितं तिलमात्रन्तु तिलार्द्धमपि विन्दुना। सकृत्तर्पितमात्रेण कोटियज्ञफलं लभेत्। कुलपूजासमं नास्ति पुण्यमन्यज्जगत्त्रये। तस्माद् यः पूजयेद्भक्त्या भुक्तिमुक्त्योः स भाजनम्। अनधीतस्य शास्त्रज्ञो गुरुभक्तो दृढ़व्रतः। कुलपूजारतो यस्तु स मे प्रियतमो भवेत्। चतुर्णामपि वर्णानामाश्रमाणामधीश्वरि!। पुंस्त्रीनपुंसकानाञ्च पूजिता त्वं सदाशिवे!। इहामुत्र फलं दद्यात् पूज्या सुरवधूरिव। कुलपूजादिकं विना यश्चैतत् करोति तस्य दोषमाह तत्रैव॥ कुलपूजां विना यस्तु करोत्येतत् सुदुर्मतिः। स याति नरकं घोरमेकविंशतिभिः कुलैः॥ आराधने त्वशक्तानां कृत्यमुक्तं तत्रैव॥ तस्मात् सर्वप्रयत्नेन कुलपूजारतो भवेत्। लभते सर्वसिद्धिञ्च नात्र कार्य्या विचारणा।

आराधनासमर्थश्चेद्द्रव्यादर्चनसाधनम्। यो दातुं नैव शक्नोति कुर्य्यादर्चनदर्शनम्॥ शैवादीनामपि कुलद्रव्येण पूजनमुक्तं तत्रैव॥ शैवे च वैष्णवे शाक्ते सौरे च गणदर्शने। बौद्धे पाशुपते साङ्ख्ये व्रते कालामुखे तथा। सदक्षवामसिद्धान्ते वैनिकादिषु पार्वति!। विनालिपिशिताभ्याञ्च पूजनं विफलं भवेत्। कुलद्रव्यैर्विना कुर्य्याज्जपयज्ञतपोव्रतम्। निष्फलञ्च भवेद्देवि! भस्मनीव यथाहुतिः। एतेन वैष्णवे कुलाचाराभाव इति येनोक्तं तेनेत्यादिवचनं न श्रुतमिति भाति॥

कुलाचारकरणफलमाह तत्रैव॥ यथैवानुचरा राज्ञः प्रियाः स्युर्न वहिश्चराः। तथान्तर्यागनिष्ठा ये ते प्रिया देवि! नापरे। समर्पयन्ति ये भक्त्या कराभ्यां पिशितासवम्। उत्पादयति चानन्दं मत्प्रियाः कौलिकाश्च ते। आवयोः परमाकारं सच्चिदानन्दलक्षणम्। कुलद्रव्योपभोगेन परिस्फुरति नान्यथा। अन्तःस्थात्मभवोल्लासो मनोवाचामगोचरः। कुलद्रव्योपभोगेन जायते नान्यथा प्रिये!। सेविते च कुलद्रव्ये कुलतत्त्वार्थदर्शिनः। जायते भैरवावेशः सर्व्वत्र समदर्शिनः। तमःपरिवृतं वेश्म यथा दीपेन दृश्यते। तथा मायावृतो ह्यात्मा द्रव्यपानेन दृश्यते। मन्त्रपूतं कुलद्रव्यं गुरुदेवार्पितं प्रिये!। ये पिबन्ति जनास्तेषां स्तन्यपानं न विद्यते। सुरा शक्तिः शिवो मांसं तद्भक्तो भैरवः स्वयम्। तयोरैक्यं समुत्पन्नमानन्दो मोक्ष उच्यते। आनन्दं ब्रह्मणो रूपं तच्च देहेष्ववस्थितम्। अस्याभिव्यञ्जकं मद्यं योगिभिस्तेन पीयते। निःसङ्गो निर्भयो वीरो निर्द्वन्द्वो निष्कुतूहलः। निर्णीतवेदशास्त्रार्थो वरदां वारुणीं पिबेत्॥

संस्कृतद्रव्यदानफलन्तु तत्रैव॥ मन्त्रसंस्कारसंशुद्धामृतपानेन पार्वति!। जायते देवताभावो भवबन्धविमो-

चकः। ब्राह्मणस्य सदा पेयं क्षत्रियस्य रणागमे। गोलम्भने च वैश्यस्य शूद्रस्यान्त्येष्टिकर्मणि। देवान् पितॄन् समभ्यर्च्य देवि! शास्त्रोक्तवर्त्मना॥ अर्थलोभादिना कुलद्रव्यपाने दोषस्तत्रैव॥ गुरुं स्मरन् पिबन्मद्यं खादन्मांसं न दोषभाक्। तत्स्थैं सर्वदेवानां ब्रह्मज्ञानार्थमेव च। सेवेत मधुमांसानि तृष्णया चेत् स पातकी। मन्त्रार्थस्फुरणार्थाय मनसः स्थैर्य्यहेतवे। भवपाशनिवृत्त्यर्थं मधुपानं समाचरेत्। सेवते यः सुखार्थाय मद्यादीनि स पातकी। प्राशयेद्देवताप्रीत्यै ह्यभिलासविवर्जितः। मत्स्यमांसासवादीनां मादनानां निषेवणम्। यागकालं विनान्यत्र दूषणं कथितं प्रिये!। यथा क्रतुषु विप्राणां सोमपानं विधीयते। मधुपानं तथा कार्य्यं समये भोगमोक्षदम्। श्रीगुरोः कुलशास्त्रेभ्यः सम्यग्विज्ञाय वासनाम्॥ पञ्चमुद्रां निषेवेत चान्यथा पातकी भवेत्। अयष्टा भैरवं देवमकृत्वा मन्त्रतर्पणम्। पशुपानविधौ पीत्वा कौलोऽपि नरकं व्रजेत्। कौलज्ञाने ह्यसिद्धो यस्तद्द्रव्यं भोक्तुमिच्छति। स महापातकी देवि! सर्वकर्मवहिष्कृतः। समयाचारहीनस्य स्वैरवृत्तेर्दुरात्मनः। न सिद्धयः कुलभ्रंशस्तत्संसर्गं न कारयेत्। यः शास्त्रविधिमुत्सृज्य वर्त्तते कामचारतः। न स सिद्धिमवाप्नोति परत्र न परां गतिम्। स्वेच्छया वर्त्तमानो यो दीक्षासंस्कारवर्जितः। न तस्य सद्गतिः क्वापि तपस्तीर्थव्रतादिभिः। असंस्कृतं पिबेद्द्रव्यं बलात्कारेण मैथुनम्। स्वप्रियेण हृतं मांसं रौरवं नरकं व्रजेत्। कौलाः पशुव्रतास्त्वेव पक्षद्वयविडम्बकाः। केशसङ्ख्या स्थिता यावत्तावत्तिष्ठति रौरवे। कुलद्रव्याणि सेवन्ते येऽन्यदर्शनमाश्रिताः। तदङ्गरोमसङ्ख्यातं पलाशो स निगद्यते। स्वलब्ध्यादिन्द्रियगणं सम्पाद्यात्मनि योजयेत्। मांसाशी स भवेद्देवि! शेषाः स्युः प्राणिहिंसकाः।

अप्रबुद्धा पशोः शक्तिः प्रबुद्धा कौलिकस्य च। शक्तिं तां सेवयेद् यस्तु स भवेच्छक्तिसेवकः। परशक्त्यात्ममिथुनसंयोगानन्दनिर्भरः। य आस्ते मैथुनं यत् स्यादितरे स्त्रीनिषेवकाः। इत्यादिपञ्चमुद्राणां वासनां कुलनायिके! ज्ञात्वा गुरुमुखाद्देवि! यः सेवेत स मुच्यते॥

षष्ठोल्लासे॥ पूजकलक्षणादि॥ पूजाभिषेकसहितो देवि! शास्त्रार्थतत्त्ववित्। देवतागुरुभक्तश्च नियतं योऽर्चयेत् प्रिये!। कुलागमरहस्यज्ञो देवताराधनोत्सुकः। गुरूपदेशसंयुक्तः पूजयेत् कुलनायिके!। शुद्धात्मा चातिसंहृष्टः क्रोधलौल्यविवर्जितः। पशुव्रतादिविमुखः सम्मुखस्तर्पयेत् प्रिये!। मन्त्रयोगेन देवेशि! कुर्य्यात् श्रीचक्रपूजनम्। तदहन्तु त्वया सार्द्धं गृह्णामि स्वयमादरात्। भैरवोऽहमिति ज्ञानात् सर्वज्ञादिगुणान्वितः। इति सञ्चिन्त्य योगीशः कुलपूजारतो भवेत्। इत्यादिलक्षणोपेतः कौलिको नियतव्रतः। यस्त्वां समर्चयेद्देवि! भुक्तिमुक्त्योः स भाजनम्। एकान्ते विजनेऽरण्ये देशे बाधाविवर्जिते। सुखासने समासीनः प्राङ्मुखो वाप्युदङ्मुखः। आत्मस्थानमनुद्रव्यदेवशुद्धिस्तु पञ्चधा। यावन्न कुरुते देवि! तावद्देवार्चनं कुतः। पञ्चशुद्धिं विधायेत्थं पश्चाद् यजनमाचरेत्। सा पूजा सफला ज्ञेया चान्यथा निष्फलं भवेत्। मण्डलेन विना पूजा विफला कथिता प्रिये!। तस्मान्मण्डलमालिख्य विधिवत् तत्र पूजयेत्॥

मण्डललक्षणं तत्रैव॥ अखण्डमण्डलाकाकारं विश्वं व्याप्य व्यवस्थितम्। त्रैलोक्यं मण्डितं येन मण्डलं तत् सदाशिवम्। उद्यानचतुरस्रं स्यात् कामरूपञ्च वर्त्तुलम्। जालन्धरोर्द्धचन्द्राभं त्र्यस्रं पूर्णगिरिर्भवेत्। अभ्यर्च्य मण्डलं पश्चादाधारान् स्थापयेत् क्रमात्। सामान्यं श्रीगुरोर्भोगबलिपात्राणि पञ्चधा।

द्विपात्रं वा त्रिपात्रं वा एकपात्रं न कारयेत्। स्वदक्षिणादिवामान्तं संस्थाप्याचार्य्यासवेन तु। सम्पूज्य मूलमन्त्रेण कुलेश्वरि! विधानवित्। तत्र माषप्रमाणन्तु मत्स्यं मांसञ्च निक्षिपेत्॥

तर्पणे निषिद्धसुरामाह तत्रैव॥ नष्टैः पर्य्युषितोच्छिष्टैर्दुर्गन्धैर्गन्धवर्जितैः। हेतुभिः परपात्रस्थैस्तर्पणं विफलं भवेत्॥ असंस्कृता सुरा पापकलहव्याधिदुःखदा। आयुःश्रीकीर्त्तिसौभाग्यधनधान्यविनाशिनी। तस्मात् संस्कृत्य विधिवत् कुलद्रव्यं ततोऽर्च्चयेत्। अन्यथा याति नरकं भोक्ता दाता न संशयः॥

सुराशोधनप्रकारस्तु तत्रैव॥ वीक्षणप्रोक्षणध्यानमन्त्रमुद्राविशोधितम्। द्रव्यं तर्पणयोग्यं स्याद्देवताप्रीतिकारणम्॥ प्रत्येकं पञ्चमकारशोधनमन्त्रोऽपि तत्रैव॥ प्रथमं हंसः सदसत् प्रतद्विष्णुरनन्तरम्। त्र्यम्बकन्तु तृतीयं स्याच्चतुर्थं तत्पदादिकम्। विष्णुर्योनिकमित्यादि पञ्चमं कल्पनामनुः। एकद्वित्रिचतुःपञ्चद्विचतुर्वारमम्बिके!। संस्कृत्याभ्यर्च्य पात्रन्तु पूजयेद्धेनुमुद्रया। ब्रह्माण्डखण्डसम्भूतमशेषरससम्भवम्। आपूरितं महापात्रं पीयूषरसमेव हि। शुद्धद्रव्येण तेनापि शुद्धपुष्पाक्षतैरपि। न्यासपूर्वोक्तमन्त्रैस्तु आत्मानं पूजयेत् प्रिये!। मूर्द्ध्नि श्रीगुरुपंक्तिञ्च मूलाधारे च पादुकाम्॥

गुरुपंक्तिक्रममाह तत्रैव॥ दिव्यौघे चादिनाथाश्च तच्छक्तीश्च सदाशिवः। तत्पत्नी चेश्वरस्तस्य भार्य्या रुद्रश्च तद्बधः। विष्णुश्च तत्प्रियो ब्रह्मा तत्कान्ता द्वादशेरिताः। सिद्धौघे सनकश्चैव सनन्दश्च सनातनः। सनत्कुमारश्च सनत्सुजातश्च रिभुक्षजाः। दत्तात्रेयो रैवतको वामदेवस्ततः परम्। ततो व्यासः शुकश्चैव एकादश समीरिताः। मानवौघे नृसिंहश्च

महेशो भार्गवस्तथा। महेन्द्रो माधवो विष्णुः षड़ेते परि-
कीर्त्तिताः। नमो यो योजयेद्देवि! दिव्यौघे परमं शिवम्।
महाशिवञ्च सिद्धौघे मानवौघे सदाशिवम्। ततः पीठं सम-
भ्यर्च्य देवीमावाहयेत् प्रिये!। महापद्मवनान्तःस्थे! कार-
णानन्दविग्रहे!। सर्वभूतहिते! मातरेह्येहि परमेश्वरि!।
देवेशि! भक्तिसुलभे! सर्वाभरणसंयुते!। यावत्त्वां पूजयामीह
तावत्त्वं सुस्थिरा भव। मन्त्रेणानेन चावाह्य यजेद्देवीमन-
न्यधीः। ध्यात्वा मुद्राः प्रदर्श्यार्च्चेद्गन्धपुष्पाक्षतादिभिः॥

अथ कुलाचारचक्रम्॥ कुलार्णवे पञ्चमखण्डे एकादशो-
ल्लासे॥ यदि स्याद्दीक्षितो ज्येष्ठः कुलपूजादिवर्जितः। तत्-
कनिष्ठस्तत्क्रमश्चेत् कुलपूजां समाचरेत्॥ तत्समीपं ततो
गत्वा नमस्कृत्य गुरुं यथा। तस्मै निवेद्य तत्सर्वं शेषं भुञ्जीत
पार्वति!। पूजामध्ये गुरौ ज्येष्ठे पूज्ये वापि समागते। नत्वा
ब्रूयात् स्थितिं शिष्यमाचरेत्तदनुज्ञया। ज्येष्ठस्य च कनिष्ठस्य
शिष्यावेकत्र संस्थितौ। तत्र पूज्यवदाचारः कथितः कुल-
नायिके!। अज्ञातकालप्राप्तश्चेत् पौर्वापर्य्यन्तु चिन्तयेत्।
स्मृत्वा तस्य गुरुं देवि! समवेशेन तर्पयेत्। नित्यार्च्चनं दिवा
कुर्य्याद्रात्रौ नैमित्तिकार्च्चनम्। उभयोः काम्यकर्म्माणि चेति
शास्त्रस्य निर्णयः। न स्नात्वा नासनस्थो वा भुक्त्वा च प्रलप-
न्नपि। गन्धपुष्पाक्षताकल्पवस्त्राद्यैरनलङ्कृतः। अविन्यस्त-
शरीरो वा कुलपूजां न चाचरेत्। विना मन्त्रेण या पूजा
विना मांसेन तर्पणम्। विना शक्त्या च यत् पानं निष्फलं
कथितं प्रिये!। श्रीचक्रमेको वा कुर्य्यादेकपात्रञ्च नार्च्चयेत्।
नार्च्चयेदेकहस्तेन न पिबेदेकपाणिना। मत्स्यमांसासवैर्द्देवि!
नार्च्चयेत् पशुसन्निधौ। प्रणम्य प्रविशेच्चक्रं निर्गच्छेच्च प्रणम्य
च। श्रीचक्रदर्शनं देवि! नेत्रयोः पापनाशनम्। अना-

चारान् सदाचारान् चक्रस्थान् मन्त्रिकौलिकान्। शिवगौरी-धिया देवि! भावयेन्नावमानयेत्। कुलाचार्य्यगृहं गत्वा भक्त्या पापविशुद्धये। याचेदमृतगन्धञ्च तदभावे जलं पिबेत्। कुलाचार्य्येण यच्छ्रुत्या दत्तं पात्रन्तु भक्तितः। नमस्कृत्य तु गृह्णीयादन्यथा नरकं व्रजेत्। अस्नात्वा वापि भुक्त्वा वा लोभा-द्वापि कुलेश्वरि!। यः सेवते कुलद्रव्यं स दारिद्र्यमवाप्नु-यात्। उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गणाहतः। परा-ङ्मुखो विवादी च न पिबेत्तु कुलामृतम्। योगामृतेन निष्ठिव्य मद्यभाण्डपरिभ्रमात्। ऊर्द्ध्वनालेन पानाच्च देवताशापमाप्नु-यात्। एकासने निविष्टा ये भुञ्जते चैकभाजने। एकपात्रे पिबन्त्यम्बु ते यान्ति नरकं प्रिये!। यः सेवते कुलद्रव्यमेक-ग्रामे स्थिते गुरौ। तत्कुलज्ञे च तत्पुत्रे सज्ज्येष्ठे कुल-देशिके। विनानुज्ञां कुलेशानि! सोऽक्षये नरकं व्रजेत्। उच्छिष्टो न स्पृशेच्चक्रे कुलद्रव्याणि पार्वति!। वह्निः प्रचाल्य च करौ कुलद्रव्याणि दापयेत्। मद्यभाण्डं समुद्धृत्य न पात्रं पूरयेत् प्रिये!। भोगपात्रं सुराकुम्भे निक्षिपेन्न कदाचन। चक्रमध्ये शुचिधिया करप्रक्षालनादिकम्। यः करोति विमूढात्मा स भवेदापदां पदम्। निष्ठीवनं मलं मूत्रमधो-वायुविसर्जनम्। श्रीचक्रमध्ये यः कुर्य्यात् स भवेत् योगिनी-पशुः। चक्रमध्ये घटे भग्ने पात्रे च पतिते भुवि। दीप-नाशे च शान्त्यर्थं श्रीचक्रं कारयेत् प्रिये!।

प्रौढ़ोल्लासे सति ज्ञानिमत्तयोर्विज्ञानं यथा तत्रैव॥ मन्त्राम् जपन्ति ध्यायन्ति स्तुवन्ति प्रणमन्ति च। बोधयन्ति च पृच्छन्ति नन्दन्ति ज्ञानिनः प्रिये!। मत्ता हसन्ति गच्छन्ति विवदन्ते परस्परम्। रुदन्ति श्रियमिच्छन्ति निन्दन्ति ज्ञानिनः प्रिये!। परिहासं प्रलापञ्च वितर्कं बहुभाषणम्। औदासीन्यं भयं

क्रोधं चक्रमध्ये विवर्जयेत्। पात्रहस्तो महादेवि! न भ्रमेच्चक्रमध्यत:। पूर्णपात्रं करे कृत्वा न तिष्ठेत चिरं प्रिये!। नालयेत् पात्रहस्त: सन् न निन्द्यात् पात्रमम्बिके!। न पङ्क्त्यां संस्तुयेत् पात्रं न विन्दुं पातयेदध:। नैकहस्तेन दातव्यं न मुद्रावर्जितं प्रिये!। पात्रं न चालयेत् स्थानात् न कुर्य्यात् पात्रसङ्कुलम्। सशब्दं न पिबेन्मद्यं तथैव न च पूरयेत्। नान्योन्यं ताड़येत् पात्रं न पात्रं पातयेदध:। साधारं नोद्धरेत् पात्रमनाधारे च निक्षिपेत्। रिक्तपात्रं न कुर्वीत न पात्रं भ्रामयेत् प्रिये!। न पात्रं लङ्घयेद्धीमान् पात्रं नोत्पातयेत् क्वचित्। प्रयत्नात् गोपयेत् पात्रमित्याज्ञा परमेश्वरि!। यदसन्दीपितोल्लास: कौलिक: पशुमोच्यते। पठित्वा पशुशास्त्राणि सङ्गच्छेद्वा पशुस्त्रियम्। कुर्य्यात् पशुप्रसङ्गं वा पशुकार्य्याणि वा चरेत्। श्रीचक्रस्थं कुलद्रव्यं य: पशुभ्य: प्रयच्छति। लेहाल्लोभाद्भयाद्वापि स भवेद्योगिनीपशु:। रिपुणापि न कर्त्तव्यो वाग्वादश्चक्रमध्यत:। पितृमातृसमं पश्येत् तेनोक्तं पुरुषं सहेत्। यथा स्त्रीपुत्रमित्रादि दृष्ट्वा चेत: प्रहृष्यति। तथा चेत् कौलिकान् दृष्ट्वा स भवेद् योगिनीप्रिय:॥

तथा॥ नित्यं समर्चयेन्नत्वा पशुहस्ते न निक्षिपेत्। स्वदारवन्निषेवेत कुलशास्त्राणि पार्वति!। पशुशास्त्राणि सर्वाणि वर्जयेत् परदारवत्। श्वचर्मस्थं यथा क्षीरं न पेयं स्याद्द्विजातिभि:। तथा पशुमुखाद्धर्मो न श्रोतव्यश्च कौलिकै:। य: शृणोति कुलाचारं यथाशास्त्रञ्च यो वदेत्। तावुभौ गच्छत: साक्षाद् योगिनीवीरमेलनम्। अश्रद्दधाना ये चात्र कुलधर्मे कुलेश्वरि!। नरकान्न निवर्त्तन्ते यावदाभूतसंप्लवम्॥ तथा॥ गुरुपत्नीं वीरभार्य्यां कुमारीं व्रतधारिणीम्। व्यङ्गाङ्गीं विकृताङ्गीञ्च कृशामपि न कारयेत्। सुताञ्च भगिनीं पौत्रीं स्नुषां वापि

प्रियामपि। न कामयेद्गुरोरग्रे कुर्य्यान्नान्योन्यगूहनम्। कृष्णां शुक्लां कृष्णवर्णां कुमारीञ्च कृशोदरीम्। मनोहरां यौवनस्थामर्चयेद्देवताधिया। एकदापि न सेवेत बलेन कुलयोगिनीम्। चक्रमध्ये स्वयं क्षुब्धां कामयेत् कुलसुन्दरि!। आममांसं सुराकुम्भं मत्तेभं सिद्धलिङ्गिनम्। सहकारमशोकञ्च क्रीड़ालीनाः कुमारिकाः। एकवृक्षं श्मशानञ्च समूहं योषितामपि। नारीञ्च रक्तवसनां दृष्ट्वा वन्देत भक्तितः। गुरुशक्तिं सुतं ज्येष्ठं कनिष्ठं कुलदेशिकम्। कुलदर्शनशास्त्राणि कुलद्रव्याणि कौलिकान्। प्रेरकान् सूचकान् वापि वाचकान् दर्शकांस्तथा। शिक्षकान् बोधकान् योगियोगिनीसिद्धरूपकान्। कन्यां कुमारिकां नग्नामुन्मत्तामपि योषितम्। न निन्देन्न जुगुप्सेत सहासं नावमानयेत्। नाप्रियं नानृतं ब्रूयात् कस्यापि कुलयोगिनः। कुरूपा चेति कृष्णेति न वदेत् कुलयोषितम्। परीचयेन्न भक्तानां वीराणाञ्च कृताकृते। न पश्येत् पतितां नग्नामुन्मत्तां प्रकटस्तनीम्। दिवसे न रमेत् कान्तां तद्योनिं नैव वीक्षयेत्। या काचिदङ्गना लोके सा मातृकुलसम्भवा। कुप्यन्ति कुलयोगिन्यो वनितानामतिक्रमात्। स्त्रियं शतापराधेन पुष्पेणापि न ताड़येत्। दोषान्न गणयेत् स्त्रीणां गुणानेव प्रकाशयेत्। तिष्ठन्ति कुलयोगिन्यः कुलवृक्षेषु सर्वदा। तत्पत्रेषु न भोक्तव्यमर्चयेत्तु विशेषतः। न स्वप्यात् कुलवृक्षाधो न चोपद्रवमाचरेत्। दृष्ट्वा भक्त्या नमस्कुर्य्याच्छेदयेन्न कदाचन। श्लेष्मातककरञ्जानि निम्बाश्वत्थकदम्बकाः। विल्वो वटोडुम्बरश्च तिन्तिड़ीश्चमाः स्मृताः। प्रायश्चित्तं भृगोः पातं सन्यासं व्रतधारणम्। तीर्थयात्राभिगमनं कौलः पञ्च विवर्जयेत्। वीरहत्या वृथापानं वीरद्रव्यापहारिता। वीरस्त्रीगमनञ्चैव तत्संसर्गश्च पञ्चमः। महा-

पातकमित्युक्तं कौलिकानां कुलान्वये। शैवे तत्त्वपरिज्ञानं गारुड़े विषभक्षणम्। ज्योतिषे ग्रहणं सारं कौलेऽनुग्रहनिग्रहौ॥

अथानन्दस्वरूपकथनम्॥ समयाचारतन्त्रे प्रथमपटले॥ आनन्दं परमं ब्रह्म परशक्तिः सदाशिवः। आनन्देन विना भ्रंशो न च तृप्यन्ति देवताः। द्रव्यशुद्ध्यादिसकलमानन्दार्थञ्च भैरवि!। आनन्दे जायमाने तु भक्षयेन्न कदाचन। अतिपानाद्भवेन्मत्तो जपपूजादि निष्फलम्। बुद्धिनाशो भवेद्देवि! अत एव मितं चरेत्। सुखार्थं भक्षयेद्यस्त्वापदस्तस्य पदे पदे। अतिसङ्क्षोभतोऽत्यर्थंलोकनिन्दा च जायते॥ तथा॥ सर्वं ब्रह्ममयं पश्यन् स च दोषैर्न लिप्यते। मोहाद्वा कामतो वापि यः कश्चिदिह वर्त्तते। सोऽधमः साधकानाञ्च नारकी भवति ध्रुवम्। इह लोके निन्दितः स्यात् परे च नरकं व्रजेत्॥

अथानुकल्पः॥ समयाचारतन्त्रे॥ गव्यादीनामभावे तु नित्यं कर्म न लोपयेत्। प्रमादाल्लोपयेद् यस्तु नरकं लभते ध्रुवम्। द्रव्यं चतुर्दशं प्रोक्तं तच्छृणुष्व पृथक् पृथक्। तेषां मध्ये हयं द्रव्यं न ग्राह्यञ्च कदाचन। क्षीरं दधि तथा तक्रं घृतं क्षौद्रं गुड़ं तथा। शर्करा शीतलं तोयमैक्षवं नारिकेलकम्। आस्फोनं विजयाञ्चैवमुन्मत्तञ्च विषं तथा। धुस्तूरञ्च विषं देवि! द्रव्यं प्राणहरात्मकम्। अन्यानि यानि द्रव्याणि आनन्दार्थं पिबेन्नरः॥ तथा॥ सर्वद्रव्याद्यभावे तु आर्द्रकं परिकीर्त्तितम्। जलं वा क्षीरतक्रं वा नित्यं कर्म समापयेत्। मकारपञ्चकाभावे पञ्चमं परिकीर्त्तितम्। अभावे पञ्चमे देवि! मनसा पञ्चमं व्रजेत्॥

अथ पारम्पर्य्योपदेशादिं विना पञ्चतत्त्वसेवननिन्दा॥

कुलार्णवे पञ्चमखण्डे द्वितीयोल्लासे॥ गुरूपदेशरहिता मोहयन्तीह केचन। मोहयन्ति जनान् केचित् स्वयं पूर्वविमोहिताः। दुराचारपराः केचिद्वाचयन्ति च पामराः। बहवः कौलिकं धर्मं मिथ्याज्ञानविडम्बकाः। स्वबुद्ध्या बलयन्तीत्थं पारम्पर्य्यविवर्जिताः। मद्यपानेन मनुजो यदि सिद्धिं लभेत वै। मद्यपानरताः सर्वे सिद्धिं गच्छन्तु पामराः। मांसभक्षणमात्रेण यदि पुण्यगतिर्भवेत्। लोके मांसाशिनः सर्वे पुण्यभाजो भवन्त्विह। स्त्रीसम्भोगेन देवेशि! यदि मोक्षं व्रजन्ति वै। सर्वेऽपि जन्तवो लोके मुक्ताः स्युः स्त्रीनिषेवणात्। कुलमार्गो महान् देवि! न मया निन्दितः क्वचित्। आचाररहिता येऽत्र निन्दितास्ते च सर्वदा। अन्यथा कौलिके धर्मे आचारः कथितो मया। विचरन्त्यन्यथा देवि! मूढ़ाः पण्डितमानिनः। कृपाणधारा गमनाद्व्याघ्रकण्ठावलम्बनात्। भुजङ्गधारणान्नूनमशक्यं कुलवर्णनम्। वृथापानन्तु देवेशि! सुरापानं तदुच्यते। यन्महापातकं ज्ञेयं वेदादिषु निरूपितम्। अनाघ्रेयमनासेव्यमस्पृश्यञ्चाप्यपेयकम्। मद्यं मांसं पशूनान्तु कौलिकानां महाफलम्। यत्तु। अमेध्यानि द्विजातीनां मद्यान्येकादशैव तु। द्वादशन्तु सुरामद्यं सर्वेषामधमं स्मृतम्। तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्। इति द्विजातिपाननिषेधकवचनं तदपि पूर्ववचनैकवाक्यतया पशुपरमनभिषिक्तपरं वा॥

चक्रानुष्ठानं यथा श्यामारहस्यधृतम्॥ चक्राकारेण पंक्त्याकारेण वा भिन्नभिन्नासने स्वशक्तियुक्तश्चेत् युग्मयुग्मक्रमेण पद्मासनेनोपविश्य सामयिकललाटे चन्दनं दत्त्वा शिवशक्तिबुद्ध्या पुष्पञ्च दद्यात्। ततो यदि गुरुस्तत्र तिष्ठति तदादौ गन्धादिना तं पूजयित्वा तत्पात्रे पुष्पं दत्त्वा शुद्धिसहितं तस्मै समर्प्य प्रणमेत्। गुरोरभावे तत्पात्रं जले

च्चिपेत्। ततः शक्तिपात्रं शुद्धिसहितं शक्त्यै दत्त्वा सामयिकेभ्योऽपि ज्येष्ठानुक्रमेण वीरपात्रात् परामृतं शुद्धिसहितं दद्यात्। ततः सामयिकोऽपि भक्त्या हस्तद्वयेन सङ्गृह्य तदुपरि मूलमन्त्रमष्टधा जप्त्वा पूर्ववदानन्दभैरवं भैरवीञ्च सन्तर्प्य गुरून् देवताञ्च सन्तर्पयेत्। स्वस्वकल्पोक्तविधिना भूतशुद्धिं कुर्य्यात्। ततश्चक्रनायकस्तैः सह पात्रवन्दनं कुर्य्यात् यथा। श्रीमद्भैरवशेखरप्रविलसच्चन्द्रामृतप्लावितं क्षेत्राधीश्वरयोगिनीसुरगणैः सिद्धैः समाराधितम्। आनन्दार्णवकं महात्मकमिदं साक्षात्त्रिखण्डामृतं वन्दे श्रीप्रथमं कराम्बुजगतं देवं विशुद्धिप्रदम्॥ इत्यभिमन्त्र्य वामहस्तेन पात्रमुत्तोल्य अन्योन्यवन्दनं कृत्वा गृह्णामीति गुरुशक्तिसाधकेश्वराणामाज्ञां गृह्णीयात्। ते जुषस्वेति ब्रूयुः॥ ततो मूलाधारात् कुण्डलिनीं इष्टदेवतास्वरूपां आजिह्वान्तां विभाव्य गुरुपादुकां स्मृत्वा शिवोऽहमिति विचिन्त्य हस्ताभ्यां पात्रं धृत्वा मूलमुच्चरन् कुण्डलिनीमुखे देवीं तर्पयेत्॥ एतदुक्तमुदयाकरपद्धत्याम्॥ कृत्वा मन्त्रतनुं स्मरेत् गुरुपदं देवीं कलां चिन्मयीं पश्चाद् वात्रितयं हृदासनहृतं दीपैर्युतं कज्जलैः। पुष्पादिष्वभिमन्त्रितञ्च निविड़ं मन्मोहकध्वंसकं ये सञ्चिन्त्य पिबन्ति यान्ति खलु ते भुक्तिञ्च मुक्तिं पराम्॥

तन्त्रान्तरे च॥ सिन्दूरतिलकं भाले पाणौ च मदिरासवम्। कृत्वा पिबेद्गुरुं ध्यायंस्तथा देवीञ्च चिन्मयीम्। ततः पात्रमाधारोपरि संस्थाप्य पुनस्तेन क्रमेण परामृतं गृहीत्वा पात्रवन्दनं कुर्य्यात्। यथा॥ मद्यं मीनरसावहं यदि तया दातुञ्च पेयादिभिः किञ्चिच्चञ्चलरक्तपङ्कजदृशा तस्यै समावेदितम्। वामे स्वात्मविशुद्धिशुद्धिकमलं पाणौ विधायात्मके वन्दे पात्रमहं द्वितीयमधुना नन्दैकसंवर्द्धनम्॥

ततः पूर्ववत् पात्रं स्वीकृत्य अन्यत् पात्रवन्दनं कुर्य्यात्॥ यथा॥ सर्वाम्नायकलाकलापकलितं कौतूहलद्योतनं चन्द्रोपेन्द्रमहेन्द्रशम्भुवरुणब्रह्मादिभिः सेवितम्। ध्यातं देवगणैः परं मुनिगणैर्मोक्षार्थिभिः सर्वदा वन्दे पात्रमहं तृतीयमधुना चात्मावबोधक्षमः॥ तृतीयपात्राभिवन्दनं कृत्वान्यत् पात्रवन्दनं कुर्य्यात्॥ यथा॥ हैमं मीनरसावहं हरिहरब्रह्मादिभिः सेवितं मुद्रामैथुनधर्मकर्मनिरतं चाराम्लतिक्ताश्रयम्। आचार्य्याष्टकसिद्धिभैरवकलामांसेन संशोधितं पायात् पञ्चमकारतत्त्वसहितं पात्रं चतुर्थं नमः॥ इति चतुर्थपात्रवन्दनं कृत्वान्यत् पात्रवन्दनं कुर्य्यात् यथा। आधारे भुजगाधिराजवलये पात्रं महीमण्डलं मद्यं सप्तसमुद्रवारिपिशितं चाष्टौ च दिग्दन्तिनः। सोऽहञ्चैव विभावयन् प्रतिदिनं तारागणैरच्चितोऽप्यादित्यप्रमुखैः सुरासुरगणैराज्ञाकरैः किङ्करैः॥ इति पञ्चमं पात्रं स्वीकुर्य्यात्। ततो यावद्दृष्ट्यादिकं न चलति तावत् पानादिकं कार्य्यम्।

अथास्य प्रमाणं यथा॥ रुद्रजामले॥ साधकेभ्यश्च शक्तिभ्यो दद्यान्निर्म्माल्यचन्दनम्। सामयिकैः समं कुर्य्याद्देवि! पानादिभक्षणम्॥ अन्यत्रापि। निर्विघ्नेचक्ररूपेण पंक्त्याकारेण वा यथा। शक्तियुक्तो वसेद्वापि युग्मयुग्मविधानतः। शिवशक्तिधिया सर्वं चक्रमध्ये समर्पयेत्॥ तन्त्रान्तरे च॥ ततः पुष्पं समादाय गुरोः पात्रे निवेदयेत्। गुरवे च निवेद्याथ शक्त्यै दत्त्वा स्वयं हरेत्॥ भावचूड़ामणौ च॥ साक्षाद् यदि गुरुर्न स्यात्तदा तोये विसर्जयेत्॥

अथ पानपात्रपरिमाणं यथा कुलसारे॥ नयनाग्निवाणसङ्ख्याकर्षैस्तु परमेश्वरि!। हेतुपात्रं प्रकर्त्तव्यमित्युक्तं कुलसाधने। इतोऽप्यधिकपात्रन्तु न कर्त्तव्यञ्च साधकैः।

कर्षं लौकिकतोलकमित्यर्थः। तदुक्तं कुलोत्तमे॥ गुञ्जा द्वादशमाषः स्यात्तदष्टौ कर्ष उच्यते॥ अथोत्तरतन्त्रे॥ अनुज्ञां पुरतो लब्ध्वा गृह्णामीति स्वयं वदेत्। जुषस्वेत्यभ्यनुज्ञातो गुरुणा वा कुलीनकैः। गृह्णीयाच्च स्वयं सिद्धो बद्धपद्मासनः सुधीः॥

कुलार्णवे॥ एकासने निविष्टा ये भुञ्जीरंश्चैव भाजने। एकपात्रे पिबन्त्येवं ते यान्ति नरकाधमे। एकपात्रमिति सर्वैं र्मिलित्वा नैकपात्रे पिबेत्। न तु प्रतिवारं द्रव्यपाने भिन्नभिन्नपात्रं कार्य्यम् अनुष्ठानलक्षणापत्तेः सम्प्रदायविरोधाच्च वचनान्तरदर्शनाच्च॥ स्वशक्तिं वीरशक्तिं वा दीक्षितां गुरुमग्रणीम्। पाययित्वा पिबेद्द्रव्यमिति शास्त्रस्य निर्णयः। गुरुशक्तियुतानाञ्च गुरुज्येष्ठकनिष्ठयोः। उच्छिष्टं भक्षयेत् स्त्रीणां ताभ्यो नोच्छिष्टमर्पयेत्। चक्रमध्ये च नियतं नान्यथा पतनं भवेत्। कनिष्ठानां स्वशिष्याणां दद्यात् स्वोच्छिष्टमेव हि। दद्यात् स्नेहेन योऽन्येभ्यः स भवेदापदां पदम्॥ अन्यत्रापि॥ शक्त्युच्छिष्टं पिबेद्द्रव्यं वीरोच्छिष्टञ्च चर्वणम्। शक्तिवीरप्रसादेन किं न सिध्यति भूतले॥

चक्रेश्वरेण स्वशक्त्युच्छिष्टमपि पेयम्। तत्प्रमाणन्तु॥ शक्त्युच्छिष्टमविचार्य्य पिबेच्चक्रेश्वरो यदि। आकल्पं नरकं भुक्त्वा विष्ठायां जायते क्रिमिरिति। अविचार्य्येति द्रव्यमभिषिक्ता नाभिषिक्ता वेति विचारमकृत्वेति तु कौलावलीकारः॥ पीत्वा पीत्वा पुनः पीत्वा पुनः पतति भूतले। उत्थाय च पुनः पीत्वा पुनर्जन्म न विद्यते। इदञ्च वचनं ध्यानजपाद्यवसरविषयम्। न तु पशुसंसर्गविषयकञ्च। प्रकटे सिद्धिहानिः स्यादित्यादिश्रवणात्। यावन्न चलते दृष्टिर्यावन्न

चलते मनः। तावत् पानं प्रकर्त्तव्यं पशुपानमतः परम्। इतिवचनेन ध्यानाद्यपेक्षितत्वाच्च॥

ततः शान्तिस्तोत्रं पठेत्॥ तदुक्तं डामरे॥ पीत्वा स्वामिजनैः सार्द्धं शान्तिस्तोत्रं ततः पठेत्। नश्यन्तु प्रेतकुष्माण्डा नश्यन्तु दूषका नराः। साधकानां शिवाः सन्तु आम्नायपरिपालिनाम्। जयन्ति मातरः सर्वा जयन्ति योगिनीगणाः। जयन्ति सिद्धिडाकिन्यो जयन्ति गुरुपंक्तयः। जयन्ति सिद्धिडाकिन्यो जयन्ति गुरवः सदा। जयन्ति साधकाः सर्वे विशुद्धाः कौलिकाश्च ये। समयाचारसम्पन्ना जयन्ति पूजका नराः। नन्दन्तु अणिमासिद्धा नन्दन्तु कुलपालकाः। इन्द्राद्या देवताः सन्तु तृप्यन्तु वास्तुदेवताः। चन्द्रसूर्य्यादयो देवास्तृप्यन्तु मम भक्तितः। नक्षत्राणि ग्रहा योगाः करणा राशयश्च ये। सर्वे ते सुखिनो यान्तु सर्पादन्यास्तु पक्षिणः। पशवस्तुरगाश्चैव पर्वताः कन्दरा गुहाः। ऋषयो ब्राह्मणाः सर्वे शान्तिं कुर्वन्तु मे सदा। स्तुता मे विदिताः सन्तु सिद्धास्तिष्ठन्तु पूजकाः॥ ये ये पापधियः सुदूषणरता मन्निन्दकाः पूजने वेदाचारविमर्दनष्टहृदया भ्रष्टाश्च ये साधकाः। दृष्ट्वा चक्रमपूर्वमन्दहृदया ये कौलिका दूषकास्ते ते यान्तु विनाशमत्र समये श्रीभैरवस्याज्ञया॥ द्वेष्टारः साधकानाञ्च सदैवाम्नायदूषकाः। डाकिनीनां मुखे यान्तु तृप्तास्तत्पिशितैस्तु ते॥ ये वा शक्तिपरायणाः शिवपरा ये वैष्णवाः साधवः सर्वस्मादखिले सुराधिपमजं सेव्यं सुरैः सन्ततम्। शक्तिं विष्णुधिया शिवञ्च सुधियः श्रीकृष्णबुद्ध्या तु ये सेवन्ते त्रिपुरन्त्वभेदमतयो गच्छन्तु मोचन्तु ते॥ शत्रवो नाशमायान्तु मम निन्दाकराश्च ये। द्वेष्टारः साधकानाञ्च ते नश्यन्तु शिवाज्ञया। ततो यथाशक्ति विधिना शिवशक्तियोगं कृत्वा देवीपादे समा-

स्नानं समर्प्य श्रीपात्रमुत्तोल्य देव्या उपरि विभ्रामयित्वा पुनः संस्थाप्य संहारमुद्रया स्वहृदि समानीय श्रीदक्षिणकालिके! क्षमस्वेति विसृजेत्॥ ओं कालिकायैः नमः॥

अथानन्दस्तोत्रम्॥ मनोभुवो मङ्गलमूलमुद्रां सौन्दर्य्यलक्ष्मीं पुरिवेजयन्तीम्। श्रीसुन्दरीमिन्दुकलावतंसां सानन्दमानन्दमयीं स्मरामि॥ १॥ श्रीसुन्दरीपूजनतत्पराणां हालाभिरालोहितलोचनानाम्। अस्माकमानन्दितमानसानां माहेश्वराणां दिवसाः प्रयान्तु॥ २॥ विधाय धारां वदने सुरायाः श्रीकृष्णामभ्यर्च्य कुलक्रमेण। आस्वादयन्तः पिशितं मृगाचीमालिङ्ग्य मोक्षं सुधियो लभन्ते॥ ३॥ दिने दिने सिद्धिघटोऽस्तु पूर्णो दिने दिने तर्पणमस्तु देव्याः। दिने दिने सङ्कटतां द्वितीयां दिने दिने साधकसङ्गमोऽस्तु॥४॥ आस्वादयन्तः पिशितस्य खण्डमाकण्ठपूर्णं मदिरां पिबामः। वामेक्षणासङ्गममादधाना भुक्तिञ्च मुक्तिञ्च परां व्रजामः॥५॥ न स्वादुलाभः पिशितस्य यस्मिन् पश्चाच्चरी पूर्णरतिर्न यत्र। न यत्र सङ्गो मृगलोचनायास्तत्तद्दिनं दुर्दिनमेव मन्ये॥ ६॥ प्रवर्त्तकानां सहसाथ लक्ष्मीः प्रयाति देहं सुपदक्रमेण। श्रीसुन्दरीसाधकनिन्दकानां प्राणाधमानीह लयं प्रयान्ति॥ ७॥ अङ्गेषु कुष्ठादि गृहेष्वलक्ष्मीर्मूकत्वमास्ये भवनं श्मशानम्। श्रीसुन्दरीसाधकनिन्दकानामायुः क्षयं गच्छति तत्क्षणेन॥८॥ श्रीसुन्दरीसाधकपुङ्गवानां यथा यथा निन्दितमातनोति। जनः समं पुत्रकलत्रमित्रैस्तथा तथा नाशमुपैति शीघ्रम्॥९॥ हालां पिबन् दीक्षितमन्दिरेषु सुप्तन्निशायां गणिकागृहेषु। गृहे गृहे भोजनमेव कुर्वन् बम्भ्रम्यते साधकचक्रवर्त्ती॥ १०॥ अनन्तरं कालवशाच्च योऽहं सोऽहं भविष्यामि न मे विवादः। श्रीसुन्दरीं जन्मनि जन्मनि त्वां यज्ञैरवोऽहं जननीं स्मरामि॥११

विकल्पवाटीतटसन्निविष्टे प्रवर्त्तमानाः पशवो वराकाः। प्रविश्य मोहाम्बुनिधावगाधे भ्रमन्त्यनापादितकौलमार्गाः ॥ १२ ॥ नान्यं विलोकेत च वान्यमीहे नान्यं स्मरन्नापरमाश्रयामि। कदापि नाहं परमात्मरूपां श्रीसुन्दरीं चेतसि विस्मरामि ॥ १३ ॥ विलोक्य सिन्दूरमयं सुधाभिः श्रीचक्रराजं निभि क्रमृप्रवन्तः। श्रीसुन्दरीं चेतसि चिन्तयन्तो हेलाविलोकैर्वशयन्ति लोकान् ॥ १४ ॥ उन्मूलनं पातकभूरुहाणामुन्मादनं चित्तकुतूहलानाम्। आकर्षणं पङ्करुहेक्षणानामैरेयपानं वयमाचरामः ॥ १५ ॥ वाराणसीजह्नुसुताप्रयागकेदारतीर्थानि विलोकितानि। तेनैव मन्ये जगतो व्रतानि श्रीसुन्दरीचिन्तनमेव यस्य ॥ १६ ॥ वामे चन्द्रमुखी सुखे च मधुरं पात्रं कराम्भोरुहे मूर्ध्नि श्रीगुरुचिन्तनं भगवतीध्यानास्पदं मानसे। जिह्वायां जपसाधनं परिणतिः कौलाङ्गनाचिन्तनं यत् पात्रं नियतं पिबेत्तदमृतं भक्तिश्च मुक्तिप्रदम् ॥ १७ ॥ वामे रामा रमणकुशला दक्षिणे पानपात्रं चाग्रे न्यस्तं मरिचसहितं शूकरस्योष्णमांसम्। स्कन्धे वीणा ललितसुभगा सद्गुरूणां प्रपञ्चः कौलो धर्मः परमगहनो योगिनामप्यगम्यः ॥ १८ ॥ यत्रास्ति भोगो न च तत्र मोक्षो यत्रास्ति मोक्षो न च तत्र भोगः। श्रीसुन्दरीपूजनतत्पराणां भोगश्च मोक्षश्च करस्थ एव ॥ १९ ॥ एकेन शुष्कचणकेन घटं पिबामि कुम्भं पिबामि सहसा लवणाद्रकेण। आस्वादयामि यदि रोहितमुण्डखण्डं गङ्गां पिबामि यमुनां सह सागरेण ॥ २० ॥ करे पात्रं मुखे स्तोत्रमानन्दो हृदयाम्बुजे। मूर्ध्नि श्रीनाथपादस्य स्मरणं किमतः परम् ॥ ॥ २१ ॥ पीत्वा मद्यं पठेत् स्तोत्रं साधकः कुलभैरवः। कुलस्त्रीसङ्गनिरतः कुलकार्य्यं समाचरेत् ॥ २२ ॥ अलिपिशितपुरन्ध्रीयागपूजारतोऽहं बहुविधकुलमार्गारम्भसम्भावितोऽ-

ह्रम्। गुरुचरणरतोऽहं भैरवीसाश्रितोऽहं पशुजनविरतोऽहं भैरवोऽहं शिवोऽहम्॥ २३॥ इति कुलार्णवे आनन्दस्तोत्रं समाप्तम्॥

अथानन्दोल्लासः॥ कुलार्णवे पञ्चमखण्डे सप्तमोल्लासे॥ आरम्भस्तरुणश्चैव यौवनं।प्रौढ़ एव च। तदन्ते चोन्मनाश्चैव तत्त्वोल्लासस्ततः परम्। समाधिरिति विज्ञेयस्तत्त्वोल्लासस्तु सप्तमः। तत्त्वत्रयं स्यादारम्भः कथितं कुलनायिके!। कथितस्तरुणोल्लासो ह्यरुणं मुखमम्बिके!। यौवनं मनसः सम्यगुल्लासः कथितः प्रिये!। स्खलनं दृङ्मनोवाचां प्रौढ़मित्यभिधीयते। समुल्लासपरे चक्रे य इच्छेत् पात्रमेलनम्। आदौ प्रौढ़समुल्लासं नैव कुर्य्यात् कदाचन॥ तथा॥ प्रौढ़ोल्लासमधिकृत्य॥ तदारूढ़ेषु वीरेषु कार्य्याकार्य्यं न विद्यते। इच्छैव शास्त्रसम्पत्तिरित्याज्ञा परमेश्वरि!। तत्र यद्यत् कृतं कर्म शुभं वा यदि वाऽशुभम्। तत् सर्वं देवताप्रीत्यै जायते सुरसुन्दरि!। जल्पो जपफलं तन्द्रा समाधिरभिधीयते। विक्रिया पूजनं देवि! छर्दनं भैरवो बलिः। मुक्तिः स्याच्छक्तिसंयोगात् स्तोत्रं तत्कालभाषणम्। न्यासोऽवयवसंस्पर्शः कण्डूतिर्हवनक्रिया। वीक्षणं ध्यानमीशानि! शयनं वन्दनं भवेत्। तत्त्वन्यासे कृता नाना या चेष्टा सा च तत्क्रिया। कार्य्याकार्य्यविचारन्तु यः करोति स पातकी। एतच्चक्रगता वीरा विज्ञेयाः परयोगिनः। येनाप्नुवन्ति मनुजाः साक्षाद्भैरवरूपताम्। सम्मोदकपरानन्दतर्पणं ज्ञानवर्त्तनम्। वेणुवीणादिवाद्यञ्च कवितारचनादिकम्। रोदनं भाषसम्पातः समुत्थानं विजृम्भणम्। गमनं विक्रिया देवि! योग इत्यभिधीयते। चक्रेऽस्मिन् योगिनीवीरयोगिन्यो मदमन्थराः। समाचरन्ति देवेशि! यथोल्लासं समागतम्॥ शनैः पृच्छन्ति पार्श्वस्थानाविस्मृत्यात्मवीचि-

तम्। निधाय वदने पात्रं निर्वाणा निवसन्ति च। मत्ता स्वपुरुषं मत्वा कान्तान्यमवलम्बते॥ तथैव पुरुषस्यापि प्रौढ़ोऽन्तोल्लाससंयुतः। पुरुषः पुरुषं मोहादालिङ्गत्यङ्गनाजनम्। पृच्छन्ति स्वपतिं मुग्धा कस्त्वं का त्वमिहागता। किं कार्य्यं वयमायाताः किमर्थमिह संस्थिताः। उद्यानं किमिदं हन्त ! गृहं किं वागतं किमु ?। मुखे सम्पूर्य्य मदिरां पाययन्ति स्त्रियो नरान्। उपदंशमुखे क्षिप्त्वा निक्षिपन्ति प्रियानने। गृह्णन्त्यन्यस्य पात्राणि व्यञ्जनानि च शाम्भवि !। धृत्वा शिरसि नृत्यन्ति मद्यभाण्डानि योगिनः। अज्ञानात् करतालान्तमस्पष्टाक्षरगीतकम्। प्रस्खलत्पदविन्यासं नृत्यन्ति कुलशक्तयः। योगिनो मदमत्ताश्च पतन्ति प्रमदोरसि। मदाकुलाश्च योगिन्यः पतन्ति पुरुषोपरि। मनोरथसुखं पूर्णं कुर्वन्ति च परस्परम्। इत्यादिविविधाश्चेष्टाः कुर्वन्ति कुलनायिके !। विकृतिं मनसो हित्वा यदुल्लासः प्रवर्त्तते। मदा तु देवताभावं भजन्ते योगिपुङ्गवाः। कौलिकान् भैरवावेशान् यो वा निन्दति मूढधीः। तस्याशयस्य सन्देहो योगिन्यः कुलनायिकाः। न निन्देन्न हसेद्वापि चक्रमध्ये मदाकुलान्। एतच्चक्रगतां वार्त्तां वहिर्नैव प्रकाशयेत्। तेभ्यश्च भोजनं कुर्य्यात् नाहितञ्च समाचरेत्। भक्त्या संरक्षयेदेतान् गोपयेच्च प्रयत्नतः। चक्रे मदाकुलान् दृष्ट्वा चिन्तयेद्देवताधिया। मोदते वन्दते भक्त्या स गच्छेद् योगिनीपदम्। पश्येदेवंविधं चक्रं यो भक्त्या कौलिकः प्रिये !। व्रततीर्थतपोदानयज्ञकोटिफलं लभेत्। उन्मादात् पतनोत्थानात् मूर्च्छना च मुहुर्मुहुः। उन्मत्तचेव उल्लासि प्रष्ठे वीरसमन्विते। चिरं सन्निदधाते तौ यौ चित्तः परात्परौ। परं ब्रह्मात्मसंस्थानकाङ्क्षिण्य कुलनायिके !। देहेन्द्रियाणां मनसश्चानवस्था त्रिग-

द्यते। समवस्थाभिधा तस्मिन् तत्त्वोल्लासे समं प्रिये!। परमन्त्रस्वरूपोऽसौ जायते मूर्च्छना परा। मूर्च्छनासन्निकर्षोऽपि न्यूनं मुक्तेः परं विदुः ८ अन्तर्लक्ष्यो वहिर्दृष्टिर्निमेषोन्मेषवर्जितः। एषा च शाम्भवी मुद्रा सर्वतन्त्रेषु गोपिता। एषा च खेचरी मुद्रा शिवस्य समवाहिनी। सर्वोत्तीर्णः सदा हन्त्रा सागरस्य समाकृतिः। अनयोल्लासिनी वीरा शिव एव न संशयः। न किञ्चिदपि जानन्ति आत्मध्यानपरायणाः। तदा मत्परमं सौख्यमिति वक्तुं न शक्यते। स्वयमेवानुभवति शर्कराक्षीरपानवत्। ईदृशं तादृशं सौख्यमिति वक्तुं न शक्यते। दृश्यते कुलकादेश्च तद्ब्रह्मध्यानमुत्तमम्। यत् सुखं विद्यते ध्याने देहादेशकरं परम्। कथितुं नैव शक्नोमि प्रबुद्धस्तु समाहितः। ब्रह्मध्यानामृतानन्दपराः सुकृतिनो नराः। चयोऽप्यन्तर्हिते तस्मिन् मोचयन्ति हतप्रभाः। सप्तमोल्लासयुक्तानां तद्भक्तानां महाफलम्। अष्टौ त्रिकालज्ञानोत्थाः प्रत्ययाश्च कुलेश्वरि!। अष्टावस्थाश्च कम्पाद्या जायन्ते नात्र संशयः। बहुनात्र किमुक्तेन अणिमाद्यष्टसिद्धयः। प्रतीहारीपदं प्राप्ताः सेवन्ते मुनितां चिरम्। ये गुणाः परमेशस्य पञ्चतत्त्वतनोः शुभाः। ते गुणाः कुलतत्त्वज्ञे! तत्त्वज्ञानां समाहृताः। आरम्भः स्तवनोल्लासो यौवनं प्रौढ़मेव च। नन्दन्ति योगादित्युक्तयोन्मनाः स्वप्न उच्यते। अनवस्था सुषुप्तिः स्यादवस्थात्रयसंयुतात्। सप्तोल्लासं यो हि वेत्ति स मुक्तः स च कौलिकः। प्रवृत्ते भैरवीचक्रे सर्वे वर्णा द्विजातयः। निवृत्ते भैरवीचक्रे सर्वे वर्णाः पृथक् पृथक्। स्त्री वाथ पुरुषः षण्डश्चाण्डालो वा द्विजातयः। चक्रमध्ये न भेदोऽस्ति सर्वे देवसमाः प्रिये!। नगरीनिर्झराद्यम्बु गङ्गां प्राप्य यथैकताम्। याति श्रीचक्रमध्येषु चैकत्वं मानवास्तथा। चौरेण

सहितं तोयं क्षीरमेव यथा भवेत्। तथा श्रीचक्रमध्ये तु जातिभेदो न विद्यते। स्वर्गादिपुण्यलोकेषु देवादन्यो यथा न हि। तथैव चक्रमध्ये तु देवताः सर्वमानवाः। जातिभेदो न चक्रेऽस्मिन् सर्वे शिवसमाः स्मृताः। वेदोपनिषदमेवं हि सर्वं ब्रह्मेति चाब्रवीत्। बहुनात्र किमुक्तेन चक्रमध्ये कुलेश्वरि!। मद्रूपाः पुरुषाः सर्वे त्वद्रूपा योषितः प्रिये!। चक्रमध्ये तु मूढ़ात्मा जातिभेदं करोति यः। तं भक्षयन्ति योगिन्यः शपन्ति कुलनायिके!। स्त्रीणामन्यतमं स्थानं पुंसामन्यतमं पृथक्। अथवा मिथुनं कृत्वा क्रमात्तमुपवेशयेत्। पुंस्त्वाकारेण वा सम्यक् चक्राकारेण वा प्रिये!। शिवशक्तिधिया सर्वांश्चक्रमध्ये समर्चयेत्। अविभक्तौ यथाचारौ लक्ष्मीनारायणौ प्रिये!। यथा वाणीसदानन्दौ तथा वीरः सशक्तिकः। मद्यकुम्भसहस्रैश्च मांसभारशतैरपि। न तुष्यामि वरारोहे! भगलिङ्गामृतं विना। न चक्राङ्कं न पद्माङ्कं न वज्राङ्कमिदं जगत्। लिङ्गाङ्कञ्च भगाङ्कञ्च तस्माच्छक्तिशिवात्मकम्। शिवशक्त्यात्मसंयोगो यस्मिन् काले प्रजायते। स सन्ध्याकुलनिष्ठानां समाधिः स विधीयते। कामुको न स्त्रियं गच्छेदनिच्छन्तीमदीक्षिताम्। सद्यः संस्कारसंशुद्धां विहितां तां व्रजेत् स्त्रियम्॥ इति तत्त्वत्रयोल्लासपानभेदाभिचोदितम्। समासेन कुलेशानि! किम्भूयः श्रोतुमिच्छसि॥ इत्यानन्दोल्लासः॥

अथ पञ्चचक्रानुष्ठानम्॥ यथा निरुत्तरतन्त्रे दशमपटले॥ श्रीशिव उवाच॥ सर्वजात्युद्भवा शक्तिः योगिभिः पूज्यते सदा। यां यां पश्यति योगीन्द्रस्तां तामेव प्रपूजयेत्। वीरशक्तिर्विशेषेण शृणुष्व वरवर्णिनि!। पुरश्चर्य्या कृता वीरा प्रशस्ता वीरसाधने। पुरश्चर्य्याविहीनाश्चेत्र योज्याः कुल-

साधने!। योज्याश्चेत् सिद्धिहानिः स्याद्रौरवं नरकं व्रजेत्। वीरशक्तिं विना देवि! न कुर्य्यात् कुलसाधनम्। तदभावे हीनजातौ प्रशस्ता वीरसाधने। पञ्चचक्रे प्रशस्ता यास्ताः शृणुष्व वरानने!। चक्रं पञ्चविधं प्रोक्तं तत्र शक्तिं प्रपूजयेत्। राजचक्रं महाचक्रं देवचक्रं तृतीयकम्। वीरचक्रं चतुर्थञ्च पशुचक्रञ्च पञ्चमम्। पञ्चचक्रे यजेद्दिव्ये वीरश्च कुलसुन्दरि!। ब्रह्मचारी गृहस्थश्च पञ्चचक्रे प्रपूजयेत्। बलीयसि च देवेशि! शिवचक्रे प्रपूजयेत्। ब्रह्मचारी गृहस्थश्च वीरचक्रेण पूजयेत्। योगिभिः पूज्यते देवि! पूर्वचक्रेषु कामिनी॥ माता च भगिनी चैव दुहिता च स्नुषा तथा। गुरुपत्नी च पञ्चैता राजचक्रे प्रपूजयेत्। गौड़ी वाप्यथवा माध्वी सुरा शस्ता कुलेश्वरि!। शुद्धिश्छागोद्भवा शस्ता तृतीयोद्दालकस्तथा। मुद्रा गोधूमजा शस्ता स्वयम्भूकुसुमं तथा। कुण्डगोलोद्भवं द्रव्यमनुकल्पं नियोजयेत्। रक्तचन्दनं तथा श्वेतमनुकल्पञ्च चन्दनम्। वस्त्रालङ्कारभूषाद्यैर्गन्धमाल्यानुलेपनैः। पूजयेत् परया भक्त्या देवताभ्यो निवेदयेत्। भक्ष्यं नानाविधं द्रव्यं नानावस्त्रसमन्वितम्। आसनं शुद्धिसंयुक्तं ताभ्यो दद्यात् पुनः पुनः। प्रणम्य प्रजपेन्मन्त्रं दृष्ट्वा तास्व सहस्रकम्। अङ्गं नैव स्पृशेत्तासां स्पृशेच्च नरकं व्रजेत्। मधुमत्ता यदा तास्तु न स्वपन्ति सुसम्पदः। तत्तदेवं भवेत् सर्वं सत्यं सत्यं न संशयः। षष्टिवर्षसहस्राणि ब्रह्मलोके महीयते। माता भगिनी स्नुषा कन्या वीरपत्नी कुलेश्वरि!। महाचक्रे यजेदेताः पञ्चशक्तीः पुनः पुनः। द्रव्यदाने तु सम्पूज्या न शक्तौ शिवयोजनम्। योजने सिद्धिहानिः स्याद्रौरवं नरकं व्रजेत्। महाव्याधिर्भवेद्देवि! धनहानिः प्रजायते। सदैव दुःखमाप्नोति सर्वं तस्य विनश्यति। आद्यञ्च गौड़िकं प्रोक्तं द्वितीयं कुक्कुटोद्भवम्। तृतीयं रोहितं प्रोक्तं

चतुर्थं शशसम्भवम् । करवीरोद्भवं पुष्पं चन्दनं रक्तचन्दनम् । पूजयेत् परया भक्त्या शिवलोके महीयते । षष्टिवर्षसहस्राणि तत्र देवीं प्रपूजयेत् । अष्टम्याञ्च चतुर्दश्याममायाञ्च कुजेऽहनि । राजचक्रे महाचक्रे भक्त्या शक्तिं प्रपूजयेत् । शुक्लपक्षे गुरोर्वारे चतुर्थीसप्तमीतिथौ । महाचक्रे यजेद्भक्त्या सर्वकामार्थसिद्धये । देवचक्रं प्रवक्ष्यामि शृणुष्व वरवर्णिनि ! । विदग्धाः सर्वजातीनां पञ्च कन्याः प्रपूजयेत् । गौड़िकं फलदं रम्यं द्वितीयं पक्षिसम्भवम् । तृतीयं शालमत्स्यन्तु चतुर्थं धान्यसम्भवम् । सुगन्धि सर्वपुष्पञ्च देवचक्रे नियोजयेत् । देवचक्रे यजेच्छक्तिं देवचक्रे महीयते । षष्टिवर्षसहस्राणि देवकन्यां प्रपूजयेत् । पञ्चकन्या यजेच्चक्रे नातिरिक्ताः कदाचन । लोभाद्वा कामतो वापि छलाद्वा वरवर्णिनि ! । यदि स्यात् सङ्गमस्तासां रौरवं नरकं व्रजेत् । अष्टम्याञ्च चतुर्दश्यां पक्षयोरुभयोरपि । पितृभूमिं समागम्य वीरचक्रे प्रपूजयेत् । दिव्यवीरान्वितो मन्त्री यजेत् शक्तिं बलीयसीम् ॥ श्रीदेव्युवाच ॥ मात्रादयः पञ्चकन्या यतीनाञ्च कथं प्रभो ! ॥ श्रीशिव उवाच ॥ मात्रादयः पञ्चकन्या हीनजाता यतः प्रिये ! । चतुर्वर्णोद्भवां वेश्यां विशेषेण बलीयसीम् । भूमीन्द्रकन्यका माता दुहिता रजकीसुता । श्वपची च स्वसा ज्ञेया कापाली च स्नुषा स्मृता । योगिनी निजशक्तिः स्यात् पञ्चकन्याः प्रकीर्त्तिताः । गुरोः समीपे कर्त्तव्यमथवा भ्रातृभिः सह । सिद्धमन्त्रो भवेद्वीरो न वीरो मद्यपानतः । अभिषिक्तो भवेद्वीरः अभिषिक्ता च कौलिकी । एवञ्च वीरशक्तिञ्च वीरचक्रे नियोजयेत् । क्रमसङ्केतकञ्चैव पूजासङ्केतमेव च । मन्त्रसङ्केतकञ्चैव यन्त्रसङ्केतकन्तथा । लिखनं मन्त्रयन्त्राणां सङ्केतं गुरुमार्गतः । सङ्केतजं विना वीरं यदि चक्रे नियोजयेत् । निष्फलं पूजनं देवि !

दुःखं तस्य पदे पदे। सङ्केतहीनो यो वीरो नाभिषिक्तो गुरु-क्रमात्। कूपे भ्रष्टः स पापिष्ठस्तं त्यजेद्वीरचक्रके। नाभि-षिक्तं वामचक्रे नाभिषिक्तां च कौलिकीम्। निवेश्य रौरवं याति सत्यं सत्यं न संशयः। एवं क्रमं विना देवि! वीर-चक्रे वसेद्यदि। सिद्धिहानिः सिद्धिहानी रौरवं नरकं व्रजेत्। सर्वभक्ष्यं सर्वशुद्धिं सर्वमीनं कुलेश्वरि!। सर्वमुद्रां सर्वपुष्पं स्वयम्भूकुसुमं तथा॥ कुण्डगोलोद्भवं द्रव्यं नानारससम-न्वितम्। प्रदद्यात् साधकश्रेष्ठो वीरचक्रे पुनः पुनः। स्वशक्तिं पूजयेत्तत्र तदुच्छिष्टं पिबेत् प्रिये!। चर्व्यं स्वज्येष्ठतो ग्राह्यं कनिष्ठाय निवेदयेत्। एकासने न भुञ्जीत भोजनं नैक-भाजने। परस्परमुपस्पर्शं न कर्त्तव्यं कदाचन। एवं क्रमेण देवेशि०! वीरचक्रे समाचरेत्। आनीय हीनजां देवीं शक्ति-मन्त्रेण शोधयेत्। संशोध्य हीनजां देवीं वीरशक्तिं निवे-दयेत्। मधुमत्ताय वीराय यो दद्याद्धीनजां शुभाम्। वीराय शक्तिदानन्तु वीरचक्रे विधीयते। चक्रभिन्ने चरेद्दानं रौरवं नरकं व्रजेत्। घातयेद्गोपयेद्वापि न निन्देन्न निरीक्षयेत्। कामं क्रोधञ्च मात्सर्य्यं विकारं लोभमेव च। कुलनिन्दां दुरा-लापं गोपयेद्दुष्टकं प्रिये!। मन्त्रं मुद्रामक्षमालां योनिञ्च वीरसङ्गमम्। मण्डलञ्च घटं पीठं सिद्धद्रव्याणि गोपयेत्। पण्डितं वीरसन्तानं चेत्रं देवीञ्च योगिनीम्। कुलाचार-गुरुं दूतीं मनसापि न निन्दयेत्। देवीं गुरुं सुधां विद्यां श्रेष्ठां शक्तिं क्रियात्मजाम्। योगिनीं भैरवीतत्त्वमात्मतत्त्वं प्रपूजयेत्। विमाता दुहिता भग्नी स्नुषा पत्नी च पञ्चमी। पशुचक्रे यजेद्धीमान् पशुवत्तोषणञ्चरेत्। गन्धं पुष्पञ्च माल्यञ्च वस्त्राणि भूषणानि च। सिन्दूरागुरुकस्तूरीनानापुष्पाणि सुन्दरि!। भक्ष्यं नानाविधं द्रव्यं फलं नानाविधं प्रिये!।

एतद्द्रव्यगणं यस्तु भक्त्या ताभ्यो निवेदयेत्। षष्टिवर्ष-सहस्राणि क्षितौ राजा भवेद्ध्रुवम्। वीरचक्रे तदा सिद्धि-र्भवत्येव न संशयः॥

अथ कुलशक्तयः॥ रेवतीतन्त्रे तृतीयपटले॥ शक्तयः परमेशानि! विदग्धाः सर्वयोषितः। नटी कापालिकी वेश्या मालिनी कुङ्कुमालिनी। चण्डाली च कुलाली च रजकी नापिताङ्गना। गोपिनी योगिनी शुद्धा ब्राह्मणी राजकन्यका। कोचाङ्गना च देवेशि! तथैव शङ्खकारिणी। एताः षड्-विंशतिः कन्या देवानामपि दुर्लभाः। दैवज्ञा व्याधवासा च तथा मांसापहारिणी। बौद्धा च यवनी देवि! तथा रसप-सारिणी। वेश्या चतुर्विधा प्रोक्ता द्विविधा कुङ्कुमालिनी। धीवरी द्विविधा प्रोक्ता तथैव गणिकाङ्गना। कुम्भकारी द्विधा प्रोक्ता तथैव गोपिनी स्मृता। वातवैद्याङ्गना देवि! यवनी द्विविधा स्मृता। बौद्धकन्या त्रिधा देवि! तथा कोचाङ्गना प्रिये!। पूर्वोक्ताभिः सहैकत्र चतुःषष्टिश्च शक्तयः॥

गुप्तसाधनतन्त्रे चतुर्थपटले॥ शिव उवाच॥ शृणु पार्वति! वक्ष्यामि अतिगुह्यतरं महत्। प्रकाशात् सिद्धिहानिः स्यात्त-स्माद् यत्नेन गोपयेत्। स्वशक्तिं परशक्तिं वा दीक्षितां यौव-नान्विताम्। विदग्धां शोभनां शुद्धां घृणालज्जाविवर्जिताम्। आनीय कुलसाधनं कुर्य्यादित्युत्तरेणान्वयः। तत्र व्यवस्था-माह निरुत्तरतन्त्रे अष्टमपटले॥ स्वशक्तिसिद्धिमादाय सिद्धमन्त्रस्ततो भवेत्। सिद्धमन्त्रः कुलाचारे परयोषां प्रपू-जयेत्। सिद्धमन्त्रो यजेत् शक्तिं कायेन मनसापि वा। पर-योषां विशेषेण परयोषां प्रपूजयेत्। सिद्धमन्त्रप्रकारस्तु नवमपटले॥ आनीय च कुलं रम्यं कुलशक्तिं कुलार्चने। स्वचक्रं विविधं देवि! शक्तिभाले लिखेत्ततः। ततः काम-

कलांदेवीं वीरकोणे लिखेत्ततः। तन्मध्ये देवमन्त्रञ्च विहितं कामलाञ्छितम्। तत्र देवीं समावाह्य ध्यात्वैव च प्रपूजयेत्। ततो लक्षञ्च सञ्जप्य स्थिरधीः कुलसाधकः। ततस्तच्छक्ति-कर्णे च ऋषिच्छन्दःसमन्वितम्। मूलमन्त्रं त्रिरावृत्त्या कथयेद् वामकर्णके। अद्यप्रभृति शक्ति! त्वं कुलदेवार्चनं कुरु॥ ततः शक्तिः पठति। गुरोराज्ञां समादाय घृणालज्जाविवर्जिता। शिवोक्तविधिना देव! करिष्यामि कुलार्च्चनम्। त्राहि नाथ! कुलाचारकामिनीकामनायक!। त्वत्पादाम्भोरुहच्छायां देहि मे कुलवर्त्मनि। गते च प्रथमे यामि स्वकुलं कुलकोपरि। वामभागे समानीय रक्तवस्त्रसमन्वितम्॥ नानागन्ध-समायुक्तं नानारत्नसमन्वितम्। ललाटे मन्त्रमालिख्य मध्ये नामविचर्चितम्। ताम्बूलपूरितमुखस्ताम्बूलारुणलोचनः। कुलाकुलजपं कृत्वा ध्रुवमायाति तत्क्षणात्। एवमाकर्षिते मन्त्रे सिद्धमन्त्रः कुलेश्वरि!। तावत् प्रयोगः कर्त्तव्यो यावत् सिद्धिर्न जायते। सिद्धमन्त्रः कुलाचारे कुलयोषां प्रपूजयेत् इति॥ शक्त्यङ्गे जपस्थानमाह॥ समयाचारतन्त्रे॥ अथे-दानीं प्रवक्ष्यामि जपार्थं पीठमुत्तमम्। पूर्णागरिश्च प्रथम-मुड्डीयानां द्वितीयकम्। जालन्धरं तृतीयञ्च कामरूपं चतु-र्थकम्। कृते पूर्णगिरिश्चैव त्रेतायाञ्च द्वितीयकः। जालन्धरं द्वापरे तु कामरूपं कलौ युगे। चतुःपीठानि पीठानि शक्ति-देहेषु यानि च। तानि चत्वारि वक्ष्यामि गुह्याद्गुह्यतराणि च। शक्तेः सर्वशरीरं यत् पीठं पूर्णगिरिः स्मृतम्। तस्याः शिरश्च सुभगे! उड्डीयानां प्रकीर्त्तितम्। स्तनौ जालन्धरं ज्ञेयं कामरूपं भगस्तथा। सर्वेषु कामपीठन्तु देवानामपि दुर्ल्लभम्। एषु पीठेषु च स्थित्वा यं यं मन्त्रं जपेत् प्रिये!। तत्तत्फलमवाप्नोति देवताशु प्रसीदति॥ तथा॥ नानाशक्त्या

सह्लाबापं ये च कुर्वन्ति साधकाः॥ ते शीघ्रकालात् सुभगे! फलं प्राप्स्यन्ति मानवाः। तामानीय साधकेन्द्रो दद्यात् पाद्यादिकं शुभम्। पञ्चाचारेण तां शक्तिं पूजयित्वा यथाविधि। शतं शीर्षे शतं भाले शतं सिन्दूरमण्डले। शतं मुखे शतं कण्ठे शतं हृदयमण्डले। शतद्वन्द्वं स्तनद्वन्द्वे शतं नाभौ जपेत् सुधीः। योनिपीठे शतं जप्ता साधकः स्थिरमानसः। एवं सहस्रं सञ्जप्य देवीरूपां विचिन्तयेत्। शिवशक्तिस्वरूपाञ्च चिन्तयेत् साधकोत्तमः। शिवमन्त्रेण देवेशि! स्वलिङ्गं पूजयेदथ। ताम्बूलं तन्मुखे दत्त्वा साधको हृष्टमानसः। तदनुज्ञां समादाय योनौ लिङ्गं विनिक्षिपेत्। ओं धर्म्माधर्म्महविर्दीप्त आत्माग्नौ मनसा स्रुचा। सुषुम्नावर्त्मना नित्यमक्षवृत्तिर्जुहोम्यहम्। स्वाहेत्यनेन मन्त्रेण हुनेत् सर्वसमृद्धये। ततो जपेत् सहस्रं वै शक्तियुक्तो भवेन्नरः। शतं वापि प्रजप्तव्यं ततो न्यूनं न कारयेत्। ततः पूर्णाहुतिं दद्यान्मन्त्रेणानेन साधकः। प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनाः स्रुचा। धर्म्माधर्म्मकलास्नेहपूर्णमग्नौ जुहोम्यहम्। स्वाहेत्यनेन मन्त्रेण पूर्णाहुतिं समाचरेत्। शुक्रोत्सारणकाले तु महादेव्यै निवेदयेत्। एवं कृते मन्त्रसिद्धिर्भवत्येव न संशयः। यं यं प्रार्थयते कामं तं तमाप्नोति निश्चितम्। रोगी रोगात् प्रमुच्येत धनेन च धनाधिपः। वायुतुल्यबलो लोके दुर्जयः शत्रुमर्दनः। कामतुल्यश्च नारीणां रिपूणां शमनोपमः। एतत्कल्पेन देवेशि! किं न सिध्यति भूतले। अष्टैश्वर्य्यमवाप्नोति स एव श्रीसदाशिवः॥

निरुत्तरतन्त्रे द्वादशपटलेऽपि॥ अथान्यत् सम्प्रवक्ष्यामि साधनं भुवि दुर्ल्लभम्। कृते येन लभेत् सिद्धिं देवानामपि दुर्ल्लभाम्। ललाटे शक्तिमन्त्रन्तु त्रिरावृत्त्या लिखेद्बुधः।

तन्मध्ये कामबीजञ्च विलिखेत् कामलाञ्छितम्। कामेन पुटितं कृत्वा पूजयेत् परमेश्वरीम्। सम्पूज्य कालिकां देवीं यन्त्रञ्च परिपूजयेत्। तत्त्वचिन्तापरो योगी जपेन्मन्त्रं निराकुलम्। संङ्गृह्य कुलपुष्पन्तु पूजयेच्च पुनः पुनः। सहस्रं तर्पयेत् पीठे यन्त्रप्रक्षालनोदकैः। एवं कृते लभेत् सिद्धिं सत्यं सत्यं न संशयः। अथान्यत् सम्प्रवक्ष्यामि पुरश्चरणमुत्तमम्। शतं भाले शतं केशे शतं सिन्दूरमण्डले। शतमेकं मुखाम्भोजे पुष्पवक्त्रे शतद्वयम्। शतद्वन्द्वं कुचद्वन्द्वे शतञ्च नाभिमण्डले। शतमेकं कुलागारे प्रजपेद्भक्तिभावतः। एवं दशशतं जप्त्वा कुलागारे ततो जपेत्। पूजयित्वा जपेन्मन्त्रं गजान्तकसहस्रकम्। ततस्तु तत्त्वयोगेन शतमष्टोत्तरं जपेत्। पूजनञ्च ततस्तत्र पुरश्चरणमुच्यते। अथान्यत् सम्प्रवक्ष्यामि कलागारस्य साधनम्। येन कृते कुलेशानि! सर्वपापक्षयो भवेत्। कुलागारे कुलाष्टम्यां कुलमाहूय पूजयेत्। तर्पणञ्च जपं होमं तत्तदक्षयतां व्रजेत्। कदलीतरुमूलञ्च द्विगुणं यदि दृश्यते। तत्र तु महती पूजा कर्त्तव्या वरवर्णिनि!॥ ततस्तु ब्रह्मवक्त्रेण होमं कुर्य्याद्विचक्षणः। होमं कृत्वा जपेन्मन्त्रं कोटीकोटीगुणं भवेत्। द्विगुणं रजनीमूलं संवीक्ष्य यो जपेन्मनुम्। स भवेत् सर्वसिद्धोशस्तस्य पुण्यं न गण्यते। रजनीं स्वेच्छयाहूय साधनं कुलभूषणम्। विपरीतं जपेन्मन्त्रं तस्य पुण्यं न गण्यते॥ रजन्याञ्च कुलागारे पूजने निपुणो यदि। त्वत्समा रजनीकान्ता कमला वाथ राधिका। त्रिषु लोकेषु सा धन्या ब्रह्मविष्णुशिवात्मिका। सिद्धविद्या महाविद्या सिद्धविद्याफलप्रदा। तस्याः प्रसादमात्रेण दुष्टमन्त्रोऽपि सिध्यति। तस्मात् सर्वप्रयत्नेन तामेव शरणं व्रजेत्। रजन्यां रजनीयोगं विहरेद् यदि साधकः। बलाद्वा पूजयेत्तत्र सर्वं

तन्निष्फलं भवेत्। येन तेन प्रकारेण रजनीतोषणञ्चरेत्। वाद्याद्वा क्रीड़नाद्वापि वस्त्राद्वा तोषयेत् सदा। यं यं भावं रजन्याश्च तं तं भावं प्रकल्पयेत्। अतिरिक्तः कृतो भावो रौरवं नरकं व्रजेत्। कलायाः सम्मतिं कृत्वा साधयेत् कुल-साधनम्। असम्मतकुलासङ्गात् सिद्धिहानिः प्रजायते। यो गच्छेद्रजनीगेहं कुलसाधनवर्जितः। स एव नरकं याति सत्यं सत्यं न संशयः। क्रोधाद्वा कामतो वापि द्वेषाद्वा वर-वर्णिनि!। न गच्छेद्रजनीगेहं गच्छेच्च नरकं व्रजेत्। अज्ञात्वा कुलसङ्केतं कुलमार्गं विशेद्यदि। स याति नरकं घोरं का कथा परजन्मनि॥

अथ शय्याशुद्धिः॥ ओं आः सुरेखे वज्ररेखे हुँ फट् स्वाहा। इत्यनेन शय्यायां त्रिकोणं विलिख्य ओं क्लीं आधारशक्तये कमलासनाय नमः। इति मनसा सम्पूज्य ओं क्लीं मृतकाय नमः फट् इति मन्त्रेण वामहस्तेन घातत्रयं दत्त्वा छोटि-काभिर्दशदिग्बन्धनं कृत्वा। ओं शय्ये! त्वं मृतरूपासि साध-नीयासि साधकैः। अतोऽत्र जप्यते मन्त्रो ह्यस्माकं सिद्धिदा भव॥ इति प्रार्थनां कृत्वा जपादिकं कुर्य्यात्॥

गुप्तसाधनतन्त्रे प्रथमपटले॥ पञ्चाचारेण देवेशि! कुल-शक्तिं प्रपूजयेत्। नटी कापालिकी वेश्या रजकी नापिता-ङ्गना। ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका। माला-कारस्य कन्या च नव कन्याः प्रकीर्त्तिताः। विशेषवैदग्ध्ययुताः सर्वा एव कुलाङ्गनाः। रूपयौवनसम्पन्ना शीलसौभाग्य-शालिनी। पूजनीया प्रयत्नेन ततः सिद्धिर्भवेद् ध्रुवम्॥

अत्र विशेषयति निरुत्तरतन्त्रे चतुर्दशपटले॥ नटी कापालिकी वेश्या रजकी नापिताङ्गना। योगिनी श्वपची शुण्डी भूमीन्द्रतनया तथा। गोपिनी मालाकारस्य आसां

कार्य्यविभेदतः। चतुर्वर्णोद्भवा रम्या कापाली सा प्रकीर्त्तिता॥ पूजाद्रव्यं समालोक्य वेश्या रमणमिच्छति। चतुर्वर्णोद्भवा रम्या सा वेश्या परिकीर्त्तिता॥ पूजाद्रव्यं समालोक्य सर्वतः कुरुते च या। पूजाद्रव्यं समालोक्य राजावस्थां प्रकाशयेत्। सर्ववर्णोद्भवा रम्या रजकी सा प्रकीर्त्तिता॥ पूजाद्रव्यं समालोक्य कुलजा वीरमाश्रयेत्। सन्त्यज्य पशुभर्त्तारं कर्मचाण्डालिनी स्मृता॥ विपरीतरता पत्यौ पात्रं या परिपृच्छति। सर्ववर्णोद्भवा रम्या सा शौण्डी परिकीर्त्तिता॥ सर्वदा यन्त्रसंस्कारो यस्याश्च परिजायते। सैव भूमीन्द्रजा रम्या सौरवर्णोद्भवा प्रिये!॥ आत्मानं गोपयेद् या च सर्वदा पशुसङ्कटे। सर्ववर्णोद्भवा रम्या गोपिनी सा प्रकीर्त्तिता॥ पूजाद्रव्यं समालोक्य या मालेव रता भवेत्। सर्ववर्णोद्भवा रम्या मालिनी सा प्रकीर्त्तिता॥

वेश्याया विशेषस्तु तत्रैव॥ गुप्तवेश्या महावेश्या कुलवेश्या महोदया। राजवेश्या देववेश्या ब्रह्मवेश्या च सप्तधा॥ कुलजा गुप्तवेश्या स्यात् निर्लज्जा मदनातुरा। पशुभर्त्राश्रिता लोके गुप्तवेश्या प्रकीर्त्तिता॥ कुलजा कुलवेश्या स्यात् महावेश्या प्रकीर्त्तिता। भगलिङ्गकलापीठे चुम्बयेच्च पुनः पुनः। एवंविधा कुलीना चेद् ब्रह्मवेश्या प्रकीर्त्तिता॥ दिव्यशक्तिर्वीरशक्तिस्तासां संज्ञा प्रकीर्त्तिता। चतुर्वर्णोद्भवानाञ्च संज्ञैताः परिभाषिताः। वेश्यावद्भ्रमते यस्मात् तस्माद्वेश्या प्रकीर्त्तिता॥ वर्णसङ्करतो जाता सर्ववेश्या प्रकीर्त्तिता॥ कुलमार्गे प्रवृत्ता या सा वेश्या मोक्षदायिनी॥ चुम्बनालिङ्गनं घातं रतिनिग्रहदर्शनम्। आमन्त्रणं त्रिसन्ध्यञ्च भगलिङ्गस्य कीर्त्तनम्। वेश्यानाञ्च जपाङ्गेन शङ्करेण पुरोदितम्। जपाङ्गेन विना वेश्या वर्जनीया कुलार्चने। जपाङ्गं प्रत्यहं कुर्य्यात् सा दिव्यैः सह मोदिता। निशायां

प्रजपेन्मन्त्रं स्वयम्भूशिवयोगतः। वेश्यानां जपमात्रन्तु पुर-श्चरणमुच्यते। विपरीतं जपेन्मन्त्रं सा काली नात्र संशयः। योषितां मन्त्रसिद्धिः स्यात् विपरीतरतौ प्रिये!। विपरीत-रतौ जप्त्वा निर्वाणपदवीं व्रजेत्। विपरीतरतौ जप्त्वा काली-वद्विहरेद्भुवि। विपरीतरतौ काली विपरीता च तारिणी। विपरीता च या वेश्या सा काली नात्र संशयः॥ योषिद्विद्या न सिध्यन्ति विपरीतरतिं विना। विपरीतरता वेश्या त्रिषु लोकेषु पूजिता॥ गाढ़मालिङ्गनं दत्त्वा पूजयित्वा पुनः पुनः। कटाक्षैर्दर्शयेद्यन्त्रं दक्षिणाकालिकेरिता। एवंविधा पुर-श्चर्य्या वेश्यायाश्च कुलेश्वरि!। एवंविधा भवेद्वेश्या न वेश्या कुलटा प्रिये!। कुलटासङ्गमादेव रौरवं नरकं व्रजेत्। वीर-शक्तिर्भवेद्वेश्या सा शस्ता कुलसाधने। पुरश्चर्य्याकृता वेश्या योजयेत् कुलसाधने॥ शिवलिङ्गगता साध्वी शिवलिङ्गगता सती। शिवलिङ्गगता वेश्या कीर्त्तिता सा पतिव्रता॥ योनिश्च जनिका माता लिङ्गश्च जनकः पिता। मातृभावं पितृभाव-मुभयोरपि चिन्तयेत्। लिङ्गरूपो महाकालो योनिरूपा च कालिका। तयोर्योगपरा धन्या तयोर्योगपरो महान्। स्वभैरवं विना वेश्या शिवपूजां करोति यः। रौरवे नरके घोरे वसे-दाभूतसंप्लवम्। स्वभैरवीं विना वीरो मनसान्यां न संस्मरेत्। स्मरणे नरकं याति महाव्याधिपरो भवेत्। नानाचाराश्रिता वेश्या पशुसङ्गगता च या। वर्जनीया प्रयत्नेन कुलसाधन-कर्म्मणि। योज्या चेत् सिद्धिहानिः स्यात् श्रेष्ठवेश्या कुला-र्च्चने। रोगः शोको भवेत्तस्या धनहानिः क्षणे क्षणे। तस्माद् सर्वप्रयत्नेन स्वशिवञ्च समाश्रयेत्। जपपूजादिकं वेश्या स्वशिवे परिकल्पयेत्। पुष्पिता काममापन्ना सदा रमणमिच्छुका। सर्वसिद्धिप्रदा वेश्या कालिकारूपधारिणी। पितृभूमिः समा-

ख्याता सदाशिवनिवासिनी। शिव एव नरो ज्ञेयो लिङ्गरूपधरो यतः। शिवस्थानं श्मशानं स्यात् श्मशानं कुलजं गुरुम्। अष्टम्याञ्च चतुर्दश्यां पक्षयोरुभयोरपि। श्मशानस्थेन यत्कार्य्यमवश्यं गुरु तद्भवेत्॥ तथा॥ मातृमुखे पितृमुखं जपेत् दत्त्वा सनातनीम्। सर्वपापविनिर्मुक्तो निर्वाणपदवीं व्रजेत्॥ परजन्मे गुप्तवेश्याप्यथवा कुलजा भवेत्। शुक्रोत्सारणकाले तु निर्वाणं विद्धि पार्वति!। तत्काले हि महाकालः कुलमार्गप्रवेशिनाम्। शुक्रोत्सारणकालन्तु ज्ञापयेन्मनसापि वा। अङ्गभङ्गक्रमेणैव कुलीनाय प्रकाशयेत्। शुक्रोत्सारणकालस्य ज्ञापनात् कालिका स्वयम्॥ जपाङ्गे कालिका देवि! महाकालं विमोहयेत्॥ कुलीना ब्रह्मवेश्या चेन्नाल्पस्य तपसः फलम्। बहूनां जन्मनामन्ते ब्रह्मवेश्या प्रजायते। त्वत्समा प्रकृतिः काचिद् यद्यस्ति भुवि मण्डले। न तथा त्वत्समा शक्तिस्त्रिषु लोकेषु विद्यते। सा चैव दक्षिणा काली मदनातुरविह्वला। वेदेभ्यो जायते कर्म्म कर्म्मणा बन्धनं भवेत्। वैदिकं कर्म्म सन्त्यज्य सुरतेषु सदा जपेत्। आगमोक्तपतिः शम्भुरागमोक्तपतिर्गुरुः। स पतिः कुलजायाश्च न पतिश्च विवाहितः। विवाहितपतित्यागे दूषणं न कुलार्च्चने। विवाहितपतिं नैव त्यजेद्वेदोक्तकर्म्मणि। आगमोक्तपतिस्त्राता आगमोक्तपतिः शिवः। सिद्धविद्या न सिध्यन्ति आगमोक्तपतिं विना। कुलजा गुरवे देवि! पतित्वे वरणञ्चरेत्। तदा सा गुप्तवेश्या स्यात् कुलजा च पतिं विना। गुप्तवेश्या भवेत् सैव कुलमार्गप्रवर्त्तिका। कुलमार्गप्रवृत्ता या सा मुक्ता नात्र संशयः। कुलजा गुरवे देवि! यदि न स्यात् पतीच्छुका। तस्याः शिवो महाकालः सत्यं सत्यं न संशयः। षोड़शाब्दा यदा सा स्यात् काली विक्रमतत्परा। तारा पञ्चदशाब्दे च

सुन्दर्य्यब्दे चतुर्दशी। त्रयोदशाब्दोन्मुखी सा द्वादशाब्दा च भैरवी। एकादशगुणोपेता ब्रह्मवेश्या कुलेश्वरि!। महासाध्वी समाख्याता त्रिषु लोकेषु दुर्लभा। स्वर्गे मर्त्त्ये च पाताले या या तिष्ठति चाङ्गना। सर्वासामपि भर्त्ता च दिव्यो वीरश्च साधकः। योगी दिव्यो यदा वीरः सर्वनारीपतिर्भवेत्। दिव्योऽपि वीरभावेन सर्वजात्युद्भवां यजेत्। गुप्तवेश्या महावेश्या अयोध्या मथुरा प्रिये!। या या च कुलवेश्या स्यान्मदोदरा च कालिका। राजवेश्या देववेश्या द्वारका परिकीर्त्तिता। काञ्ची च राजवेश्या स्याद् देववेश्या ह्यवन्तिका। द्वारावती ब्रह्मवेश्या गुप्तैता मोक्षदायिकाः। कुलीना भगवती साक्षात् काली तारा सरस्वती। कुलीना भैरवी साक्षात् कुलीना छिन्नमस्तका। कुलीना सुन्दरी देवि! कुलीना महिषमर्दिनी। कुलीना भुवना बाला कुलीना वगलामुखी। धूमावती कुलीना च मातङ्गी कुलनायिका!। कुलीना चान्नपूर्णा च कुलीना त्वरिता तथा। पतिव्रता कुलीना च सती साध्वी महोदया। कुलीना मन्त्रयन्त्राणां सिद्धिदा नात्र संशयः। कुलना देवकन्या च कुलीना योगिनीगणा। रम्भोर्वशी रती रामा कुलीना च तिलोत्तमा। एताः सर्वाः पृथग्वेश्या विहरन्ति कुलात्मजाः। कुलजा कुलवेश्या या कुलधर्म्मपरायणा। पशुभर्त्राश्रिता लोला कामकौतुकलालसा। कुलवर्त्मक्रमेणैव सदैव रमणोत्सुका। विदग्धवीरभावेन वीरगोपनतत्परा। विहिता स्याद्धीनजाश्च पूजयेदथ वाग्यतः। ब्रह्मचारी गृहस्थोऽपि विहितान्यां न चार्च्चयेत्। अर्च्चिते सिद्धिहानिः स्याद्दुःखं तस्य पदे पदे। हीनजां विहितां वेश्यां मनसा च प्रपूजयेत्। तद्‌योगं चिन्तयेद्धीमान् शतमष्टोत्तरं जपेत्। जप्त्वा प्रणम्य देवेशि! भक्ष्यद्रव्यं निवेदयेत्।

कामाद्वा मोहतो वापि हीनजां यदि चेच्छति। रौरवं नरकं याति हीनजासङ्गमेन च। हीनजासङ्गमं देवि! मनसा न स्मरेत् कलौ। कुलकर्म्मप्रवृत्ता या सा मुक्ता नात्र संशयः। कुलजा कुलवेश्या च वीरमेकं समाश्रयेत्। सन्त्यज्य पशु-भर्त्तारं कुलमार्गं प्रवेशयेत्। कुलमार्गं समाश्रित्य वीरमेकं समाश्रयेत्। कुलमार्गप्रवृत्ता च पतिहीना भवेद् यदि। कुलजा वा कुलीना वा परजन्मनि जायते। कुलधर्म्मरता शस्ता कुलधर्मोत्सुका तथा। पूजार्हा सा महेशानि! पतिहीनां प्रपूजयेत्। लोकाचारक्रमेणैव पूजार्हा लज्जिता यदि। तां विहाय कुलेशानि! कुलजाञ्च प्रपूजयेत्। कुलीनादर्शने-नैव सर्वपापक्षयो भवेत्। गङ्गास्मरणमात्रेण यथा पापक्षयो भवेत्। कुलजा च कुलीना या मन्त्रतन्त्रफलप्रदा। महा-वेश्या भवेत् सैव सर्ववेश्याफलप्रदा। यासाञ्च सिद्धविद्यानां प्रशस्ता वा कुलार्च्चने। सैव शक्तिर्विशेषेण सर्ववेश्या प्रकीर्त्तिता॥

विद्याविशेषे शक्तिविशेष उक्तस्त्रयोदशपटले यथा॥ श्यामाविद्या न सिध्येत ब्राह्मणीगमनं विना। छिन्नमस्ता न सिध्येत कापालीगमनं विना। सिद्धविद्या न सिध्येत भूमीन्द्र-तनयां विना। रजक्यास्तु गृहे देवि! भैरवी च सुसिध्यति। साध्या सा विहिता प्रोक्ता विहिता द्रुतसिद्धिदा। साधये-द्रजनीं सर्वां ब्राह्मणीं यावनीं विना। सर्वारम्भान् परित्यज्य साधयेद्द्विजजां द्विजः। राजराजेश्वरी साक्षाद् द्विजजारूप-धारिणी। द्विजजातोषणादेव द्रुतं सिध्यति सुन्दरी। श्रेष्ठ-वर्णोद्भवां रम्यां साधने नैव साधयेत्। साधने सिद्धिहानिः स्याद्रौरवं नरकं व्रजेत्॥

अथ प्रयोगः॥ गतयामायां रात्रौ स्वशक्तिं परशक्तिं वा तुलिकोपरि स्ववामभागे संस्थाप्य तस्या अङ्गे स्वकल्पोक्त-

न्यासान् विधाय शवीचितायां शुद्धिं कुर्य्यात्। यथा॥ ऐं क्लीं सौः त्रिपुरायै इमां स्वशक्तिं पवित्रीकुरु मम शक्तिं कुरु स्वाहा। इत्यनेन जलविन्दुभिरभिषिच्य तस्या वामकर्णे अभेदबुद्ध्या मायावीजं वदेत्॥ ततो योनिं ध्यायेद्यथा। अतिसुललितगात्रां हास्यवक्त्रां त्रिनेत्रां जितजलदसुकान्तिं पट्टवस्त्रप्रकाशाम्। अभयवरकराढ्यां रत्नभूषातिभव्यां सुरतरुतलपीठे रत्नसिंहासनस्थाम्। हरिहरविधिवन्द्यां बुद्धिशुद्धिस्वरूपां मदनरससमाक्तां कामिनां कामदात्रीम्। निखिलजनविलासोद्दामरूपां भवानीं कलिकलुषनिहन्त्रीं योनिरूपां भजामि॥ इति योनिं ध्यात्वा सम्पूज्य योन्युपरि ह्सौः इति योनिमन्त्रमष्टोत्तरशतं जप्त्वा समर्प्य स्तवकवचादिकं पठेद्यथा॥ श्रीदेव्युवाच॥ भगवन्! सर्वधर्म्मज्ञ! कुलशास्त्रार्थपारग!। सर्वं मे कथितं नाथ! न त्वेकः परमेश्वर!। श्रीयोनेः स्तवराजं हि तथा कवचमुत्तमम्। श्रोतुमिच्छामि सर्वज्ञ! यदि तेऽस्ति कृपा मयि। सारभूतं महादेव! निगमान्तर्गतं रहः। यदि नो कथ्यते देव! प्राणत्यागं करोम्यहम्। दिवानिशि महाभाग! समास्तु पतितं भवेत्। अतस्ते देवदेवेश! कथ्यतां मे दयानिधे!॥ श्रीमहादेव उवाच॥ शृणु पार्वति! वक्ष्यामि देहत्यागं कथं कुरु। अत्यन्तगोपनीयं हि निगमे कथितं पुरा। ब्रह्मविष्णुमहादीनां न मया कथितं पुरा। अकथ्यं परमेशानि! इदानीं किं करोमि ते। तव स्नेहेन बद्धोऽहं कथयामि तव प्रिये!। मातर्देवि! महाभागे! यदि कस्मै प्रकाश्यते। शपथं कुरु मे दुर्गे! यदि त्वं मत्प्रिया मता। ब्रह्मा यदि चतुर्वक्त्रैः पञ्चवक्त्रैः सदाशिवः। वर्णितुं स्तवराजञ्च न शक्नोति कदाचन। सम्यग्वक्तुं न शक्नोमि संक्षेपात् कथयामि ते॥ अस्य श्रीयोनिस्तवराजस्य कुला-

सार्थ ऋषिः कौलिकच्छन्दः श्रीयोनिरूपा दशविद्यात्मिका देवता सर्वसाधने विनियोगः। ओँ योनिरूपे! महामाये! सर्वसम्पत्प्रदे! शुभे!। कृपया सर्वसिद्धिं मे देहि देहि जगन्मयि!॥ १॥ सर्वस्वरूपे! सर्वेशे! सर्वशक्तिसमन्विते!। कृपयेत्यादि॥ २॥ महाघोरे! महाकालि! कुलाचारप्रिये! सदा। कृपयेत्यादि॥ ३॥ घोरदंष्ट्रे! चोग्रतारे! सर्वशत्रुविनाशिनि!। कृपयेत्यादि॥ ४॥ योनिरूपे! महाविद्ये! सर्वदा मोक्षदायिनि!। कृपयेत्यादि॥ ५॥ जगद्धात्रि! महाविद्ये! जगदुद्धारकारिणि!। कृपयेत्यादि॥ ६॥ जगद्धात्रि! महामाये! योनिरूपे! सनातनि!। कृपयेत्यादि॥७॥ जय देवि! जगन्मातः! सृष्टिस्थित्यन्तकारिणि!। कृपयेत्यादि॥ ८॥ सिद्धिदात्रि! महामाये! सर्वसिद्धिप्रदायिनि!। कृपयेत्यादि॥ ९॥ महालक्ष्मि! महादेवि! महामोक्षप्रदायिनि!। कृपयेत्यादि॥ १०॥ गौरी लक्ष्मीश्च मातङ्गी दुर्गा च नवचण्डिका। वगलामुखी भुवनेशी भैरवी च तथा प्रिये!। छिन्नमस्ता च काली च योनिरूपा सनातनी। कृपयेत्यादि॥ ११॥ काली कपालिनी कुब्जा कुरुकुल्ला विरोधिनी। नायिका विप्रचित्ताद्या अन्या या नायिकाः स्मृताः। वसन्ति योनिमाश्रित्य ताभ्योऽपीह नमो नमः॥ १२॥ अणिमाद्यष्टसिद्धिश्च वसत्यस्याः समीपतः। नमस्तेऽस्तु नमस्तेऽस्तु योगमोक्षप्रदायिनि!॥ १३॥ सर्वशक्तिमयि! देवि! सर्वकल्मषनाशिनि!। हे योने! हर विघ्नं मे सर्वसिद्धिं प्रयच्छ मे॥१४॥ आधारभूते! सर्वेषां पूजकानां प्रियंवदे!। स्वर्गपातालवासिन्यै योनये च नमो नमः॥ १५॥ विष्णुसिद्धिप्रदे! देवि! विष्णुसिद्धिप्रदायिनि!। ब्रह्मसिद्धिप्रदे! देवि! रामचन्द्रस्य सिद्धिदे!। शक्रादीनाञ्च सर्वेषां सिद्धिदायै नमो नमः॥ १६॥

इति ते कथितं देवि! सर्व्वसिद्धिप्रदायकम्। स्तोत्रं योनेर्म्महेशानि! प्रकाशितमिदं त्वयि!। सर्व्वसिद्धिप्रदं स्तोत्रं यः पठेत् कौलिकः प्रिये!। लिखित्वा पुस्तके देवि! रक्तद्रव्येश्च सुन्दरि!। तस्यासाध्यानि कर्म्माणि सुसिद्धानि कुलेश्वरि!। नास्ति नास्ति पुनर्नास्ति नास्त्येव भुवनत्रये। यः पठेत् प्रातरुत्थाय गाणपत्यं लभेन्नरः। रात्रौ कान्तासमायोगी यः पठेत् साधकोत्तमः। स्तवेनानेन संस्तुत्य साधकः किं न साधयेत्। स्वलङ्कृतां स्वकान्ताञ्च लीलाहावविभूषिताम्। रक्तवस्त्रपरीधानां कृत्वा सम्पूज्य साधकः। भोजयित्वा ततो देवि! स्वयं भुञ्जीत तत्परः। मत्स्यमांसादिकान् भुक्ता क्रोडे कृत्वा स्वयोषितम्। रात्रौ यदि जपेन्मन्त्रं सा दुर्गा स सदाशिवः। भवत्येव न सन्देहो मम वक्त्राद्विनिर्गतम्। येन दत्तं मयि स्तोत्रं स एव मद्‌गुरुः स्मृतः। तस्यैव यदि भक्तिः स्यात् स भवेज्जगदीश्वरः। नमोऽस्तु स्तवराजाय नमः स्तवप्रकाशिने। यत्रास्ते स्तवराजोऽयं तत्रास्ते श्रीसदाशिवः। इति शक्तिकागमसर्व्वस्वे हरपार्व्वतीसंवादे श्रीयोनिस्तवराजः समाप्तः॥

अथ योनिकवचम्॥ देव्युवाच॥ भगवन्! श्रोतुमिच्छामि कवचं परमाद्भुतम्। इदानीं देवदेवेश! कवचं सर्व्वसिद्धिदम्। महादेव उवाच॥ शृणु पार्व्वति! वक्ष्यामि अतिगुह्यतमं प्रिये!। यस्मै कस्मै न दातव्यं दातव्यं निष्फलं भवेत्॥ अस्य श्रीयोनिकवचस्य गुप्तऋषिः कुलटाच्छन्दो राजविघ्नोत्पातविनाशे विनियोगः। क्लीं योनिर्मे सदा पातु स्वाहा विघ्नविनाशिनी। शत्रुनाशात्मिका योनिः सदा मां पातु सागरे। ब्रह्मात्मिका महायोनिः सर्व्वान् कामान् प्रयच्छतु। राजद्वारे महाघोरे क्लीं योनिः सर्व्वदावतु। क्षमात्मिका सदा देवी योनिरूपा जगन्मयी। सर्व्वाङ्गं पातु मां नित्यं सभायां राज-

वेश्मनि। वेदात्मिका सदा योनिर्वेदरूपा सरस्वती। कीर्त्तिं श्रीकान्तिमारोग्यं पुत्रपौत्रादिकं तथा। रक्ष रक्ष महायोने! सर्वसिद्धिप्रदायिनि!। रजोयोगात्मिका योनिः सर्वत्र मां सदावतु। इति ते कथितं देवि! कवचं सर्वसिद्धिदम्। त्रिसन्ध्यं यः पठेन्नित्यं राजोपद्रवनाशकृत्। सभायां वाक्पतिश्चैव राजवेश्मनि राजवत्। सर्वत्र जयमाप्नोति कवचस्य जपेन हि। श्रीयोन्याः सङ्गमे देवि! पठेदेवमनन्यधीः। स एव सर्वसिद्धीशो नात्र कार्य्या विचारणा। मातृकाक्षरसम्पुटं कृत्वा यदि पठेन्नरः। भुङ्क्ते विपुलान् भोगान् दुर्गया सह मोदते। इति गुह्यतमं देवि! सर्वधर्मोत्तमोत्तमम्। भूर्जे वा ताड़िपत्रे वा लिखित्वा धारयेद् यदि। हरिचन्दनमिश्रेण रोचना कुङ्कुमेन च। शिखायामथवा कण्ठे शिवः सोऽपि न संशयः। शरत्काले महाष्टम्यां नवम्यां कुलसुन्दरि!। पूजाकाले पठेदेतत् जयी नित्यं न संशयः॥ इति शक्तिकागमसर्वस्वे हरगौरीसंवादे श्रीयोनिकवचं समाप्तम्॥

इति कवचं पठित्वा अस्या अङ्गे षड़ङ्गन्यासं कृत्वा योनौ मातृकान्यासं योनिवीजन्यासञ्च कृत्वा तदनुज्ञां लब्ध्वा ताम्बूलादिकं दत्त्वा लिङ्गोपरि ऐं इति लिङ्गमन्त्रमष्टोत्तरशतं जप्त्वा इयं गौरी अहं शिव इति विभाव्य मातृमुखे पितृमुखं दत्त्वा मूलमुच्चार्य्य ओं धर्म्माधर्म्महविर्दीप्ते आत्माग्नौ मनसा स्रुचा। सुषुम्नावर्त्मना नित्यमक्षवृत्तिर्जुहोम्यहम्। इति मन्त्रं पठित्वा लिङ्गं योनौ प्रविश्य निधुवनासक्तशिवशक्त्योरभेदं विभाव्य अक्षुब्धः स्थिरमानसः सन् वर्णमालया अष्टोत्तरसहस्रं शतं वा प्रजप्य मूलान्ते। ॐ प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचा। धर्म्माधर्म्मकलास्नेहपूर्णमग्नौ जुहोम्यहम्। स्वाहा इति मन्त्रेण शुक्रं त्यजेत्॥ एकदा ताड़ने देवि! एकदा यदि उच्चरेत्।

स कालश्चञ्चलापाङ्गि ! कोटिसूर्य्यग्रहैः समः । गलच्चन्द्रं गृहीत्वा कुण्डगोलादिकं कुर्य्यात् । भर्त्तृमत्यां कुण्डं विधवायां गोलमिति । पूर्वोक्तक्रमेण संशोध्य तेन पूजयेत्तर्पयेच्च । ततो योनिपीठं प्रक्षाल्य तेनोदकेन मूलमुच्चार्य्य सायुधां सपरिवारां सवाहनां महाकालसहितां अमुकदेवीं तर्पयामि स्वाहा । इति योनौ त्रिस्तर्पयेत् पूजयेच्च ॥

आरम्भक्रमः ॥ आलिङ्गनं चुम्बनञ्च स्तनयोर्मर्द्दनं ततः । दर्शनं स्पर्शनं योनोविकाशो लिङ्गघर्षणम् । प्रवेशः स्थापनं शक्तेर्नव पुष्पाणि पूजने । शिवशक्तिसमायोगो योग एव न संशयः । शीत्कारो मन्त्रजापस्तु वचनं स्तवनं भवेत् । आलिङ्गनञ्च कस्तूरी कर्पूरं चुम्बनं भवेत् । नखदन्तक्षतादीनि पुष्पाणि विविधानि च । मैथुनं तर्पणं विद्धि वीर्य्यपातो विसर्ज्जनम् । अष्टोत्तरशतेनापि योनिमारभ्य धर्म्मवित् । मैथुनं यः प्रयात्येव स तु सर्वं फलं लभेत् । लतारतेषु जप्तव्यं महापातकमुक्तये । रजोऽवस्थां समादाय तन्मूलेष्विष्टदेवताम् । पूजयित्वा महारात्रौ त्रिदिनं जपमाचरेत् । लक्षपीठसहस्राणि लभते नात्र संशयः । पृथ्वीमृतुमतीं वीक्ष्य सहस्रं यद्धि नित्यशः । तदा शाटी सुसिद्धान्तर्हितं क्षितितलं विशेत् ॥ नित्यश इति षोड़शदिनं यावत् । कुलागारं पुष्पिताया दृष्ट्वा जपति यो नरः । अयुतैकप्रमाणेन स भवेत् कल्पपादपः ॥

अथ शक्तिप्रशंसादि ॥ पञ्चमपटले ॥ शक्तिं विना महेशानि ! सदाहं शवरूपकः । शक्तियुक्तो यदा देवि ! शिवोऽहं सर्वकामदः । शक्तियुक्तं जपेन्मन्त्रं न मन्त्रं केवलं जपेत् । सावित्रीसहितो ब्रह्मा सिद्धोऽभून्नगनन्दिनि ! । हारावल्यां कृष्णदेवः सिद्धोऽभूत् सत्यया सह । तथा कोचवधूसङ्गान्मम सिद्धिर्वरानने ! । ईश्वरोऽहं महादेवि ! केवलं शक्तियोगतः । शक्ति-

योगेन देवेशि! यदि सिद्धिर्न जायते। तदैव परमेशानि! मम वाक्यं वृथा भवेत्। गङ्गा काशी प्रयागादि पुष्करं नैमिषं तथा। बदरी च तथा रेवा उत्कलं गण्डकी तथा। सिन्धुः सरस्वती चैव पीठानि विविधानि च। सर्वं त्यक्त्वा महेशानि! स्त्रीसङ्गं यत्नतश्चरेत्। स्त्रीसङ्गे सिद्धिमाप्नोति मम वाक्यं न चान्यथा। यद्दत्तं जलगण्डूषं शक्तिवक्त्रे सुरेश्वरि!। सिन्धुरूपं महेशानि! तज्जलं नात्र संशयः। स्त्रीयेष्टदेवीभावेन भोजयित्वाञ्च यत्नतः॥ शक्तिश्च कथ्यते देवि! शृणुष्व सुरसुन्दरि!। त्रयोदशाब्दादूर्द्ध्वं या पञ्चविंशतिवार्षिकी। अप्रसूता विशेषेण पञ्चमेऽपि भवेत् प्रिये!। सुन्दरी तु विशेषेण प्रसूता वाप्रसूतिका। अवश्यं पञ्चमं कुर्य्यात् शक्तिमात्रे महेश्वरि!। पञ्चपञ्चीकृते देवि! यः कुर्य्यात् पूजनादिकम्। तदक्षयं लभेत् पुण्यं नात्र कार्य्या बिचारणा। गुरुं सन्तोषयेद्भक्त्या तत्पत्नीं तत्सुतां लताम्। नानाभक्षणवस्त्राद्यैस्तथा द्रव्येण सुन्दरि!। पञ्चमार्थे च या शक्तिस्तस्यां कुर्य्याच्च पञ्चमम्। तस्यां स्तोत्रं प्रकुर्वीत विशेषेण शृणु प्रिये!। द्रव्यादिभूषणैश्चैव भक्ष्यभोज्यैर्विशेषतः। नानाभक्षणवस्त्राद्यैस्तथैव चुम्बनादिभिः। स्नानार्थं देवतानाञ्च रहस्यं परमं शृणु। येन स्नाने कृते देवि! देवता सुप्रसीदति। रात्रौ पञ्चमकारेषु कृत्वा पञ्चमकारकम्। भगमध्ये च यद्द्रव्यं गृह्णीयाच्च प्रयत्नतः। तच्च कुण्डोद्भवं तोयं ज्ञेयं देवि! वरानने!। लभते भाग्ययोगेन देवानामपि दुर्लभम्। तस्मिन् किञ्चिज्जलं क्षिप्त्वा ताम्रपात्रे विनिक्षिपेत्। तद्द्रव्यस्नानमात्रेण देवता सुप्रसीदति॥

उत्तरतन्त्रे द्वितीयपटले॥ सर्वपीठमयी शक्तिः सर्वदेवस्वरूपिणी। सर्वमन्त्रमयी शक्तिश्चतुर्वर्गप्रदायिनी। शक्ती

मनुष्यबुद्धिन्तु यः करोति वरानने!। न तस्य मन्त्रसिद्धिः स्याद्विपरीतफलं लभेत्। शक्तेः सम्पूजनाद्देवि! सर्वदेवार्च्चनं प्रिये!। शक्तौ यद्दीयते देवि! वस्त्रादिभूषणं प्रिये!। देव्यङ्गे दत्तमेतत्तु महासौख्यप्रदायकम्। देव्यै यद्यद्वरारोहे! दत्तं वस्त्रविभूषणम्। इहैव शतसंख्येन दीयते च तदा पुनः। पाने भ्रान्तिर्भवेद् येन घृणा स्याद्रक्तरेतसोः। तमालोक्य वरारोहे! कुलीनः पशुतामियात्॥

पुरश्चरणरसोल्लासतन्त्रे चतुर्दशपटले॥ कलौ तु भारते वर्षे स्त्रीसङ्गं परमं पदम्। न धूपं चञ्चलापाङ्गि! न दीपं वरवर्णिनि!। नैवेद्यं चञ्चलापाङ्गि! तन्त्रोक्तं षोड़शं प्रिये!। द्रव्यं नास्ति महेशानि! कथं सिद्धिर्भविष्यति। अतएव महेशानि! सदानन्दमयं यतः। पूजनं चञ्चलापाङ्गि! प्रियाङ्गेषु व्यवस्थितम्। सदानन्दमयी नारी स्वकीया परगोचरा। यस्या अङ्गे महेशानि! सर्वतीर्थाणि सन्ति वै। तां विहाय महेशानि! अन्यस्थाने जपेद्यदि। तस्य सर्वं वृथा देवि! उन्मत्तो भवति ध्रुवम्॥

निगमकल्पद्रुमे तृतीयपटले॥ सप्तलक्षा महाविद्याः कथितास्तव सुव्रत!। रोमकूपे वसन्त्येता मन्त्ररूपाः पृथक् पृथक्। यावन्ति सन्ति रोमाणि शरीरे प्राणवल्लभ!। तावद्देवाश्च देव्यश्च सन्ति तस्यां कलेवरे। तिस्रः कोट्यस्तदर्द्धेन तीर्थाणि जाह्नवीजले। जाह्नवी योनिमूले च सततं परिसंस्थिता। मूत्रस्थाने सदा मुक्तिः स्थापिता त्वं न संशयः। प्रकृतिश्च पुमांश्चैव परं ब्रह्म प्रकीर्त्तितम्॥ योनितन्त्रेऽपि॥ काली तारा योनिगर्त्ते कुन्तले छिन्नमस्तिका। बगलामुखी च मातङ्गी वसेद् योनिसमीपतः। त्रिकोणे त्रिपुरा देवी तत्पार्श्वे भैरवी स्वयम्॥ इत्यादिपुरश्चरणरसोल्लासे॥ पीठानि चञ्चलापाङ्गि!

कली गुह्यं भविष्यति। पञ्चाशत्पीठसंयुक्तं स्त्रीणामङ्गं शुभ-
प्रदम्। तत्कथं मूढ़लोकश्च विहाय स्त्रीपदं महत्। अन्य-
पीठेषु तीर्थेषु मन्त्रन्तु प्रजपेत् प्रिये!॥ एतस्मिन् रूपे देवानां
तृप्तिर्भवति पार्वति!। नारीत्यागं तदा कृत्वा अन्यपीठं
व्रजेत् प्रिये!। सा स्त्री तु परमेशानि! साक्षान्मूर्त्तिर्न
चान्यथा। नारीप्रसङ्गे चार्वङ्गि! सिद्धयोऽष्टौ भवन्ति हि॥
इति शक्तिप्रशंसा॥

अथ प्रकारान्तर लतासाधनम्॥ उत्तरतन्त्रे प्रथमपटले॥
वल्लीमूले वरारोहे! लेखन्यङ्गसमुत्थया। यो लिखेन्मन्त्र-
वर्णांश्च तस्य सिद्धो भवेन्मनुः। तस्य दर्शनमात्रेण मुक्ताः सन्ति
च पापिनः॥ वल्लीमूले योनौ॥ अङ्गसमुत्थया शेफसा॥ शैल-
कन्या कलानाथे कलानाथसमन्विते। यद्‌द्रव्यं जायते देवि!
तद्‌द्रव्यं मम दुर्लभम्। माहात्म्यं तस्य वक्तुं वै समर्थः सुर-
वन्दिते!। जिह्वाकोटिसहस्रैस्तु वक्त्रकोटिशतैरपि। पुर-
श्चरणकर्मादि दुःसाध्यं परमेश्वरि!। शङ्केतमिदमेवात्र
सुगोप्यं पशुसन्निधौ॥ अपरन्तु द्वितीयपटले॥ शङ्करोपरि
संस्थाप्य कलां कामशरार्दितास्॥ यस्तु चिन्तयते भक्त्या स एव
कल्पपादपः॥ शङ्करोपरि विपरीतरतौ॥ वल्लीमूलसमु-
द्भूतं पाशं करेण सन्निभम्। समूलं सुन्दरारक्तं पतत्रीव स
शोभितम्। स्वादन्नं व्यञ्जनैर्युक्तं द्राक्षारससमन्वितम्। नव-
नीतं कलाजातं कदलीनाथसम्भवम्। रम्भारम्भाशयोरास्यं
जान्तवं परमं प्रिये!॥ एकत्र सकलं कृत्वा मुक्तकेशो दिग-
म्बरः। चत्वरे वा श्मशाने वा बलिं दद्याद्वरानने!। स्त्रीरू-
पेण च सा देवी गृह्णाति परमेश्वरी। एवं कर्त्तुं समर्थो यः
स एव भगवान् स्वयम्। यामिनीतिमिरे भानौ मुखे हाटक-
पर्वते। आवर्त्ते कामरूपे च खञ्जने च सुरेश्वरि!। मुक्ता-

द्वन्द्वे च चापे च विम्बे च तिलपुष्पके । पद्मनाले धरायाञ्च रम्भायाञ्च वरानने ! । यो जपेत् परमेशानि ! किमसाध्यं भवेत् प्रिये ! । यामिनीतिमिरे केशे । भानौ सिन्दूरमण्डले । हाटकपर्वते स्तनयुगले । आवर्त्ते नाभौ । कामरूपे योनौ । खञ्जने चक्षुर्द्वये । मुक्ताद्वन्द्वे दन्ते । चापे भ्रुवि । विम्बे ओष्ठे । तिलपुष्पे नासिकायाम् । पद्मनाले वाहुद्वये । धरायाञ्च उरुद्वये । रम्भायाञ्च नितम्बे ॥ देव्युवाच ॥ कथमेव महादेव ! परशक्त्या क्रियां चरेत् । परदारकृते दोषः कथं नैव प्रजायते । कथं परस्त्रियां कार्य्यः परेण सह सङ्गमः । साध्वीत्वं नश्यति क्षिप्रं तस्मान्नैतत्समाचरेत् ॥

वृहन्नीलतन्त्रे चतुर्थपटलेऽपि ॥ परदारविधौ देवि ! निन्दावादः प्रवर्त्तते । तासां सङ्गान्महेशानि ! तामिस्रं नरकं व्रजेत् । वेदार्थमिति विज्ञाय कथं कुर्य्याच्च साधकः । सिद्धान्तयति तत्रैव ॥ परदारान्न गच्छेरन् गच्छेच्च प्रजपेद् यदि । श्रुतिद्वयविरोधाच्च गच्छेरन् परयोषितः । उत्तरतन्त्रेऽपि ॥ पूजाकालं विना नान्यं पुरुषं मनसा स्पृशेत् । पूजाकाले च देवेशि ! वेश्याच्च परितोषयेत् । साध्वीत्वं न हतं तस्याश्चुम्बनालिङ्गनैः प्रिये ! । काश्यादि सर्वतीर्थानि सर्वपुण्यानि सुव्रते ! । तस्या देहे वसन्त्येव सर्वे मन्त्राश्च सुन्दरि ! । विकल्पो नात्र कर्त्तव्यस्त्वया गिरिवरात्मजे ! ॥

अथ योनिपूजा ॥ निरुत्तरतन्त्रे प्रथमपटले ॥ योनिरूपा महाकाली शवः शय्या प्रकीर्त्तितः । श्मशानं द्विविधं देवि ! चिता योनिर्म्महेश्वरि ! ॥ तथा ॥ कलापूजां विना देवि ! या काचित् क्रियते क्रिया । सा क्रिया त्वभिचाराय सत्यं सत्यं न संशयः । तस्मात् सर्वप्रयत्नेन कलापूजां समाचरेत् । योनिरूपा कला देवि ! दक्षिणैव न संशयः । दिव्य-

वीरो वरारोहे! कलापूजां समाचरेत्। पशुभावाश्रितो मन्त्री कलां नैव प्रपूजयेत्। कलायां द्विविधा पूजा गुप्ता व्यक्ता कुलेश्वरि!। गुप्ता च साधकैः कार्य्या निर्जने च महानिशि। व्यक्ता दिवा प्रकर्त्तव्या लोकाचारक्रमेण तु। लोकाचारं विना देवि! गोपनं नैव जायते। गोपनं सिद्धिमूलञ्च सत्यं सत्यं न संशयः। ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्च कुलसुन्दरि!। कलयासवयोगेन कलापूजां समाचरेत्। द्रव्याभावे द्विजो द्रव्याद्यानुकल्पं युगे युगे। कलायाश्चानुकल्पश्च कलायाश्चैव चिन्तनम्। कलापूजां विना देवि! दक्षिणा न फलप्रदा॥

कलात्र स्त्रीयेष्टदेवतोपलक्षणम्॥ तथाच समयाचारतन्त्रे द्वितीयपटले॥ अथेदानीं प्रवक्ष्यामि भगपूजां समासतः। गुरोः प्रसादाद् यन्मन्त्रं नित्यं जपति साधकः। तेनैव मनुना मन्त्री भगपूजां करोति च। तदापि भगमध्ये वै चिन्तयेद्भगरूपिणीम्। शिवो भूत्वा स्मरेद्देवीं तदेव मेलनञ्चरेत्। शक्तिं शक्तिमयीं चिन्तेत्तदा वै मैथुनं चरेत्। मैथुनासक्तयोगेन मानसं जपमाचरेत्। यथोक्तं कुरुते देवि! प्राप्यते परमं पदम्। यानि कानि च मन्त्राणि कथितानि वरानने!। जप्तव्यानि च देवेशि! सर्वतन्त्रेषु निश्चितम्॥ तथा॥ भगस्य स्मरणे पुण्यं भगस्य दर्शने तथा। भगस्य स्पर्शनाद्देवि! यत् पुण्यं सम्प्रजायते। तत् सुखं न जपैर्होमैर्न ध्यानैस्तपसा तथा। पञ्च पञ्च कृते देवि! यत् पुण्यं भुवि जायते। न तत् पुण्यञ्च सुभगे! कोटितीर्थस्य दर्शने। जपो होमस्तथा दानं दीक्षा योगादिकल्पना। कृतपञ्चमभक्तस्य कलां नार्हन्ति षोड़शीम्॥

निगमकल्पद्रुमे षष्ठपटले॥ आवाहनादिरहितां योनिपूजां विधाय च। मूलमन्त्रेण तद्योन्यां पूजयेदिष्टदेवताम्।

मायाबीजं योनिमन्त्रं तेन तां परिपूजयेत्। स्वशक्त्या भक्ति-योगेन पूजयेद्विभवावधि। ततो योनौ शतं मन्त्रं जपेत् साधकसत्तमः। भगे लिङ्गं ततो दद्यादिष्टमूर्त्तिं विचिन्तयन्। गाढ़ं निपीड़येत्तां तु स्वशक्त्या कुलभैरवः। घाते घाते ब्रह्म-हत्याशतं हन्यात् सुधाकरः। कामशास्त्रप्रसङ्गेन यथा सन्तोषणं भवेत्। पुनः पुनः कारणाद्दि मुखे दद्यात् सुसाधकः। वीर्य्यपातादिसमये जपेन्मन्त्रमुदारधीः। ततस्तु द्रव्यमादाय महादेव्यै निवेदयेत्। एवं कृत्वा महादेवि ! जठरे न पुनर्भवेत्। सत्यं सत्यं महादेवि ! ममैतद्‌योगमुत्तमम्। बहुना किमि-होक्तेन शृणु मत्प्राणवल्लभे ! ॥

वृहन्नीलतन्त्रे षष्ठपटले ॥ अथवा कामरूपस्य दर्शनं यदि जायते। तदा भगादिदेवीनां पूजां तत्र विधीयते। यदि भाग्यवशेनैव कुलदृष्टिः प्रजायते। तदैव मानसीं पूजां तत्र तासां प्रकल्पयेत्। भगिनीं भगजिह्वाञ्च भगाख्यां भगमालि-नीम्। भगाङ्गाञ्च भगाचीञ्च भगवर्णां भगत्वचाम्। भग-स्तनीं भगनाशां भगस्थं भगसर्पिणीम्। तत्र सम्पूज्य गन्धाद्यै-र्मानसैर्गुरुमेव च। नमस्कृत्य विधानेन स्वयमचोभितः सुधीः॥ निगमकल्पद्रुमे॥ योनिर्वा स्तनपद्मं वा भानुकृष्णसरोरुहम्। चामरं वा नितम्बं वा दर्शनं यदि जायते। तदा जपेन्मन्त्र-राजं नमस्कृत्य पुनः पुनः। तेषाञ्चापि महादेवि ! मुक्तिरस्ति करस्थिता। शक्त्याः पादोदकं यस्तु पिबेद्भक्तिपरायणः। उच्छिष्टं वापि भुञ्जीत तस्य सिद्धिरखण्डिता। महावाक्ये यदि विश्वासो जायते शिवशङ्करि !। तदा वाक्यं मया प्रोक्तं अन्यथा चेन्न चाचरेत्। यात्राकाले योनितत्त्वमाघ्राय यदि गच्छति। कुन्तलं शिरसा धृत्वा तस्य शत्रुर्विनश्यति। सभायां विजयी भूयाद्राजकार्य्ये तथैव च। सत्यमेतन्महाभागे ! मम

वाक्यं वृथा न हि। येन तेन प्रकारेण योनिपूजापरायणः। स याति परमं स्थानं देवैरपि सुदुर्लभम्। अत्युत्कटे च योगादौ तथैव राजवेश्मनि। महोपद्रवमुत्पाते यदि योनिं प्रपूजयेत्। तदा योनिर्महादेवी चोद्धरेत् सर्वसङ्कटात्। इतोऽधिकं न किञ्चित्तु विद्यते मम वाक्यतः। सत्यमेतन्न सन्देहो यद्यहं तव वल्लभः। सर्वधर्म्मं परित्यज्य योनिपूजारतो भवेत्। तदेव परमा प्रीतिर्लज्जाकैवल्यमाप्नुयात्। तोयानाञ्च यथा गाङ्गं गव्यानाञ्च यथा घृतम्। तथा देवि! मैथुनं मे भवेत् प्रियतमं प्रिये!॥ निगमकल्पद्रुमे॥ ऊरुद्वयञ्च कान्ताया ऊर्वोरुपरि संन्यसेत्। ग्रीवामाक्रम्य पाणिभ्यां स्तनद्वन्द्वं क्वचित् क्वचित्। चुम्बनं बहुधा वक्त्रे बन्धोऽयं कामसुन्दरः। योनौ लिङ्गं समादाय हस्तोपरि पदद्वयम्। केशानाक्रम्य पाणिभ्यां स्तनद्वन्द्वं चर्षी चर्षी। चुम्बनं सर्वगात्रेषु पिबेदोष्ठाधरं मुहुः। दृढ़घातेन च रमेत् बन्धोऽयं रतिपण्डितः। स्कन्धयोर्विन्यसेत् पादौ योनौ लिङ्गं तथा क्षिपेत्। शिरश्चाक्रम्य हस्ताभ्यां दन्ताघातक्रमात् क्रमम्। चुम्बनं चक्षुर्वदने स्तनयोमर्दनं मुहुः। रमेत् स्वशक्तितः कामी बन्धोऽयं काममर्दनः। उरस्यासनमास्थाय चोरस्यपरमूरुकम्। स्कन्धावाक्रम्य पाणिभ्यां गण्डे चुम्बनपूर्वकम्। रमेच्च सुदृढ़ाघातैर्बन्धोऽयं कामकौतुकः। एवं क्रमेण देवेशि! बहुबन्धोऽस्ति भैरवि!। कामरत्नादितन्त्रेषु निःशेषेण प्रकाशितम्। विशेषबन्धं सङ्क्षेपात् प्रसङ्गात्त्वयि चोदितम्॥

अथ षोड़शबन्धाः॥ रतिरहस्ये॥ बन्धाश्चतुरशीतिः स्युर्मुनिना परिकीर्त्तिताः। तस्मादाकृष्य लिखिताः षोड़शप्रेमहेतवः। पादौ स्कन्धयुगे नार्य्याः क्षिप्त्वा लिङ्गं भगे लघु। कामयेत् कामुको नारीं बन्धः काकपदो हि सः॥ पादसेऽ

करे धृत्वा द्वितीयं स्कन्धसंस्थितम् । नारीञ्च कामयेत् कामी बन्धो वेणुविदारकः ॥ ऊरुमूलोपरि न्यस्य योषिदूरुयुगं यदि । ग्रीवां धृत्वा कराभ्यान्तु बन्धो नागरको मतः ॥ पीड़येदूरुयुग्मेन कामुक यदि सुन्दरी । रतिपाशं समाख्यातं कामिनीनां सुखावहम् ॥ स्त्रीजङ्घान्तरितो दोर्भ्यां गाढ़मालिङ्ग्य सुन्दरीम् । वन्धयेद्वन्धनं कामी बन्धो मायूरसंज्ञकः । नारीपादौ स्वहस्तेन धारयेद् गलके यदि । स्तनार्पितकरः कामी बन्धः स्याद्धि विलासवान् । योषित्पादं हृदि न्यस्य द्वितीयं स्कन्धमाश्रितः । स्तनौ धृत्वा रमेत्कामी बन्धस्तनभरः स्मृतः । नारीपादद्वयं कामी धारयेत् स्तनमण्डले । धृतकण्ठो रमेन्नारीं बन्धोऽयं रतिसुन्दरः । नार्य्या ऊरुद्वयं धृत्वा कराभ्यां पीड़येत् पुनः । कामयेन्निर्भरं कामी बन्धोऽयं सुखसङ्गमः । धृत्वा वामकरेणोरुं पादञ्च सिरसि स्थितम् । सुदृढ़ं रमयेत् कामी स्मरचक्रः प्रकीर्त्तितः । स्वजानुद्वयमध्याभ्यां धारयेन्निर्भरं स्त्रियम् । वामे निःशङ्कितः कामी बन्धोऽयं नागपाशकः । स्त्रीपदद्वयमाकृष्य विमुखः क्षिप्तलिङ्गकः । योनिमापीड़येत् कामी बन्धः कुलिशनामकः । इत्यादिबन्धविन्यासे गाढ़मुत्पाद्यते सुखम् । तस्माद्विदग्धसंघातैर्बन्धाः कार्य्याः प्रयत्नतः । बन्धः सर्वात्मना कार्य्यो नायके सर्वथा सुखे । तेन सञ्जायते कामः पुरुषे मैथुने खलु ॥ १६ ॥ स्त्रिय आनीय पूर्वार्द्धे चिवुकैः पृष्ठतः क्रमात् । धृत्वोदरे रमेत् पश्चात् बन्धोऽयं रतिसुन्दरः । शय्यासीनस्तनी नारी उत्क्षिप्तजघनी यदि । कान्तं कामयते पश्चात् बन्धोऽयं कवर्गसङ्गमः ॥ इत्यधोमुखौ द्वौ कर्त्तव्यौ ॥ उद्धृत्य पादमेकन्तु संस्थाप्य चापरं भुवि । कुड्याश्रितां रमेत्कामी बन्धो दोलायितः स्मृतः । पादाभ्यां मध्यमावेष्ट्य समालिङ्ग्याशु सुन्दरीम् । चुम्बन् मुखं प्रियायास्तु बन्धो नागेश्वरी

मतः॥ स्त्रियं सुखं समालिङ्ग्यानुचुम्ब्य च मुखं मुहुः। प्रियायाः कटिमाकृष्य स्वकण्ठे धारयेत् प्रियाम्। कामचालनमेवाशु प्रदद्यात् पुरुषो दृढ़ः॥ नारीपादद्वयं कृत्वा कान्तस्योरुद्वयोपरि। कटिमालोकयेद्यस्तु बन्धोऽयं सपदः स्मृतः। कान्तक्रोड़े स्थिता नारी भूमौ दत्तपदद्वया। हृदये दत्तहस्ता च बन्धो लीलानलोत्तमः॥ विपरीतरतिः॥ भगनिःच्छिन्नलिङ्गायाः सुन्दर्य्या लेढ़ितं प्रियम्। तथा सम्पुटकञ्चेति नारीलिङ्गप्रवर्त्तनम्॥ इति सुखरतम्॥ इति श्रीप्राणतोषिण्यां पञ्चपुष्पस्तवकान्वितं सप्तमं निर्गुणज्ञानकाण्डं समाप्तम्॥

अथौषधम्॥ मत्स्यसूक्ते एकविंशति पटले॥ दीपं कृत्वा ताम्रपात्रे कज्जलं पातयेदथ। गवां घृतेन चालोड्य चक्षुषी त्वथ रञ्जयेत्। जन्मान्तरे यथा रूपं तादृशञ्च प्रपश्यति॥ १॥ काकमाची द्वचमूलं शिखायां धारयेत्तु यः। निद्रां करोति देवेशि! अर्द्धशूलं हरत्यपि॥ २॥ कृष्णातुलस्याः पत्ररसं मधुना सारनालकम्। तैलेन संयुतं कृत्वा मन्दाग्नौ तापयेत्ततः। कर्णे तु तापयेद्देवि! कर्णकीट्टादिकं हरेत्॥ ३॥ भृङ्गराजं सारनालं अर्द्धशूलं हरेदथ॥ ४॥ जम्बुपत्ररसेनापि कर्णस्य परिपूरणात्। कर्णकीटः पतेदाशु रात्रौ दद्यान्न संशयः॥ ५॥ सहदेवामूलपत्रं कर्णे बद्धा व्यथां हरेत्॥ ६॥ हस्तिशुण्डापत्ररसैश्चक्षुषी परिपूरयेत्। चक्षुर्व्यथां हरेदाशु तथा वृहदसोमणी॥ ७॥ शुण्ठीनिम्बदलरसं पिष्ट्वा चक्षुश्छदे प्रिये!। विलेपयन्ति पश्चश्यां चक्षुशूलं विनश्यति॥ ८॥ अपामार्गस्य मूलञ्च रोचना सरलं तथा। गव्यमुस्तकसंयुक्तं ताम्रपात्रे तु पेषयेत्। अञ्जनाच्चक्षुषो देवि! सर्वशूलं विनश्यति॥ ९॥ तुलस्याः कृष्णा-

पत्रस्य रसेन कटुतैलकम् । लवणं वारनालञ्च भौमवारे प्रदानतः । चक्षुश्छदे महेशानि ! पटलं याति संचयम् ॥ १० ॥ अजस्त्रीग्रमांसञ्च महिषस्य तथैव च । गोधामांसञ्च तज्जिह्वां भौमवारे तथा निशि । खादिराग्नौ पचेद्देवि ! चणाद्रात्रान्ध-नाशनम् ॥ ११ ॥ कार्पासकोमलफलत्रयं स्नात्वा समाहरेत् । चर्वित्वा चक्षुषोर्देवि ! पूरणाच्च विनश्यति ॥ १२ ॥ चक्षुरोगं न सन्देहास्तिमिरस्य तथा शृणु । रक्तचन्दनसंयोगान्मधुना सह रौद्रके । कियदुष्णमञ्जनाच्च तिमिरं हन्ति सुन्दरि ! ॥ १३ ॥ मधुयुक्ते वटफले पृष्ठे चक्षुषि लेपनात् । तथा रोगं हरिद्राञ्च तथैव च पुनर्णवाम् ॥ १४ ॥ घृतेन भर्जितां भक्षेत् चक्षुस्तेज-स्करं महत् ॥१५॥ निम्बनिर्यासपत्रं वा तैलेन सह भक्षणात् । चक्षुस्तेजस्करं देवि ! पामरीशूलदक्षकम् । नारिकेलोदकरसं तथा रोगं हरत्यपि ॥ १६ ॥ त्रिफला गुड़संयुक्ता गुड़मार्द्रक-संयुतम् । द्वाभ्यां प्रभाते देवेशि ! चणात् कामलनाशनम् ॥१७॥ धात्रीं तप्तोदकैर्भक्षेत् तथा रोगो विनश्यति । पुराणकण्टकी मज्जा तथा वासन्तिकालभा । शर्षपस्योग्रतैलेन किञ्चिदुष्णेन भावयेत् । त्रिवारं लेपनादेव सर्वां हन्ति विचर्च्चिकाम् ॥१८॥ चलदलस्य त्वचा शुष्कं दग्ध्वा सर्षपतैलके । एरण्डतैलैर्वा देवेशि ! उष्णेन परिलेपनात् । एतद्विचर्चिकां हन्ति ताल-मूलो तथैव च ॥ १९ ॥ वनमरीचवीजेन तमःपक्षे विशे-षतः । अजादुग्धसमेतेन लेपात् सर्वविचर्चिकाम् । हन्ति देवि ! न सन्देहस्तथाजीपलमूलकाम् ॥ २० ॥ मानं शुष्कं ततो दग्ध्वा शङ्खचूर्णेन लेपयेत् । गात्रविचर्च्चिकां हन्याल्लेपा-द्वारत्रयेण तु ॥ २१ ॥ मानं शुष्कं पुराणञ्च घृतेन सह भक्षणात् । अङ्गजातं हरिद्राञ्च पटुस्थचणमर्कटम् ॥ २२ ॥ त्रिवर्षीयं समा-नीय दंशिमानञ्च पार्वति ! । चतं कृत्वा ततो लेपादृग्रन्थि-

वातहरं परम् ॥ २३ ॥ मधुसैन्धवसंयुक्तं कोलमत्स्य समन्वितम् । चकषां मूलकं पक्का शासुल्लेन वरानने ! । वातघ्नं परमं देवि ! तापघ्नं नात्र संशयः ॥ २४ ॥ सर्ववाते मर्दनञ्च तिल-तैलेन पार्वति ! । तथा क्रौञ्चस्य तैलेन नागतैलेन वा प्रिये ! ॥ २५ ॥ भृगुतैलेन दुग्धेन अजाक्षीरेण भावयेत् । श्लीपदं वातिकं हन्ति कटिवातं तथैव च ॥ २६ ॥ उन्मत्तं कुम्भ-रूपञ्च विशाढ़कीयपत्रकम् । समूलमटसारञ्च वासकं राम-शासकम् । योगपत्रं समेरण्डं सुदःकुम्भे विनिःक्षिपेत् । अर्काग्नौ तापयेद्देवि ! पुनः पिण्डन्तु कारयेत् । अर्कमूल एनद्द्रव्यं स्नुहीमूलसमन्वितम् । स्वेदयेत् सर्ववातेषु त्रिदि नेन विनश्यति ॥ २७ ॥ तुलसीमूलवीजानि कुमारीवीजमेव च । प्रलेपात् सर्वकुष्ठघ्नं जलसारञ्च नश्यति ॥ २८ ॥ हस्ति-कर्णं तुलायाञ्च समुद्धृत्य वरानने ! । स्नुहीमूलं विल्वमूल समरीचं सशर्करम् । तोलं तोलञ्च समाहृत् महावातविना-शनम् ॥ २९ ॥ कलित्रच्चत्वचं देवि ! गले बद्धा विशेषतः । शोकस्य नाशनं प्रोक्तं पामरोमूलकं तथा ॥ ७० ॥ तिन्तिड़ी-वीजकं पिष्ट्वा तक्रेण सहयोगतः । पानाच्छोकं हरत्याशु वस्ता-वामस्य वीजकम् ॥ ३१ ॥ हन्लमांसं हरिद्राशु वार्त्तकीवीजके-स्तथा । पक्कवार्त्ताकुना स्वेदात् करोषाग्नौ तथा हरेत् ॥ ३२॥ श्वेतापराजितामूलं तथा वास्युदकेन च । मुखमध्ये प्रलेपाच्च जाड्यं नाशयति ध्रुवम् ॥ ३३ ॥ श्वेतगुञ्जा समुत्पाद्य नक्षत्रे पुष्यके तथा । प्रलेपात्तत्क्षणाद्देवि ! विषरोगी विनश्यति ॥३४ नीलकण्ठं मधुयुतं तथा रोगविनाशनम् ॥ ३५ ॥ श्वेतापरा-जितामूलं तथा श्वेतजयन्तिकाम् । श्वेतार्चवकमेतेन कारयेत् इलिकां ततः । स्वात्यां चन्द्रोदये देवि ! समुत्पाद्य विधा नतः । भाले च तिलकं कृत्वा वशीकरणमुत्तमम् ॥ ३६ ॥

पलाशवीजं समधु घृतेन सह पेषयेत्। भक्षणान्मासमात्रन्तु वलीपलितनाशनम्॥ २७॥ बृहतीनीलकण्ठानां त्रिफला-लवणैः सह। दन्ते विलेपनाद्देवि! दन्तशूलं हरत्यपि॥२८॥ छागमांससजाक्षीरं भुक्ता शाल्युदकैः सह। यक्ष्मकुष्ठादिकं हन्ति तालमूली तथैव च॥ ३९॥ नागकेशरमूलञ्च मधुना च तथा हरेत्। यष्टीमधुसमन्वास्ये तथा हन्यान्न संशयः॥ ४०॥ तस्य पत्रपक्कपानात् सर्वज्वरनिवारणम्॥ ४१॥ मधुना सह पानाच्च शातकालेऽज्वरं हरेत्॥ ४२॥ अनुदितार्के चोद्धृत्य सर्वज्वरहरं प्रिये!। श्वेतापराजितामूलं पुष्यार्के धारणा-त्तथा। अपामार्गस्य च तथा कन्यकासूत्रबन्धने॥ ४३॥ ज्वरं हन्यान्महेशानि! स्वात्यां वा विष्णुभे प्रिये!। रक्त-वात्यालमूलञ्च अर्कवारे विशेषतः। निर्वेष्ट्य कदलीसूत्रैः शय्यायां दापयेत्ततः। सर्वज्वरं ततो हन्यात्तथा तापज्वराप-नुत्॥ कुद्दालस्य त्वचश्चैव अर्जुनस्य त्वचं तथा। घृतेन सह पानाच्च सर्वकासं हरत्यपि॥ ४५॥ नागेश्वरस्य मूलञ्च मधुना सह शङ्करि!। पानाच्च चोदरं हन्ति विष्णुक्रान्ता तथैव च॥ ४६॥ पिप्पलीं सैन्धवयुतां पाययेन्मधुना समम्। मूत्र-स्रावं ततो हन्यात् सप्ताहान्नात्र संशयः॥ ४७॥ विल्वमूलं सगुडूचीं मधुना पाययेत्ततः। वान्तं हन्ति न सन्देहो मातु-लुङ्गस्य वीजकम्॥ ४८॥ पलाशवीजं सिद्धार्थं मधुतैलसम-न्वितम्। भक्षयत् समभागेन ज्वरां हन्ति न संशयः॥ ४९॥ तिलकल्कं समं युक्तं तथा भल्लातकं प्रिय!। अत्यग्निर्जायते देवि! त्रिरात्रेण न संशयः॥ ५०॥ चन्द्रमूलींपिप्पलीं च शुण्ठीञ्च मरिचानि च। पुरातनगुड़ेनापि गुलिकां कारये-त्ततः। अत्यग्निर्जायते शीघ्रं भक्षणात् शैवयोगतः॥ ५१॥ काकोलूकस्य पक्षेण दद्याद्धूपं विचक्षणः। विनाशयति तत-

भोतिं तथा जङ्गमवारणे ॥ ५२ ॥ नीलकण्ठस्य पक्षञ्च भुज-ङ्गस्य च कञ्चुकम्। समभागे कृतं धूपं पूर्ववद्भवति ध्रुवम् ॥५३॥ हयमारस्य रक्तस्य गृहीत्वा कुसुमं बुधः। अन्नं सर्वेतसञ्चैव सम्मार्ज्यं तेन दर्पणम्। अङ्कोष्ठगर्दभानाञ्च रूपं पश्येदन-न्यधीः ॥ ५४ ॥ शूकराश्वगर्दभस्य वानरस्य तथैव च। गृह्णी-यात्तु नखं तावत् पुटाग्नौ दाहयेत्ततः। पश्चान्मण्डूकवसया दर्पणं मार्जयेदथ। तेषां रूपाणि संपश्येन्नात्र कार्य्या विचारणा॥

ऋतुमत्या दुर्भगायास्तद्दिनावधि सप्तके। वासरे शर्ष-पान् श्वेतान् योनौ प्रक्षिपयेद्बुधः। भक्ष्यैस्तैः शर्षपैर्योऽयं सुभग-त्वेतेव तं व्रजेत्॥ अङ्कोठवृक्षवीजस्य गृह्णीयात्तैलमेव तु। सेचिके तु ततो वृक्षस्तस्य दोहदमेव च। बलपुष्टिकरञ्चैव आयुर्वृद्धिकरं परम्॥ जम्बीरफलपत्रञ्च सैन्धवेन समन्वितम्। दन्तलेपं भवेत्तोच्चं माषपुष्पं घृतौदनम्। आयुर्वृद्धिकरञ्चैव चिरकाले बलं भवेत॥ कूर्म्ममांसे बलं हीनं मांसञ्च कोर-कस्य च। अल्पायुर्याति वै शीघ्रं हंसमांसेन पार्वति!॥ पूगस्य शोकरञ्चैव स्नुहीकर्दमसंयुतम्। मांसयुक्ते अर्कदुग्धं मन्दारफलसंयुतम्। वाते रजनिसंयुक्तं तालमूली सभक्तकम्। मक्कलो च कृदे दद्याज्जिह्वारोगे कुलेश्वरि!। पर्पटं गुड़संयुक्तं दधिभक्तं निवेदयेत्। उष्णं कृत्वा पाययेच्च नाभौ संलेपये-त्ततः। अशोकमूलं पिन्याकं कफरोगे गलग्रहे। अण्डरोगे पर्णशिरां मायामूलन्तथैव च। तालमूलञ्च कुष्माण्डं वात-सारे शिरीषकम्॥ त्रयोविंशति पटले॥ दन्तशूले मारुतञ्च सैन्धवं पिप्पलीयकम्। समूलं दन्तिसारञ्च दन्तरोगोपशान्तये। क्षते कीटे प्रजाते च मन्दाराग्रं सचूर्णकम्। स्नुहीचौरसमेतञ्च कीटः पतति तत्क्षणात्॥ इति गवादीनां क्षते प्रत्यक्षं द्रष्टव्यम्॥

अथ वच्ये महेशानि ! तुरगाणां चिकित्सितम्। वान्ते दद्यात् पललतां शृङ्गवेरं सपिप्पलीम्। यमानीं नारिकेलञ्च मुण्डवासकमूलकम्। कोषलञ्च गुड़ञ्चैव पिण्डं तापहरं परम्॥

जीरं सर्जरसं कोलं दूर्वाधन्याकसंयुतम्। योगपत्रं गिमाशाकं मरीचं लवणान्वितम्। वासन्तीमूलसहितं त्रिपुखण्डन्तु श्रमापहम्। हस्त्यानीयमूलपत्रं ...ङ्कस्य वीजपत्रकम्। शृङ्गवेरं यवञ्चैव हरिद्राद्वयमेव च। एतत्पिण्ड दातव्यं बलपुष्टिकरं परम्। अरण्यवदरीं सूक्तिं कानने रामवासकम्। खर्जूरस्य च वीजेन सगुड़ेन ज्वरं हरेत्। धान्यमूलं रविमूलं कालञ्जरसमन्वितम्। सोमधान्येन तद्दद्याच्छर्दिकारोगनाशनम्॥ तथा॥ अपामार्गं विड़ङ्गञ्च सैन्धवं नागकेशरम्। सैन्धवेन समायुक्तं अक्षिरोगी विनश्यति। चर्च्चिकायान्तु भेकस्य तैलं भेरुण्डकस्य च। निशायोगेन दातव्यं सर्वकुष्ठविनाशनम्॥ नागेश्वरस्य तैलेन मधुवृक्षस्य चूर्णितम्। दग्धं कृत्वा ददेल्लेपं नश्येद्देवि ! विचर्च्चिका॥

षड्विंशति पटले॥ दानवस्य च पुष्पाणि घृतसिक्तानि भक्षयेत्। रक्तस्रावं ऋतुस्नानं जलन्धारञ्च नश्यति॥ उत्तराशामुखो भूत्वा कन्यासूत्रेण वेष्टयेत्। विष्णुक्रान्तामपामार्गं तथा जीरमरीचकम्। एककेन पिबेत् पीत्वा सुखं सूयेत गर्भिनी। माहीषनवनीतेन तथा कविकलाचतम्। विलिप्य ताभ्यां देवेशि ! लिङ्गं स्थूलं भवेदनु। रक्तभेरण्डमूलञ्च तथा चलदलपद्मकम्। मरीचञ्च प्रियङ्गुञ्च पिष्टा लिङ्गं विवर्द्धयेत्॥

गुवाकपुष्पमेकन्तु गोक्षीरेण समं पिबेत्॥ स्वात्यां वा जन्मदिवसे अपुष्पा पुष्पिता भवेत्॥ हस्तिशुण्डास्ततो मूलं कलविङ्कस्य नासिकाम्। घृतेन भर्जितं भक्षेदिन्द्रियः प्रबलो भवेत्॥

नागार्जुनकृतकक्षपुटे द्वितीयपटले॥ भूदारवटमूलञ्च जलेन सह घर्षयेत्। विभूत्या संयुतं देवि! तिलकं लोकवश्यकृत्॥ १॥ पुष्ये पुनर्नवामूलं रुदन्तीं मूलिकां तथा। यवमूलं तथा बध्वा कण्ठे सप्ताभिमन्त्रितम्। पूज्यो भवति सर्वत्र मन्त्रमत्रैव कथ्यते॥ ऐं पुरं क्षोभय भगवति गम्भीरे ब्लौ स्वाहा। अमुं मन्त्रमयुतद्वयं जपेत् ततः सिद्धिः॥ १॥ उग्रातपत्रमञ्जिष्ठा कुङ्कुमं तगरं समम्। स्नाने पाने तथा स्पर्शे दत्तं वश्यं भवत्यलम्॥ २॥ सिंहीमूलं हरेत् पुष्ये कट्यां बद्धा जगत्प्रियः॥ ३॥ निशि कृष्णचतुर्दश्यां महानीलीं श्मशानतः। उद्धृत्य नरतैलेन चाञ्जनेनैव वश्यकृत्॥ ४॥ तन्मूलं बन्धयेद्धस्ते सर्वलोकप्रियो भवेत्॥ ५॥ चन्द्रं पुष्ये समुद्धृत्य ब्रह्मदण्डीयमूलकम्। भोजने सर्वसत्वानां वशीकरणमुत्तमम्। उलूकहृदयं तुल्यं कुमार्य्या रोचनं सुधीः। अञ्जने रोचने वश्यमानयेद्भुवनत्रयम्॥ ६॥ ओं नमो यक्षिणि अमुकं वशमानय स्वाहा ओं। अस्य मन्त्रस्य पूर्वमेवायुतं जप्त्वा तत उग्रातपत्रादि सर्वप्रयोगाः। शतवारमभिमन्त्रिता सिद्धा भवति चोषधिः। सर्वेषामेव मन्त्राणां मन्त्रध्यानं पृथक् पृथक्। तत्तत्स्थाने यथासङ्ख्यमनुक्ते त्वयुतं जपेत्। मृगशीर्षे तु सङ्ग्राह्यं सुरक्तकरवीरकम्। नवाङ्गुलं कीलकं तत् सप्तवाराभिमन्त्रितम्। यस्य नाम्ना खनेद्भूमौ स वश्यो भवति ध्रुवम्। ओं हुँ हुँ स्वाहा। शतमष्टोत्तरं जप्त्वा पूर्वमेवारभेन्नरः॥ ७॥

तृतीय पटले॥ कुङ्कुमं चन्दनञ्चैव रोचनं शशिमिश्रितम्। गवां क्षीरेण तिलकं राजवश्यकरं परम्। ओं ह्रीं सः अमुकं वशं कुरु कुरु स्वाहा। पूर्वमेव सहस्रं जप्त्वा ततोऽनेन मन्त्रेण पूर्ववत् तिलकं कुर्य्यात्। ओं ह्रीं रक्तचामुण्डे कुरु कुरु अमुकं वशमानय स्वाहा। इति चामुण्डामन्त्रैः सर्वसिद्धौ

भवति ॥ मञ्जिष्ठा कुङ्कुमञ्चैव बाला मोदा कुमारिका । चिताभस्म स्वरक्तञ्च नियमैरेव भावयेत् । पुष्येण गुटिकां कृत्वा भक्ष्ये पाने च दापयेत् । पृष्टो वा राजवश्यः स्यात् चण्डमन्त्रप्रभावतः ॥ ८ ॥

अथ विवादजयः ॥ गोजिह्वा शिखिमूला वा मुखे शिरसि संस्थिता । कुरुते सववादेषु जयं पुष्ये समुद्धृता । मार्गशीर्षे तु पूर्णायां शिखिमूलं समुद्धरेत् । वाहौ शिरे शिखे धार्य्यं विवादे विजयो भवेत् । वन्धनान्मुच्यते जन्तुः शिखामन्त्रान्न संशयः ॥ २ ॥ मेघनादस्य मूलञ्च चक्रस्यान्तर-वेष्टितम् । परदारी भवेन्मूकोऽथवा याति दिगन्तरम् । निशि कृष्णचतुर्दश्यां मन्दानोलीं श्मशानतः । आदाय बन्धये-द्धस्ते विवादे विजयो भवेत् । श्वेतगुञ्जान्वितं मूलं मुखस्थं दुष्टतुण्डजित् । उक्तयोगानां चण्डमन्त्रेण सिद्धिः ॥ मन्त्रस्तु ओं सुदर्शनाय हुं फट् स्वाहा । पूर्वमेवायुतं जप्ता चण्डमन्त्रस्य सिद्धये । ततो ह्योषधियोगश्च सप्ताभिमन्त्रितो भवेत् ॥ ४ ॥ शुक्लपक्षयुते पुष्ये गुञ्जामूलं समुद्धरेत् । बद्धं शिरसि तत्सर्वं चौरबाधाहरं परम् ॥

योगसारे प्रथमपरिच्छेदे ॥ देवीवाक्यम् ॥ व्याधिनाश-महं वक्ष्ये पलमात्रं घृतं पिबेत् । पठित्वानेन मनुना यः पिबेत् साधकोत्तमः । सर्वव्याधिविनिर्मुक्तो भवत्येव न संशयः । मन्त्रं तस्य प्रवक्ष्यामि शृणु मद्भैरवोत्तम ! । तारं माया भृगुः शम्भुः पुनर्भृगुरुदाहृतः ॥ सृष्टियुक्तो गुरुश्चैव तथा चन्द्रः शिवः स्मृतः । एतन्मन्त्रं समाख्यातं घृतशुद्धिरितीरितम् ॥ १ ॥

तृष्णानाशं प्रवक्ष्यामि रक्तचन्दनतोलकम् । घर्षयित्वा वाम-हस्ते गृहीत्वा साधकोत्तमः । तोलकं जलसंमिश्रं मनुनाष्टो-त्तरं शतम् । तत्तदुपरि संजप्य यः पिबेत् साधकोत्तमः ।

सप्ताहाज्जायते तस्य तृष्णानाशस्तु भैरव!। सर्व्वेषां भक्षणं प्रोक्तं सप्ताहञ्च कुलेश्वर!। सर्वमष्टोत्तरशतं पिवेज्जप्त्वा च साधकः। शब्दवीजद्वयं भद्रे! नाशयद्वितयं वदेत्। तृष्णेति पदमुच्चार्य्य ततः स्वाहा मनुर्मतः। अनेन मनुना देव! तृष्णा-नाशोऽभिजायते॥ २॥ आहारनाशनार्थाय कृष्णचित्रां समा-हरेत्। तोलार्द्धं वा तदर्द्धं वा तदर्द्धं वा सुरेश्वर!। आनीय मनुनानेन वटिकां कारयेद्बुधः। घृतेनालोड्य देवेश! मनु-नानेन भक्षयेत्॥ कामवीजं समुच्चार्य्य क्षुन्नाशिनि पदं ततः। निवारयपदं चोक्त्वा स्वाहेति च मनुर्मतः॥ ३॥ अथवान्य-प्रकारेण क्षुन्निवृत्तिर्विधायते। हविष्याशी भवेदादौ पश्चा-ज्जपति मातृकाम्। पश्चाद्घृतं प्रयोक्तव्यं मनुनानेन शङ्कर!। हसौर्वा येन मनुना भक्षयेत् साधकोत्तमः॥४॥ अथवा सर्पिषा देव जिह्वामालोड्य यत्नतः। यावदोष्ठं परिव्याप्तं जिह्वया कुलभैरवः!। तावत्प्रमार्जयेज्जिह्वां यावदोष्ठसमां नयेत्। अने-नैव प्रकारेण क्षुन्निवृत्तिर्भविष्यति॥ ५॥ अथवान्यप्रकारेण क्षुन्निवृत्तिर्विधीयते। प्रत्यहं विजयाधूमं ब्रह्मरन्ध्रेण मन्त्र-वित्। पानं करोति देवेश! क्षुन्नाशो जायते ध्रुवम्। ब्रह्म-मन्त्रमहं वक्ष्ये येन क्षुन्नाशनं भवेत्। सम्वर्त्तकचन्द्रवह्नि भौतिको विन्दुसंयुतः। एवं वीजत्रयं देव! समुच्चार्य्य कुले-श्वर!। अनेन मनुना देव! विजयाधूमशोधनम्। शोधयित्वा पिवेद्धूमं न दोषो जायते हर!॥ ६॥ अथ मूत्रप्रनाशार्थं वक्ष्यामि मन्त्रमुत्तमम्। अश्वगन्धां समानीय अस्त्रमन्त्रेण मन्त्रयेत्। तोलकं सर्पिषा देव! मिश्रयित्वा पिवेत् सुधीः। लिङ्गमूले कामवीजं जप्त्वा च स्तम्भयेद्ध्रिया। द्वात्रिंशत्तोलकं दुग्धं मराचं तोलकद्वयम्। सम्मिश्र प्रपचेद्यत्नाद्यावत् शुष्कं समानयेत्। ततो वै वाग्भवं जप्त्वा भक्षयेत् साधकोत्तमः।

अनेनैव विधानेन मूत्रनाशोऽभिजायते॥ ७॥ पुरीषनाश-नार्थाय विड़ङ्गं तोलकद्वयम्। पिप्पलीतोलकं ग्राह्यं शुण्ठोञ्च तोलकत्रयाम्। तेजपत्रस्य चारेण मिश्रयित्वा जपेन्मनुम्। शतमष्टोत्तरं जप्त्वा मिश्रयेद्बहु यत्नतः। मन्त्रं तस्य प्रवक्ष्यामि शृणुष्वानन्दभैरव!। श्रीर्म्मायां वाग्भवञ्चैव शक्तिवीजत्रयं तथा। शिववायुजलं पृथ्वी वह्निजाया ततः परम्। मन्त्रयित्वा पिवेद्द्रव्यं पुरीषं नाशयेद् ध्रुवम्॥ ८॥ शुक्रस्तम्भं प्रवक्ष्यामि शृणु मद्भैरवोत्तम!। पिष्ट्वा चैरण्डकं मूलं नाभिमूले विलेपयेत्। रोहितमत्स्यपित्तेन तन्मूलं लेपयेच्छिव!। शब्द-वीजैर्मन्त्रयित्वा स्तम्भयेत् शुक्रशोणितम्। शब्दवीजं समुद्धृत्य मर्दयेदस्त्रमुच्चरन्। स्तम्भयेन्नियतं शुक्रं तथोक्तं कुलसुन्दर!। मन्त्रेणानेन शुक्रस्य स्तम्भनं कारयेद्बुधः॥ ९॥ शुक्रस्तम्भनकं प्रोक्तमालस्यनाशनं शृणु। हुङ्कारध्वनिमाहूय करतालद्वयं द्वयम्। कृत्वा वेतालमूलञ्च पिष्ट्वा यो भक्षयेत् सुधीः। फट्-कारैर्म्मन्त्रयित्वा च तालमूलं पिवेत् सुधीः। ततो मधु पिवे-द्धीमानालस्यनाशनं भवेत्॥ १०॥ निद्रानाशं प्रवक्ष्यामि शृणुष्वानन्दभैरव!। अलक्तकं तोलकार्द्धं तोलार्द्धं कटु-तैलकम्। श्वेतधूपं मिश्रयित्वा मनुना मन्त्रयेत् सुधीः। मनुं तस्य प्रवक्ष्यामि येन निद्राक्षयो भवेत्। निद्रा यमसमा देव! निद्रा व्याधिकरी मता। निद्रायां सर्वदोषः स्यान्नि-द्रया ज्ञाननाशनम्। निद्रया लीयते सर्वं निद्रया नरकं व्रजेत्। तस्माद्यत्नेन कर्त्तव्यं निद्रानाशन्तु भैरव!। सम्वर्त्तं वह्निसंयुक्तं चन्द्रखण्डसमन्वितम्। क्रमात्त्रयं समुद्धृत्य वह्नि-जायां परे वदेत्। शतमष्टोत्तरं जप्त्वा मर्दयेद्बहुयत्नतः। प्रत्यहं चक्षुषोर्दद्यान्निद्रानाश इतीरितः॥ ततो जपेद्वाग्भवन्तु चक्षुषो-र्म्मध्यभागयोः। ततो ध्यायेत् कुलगुरुं कुलदेवीं प्रयत्नतः।

प्रार्थयेद्बहुयत्नेन निद्राया नाशनं द्रुतम्। ओं निद्रे देवि! महामाये! जगन्निर्वाणकारिणि!। मां जहि त्वं जगद्धात्रि! मां जहि परमेश्वरि!। प्रणवं पूर्वमुच्चार्य्य निद्रापतिपदं ततः। निद्रापतिपदं ब्रूयात् ततो ब्रूयात् सनातनी। वह्निजायां ततो ब्रूयात् निद्राक्षयमनुर्मतः। एतन्मन्त्रजपादेव निद्रानाशो भवेद् ध्रुवम्। शतमष्टोत्तरं वापि सहस्रं वा कुलेश्वर!। ाप्त्वा निद्रा क्षयं याति किमन्यत् कथयामि ते। अत्र स्थित- ात्यध्याहाराज्जप्तेत्यनेनैककर्त्तृकता॥ ११॥ अथान्यत् सम्प्र- क्ष्यामि चेन्द्रियाणाञ्च निग्रहम्। योनितन्त्रोक्तमार्गेण कुला- ारं करोति हि॥ कान्तां मनोरमां देव! आनीय बहुयत्नतः। ञयेत्तेन मार्गेण कामयेद्बहुयत्नतः॥ एवं सत्कारयोगेन शुक्र- त्म्भो भवेन्नृणाम्॥ यस्य यद्देवताभावो यद्रूपा देवता स्मृता। तत्तद्रूपजगत्सर्वं ध्यात्वा च मदिरां पिबेत्॥ ततः प्राणायाम- योगे वायुञ्चापि वशं नयेत्। ततो घृतं समालोड्य नालमूलं था शिव!। पिष्ट्वा पूर्वोक्तमनुना जप्त्वा च साधकः पिबेत्। सर्वव्याधिविनिर्मुक्तो नरो भवति तत्क्षणात्॥ गुरुपादरजो ध्यात्वा मधुमांससमन्वितम्। सुरायुक्तं महादेव! मर्दये- हुर्‍ रः। ततः पूर्वोक्तमन्त्रेण सम्मन्त्र्याष्टदिनं पिबेत्। एवं संस्कारयोगेन तृष्णानाशो भवेद् ध्रुवम्॥ २॥ कुलेश्वरीं ततो ात्वा कृष्णचित्रां ततः पिबेत्। ततः पिबेन्मद्यमांसं घृतं वा लभैरव!। एवं संस्कारयोगेन क्षुन्नाशो जायते ध्रुवम्॥

वाक्चिन्तामणिनिर्म्मितातिवितता सर्वैर्गुणैरन्विता।
साक्षात्कल्पलताश्रितार्थसहिता विश्वोपकारे हिता॥
ध्यात्वा विज्ञसभाजितातिफलिता श्रीप्राणतोषिण्यसौ।
द्रष्टव्या भवता सता मतिमता शुभ्रातिशुभ्रा लता॥

इति श्रीप्राणतोषिणी समाप्ता।

